THE

# SĀNKHYA KĀRIKĀ

OF

MAHĀMUNI S'RĪ ĪS'VARAKṚIṢṆA

With the Commentary Sārabodhinī of

PAṆḌIT S'IVANĀRĀYAṆA S'ĀSTRĪ

WITH

SĀNKHYA TATTVAKAUMUDĪ

OF VĀCHASPATI MIS'RA.



PUBLISHED

BY

PĀṆḌURANG JĀWAJI,

PROPRIETOR OF THE "NIRṆAYA SĀGAR" PRESS,

BOMBAY.

1940.

श्रीः ।

# सांख्यकारिका ।

महामुनिश्रीमदीश्वरकृष्णविरचिता ।



आदिगौडविद्यावारिधिशाब्दिकचूडामणि–

पं० श्रीशिवनारायणशास्त्रिविरचितया

सारबोधिनीव्याख्यया तत्कृतटिप्पण्या च समलङ्कृता ।



पदवाक्यप्रमाणप्रमेयपारावारीणसर्वतन्त्रस्वतन्त्र-

श्रीमद्वाचस्पतिमिश्रविरचितया

सांख्यतत्त्वकौमुद्या

च विभूषिता ।



प्रथमावृत्तिः ।



सेयं

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागरमुद्रणालयेऽङ्कयित्वा प्राकाश्यं नीता ।

शके १८६२ सन १९४०




मूल्यम् ३ रूप्यकत्रयम् ।

# साङ्ख्यभूमिका ।

ॐ स्वस्ति श्रीगणेशाय नमः ।

विद्याप्रदान् गुरून्नत्वा तथा रुद्रं कृपाकरम् ।
ऐश्वरकृष्णसांख्यस्य ब्रुवे तत्त्वविनिर्णयम् ॥ १ ॥
सांख्यतत्त्वबुभुत्सूनां विनायासेन बोधदा ।
बोधिनी सर्वतत्त्वानां दृश्येयं तत्त्वभूमिका ॥ २ ॥
अध्येष्यन्ते च ये सांख्यं रीतिमाश्रित्य मामिकाम् ।
अभिज्ञाः सर्वतन्त्राणां भवेयुरिति निश्चितम् ॥ ३ ॥

## पञ्चविंशतितत्त्वानि ।

पुरुषः, प्रधानम्, महत्तत्त्वम्, अहङ्कारः, शब्दस्पर्शरूपरसगन्धेति पञ्चतन्मात्राणि, आकाशवायुतेजोजलपृथिवीति पञ्च महाभूतानि, श्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादवायूपस्थमन इत्येकादशेन्द्रियाणीति पञ्चविंशतिः तत्त्वानि ।

अत्र तत्त्वशब्दः पदार्थवाची । तेन सांख्यशास्त्रे पञ्चविंशतिः पदार्था इति संसिद्धम् ॥ १ ॥

## उक्तपदार्थानां चतुर्धा विभागः ।

कश्चिदर्थः प्रकृतिरेव, कश्चिद् विकृतिरेव, कश्चिद् विकृतिः प्रकृतिश्च, कश्चिदनुभयरूप इति । अत्र उपादानकारणं प्रकृतिः, कार्यं च विकृतिः । तेन केचित् पदार्था उपादानकारणरूपाः, केचिच्च कार्यरूपा इति सिध्यति ॥ २ ॥

## केवलप्रकृतिरूपाः ।

तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः । नासावन्यस्य कस्यचिद् विकृतिः, अनादित्वादुत्पत्तिरहितत्वाच्च । प्रधानतो महत्तत्त्वमुत्पद्यत इति महत्तत्त्वस्योपादानकारणत्वात् प्रधानं केवलं प्रकृतिः । ततश्च प्रधानतो महत उत्पत्तेः, प्रधानस्य च कस्माच्चिदनुत्पत्तेः प्रधानं केवलं प्रकृतिरिति सिध्यति । तत्र महत्तत्त्वं, बुद्धिः, अन्तःकरणम्, इत्यनर्थान्तरम् ॥ प्रधानस्य तु कारणान्तरं नाभ्युपगम्यते, प्रधानस्य यत्कारणं तस्यापि कारणम् एवं तस्य तस्य कारणत्वाङ्गीकारेऽनवस्थापातात् । तथाच सांख्यसूत्रम्—"मूले मूलाभावादमूलं मूलम्" ॥ ३ ॥

## प्रकृतिविकृतयः ।

महत्तत्त्वाहङ्कारशब्दस्पर्शरूपरसगन्धेति सप्त पदार्थाः प्रकृतयो विकृतयश्च । तत्र महत्तत्त्वाद् अहङ्कार उत्पद्यत इति महत्तत्त्वम् अहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः । अहङ्काराच्च शब्दादीनि पञ्चतन्मात्राणि श्रोत्रादीन्येकादशेन्द्रियाणि चोत्पद्यन्त

इति पञ्चतन्मात्राणां एकादशेन्द्रियाणां च अहङ्कारः[1] प्रकृतिः, विकृतिश्च महतः । एवं पञ्चतन्मात्रेभ्यो यथाक्रमम् आकाशादीनि पञ्चमहाभूतानि जायन्त इति पञ्चतन्मात्राणि आकाशादिपञ्चमहाभूतानां प्रकृतयः, विकृतयश्चाहङ्कारस्य । इत्थं महत्तत्त्वाहङ्कार-पञ्चतन्मात्रेति सप्त पदार्थाः पूर्वपूर्वतत्त्वापेक्षया विकृतिरूपत्वाद् उत्तरोत्तरतत्त्वापेक्षया च प्रकृतिरूपत्वात् प्रकृतित्वविकृतित्वोभयरूपा इति सिध्यति ॥ ४ ॥

## केवलविकृतयः ।

आकाशादीनि पञ्चमहाभूतानि, श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणेति पञ्च ज्ञानेन्द्रियाणि, वाक्-पाणिपादपायूपस्थेति पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनश्चेति षोडश पदार्थाः केवल-विकृतयः । तत्र आकाशादीनि पञ्चमहाभूतानि पञ्चतन्मात्रेभ्यो जायन्त इति पञ्च-तन्मात्राणां विकृतयः, श्रोत्रादीन्येकादशेन्द्रियाणि चाहङ्कारादुत्पद्यन्त इति अहङ्कारस्य विकृतयः, इति विवेकः । ततश्च पञ्चमहाभूतानाम् एकादशेन्द्रियाणां चेति षोडशपदा-र्थानाम् अन्यस्मादुत्पत्तेः, तेभ्यश्चान्यस्यानुत्पत्तेः केवलविकृतिरूपत्वमिति सिध्यति ॥

ननु षोडशपदार्थानाम् एकादशेन्द्रियेभ्यः कस्य चिदनुत्पत्तेर्भवतु तेषां केवलविकृ-तित्वम्, आकाशादिपञ्चमहाभूतेभ्यस्तु गोघटवृक्षादीनां गोवृक्षादिभ्यो दुग्धबीजादीनां दुग्धबीजादिभ्यश्च दध्यङ्कुरादीनामुत्पत्तेः प्रत्यक्षत्वात् कथङ्कारं पञ्चमहाभूतानां केवल-विकृतित्वं भवेत्? तस्मात् पञ्चमहाभूतानां प्रकृतित्वविकृतित्वोभयरूपतयैव वर्णनं समुचितमिति चेत् ।

अत्राहुः—यद्यपि पृथिव्यादीनां गोघटवृक्षादयो गोवृक्षादीनां दुग्धबीजादयो दुग्ध-बीजादीनां च दध्यङ्कुरादयो विकाराः सन्ति, तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरम्, स्थूलतेन्द्रियग्राह्यत्वयोः समत्वात् । यथाहि स्थूलतेन्द्रियग्राह्यताधर्मौ पृथिव्यादिषु तथैव गोवृक्षादिष्विति विशेषाभावात् । यत्र हि तत्त्वान्तरत्वं तत्र स्थूलतेन्द्रियग्राह्यत्वयोरपि तारतम्यमस्त्येव । प्रकृते तत्त्वान्तरोपादानत्वमेव च प्रकृतित्वमभ्युपगम्यते नोपादानत्व-मात्रम् इति पृथिव्यादीनां तत्त्वान्तरोपादानत्वाभावान्न प्रकृतित्वं किं तु विकृतित्वमेवेति षोडश पदार्थाः केवलविकृतय एव न प्रकृतय इति ॥ ५ ॥

## अनुभयरूपः ।

पुरुषो न कस्यचित्प्रकृतिर्नापि विकृतिरिति सोऽनुभयरूपः । पुरुषो न कस्माचिदु-त्पद्यते नापि पुरुषात्किंचिदुत्पद्यत इति पुरुषो न प्रकृतिर्नापि विकृतिः किन्त्वनुभय-रूपः । "कार्यं कारणसजातीयं कार्यत्वात्, मृज्जातीयमृदुत्पन्नघटवत्" पुरुषस्तु तयोर्विजातीयत्वान्न कार्यकारणोभयरूप इति तु निष्कर्षः । इत्थं पञ्चविंशतितत्त्वानां

---

१ अहङ्कारतत्त्वम् उद्भूततमस्कं प्रकृतिस्तन्मात्राणाम्, उत्कटसत्त्वं त्विन्द्रियाणाम्, रजस्त्वहङ्कारगं गुणद्वयप्रवृत्तिहेतुर्नारम्भकमिति विशेषोऽत्रानुसन्धेयः । अर्थात् अहङ्कार-तत्त्वं तामसं सत् पञ्चतन्मात्राणां प्रकृतिः, तदेव तु सात्त्विकं सत् प्रकृतिरेकादशेन्द्रि-याणाम् । "जातानि सात्त्विकात्तस्मादिन्द्रियाणि सराजसात् । तामसादप्यहङ्कारात्तन्मात्राणि सराजसात् ॥" इति ।

केवलप्रकृतित्वेन प्रकृतिविकृतित्वेन केवलविकृतित्वेन प्रकृतित्वविकृतित्वोभयहीनत्वेन च चतुर्धा विभागः संसिद्धो भवति ॥

**यदुक्तम्—**

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ॥ इन्द्रियाणां साधारणवृत्तिरेवास्ति प्राणः, न तत्त्वान्तरम् । कालोऽपि भूतभविष्यद्वर्तमानवस्तुतो भिन्नो नास्ति कश्चित्पदार्थः, स्वातन्त्र्येण कालस्वरूपस्य निरूपयितुमशक्यत्वात् । तदित्थम्—पुरुषो मूलप्रकृतिः, महदादयः सप्त, पञ्चमहाभूतादयः षोडश, इति पञ्चविंशतिरेव तत्त्वानि सन्ति न न्यूनानि नाप्यधिकानि ॥ ६ ॥

## पुरुषनानात्वम् ।

आत्मन एकत्वे 'कश्चित्पुरुषो बद्धः कश्चिन्मुक्तः' इति बन्धमोक्षव्यवस्था न संभवतीति प्रतिशरीरमात्मा भिन्नभिन्न एवास्ति । तथा च कणभुक्सूत्रम्—"व्यवस्थातो नाना" इति । सांख्यसूत्रमपि—"जन्मादिव्यवस्थातः पुरुषबहुत्वम्" इति । तथा चायमत्र निष्कर्षः—एकस्मिन् जायमाने म्रियमाणे वा, सुखिनि दुःखिनि वा, बद्धे मुक्ते वा नेतरे जन्मादिभाजो भवन्तीति या व्यवस्था सा नोपपद्येत, यदि सर्वशरीरेष्वेक एव पुरुषोऽभ्युपेयेत, तस्मात् पुरुषनानात्वमेवाङ्गीक्रियत इति । तथा पुरुषोऽयं चेतन उत्पत्तिविनाशरहितश्च वर्तते । एवं न कस्यापि कारणं सोऽस्ति । किं तु पुरुषः सर्वथा पद्मपत्रवन्निर्लेप एव वर्तते । किमुक्तम् ? पद्मपत्रं यथा जलेन लिप्तं न भवति तथा पुरुषोऽपि कर्तृत्वभोक्तृत्वादिधर्माणामाश्रयो न भवति । तत्र चेदमनुमानं मानम्—"पुरुषः कर्तृत्वाभाववान्, कारणत्वाभाववत्त्वात्, यन्नैवं तन्नैवं यथा बुद्धिः ।" इति ।

**अयमर्थः**—तेन पुरुषेण कर्तृत्वधर्मत्वाभाववता भवितव्यम् कारणत्वधर्मत्वाभाववत्त्वात्, यो यः पदार्थः कर्तृत्वधर्मत्वाभाववान् न भवति, स कारणत्वधर्मत्वाभाववानपि न भवति, यथा बुद्धिः [ महत्तत्त्वम् ] कर्तृत्वधर्मत्वाभाववती नास्ति, किं तु कर्तृत्वधर्मवत्येवास्तीति सा कारणत्वधर्मत्वाभाववत्यपि नास्ति, किं तु कारणत्वधर्मवत्येव सा वर्तत इति ।

अनेन चानुमानेन पुरुषः कर्तृत्वाभाववान् सिध्यति । यश्च कर्ता भवति स एव भोक्ता भवतीति नियमात् भोक्तृत्वमपि न पुरुषधर्म इत्यायाति । ततश्च 'न पुरुषः

---

१ तथाच सांख्यप्रवचनभाष्यकाराः—प्रकृतेः कार्यं महत्तत्त्वं, महतश्च कार्योऽहङ्कारः, अहङ्कारस्य कार्यद्वयम्—तन्मात्राणि, उभयमिन्द्रियं च । तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेन एकादशविधम्, तन्मात्राणां कार्याणि च पञ्च स्थूलभूतानि, स्थूलशब्दाव तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम् । पुरुषस्तु कार्यकारणविलक्षणः, इत्येवं पञ्चविंशतिः पदार्थव्यूहः, एतदतिरिक्तः पदार्थो नास्ति, दिक्कालौ चाकाशमेव, इति । २ यथा पद्मपत्रं जले वर्तमानमपि अम्भसा लिप्तं न भवति तथा सर्वगतोऽपि पुरुषो न कर्तृत्वाद्याश्रयो भवतीति भावः ।

कर्ता नापि भोक्ता' इति संसिद्धम् । यत्तु क्वचित् सांख्ये पुरुषस्य भोक्तृत्वमुक्तम्, तदपि पुरुषे [ आत्मनि ] बुद्धिनिष्ठभोक्तृत्वमारोप्यैव, सांख्यनये तस्या एव भोक्रीत्वात् पुरुषस्य च परमार्थतोऽभोक्तृत्वात् ॥

ननु बुद्धेरिव पुरुषस्यापि कारणत्वाङ्गीकारे का क्षतिरिति चेत् । अत्राहुः—यदि पुरुषस्य घटादिकार्याणाम् उपादानकारणत्वमभ्युपगम्येत, तदा उपादानकारणेन सह कार्यस्याभेदात् घटादिकार्याणां नाशे चेतनपुरुषस्यापि नाशापत्तिः । तच्चानिष्टम्, "अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा" इति श्रुत्या तस्य स्वरूपविनाशतः कार्यादिरूपधर्मनाशप्रयुक्तनाशतश्च रहितत्वाभिधानात् । "अज आत्मा" "न जायते म्रियते वा कदाचित्" इत्यादिश्रुतिस्मृतिभिरात्मनो जन्ममरणादिसर्वविकाररहितत्वाभिधानाच्च । आत्मनो नाशत्वाभ्युपगमे कर्तुरात्मनः उत्तरजन्मनि असत्त्वेन अकर्तुश्च सत्त्वेन कृतनाशाकृताभ्यागमदोषयोरनुद्धाराच्च । तस्मात् तस्याऽकारणत्वमेवाभ्युपेयम्[२] ॥ ७ ॥

## पुरुषसद्भावे मानम् ।

ननु तादृशनिर्विकारचेतनपुरुषसद्भावे किं मानम्? इति चेत् । अत्राहुः— "चेतनोऽहं करोमि" इति प्रतीत्या जडायां बुद्धौ चेतनताधर्मः प्रतीयते, स च स्वरूपतस्तत्र नास्तीति आरोपितो मन्तव्यः स्यात् । यतो यो धर्मो यस्मिन् वस्तुनि वस्तुतो नास्ति स एव धर्मो यदि कदाचित् तस्मिन् वस्तुनि प्रतीयेत तदा तस्य धर्मस्य तस्मिन् वस्तुनि आरोप एव कर्तव्यो भवति । ततश्च यथा पीतरूपरहिते शंखे पित्तदोषवतः पुरुषस्य "पीतः शंखः" इत्येवं पीतरूपं प्रतीयते तत्र शंखे स्वरूपतः पीतत्वाभावात् नेत्रस्थपित्तद्रव्यस्य पीतरूपमारोप्यते, तथा चेतनताधर्मरहितायां बुद्धावपि चेतनताधर्मस्यारोप एव कर्तव्यः स्यात् । आरोपश्च कस्मिंश्चित् पदार्थे प्रसिद्धधर्मस्यैवान्यत्र भवति, सर्वथाऽप्रसिद्धधर्मस्यारोपासंभवात् । तत्र प्रधानादीनां सर्वेषां जडत्वेन चेतनताधर्माश्रयत्वेन वक्तुमशक्यत्वात् परिशेषात् पुरुष एव चेतनताधर्माश्रयतया सिध्यतीति । परिशेषानुमानप्रयोगश्चेत्थम्—"पुरुष एव चेतनताधर्मवान् प्रधानादीनां जडत्वेन चेतनानाश्रयत्वात्, यन्नैवं तन्नैवम् ।" इति ।

ततश्च कर्तृत्वधर्मशालिन्यां जडायां बुद्धौ प्रतीयमानश्चेतनताधर्म एवान्यथानुपपत्त्या पुरुषमनुमापयति, बुद्धेः प्रधानादीनां च स्वयं जडत्वेन तदनाश्रयत्वादिति चेतनताधर्माश्रयतया पुरुषसिद्धिरिति सर्वं[३] पुष्कलम् ॥ ८ ॥

---

१ 'संघातपरार्थत्वात्—' इति कारिकायामित्यर्थः । २ पुरुषस्य घटादिकारणत्वे कार्यकारणयोरभेदाद् घटादिकार्यनाशे घटादिरूपेण पुरुषस्यैव नाशो जातः, तथा च पुरुषस्य सर्वथा कूटस्थत्वं व्याहन्येतेत्यतः पुरुषस्य न कारणत्वमिति सारम् । ३ बुद्धिगतचैतन्याभिमानस्य पुरुषं विनानुपपत्त्या पुरुषः कल्प्यते, कुत्रचित्प्रसिद्धस्यैव चैतन्यस्य बुद्धावारोपसंभवादिति सारम् ।

## पुरुषस्य बन्धमोक्षौ।

ननु सांख्यसिद्धान्ते असङ्गनिर्विकारपुरुषस्य कस्यापि कर्मणः कर्तृत्वाभावात् पुरुषे धर्माधर्मयोरुत्पत्तिर्न संभवति, कर्मणः कर्तरि एव विहितनिषिद्धकर्मजन्यधर्माधर्मयोरुत्पत्तेः, धर्माधर्मावेव च स्वाधिकरणे सुखदुःखे उत्पादयतः, ततश्च धर्माधर्मयोरभावेन पुरुषे सुखदुःखयोरपि उत्पत्तिर्न स्यात्, दुःखानुत्पत्तौ च दुःखसंबन्धरूपबन्धस्य दुःखध्वंसरूपमोक्षस्य च पुरुषे नास्ति संभवः। "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते" इत्यादिशास्त्रवचनैश्च जीवात्मैव बन्धमोक्षभागी प्रतिपाद्यते। सांख्यनयेऽपि पुरुषस्य भोगमोक्षार्थमेव प्रधानस्य प्रवृत्तिरङ्गीक्रियते। तत्र प्रधानस्य विषयाकारपरिणामे पुरुषीयभोगः, बुद्ध्या विवेकरूपे परिणामे च पुरुषमोक्षः। तत्र "बुद्धिः आत्मनो भिन्ना" इति भेदज्ञानं विवेकः। तदिदं सर्वमसङ्गतं स्यादिति चेत्। अत्राहुः—यद्यपि शास्त्रे जीवात्मनो बन्धमोक्षभागित्वमुक्तम्, तथापि वस्तुतो बन्धमोक्षौ महत्तत्त्वनामिकायां बुद्धावेव भवतः, पुरुषस्य पुष्करपलाशवन्निर्लेपत्वात्। पुरुषे तु विद्यमानायां बुद्धौ बद्धत्वम् अविद्यमानायां च तस्यां मुक्तत्वमुपचर्यते। तथाहि—बुद्धौ विद्यमानायामेव चक्षुरादीन्द्रियद्वारा बाह्यघटादिप्रदेशे प्राप्ताया बुद्धेः "अयं घटः–अयं पटः" इत्यादिरूपो घटादिविषयाकारः परिणाम उत्पद्यते। स बुद्धिपरिणाम एव घटादिविषयकवृत्तिज्ञानमुच्यते। तेन वृत्तिज्ञानेन सह संबन्धे सति घटादयो विषयाः "स्वाकारज्ञानपरिणामिबुद्ध्याऽगृहीतभेदकत्वरूपपरम्परासंबन्धेन पुरुष उपचरिता भवन्ति। तस्मात् घटादयो विषया एव पुरुषस्य असङ्गनिर्विकारस्वरूपं तिरोधाय्य संसारसंपादका भवन्ति। अयमेव पुरुषस्य बन्धः। अत्र 'स्व'-शब्देन घटादिविषयाणां ग्रहणम्। तेषाम् आकारः="अयं घटः" इत्यादिरूपं वृत्तिज्ञानम्, तस्य परिणामि=उपादानकारणं बुद्धिः, तया सह अत्यन्तसान्निध्यरूपदोषेण न गृहीतो भेदो यस्य पुरुषस्य सोऽगृहीतभेदकस्तस्य भावस्तत्त्वम्। ईदृशबुद्धिघटितपरम्परासंबन्धेन बाह्या घटादयो विषयाः पुरुषे तिष्ठन्तीत्यर्थः॥ विवेकेन बुद्धिनाशे 'अयं घटः' इत्यादिरूपो घटादिविषयाकारवृत्तिज्ञानरूपपरिणामो नश्यति, वृत्तिज्ञानाभावे बाह्यघटादिविषयाणां पुरुषेऽसंबन्ध इति कैवल्यरूपेण पुरुषस्थितिः। अयमेव पुरुषस्य मोक्षः। इमावेव आरोपितौ बन्धमोक्षावादाय शास्त्रेषु जीवात्मनो बन्धमोक्षभागित्वमुक्तमिति॥ ९॥

---

१ पुरुषस्याकर्तृत्वे पुरुषस्य दुःखध्वंसरूपो मोक्षो न स्यात्, पुरुषेऽकर्तृत्वेन धर्माधर्माद्यनुत्पत्त्या दुःखादेरनुत्पादादिति शङ्काग्रन्थार्थः। २ तदयं निष्कर्षः—बुद्धिसत्त्वे इन्द्रियद्वारा बहिर्निर्गताया बुद्धेर्घटादिदेशप्राप्तौ घटाद्याकारेण परिणतिर्जायते, सैव ज्ञानमित्युच्यते, तादृशज्ञानेन संबद्धो घटादिर्विषयः, स्वाकारज्ञानकारणबुद्ध्या अगृहीतभेदकत्वसंबन्धेन पुरुषनिष्ठः सन् पुरुषस्वरूपतिरोधानेन पुरुषस्य संसारापादको भवति। बुद्धिनाशे तु तत्परिणामस्य घटाद्याकारस्याभावेन विषयसंबन्धभानाभावात् पुरुषस्य कैवल्यावस्थानरूपो मोक्षः सिद्ध एव। एतदुक्तं भवति—बुद्धौ भेदज्ञानाभावात् पुरुषे बद्ध इति व्यवहारो न वास्तविकः, दुःखसंबन्धस्य बुद्धावेव

## पुरुषस्याकर्तृत्वं बुद्धेर्जडत्वं च ।

कर्तृत्वरहिते पुरुषे कर्तृत्वं चेतनतारहितायां बुद्धौ चेतनत्वं च पुरुषबुद्ध्योर्भेदाग्रहणादेव, परमार्थतः पुरुषस्याकर्तृत्वात् बुद्धेश्च जडत्वात् । अत एव "मम इदं कर्तव्यम्" इत्येवं बुद्धौ पुरुषसंबन्धो घटादिविषयसंबन्धो वृत्तिज्ञानरूपव्यापारसंबन्ध इति संबन्धत्रयं प्रतीयते । तत्र 'मम' इत्यनेन बुद्धौ चेतनपुरुषसंबन्धः, स्वच्छदर्पणे मुखप्रतिबिम्बवद् अत्यन्तस्वच्छायां बुद्धौ चेतनपुरुषप्रतिबिम्बात् । तत्र यथा दर्पणे मुखस्य नास्ति कश्चिद् वास्तविकः संबन्धः किं तु प्रतिबिम्बमात्रमेव संबन्धोऽस्ति, तथा स्वच्छबुद्धौ पुरुषस्यापि वास्तिकसंबन्धो नास्ति किं तु प्रतिबिम्बमात्रमेव, पुरुषबुद्ध्योः परस्परं भेदाग्रहेण द्वयोरेकत्वाभिमानस्यैव बुद्धौ पुरुषीयसंबन्धत्वात् । "इदम्" इत्यनेन बुद्धौ घटादिविषयसंबन्धः । तत्र बुद्धेश्चक्षुरादीन्द्रियद्वारा जायमानः "अयं घटः" इत्यादिज्ञानरूपः परिणाम एव घटादिविषयाणां बुद्धौ संबन्धः । बुद्धौ घटादिविषयसंबन्धश्च मुखश्वासाभिहतदर्पणे मालिन्यसंबन्ध इव वास्तविक एव । "कर्तव्यम्" इत्यनेन च बुद्धौ घटादिविषयकनिश्चयात्मकज्ञानरूपव्यापारसंबन्धः । इत्थं संबन्धत्रयरूपांशत्रयवती बुद्धिः । तत्र यथा बुद्ध्या सह चेतनपुरुषस्य न वास्तविकः संबन्धः, तथा तदीयज्ञानरूपपरिणामेन सहापि दर्पणस्थमलिम्ना मुखस्येवावास्तविक एव संबन्धः । तदिदं वृत्तिज्ञानमेव उपलब्धिनाम्ना जेगीयते,— "चेतनोऽहं करोमि" इत्येवं बुद्धावारोपित चेतनपुरुषस्य तदीयपरिणामरूपवृत्तिज्ञानेन सह "इदं जानामि" इत्येवं प्रतीयमानो योऽवास्तविकः संबन्धः, तच्छालित्वृत्तिज्ञानस्यैवोपलब्धित्वात् ॥ एवं वृत्तिज्ञानमिव सुखदुःखेच्छाद्वेषधर्माधर्मसंस्कारा अपि बुद्धेरेव धर्माः, "सुखी अहं करोमि, दुःखी अहं करोमि" इत्येवं सुखदुःखादिधर्माणां प्रयत्नरूपकृत्या सह सामानाधिकरण्यप्रतीतेः, धर्मिणोऽभेदं विना च धर्माणां सामानाधिकरण्याप्रतीतेः । ततश्च यथा प्रयत्नरूपा कृतिर्बुद्धेर्धर्मस्तथा सुखदुःखादयोऽपि बुद्धेरेव धर्मा इति मन्तव्यम् ॥

ननु यथा कृत्या सह सामानाधिकरण्यात् सुखदुःखादयो बुद्धेर्धर्मा मन्यन्ते, तथा "चेतनोऽहं करोमि" इत्येवं चेतनताधर्मस्यापि कृत्या सह सामानाधिकरण्यप्रतीतेश्चेत-

---

सत्त्वात्, भेदग्रहे बुद्धिनिवृत्तौ तु पुरुषस्य मोक्षः सिद्ध एव । तथाच पुरुषे बद्धमुक्तव्यवहारः, औपचारिक एव, दुःखसंबन्धतद्ध्वंसरूपबन्धमोक्षयोर्बुद्धावेव सत्त्वात् । तथा चोक्तम्—"बध्यते मुच्यते च नानाश्रया प्रकृतिः" इति । बुद्धौ भेदाग्रहश्च बुद्धिसांनिध्यरूपदोषादेवेति ।

१ दर्पणस्य यथा मुखसंबन्धः प्रतिबिम्बमात्रं, न तु तात्त्विकस्तथा बुद्धिपुरुषयोरेकत्वाभिमानात्पुरुषसंबन्धोऽपि दर्पणाकारायां बुद्धौ पुरुषप्रतिबिम्बोदयमात्रादेवेति न तात्त्विक इति सारम् । २ यथा दर्पणे मलिनिम्नः संबन्धस्तात्त्विको भवति, एवं घटादौ बुद्धिसंबन्धोऽपि तात्त्विक एवेति सारम् । ३ "ममेदं कर्तव्यम्" इति बुद्धयभिलापकशब्दे "मम" इत्यनेन पुरुषसंबन्धः, "इदम्" इत्यनेन विषयसंबन्धः, "कर्तव्यम्" इत्यनेन च व्यापारसंबन्धो बुद्धावभिलाप्यत इत्यंशत्रयवती बुद्धिरिति सिद्धमिति सारम् ।

नताधर्मोऽपि बुद्धेरेव मन्तव्य इति चेत्। मैवम्। बुद्धेः परिणामित्वेन चेतनत्वानुपपत्तेः, परिणामिवस्तूनामपि चेतनत्वाभ्युपगमे तु मृदादीनामपि तथात्वापत्तेः। ततश्चेदमनुमानं सिध्यति—"बुद्धिर्न चेतना, परिणामित्वात्, मृद्वत्।" इति। "चेतनोऽहं करोमि" इत्यनुभवस्तु "लोहितः स्फटिकः" इतिवत् चेतनतांशे भ्रान्तिरूप एवेति सर्वमनवद्यम्॥ १०॥

## प्रधानमेव जगतः कर्तृ।

ननु पुरुषस्यासङ्गनिर्विकारत्वात् जगतः कर्तृत्वं न संभवति, सांख्यसिद्धान्ते पुरुषे कर्तृत्वानङ्गीकाराच्च, पुरुषाद् भिन्नः कश्चिदीश्वरोऽपि सांख्यनये नास्ति यो जगतः कर्ता स्यात्, कर्तारं विना च न कस्यचित्कार्यस्योत्पत्तिरिति कार्यरूपजगतः कश्चित्कर्तावश्यं मन्तव्यः। स च सांख्यसिद्धान्ते कः? इति चेत्। अत्राहुः—स्वतन्त्रत्वादुत्पत्तिविनाशरहितत्वाच्च नित्यमेकमचेतनं प्रधानमेव जगतः कर्तृ—इति। यद्यपि कार्यानुकूलकृतिमत्त्वरूपं कर्तृत्वं प्रधाने नास्ति, तदीयकार्यरूपमहत्तत्त्वनामकान्तःकरणरूपबुद्धावेव तादृशकर्तृत्वस्य सद्भावात्, तथापि कर्तृरूपबुद्धेर्यत् प्रधाने उपादानकारणत्वं तदेव प्रधाने कर्तृत्वमस्ति। ततश्च यथा घटरूपकार्यानुकूलकृतिमत्त्वरूपं कर्तृत्वं कुलाले तथा जगद्रूपकार्यानुकूलकृतिमत्त्वं कर्तृत्वं तु बुद्धावेव न प्रधान इति सिध्यति। अपि च "यादृशं कार्यं तस्य कारणमपि तादृशमेव भवति" इत्यस्त्यव्यभिचरितो नियमः, त्रिगुणात्मकं च जगदिति तत्कारणेनापि त्रिगुणात्मकेनैव भवितव्यमित्यतोऽपि प्रधानमेव जगतः कर्तृ, तस्यैव त्रिगुणात्मकर्तृत्वात्। तथाच प्रयोगः—"इदं कार्यरूपं जगत् सुखदुःखमोहात्मककारणकम्, सुखदुःखमोहान्वितत्वात्, यद् येनान्वितं भवति तत् तत्कारणकम्, यथा सुवर्णालङ्कारः सुवर्णान्वितत्वेन सुवर्णकारणकः, तथा चेदं तस्मात्तथा" इति। तत्र सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरुच्यते, सत्त्वादिगुणानां न्यूनाधिक्ये सृष्टिः। तत्र सत्त्वं सुखरूपं रजो दुःखरूपं तमश्च मोहरूपमस्ति। सर्वेऽपि पदार्थाः सुखदुःखमोहात्मकाः सन्ति। तथाहि—एको मणिर्यस्य सविधेऽस्ति तस्य सुखरूपः, यस्य सनीडे नास्ति परं तत्कामयितुः दुःखरूपः, यश्चोदासीनस्तस्य मोहरूपः। यो हि उदासीनः स तेन मणिना विचित्रोऽस्ति, 'मुह वैचित्त्ये' इति धातोर्मोहशब्दनिष्पत्त्या तस्य विचित्रार्थकत्वात्। एवमन्यत्राप्यूह्यम्। तदाख्यायि सांख्यवृद्धैः—

---

१ यानि हि येन रूपेण आस्थौल्यादा च सौक्ष्म्यात् समन्वीयन्ते तानि तत्कारणानि दृष्टानि। यथा—घटादयो रुचकादयश्च आस्थौल्यादा च सौक्ष्म्यान्मृत्सुवर्णान्वितास्तत्कारणकाः, तथा चेदं बाह्यमाध्यात्मिकं च भावजातं सुखदुःखमोहात्मनाऽन्वितं उपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मसामान्यकारणकं भवितुमर्हति। तत्र जगत्कारणस्य येयं सुखात्मता तत् सत्त्वं, या दुःखात्मता तद् रजः, या च मोहात्मता तत् तमः, इति त्रैगुण्यकारणसिद्धिः। तथाहि—प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते। यथा मैत्रदारेषु पद्मावत्यां मैत्रस्य सुखम्। तत्कस्य हेतोः? तं प्रति सत्त्वगुणसमुद्भवात्। तत्सपत्नीनां च दुःखम्। तत्कस्य हेतोः? ताः प्रति अस्या रजोगुणसमुद्भवात्। चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादः। तत् कस्य हेतोः? तं प्रत्यस्यास्तमोगुणसमुद्भवात्। पद्मावत्या

"गुणसाम्यं प्रधानं स्याद् गुणाः सत्त्वं रजस्तमः । सुखदुःखमोहरूपं दृश्यते हि स्फुटं जगत् ॥' इति ॥ ११ ॥

## पुरुषात्प्रकृतिनिवृत्तिः ।

संसृतिनिमग्नः पुरुषः सांसारिकसुखदुःखानि स्वात्मन्यभिमन्यमानः कदाचित् पुण्यपरिपाकेन सद्गुरूपदेशतो दुःखत्रयनिवृत्तिं कामयते सा च न विवेकमन्तरेति स्वं प्रकृतितो भिन्नतयाभिमन्यते, । प्रकृतिरपि भोगविरक्तं निर्वासनं पुरुषं विलोक्य नर्तकीवत् स्वयमेव ततो निवृत्ता भवति । पुरुषीयभोगापवर्गपर्यन्तमेव प्रकृतिस्थितेः सप्रयोजनत्वात् । तदुक्तमीश्वरकृष्णेन—रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् । पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ इति १२ ॥

## परार्था प्रकृतेः प्रवृत्तिः ।

ननु यावती प्रवृत्तिः, सा सर्वा स्वार्थतः परार्थतो वा दृष्टिपथमवतरति । प्रकृतिस्तु जडेति न तस्याः स्वार्थतः परार्थतो वा प्रवृत्तिरुपपद्यते । न च चेतनो जीवात्माधिष्ठाता भूत्वा तत्प्रवृत्तिं कारयिष्यतीति शङ्क्यम्, जीवात्मनः प्रकृतिनिखिलरूपाज्ञातृत्वेन तदधिष्ठातृत्वासंभवात् । न च तर्हि तत्प्रवृत्तिकृते सर्वज्ञः परमेश्वरः तदधिष्ठाता कल्प्यतामिति भ्रमितव्यम्, निष्प्रयोजनत्वेन तस्यैवासिद्धेः । तथाहि—किं भवदभिमतः परमेश्वरः स्वार्थं जगद् विरचयति? उत परार्थम्? । तत्र नाद्यः, पूर्णकामस्य परमेश्वरस्य स्वप्रयोजनत्वासंभवात् । न द्वितीयः, परप्रयोजनकृते बुद्धिमतामप्रवृत्तेः । न च करुणया निष्प्रयोजना प्रवृत्तिरपि बुद्धिमतां जायत एवेति वक्तव्यम्, सृष्टेः प्राक् कस्यचिदपि प्राणिनोऽभावाद् दुःखदर्शनाभावेन करुणानुदयात् । यदि करुणया सृष्टिर्विरचिता तर्हि सर्वे सुखिन एव कुतो न निरमायिषत? न च कर्माधीनः परमेश्वरो विचित्रां सृष्टिं कलयतीति वाच्यम्, एवमभ्युपगमे कर्मणैव निर्वाहाद् अजागलस्तनवन्निष्प्रयोजनेश्वराङ्गीकारस्यैवानावश्यकत्वात् । इति चेत् । अत्राहुः—परार्थैव भवति प्रकृतेः प्रवृत्तिः, क्षीरादावचेतनेऽपि परार्थायाः प्रवृत्तेर्दृष्टचरत्वात्, अचेतनेषु दयया स्वार्थतो वा प्रवृत्तेरदर्शनात् । तदुक्तम्—

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" इति ॥ १३ ॥

---

च सर्वे भावा व्याख्याताः । तस्मात्सर्वं सुखदुःखमोहान्वितं जगत् तत्कारणं गम्यते । तच्च त्रिगुणं प्रधानं, प्रधीयते=क्रियतेऽनेन जगदिति, प्रधीयते=निधीयतेऽस्मिन् प्रलयसमये जगदिति वा प्रधानम् । तच्च मृत्सुवर्णवदचेतनं चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं स्वभावत एव प्रवर्तते, न तु केनचित् प्रवर्त्यते । तथा ह्याहुः—"पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्" इति । ( भामती ) करणम्=इन्द्रियं केनचिच्चेतनेन न कार्यते=न प्रेर्यते, किं तु करणानां प्रवृत्तावनागतास्योपभोगापवर्गरूपः पुरुषार्थ एव हेतुः, स च न्यायो गुणानामपि तुल्य इत्यर्थः । ( कल्पतरुः )

## शून्यकार्यवादः ।

'असतः सज्जायते' इति बौद्धाः । विनष्टाद्धि किल बीजाद् अङ्कुर उत्पद्यते, नष्टाच्च दुग्धाद् दधि, विनष्टाच्च मृत्पिण्डाद् घटः, इत्येवम् अभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पत्तिदर्शनात्, "सर्वे कार्यरूपा भावा अभावकारणकाः, कार्यत्वात्, बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्" इत्येवम् अनुमीयते, इति हि सौगताकूतम् ॥ १४ ॥

## शून्यवादखण्डनम् ।

तदिदं सौगतमतं न समीचीनम्, असतः सदुत्पत्तेरसंभवात् । न हि वन्ध्यापुत्रात्कस्यचिदुत्पत्तिर्दृश्यते । नापि शशविषाणं कारणतया दृष्टिपथमवतरति । अङ्कुरादिस्थलेऽपि बीजावयवा एव कुतश्चित् निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते तस्माद् व्यूहान्तराच्च अङ्कुर उत्पद्यते इति बीजावयवस्यैव कारणत्वं नाभावस्येति सर्वं सुस्थम् ॥ १५ ॥

## असत्कार्यवादः ।

असत्कार्यवादो नैयायिकानाम् । तन्मते असदेव कार्यमुत्पद्यते । यथा—पूर्वम् असदेव तत्तद् घटादिकार्यं दण्डचक्रचीवरादिसामग्रीसमवहिताद् मृदादिकारणाद् भिन्नं सदुत्पद्यते । अत्रायं भावः—स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव, पश्चात् कारणसामग्रीवशाद् उत्पद्यत इति कार्यकारणयोरन्यत्वं परमार्थतः सत्यं चेति । ततश्च "सतोऽसज्जायते" इति युक्तियुक्तम् ॥ १६ ॥

## असत्कार्यवादखण्डनम् ।

तदिदं नैयायिकमतमप्यचारु, असतः कार्यस्य कारणव्यापारसहस्रैरपि कर्तुमशक्यत्वात् । न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं पार्यते । कारणेऽसतः कार्यस्य कार्यसत्तया सह संबन्धासंभवाच्च । न हि अविद्यमानं शशशृङ्गं कदापि शशे शृङ्गरूपकार्यसत्तां भजते । तथाच कापिलसूत्रम्—"नासदुत्पादो नृशृङ्गवत्" इति ॥ १७ ॥

## विवर्तवादः ।

अप्रच्युतपूर्वस्वरूपस्य असत्यनानाऽऽकारावभासो विवर्तः ।

तदुक्तम्—

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः ।
सतत्त्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः ॥" इति ।

विवर्तवादो मायावादिवेदान्तिनाम् । तन्मते कारणमेव कार्यस्वरूपेण भासते, इति कारणस्यैव सत्यत्वं न तु कार्यस्य सत्यत्वम् । यथा शङ्करभारतीमते—"शुक्तौ–इदं रजतम्" इति ज्ञानानन्तरम् अधिष्ठानभूतशुक्तिज्ञाने जाते बाधज्ञानेन पूर्वं ज्ञातं रजतं यथा निवर्तते, तद्वत् ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तते ।

तदुक्तम्—

"ततो निरंश आनन्दे विवर्तो जगदिष्यताम् ।
अवस्थान्तरभानं तु विवर्तो रज्जुसर्पवत् ॥" इति ॥ १८ ॥

## विवर्तवादखण्डनम् ।

तदिदं वेदान्तिमतमपि न समीचीनतामर्हति, असति बाधे प्रत्यक्षसिद्धपदार्थस्य मिथ्यात्वासंभवात् । यत्र हि बाधज्ञानं किंचिदन्यत् कारणं वा भवति, तत्रैव मिथ्यात्वस्य वक्तुं शक्यत्वात् । तथाच कापिलसूत्रम्—

"जगत्सत्यत्वम् अदुष्टकारणजन्यत्वाद् बाधकाभावात्" इति । तत्र दुष्टकारणजन्यं यथा—पीतशंखज्ञानम् । बाधकं च "नेदं रजतम्" इति ज्ञानम् । न च इदं तथा, प्रकृत्यादीनामदुष्टत्वात् । "नेदं जगत्" इति प्रत्ययाभावात् बाधकं च नास्ति । तस्माज्जगतो मिथ्यात्वासंभवाद् विवर्तवादोऽसङ्गत[१] एव ॥ १९ ॥

## जगत् ।

संक्षेपाज्जगदुच्यते—

ऊर्ध्वं-भूर्भुवः स्वर्महर्जनस्तपः सत्यम् इति । अधः-महातलरसातल-तलातल-पाताल-सुतल-वितलातला इति । मध्ये-जम्बूद्वीपः । तन्मध्ये सुमेरुः । तत्पूर्वादिचतुर्दिक्षु-मन्दर-गन्धमादन-विपुल-सुपार्श्वनामानो विष्टम्भपर्वताः । मेरुदक्षिणे-भारतवर्ष-हिमालयपर्वत-किंपुरुषवर्ष-हेमकूटपर्वत—हरिवर्ष-निषधपर्वताः । मेरोरुत्तरे—कुरुवर्ष-शृङ्गिपर्वत-हिरण्यकवर्ष-श्वेतपर्वत-रम्यकवर्ष-नीलपर्वताः । मेरुपूर्वे—भद्राश्ववर्ष-माल्यवत्पर्वतः । मेरुपश्चिमे—केतुमालवर्ष-गन्धमादनपर्वतः । मेरोरधः—इलावृत्तवर्षः । लक्षयोजनः जम्बुद्वीपः । तद्वेष्टनेन तत्तुल्यः लवणसमुद्रः । तद्वेष्टनेन तद्विगुणः शाकद्वीपः । तद्वेष्टनेन तत्तुल्यः इक्षुरससमुद्रः । तद्वेष्टनेन तद्विगुणः कुशद्वीपः । तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः । तद्वेष्टनेन तद्विगुणः क्रौञ्चद्वीपः । तद्वेष्टनेन तत्तुल्यः घृतसमुद्रः । तद्वेष्टनेन तद्विगुणः शाल्मलिद्वीपः । तद्वेष्टनेन तत्तुल्यः दधिसमुद्रः । तद्वेष्टनेन तद्विगुणः प्लक्षद्वीपः । तद्वेष्टनेन तत्तुल्यः दुग्धसमुद्रः । तद्वेष्टनेन तद्विगुणः पुष्करद्वीपः । तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः । लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगत् ॥ इति ॥ २० ॥

## सत्कार्यवादः ।

सत्कार्यवादः सांख्यानाम् । एतन्मते कारणमेव कार्यरूपेण परिणमते, इति कार्यकारणयोरनन्यत्वं सत्यत्वं च । यथा दुग्धं सदेव दधिरूपेण परिणमते, इति दधि कार्यान्तरं दुग्धाद्भिन्नं च न भवति । युक्तं चैतत्, पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसश्चाभिव्यक्तेः परिदृश्यमानत्वात् । तथा चोक्तं सांख्यवृद्धैः—

"सदेव कार्यमुत्पत्तेः पूर्वं कारकरूपकम् ।
आविर्भावतिरोभावौ जन्मनाशावुदीरितौ ॥ इति ॥ २१ ॥

---

१ श्रुतिरपि जगतः सत्यतां स्पष्टं प्रतिपादयति—"यदिदं किं च तत्सत्यमित्याचक्षते" "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" "भोक्ता भोग्यं प्रेरितारं च" इति । वेदान्तसूत्रकारः श्रीव्यासदेवोऽपि—"परिणामात्" इत्यादिसूत्रैः प्रपञ्चं ब्रह्मणः परिणाममभ्युपैति, न तद्विवर्तमिति जगतोऽनित्यत्वमेव न मिथ्यात्वमिति सारम् ।

## जीवन्मुक्तो विदेहमुक्तश्च ।

मुक्तो द्विविधः—जीवन्मुक्तो विदेहमुक्तश्च । तत्र "यस्य तत्त्वसाक्षात्कारस्तु जातः परं प्रारब्धकर्मभोगोऽवशिष्टः स जीवन्मुक्तः । यस्य च प्रारब्धकर्मभोगः समाप्तः आत्मसाक्षात्कारश्च जातः स विदेहमुक्तः इति विवेकः । तथा च ब्रह्मसूत्रम्—

"भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते" इति ॥ २२ ॥

## सांख्यन्यायवैशेषिकदर्शनानां जीवात्मा ।

### तत्रादौ सांख्यीयजीवात्मस्वरूपम् ।

एवं हि सांख्यैराख्यायते—आत्मनि सत्त्वादयस्त्रयो गुणा न सन्तीति सः **"अत्रिगुणः"**, प्रकृतेश्च नितान्तं भिन्न इति **"अव्यक्तविलक्षणः"** । प्रकृतेस्तदीयमहत्तत्त्वादिकार्याणां च न कश्चिदंशस्तस्मिन् सम्मिलितो नाप्यात्मनः कश्चिदंशस्तेषु सम्मिलित इति **"व्यक्ताव्यक्तविलक्षणः"** । आत्मानं केचिदेव योगसम्पन्नास्तत्त्वज्ञा जानन्ति न सर्वे इत्यसर्वसाधारणत्वात् **"असाधारणः"** प्रतिसंघातं भिन्न इति वा **'असाधारणः'** । नासौ प्रधानादिवज्जडः किं तु चेतनताशालीति **"चेतनः"** । मृत्तिका यथा घटशरावादीन्यनेकानि कार्याण्युत्पादयति न तथा पुरुषः किंचित्कार्यमुत्पादयतीति **'अप्रसवधर्मी'** सरूपविरूपपरिणामहीन इति यावत् । **ततश्च** "अत्रिगुणः, विवेकी [ असंहतः ] अविषयः, असाधारणः, चेतनः, अप्रसवधर्मी च पुरुष इति सिध्यति । अत्रिगुणत्वादयो धर्माः पुरुषस्यैव, प्रकृतौ तदीयकार्येषु महत्तत्त्वादिषु चासत्त्वात् । तथा आत्मा प्रतिशरीरं भिन्नत्वाद् **"अनेकः"** इति । अयं चानेकत्वधर्मो महत्तत्त्वादिसाधारणः, आत्मवत्तेषामप्यनन्तत्वात् । सम्प्रति प्रकृतिपुरुष-

---

१ पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः—क्लेशरूपत्वाद् बन्धो भवति, तन्निरोधनं जीवन्मुक्तिः । उपाधिविनिर्मुक्तघटाकाशवत् प्रारब्धक्षयाद् विदेहमुक्तिः । सैव कैवल्यमुक्तिः । अथ जीवन्मुक्तवाक्यानि—"ये शुद्धवासना भूयो न जन्माऽनर्थभागिनः । ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥" तपःप्रभृतिना यस्मै हेतुनैव विना पुनः । भोगा इह न रोचन्ते स जीवन्मुक्त उच्यते ॥ आपतत्सु यथाकालं सुखदुःखेष्वनारतः । न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ॥ ( अनारतः—अनासक्तः ) हर्षाऽमर्षभयक्रोधकामकार्पण्यदृष्टिभिः । न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ ईप्सिताऽनीप्सिते न स्तो यस्यान्तर्वर्तिदृष्टिषु । सुषुप्तिवद्यश्चरति स जीवन्मुक्त उच्यते ॥ यस्य नाऽहंकृतो भावो बुद्धिर्यस्य न लिप्यते । यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥ साधुभिः पूज्यमानेऽस्मिन् पीड्यमानेऽपि दुर्जनैः । समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ॥ सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः । निरिच्छो वर्तते कार्ये स जीवन्मुक्त उच्यते ॥ जरामरणमापच्च राज्यं दारिद्र्यमेव च । रम्यमित्येव यो भुङ्क्ते स जीवन्मुक्त उच्यते ॥ शान्तसंसारकलनः कलावानपि निष्कलः । यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ यः समस्तार्थजालेषु व्यवहार्यपि निस्पृहः । पराऽर्थेष्विव पूर्णाऽत्मा स जीवन्मुक्त उच्यते ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥"

साधारणा धर्मा अभिधीयन्ते—आत्मनः कश्चिदुत्पादको नास्तीति जन्यत्वाभावात् **'नित्यः'**। आत्मनः कस्मिंश्चित्स्थानेऽभावो नास्ति किं तु सर्वत्रैव असौ तिष्ठतीति व्यापकत्वाद् **'विभुः'**। आत्मनि काचित् क्रिया न भवतीति क्रियाशून्यत्वात् **'निष्क्रियः'**। आत्मा न कंचिदाश्रित्य तिष्ठति किं तु स्वयमेव विभुत्वात् सर्वत्र तिष्ठतीति अनाश्रितत्वात् **"अनाश्रितः'**। धूमो यथा वह्निमनुमापयति न तथात्मा प्रधानानुमापक इति अलिङ्गत्वात् [ अननुमापकत्वात् ] **अलिङ्गः**। वस्त्रे यथा सूत्ररूपो घटे च कपालरूपोऽवयवविभागोऽस्ति न तथात्मनि कश्चिदवयवविभाग इति **'निरवयवः'**। पुरुषस्यांशो यथा तदीयपुत्रपौत्रप्रभृतिष्वनुवर्तते, दीपकस्य तैलं तदीयवर्तिकायां, प्रकृतेरंशो महत्तत्त्वे महत्तत्त्वस्य चाहङ्कारे, न तथात्मनि कस्यचिदंशोऽनुवर्तते, तस्य कस्माचिदनुत्पत्तेरिति अन्यासंपर्कात् **'स्वतन्त्रः'**। ततश्च—आत्मा किल शुद्धस्फटिकवत् स्वच्छः, निर्गुणः, आकाशवद् विभुः, नित्यः, संख्ययाऽनन्तश्चास्तीति सिध्यति।

**तदुक्तम्—**

हेतुमदनित्यमव्यापि, सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं, व्यक्तं विपरीतमव्यक्तम्॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं, तद्विपरीतस्तथा च पुमान्॥ इति॥ २३॥

## सांख्यीयलिङ्गशरीरम्।

सांख्यमते सृष्ट्यारम्भे प्रकृतिः प्रत्यात्ममेकैकं लिङ्गशरीरमुत्पादयति। तच्च लिङ्गशरीरम् अव्याहतम् [ अनवरुद्धगतिकम् ] अर्थात् शिलायामपि प्रवेशं कर्तुमीष्टे,। किं बहुना? संसारे नास्ति तादृशं किंचिद् वस्तु यत्र तत् प्रवेशं कर्तुं न प्रभवेत्। सृष्ट्यारम्भत आरभ्य महाप्रलयावधि तत्स्थितिः, ततः प्राक् तन्नाशानभ्युपगमात्। तच्च महत्तत्त्वाहङ्कारमनश्चक्षुःश्रोत्रघ्राणरसनत्वग्वाग्हस्तपादपायूपस्थरूपरसगन्धस्पर्शशब्देत्यष्टादशतत्त्वात्मकम्, तैरेव तन्निर्मितेः सांख्याभिमतत्वात्। वेदान्तिनस्तु—पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्चेति सप्तदशात्मकं लिङ्गशरीरमिति वदन्ति। तथा चोक्तम्—

बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते॥" इति।

इदमेव लिङ्गशरीरं पूर्वपूर्वस्थूलशरीरं जहाति नवीननवीनं चोपादत्ते। लिङ्गशरीरेण विना स्थूलशरीरमात्मनो भोगसाधनं न भवितुमर्हतीत्यनायत्या लिङ्गशरीरं कल्पयितव्यं भवति। अस्मिन्नेव लिङ्गशरीरे धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्या अष्टौ भावास्तिष्ठन्तीति लिङ्गशरीरमेव जन्ममरणरूपं संसारं लभते। लिङ्गशरीरद्वारैव तस्यात्मनः संसारो भवति योऽनेन संबन्धं रक्षति। वस्तुतो धर्मादयोऽष्टौ भावा बुद्धावेव तिष्ठन्ति, न लिङ्गशरीरे, तथापि तत्रस्था अपि उपचारतो लिङ्गशरीरे मन्यन्ते॥

महाप्रलयानन्तरं तु न लिङ्गशरीरस्थितिः किं तु सृष्ट्यारम्भे यत उत्पन्नं तत्रैव प्रधाने लीयते। प्रधानस्य प्रलयेऽपि स्थितेः सद्भावात्। प्रधाने लयादेव तस्य 'लिङ्गम्'

इत्यभिख्या, 'लियम्=लयं गच्छति प्रधाने इति लिङ्गम्' इति तद्व्युत्पत्तेः । [ लिङ्ग-शब्दः पृषोदरादित्वात्साधुरिति विज्ञेयम् ] ॥ २४ ॥

## सांख्यीयमोक्षः ।

सृष्ट्यारम्भे सर्वतः प्रथमं बुद्धिरेव प्रकृतित उत्पद्यते इति प्रकृतेः परिणामो बुद्धिः । बुद्धेरेव महत्तत्त्वम् अन्तःकरणं चेति नामान्तरम् । सांख्यसिद्धान्ते बुद्धावेव सुखदुःखे तिष्ठतः । अस्या एव सुखदुःखयोश्छाया जीवात्मनि पतति, तत एवात्मा सुखदुःखवान् प्रतीयते । इयमेव छाया पुरुषस्य संसारः । यदा च प्रकृतिपुरुषयोर्विवेकज्ञानात् बुद्धेर्नाशो भवति, तदैव तदीयसुखदुःखयोश्छायाया अपि नाशो जायत इति आत्मापि शुद्धोऽवशिष्यते । आत्मनः शुद्धावस्थैव च मोक्ष इत्युच्यते ॥ २५ ॥

## न्यायवैशेषिकयोरात्मा ।

न्यायमते वैशेषिकमते च, "आत्मा विभुः संख्यया अनन्तः [ अर्थात् कियन्त आत्मान इत्येवं गणयितुमशक्यः ] नित्यः [ कालत्रयावाध्यः ] प्रतिशरीरं भिन्नश्चास्ति । [ तदिदं सांख्यतो न विशिष्यते, सांख्याचार्यैरपि विभुत्वादेः स्वीकरणात् । ]

तत्र चात्मनि संख्यापरममहत्त्वपरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारेति चतुर्दश गुणास्तिष्ठन्ति, न तु सांख्यवन्निर्गुण आत्मा । तथा चाहुः प्रशस्तपादभाष्यकाराः—"तस्य गुणा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाः" इति । तत्र यद्बलेनाऽनुभूतवस्तुनः कालान्तरे स्मरणं भवति स भावनाख्यः संस्कारः । स्पष्टमन्यत् ॥ २६. ॥

## न्यायवैशेषिकयोर्मनः ।

न्यायाचार्या वैशेषिकाचार्याश्च लिङ्गशरीरं नाभ्युपगच्छन्ति लिङ्गशरीरीयकार्यस्य मनसैव साधनात् । जीवनकाले तन्मते लिङ्गशरीरस्य नास्ति किंचित्प्रयोजनम्, शारीरनिखिलकार्यकदम्बस्य स्थूलशरीरेणैव निर्वाहात् । किं तु मरणानन्तरं यदा एकं शरीरं परित्यज्य द्वितीयस्मिन् स्वर्गीये नारकीये वा विप्रकृष्टदेशीये शरीरे मनसा गमनं कर्तव्यं भवति, तदा [ तस्मिन् काले ] एकस्य सूक्ष्मशरीरस्योत्पत्तिरभ्युपेयते, सृष्ट्यारम्भत आरभ्य महाप्रलयपर्यन्तं शरीरे प्रविष्टस्यैव मनसः कार्यकर्तुर्दृष्टत्वात् शरीरं विना च सृष्टिकाले कार्यकर्तुर्मनसोऽदृष्टत्वात् । सेयं सूक्ष्मशरीरकल्पना प्रशस्तपादाचार्यैरेव कृता सूत्रकारेण मनसो गतेरेव प्रोच्यमानत्वात् । सूक्ष्मशरीरस्यैव प्रशस्तपादाचार्यैः 'अतिवाहित' नाम्ना व्यवहृतत्वात् ।

मरणानन्तरं मनसि क्रिया अतिवाहितशरीरोत्पत्तिश्चादृष्टवशाद् भवति ॥ जीवनकाले प्राक् किलात्मनि काचिदिच्छा द्वेषो वा जायते, ततः प्रयत्न उत्पद्यते, तत आत्ममनसोः संयोगः, ततो मनस इन्द्रियैः, तत इन्द्रियाणामर्थेन ततः प्रत्यक्षमिति क्रमः । मध्ये मनसः संबन्धानङ्गीकारे तु आत्मनो विभुत्वेन सर्वदैव सर्वेन्द्रियैः संबन्धात् युगपदेव सर्वेन्द्रियैर्दर्शनास्वादनादिकार्याणि स्युरिति मध्ये मनः संबन्धकल्पनमावश्यकम् ।

तथा चाक्षपादसूत्रम्—

"युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति ॥

केवलं मन एव महाप्रलयपर्यन्तम् आत्मसहचारि, मनोऽतिरिक्तानां सर्वेषामपीन्द्रियाणां शरीरेण सहैव विनाशात्। तानि तु शरीरेण सहैवोत्पद्यन्ते तन्नाशेन सहैव नश्यन्ति च। शरीरनाशानन्तरमपि मनसः स्थितेः। महाप्रलयानन्तरं पुनः सृष्टिप्रारम्भतः प्राक् निस्तब्धम् [ निश्चेष्टम् ] इव मनस्तिष्ठति। ततो यदा सृष्टेः प्रारम्भकालः समायाति तदा अदृष्टा[ धर्माधर्मा ]नुसारं तस्मिन् क्रिया जायते, ततस्तद्बलेन तदोत्पन्ननव्यशरीरे प्रविशति तन्मनः। सृष्ट्यारम्भे,—आत्मनां यादृशमदृष्टं तदनुसारमेव पृथक् पृथक् शरीराणि समुत्पद्यन्ते, सर्वेषामात्मनां यानि भिन्नभिन्नमनांसि तान्यपि तस्य तस्यात्मनः शरीरे प्रविशन्ति। ततः समयादेव पुनः सर्वे जीवात्मानः स्वस्वधर्माधर्मानुसारं सुखदुःखे अनुभवन्ति ॥ २७ ॥

## न्यायवैशेषिकयोर्मोक्षः।

मानवो यदा सद्गुरूपदेशतो निषिद्धकर्मवर्जं निष्कामभावेन शुभकर्मणामनुष्ठानं विधत्ते, तदा नवीनसुखदुःखबीजानुत्पत्तेः पूर्वसञ्चितपापपुण्ययोर्मञ्जूषायाश्च भोगेन रिक्तत्वात् जीवस्य अदृष्टकारितं परमाणुरूपमनःसंवन्धरूपं वन्धनं त्रुट्यति, जीवश्च मुक्तो भवति। मनोऽपि तस्मिन् समये जडतां धारयति, न तस्मिन्नात्मना सह कार्यकरणे काचिच्छक्तिरवशिष्यते। मनसो जडतैव च मोक्षः ॥ २८ ॥

## दर्शनत्रयस्य तात्पर्योद्घाटनम्।

सम्प्रति सांख्यन्यायवैशेषिकेतिदर्शनत्रयस्य तुल्यसिद्धान्तानवलम्ब्य सम्मिलितो भावः प्रकाश्यते।—इमे त्रयोऽपि दर्शनकाराः—आत्मानं किल संख्यातोऽनन्तं परिमाणतश्च परममहान्तं मन्यन्ते। यावन्तो जीवात्मानस्ते सर्वेऽपि व्योमवत् परमेश्वरवच्च व्यापकाः। यथा ह्याकाशस्यानुमानमात्रं, तथा शुद्ध आत्माप्यनुमानेनैव निश्चीयते, इन्द्रियाग्राह्यत्वेन प्रत्यक्षप्रमाणाविषयत्वात्। व्यापकत्वाच्च नात्मा चलितुं शक्नोति, यत् किंचिच्चलनं तच्छरीराणामेव। मृत्युसमयेऽपि नात्मा शरीरं विमुञ्चति, तस्य सर्वदैकरसेन सर्वत्र विद्यमानत्वात्। शरीरस्य त्यजनं ग्रहणं च मनसो लिङ्गशरीरस्य वा कार्यम्। स्वर्गे नरके वा गमनागमनमपि मनसो लिङ्गशरीरस्यैव वा भवति, आत्मनो व्यापकत्वेन सर्वदैव स्वर्गनरकादिनिखिलस्थानेषु विद्यमानतया गमनागमनासंभवात्। आत्मा यद्यपि सर्वदा निखिलस्थानेषु वरीवर्ति, तथापि सकलस्थानीये सुखदुःखे नानुभवति, किं तु यत्र मनः सूक्ष्मशरीरं वा गच्छति तत्रैव तत्संवद्धोऽसौ सुखदुःखे भुङ्क्ते। मनःसूक्ष्मशरीरयोः संयोगस्य तत्र हेतुत्वात् ॥

सर्वस्थानेष्वात्मा ज्ञानशून्यस्तिष्ठति, आत्मनः सर्वो भागो न ज्ञानवानिति यावत्। किं तु तदीयं यावन्तमात्मभागं मनः सूक्ष्मशरीरं वा व्याप्नोति तावत्स्येवात्मप्रदेशे ज्ञानं तिष्ठति, मनसा व्याप्त आत्मभाग एव ज्ञानवानिति यावत्। अयमर्थः—आत्मा तु सर्वत्रैवास्ति परं ज्ञानं तु यावता भागेन मनसः संयोगो जायते तावत्स्येवेति न सर्वे

आत्मभागो ज्ञानसंपन्न इति। मनश्च परिमाणतोऽत्यन्तसूक्ष्मं परमाणुरूपं वरीवर्ति, न तु महत्परिमाणम्। तथाच यत्र परमाणुरूपमनसो देशे यावानात्मभागः स्थितः समायातो वा, स परमाणुपरिमाण एवात्मा सुखदुःखभोक्ता, तत्स्थानातिरिक्तश्चान्यः सकलविश्वव्याप्यात्मा सदा मुक्तो जडरूपतोऽविशिष्टश्च तिष्ठति। मनोदेशसंयुक्त एवात्मभागो वद्धो ज्ञानी सुखदुःखभोक्ता च, मनःसंयोगरहितस्त्वात्मभागः सदा मुक्तो जडरूपश्चेति यावत्। कल्प्यताम्—यथैकेन मशकेन महाकाशो वद्धः कृतोऽस्ति, मशकाभ्यन्तरे महाकाशीयैकसूक्ष्मभागस्याऽऽगमनान्महाकाशो वद्धो जायते, किं तु तदतिरिक्तस्य जगद्व्यापिनो महाकाशस्य मुक्तभागान्मुक्तो नास्ति। एवमेव मनसा सूक्ष्मशरीरेण वा विभोरात्मनः शोच्या दशा जायते। तदिदं संसारावस्थायां जीवात्मनो वृत्तम्॥

मुक्तावस्थायामपि संसारावस्थावज् जीवात्मनो मनसः सकाशात् संयोगो न विमुच्यते, दर्शनत्रयस्यैव मते मनसो नित्यतया परमाणुरूपतया च विभोरात्मनो वहिर्गमनासंभवात्। किं तु केवलं तस्यादृष्टकृतसंवन्धस्याभावमात्रं जायते, मनसः पूर्ववदात्मनोऽन्तर्गतत्वेऽपि तत उदासीनत्वात्। पूर्वं तस्य महत आत्मनः किञ्चिदेकस्थानं सुखदुःखरूपं कण्टकं मशको वाऽकर्तीत्, किं तु सम्प्रति तत्कर्तनमवारुधत्। मुक्तावस्थातः प्रागपि सूक्ष्मशरीरीयमशकान्यस्थले ज्ञानशून्यत्वेनात्मा मुक्तत्वाविशिष्ट एवासीत्, अधुना केवलं तदीयमहत्स्वरूपे मशककर्तनं न्यूनमभूत्। आत्मनि किंचिच्चैतन्यं चेदिदमेवास्ति—मुक्तावस्थातः प्राक् संसारदशायां मनःसंवन्धात् तदीयैकपरमाणुप्रदेशे ज्ञानमिति। सेयं चेतनता तदीयमनोरूपक्षुद्रवेश्मन्येव, ततो वहिराकाशनिभत्वात्। यथा कश्चिन्मानवः पुष्पसंघं शिरसि निधाय यत्र नयति तत्रैव वस्त्रवेष्टितानि पुष्पाणि गच्छन्ति, तथैव मनो लिङ्गशरीरं वा यत्र गच्छति तस्यैवान्तर्देशे वुद्धिसुखदुःखादयो धर्मा अपि तिष्ठन्तो निस्सरन्ति। मानवो यथा शरीरगत्यनुसारमेकदेशतो द्वितीयदेशे गच्छति तथैव व्योमनिभः पूर्वः पूर्व आत्मभागः पश्चात्पश्चात्तिष्ठति, अग्रिमाग्रिमभागश्च शरीर आगच्छति। शरीरे यथा सदैव पूर्वपूर्ववायुर्निःसरति नव्यनव्यश्च प्रविशति, सैव व्यवस्था शरीरगत्या सह शरीर आत्मभागीयसंवन्धस्य॥

मोक्षावस्थायां यत्र तत्त्वज्ञानं भवति यस्माद्धि ततः [ आत्मनः ] तस्य मनोरूपमशकस्य संवन्धो भङ्क्ष्यति, तत्रैवात्मप्रदेशे तत्त्वज्ञानं न भवति, यत्र प्राग् अज्ञानमासीत्। अर्थात्, शरीरे निरन्तरमात्मदेशीयपरिवर्तनस्य धारा तदीयगत्यनुसारमविच्छिन्नैव तिष्ठति, यस्यात्मप्रदेशस्य—"अहं शरीरी, अहं सुखी, अहं दुःखी" इत्याकारकं ज्ञानं भवति, तत्रैव—"अहम् अशरीरी, अहं सुखदुःखरहितो विभुश्च" इत्यात्मकं ज्ञानं न भवति। किं तु सर्वथाऽन्यात्मप्रदेशेऽज्ञानमन्यात्मप्रदेशे च ज्ञानमुत्पद्यते, अन्य एव देशो वद्धः, अन्य एव च मुक्तो भवति॥

निखिलात्मनि वन्धस्य मोक्षस्य वा प्रभावो न पतति, किं तु मनोदेशावच्छिन्नात्मभाग एव, मनोदेशातिरिक्तप्रदेशे आत्मनो ज्ञानस्य सुखदुःखादीनां प्रतीतेश्चाभावात्। तस्मादन्यदेशे सर्वदा मुक्त एवात्मा तिष्ठति॥

सर्वेषु शरीरेषु सर्व एवात्मानस्तिष्ठन्ति, तथा तेषां तत्र स्थितौ कस्यचिदपेक्षा कस्मि-

श्चिद् विशेषतो नास्ति । देवदत्तशरीरे यथा देवदत्तस्याऽऽत्मा तिष्ठति, तथाऽन्येऽपि सर्वे आत्मानस्तिष्ठन्ति । किं तु देवदत्तीयमनसः संयोगाद् देवदत्तीयात्मन एव ज्ञानं भवति । अन्यसर्वात्मनां [ ये तत्र तत्समा एव तिष्ठन्ति ] न कश्चिद् बोधो भवति । यथा,—आकाशाः कदाचित्संख्ययाऽनन्ताः स्युः, ते च सर्वे मिलित्वा एके संभवेयुः, एवमेव सर्वे आत्मानोऽपि मिलित्वा एकीभावेन तिष्ठन्ति । तेषां विभागकर्ता कश्चिदन्यः पदार्थो नैतेषु शास्त्रेषु कल्पितोऽस्ति, यस्य मध्यपातेन सर्वे आत्मानः परस्परं भिन्नास्तिष्ठेयुः ॥

एतदर्थं च विभोरात्मनो भेदः स्वीक्रियते—यद्येक एवात्मा स्यात् तदा एकस्मिन् मुक्ते सर्वे मुक्ता एकस्मिन् सुखिनि सर्वे सुखिनो दुःखिनि च दुःखिनः स्युः, इति । न चैवं दृश्यते, तस्मादात्मनानात्वमवश्यं मन्तव्यम् । तथाच कणभक्षसूत्रम्—"व्यवस्थातो नाना" इति । न च यथा, एकस्मिन्नेव शरीरे बाल्ययुववृद्धेत्यवस्थाभेदो भवति, न शरीरमन्यद् भवति, तथैवात्मनोप्यवस्थाभेदः स्यादिति शङ्कनीयम्, शरीरे बाल्याद्यवस्थाभेदः कालान्तरे भवति, आत्मा त्वेकस्मिन्नेव काले सुखी दुःखी च भवतीति वैषम्यात् । तथाच तार्किकरक्षायां वरदराजः—

"कश्चिद्रङ्कः कश्चिदाढ्यः कश्चिदन्यविधः पुनः ।
अनयैवात्मनानात्वं सिद्धत्यत्र व्यवस्थया ॥" इति ॥

आत्मनो विभुत्वं चैतदर्थं मन्यते—यद्यात्मा विभुर्न स्यात् किं तु परमाणुरूप एव भवेत्, तदा चन्दनकण्टकाद्यनुकूलप्रतिकूलद्रव्यसंयोगेन शरीरीयसर्वदेशेषु जायमानायाः सुखदुःखयोः प्रतीतेरनुपपत्तिः स्यात् । तस्मादात्मविभुत्वमवश्यं मन्तव्यम् । तत्र शरीरसमे विभुत्वे स्वीकृते शरीरवृद्धिह्रासाभ्यां सहैव आत्मनोऽपि वृद्धिह्रासौ स्यातामिति तदनित्यत्वापत्तिरिति पूर्णरूपत आकाशवदात्मा विभुरस्तीति स्वीक्रियते । विभुत्वादेव च स नित्यो व्योमवत् । किं तु "नानात्मानो यदा विभवः सन्ति तदा तत्त्वतो भिन्ना भिन्नाः केन प्रकारेण सिद्धाः स्युः ?" इति नैतैर्दर्शनकारैरधिकं चिन्तितम् ॥

याभ्यामात्मनां स्वर्गनरकादिभोगो जायते तौ शुभाशुभकर्मजन्यौ धर्माधर्मौ समवायसंबन्धेन ( नित्यसंबन्धेन ) आत्मन्येव तिष्ठतः । यदात्मीयशरीरद्वारा कर्मणामनुष्ठानं भवति ततो जनिष्यमाणम् अदृष्टं [ धर्माधर्मौ ] तत्रैवात्मनि तिष्ठति, तस्मिंश्च परिपाकतां गते तस्यैवात्मनस्तल्लोकीयशरीरद्वारा तदीयस्वर्गनरकादिरूपफलानामुपभोगो भवति ॥

सर्वात्मनां समानदेशत्वेन *लिङ्गं* स्थूलं वा शरीरं केनचिदेकेनैवात्मना कथं संबन्धं करोति ? कया रीत्या च भिन्नभिन्नशरीराणि पृथक् पृथगात्मनः कर्मसंबन्धिनः सम्पादयन्ति ? केन च प्रकारेण पृथक् पृथगात्मानः फलान्युपभुञ्जते ? इति विचित्रप्रश्नानामिदमेवोत्तरम्—"पृथक् पृथङ् मनसां लिङ्गशरीराणां वा संबन्धः पृथगात्मभिः सहाऽनादिकालतश्चलन्नागच्छति, एकस्य मनसो लिङ्गशरीरस्य वा सर्वैरेवात्मभिः समानरूपेण संयोगे सत्यपि स्वात्मना तस्य विलक्षणः संबन्धोऽस्ति, तत्प्रभावेणैव तद्द्वारा स्वकमेव नियतमात्मानं फलान्युपभोजयति । अन्य आत्मानोऽपि तेनैव प्रकारेण

भिन्नभिन्नदेशीयस्वस्वलिङ्गशरीरद्वारा फलान्युपभुञ्जते ॥ इति ॥" मोक्षानन्तरं लिङ्ग-शरीरस्य नाशो जायते, आत्मनः संसारीयसंबन्धत आरभ्य मोक्षपर्यन्तमेव तदीय-स्थितिकालसद्भावात् ।

न्यायवैशेषिकमते मनो नित्यमस्ति, तन्मते परमाणुरूपाणां सर्वेषां द्रव्याणां नित्य-त्वाभ्युपगमात् मनसोऽपि परमाणुरूपत्वात्, अन्यानि च सर्वेन्द्रियाणि परमाणुरूपत्वा-भावादनित्यानि सन्ति । अतो मोक्षानन्तरं मनो निष्फलमेव भ्रमति । अमुक्ता आत्मानो बहवः सन्ति किन्तु तान् प्रति नियतं मनः पृथक् पृथगस्ति । अत एव तैः सह तस्याऽनाथस्य मनस उपयोगो नास्ति ॥ सांख्याचार्या न्यायवैशेषिकवदात्मनि ज्ञानेच्छाप्रयत्नसुखदुःखद्वेषधर्माधर्मान् साक्षात्संबन्धेन नाङ्गीकुर्वन्तीति तन्मते शुद्ध-स्फटिकपाषाणवत् स्वच्छो निर्गुणश्चात्मा । ज्ञानादिगुणानामन्तःकरणधर्मतयाऽऽत्मनि ज्ञानादिगुणसंबन्धस्य रक्तपुष्पोपरिस्थापितस्फटिके रक्तरागप्रतीतेरिवाऽवास्तविकत्वात् । युक्तं चैतत्, "असङ्गो ह्ययं पुरुषः," "साक्षी चेताः केवलो निर्गुणश्च" इत्यादिश्रुतेः । अपि च न्यायवैशेषिकमते आत्मनि ज्ञानादयो गुणा मनसा सह तथा चलन्ति यथा कस्मिंश्चित्सूत्रे किंचिज् जलबिन्दु भवेत् तदुपरि च तस्मिन्नेव सूत्रे मणिकं गोलिका वा प्रोता भवेत्, यच्चालनात् सूत्राभ्यन्तरे स्थितमपि जलबिन्दु गोलिकया सह संचारि भवति, किं तु पश्चादन्यत्र वा न तिष्ठति । एवं तद् बिन्दु सूत्रगोलिकाभ्यन्तरस्थितं प्रतीयते, गोलिकाभ्यन्तरे सूत्रस्य सूत्रे च बिन्दुनो विद्यमानत्वात् । तत्र सांख्याचार्या वदन्ति—यदा गोलिकाया अप्यभ्यन्तरे वरीवर्ति तद्गमनेन सहैव च चलति तदति-रिक्तं च तत् क्वापि न मिलति, तदा तत् सूत्रस्य धर्मं न मत्त्वा गोलिकाया एव धर्मः कथं न मन्येत ? इति । अपि च ज्ञानादीनामात्मगुणत्वाङ्गीकारे "यत्रात्मप्रदेशे प्राक् कस्यचिद् वस्तुनोऽनुभवो जन्यते तत उत्पन्नेन भावनाख्यसंस्कारेण यद् भूयस्तस्यैव वस्तुनः स्मरणं भवति तद् आत्मनो देशान्तर एव भवति यत्र स्मरणकाले तदीयं लिङ्गशरीरं तिष्ठेत्, तथैव लिङ्गशरीरदेशे आत्मा ज्ञानवान् अन्यदेशे च ज्ञानशून्यः" इति द्विविधौ भावावपि मन्तव्यौ स्याताम्, अस्मन्मते तु एकान्तरूपतो ज्ञानादिगुणा-नामन्तःकरणसंबन्धितयाऽऽत्मनो निर्गुणत्वात् सर्वदेश आत्मन एकरूपत्वाच्च द्वैविध्या-प्रसक्तिरिति सर्वं निरवद्यम् ॥ २९ ॥

## न्यायवैशेषिकाभ्यां सांख्यस्य श्रैष्ठ्यम् ।

ननु श्रुतौ श्रुतस्यात्मनो मननाय न्यायवैशेषिकशास्त्रे स्त एवेति किं सांख्यशास्त्र-निर्माणप्रयासेनेति चेत् । मैवम्, अधिकारिभेदेनोपदेशाय सांख्यशास्त्रनिर्माणस्या-वश्यकत्वात् । तत्र आत्ममननाय मन्दाधिकारिकृते न्यायवैशेषिकशास्त्रे, मध्यमाधि-कारिकृते सांख्ययोगौ, उत्तमाधिकारिकृते च वेदान्तशास्त्रमिति विवेकः । "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति शतपथब्राह्मणवाक्येन उपनि-षद्भ्यः श्रुतस्यात्मनो मननं मननविषयीकृतस्य च निदिध्यासनं विहितम् । तत्र 'कल्याणं मे भूयात्' इति प्रेप्सया सच्छास्त्रश्रवणं श्रवणम् । श्रुतस्यार्थस्य युक्तिभिर्विचारो मननम् । चित्तस्य तैलधारावत् निरवच्छिन्नप्रवाहीकरणं निदिध्यासनमिति विवेकः ।

ततश्चात्र मननांशे कनिष्ठमध्यमोत्तमाधिकारिभेदेन पञ्च दर्शनानि समागतानि भवन्ति। न्यायवैशेषिकाभ्यां देहेन्द्रियाद्यनात्मवस्तुभ्य आत्मभावं व्यावर्त्य तद्भिन्ने विभुरूपे नित्य आत्मनि जिज्ञासूनां बुद्धिः स्थिरीकृता, परं सुखदुःखेच्छाबुद्धिकामक्रोधलोभमोहमदमात्सर्यकर्तृत्वभोक्तृत्वादयो नानाधर्माः पामरैर्यथा ज्ञायेरन् तथैव तेषां बुद्ध्यनुसारं तस्मिन् स्वीकृताः। मननद्वारा सुखादिधर्मेभ्यः पृथक्कृत्य नित्यशुद्धबुद्धविभुस्वरूपस्यात्मन उपदेशो न कृतः। सांख्येन तु सुखादिधर्मरहितस्य निर्लेपस्य पुरुषस्योपदेशः कृत इत्युक्ताधिकार्यपेक्षयोच्चकक्षाधिकारिणां मध्यमाधिकारिणां कृते सांख्यशास्त्रम्। किं च, सर्वपदार्थानुपदिशतापि कणादेन गोतमेन च प्रकृतिमहत्तत्त्वाहङ्काराणामुपदेशो नाकारि। किं तु अहङ्कारोत्पन्नानि यानि पञ्च तन्मात्राणि यानि कणादेन गोतमेन च परमाणुनाम्ना व्यवह्रियन्ते तत एव पदार्थाः संगृहीताः। सांख्येन तु ततः पराणामपि सूक्ष्माहङ्कारमहत्तत्त्वप्रकृतीनां वर्णनमकारीति न्यायवैशेषिकापेक्षया सांख्यमुच्चकक्षामवगाहते। सांख्यस्योच्चत्वं गीतायां स्मृत्यादिषु च विस्पष्टमेवेति विरम्यते विस्तरभयात्॥ ३०॥

## भगवान् कपिलः।

तदिदं सांख्यशास्त्रं भगवता कपिलदेवेन षट्स्वध्यायेष्पनिबद्धम्। तत्र प्रथमाध्याये विषयः, द्वितीये प्राकृतिककार्यकलापः, तृतीये विषयतो वैराग्यम्, चतुर्थे विरक्त-

---

१ 'अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः' इत्यादिर्हि तदुक्तिः। अत्रायं भावः—आत्मा तावदाकीटपतङ्गेभ्य आच देवर्षिभ्यः प्राणभृन्मात्रस्येदकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो विवेकेन 'अहं' इत्यसंदिग्धाविपर्यस्तापरोक्षानुभवसिद्धो वरीवर्ति। न हि जातु कश्चिदत्र संदिग्धे—'अहं वा नाहं वा' इति। न च विपर्यस्यति—'नाहमेव' इति। न च 'अहं कृशः स्थूलो गच्छामि' इत्यादिदेहधर्मसामानाधिकरण्यदर्शनाद् देहालम्बनोऽयमहंकार इति सांप्रतम्, तदालम्बनत्वे हि 'योऽहं बाल्ये पितरावन्वभवं स एव स्थावरे प्रणप्तॄननुभवामि' इति प्रतिसंधानं न भवेत्। न हि बालस्थविरयोः शरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धो येनैकत्वमध्यवसीयेत। तस्माद्येषु व्यावर्तमानेषु यदनुवर्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम्। तथा च बालादिशरीरेषु व्यावर्तमानेष्वपि परस्परमहंकारास्पदमनुवर्तमानं तेभ्यो भिद्यते। अपि च स्वप्नान्ते दिव्यं शरीरभेदमास्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन् 'नाहं देवो मनुष्य एव' इति देवशरीरे बाध्यमानेऽपि अहमास्पदमबाध्यमानं शरीराद्भिन्नं प्रतिपद्यते। अपि च योगव्याघ्रः शरीरभेदेऽपि आत्मानमभिन्नमनुभवतीति नाहंकारालम्बनं देहः। अत एव नेन्द्रियाण्यप्यस्यालम्बनम्, इन्द्रियभेदेऽपि "योऽहमद्राक्षं स एवैतर्हि स्पृशामि" इत्यहमालम्बनस्य प्रत्यभिज्ञानात्। विषयेभ्यस्त्वस्य विवेकः स्वीयानेव। बुद्धिमनसोश्च करणयोः 'अहं' इति कर्तृप्रतिभासप्रख्यानालम्बनत्वायोगः। 'कृशोऽहमन्धोऽहम्' इत्यादयश्च प्रयोगा असत्यप्यभेदे कथंचित् 'मञ्चाः क्रोशन्ति' इत्यादिवदौपचारिका इति युक्तमुत्पश्यामः। तस्मादिदंकारास्पदेभ्यो देहेन्द्रियमनोबुद्धिविषयेभ्यो व्यावृत्तः, स्फुटतराहमनुभवगम्य आत्मेति सिद्धमित्यन्यत्र विस्तरः।

पुरुषाणां पिङ्गलाकुररादिवर्णिताऽऽख्यायिका, पञ्चमे परपक्षविनिर्णयः, षष्ठे च सर्वार्थानां संक्षेपतः संग्रहः प्रादर्शि । अत्र वदन्ति । सम्प्रति प्रचलितानां सांख्यसूत्राणां न कपिलप्रणीतत्वम्, "अविवेकनिमित्तो वा पञ्चशिखः" [ सां० सू० ६।६८ ] इत्यादौ कपिलादर्वाचीनानां प्राकृताचार्याणामपि नाम्न उपलम्भात्, किं तु तानि तु सूत्राणि विज्ञानभिक्षुकृतानीति बहूनां प्रवादः । अत एव शारीरिकभाष्यादौ शङ्कराचार्यादिभिः सांख्यकारिका एव प्रमाणत्वेनोपन्यस्ता न सूत्राणीति बहोः कालात्कपिलसूत्राणां विनाशत्वमनुमीयत इत्यहो दौर्भाग्यं भारतीयानाम् ॥ महामुनिः कपिलदेवश्च भगवतश्चतुर्विंशत्यवतारेष्वन्यतमोऽवतारोऽस्ति,

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥"

इति श्रीमद्भागवते व्यासदेववचनात् । अत्र "कालविप्लुतम्" इति पदेन कपिलदेवात् प्रागपि सांख्यशास्त्रमासीत्, किं तु तत् कालेन विलुप्तं बभूव, भगवता कपिलेन च पुनस्तदुद्धारः कृत इति प्रतीयते । भगवान् कपिलदेवः स्वायंभुवमनोर्दौहित्रः कर्दममहर्षेश्च पुत्र आसीत् । स्वायंभुवमनुश्च चतुर्दशमनुष्वाद्यो मनुरासीत्,

"स्वायंभुवो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥"

इति रघुवंशकाव्ये कालिदासोक्तेः । तेन स्वकन्या देवहूतिः कर्दमऋषिणा सह विवाहिता । स्वायंभुवो मनुर्ब्रह्मावर्तदेशे माहिष्मत्यां नगर्यां निवासमकरोत्, सप्तद्वीपायाः पृथिव्याः सम्राट् चासीत् । महर्षिः कर्दमश्च सरस्वतीनदीतीरे बिन्दुसरस्तीर्थे तपश्चचार । उक्तमनुना निजस्थानात् स्वमहिष्या शतरूपया सह स्वकन्या देवहूतिः रथ उपवेश्य कर्दममहर्षिस्थानं नीत्वा तत्रैव [ कर्दमस्थाने ] ब्राह्मविवाहविधिना कर्दमेन सह विवाहिता । ततः कालेन कर्दमवीर्येण देवहूत्यां नव कन्या अभूवन् । पुनर्देवहूतिप्रार्थनया बहोः कालादनु भगवतोंऽशात् कपिलो नाम पुत्र आसीत् ।

तथा चोक्तं भागवते—

"तस्यां बहुतिथे काले भगवान् मधुसूदनः ।
कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥" इति ।

अनेन चेतिहासेन कपिलदेवो ब्राह्ममहाकल्पारम्भ आसीत्, तदैव च सांख्यशास्त्रस्य पुनर्जन्म बभूवेति सुस्पष्टं सिध्यति ॥ ३१ ॥

## भगवान् ईश्वरकृष्णः ।

कपिल आसुरये स च पञ्चशिखाय सांख्यशास्त्रमुपदिदेश । तस्माच्च शिष्यपरम्परया भगवानीश्वरकृष्णः सांख्यशास्त्रं प्राप्तवान् । तेन चेश्वरकृष्णेनाऽऽख्यायिकापरवादनिराकरणवर्जं तत् सांख्यशास्त्रं कारिकारूपेणोपनिबद्धम् ।

तदुक्तम्—

"एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधाकृतं तन्त्रम् ॥

शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग् विज्ञाय सिद्धान्तम् ॥" इति ।

ईश्वरकृष्णश्च विद्वदग्रणीः कदा कतमम् अन्वयं कतमं च जनपदम् अलञ्चकार, तन्न सम्यक् आकलयामः । किं तु "शङ्कराचार्यादयं प्राचीनः" इत्येव निर्णीयते । शारीरकभाष्ये हि आचार्यस्वामिभिस्तदीयकारिकाया धृतत्वेन तस्य ततः प्राचीनत्वावगमात् । इयत्तु केवलमवबुध्यते—ईश्वरकृष्णोऽयं विन्ध्याचलपर्वतवासी समासीदिति ।

तथा च श्लोकवार्तिके कुमारिलभट्टः—

"अन्तराभवदेहो हि नेष्यते विन्ध्यवासिना ।
तदस्तित्वे प्रमाणं हि न किंचिदवगम्यते ॥" इति ।

अन्ये तु—ईश्वरकृष्णो भगवान् वासुदेव एव । ईश्वरपदं च द्वैपायनव्यावृत्त्यर्थमिति वदन्ति ॥

एतच्छास्त्रस्य तु—

"संख्यां प्रकुर्वते यस्मात् प्रकृतिं च प्रचक्षते ।
तत्त्वानि च चतुर्विंशत् तेन सांख्यं प्रकीर्तितम् ॥"

इति महाभारतवाक्यानुसारेण प्रकृतिपुरुषसम्यग्विवेकज्ञानरूपसंख्यायाः, प्रकृत्यादिचतुर्विंशतितत्त्वसंख्यायाश्च प्रतिपादनात् सांख्यशब्दाभिधेयतेति ध्येयम् ॥ ३२ ॥

## वाचस्पतिमिश्रः ।

वाचस्पतिमिश्रस्तु—ईश्वरकृष्णकारिकाः कौमुद्याख्यव्याख्ययाऽलञ्चकार । तेन चार्यमिश्रेण षट्सु दर्शनेषु टीकाऽकारीति लोकप्रसिद्धिः । उपलभ्यन्ते तत्कृताः शारीरकभाष्यव्याख्यारूपभामती, न्यायवार्तिकतात्पर्यपरिशुद्धियोगभाष्यविवृतिप्रभृतयश्च वहवो ग्रन्थाः । स तु पण्डितवरः [ ८९८ ] मिते वर्षे मिथिलाजनपदं जन्मना मण्डयामास ।

तथा च न्यायसूचीनिवन्धे तस्यैव भणितिः—

"न्यायसूचीनिवन्धोऽयमकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु ( ८९८ ) वत्सरे ॥" इति ॥ ३३ ॥

## भागवतं सांख्यमिदं सांख्यं च ।

भागवतपुराणीयसांख्येऽपि प्राकृतिकतत्त्वानि चतुर्विंशतिसंख्याकान्येव सन्ति ।

यथा—

"पञ्चभिः पञ्चभिर्ब्रह्मन् ! चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥" इति ।

अयमर्थः—पञ्चभिः=पृथिवीजलाग्निवाय्वाकाशेति पञ्चमहाभूतैः, पञ्चभिः=गन्धरसरूपस्पर्शशब्देति पञ्चतन्मात्रैः, चतुर्भिः=मनोबुद्ध्यहङ्कारचित्तेति चतुरन्तःकरणैः, दशभिः=श्रोत्रत्वग्दृग्रसननासिकेति पञ्च ज्ञानेन्द्रियाणि वाग्हस्तपादपायूपस्थेति पञ्च

कर्मेन्द्रियाणि मिलित्वा दशभिरिन्द्रियैः, प्राधानिकम्=प्राकृतिकम्, गणं विदुः= जानन्ति–गदन्तीति ॥

ईश्वरकृष्णीयसांख्ये पञ्चविंशतिकतत्त्वेन पुरुषो वर्णितः । तत्स्थाने भागवते च कालतत्त्वमुद्दिष्टम् ।

यथा—

"एतावानेव संख्यातो ब्रह्मणः सगुणस्य ह ।
संनिवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥" इति ।

अस्य च कालतत्त्वस्य सबन्धे द्वे मते स्तः । तथाहि—केचन मन्यन्ते–यतोऽज्ञानिनां भयं भवति सोऽयं पुरुषस्यैव प्रभाव इति । द्वितीयं सिद्धान्तभूतं चेदं मतमस्ति—अयं भगवानेव कालरूपतः प्रतीतो भवति, यत्संबन्धाद् गुणसाम्यरूपे जडे प्रधानेऽपि चेष्टा जायते, स एव च भगवान् शरीराभ्यन्तरे पुरुषरूपतो बाह्यतश्च कालरूपतः प्रतीयते, इति ।

यदुक्तम्—

"प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।
अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥" इति ।
"प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ! ।
चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥
अन्तः पुरुषरूपेण कालरूपेण यो बहिः ।
समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥" इति च ।

तत्रेश्वरकृष्णीयसांख्यं निरीश्वरवादि, भागवतसांख्यं चेश्वरवादीत्ययमेवानयोर्मत-भेदः । वस्तुत ईश्वरकृष्णीयसांख्यस्यापि नेश्वरखण्डने तात्पर्यम्, प्रकृतिपुरुषविवे-कस्यैव तद्विषयतया तावदंशस्यैव तेन वर्णनात् ।

अत्र वदन्ति—

योगिनो यदा सम्प्रज्ञाताद् असम्प्रज्ञातं प्राप्ता भवन्ति तदा तेषां योगबलं लब्धं भवति तद् बलेन चैश्वर्यलाभो जायते, तादृशयोगबलस्यैश्वर्यस्य च व्यासतो वर्णनं योगशास्त्रे विभूतिपादे पतञ्जलिना कृतमेवेति न वक्तव्यावश्यकता । योगिनो योगबल-मिदं प्राप्य तथा मुग्धा भवन्ति यथा न भूयो निर्गुणध्याने ते प्रवर्तन्त इत्यैश्वर्यं सर्वथा विवेकाभ्यासप्रतिबन्धकम् इति मन्वानो महामुनिः कपिलदेव ऐश्वर्यप्रतिषेधार्थमेव स्वशास्त्रे सगुणेश्वरासिद्धिं प्रमाणैः संसाधयामास । ईश्वराङ्गीकारे हि तदीयं नित्यैश्वर्य-मपि मन्तव्यं स्यादिति सुतरां नित्यैश्वर्ये वैराग्यासम्भव इत्यैश्वर्यवैराग्यार्थमेव सांख्या-नामीश्वरखण्डनम् ।

तथा च विज्ञानभिक्षवः—

"अत्र शास्त्रे [ सांख्यदर्शने ] ऐश्वर्यवैराग्यार्थमेवेश्वरवादखण्डनम् । यदि बौद्ध-मतानुसारं नित्यैश्वर्यप्रतिषेधो न क्रियेत, तदा परिपूर्णनित्यनिर्दोषैश्वर्यदर्शनात् तत्र चित्ताभिनिवेशेन विवेकाभ्यासप्रतिबन्धकं तत्स्यादिति ॥"

अपि च, "यस्य शास्त्रस्य यदुद्देश्यं तत्पूर्तावेव तत्प्रामाण्य"मिति विश्वजनीनम् । ततश्च प्रकृतिपुरुषविवेचनस्यैव सांख्यीयमुख्योद्देश्यतया सगुणेश्वरानङ्गीकारेऽपि न तत्प्रामाण्यव्याघातः । प्रकृतिपुरुषविवेचनस्य तेन सम्यक् संसाधनात् ।

तथा चात्मतत्त्वविवेकीयबौद्धाधिकारे उदयनाचार्याः—

"विवर्तवाद एव सत्य इत्यत्र नास्त्यणुमात्रमपि सन्देहः, तथापि द्वैतवादिनां कृते यत्र कार्ये व्यापृतोऽस्मि तत्राद्वैतवादवर्णनमनावश्यकम्, आर्द्रकव्यापारिणः पोतसमाचारेण प्रयोजनाभावात्" इति ।

तथा च विज्ञानभिक्षवः—

"ब्रह्ममीमांसाया ईश्वरप्रतिपादनमेव मुख्यमुद्देश्यम्, तत्र विशेषेण ग्रन्थारम्भत आरभ्य समाप्तिपर्यन्तमीश्वरस्यैव प्रतिपादनात् । तस्य तदंशे बाधे शास्त्रस्यैवाप्रामाण्यपातप्रसङ्गः, यस्य शब्दस्य यदुद्देश्यं तदेव तस्य शब्दस्यार्थं इति ब्रह्ममीमांसायां केवलमीश्वरप्रतिपादनस्यैव शास्त्रकर्तुरभिप्रेतत्वात् । सांख्यशास्त्रस्यापि केवलं पुरुषार्थसाधनात्मसाक्षात्कारोपायस्वरूपं प्रकृतिपुरुषविवेचनमेव मुख्यमुद्देश्यमितीश्वरप्रतिषेधांशे बाधेऽपि न तदप्रामाण्यम्, प्रकृतिपुरुषविचारस्यैव मुख्योद्देश्यत्वात्, यस्य यदुद्देश्यं तस्मिन् सिद्ध एव तत्प्रामाण्यात्" इति ॥ ३४ ॥

## आस्तिकनास्तिकत्वविचारः ।

भारतवर्षीयो दार्शनिकसम्प्रदायः प्रायो भागद्वयेन विभक्तोऽस्ति, आस्तिको नास्तिकश्च । आपाततो बहवो जना एतच्छब्दद्वयप्रयोगेण कर्तव्यमार्गतोऽनायासलभ्यां विच्युतिं प्राप्नुवन्ति । प्राचीनसमयादेव अस्तित्ववादिन आस्तिका अस्तित्वमिथ्यावादिनश्च नास्तिका इति किंवदन्ती प्रचलितास्ति । तत्र अस्तित्वनास्तित्वशब्दाभ्यां यस्य पदार्थस्य संबन्धोऽस्ति तस्य विचारः परमावश्यकः, अन्यथा दार्शनिकमात्रेणैव यस्य कस्यचित्पदार्थस्य यस्मिन् कस्मिंश्चिद्रूपेऽस्तित्वाङ्गीकारेण अस्तित्वापलापकारित्वस्यैवासंभवेन नास्तिकसंज्ञाप्रयोगस्थलस्यैव दौर्लभ्यात् । तत्र "स पदार्थः कः ?" इत्यत्र बहोः कालादेव मतद्वयं प्रचलितमस्ति । तत्र केचन वदन्ति—यस्य अस्तित्वनास्तित्वशब्दाभ्यां संबन्धः स पदार्थ ईश्वर इति । तथाच तन्मते "ईश्वरो नास्तीति मतिर्येषां ते नास्तिकाः" इति सिध्यति । अपरे पुनः अस्तित्वनास्तित्वशब्दविषयतया परलोकं ( जन्मान्तरम् ) भणन्ति । ततश्च । "नास्ति परलोक इति मतिर्येषां ते नास्तिकाः" इति तन्मते संसिद्धं भवति । तत्रेदं विचारणीयमस्ति—यदीश्वरास्तित्वाविश्वासिन एव नास्तिकाः स्युः, तदा कपिलजैमिनिप्रभृतिदार्शनिकमहर्षिगणस्यापीश्वरामननांशे नास्तिकत्वापत्तिः, तत्र मीमांसानिर्मातुर्महर्षिजैमिनिमहोदयस्य नास्तिकत्वे वेदोक्तनित्यनैमित्तिककर्मानुष्ठानरूपार्याचारस्यापि नास्तिकतापोषकत्वापत्तिः, सांख्याचार्यकपिलदेवस्य नास्तिकत्वे पवित्रयोगतत्त्वस्यापि नास्तिकतापोषकत्वापत्तिः, परं न क्वापि शास्त्रेषु कपिलादीनां नास्तिकत्वेन नामनिर्देश उपलभ्यते, प्रत्युत तन्मतं सर्व एवास्तिकताधिया गृह्णन्ति समाद्रियन्ते च । तस्मात् "नास्ति परलोक इति मतिर्येषां ते नास्तिकाः" इति द्वितीयं मतमेव साधु समादरणीयं च ।

कपिलादिभिर्जन्मान्तरस्य स्वीकारात्, चार्वाकादिभिश्चास्वीकात्। अपि च "वेदप्रामाण्याभ्युपगन्तार आस्तिकाः तद्विपरीताश्च नास्तिकाः" "अस्ति वेदः प्रमाणम्" इति मतिर्येषां त आस्तिकाः, नास्तिवेदः प्रमाणमिति मतिर्येषां ते नास्तिका इति व्युत्पत्तेः। कपिलादिभिर्वेदप्रामाण्याभ्युपगमात्, चार्वाकादिभिश्च "त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः" इत्येवं वदद्भिर्वेदप्रामाण्यानभ्युपगमात्॥

तथा चोक्तम्—

"नास्ति वेदोदितो लोक इति येषां मतिः स्थिरा।
नास्तिकास्ते तथास्तीति मतिर्येषां त आस्तिकाः॥
अवैदिकप्रमाणानां सिद्धान्तानां प्रदर्शकाः।
चार्वाकाद्याः षड्विधास्ते, ख्याता लोकेषु नास्तिकाः॥" इति।

वस्तुतः "नास्तीश्वर इति मतिर्येषां ते नास्तिकाः" इति नास्तिकलक्षणस्यापि न कपिलादौ प्रसङ्गः, ज्ञानद्वारा मुक्तिप्रयासिना कपिलदेवेन सगुणेश्वरानङ्गीकारेऽपि नित्यवस्तुनिर्गुणसत्ताकपरमात्मनः स्वीकारात्। 'ईश्वरो नास्ति' इत्येवं क्वाप्यनुक्तत्वाच्च। अत एव "ईश्वरासिद्धेः" इति सांख्यसूत्रे "नत्वीश्वराभावात्" इति तद्व्याख्यातृभिरुक्तमिति दिक्॥

---

## सांख्यनिर्माणोद्देश्यम्

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। सा च प्रकृतिः सृज्यमानप्राणिनिचयकर्मवशात् परिणमन्ती सती महदादिक्रमेण उच्चावचभेदभिन्नं कृत्स्नं जगदिदं ससर्ज। तत्र दुःखस्वभावरजःपरिणतिरूपतया जगत्यस्मिन् सर्वत्र सममेव दुःखोपक्षेप उपलभ्यते। न तावच्चेतयमानं किमपि वस्तु दुःखं नास्तीति प्रत्येति। प्रतिप्राणिनियतं चैतद् दुःखं प्रतिकूलवेदनीयतया सर्वैरेव विवेकिभिः सर्वथा परिहातुमिष्यते। न तावदुपायमजानद्भिरिष्यमाणमपि तद्धानं वाङ्मात्रेण मनोरथमात्रेण वा सम्पत्तुमर्हति। अतस्तत्परिहारोपाय-चिख्यापयिषया परमकारुणिको भगवान् कपिलमूर्तिर्नारायणोऽशेषश्रुतिन्यायोपबृंहितं सांख्यशास्त्रमिदं प्राणैषीत्। इदं च सांख्यशास्त्रं चिकित्साशास्त्रमिव चतुर्भिर्व्यूहैः समुपचितं वरीवर्ति। चिकित्साशास्त्रे यथा रोगः, रोगनिदानं, रोगनिराकरणं, तदुपायनिर्धारणं चैते चत्वारो विषयाः समुपलभ्यन्ते, तद्वदत्रापि दुःखं, दुःखकारणं, दुःखहानिः, तदुपायविज्ञानं चैते प्रधानतश्चत्वारो विषयाः प्रतिपादिताः सन्ति। तत्र विविधदुःखज्वालमालया अहरहर्दह्यमानो जीवनिवहो नितरां दुःखक्षयं समीहते। दुःखं चाध्यात्मिकाधिदैविकाधिभौतिकभेदात् त्रिविधम्। तत्र वातपित्तश्लेष्मणां वैषम्यवशाद् देहमाश्रित्य समुपजायमानं रोगादिदुःखं कामादिजनितं मानसं दुःखमपि आध्यात्मिकम्। पवनदहनवरुणनिवहान् देवान् समाश्रित्य यदुपजायते दुःखं तदाधिदैविकम्। सिंहव्याघ्रादीनि भूतानि=प्राणिनः समधिकृत्य

---

१ चार्वाकाद्या हि वस्तुसन्तमपि परलोकमीश्वरं चावस्तुसत्त्वमापादयन्तीति युक्तं तेषां नास्तिकत्वम्। कपिलादयस्तु न तथेति आस्तिका एव ते भवन्ति इति सारम्।

यदुत्पद्यते दुःखं तदाधिभौतिकम् । एतत् त्रिविधमपि दुःखं प्रतिकूलवेदनीयतया हेयमेव विवेकिनाम् । तत्र लोकसिद्धैर्भेषजाद्युपायैः कमनीयभोग्यसंप्रयोगैश्च सत्यपि आध्यात्मिकदुःखप्रतिकारसंभवे, मणिमन्त्राद्युपायप्रयोगैश्च सत्यपि आधिदैविकदुःखक्षेपसंभवे, नीतिशास्त्रनैपुण्यादिभिः शिष्टोपदिष्टप्रकारैरपि सत्यपि च आधिभौतिकदुःखनिवारणसंभवे, न तावतैव बुद्धिमद्भिः सन्तोष्टव्यम् । यतस्तैस्तैरुपायैरापाततः संभवन्नपि दुःखप्रतिकारो न कदाचिदेकान्तात्यन्तिकत्वमवगच्छति । तथाविधोपायैर्विनिवारितानामपि तेषां दुःखानां पुनःपुनरभ्युदयदर्शनात् । न च क्षणिकी दुःखनिवृत्तिर्मन्दमतिभिरभ्यर्थनीयापि प्राज्ञैः परमपुरुषार्थतया अभ्युपगम्यते । लौकिकवद् वैदिकैरपि यज्ञादिभिरनतिक्लेशकरैरुपायैः प्रागुक्तदुःखत्रयस्य आत्यन्तिकी निवृत्तिर्न संभवतीति कृतकत्वेन क्षयित्वात् तत्फलानाम् । यथा कृष्यादिकर्मणा निष्पादितं सस्यादि भोगेन क्षीयते, एवमेव यज्ञादिकर्मसम्पादितानां स्वर्गादिफलानामपि भोगवशात् कालेन क्षयित्वमनुमीयते । क्षयित्वाचानित्यत्वं, "यत् कृतकं तदनित्यम्" इति हि सुधियः स्मरन्ति । अस्मिन् विषये श्रुतयश्च बहुशः प्रमाणं सन्ति । अनित्यत्वाच्च सातिशयसुखनिकेतनं स्वर्गादयोऽपि क्षीणज्योतिषो भोगभ्रष्टान् नितरां दुःखयन्तीति न दुर्वचम् । तथा च दुःखक्षयं चिकीर्षुभिर्लौकिकोपायवत् अलौकिकयज्ञादिष्वपि न सर्वतः पारमार्थिकत्वदृशा वर्तितव्यम् । ततः कः स तादृश उपायः यो दुःखत्रयमेकान्तमत्यन्तं च समुच्छिनत्तीति जिज्ञासायां प्रकृतिपुरुषविवेकज्ञानमेव तत्र प्रकृष्टमुपायं मन्वानो भगवान् कपिलः तत्प्रकारप्रदर्शनार्थं सुगम्भीरं सांख्यशास्त्रमिदं समुपदिदेश । तत्र यद्यपि "प्रकृतेः पुरुषो भिन्नः पुरुषाच्च प्रकृतिर्भिन्ना" इत्यन्योन्यतो ज्ञानमेव विवेकज्ञानं भवितुमर्हति, तथापि श्रुत्यनुगमात् "प्रकृतेः पुरुषो भिन्नः" इत्यात्मविशेष्यकमेव विवेकज्ञानं मोक्षकारणं मन्तव्यम् । श्रुतिश्च—"आत्मा वा अरे द्रष्टव्यः" इत्यादौ पुरुषमेव प्रकृतेर्विवेचनीयत्वेन दर्शयति । तादृशं विवेकज्ञानमेव अज्ञानाख्यबन्धनिवृत्तिद्वारा परममोक्षसाधनमिति मुमुक्षुभिर्दुःखत्रयपरिहाराय सर्वतः सांख्यशास्त्रमेव समाश्रयणीयमिति दिक् ॥ ❀ ॥ इत्येष समासतः सांख्यशास्त्रचिन्ताविषयः ॥ ❀ ॥ ३५ ॥

---

## अथ सांख्यपदार्थसंग्रहः

### उक्तः पदार्थसंक्षेपः ।

विशिष्टज्ञानार्थन्तु पदार्थविस्तारः संप्रति भण्यते ।

### पञ्चविंशतितत्त्वानि ।

मूलप्रकृतिः, महत्तत्त्वम्, अहङ्कारः, पञ्चतन्मात्राणि [ शब्दस्पर्शरूपरसगन्धाः ] पञ्चमहाभूतानि [ पृथिव्यप्तेजोवाय्वाकाशाः ] पञ्चज्ञानेन्द्रियाणि [ चक्षुस्त्वग्रसनघ्राणश्रोत्राणि ] पञ्चकर्मेन्द्रियाणि [ पायूपस्थपाणिपादवाचः ] उभयात्मकं मनः पुरुषश्चेति पञ्चविंशतिः तत्त्वानि । अत्र शास्त्रे तत्त्वशब्दः पदार्थवचनः, तेन पञ्चविंशतिः पदार्था इति सिध्यति ।

यदुक्तम्—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ इति ॥ १ ॥

## मूलप्रकृतिलक्षणम् ।

"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"। इति सांख्यसूत्रम् । अस्यायमर्थः—सत्त्वादिगुणानां या साम्यावस्था=अन्यूनानतिरिक्ताऽवस्था न्यूनाधिकभावेनाऽसंहतावस्थेतियावत्, अकार्यावस्थेति निष्कर्षः, सा प्रकृतिः । अकार्यवस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः । यथाश्रुते वैषम्यावस्थायां प्रकृतित्वनाशप्रसङ्गात् । "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा । एषैव संसृतिर्जन्तोरस्याः पारे परं पदम् ॥" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च । सत्त्वादीनामनुगमाय-सामान्येति । पुरुषव्यावर्तनाय-गुणेति । महदादिव्यावर्तनाय च उपलक्षितान्तम् इति । महदादयोऽपि हि कार्यसत्त्वादिरूपाः पुरुषोपकरणतया च गुणा भवन्ति ।

यदुक्तम्—

"सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् ।
साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता ॥
केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः ।
एतदेव जगत्सृष्टिं करोति विकरोति च ॥" इति ।

अत्र सत्त्वादीनि द्रव्याणि, न वैशेषिका गुणाः । संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्त्वाच्च । तेषु अत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यत इति ध्येयम् ॥ २ ॥

## अष्टौ प्रकृतयः ।

आकाशादीनि पञ्च तन्मात्राणि, महत्तत्त्वम् [ बुद्धिः ] मूलप्रकृतिः, अहङ्कार इत्यष्टौ प्रकृतयः । यदाह चरके पतञ्जलिः—"खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः । भूतप्रकृतिरुद्दिष्टा—" इति ॥ अव्यक्तं, महान्, अहङ्कारः, पञ्चतन्मात्राणि, इत्यष्टावित्यर्थः ॥ ३ ॥

## सर्वसाधारणं प्रकृतिलक्षणम् ।

'तत्त्वान्तरोपादनत्वं प्रकृतित्वम् ।' इति सर्वसाधारणं प्रकृतिलक्षणम् । सांख्यसूत्रोक्तप्रकृतिलक्षणं तु मूलप्रकृतेरेवेति विवेकः ॥ ४ ॥

## करणानि ।

महत्तत्त्वम्, [ बुद्धिः ] अहङ्कारः, पञ्चज्ञानेन्द्रियाणि [ चक्षुस्त्वग्रसनघ्राणश्रोत्राणि ] पञ्चकर्मेन्द्रियाणि [ पायूपस्थपाणिपादवाचः ] उभयात्मकं मनश्चेति त्रयोदशविधं करणम् ॥

तत्र करणं कारणविशेषः । तत्र "यद्व्यतिरेके कार्यानुत्पत्तिस्तत्कारणम्" । यथा

---

१ त्रयो गुणाः समाः प्रकृतिः, इत्युक्त्या न्यूनाधिकगुणा विकृतिरित्यर्थात्सिद्धम् ।

दण्डं विना घटस्यानुत्पत्तिरतो दण्डो घटस्य कारणम् । "क्रियानिष्पत्तौ साक्षादव्यवधानेन साधनं कारकं करणम्" इति शाब्दिकाः ।

यथोक्तं वाक्यपदीये—

"क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥" इति ।

क्रियतेऽनेनेति करणम् । बुद्ध्यादिभिरेव सर्वं ज्ञानजातं कार्यजातं च संपाद्यत इति तेषां करणपदाभिधेयता ॥ ५ ॥

## अन्तःकरणत्रयम् ।

अन्तःकरणं त्रिविधम्, मनोबुद्ध्यहङ्कारभेदात्। तत्र मन आदीनां त्रयाणामपि शरीराभ्यन्तरवृत्तित्वाद् 'अन्तःकरणम्' इत्यभिख्या । तत्र क्रियन्ते कर्माणि अनेनेति करणम्, करणे ल्युट् । अन्तः=शरीरमध्यस्थम् अदृश्यमिति यावत्, करणम्=इन्द्रियम् अन्तःकरणमिति कर्मधारयः । शरीरस्थपदार्थानां सुखादीनां करणम्=साधकतममिति षष्ठीतत्पुरुषो वा ॥ ६ ॥

## इन्द्रियाणि ।

पञ्च ज्ञानेन्द्रियाणि [श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि] पञ्चकर्मेन्द्रियाणि [वाक्पाणिपादपायूपस्थानि] उभयात्मकं मनश्चेत्येकादशेन्द्रियाणि । इन्द्रियत्वं च सात्त्विकाहङ्कारोपादानत्वम् । अहङ्कारकार्यत्वे सति करणत्वमित्यन्ये । तत्र इन्द्रस्य=प्रत्यगात्मनः, लिङ्गम्=अनुमापकम् इन्द्रियम् [इन्द्र+घ] ।

तथा च निरुक्तव्याख्यायां भगवद्दुर्गाचार्यः—

"इन्द्रः=आत्मा, स येन ईयते=लिङ्ग्यते अनुमीयते चास्त्यसावात्मा कर्ता यस्येदं करणम्, नाकर्तृकं करणमस्तीति तद् इन्द्रियम्" इति ॥ ७ ॥

## ज्ञानेन्द्रियाणि ।

श्रोत्रचक्षुस्त्वग्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि । तत्र ज्ञानसाधनानि इन्द्रियाणि ज्ञानेन्द्रियाणि । श्रोत्रादीनां पञ्चानामपि श्रवणदर्शनादिज्ञानसाधनत्वात् तत्पदाभिधेयत्वम् ॥ ज्ञानार्थमिन्द्रियाणीति वा ॥ ८ ॥

## कर्मेन्द्रियाणि ।

वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि । कर्मणाम्=क्रियाणाम्, साधनभूतानीन्द्रियाणि कर्मेन्द्रियाणि । ततो हि चलनादानादि क्रिया निष्पद्यत इति तत्पदवाच्यत्वम् ॥ ९ ॥

---

१ मनो बुद्धिरहङ्कारश्चित्तमित्यन्तःकरणचतुष्टयम् । संकल्पविकल्पाऽध्यवसायाऽभिमानाऽवधारणस्वरूपाश्चैते विषयाः । मनःस्थानं गलाऽन्तं, बुद्धेर्वदनम्, अहङ्कारस्य हृदयम्, चित्तस्य नाभिरिति" इति वेदान्तिनः । २ हस्तपादं गुदोपस्थं जिह्वेन्द्रियमथापि वा । कर्मेन्द्रियाणि पञ्चैव कथयन्ति विपश्चितः ॥ एवं श्रोत्रं त्वचो नेत्रं रसना नासिका तथा । पञ्च बुद्धीन्द्रियाण्याहुः शास्त्रज्ञा हि विचक्षणाः ॥

## ज्ञानकर्मेन्द्रियम् ।

उभयात्मकं मनः, ज्ञानेन्द्रियं कर्मेन्द्रियं च । चक्षुरादीनां ज्ञानेन्द्रियाणां वागादीनां कर्मेन्द्रियाणां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेर्मनस उभयात्मकत्वम् । ज्ञान-कर्मणोरुभयोः साधकमिन्द्रियं ज्ञानकर्मेन्द्रियम् । सर्वेन्द्रियप्रवर्तकत्वादेव तत्पदवाच्यता ।

यदुक्तम्—

"मनो बुद्धीन्द्रियं विज्ञैः कर्मेन्द्रियमपि स्मृतम् ।
मनोऽधिष्ठितमेवेदमिन्द्रियं यत्प्रवर्तते ॥"

मनश्च वेदान्तमते संकल्पविकल्पात्मकवृत्तिमदन्तःकरणं सुखदुःखाद्याधारः, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः, न्यायमते तज ज्ञानसाधनमिति भेदः ॥ १० ॥

## ज्ञानेन्द्रियाणां वृत्तयः ।

श्रोत्रस्य शब्दश्रवणं त्वचः स्पर्शग्रहणं चक्षुषो रूपदर्शनं रसनाया रसग्रहणं घ्राणस्य च गन्धग्रहणमिति ज्ञानेन्द्रियाणां वृत्तयः । तत्र वृत्तिर्व्यापारः । तथा चाक्षपादसूत्रम्— "गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ।" इति । अत्र वात्स्यायनभाष्यम्— "पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रमम् अर्थाः=विषयाः इति" ॥

तथा चोक्तम्—

"शब्दः स्पर्शश्च रूपं च रसो गन्धो ह्यनुक्रमात् ।
बुद्धीन्द्रियाणां विषयाः समाख्याता महर्षिभिः" ॥ ११ ॥

## कर्मेन्द्रियाणां वृत्तयः ( क्रियाः ) ।

वाचो वचनम्, हस्तस्य आदानम् ( ग्रहणम् ) पादस्य गमनम्, पायोर्विसर्गः ( मलत्यागः ) उपस्थस्य च आनन्द इति वागादिकर्मेन्द्रियाणां पञ्च कर्माणि । यदु-क्तम्—"वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" इति ॥ १२ ॥

## एकादश-इन्द्रियवधाः ।

मन्दता, अन्धता, बधिरता, अजिघ्रता, जडता, कुण्ठिता, मूकता, कौण्यम्, पङ्गुता, क्लैब्यम्, उदावर्त इत्येकादश-इन्द्रियवधाः । इन्द्रियाणां स्वस्वकार्याक्षमत्वम् इन्द्रिय-वधत्वम् । इन्द्रियाणां वधाः=घाता इन्द्रियवधाः इति षष्ठीतत्पुरुषात् ।

यदुक्तम्—

"बाधिर्यं कुष्ठतान्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वक्लैब्योदावर्तमत्तता ॥" इति ॥ १३ ॥

---

१ अत्रेदं बोध्यम्—"महाभूतानि खं वायुरग्निरापःक्षितिस्तथा । शब्दःस्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ तेषामेको गुणः पूर्वो गुणवृद्धिःपरे परे । पूर्वः पूर्वो गुणश्चैव क्रमशो गुणिषु मताः" ॥ इति । आकाशे शब्दः, वायौ शब्दस्पर्शौ, अग्नौ ( तेजसि ) शब्दस्पर्शरूपाणि, जले शब्दस्पर्शरूपरसाः, पृथिव्यां च शब्दस्पर्शरूपरसगन्धा इत्यर्थः ।

## अन्तःकरणत्रयस्य वृत्तयः।

शरीराभ्यन्तरवर्तिनः प्राणापानसमानोदानव्यानेति पञ्च वायवः अन्तःकरणत्रयस्य वृत्तयः।

प्राणादिस्वरूपं यथा—

"निःश्वासोच्छ्वासकासैस्तु प्राणो जीवसमाश्रितः।
प्रयाणं कुरुते यस्मात्तस्मात् प्राणः प्रकीर्तितः॥
अधो नयत्यपानस्तु आहारं च नृणामधः।
मूत्रशुक्रवहो वायुरपानस्तेन कीर्तितः॥
पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलम्।
समं नयति गात्रेषु समानो नाम मारुतः॥
स्पन्दयत्यधरं चक्रं नेत्रभागप्रकोपणम्।
उद्वेजयति मर्माणि ह्युदानो नाम मारुतः॥
व्यानो विनामयत्यङ्गं व्यानो व्याधिप्रकोपणः।
प्रतिदानं तथा कण्ठाद् व्यापनाद् व्यान उच्यते॥" इति।

इमे प्राणादयः पञ्च वायवः शरीरे तिष्ठन्ति। ते च नियतस्थानस्थाः।

यदाहुः—

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे च व्यानः सर्वशरीरगः॥" इति।

तेषां व्यापाराश्च यथा—

"अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम्।
भाषणादि निमेषादि तद्व्यापाराः क्रमादमी॥" इति॥ १४॥

## बुद्धेर्वृत्तिः।

अध्यवसायो बुद्धेर्वृत्तिः। तत्र "एवम् एव" इति निश्चयोऽध्यवसायः। 'इदमित्थमेव' इति निश्चयात्मकं ज्ञानमिति यावत्।

तत्रायं क्रमः—

"यदा पुरुषः कस्मिंश्चित्कर्मणि प्रवृत्तो भवति, तदा तदीयान्तःकरणे तिस्रः क्रिया उत्पद्यन्ते। यथा—प्राक् वस्तुनो ज्ञानम्, ततः "अहमत्राधिकारी" इत्यभिमानः, ततः "मया इदं कर्तव्यम्" इति निश्चयज्ञानम्। तत्र तृतीया वृत्तिरेवाध्यवसायः स एव च बुद्धिवृत्तिरिति"॥

अत्र वदन्ति—

"उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽयमध्यवसाय इति वृत्तिरिति चाख्यायते" इति सांख्यतत्त्वकौमुदीपरि-

---

१ मुखनासिकाभ्यां गमनागमनात् प्राणः, मलाद्यधोनयनादपानः, आहारपाकार्थं वह्नेः समुन्नयनात् समानः, ऊर्ध्वं नयनादुदानः, नाडीमुखेषु विततनाद् व्यान इत्यर्थः।

भाषितलक्षणः "कर्तव्यमिति योऽयं निश्चयः चित्सान्निध्यात् प्राप्तचैतन्याया बुद्धेः परिणामः सोऽयमध्यवसायः" इत्युक्तलक्षणो वा निश्चयोऽध्यवसाय इति ॥ १५ ॥

## अहङ्कारवृत्तिः ।

'अहमत्राधिकृतः' इत्यभिमानोऽहङ्कारस्य वृत्तिः । तत्र "अहम्" इत्यभिमानोऽहङ्कारः । स च त्रिविधः, सात्त्विकराजसतामसभेदात् ।

यथोक्तं विष्णुपुराणे—

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत ॥" इति ।

तत्र वैकारिकः=सात्त्विकाहङ्कारः, तैजसः=राजसः, भूतादिश्च तामस इति विवेकः ॥ १६ ॥

## मनोवृत्तिः ।

संकल्पो मनसो वृत्तिः । तत्र समीचीना विशिष्टा वा कल्पना संकल्प इत्युच्यते । प्रागन्येन्द्रियैः "इदं किंचिद् वस्तु" इति सामान्यरूपेण ज्ञानं भवति । ततस्तस्मिन् "इयमत्र जातिः, अयं गुणः, इयं क्रिया" इत्यादिविशिष्टस्य कल्पना भवति, । विशिष्टकल्पनैव च संकल्पः ॥

यथोक्तम्—

"वाच्यं ग्राह्यं च गन्तव्यमानन्दं त्याज्यमेव च ।
कर्मेन्द्रियाणां विषया ज्ञातव्यो विषयो हृदः ॥"

अस्यार्थः—वाचो भाषणं, हस्तयोर्ग्रहणं, पादयोश्चलनम्, उपस्थस्यानन्दः, गुदस्य मलत्यागः, इति कर्मेन्द्रियाणां विषयाः, हृदः=मनसः ज्ञातव्यो (ज्ञानम्) विषय इति ॥ १७ ॥

## तन्मात्राणि ।

शब्दस्पर्शरूपरसगन्धेति सूक्ष्मभूतानि पञ्चतन्मात्राणि ।

यत्रोक्तम्—

"शब्दतन्मात्रकं स्पर्शतन्मात्रं रूपमात्रकम् ।
रसतन्मात्रकं गन्धतन्मात्रमिति तानि तु" ॥

यान्येव वेदान्तिभिः अपञ्चीकृतभूतानि सूक्ष्मभूतानि इति चाभिधीयन्ते, न्यायवैशेषिकाभ्यां च परमाणुनाम्ना व्यवह्रियन्ते, तान्येव सांख्यनये तन्मात्राणीति बोध्यम् । तन्मात्रस्वरूपं विष्णुपुराणे ।

यथा—

"तस्मिंस्तस्मिंश्च तन्मात्रा तेन तन्मात्रता स्मृता ।
न तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः । इति ॥ १८ ॥

## महाभूतानि।

पृथिव्यप्तेजोवाय्वाकाशेति पञ्च महाभूतानि। यथोक्तम्—
"महाभूतानि पञ्चैव खानिलाग्न्यम्बुभूमयः" इति। अक्षपादसूत्रं च—
"पृथिव्यापस्तेजो वायुराकाशमिति भूतानि।" इति।
पृथिव्यादयो हि संघीभूय प्राणिनो जनयन्तीति भूतपदवाच्यता।
तथा च रघुः—
"तं वेधा विदधे नूनं महाभूतसमाधिना।" इति।
स्थूलत्वाच्च महाभूतत्वव्यपदेशः। इमानि स्थूलभूतानि। स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमवगम्यते॥ १९॥

## अव्यक्तम्।

मूलप्रकृतिः—अव्यक्तम्। सत्त्वादिरूपेण निरूप्यमाणे व्यक्तिरस्य नास्तीति प्रधानमव्यक्तमुच्यते। न व्यज्यते स्मेति तद्व्युत्पत्तेः। तथा च रूपादिहीनतया चक्षुराद्यगोचरत्वात् प्रधानस्याव्यक्तपदाभिधेयता॥ २०॥

## व्यक्तम्।

महत्तत्त्वाहङ्कारमनश्चक्षुःश्रोत्रघ्राणरसनत्वग् वाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुतेजो जलपृथिवीति त्रयोविंशतितत्त्वानि व्यक्तानि। महत्तत्त्वादि त्रयोविंशतितत्त्वानां प्रत्यक्षत्वात् व्यक्तपदाभिधेयत्वम्॥ २१॥

## ज्ञः।

चेतनः पुरुषो ज्ञ इत्युच्यते। "साक्षी चेताः केवलो निर्गुणश्च" इत्यादिश्रुतेः। जानाति ह्यसौ सर्वं साक्षित्वादिति तत्पदवाच्यता॥ जीवात्मा पुरुषः, चित् शक्तिः, चेतनः, आत्मा, ज्ञः, इत्यादीनि पुरुषस्यैव नामानि॥ २२॥

## प्रमेयम्।

प्रधानम्, बुद्धिः, अहङ्कारः, पञ्च तन्मात्राणि, एकादशेन्द्रियाणि, पञ्च महाभूतानि, पुरुषः, इति पञ्चविंशतितत्त्वानि प्रमेयाणि। तत्र प्रमीयते=प्रत्यक्षादिप्रमाणैः परिच्छिद्यते यत् तत्प्रमेयम्। "योऽर्थस्तत्त्वतः प्रतीयते तत्प्रमेयम्" इति वात्स्यायनभाष्यम्॥ २३॥

## प्रमाणम्।

सांख्यनये प्रमाणं त्रिविधम्, प्रत्यक्षानुमानशब्दभेदात्। प्रधानादिपञ्चविंशतिप्रमेयेषु किंचित् प्रत्यक्षेण साध्यं किंचिदनुमानेन किंचिदागमेनेति त्रिविधं प्रमाणमाश्रीयते। अर्थापत्त्यादीनामेष्वेव त्रिष्वन्तर्भावान्नाधिक्यशङ्कावसरः। अन्तर्भावप्रकारस्तु कौमुद्यामेव द्रष्टव्यः, विस्तरभिया नेह तन्यते।

तत्र प्रमाता येनार्थं प्रमिणोति तत् प्रमाणम्। प्रमीयते=यथार्थज्ञानमुत्पाद्यते येन तत् प्रमाणमिति तन्निर्वचनात्॥ प्रमाकरणं प्रमाणमिति यावत्॥ २४॥

## प्रमा।

अबाधिताज्ञातार्थावगाहि पौरुषेयज्ञानं प्रमा। विपर्ययेऽतिव्याप्तिनिरासाय–'अबा-

धित–इति । स्मृतिज्ञानेऽतिव्याप्तिवारणाय च–अज्ञातेति । प्रमैव यथार्थज्ञानमुच्यते । 'भ्रमभिन्नं यथार्थज्ञानं प्रमा' इति शिष्टैराम्नानात् ॥ २५ ॥

## गुणाः ।

गुणास्त्रयः सन्ति, सत्त्वरजस्तमोभेदात् । यदुक्तम्—

"सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्" । इति ।

यथा राज्ञः सर्वार्थनिर्वाहका अमात्यप्रभृतयो गुणा इति व्यवह्रियन्ते परार्थत्वात्, तथा पुरुषरूपराज्ञो भोगापवर्गरूपार्थसाधका ये सत्त्वादयस्तेऽपि परार्थत्वसामान्याद् गुणा इति व्यपदिश्यन्ते ।

वस्तुतः सत्त्वादयो न गुणाः, संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च । किं तु द्रव्याण्येवेति ध्येयम् । तदिदं प्रागवोचाम ॥ २६ ॥

## गुणानां स्वरूपम् ।

सत्त्वं[1] सुखरूपं रजो दुःखरूपं तमश्च मोहरूपमस्ति । यस्मिन् सति न कुतश्चिद् भयमुत्पद्यते न कस्यामप्यवस्थायां विषादः समुपजायते तत् सत्त्वम् । रागद्वेषात्मको दुःखहेतू रजः । यन्मोहहेतुस्तन्मोहात्मकं तमः । इति तत्तल्लक्षणात् ॥ २७ ॥

## गुणानां प्रयोजनम् ।

सत्त्वस्य प्रकाशकरणं, रजसः प्रवृत्तिकरणं, तमसश्च नियमनम् (अवरोधनम्) प्रयोजनमस्ति । यदुक्तम्—

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतोवृत्तिः ॥" इति ॥ २८ ॥

---

१ सतः=साधोर्भावः सत्त्वम्=प्रकाशकं ज्ञानम् सुखहेतुः, रजो=रागात्मकं दुःखहेतुः, ताम्यति=ग्लानिं प्राप्नोति अनेनेति तमः=आवरकं मोहहेतुः । सत्त्वगुणयुक्तस्य मनसो गुणानाह—"आस्तिक्यं प्रविभज्य भोजनमनुत्तापश्च तथ्यं वचो मेधाबुद्धिधृतिक्षमाश्च करुणा ज्ञानं च निर्दम्भता । कर्मानिन्दितमस्पृहं च विनयो धर्मः सदैवादरादेते सत्त्वगुणान्वितस्य मनसो गीता गुणा ज्ञानिभिः" ॥ अस्ति धर्ममोक्षपरलोकादिकमिति बुद्धया चरतीति आस्तिकस्तस्य भाव आस्तिक्यम् । अनुत्तापः=अक्रोधः, धृतिः=भूतप्रेतस्मरक्रोधलोभाद्यावेशराहित्यम्, ज्ञानम्=आत्मज्ञानम्, निर्दम्भता=कपटाभावः, कर्म अनिन्दितम्, अस्पृहं=निष्कामं च ॥ रजोगुणयुक्तमनसो लक्षणमाह—"क्रोधस्ताडनशीलता च बहुलं दुःखं सुखेच्छाऽधिका दम्भः कामुकताप्यलीकवचनं चाधीरताऽहङ्कृतिः । ऐश्वर्यादभिमानितातिशयितानन्दोऽधिकश्चाटनं प्रख्याता हि रजोगुणेन सहितस्यैते गुणाश्चेतसः" ॥ अलीकवचनं=मिथ्याकथनम्, अटनं=पृथ्वीपरिभ्रमणम् । तमोयुक्तमनसो लक्षणमाह—"नास्तिक्यं सुविषण्णताशयितालस्यं च दुष्टा मतिः प्रीतिर्निन्दितकर्मशर्मणि सदा निद्रालुताऽहर्निशम् । अज्ञानं किल सर्वतोऽपि सततं क्रोधान्धता मूढता प्रख्याता हि तमोगुणेन सहितस्यैते गुणाश्चेतसः" ॥ तत्र प्रभूतसत्त्वस्तु सात्त्विकः पुरुषः स्मृतः । राजसस्तामसश्चैव त्रिविधस्तेन मानवः" ॥ इत्यास्तां विस्तरः ॥

## सुषुप्त्याद्यवस्थासु गुणानां तारतम्यम्।

सुषुप्त्यवस्थायां सर्वपदार्थविषयकाऽऽवरणसद्भावात् तत्राऽऽवरणस्वभावः तमोगुण एव प्राधान्येन वरीवर्ति। स्वप्नावस्थायां च तमोरजसोरुभयोः प्राधान्यम्। स्वप्नावस्थायां हि भ्रमरूपं ज्ञानं भवतीति यथार्थवस्तुविषयकाऽऽवरणसद्भावात् तत्राऽऽवरणस्वभावस्य तमसः, चित्तीयचञ्चलतेच्छाक्रोधभयादिकार्यसद्भावाच्च तदीयकारणीभूतरजोगुणस्य च स्पष्टमुपलभ्यमानत्वात्। सत्त्वं तूभयत्रापि नाममात्रेणैव किंचित् तिष्ठति न तु तत्र तत्प्राधान्यम्, उभयत्रापि स्पष्टतया तत्कार्यानुपलब्धेः।

रजोगुणस्य वृद्धावेव चित्तीयचञ्चलतेच्छाक्रोधलोभचेष्टेर्ष्यादयः समुद्भवन्ति।

यथोक्तं भगवद्गीतायाम्—

"लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥" इति।

जाग्रदवस्थायामपि रजस्तमसी तिष्ठत एव। तथाहि—चित्तीयचञ्चलतेच्छाप्रवृत्त्यादीनि रजसः कार्याणि जाग्रदवस्थायामपि समुपलभ्यन्त इति तत्र तत्सत्त्वमनुमीयते, अन्यथा जाग्रदवस्थायां रजोगुणीयकार्याणां प्रवृत्त्यादीनां प्रतीत्यनुपपत्तेः। यद्यपि जाग्रदवस्थायाम् इन्द्रियग्राह्यपदार्थसाक्षात्कारात् तद्विषयकाऽऽवरणनिवृत्तेस्तमोगुणसत्ता दुरुपपादा, तथापि सूक्ष्माणां प्रकृतिपुरुषादीनां व्यवहितविप्रकृष्टपदार्थानां च विशेषरूपविषयकावरणस्य जाग्रदवस्थायामपि सद्भावात् तत्रापि तमसः सत्ता कल्प्यते। तदित्थं जाग्रदवस्थायां तमोरजोगुणमिश्रितमेव सत्त्वं तिष्ठतीति सिध्यति। तदिदं सत्त्वं मलिनसत्त्वं मिश्रितसत्त्वं चाभिधीयते, तमोरजोगुणरूपमलसहितत्वात्। चित्तादितोभिन्नतया चिदात्मनः साक्षात्काररूपायां विवेकख्यातौ योगिनो व्युत्थानरूपजाग्रदवस्थायां किंचित् रजोगुणप्रादुर्भावात् भ्रमकटिसर्पवत् चित्तस्य मन्दा मन्दा गतिर्भवति। तत्र यद्यपि यथा प्रणवगायत्र्यादिमन्त्रज्ञपुरुषस्य कार्यान्तरलगनात् मन्त्रेषु असावधानता भवति न मन्त्रविषयकमावरणम्, तथा किंचिद् रजोगुणप्रादुर्भावात् योगिनश्चित्तस्य मन्दं मन्दं बहिर्गतेः सद्भावात् सूक्ष्मव्यवहितविप्रकृष्टपदार्थेषु असावधानता भवति न तु तद्विषयकं तमोगुणावरणम्। तथापि तस्य योगिनश्चित्ते व्युत्थानरूपजाग्रदवस्थायां किंचिद् रजोगुणमिश्रित एव सत्त्वगुणो भवति, अन्यथा मन्दमन्दायाश्चित्तीयबहिर्गतेरनुपपत्तेः। तस्माद् व्युत्थानरूपजाग्रदवस्थायामपि किंचिद् रजोगुणमिश्रितमेव सत्त्वं भवतीति सिध्यति॥

आत्मसाक्षात्कारविहीनानां धर्मशीलमुमुक्षुजनानाम् अहिंसासत्यशौचसन्तोषनिर्मानताक्षमाधैर्यदयामृदुतालज्जानिर्भयतादानजपपाठसरलताधर्ममार्गश्रद्धामुमुक्षुताभक्त्यादयोऽपि मिश्रितसत्त्वगुणस्यैव कार्याणि, तेषां चित्ते समाध्यवस्थाया अलाभेन सूक्ष्मव्यवहितविप्रकृष्टपदार्थविषयकतमोगुणाऽऽवरणस्य सद्भावात्। यद्यपि अहिंसासत्यादिकर्माणि पुण्यपुञ्जोत्पादनेन चित्तशुद्धिद्वारा मुक्तिसाधनानि, तथापि यदा अहिंसासत्यादीनि सत्कर्माणि भवन्ति, तदा चित्तस्य अनेकाग्रता, इच्छा, साधनेषु प्रयत्नः, सामान्यचेष्टा, इत्यादीनि रजोगुणस्य कार्याण्यपि भवन्त्येवेति तत्कारणं रजोगुणोऽवश्यं

भवति । तस्माद् अहिंसासत्यशौचसन्तोषादयो मिश्रितस्यैव सत्त्वगुणस्य परिणामा इति सिध्यति ।

तथा चाहुर्विवेकचूडामणौ श्रीशङ्कराचार्याः—

"मिश्रस्य सत्त्वस्य भवन्ति धर्मास्त्वमानिताद्या नियमा यमाद्याः ।
श्रद्धा च भक्तिश्च मुमुक्षुता च दैवी च संपत्तिरसन्निवृत्तिः ॥" इति ।

अत्रेदं बोध्यम्—साधनावस्थापन्नभक्तेरेव मिश्रितसत्त्वगुणकार्यत्वम्, न तु पराभक्तेः । तत्र चित्तैकाग्र्याद् रजोगुणस्य, सूक्ष्मव्यवहितविप्रकृष्टपदार्थानां साक्षात्कारात् तमोगुणस्य चाभावेन विशुद्धसत्त्वगुणस्यैव सद्भावादिति । तत्र सगुणब्रह्मविषयिका निर्गुणब्रह्मविषयिका वा मनोवाणीशरीरसंलग्नता भक्तिः, सैव क्रमशो दृढतामापन्ना चित्तैकाग्रतारूपा परा भक्तिरित्युच्यते । सा च बहुकालं कायिकवाचिकमानसप्रयत्नतो लभ्यते, । ततश्च जाग्रदवस्थायां पशुपक्ष्यादीनां बालकानां च स्वप्नावस्थावत् प्रधानतो रजस्तमसी सत्त्वगुणश्च किंचिन्मात्रं भवति । विषयासक्तमानवानां पशुपक्ष्यादीनां च सत्त्वगुणतः किंचिदधिकः सत्त्वगुणो भवति; अधिकतमोरजोमिश्रितन्यूनसत्त्वगुणसद्भावात् । अहिंसासत्यनिर्मानतामृदुतादिधर्मशीलजनानां साधनावस्थापन्नभक्तिशालिजनानां च जाग्रदवस्थायां किंचिन्न्यूने तमोरजसी भवतः, तेषां चित्ते किंचिन्न्यूनतमोरजोगुणमिश्रितसत्त्वगुणसद्भावादिति सिध्यति ॥

तदित्थं जाग्रदवस्थायां संक्षेपतो गुणत्रयतारतम्यमुक्तम् । परं तु जीवानां संस्कारवैचित्र्येण अदृष्टवैचित्र्येण च गुणत्रयतारतम्यमपि नानाविधमसंख्यातं वा जायते । तथा सति गुणीयकार्याणां न्यूनत्वेनाधिक्येन च गुणानां न्यूनाधिक्यं कल्पनीयम् । तथाहि—यस्य निद्रामूढताभ्रमप्रमादतन्द्राऽऽलस्यादयः तमोगुणकार्याणि यावन्ति यावन्त्यधिकानि तावदेव तमोगुणाधिक्यं यावन्ति यावन्ति च न्यूनानि तावदेव तमोगुणन्यूनत्वं बोध्यम् । किं बहुना, यदा अत्यन्ततमोगुणप्रधाना सुषुप्त्यवस्था भवति तदा सर्वपदार्थविषयकतमोगुणावरणात् सर्वपदार्थविषयिका मूढता (अज्ञता) भवति विशुद्धसत्त्वगुणप्रधानायां समाध्यवस्थायां च निःशेषतमोगुणनिवृत्तेर्योगिजनानां सर्वज्ञता [सर्वपदार्थानां ज्ञानम्] भवति ॥

एवं चित्तस्य चञ्चलतेच्छाक्रोधप्रवृत्तिमदहिंसादंभकठोरताकलहादीनां रजोगुणकार्याणामाधिक्ये रजोगुणस्याधिक्यं तेषां न्यूनत्वे च तस्य न्यूनत्वमवसेयम् । किं बहुना, अन्तरेण रजोगुणं शरीरीयकस्यचिदङ्गस्य चलनमपि न भवति, रजोगुणाभिव्यक्तौ हि चित्ते रजोगुणपरिणामभूता इच्छा समुदेति, इच्छया चित्तस्य प्रयत्नरूपा चेष्टा भवति, चित्तचेष्टया च इन्द्रियाणां शरीरस्य च चेष्टा भवति, । ततश्च इन्द्रियाणां शरीरस्य च यावती यावती चेष्टाऽधिका भवेत्, चित्तस्य च चञ्चलताक्रोधमदेच्छादयो यावन्तो यावन्तोऽधिकाः स्युस्तावत्येव रजोगुणस्याधिकता बोद्धव्या ॥

एवं ज्ञानरूपसत्त्वगुणकार्याणाम् अहिंसासत्यसरलताक्षमाधैर्यशान्तिसुखादीनामाधिक्ये सत्त्वगुणस्याधिक्यं न्यूनत्वे च न्यूनत्वं ज्ञातव्यम् ॥

ततश्चैवं गुणानां तारतम्यं विज्ञाय कल्याणकामुकैः अहिंसासत्यशौचसन्तोषऋजुता-

क्षमादिभिः अभ्यासवैराग्याभ्यां च प्रतिदिनं रजोगुणस्य न्यूनता सत्त्वगुणस्य च वृद्धिः सम्पादनीयेति मनसि निधायैव परमकारुणिकेन भगवता प्रावाचि—

"सत्त्वं सुखे संजयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥
सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम्॥" इति।

यदा योगिनोऽपि चित्ते व्युत्थानरूपजाग्रदवस्थायां तमोगुणराहित्येन किंचिद् रजोगुणमिश्रित एव सत्त्वगुणो भवति तदान्यजीवानां तु कथैव का? तस्माद् जाग्रदवस्थायामपि विशुद्धसत्त्वगुणो न भवति किं तु मिश्रित एवेति संसिध्यति। सम्प्रज्ञातसमाध्यवस्थायां च निःशेषतमोगुणरूपमलराहित्येन प्रकाशमानसत्त्वगुणो रजोगुणलेशमात्रसहितो भवति। सम्प्रज्ञातयोगपरमावधिरूपधर्ममेघसमाध्यवस्थायां च निःशेषतमोरजोगुणरूपरहितो विशुद्धसत्त्वगुणः प्रकाशमानो भवतीति योगिगम्यम्॥ २९॥

## केवलप्रकृतिः।

प्रकृतिर्हि न कस्माचिदुत्पद्यते तत एव च साक्षात् परम्परया वा सर्वमुत्पद्यत इति सा केवलप्रकृतिः। तस्यास्तु कारणान्तरं नाभ्युपेयते, अनवस्थापातात्।

तथाच कपिलसूत्रम्—

"मूले मूलाभावादमूलं मूलम्" इति।

अस्यार्थः—त्रयोविंशतितत्त्वानां मूले=प्रधाने, मूलाभावात्=अनवस्थापत्त्या कारणाभावात्, मूलम्=प्रधानम्, अमूलम्=मूलम्=उपादानम्, अमूलम्=मूलशून्यम् अकारणमिति यावत्, इति॥

यथोक्तम्—

"प्रकृतेः कारणायोगान्मता प्रकृतिरेव सा।
महत्तत्त्वादयः सप्त शक्तेर्विकृतयः स्मृताः"॥

शक्तेः=प्रकृतेः, विकृतयः=कार्याणि।

ननु "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्यादिस्मृत्या प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात् पुरुष एव प्रकृतेर्मूलं भवतु। पुरुषस्य नित्यतया च नानवस्था, अविद्याद्वारकतया च न पुरुषकौटस्थ्यहानिः।

---

१ चरके पतञ्जलिः—"रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान्। द्वाभ्यां निराकृताभ्यां तु सत्त्वबुद्ध्या निवर्तते॥ अस्यार्थः—यद्यपि अनन्तवान् पुरुषोऽयं रजोगुणतमोगुणसंयोगेन अनादिकालतो बद्धो वरीवर्ति, परं तु अभ्यासवैराग्यज्ञानद्वारा रजस्तमसोः संयोगे निवृत्ते सत्त्वगुणप्रकाशाच्छुद्धज्ञाने मोक्षं लभते। मोक्षस्वरूपं तत्रैव यथा—"मोक्षो रजस्तमोऽभावाद्बलवत्कर्मसंक्षयात्। वियोगः कर्मसंयोगैरपुनर्भाव उच्यते"॥ स्पष्टम्॥

तथा च स्मर्यते—

"तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि" इति।

इति चेत्। अत्र कापिलसूत्रम्—

"पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम्" इति

"अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽपि अविद्यादौ यत्र कुत्रचिन्निस्ये द्वारे परम्परायाः पर्यवसानं भविष्यति, पुरुषस्य अपरिणामित्वात्, यतो यत्र पर्यवसानं सैव नित्या प्रकृतिः, प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः" इति सांख्यप्रवचनभाष्ये विज्ञानभिक्षवः ॥ ३० ॥

## केवलविकृतिः।

मनश्चक्षुःश्रोत्रघ्राणरसनत्वग्वाक्पाणिपादपायूपस्थाकाशवायुतेजोजलपृथिवीति षोडश पदार्थाः केवलविकृतयः।

यदुक्तम्—"दशेन्द्रियाणि चित्तं च महाभूतानि पञ्च च।
एतानि सृष्टिं जानद्भिर्विकाराः षोडश स्मृताः ॥ इति।
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च।
समनस्काः पञ्चार्था विकारा इति संज्ञिताः ॥ इति च ॥

तत्र "तत्त्वान्तरोपादेयत्वं केवलविकृतित्वम्"। विकृतिशब्दः कार्यवाची। तथा च षोडशपदार्थाः कार्याण्येव न कस्यचित्कारणानीति सिध्यति ॥

तत्राहङ्कारत एकादशेन्द्रियाणां, पञ्चतन्मात्रेभ्यश्च पञ्चमहाभूतानामुत्पत्तेस्तेभ्यश्चान्यस्य तत्त्वस्यानुत्पत्तेस्तथात्वम् ॥ ३१ ॥

## प्रकृतिविकृतिः।

महत्तत्त्वाहङ्कारशब्दस्पर्शरूपरसगन्धेति सप्त पदार्थाः प्रकृतिविकृतयः।

"तत्त्वान्तरोपादानत्वे सति तत्त्वान्तरोपादेयत्वं प्रकृतिविकृतित्वम्"।

तत्र महत्तत्त्वम् अहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः, अहङ्कारः पञ्चतन्मात्राणाम् एकादशेन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः, पञ्चतन्मात्राणि पञ्चमहाभूतानां प्रकृतयः, विकृतयश्चाहङ्कारस्येति महदादिसप्तपदार्थानां तथात्वम् ॥

यथोक्तम्—

"इन्द्रियाणां च भूतानां कारणत्वान्महर्षिभिः।
महत्तत्त्वादयः सप्त प्रोक्ताः प्रकृतयोऽपि च" ॥

अपिना विकृतयः ॥ ३२ ॥

## अप्रकृत्यविकृतिः।

पुरुषो हि न कस्माचिदुत्पद्यते नापि पुरुषात् किञ्चिदुत्पद्यत इति सः अप्रकृत्यविकृतिः। पुरुषो न प्रकृतिः=कारणम्, न विकृतिः=कार्यमित्यर्थः। "असङ्गो ह्ययं पुरुषः,

---

१ कार्यकरणमूर्तैः श्लेषो मूर्तस्य स तु क्रियाहेतुर्दृष्टः, न ह्यमूर्तः क्रियावान् कश्चिद् दृश्यते, अमूर्तश्चायमात्माऽतोऽसङ्गः। यथाम्नातं मुण्डकोपनिषदि—"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" ॥

साक्षी चेता केवलो निर्गुणश्च, न जायते म्रियते वा कदाचित्" इत्यादिश्रुतिस्मृतेः ।

तत्र "तत्त्वान्तरानुपादानत्वे सति तत्त्वान्तरानुपादेयत्वम् अप्रकृत्यविकृतित्वम्" ॥३३॥

## भावः ।

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्येति अष्टौ भावाः ।

"धर्मादिभिरन्विता बुद्धिस्तदन्वितं सूक्ष्मशरीरमित्युक्तम् ।
भावयन्ति यतो लिङ्गं तेन भावा इति स्मृताः" ॥

तत्र शास्त्रविहितकर्मानुष्ठानजन्यं भाविफलसाधनभूतं शुभादृष्टं "श्रुतिस्मृतिभ्यामुदितं यत् स धर्मः" इत्युक्तं श्रौतं स्मार्तं कर्म धर्मः । "विहितक्रियया साध्यो धर्मः पुंसां गुणो मतः" इत्युक्तं कर्मजन्यमदृष्टं वा । वेदनिषिद्धकर्मजन्यं पापं तद्धेतुभूतप्राणिहिंसादिश्चाधर्मः । पुंप्रकृत्योर्विवेको ज्ञानम् । ऐहिकामुष्मिकविषयरागराहित्यं वैराग्यम् । ऐश्वर्यम् अणिमादि" इति विवेकः ॥ ३४ ॥

## भावफलम् ।

धर्माद् ऊर्ध्वगमनम्, अधर्माद् अधोगतिः, ज्ञानात् मोक्षः, अज्ञानाद् बन्धनम्, वैराग्यात् प्रकृतिलयः, अवैराग्यात् संसारः, ऐश्वर्याद् इच्छानभिघातः, अनैश्वर्यात् सर्वत्र इच्छाविघात इत्यष्टभावानां फलानि ॥ ३५ ॥

## बुद्धेः संक्षिप्तः सर्गः [ सृष्टिः ] ।

विपर्ययाशक्तितुष्टिसिद्धीति चत्वारो बुद्धेः संक्षिप्तः सर्गः ॥ ३६ ॥

## अथ बुद्धेर्विस्तृतः सर्गः ।

अष्टौ विपर्ययाः, अष्टाविंशतिधा अशक्तयः, नवधा तुष्टयः, अष्टौ सिद्धयः, इति पञ्चाशत् बुद्धेर्विस्तृतः सर्गः ॥ ३७ ॥

## विपर्ययभेदाः ।

अविद्या [ तमः ] अस्मिता [ मोहः ] रागः [ महामोहः ] द्वेषः [ तामिस्रम् ] अभिनिवेशः [ अन्धतामिस्रम् ] इति पञ्च विपर्ययाः ॥

अतस्मिंस्तद्बुद्धिर्विपर्ययः । अत्र योगदर्शने भगवान् पतञ्जलिः—"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति । तत्र अनित्ये घटादौ नित्यत्वाभिमानः, । अशुचौ शरीरादौ शुचित्वप्रत्ययः ।

"स्थानाद् बीजादवष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः" ॥ इति ।

"परिणामतापसंस्कारैर्गुणवृत्तिनिरोधाच्च दुःखमेव सर्वं विवेकिनः" इति दुःखे स्रक्चन्दनवनितादौ सुखत्वारोपः । अनात्मनि देहादावात्मबुद्धिः । तदुक्तम्—

"अनात्मनि च देहादावात्मबुद्धिस्तु देहिनाम् ।
अविद्या तत्कृतो बन्धस्तन्नाशे मोक्ष उच्यते ॥" इति ।

एवमियमविद्या चतुष्पादा भवति ॥

सत्त्वपुरुषयोरहमस्मीत्येकताभिमानोऽस्मिता । तदुक्तम्—

"दृग्दर्शनशक्त्योरेकात्मत्वाभिमानोऽस्मिता" इति ।

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्द्धो रागः । दुःखज्ञस्य तदनुस्मृतिपुरःसरं तत्साधनेषु निन्दा द्वेषः ।

तदुक्तम्—

"सुखानुशयी रागः । दुःखानुशयी द्वेषः" ॥ इति ।

पूर्वजन्मानुभूतमरणदुःखानुभववासनावलात् सर्वस्य प्राणभृन्मात्रस्याऽऽकृमेरा च विदुषः संजायमानं "शरीरविषयादेर्मम वियोगो माभूत्" इति प्रत्यहं निमित्तं विना प्रवर्तमानं भयम् अभिनिवेशः । "मा च भूवं हि भूयासम्" इति प्रार्थनायाः प्रत्यात्ममनुभवसिद्धत्वात् ॥

अविद्यादिपञ्चानां तम आदीनि पञ्च नामान्तराणि ॥ तदाह—

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ।" इति ॥ ३८ ॥

## अविद्याभेदाः ।

"अव्यक्तमहत्तत्त्वाहङ्कारशब्दस्पर्शरूपरसगन्धतन्मात्रेत्यष्टतत्त्वेषु आत्मबुद्धिरूपा अविद्या अव्यक्तात्मबुद्धिः, महत्तत्त्वात्मबुद्धिः" इत्येवम् अष्टविधा भवति । अव्यक्तादीनामष्टत्वात् तद्विषयिण्या अविद्याया अप्यष्टविधत्वम् । ततश्च "अनात्मसु आत्मबुद्धिरविद्या" इत्युक्तं भवति ॥ ३९ ॥

## अस्मिताभेदाः ।

"अणिमादिकमस्माकं सदातनमैश्वर्यम्" इत्यभिमानरूपा अस्मिता "अणिम सदातनं लघिम सदातनम्" इत्येवम् अष्टविधा भवति । "अणिमा, लघिमा, गरिमा, महिमा, प्राप्तिः, प्राकाम्यम्, वशित्वम्, ईशित्वम्" इत्येवं सिद्धीनामष्टत्वात् तद्विषयिण्या अस्मिताया अप्यष्टविधत्वम् ॥ ४० ॥

## रागभेदाः ।

दिव्यादिव्यभेदेन दशविधेषु शब्दादिविषयेषु आसक्तिरूपो रागः "दिव्यशब्दरागः अदिव्यशब्दरागः, दिव्यस्पर्शरागः अदिव्यस्पर्शरागः" इत्येवं दशविधो भवति । शब्दस्पर्शरूपरसगन्धेति पञ्चविषया दिव्यादिव्यभेदेन दशविधा जायन्ते । तथाच विषयाणां दशत्वात् तद्विषयकरागस्यापि दशविधत्वम् ॥ ४१ ॥

## द्वेषभेदाः ।

रागाणां दशत्वात् तद्विषयकद्वेषस्यापि दशविधत्वम्, सिद्धीनामष्टत्वात् तद्विषयकद्वेषस्यापि अष्टविधत्वमिति "दिव्यशब्दद्वेषः अदिव्यशब्दद्वेषः, अणिमद्वेषः लघिमद्वेषः" इत्येवं दशरागाणां द्वेषा अष्टौ सिद्धीनां द्वेषा दश, मिलित्वा द्वेषस्य अष्टादश भेदा भवन्ति। तत्र दिव्यादिव्यभेदेन दशविधाः शब्दादिविषयाः परस्परमुपहता द्वेषस्य विषया भवन्ति, अणिमाद्यष्टसिद्धीनां तु स्वरूपत एव कोपनीयत्वाद् द्वेषविषयत्वम् । तथाच रागसिद्धीनामुभयेषामष्टादशत्वात् तद्विषयकद्वेषस्यापि अष्टादशविधत्वम् ॥ ४२ ॥

## अभिनिवेशभेदाः।

अणिमादीन्यष्टौ ऐश्वर्याणि, दिव्यादिव्यभेदेन शब्दादयो दशविषयाः, इत्यष्टादश विषयान् प्राप्य 'कदाचिदेतान् असुरा मापहार्षुः' (एतैर्वियोगो मा भूत्) इति देवानां भयं जायते। तथा च भयरूपाभिनिवेशविषयाणामणिमशब्दादीनामष्टादशत्वात् तद्विषयकभयरूपाभिनिवेशस्यापि अणिमभयं मणिमभयम्, दिव्यशब्दाभिनिवेशः अदिव्यशब्दाभिनिवेशः" इत्येवमभिनिवेशस्याष्टादशभेदा जायन्ते ॥ ४३ ॥

## अशक्तिभेदाः।

एकादश इन्द्रियवधाः, नव अतुष्टयः, अष्टौ असिद्धय इत्यष्टाविंशतिधा अशक्तयः।

मन्दता, अन्धता, बधिरता, अजिघ्रता, जडता, कुण्ठिता, मूकता, कौण्यम्, पङ्गुता, क्लैब्यम्, उदावर्त इत्येकादश इन्द्रियवधजन्याः,

प्रकृतिविपरीता, उपादानविपरीता, कालविपरीता, भाग्यविपरीता, पारविपरीता, सुपारविपरीता, पारापारविपरीता, अनुत्तमाम्भोविपरीता, उत्तमाम्भोविपरीता, अध्ययनविपरीता, शब्दविपरीता, ऊहविपरीता, सुहृत्प्राप्तिविपरीता, दानविपरीता, आध्यात्मिकदुःखनाशविपरीता, आधिभौतिकदुःखनाशविपरीता, आधिदैविकदुःखनाशविपरीता, इति सप्तदश बुद्धिवधजन्याः, मिलित्वा अष्टाविंशतिधा अशक्तयः ॥ ४४ ॥

## तुष्टिभेदाः।

प्रकृतिः, उपादानम्, कालः, भाग्यम्, इति चतस्र आध्यात्मिकतुष्टयः, अर्जनदोषदर्शनजन्यविषयोपरमजन्या, रक्षणदोषदर्शनजन्यविषयोपरमजन्या, क्षयदोषदर्शनजन्यविषयोपरमजन्या, भोगदोषदर्शनजन्यविषयोपरमजन्या, हिंसादोषदर्शनजन्यविषयोपरमजन्या, इति पञ्च बाह्यतुष्टयः, मिलित्वा नवधा तुष्टयः ॥ ४५ ॥

## सिद्धिभेदाः।

अध्ययनम्, शब्दः, ऊहः, सुहृत्प्राप्तिः, दानम्, आध्यात्मिकदुःखनाशः, आधिभौतिकदुःखनाशः, आधिदैविकदुःखनाशः इत्यष्टौ सिद्धयः ॥

तदित्थं विपर्ययभेदीयाऽविद्यात आरभ्य सिद्धिभेदीयाऽऽधिदैविकदुःखनाशपर्यन्तेन पञ्चाशता विस्तृतो बुद्धेः सर्गः। इति बुद्धिसर्गः ॥ ४६ ॥

## प्रकारान्तरेण विपर्ययः।

अज्ञानं विपर्ययः। अस्मिन् पक्षे अज्ञानरूप एक एव भेदो विपर्ययस्य ॥ ४७ ॥

## प्रकारान्तरेणाशक्तिभेदाः।

अधर्मावैराग्यानैश्वर्याणि तिस्रः अशक्तयः ॥ ४८ ॥

## प्रकारान्तरेण तुष्टिभेदाः।

धर्मवैराग्यैश्वर्याणि तिस्रः तुष्टयः ॥ ४९ ॥

## प्रकारान्तरेण सिद्धयः।

ज्ञानं सिद्धिः। अत्र पक्षे सिद्धीनां ज्ञानरूप एक एव भेदः। अत्रेदमवधेयम्—

अज्ञानस्य विपर्यये, अधर्मावैराग्यानैश्वर्याणामशक्तौ, धर्मवैराग्यैश्वर्याणां तुष्टौ, ज्ञानस्य च सिद्धावन्तर्भाव इति ॥ ५० ॥

## दुःखभेदाः ।

दुःखं त्रिविधम्, आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति भेदात् ॥ ५१ ॥

## आध्यात्मिकभेदौ ।

आध्यात्मिकं दुःखं द्विविधम्, शारीरं मानसं च । तत्र शरीरे वातपित्तकफानाम् अपचयोपचयाभ्यां यज् ज्वरादि दुःखमुपजायते तच् शारीरम् । यच्च मनसि कामक्रोध-लोभमोहभयेर्ष्याविषादादिभिर्दुःखमुत्पद्यते तन्मानसम् । आत्मानम्=मनःशरीरादिकम-धिकृत्य भवमिति तद्व्युत्पत्तेः । ततश्च शोकमोहज्वरादिरूपं दुःखम् आध्यात्मिकम् इति सिध्यति ॥ ५२ ॥

## आधिभौतिकदुःखम् ।

मनुष्यपशुपक्षिसर्पादिभिर्यद् दुःखं जायते तद् आधिभौतिकम् । भूतानि=व्याघ्र-सर्पादीनि अधिकृत्य जातमिति तद्व्युत्पत्तेः । ततश्च व्याघ्रसर्पादिजनितं दुःखम् आधिभौतिकम् ॥ ५३ ॥

## आधिदैविकदुःखम् ।

यक्षराक्षसपिशाचादिभिर्यद् दुःखं जायते तद् आधिदैविकम् । देवान्=अग्निवाय्वा-दीन् अधिकृत्य निर्वृत्तमिति व्युत्पत्तेः । ततश्च अतिवातादिहेतुजातं दुःखम् अधि-दैविकम् ॥ ५४ ॥

## व्यक्तधर्माः ।

हेतुमत्त्वम्, अनित्यत्वम्, अव्यापकत्वम्, क्रियावत्त्वम्, नानात्वम्, आश्रितत्वम्, लिङ्गत्वम्, सावयवत्वम्, परतन्त्रत्वम्, इति नवधर्मा व्यक्तस्य ॥ ५५ ॥

## अव्यक्तधर्माः ।

कारणशून्यत्वम्, नित्यत्वम्, व्यापकत्वम्, निष्क्रियत्वम्, एकत्वम्, अनाश्रितत्वम्, अलिङ्गत्वम्, निरवयवत्वम्, स्वतन्त्रत्वम्, इति नव धर्मा अव्यक्तस्य ॥ ५६ ॥

## व्यक्ताव्यक्तयोः साधारणधर्माः ।

त्रिगुणत्वम्, अविवेकित्वम्, विषयत्वम्, सामान्यत्वम्, अचेतनत्वम्, प्रसव-धर्मित्वम्, इति षट् व्यक्ताव्यक्तयोः साधारणधर्माः ॥ ५७ ॥

## पुरुषधर्माः ।

अत्रिगुणत्वम्, विवेकित्वम्, अविषयत्वम्, असामान्यत्वम्, चेतनत्वम्, अप्रसव-धर्मित्वम्, कारणशून्यत्वम्, नित्यत्वम्, व्यापकत्वम्, निष्क्रियत्वम्, अनाश्रितत्वम्, अलिङ्गत्वम्, निरवयवत्वम्, स्वतन्त्रत्वम्, नानात्वम्, साक्षित्वम्, द्रष्टृत्वम्, केवलत्वम्, मध्यस्थत्वम्, अकर्तृत्वम्, इति विंशतिः पुरुषस्य धर्माः ॥ ५८ ॥

## पुम्प्रकृत्योः साधारणधर्माः ।

उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभावपि सर्वगतौ इति" । उभावपि नित्यौ=लयं क्वचिदपि न यातः । उभावप्यपरौ=न विद्यते परोऽपरो याभ्यां तावपरौ ॥ ५८ ॥

## वैराग्यभेदाः ।

यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा, इति चत्वारो भेदा वैराग्यस्य ।

तत्र रागादिकषायाणां पाकार्थं विषयेषु दोषाणां भूयोभूयश्चिन्तनरूपः प्रयत्नो यतमानसंज्ञा । पक्वकषायाणामपक्वकषायेभ्यो विभागेन निश्चयकरणं व्यतिरेकसंज्ञा । पक्वानां रागादिकषायाणां चित्ते स्थितिमात्रम् एकेन्द्रियसंज्ञा । वशीकारसंज्ञां सूत्रकार एव लक्षयति—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति । ऐहिकपारत्रिकविषयादौ दोषदर्शनान्निरभिलाषस्य "ममैते विषया वश्याः नाहमेतेषां वश्यः" इति विमर्शो वशीकारसंज्ञवैराग्यमित्युक्तं भवति ॥ ५९ ॥

## सूक्ष्मशरीरतत्त्वानि ।

महत्तत्त्वाहङ्कारमनश्चक्षुः श्रोत्रघ्राणरसनत्वग्वाक्पाणिपादपायूपस्थशब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रेत्यष्टादश सूक्ष्मशरीरस्य तत्त्वानि । एभिरेवाष्टादशभिस्तन्निर्मितेः सांख्याभिमतत्वात् ॥ ६० ॥

## षट् कोषाः ।

रोमरक्तमांसेति त्रयो मातृतः, स्नाय्वस्थिमज्जेति त्रयः पितृतः, मिलित्वा षट् कोषा भवन्ति ।

यदुक्तम्—

"लोमलोहितमांसानि जायन्ते मातुरस्य यत् ।
पितुः स्नाय्वस्थिमज्जानस्ततः षाट्कौशिकं वपुः" ॥ इति ।

अयमर्थः—यत्=यस्मात्, मातुः सकाशात्, अस्य=वपुषः, लोमलोहितमांसानि जायन्ते, पितुः सकाशाच्च स्नाय्वस्थिमज्जानः जायन्ते, ततः=तस्मात्, इदं वपुः षाट्कौशिकं कथ्यत इति ॥ ६१ ॥

## स्थूलशरीरम् ।

अतिरजोगुणोत्थजन्तुषा रागेण स्त्रीपुरुषयोः संगमे सति ऋतुकाले गर्भाशये रेतःशोणितयोः संकरो जायते । पूर्वे मासे धातूनां वातपित्तश्लेष्मणां क्षोभात् भूतचैतन्ययुक्तं क्लेदमात्रं ( कलिलं ) जायते । द्वितीये मासे तेजसा वायुना च तत् कलिलं संशुष्कं सत् अर्बुदत्वं ( मांसकीलत्वं ) प्राप्नोति "द्वितीये मास एव गर्भस्य हि संभवतः

---

१ अत्र श्रुतिः—"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् ।" ( मु० १।२।२१ ) परीक्ष्य=शास्त्रानुमानाभ्यामनित्यत्वेन निश्चित्य । कर्मचितान्=कर्मणा संपादितान् । निर्वेदम्=स्वर्गादिभोग्यपदार्थेभ्यो वैराग्यम्, आयात्=कुर्यादित्यर्थः ।

पूर्वं शिरः संभवतीत्याह शौनकः, शिरोमूलत्वाद्देहेन्द्रियाणाम् । पाणिपादमिति मार्कण्डेयः, तन्मूलत्वाच्चेष्टाया गर्भस्य । नाभिरिति पाराशर्यः, ततो हि वर्द्धते देहो देहिनः । हृदयमिति कृतवीर्यः, बुद्धेर्मनसश्च स्थानत्वात् । मध्यशरीरमिति सुभूतिर्गौतमः, तन्निबद्धत्वात् सर्वगात्रस्य । सर्वाङ्गानि युगपत्संभवन्तीति धन्वन्तरिः ।" [ इति सुश्रुते ] पृथिव्यादि पञ्चमहाभूतानि, सत्त्वादयो गुणाः, ज्ञानेन्द्रियाणि आत्मा चेति गर्भं जीवयन्ति, यथा मलादिदुर्गन्धिनाऽधःपतनं न भवेत्तथा रक्षयन्ति । यस्माद् गर्भवत्या रसवहा नाड्यो बालकस्य नाभिनाड्यां लग्ना भवन्ति तस्मात् तावदाहारयोगात् शिशुर्वृद्धिं प्राप्नोति । लाघवमृदुत्वादीन् आकाशवाय्वादिगुणांश्चादत्ते ॥

ततस्तृतीये मासे इन्द्रियाणि उद्भवन्ति । चतुर्थे मासे स्पन्दते [ किंचिच्चलति ] । तत्रैव मास अङ्गानां स्थैर्यं [ आकृत्या स्थितिः ] भवति । पञ्चमे मासे रुधिरस्य उद्भवः । षष्ठे मासे बलस्य वर्णस्य ( रूपस्य ) नखलोम्नां च संभवः । सप्तमे स शिशुः नाडीस्नायुशिरायुतः, समनाः, प्रव्यक्तचैतन्ययुक् च सन् प्रादुर्भूतस्मृतिर्भवति । तत्र नाड्यः= वायुवाहिन्यो धमन्यः, स्नायवः=शरीराच्छादकनाड्यः, शिराः=वातपित्तश्लेष्मवहा इति विवेकः ॥

अष्टमे मासे स शिशुः त्वङ्मांसवान् भवति । नवमे अथवा दशमे मासे प्रसववायुना प्रेरितो गर्भः सहसा बहिरेति । क्वचिच्च स्वकर्माधीनः गर्भः सप्तमेऽष्टमे वा मासं आयासवशात् बहिरेति । परं तत्रोत्पन्नः प्रायो न जीवति ॥

यतो मातुः सकाशादस्य लोमलोहितमांसानि जायन्ते पितुः सकाशाच्च स्नाय्वस्थिमज्जानो जायन्ते, तस्मादिदं वपुः षाट्कौशिकमुच्यते ॥

बहिर्गतवायुना संस्पृष्टोऽत एव तत् क्षणं विगतस्मृतिः मातृयोनेर्यन्त्रात् कनकतन्तुवत् निःसरणेन जातपीडः स शिशुः हृतधन इव रोरुद्यते ।

यथा—

"जातो मृतश्च कतिधा न कतिस्तनानां पीतं पयो न कलिताः कति मातरो न ।
उत्पद्य बंधविधुतावधुना यतिष्य इत्यस्य विप्लवमुपैति बहिर्मनीषा ॥ इति ॥

अयमर्थः—अहं कतिधा=कतिवारं जातो मृतश्च न, अपि तु बहुकृत्वः जातो मृतश्चाभूवम् । मया कतिस्तनानां पयो न पीतम् अपि तु बहूनां स्तनानां दुग्धं पीतम् । मया कति मातरो न कलिताः ? अपि तु बह्वयो जनन्यः संपादिताः । अतः अधुना

---

१ गर्भस्थितस्य दोषस्मरणं गर्भोपनिषदि यथा—

"पूर्वयोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥
जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः ।
यन्मया परिजनस्यार्थे कृतं कर्म शुभाऽशुभम् ॥
एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः ।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्" ॥

गर्भान्निःसृत्य बन्धविधुतौ=संसारपाशविनाशार्थम्, यतिष्ये । इति=एवम्, अस्य= गर्भस्थस्य, मनीषा=बुद्धिः बहिरागत्य विप्लवम्=विनाशम्, उपैति=प्राप्नोति, अत एव स भृशं रोदितीति ॥

अस्मिन् शरीरे कला आशया धातवः धातुमला उपधातवः त्वचश्च सप्त बोध्याः । तथा चोक्तं वपुर्निर्णये शार्ङ्गधरेण—

कलाः सप्ताशयाः सप्त धातवः सप्त तन्मलाः ।
सप्तोपधातवः सप्त त्वचः सप्त प्रकीर्तिताः ॥

कलाः सप्त यथा—

"मांसासृङ्मेदसां तिस्रो यकृत्प्लीह्नोश्चतुर्थिका ।
पञ्चमी च तथांत्राणां षष्ठी चाग्निधरा मता ॥
रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः ।

आशयाः सप्त यथा—

श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः ॥
ऊर्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः ।
तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः ॥
मलाशयस्त्वधस्तस्य वस्तिर्मूत्राशयः स्मृतः ।
जीवरक्ताशयमुरो ज्ञेयाः सप्ताशयास्त्वमी ॥"

सप्त धातवो यथा—

"रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव" इति ।

धातुमलाः सप्त यथा—

"कफः पित्तं मलश्चैव प्रस्वेदो नखरोम च ।
स्नेहोऽपि पिडि(टि)का चैव धातूनां क्रमशो मलाः ॥"

सप्त उपधातवो यथा—

"स्तन्यं रजश्च नारीणां काले भवति गच्छति ।
शुद्धमांसभवः स्नेहो वसा संकीर्त्यते च सा ॥
स्वेदो दन्तास्तथा केशास्तथैवोजश्च सप्तमम् ।"

सप्त त्वचो यथा—

ज्ञेयाऽवभासिनी पूर्वा सिध्मस्थानं च सा मता ।
द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः ॥
श्वेता तृतीया संख्याता स्थानं चर्मदलस्य सा ।
ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका ॥
पञ्चमी वेदिनी ख्याता सर्वकुष्ठोद्भवैस्ततः ।
विख्याता लोहिता षष्ठी ग्रन्थिगण्डापचीस्थितिः ॥
स्थूला त्वक् सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा ।

तथा शरीरे वातपित्तकफाख्याः त्रयो दोषाः । नव शतानि (९००) स्नायवः (शरीराच्छादकनाड्यः) । दशाधिकद्विशतानि [२१०] संधयः । त्रिशतानि अस्थीनि । मर्म [हृदयादि] सप्ताधिकं शतम् । शिरा सप्तशती । कंडरा [अवयवविस्तारसंकोचसंपादिका विशेषनाड्यः] षोडश । मांसपेश्यः [मांसपिण्ड्यः] पञ्चशतीमिताः । स्त्रीणां तनौ तु मांसपेश्यो विंशतिरधिका । रसवाहिन्यो धमन्यः चतुर्विंशतिः ।

तदुक्तं शार्ङ्गधरेण—

"त्रयो दोषा नव शतं स्नायूनां संधयस्तथा ।
दशाधिकं च द्विशतमस्थ्नां च त्रिशतं मतम् ॥
सप्तोत्तरं मर्म शतं शिरासप्तशतं तथा ।
चतुर्विंशतिराख्याता धमन्यो रसवाहिकाः ॥
मांसपेश्यः समाख्याता नृणां पञ्चशतं बुधैः ।
स्त्रीणां विंशत्यधिकाः कंडराश्चैव षोडश ॥"

पुरुषस्य शरीरं दशच्छिद्रं वदन्ति । तत्र नव प्रसिद्धानि । दशमं ब्रह्मरन्ध्रं ग्राह्यम् । स्त्रीणां देहे त्रीणि रन्ध्राणि अधिकानि । तत्र द्वे स्तनस्थे, एकं गर्भमार्गस्य ।

तदुक्तं शार्ङ्गधरेणैव—

"नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्तिते ।
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते ॥
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः ।
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः ॥"

तत्र पङ्कजतुल्यं यद् बुद्धेः स्थानं तद् हृदयम् । हृदयादधः वामे भागे लोहितवाहिनीनां शिराणां यन्मूलं स प्लीहा मतः । प्लीह्नोऽधोभागे शोणितफेनजन्मा फुप्फुसनामधेयः स्मृतः । हृदयादधो दक्षिणदेशे यकृत् वर्तते, तच्च रञ्जकपित्तस्य गृहम् । यकृतोऽधः जलवाहिनीनां शिराणां यन्मूलं तत् क्लोमसंज्ञकं तिलं वदन्ति । कुक्षिस्थस्य तिलस्य पुष्टिकरौ मेदोद्भवौ वृक्कौ प्रथितौ । नाभौ चन्द्रस्य उदयशीलं मण्डलम् (बिम्बः) अस्ति । तस्य चन्द्रमण्डलस्य मध्यगामि दीप्तं रविमण्डलं चास्ति । तस्मिन् रविमण्डले सकलान्नपक्ता अग्निरस्ति, तत्रापि स्थूले वपुषि यवतुल्यः सूक्ष्मे तु वपुषि तिलपरिमाणः । नृणां शरीरे अंत्राणि सार्धत्रीणि स्त्रीणां शरीरे तु त्रीण्येव अंत्राणि ॥ रोमाणि च सार्धास्तिस्रः कोट्यः कथिताः ॥ तत्र सपादहस्तपरिमाणं परिमण्डलं (परितो मण्डलं यस्य तथाभूतम्) शिरः स्मृतम् । मुखं चतुरङ्गुलपरिमाणं मतम् । ललाटम् अष्टाङ्गुलपरिमाणम् । यकृत् त्रयोदशाङ्गुलपरिमाणमुदीरितम् । पञ्चाङ्गुलं हृदयम्, चतुरङ्गुलं तिलम्, फुप्फुसकं च सप्ताङ्गुलं वदन्ति ॥

अस्मिन् शरीरे द्व्यधिकसप्ततिसहस्राणि (७२००) नाड्य उदीरिताः । तासां मध्ये वायुवहा दश नाड्यः श्रेष्ठाः, । तासु दशस्वपि तिस्रो नाड्योऽतिश्रेष्ठाः । ता दश नाड्यश्चेमाः—

इडासंज्ञिका नाडी नासिकाया वामे भागे स्थितास्ति। नासिकाया दक्षिणे भागे तु पिंगला नाम्नी नाडी वर्तते। नासिकाया मध्यदेशे तु सुषुम्णा नाडी स्थिता। वामचक्षुषि गांधारी स्थिता। दक्षिणे चक्षुषि च हस्तिजिह्वा नाडी स्थिता। दक्षिणे कर्णे पूषासंज्ञिका नाडी स्थिता, वामे कर्णे च यशस्विनी नाडी स्थिता। मुखे अलंबुषा नाडी स्थिता। लिङ्गदेशे तु कुहूसंज्ञिका नाडी स्थिता, मूलस्थाने च शंखिनीसंज्ञिका नाडी स्थिता इति।

तिस्रोऽतिश्रेष्ठाश्चेमाः—

इडादिष्वाद्यासु तिसृषु नाडीषु प्राणवायुः संचरतीति इडा, पिंगला, सुषुम्णा, इति तिस्रो नाड्योऽतिश्रेष्ठाः॥

अस्मिन् शरीरे तत्तत्कर्मकरा दश वायवो विख्याताः (प्रसिद्धाः)।

यथा—

"प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः॥ इति।

तत्र प्राणो द्वादशाङ्गुलपरिमाणं वहिर्निःसरणान्तःप्रवेशाभ्याम् अन्नपानादिरसं भस्मीकरोति। अपानोऽधोगामी मूलाधारं प्रविश्य तत्सकाशान्मलमूत्रविसर्जनं करोति। समानः सर्वशरीरे द्वासप्ततिसहस्र [७२००] नाडीषु अन्नपानादिरसं समं विभजन् गच्छति। उदानः अन्नपानादीन् ऊर्ध्वं नयति। तथैव व्यानः सर्वशरीरे स्थित्वा आकुञ्चनप्रसारणे करोति। नागादीनां क्रिया अप्युक्ताः—"उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः। कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे॥ न जहाति मृतं चापि सर्वव्यापी धनञ्जयः।" इति।

त एव प्राणादयो दश वायवः प्राणायामाभ्यासेन[१] वश्याः सन्तो निखिलाभीष्टप्रदा भवन्ति॥

---

१ रेचनं पूरणं वायोः शोधनं रेचनं तथा।
चतुर्भिः क्लेदनं वायोः प्राणायाम उदीर्यते॥

अथ रेचकादीनां लक्षणानि—

(१) उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम्।
शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम्॥
वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम्॥
नोच्छ्वसेन्न च निःश्वसेन्नैव गात्राणि चालयेत्।
एवं भावं नियुञ्जीयात्कुम्भकस्येति लक्षणम्॥

(२) बाह्यादापूरणं वायोरुदरे पूरको हि सः।
संपूर्णकुम्भवद् वायोर्धारणं कुम्भको भवेत्॥
वहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः"।

चन्द्रादीनां स्थितिर्यथा—

"इडायां संस्थितश्चन्द्रः पिंगलायां तु भास्करः ।
सुषुम्णायां स्थितः शंभुः शंभोर्हंसस्वरूपता ॥" इति ।

सम्प्रति सामान्यतश्चन्द्रसूर्ययोर्वहननियम उच्यते—

"आदौ चन्द्रः सिते पक्षे भास्करस्त्वसिते वहेत् ।
सार्धद्विघटिकामानादिति सामान्यतो मतम्" ॥ इति ।

---

अथ रेचकादिषु ध्यानानि—

"अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ।
चतुर्भुजं महाविष्णुं पूरकेण विचिन्तयेत् ॥
कुम्भकेन हृदि स्थाने चिन्तयेत् कमलासनम् ।
ब्रह्माणं रक्तगौराभं चतुर्वक्त्रं पितामहम् ॥
रेचकेन च विद्यात्मां (शिवम्) ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम् ॥"

अथाभ्यासक्रमः—

(१) हस्तेन दक्षिणेनैव पीडयेन्नासिकापुटम् ।
शनैः शनैरथ बहिः प्रक्षिपेत् पिङ्गलाऽनिलम् ॥
इडया वायुमापूर्य ब्रह्मन्! षोडशमात्रया ।
पूरितं कुम्भयेत् पश्चाच्चतुः षष्ट्या तु मात्रया ॥
द्वात्रिंशन्मात्रया सम्यग्रेचयेत् पिङ्गलाऽनिलम् ।
एवं पुनः पुनः कार्यं व्युत्क्रमादुत्क्रमेण तु ॥

(२) यया त्यजेत्तयाऽऽपूर्य धारयेदविरोधतः ।

(३) प्रथमे दिवसे कार्यं कुम्भकानां चतुष्टयम् ।
प्रत्येकं दशसंख्याकं द्वितीये पञ्चभिस्तथा ॥
विंशत्यलं तृतीऽह्नि पञ्चवृध्या दिने दिने ॥

(४) प्रातर्मध्यं दिने सायमर्धरात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥
एवं मासत्रयाभ्यासान्नाडी शुद्धिस्ततो भवेत् ।
शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ॥
नादाभिव्यक्तिरित्येतच्चिह्नं तच्छुद्धिसूचकम् ।
यावदेतानि संपश्येत्तावदेवं समाचरेत् ॥

अथ मात्रालक्षणम्—

"जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलिस्फोटनं कुर्यात् सा मात्रा परिगीयते ॥ इत्यास्तां विस्तरः ॥

5

अयमर्थः—सिते=शुक्ले पक्षे, सार्धद्विघटिकामानात्=परिमाणात्, आदौ=प्रातःकाल-मारभ्य, चन्द्रः=वामनासास्थितः प्राणः, वहेत्=गच्छेत् । भास्करस्तु=पिङ्गलास्थः प्राणः, तत्परिमाणात् असिते पक्षे आदौ वहेदिति सामान्यतो मतमिति ॥

तत्राभ्यासफले यथा—

"शशाङ्कं वारयेद्रात्रौ दिवा वार्यो दिवाकरः ।
इत्यभ्यासरतो धीरो योगिनामग्रणीर्भवेत् ॥
कुम्भकेन सुषुम्णाया मध्ये वहति मारुते ।
मन्मन्यामवस्थाय धन्या नान्याभिलाषिणः ॥" इति ।

अयमर्थः—रात्रौ शशाङ्कम्=इडासुरम्, वारयेत्=निवारयेत्, दिवा=दिवसे, दिवा-करः=सूर्यः–पिंगलासुरः, वार्यः । इति=एवम्, अभ्यासरतः धीरः=असाहसकारी, योगिनां मध्ये अग्रणीः=मुख्यो भवेत् ॥

कुम्भकेन[१] सुषुम्णाया मध्ये मारुते वहति सति मनोन्मन्याम्=मारुते मध्यसंचारे मनः स्थैर्यं प्रजायते । यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी । तस्याम् अव-स्थाय=स्थित्वा, अन्यस्यैश्वर्यस्याभिलाषिणस्ते धन्या न सन्ति । अर्थादेवंविधामवस्थां संप्राप्य ब्रह्मानन्दाभिलाषिण एव धन्या इति ॥

---

१ अथ कुम्भकभेदानाह—

"सूर्योज्जायी शीतली च भस्त्री चैव चतुर्थिका ।
भेदैरेव समं कुम्भो यः स्यात् सहितकुम्भकः ॥

अथ सूर्यभेदकुम्भकमाह—

"दक्षनाड्या समाकृष्य बहिष्ठं पवनं शनैः ।
यथेष्टं पूरयेद्वायुं रेचयेदिडया ततः ॥
कपालशोधने वाऽपि रेचयेत् पवनं शनैः ।
चतुष्कं वातदोषं तु कृमिदोषं निहन्ति च ॥
पुनः पुनरिदं कार्यं सूर्यभेदमुदाहृतम् ।"

अथोज्जायाख्यमाह—

"मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः ।
यथा लगति कण्ठात्तु हृदयावधि सस्वनम् ॥
पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः ।
शीर्षोदिताऽनलहरं गलश्लेष्महरं परम् ॥
सर्वरोगहरं पुण्यं देहाऽनलविवर्धनम् ।
नाडीजलोदरं धातु-गतदोष विनाशनम् ॥

अथ शीतलीनाम कुम्भकम्—

"जिह्वया वायुमाकृष्य पूर्ववत्कुम्भकादनु ।
शनैस्तु प्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः ॥

दिवारात्रौ श्वासप्रश्वासगतिश्चेत्थम्—

षट् शतानि दिवारात्रौ सहस्राण्येकविंशतिः ।
स्वाभाविकी गतिः प्रोक्ता श्वासप्रश्वासयोर्नृणाम् ॥ इति ।

नृणां श्वासप्रश्वासयोः दिवारात्रौ एकविंशतिसहस्राणि षट्शतानि च स्वाभाविकी गतिः प्रोक्तेति योजना ॥

---

गुल्मप्लीहाऽऽदिकान् दोषान् क्षयं पित्तं ज्वरं तृषाम् ।
विषाणि शीतली नाम कुम्भकोऽयं निहन्ति हि ॥"

अथ भस्त्राख्यमाह—

"ततः पद्मासनं बद्ध्वा समग्रीवोदरः सुधीः ।
मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् ॥
यथा लगति कंठात्तु कपाले सस्वनं ततः ।
वेगेन पूरयेत् किंचिद्धृत्पद्मावधि मारुतम् ॥
पुनर्विरेचयेत्तद्वत्पूरयेच्च पुनः पुनः ।
यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते ॥
तथैव स्वशरीरस्थं चालयेत्पवनं शनैः ।
यथा श्रमो भवेद्देहे तथा सूर्येण पूरयेत् ॥
यथोदरं भवेत्पूर्णं पवनेन तथा लघु ।
धारयन्नासिकामध्यं तर्जनीभ्यां विना दृढम् ॥
कुम्भकं पूर्ववत्कृत्वा रेचयेदिडयाऽनिलम् ।
कण्ठोत्थिताऽनलहरं शरीराग्निविवर्धनम् ॥
कुण्डलीबोधकं पुण्यं पापघ्नं शुभदं सुखम् ।
ब्रह्मनाडीमुखान्तस्थकफाऽऽद्यर्गलनाशनम् ॥
गुणत्रयसमुद्भूतग्रन्थित्रयविभेदनम् ।
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ॥"
रेचकं पूरकं मुक्त्वा कुम्भीकरणमेव यः ।
करोति त्रिषु कालेषु नैव तस्यास्ति दुर्लभम् ॥
"यावत्केवलसिद्धिः स्यात्तावत्सहितमभ्यसेत् ।"

उद्बोधनम्—

"यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः ।
तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥
युक्तं युक्तं त्यजेद्वायुं युक्तयुक्तं प्रपूरयेत् ।
युक्तं युक्तं प्रबध्नीयादेवं सिद्धिमवाप्नुयात् ॥"

किं बहुना—सर्वथा गुरुगम्योऽयं मार्गो न जातु स्वातन्त्र्येण विधेयः, लाभस्थाने हानेरपीतरथा संभवाद् इत्यलम् ॥

हंसचारो यथा—

प्राणो मूलात्समुत्थाय प्राप्येडां पिङ्गलां रविः ।
नासिकाभ्यां बहिर्गत्वा लीयते द्वादशाङ्गुले ॥
दशाङ्गुलाद्विशन्नन्तर्नाडीभ्यां सोमरूपकः ।
मलमूत्रमरुच्छुक्राण्यपानः स बहिः क्षिपेत् ॥
अग्नीषोममयो नाडीं सुषुम्णामाश्रितः स च ।
आब्रह्मरन्ध्रमुद्गच्छन्नुदानो नाम वर्धते ॥ इति ।

अयमर्थः—रविः=सूर्यरूपः प्राणः, मूलाधारात्=चक्रविशेषात्, समुत्थाय इडां पिंगलां च प्राप्य नासिकाद्वारा बहिर्गत्वा द्वादशाङ्गुले देशे लीयते ॥ स सोमरूपकः अपानः दशाङ्गुलपरिमिताद् बहिर्देशात् नाडीभ्याम्=इडापिंगलाभ्याम् अन्तः प्रविशन् मलं च पुरीषं मूत्रं च मरुच अपानवायुः शुक्रं च रेतः तान्येतानि बहिः क्षिपेत् ॥ अग्नीषोममयः=रविचन्द्रमयः स च उदानो नाम सुषुम्णाम् आश्रितः आब्रह्मरन्ध्रम्=ब्रह्मरन्ध्रपर्यन्तम् उद्गच्छन् वर्धते=वृद्धिं प्राप्नोतीति ॥

ओंकारसिद्धिस्तन्मात्रा देवताश्च यथा—

आत्मा सोऽहमुदीरयत्यविरतं तस्मिन् सहोर्लोपना-
दोकारेण च पूर्वरूपकरणादोंकार आविर्भवेत् ।
अं चाप्युं च मकारबिंदुसहितं नादं विधिं माधवं
रुद्रं सेशसदाशिवं सुमनसस्तत्र स्थितं चक्षते ॥ इति ।

अयमर्थः—सर्वो जनः अविरतम्=निरन्तरम्, सोऽहम् उदीरयति=बहिर्गच्छता-प्राणेन 'स' इति अन्तः प्रविशता च 'अहम्' इति कथयति; तस्मिन्='सोऽहम्' इति मन्त्रे, सहोः=सकारहकारयोः, लोपनात्=लोपकरणात्, उकारेण च अकारस्य पूर्वरूप-करणात् ओंकारः आविर्भवेत् । सुष्ठु मनो येषां ते सुमनसः अकारम् उम्=उकारम्, मकारश्च विंदुश्च ताभ्यां सहितं नादं च तत्र=ओंकारे, अवयवतया स्थितं चक्षते= वदन्ति, तत्रैव अकाराद्यवयवात्मके ओंकारे विधिम्=ब्रह्माणम्, माधवम्=विष्णुम्, रुद्रम्=महादेवम्, सेशम्=अव्याकृतसहितम्, सदाशिवम्=परमात्मानं च, क्रमाद् अकारादिप्रतिपाद्यत्वेन स्थितं चक्षते, इति ॥

देहस्थितपुरुषो यथा—

सार्धत्रिवलया मूले कुंडली नागरूपिणी ।
वायुनोर्ध्वं नयेद्योगी भित्त्वा चक्राणि तां तु षट् ॥
हिताहिताख्या हृदये शिरा या तन्मध्यगं मण्डलमिन्दुतुल्यम् ।
निवातदीपाकृतिरत्र वेद्यो मुमुक्षुणात्मा सकलप्रकाशः ॥ इति ।

अयमर्थः—सार्धानि त्रीणि वलयानि यस्याः सा नागरूपिणी कुण्डली=कुण्डलाकारा नाडी, मूले=मूलाधारादधोभागे, अस्ति । ताम्=कुण्डलनीम्, योगी मणिपूरकादि षट् चक्राणि भित्त्वा वायुना ऊर्ध्वं नयेत्=प्रापयेत् ॥ हिताहिताख्या=एतन्नामिका या शिरा= नाडी हृदये विद्यमाना तन्मध्यगम् इन्दुतुल्यं मण्डलम्=बिम्बम् अस्ति । अत्र=मण्डले,

मुमुक्षुणा निवातदीप इव आकृतिः=आकारो यस्य स स्वप्रकाश आत्मा सकलप्रकाशः=सर्वप्रकाशकः, वेद्यः=बोद्धव्य इति ॥ ६२ ॥

## दैवसर्गः [ देवानामुत्पत्तिः ] ।

ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रः, गान्धर्वः, याक्षः, राक्षसः, पैशाचः, इत्यष्टविधो दैवसर्गः ॥ ६३ ॥

## तिर्यग्योनिसर्गः ।

पशवः, मृगाः, पक्षिणः, सरीसृपाः, स्थावराः ( वृक्षादयः ) इति पञ्चविधः तिर्यग्योनिसर्गः ॥ ६४ ॥

## मनुष्यसर्गः ।

मनुष्यः । मनुष्यसर्गे एको मनुष्य एवास्ति ॥ ६५ ॥

## राजवार्तिकग्रन्थस्य षष्टिः पदार्थाः ।

प्रधाने वर्तमानाः—एकत्वम्, अर्थवत्त्वम्, परार्थता इति त्रयः । पुरुषे वर्तमानाः—अन्यत्वम्, अकर्तृत्वम्, बहुत्वम् इति त्रयः । उभयोर्वर्तमानाः—अस्तित्वम्, योगः, वियोग इति त्रयः । स्थूलसूक्ष्मभूतयोर्वर्तमानाः—स्थितिः, पञ्च विपर्ययाः, अष्टौ सिद्धयः, नव तुष्टयः, अष्टाविंशतिधा अशक्तयः, इत्येक पञ्चाशत् । मिलित्वा षष्टिः पदार्थाः ।

यदुक्तं राजवार्तिके—

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
इति षष्टिः पदार्थानामष्टाभिः सिद्धिभिः सह ॥ इति ॥ ६६ ॥

---

# अथ सांख्यपक्षः

सर्वसिद्धान्तसंग्रहे भगवान् श्रीशङ्कराचार्यः—

सांख्यदर्शनसिद्धान्तः संक्षेपादथ कथ्यते ।
सांख्यशास्त्रं द्विधाभूतं सेश्वरं च निरीश्वरम् ॥ १ ॥
चक्रे निरीश्वरं सांख्यं कपिलोऽन्यत् पतञ्जलिः ।
कपिलो वासुदेवः स्यादनन्तः स्यात्पतञ्जलिः ॥ २ ॥
ज्ञानेन मुक्तिं कपिलो योगेनाह पतञ्जलिः ।
योगी कपिलपक्षोक्तं तत्त्वज्ञानमपेक्षते ॥ ३ ॥
श्रुतिस्मृतीतिहासेषु पुराणे भारतादिके ।
सांख्योक्तं दृश्यते स्पष्टं तथा शैवागमादिषु ॥ ४ ॥

व्यक्ताव्यक्तविवेकेन पुरुषस्यैव वेदनात् ।
दुःखत्रयनिवृत्तिः स्यादेकान्तात्यन्ततो नृणाम् ॥ ५ ॥
दुःखमाध्यात्मिकं चाधिभौतिकं चाधिदैविकम् ।
आध्यात्मिकं मनो दुःखं व्याधयः पिटकादयः ॥ ६ ॥
आधिभौतिकदुःखं स्यात् कीटादिप्राणिसंभवम् ।
वर्षातपादिसंभूतं दुःखं स्यादाधिदैविकम् ॥ ७ ॥
एकान्तात्यन्ततो दुःखं निवर्तेतात्मवेदनात् ।
उपायान्तरतो मोक्षः क्षयातिशयसंयुतः ॥ ८ ॥
न चौषधैर्न यागाद्यैः स्वर्गादिफलहेतुभिः ।
त्रैगुण्यविषयैर्मोक्षस्तत्त्वज्ञानादृते परैः ॥ ९ ॥
पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तादिकानि यः ।
वेत्ति तस्यैव विस्पष्टमात्मज्ञानं भविष्यति ॥ १० ॥
पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत् ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ ११ ॥
पञ्चविंशतितत्त्वानि पुरुषः प्रकृतिर्महान् ।
अहङ्कारश्च शब्दश्च स्पर्शरूपरसास्तथा ॥ १२ ॥
गन्धः श्रोत्रं त्वक् च चक्षुर्जिह्वा घ्राणं च वागपि ।
पाणिः पादस्तथा पायुरुपस्थश्च मनस्तथा ॥ १३ ॥
पृथिव्यापस्तथा तेजो वायुराकाशमित्यपि ।
सृष्टिप्रकारं वक्ष्यामि तत्त्वात्मकमिदं जगत् ॥ १४ ॥
सर्वं हि प्रकृतेः कार्यं नित्यैका प्रकृतिर्जडा ।
प्रकृतेस्त्रिगुणावेशादुदासीनोऽपि कर्तृवत् ॥ १५ ॥
स चेतनावत्तद्योगात्सर्गः पंग्वन्धयोगवत् ।
प्रकृतिर्गुणसाम्यं स्याद् गुणाः सत्त्वं रजस्तमः ॥ १६ ॥
सत्त्वोदये सुखं प्रीतिः शान्तिर्लज्जाङ्लाघवम् ।
क्षमा धृतिरकार्पण्यं दमो ज्ञानप्रकाशनम् ॥ १७ ॥
रजोगुणोदये लोभः सन्तापः कोपविग्रहौ ।
अभिमानो मृषावादः प्रवृत्तिर्दम्भ इत्यपि ॥ १८ ॥
तमोगुणोदये तन्द्री मोहो निद्राङ्गगौरवम् ।
आलस्यमप्रवोधश्च प्रमादश्चैवमादयः ॥ १९ ॥
प्रकृतेः स्यान्महांस्तस्मादहङ्कारस्ततोऽप्यभूत् ।
तन्मात्राख्यानि पञ्च स्युः सूक्ष्मभूतानि तानि हि ॥ २० ॥
वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ।
शब्दः स्पर्शस्तथा रूपं रसो गन्ध इतीरिताः ॥ २१ ॥
खवाय्वग्न्यम्बुपृथ्व्यः स्युः सूक्ष्मा एव न चापरे ।
पटः स्याच्छुक्लतन्तुभ्यः शुक्ल एव यथा तथा ॥ २२ ॥

त्रिगुणानुगुणं तस्मात्तत्त्वसृष्टिरपि त्रिधा ।
सत्त्वात्मकानि सृष्टानि तेभ्यो ज्ञानेन्द्रियाण्यथ ॥ २३ ॥
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमित्यत्र पञ्चकम् ।
तैः शब्दस्पर्शरूपाणि रसगन्धौ प्रवेत्त्यसौ ॥ २४ ॥
रजोगुणोद्भवानि स्युस्तेभ्यः कर्मेन्द्रियाण्यथ ।
वाक्पाणिपादसंज्ञानि पायूपस्थौ तथैव च ॥ २५ ॥
वचनादानगमनविसर्गानन्द कर्म च ।
मनोऽन्तःकरणाख्यं स्यात् ज्ञेयमेकादशेन्द्रियम् ॥ २६ ॥
तमोगुणोद्भवान्येभ्यो महाभूतानि जज्ञिरे ।
पृथिव्यापस्तथा तेजो वायुराकाश इत्यपि ॥ २७ ॥
पञ्चविंशतितत्त्वानि प्रोक्तान्येतानि वै मया ।
एतान्येव विशेषेण ज्ञातव्यानि गुरोर्मुखात् ॥ २८ ॥
आत्मानः प्रलये लीनाः प्रकृतौ सूक्ष्मदेहिनः ।
गुणकर्मवशाद् ब्रह्मस्थावरान्तस्वरूपिणः ॥ २९ ॥
प्रकृतौ सूक्ष्मरूपेण स्थितमेवाखिलं जगत् ।
अभिव्यक्तं भवत्येव नासदुत्पत्तिरिष्यते ॥ ३० ॥
असदुत्पत्तिपक्षे च शशशृङ्गादि संभवेत् ।
असत्तैलं तिलादौ चेत् सिकताभ्योऽपि तद्भवेत् ॥ ३१ ॥
जनितं जनयेच्चेति यस्तु दोषस्त्वयेरितः ।
अभिव्यक्तिमते न स्यादभिव्यंजककारणैः ॥ ३२ ॥
आत्मानो बहवः साध्या देहे देहे व्यवस्थिताः ।
एकश्चेद्युगपत्सर्वे म्रियेरन् संभवन्तु वा ॥ ३३ ॥
पश्येयुर्युगपत्सर्वे पुंस्येकस्मिन् प्रपश्यति ।
अतः स्यादात्मनानात्वमद्वैतं नोपपद्यते ॥ ३४ ॥
आत्मा ज्ञातव्य इत्यादिविधिभिः प्रतिपादितः ।
निवृत्तिरूपधर्मः स्यान्मोक्षदोऽन्यः प्रवर्तकः ॥ ३५ ॥
अग्निष्टोमादयो यज्ञाः काम्याः स्युर्विहिता अपि ।
प्रवृत्तिधर्मास्ते ज्ञेया यतः पुंसां प्रवर्तकाः ॥ ३६ ॥
धर्मेणोर्ध्वगतिः पुंसामधर्मात्स्यादधोगतिः ।
ज्ञानेनैवापवर्गः स्यादज्ञानाद्बध्यते नरः ॥ ३७ ॥
ब्रह्मार्पणतया यज्ञाः कृतास्ते मोक्षदा यदि ।
अयज्ञत्वप्रसङ्गः स्यान्मन्त्रार्थस्यान्यथाकृतेः ॥ ३८ ॥
तस्माद्यागादयो धर्माः संसारेषु प्रवर्तकाः ।
निषिद्धेभ्योऽपि कर्तव्याः पुंसां संपत्तिहेतवः ॥ ३९ ॥

इति ॥ ❀ ॥

---

# कापिलदर्शनम्

षड्दर्शनसमुच्चये श्रीहरिभद्रसूरिः—

गुणानां[1] या समावस्था सा प्रकृतिः किलोच्यते ।
प्रधानाव्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥ १ ॥

## दर्शनस्वरूपम् ।

सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः ।
सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः ॥ २ ॥

## गुणत्रयम् ।

सत्त्वं रजस्तमश्चेति ज्ञेयं तावद् गुणत्रयम् ।
प्रसादतोषदैन्यादिकार्यलिङ्गं[2] क्रमेण तत् ॥ ३ ॥

## तत्त्वानि ।

ततः[3] संजायते बुद्धिर्महानिति यकोच्यते ।
अहंकारस्ततोऽपि स्यात्तस्मात्षोडशको गणः ॥ ४ ॥

## षोडशकगणः ।

स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रं च पञ्चमम् ।
पञ्च बुद्धीन्द्रियाण्याहुस्तथा[4] कर्मेन्द्रियाणि च ॥ ५ ॥
पायूपस्थवचःपाणिपादाख्यानि मनस्तथा ।
अन्यानि पञ्चरूपाणि तन्मात्राणीति षोडश ॥ ६ ॥

## पञ्चतन्मात्रेभ्यः पञ्चभूतोत्पत्तिः ।

रूपात्तेजो रसादापो गन्धाद्भूमिः स्वरान्नभः[5] ।
स्पर्शाद्वायुस्तथैवं च पञ्चभ्यो भूतपञ्चकम् ॥ ७ ॥

---

१ प्रीत्यप्रीतिविषादात्मकानां लाघवोपष्टम्भगौरवधर्माणां सत्त्वरजस्तमसां त्रयाणामपि गुणानां या समतयाऽवस्थितिः सा किल प्रकृतिरुच्यते । २ सत्त्वगुणेन प्रसादकार्यलिङ्गं= वदननयनादिप्रसन्नता सत्त्वगुणेन स्यादित्यर्थः । आनन्दलिङ्गानि स्फूर्त्यादीनि रजोगुणेनाभिव्यज्यन्ते, एवं "हा दैव ! नष्टोऽसि वञ्चितोऽसि" इत्यादिवदनविच्छायतानेत्रसंकोचादिव्यंग्यं दैन्यं तमोगुणलिङ्गम् । आदिना आध्यात्मिकादिदुःखत्रयमाक्षिप्यते । ३ ततः=गुणत्रयाभिघातात् । यका=या बुद्धिः । ततः=बुद्धेः । "एवमेतन्नान्यथा, गौरयं नाश्वः, स्थाणुरेष नायं पुरुषः' इत्येवं निश्चयस्तेन पदार्थप्रतिपत्तिहेतुर्योऽध्यवसायः सा बुद्धिः । अहं शृणोमि, इत्यादिप्रत्ययरूपोऽहङ्कारः । तस्मात्=अहङ्कारात् । जायते इति शेषः । ४ बुद्धिप्रधानानि बुद्धिसहचराण्येव ज्ञानं जनयन्तीति कृत्वा बुद्धीन्द्रियाणि । कर्म=कार्यव्यापारस्तस्य साधनानीन्द्रियाणि कर्मेन्द्रियाणि । ५ स्वरात्= शब्दात् ।

### प्रकृतिविस्तरोपसंहारः ।

एवं चतुर्विंशतितत्त्वरूपं[1] निवेदितं सांख्यमते प्रधानम् ।
अन्यस्त्वकर्ता विगुणस्तु भोक्ता[2], तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥ ८ ॥

### तत्त्वोपसंहारः ।

पञ्चविंशतितत्त्वानि सांख्यस्यैव भवन्ति च ।
प्रधाननरयोश्चात्र वृत्तिः पङ्ग्वन्धयोरिव ॥ ९ ॥

### मोक्षप्रमाणम् ।

प्रकृतिवियोगो मोक्षः पुरुषस्यैवान्तरज्ञानात् ।
मानत्रितयं च भवेत् प्रत्यक्षं लैङ्गिकं शाब्दम् ॥ १० ॥

---

## सांख्यदर्शनम्

सर्वदर्शनसंग्रहे माधवाचार्यः—

अथ सांख्यैराख्याते परिणामवादे परिपन्थिनि जागरूके कथङ्कारं विवर्तवाद आदरणीयो भवेदेष हि तेषामाघोषः । संक्षेपेण हि सांख्यशास्त्रस्य चतस्रो विधाः सम्भाव्यन्ते ।—कश्चिदर्थः प्रकृतिरेव, कश्चिद् विकृतिरेव, कश्चिद् विकृतिः प्रकृतिश्च, कश्चिदनुभय इति ॥ १ ॥

तत्र केवला प्रकृतिः प्रधानपदेन वेदनीया मूलप्रकृतिः, । नासावन्यस्य कस्यचिद् विकृतिः । 'प्रकरोतीति प्रकृतिः' इति व्युत्पत्त्या सत्त्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात् ।

---

१ चतुर्विंशतिः तत्त्वानि रूपं यस्येति विग्रहः। पंचविंशतितमं तत्त्वमाह—अन्यस्त्विति । "अमूर्तश्चेतनो भोगी नित्यः सर्वगतोऽक्रियः । अकर्ता निर्गुणः सूक्ष्मः आत्मा कापिलदर्शने ॥" सूक्ष्मः=दुर्ज्ञेयत्वात् । २ आत्मा हि स्वं बुद्धेरव्यतिरिक्तमभिमन्यते । सुखदुःखादयश्च विषया इन्द्रियद्वारेण बुद्धौ संक्रामन्ति । बुद्धिश्चोभयमुखदर्पणाकारा । ततस्तस्यां चैतन्यशक्तिः प्रतिबिम्बते । ततः "सुख्यहं, दुःख्यहम्" इत्युपचर्यते । आह च पातञ्जले—"शुद्धोऽपि पुरुषः प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्मापि तदात्मक इव प्रतिभासते" इति । मुख्यतस्तु चिच्छक्तिर्विषयपरिच्छेदशून्या । बुद्धेरेव विषयपरिच्छेदस्वभावत्वात् । चिच्छक्तिसन्निधानाच्चाचेतनापि बुद्धिश्चेतनावतीवावभासते । वादमहार्णवोऽप्याह—"बुद्धिदर्पणसंक्रान्तमर्थप्रतिबिम्बकम् । द्वितीयदर्पणकल्पे पुरुषे ह्यधिरोहति ॥ तदेव भोक्तृत्वमस्य न तु विकारोत्पत्तिरिति । तथा चासुरिः—"विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते । प्रतिबिम्बोदयः स्वच्छो यथा चन्द्रमसोऽम्भसि ॥" विन्ध्यवासी त्वेवं भोगमाचष्टे—"पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम् । मनः करोति सान्निध्यादुपाधेः स्फटिको यथा ॥" इति । इत्येतद्व्याख्यायां मणिभद्रसूरिः ।

तदुक्तम्—

'मूलप्रकृतिरविकृतिः'—इति ।

मूलं चासौ प्रकृतिश्च मूलप्रकृतिः । महदादेः कार्यकलापस्य असौ मूलम्, न त्वस्य प्रधानस्य मूलान्तरमस्ति, अनवस्थापातात् । न च बीजाङ्कुरवद् अनवस्था दोषो न भवतीति वाच्यम्; प्रमाणाभावादिति भावः ॥ २ ॥

विकृतयश्च प्रकृतयश्च महदहङ्कारतन्मात्राणि ।

तदप्युक्तम्—

"महदाद्याः प्रकृतिविकृतयः सप्त" । इति ।

अस्यार्थः—प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः, । सप्त महदादीनि तत्त्वानि ॥ ३ ॥

तत्र अन्तःकरणादिपदवेदनीयं महत्तत्त्वम् अहङ्कारस्य प्रकृतिः, मूलप्रकृतेस्तु विकृतिः ॥ ४ ॥

एवम् अहङ्कारतत्त्वम् अभिमानापरनामधेयं महतो विकृतिः ।

प्रकृतिश्च तदेव अहङ्कारतत्त्वं तामसं सत् पञ्चतन्मात्राणां सूक्ष्माभिधानाम् । तदेव सात्त्विकं सत् प्रकृतिः-एकादशेन्द्रियाणाम्—बुद्धीन्द्रियाणां चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानां, कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यानाम्, उभयात्मकस्य मनसश्च । रजस्तु-उभयत्र क्रियोत्पादनद्वारेण कारणत्वमस्तीति न वैयर्थ्यम् ॥ ५ ॥

तदुक्तमीश्वरकृष्णेन—

"अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रपञ्चकं चैव ।
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पादपाणिपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥
उभयात्मकमत्र मनः संकल्पविकल्पकं च साधर्म्यात् ।" इति ॥ ६ ॥

केवला विकृतिस्तु—वियदादीनि पञ्चभूतानि एकादशेन्द्रियाणि च ।

तदुक्तम्—

"षोडशकस्तु विकारः"-इति ।

षोडशसंख्यावच्छिन्नो गणः षोडशको विकार एव, न प्रकृतिरित्यर्थः ।

यद्यपि पृथिव्यादयो गोघटादीनां प्रकृतिः, तथापि न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति न प्रकृतिः । तत्त्वान्तरोपादानत्वं चेह प्रकृतित्वमभिमतम् । गोघटादीनां स्थूलत्वेन्द्रियग्राह्यत्वयोः समानत्वेन तत्त्वान्तरत्वाभावः ॥ ७ ॥

---

१ ननु षोडशको विकार एवेति कथम्? पृथिव्यादीनां घटादिप्रकृतित्वादत आह—यद्यपीति । उभयेषां स्थूलत्वेन्द्रियग्राह्यता च समेति न तत्त्वान्तरतेत्यर्थः ।

तत्र शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः पूर्वपूर्वसूक्ष्मभूतसहितेभ्यः पञ्चभूतानि वियदादीनि क्रमेणैकद्वित्रिचतुःपञ्चगुणानि जायन्ते । इन्द्रियसृष्टिस्तु प्रागेवोक्ता ।

तदुक्तम्—

"प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि ॥" इति ॥ ८ ॥

अनुभयात्मकः पुरुषः । तदुक्तम्—

"न प्रकृतिर्न विकृतिः पुरुषः ॥" इति ।

पुरुषस्तु कूटस्थनित्योऽपरिणामी न कस्यचित् प्रकृतिर्नापि विकृतिः कस्यचिदित्यर्थः ॥ ९ ॥

एतत्पञ्चविंशतितत्त्वसाधकत्वेन प्रमाणत्रयमभिमतम् ।

तदप्युक्तम्—

"दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥" इति ॥ १० ॥

इह कार्यकारणभावे चतुर्धा विप्रतिपत्तिः प्रसरति—

'असतः सज्जायते' इति सौगताः संगिरन्ते, । नैयायिकादयः 'सतोऽसज्जायते' इति, वेदान्तिनः—'सतो विवर्तः कार्यजातं न वस्तु सत्' इति, सांख्याः पुनः—'सतः सज्जायते' इति ॥ ११ ॥

तत्र 'असतः सज्जायते' इति न प्रामाणिकः पक्षः, । असतो निरुपाख्यस्य शशविषाणवत् कारणत्वानुपपत्तेः, तुच्छातुच्छयोस्तादात्म्यानुपपत्तेश्च ॥

नापि 'सतोऽसज्जायते' इति साम्प्रतम् । कारकव्यापारात्प्रागसतः शशविषाणवत् सत्तासंबन्धलक्षणोत्पत्त्यनुपपत्तेः । न हि नीलं निपुणतमेनापि पीतं कर्तुं पार्यते ॥

ननु सत्त्वासत्त्वे घटस्य धर्माविति चेत् । तदचारु, । 'असति धर्मिणि तद्धर्म' इति व्यपदेशानुपपत्त्या धर्मिणः सत्त्वापत्तेः ॥

तस्मात् कारकव्यापारात् प्रागपि कार्यं सदेव । सतश्चाभिव्यक्तिरुपपद्यते,—। यथा— पीडनेन तिलेषु तैलस्य, दोहेन सौरभेयीषु पयसः ।

असतः कारणे किमपि निदर्शनं न दृश्यते ॥ १२ ॥

किं च—

कार्येण कारणं संबद्धं तज्जनकम् ? असंबद्धं वा ? ।

प्रथमे कार्यस्य सत्त्वम् आयातम्, "सतोरेव संबन्धः" इति नियमात् । चरमे सर्वं कार्यजातं सर्वस्माज्जायेत, असंबद्धत्वाविशेषात् ।

तदाख्यायि सांख्याचार्यैः—

"असत्त्वान्नास्ति संबन्धः[१] कारणैः सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥" इति ॥ १३ ॥

अथैवम् अनुष्ठेयसंबद्धमपि तत् तदेव जनयति, यत्र यच्छक्तम् । शक्तिश्च कार्य-दर्शनोन्नेयेति । तन्न संगच्छते । 'तिलेषु तैलजननशक्तिः' इत्यत्र तैलस्यासत्त्वे संब-द्धत्वासंबद्धत्वविकल्पेन 'तच्छक्तिः' इति निरूपणायोगात् । कार्यकारणयोरभेदाच्च । कार्यस्य सत्त्वं कारणात् पृथक् न भवति । 'पटस्तन्तुभ्यो न भिद्यते, तद्धर्मत्वात्, न यदेवं न तदेवम्, *यथा* गौरश्वः, तद्धर्मश्च पटस्तस्मान्नार्थान्तरम् ॥ १४ ॥

तर्हि प्रत्येकं त एव प्रावरणकार्यं कुर्युरिति चेत् । न, संस्थानभेदेनाविर्भूतपटभावानां प्रावरणार्थक्रियाकारित्वोपपत्तेः । यथा हि—कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति चाविर्भवन्ति, एवं कारणस्य तन्त्वादेः पटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते, निविशमानास्तिरोभवन्तो विनश्यन्ती-त्युच्यन्ते । न पुनरसतामुत्पत्तिः, सतां वा विनाशः ।

यथोक्तं भगवद्गीतायाम्—

"नासतो विद्यते भावो नाभावो विद्यते सतः" । इति ॥ १५ ॥

ततश्च कार्यानुमानात् तत्प्रधानसिद्धिः ।

तदुक्तम्—

असदकरणा[२]दुपादानग्रहणात् सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ इति ॥ १६ ॥

---

१ *अस्यार्थः*—कार्यस्य उत्पत्तेः प्रागसत्त्वे सत्त्वसङ्गिभिः=सत्तावद्भिः । यद्वा वस्त्वा-श्रयिभिः वस्त्वारम्भकैरिति यावत् । कारणैः=उपादानकारणैः सह कार्यस्य संबन्धो नास्ति, सदसतोः संबन्धानुपपत्तेः । कार्यस्य कारणैः सह संबन्धाभावे का क्षतिः, असंबद्धस्यैवो-त्पत्तिर्भवेदित्यत आह—असंबद्धस्य चेति । असंबद्धस्य च उत्पत्तिमिच्छतो भवतो व्यव-स्थितिः='एतस्मात्कारणादेतदेव कार्यं जायते' इति व्यवस्था न स्यात्, सर्वस्मात् सर्वकार्यो-त्पत्तिप्रसङ्गादिति ।

२ *अस्यार्थः*—कार्यं कारणव्यापारात्प्रागपि सदेव, नीलरूपस्य पीतभावेनेवासतः सत्त्वेन कर्तुमशक्यत्वात् । उपादानग्रहणाच्च प्रागपि सदेव कार्यम् । उपादानानि=कार-णानि तेषां कार्येण ग्रहणात् कारणैः कार्यस्य संबन्धादिति यावत् । कारणसंबद्धं हि कार्यं भवद् भवेत् । कारणासंबद्धमेव कार्यमुत्पद्यतामिति चेत् । न, सर्वसंभवाभावात् । असंबद्धस्य कार्यत्वे हि असंबद्धत्वाविशेषात् सर्वं कार्यं सर्वस्मात् संभवेत्, न चैवदस्तीति । असंबद्धमपि कारणं तदेव करोति यत्र शक्तमिति चेत् । न, शक्तस्य शक्यकरणात् । शक्तमपि हि कार्यं शक्यं करोति नाशक्यम्, अव्यवस्थातादवस्थ्यात् । शक्यं करोति चेत्, कथमसति शक्तिविषयतारूपा शक्यतेति । कार्यस्य कारणात्मत्वादपि कार्यं सदेव । तस्य कारणात्मत्वं च 'घटशरावादिकं पूर्वाह्णे मृत्कूट एवासीत्' इत्यनुभवेन गुरुत्वद्वैगुण्यानुपलम्भादियुक्त्या चेति । ( परिमलकाराः )

नापि सतो ब्रह्मतत्त्वस्य विवर्तः प्रपञ्चः । बाधानुपलम्भात्, अधिष्ठानारोप्ययोश्चिज्जडयोः कलधौतरूप्यादिवत् सारूप्याभावेनारोपासंभवाच्च ।

तस्मात् सुखदुःखमोहात्मकस्य तथाविधकारणमवधारणीयम् । तथा च प्रयोगः—"विमतं भावजातं सुखदुःखमोहात्मककारणकम्, तदन्वितत्वात्, यद् येन अन्वीयते तत् तत्कारणकम्, यथा रुचकादिकं सुवर्णान्वितं सुवर्णकारणकम्, तथा चेदं तस्मात्तथा" इति ॥ १७ ॥

तत्र जगत्कारणे येयं सुखात्मकता तत् सत्त्वम्, या दुःखात्मकता तद् रजः, या च मोहात्मकता तत् तमः, इति त्रिगुणात्मककारणसिद्धिः । तथाहि—प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा—मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखम् आविरस्ति, तं प्रति सत्त्वगुणप्रादुर्भावात् । तत्सपत्नीनां दुःखम्, ताः प्रति रजोगुणप्रादुर्भावात् । ताम् अलभमानस्य चैत्रस्य मोहो भवति, तं प्रति तमोगुणसमुद्भवात् । एवम् अन्यदपि घटादिकं लभ्यमानं सुखं करोति, परैरपि ह्रियमाणं दुःखाकरोति, उदासीनस्य उपेक्षाविषयत्वेन उपतिष्ठते । उपेक्षाविषयत्वं नाम मोहः । 'मुह वैचित्त्ये' इत्यस्माद्धातोर्मोहशब्दनिष्पत्तेः । उपेक्षणीयेषु चित्तवृत्त्यनुदयात् ॥ १८ ॥

तस्मात् सर्वं भावजातं सुखदुःखमोहात्मकं त्रिगुणप्रधानकारणकम् अवगम्यते । तथा च श्वेताश्वतरोपनिषदि श्रूयते—

"अजामेकां लोहितशुक्लकृष्णां, बह्वीः प्रजा जनयन्तीं सरूपाः ।

अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति ।

अत्र लोहितशुक्लकृष्णशब्दा रञ्जकत्वप्रकाशकत्वावरकत्वसाधर्म्यात् रजःसत्त्वतमोगुणत्वप्रतिपादनपराः ॥ १९ ॥

ननु अचेतनं प्रधानं चेतनानधिष्ठितं महदादिकार्ये न व्याप्रियते । अतः केनचित् चेतनेन अधिष्ठात्रा भवितव्यम् । तथा च सर्वार्थदर्शी परमेश्वरः स्वीकर्तव्यः स्यादिति चेत् । तदसङ्गतम् । अचेतनस्यापि प्रधानस्य प्रयोजनवशेन प्रवृत्त्युपपत्तेः । दृष्टं च अचेतनं चेतनानधिष्ठितं पुरुषार्थाय प्रवर्तमानम् । यथा—वत्सवृद्ध्यर्थम् अचेतनं क्षीरं प्रवर्तते, यथा च जलम् अचेतनं लोकोपकाराय प्रवर्तते, तथा प्रकृतिरचेतनापि पुरुषविमोक्षाय प्रवर्त्स्यति ।

तदुक्तम्—

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।

पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥" इति ॥ २० ॥

यस्तु "परमेश्वरः करुणया प्रवर्तकः" इति परमेश्वरास्तित्ववादिनां डिण्डिमः, स प्रायेण गतः, विकल्पानुपपत्तेः । स किं सृष्टेः प्राक् प्रवर्तते? सृष्ट्युत्तरकाले वा?

आद्ये शरीराद्यभावेन दुःखानुत्पत्तौ जीवानां दुःखप्रहाणेच्छानुपपत्तिः । द्वितीये परस्पराश्रयप्रसङ्गः—करुणया सृष्टिः, सृष्ट्या च कारुण्यमिति ॥ २१ ॥

तस्मात् अचेतनस्यापि चेतनानधिष्ठितस्य प्रधानस्य महदादिरूपेण परिणामः पुरुषार्थप्रयुक्तः प्रधानपुरुषसंयोगनिमित्तः ॥ २२ ॥

यथा निर्व्यापारस्यापि अयस्कान्तस्य सन्निधानेन लोहस्य व्यापारः, तथा निर्व्यापारस्य

---

१ अत्रेदं हार्दम्—साधारणरीत्या वत्सपोषणार्थम् अचेतनदुग्धस्य यथा प्रवृत्तिः पुरुषस्य भोगापवर्गार्थं तथा प्रकृतिप्रवृत्तिरिति स्वीकारेऽपि समष्टिव्यष्टिप्रकृतौ यावन्न चेतनपुरुषस्य जीवस्य वाऽधिष्ठानं भवति, तावन्न जडायां प्रकृतौ परिणामकारिणी चेतनशक्तिरेव कथमप्यागता भवितुमर्हति, नापि प्रकृतिरेव परिणामद्वारा सृष्टिविस्तारं विधातुं पारयतीति "तत्सन्निधानादधिष्ठातृत्वं मणिवत्", "विशेषकार्येष्वपि जीवानाम्" इति सूत्रयामास । यथाऽयस्कान्तमणिसान्निध्याल्लोहे चेतनाशक्तिरागता भवति, तथैव संख्ययाऽनन्तस्य चेतनामयस्य पुरुषस्याधिष्ठानात् समष्टिप्रकृतिः कार्यं करोति, प्रतिपिण्डम् औपचारिकबन्धनबद्धजीवभावापन्नपुरुषाधिष्ठानाच्च व्यष्टिप्रकृतिः कार्यं विदधाति । प्रकृतावधिष्ठितः पुरुषश्च कूटस्थचेतनः स च जीवदेहावच्छेदेनेश्वरस्यैव सत्तारूपः । अनेन परमात्मनैव जीवरूपेऽनुप्रवेशं विधाय नाम्नो रूपस्य च विकार उदपादीत्यर्थकया "अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्" इति च्छान्दोग्यश्रुत्या 'सा चेतनसत्ता ईश्वरस्यैव भावान्तरमात्रम्' इति स्पष्टमेव प्रतिपाद्यते । तथा च समष्टिप्रकृत्या व्यष्टिप्रकृत्या चेति प्रकृतिद्वयेनैव सहेश्वरसंबन्धः सांख्येन साधु प्रतिपादितो वरीवर्तीति निर्मूल एवायं प्रवादो निरीश्वरं कापिलं सांख्यमिति । मीमांसादर्शने यथा 'विभुतया अनन्तसत्ता' ईश्वरस्य प्रतिपादिता वर्तते, सांख्यदर्शनेऽपि तथैव संख्ययाऽनन्तसत्तैव तस्य वर्णिता वर्वत इति नैव तदभावगन्धोऽपीति सांख्यवेदान्तयोरेक एव राद्धान्तः । इयांस्तु परं विशेषः—वेदान्ते ईश्वरेच्छया प्रकृतिपरिणामः सृष्टिक्रिया चेति स्वीकृतम्, सांख्ये पुनः कूटस्थचैतन्याधिष्ठानमात्रेण प्रकृतिपरिणामोऽङ्गीकृत इति । अधिष्ठानमात्रेण प्राकृतिकपरिणामश्च स्मृतिभिरपि समनूद्यते—

"निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते ।
सत्तामात्रेण देवेन तथा चेयं जगज्जनिः ॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः ॥" इति ।

इदमेव सांख्ये पुरुषरूपेण प्रकृतावीश्वरस्याधिष्ठानम् । 'ईश्वरासिद्धेः' इति सूत्रस्यापि लौकिकप्रत्यक्षेण लौकिकविचारेण चेश्वरः साधयितुं न शक्यते, इत्येवार्थः, यत ईश्वरो मुक्तो वा बद्धो वेति न वक्तुं शक्यते, मुक्तत्वे तत्राभिमानाभावात् सृष्टिकर्तृत्वानुपपत्तेः, बद्धत्वे च तत्र सृष्टिकर्तृत्वशक्तेरेवासंभवात्, तस्माल्लौकिकविचारेण नैव तत्सत्ता प्रामाणिकी भवितुमर्हति, अलौकिकातीन्द्रियप्रत्यक्षत एव तत्प्रत्यक्षं योगिप्रभृतीनामिति सारमिति मात्सर्यमुत्सार्य विचार्यमार्यैरित्यलम् ॥

पुरुषस्य सन्निधानेन प्रधानव्यापारो युज्यते । प्रकृतिपुरुषसंवन्धश्च पङ्ग्वन्धवत् परस्परापेक्षानिवन्धनः ॥ २३ ॥

प्रकृतिर्हि भोग्यतया भोक्तारं पुरुषमपेक्षते । पुरुषोऽपि भेदाग्रहाद् बुद्धिच्छायापत्त्या तद्गतं दुःखत्रयं वारयमाणः कैवल्यमपेक्षते । तत् प्रकृतिपुरुषविवेकनिवन्धनं न च तदन्तरेण युक्तमिति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । यथा खलु कौचित् पङ्ग्वन्धौ पथि सार्थेन गच्छन्तौ दैवकृतादुपप्लवात् परित्यक्तसार्थौ मन्दमन्दमितस्ततः परिभ्रमन्तौ भयाकुलौ दैववशात् संयोगमुपगच्छेताम् । तत्र चान्धेन पङ्गुः स्कन्धमारोपितः, ततः पङ्गुदर्शितेन मार्गेणान्धः समीहितं स्थानं प्राप्नोति । पङ्गुरपि स्कन्धाधिरूढः । तथा परस्परापेक्षप्रधानपुरुषनिवन्धनः सर्गः ॥

यथोक्तम्—

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संवन्धस्तत्कृतः सर्गः ॥" इति ॥ २४ ॥

ननु पुरुषार्थनिवन्धना भवतु प्रकृतेः प्रवृत्तिः, निवृत्तिस्तु कथमुपपद्यत इति चेत् । उच्यते—यथा भर्त्रा दृष्टदोषा स्वैरिणी भर्तारं पुनर्नोपैति, यथा वा कृतप्रयोजना नर्तकी निवर्तते, तथा प्रकृतिरपि ॥

यथोक्तम्—

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ इति ॥ २५ ॥

---

## दर्शनानां पुरुषार्थानुकूलत्वम्

दृश्यते=साक्षात् क्रियते परमात्मादिसंज्ञासंज्ञितः परमपुरुषः येन तद् दर्शनम् । सांख्यादिमते तु–दृश्यते=भेदेन उपलभ्यते सत्त्वं पुरुषश्च येन तद्दर्शनम् । तथाहि—जागतिकानां पार्थिवादिवस्तूनां स्वरूपमावेद्य तत्तद्वस्तुभिन्नत्वेन च परमात्मादिपदार्थविशेषविनिवेदनेन दर्शनं परमात्मादिज्ञाने अनुकूलतामापद्यते । परिस्फुरति च तत एव ज्ञानविशेषेण मोक्षाधिगमो जीवनिवहानाम् । सांख्यादौ च प्रकृतेः स्वरूपं पुरुषस्य च नित्यशुद्धवुद्धमुक्तत्वादिकं स्वं भावं प्रतिपाद्य तत्तद्भेदकधर्मेण भेदमुपलभ्य मोक्षलाभी, स एव च मोक्षः पुरुषार्थो दर्शनसम्मतः । यथा हि साधारणेन रोगादिना दुर्गतः पार्थिवौषधादिव्यवहारेण तमपनेतुकामः कंचित् कष्टविशेषमारचयति, निवर्तते च तेनैव कष्टकृतेन भेषजेन कठोरोऽपि रोगः, तथैव संसारज्वालाप्रज्वलितमानसः मुहुर्मुहुः पार्थिवसारवोधविदूनः सुमहद् वैराग्यमापन्नः कालेन दुःखविद्रावके शास्त्रविधौ प्रवर्तते । प्रवृत्ताश्च तत्र केचित् प्रतिपक्षपक्षनिराकरणपाटवेनैव चरितार्थम्मन्याः धन्यतामात्मनां प्रख्यापयन्तः सन्त इव अभिष्टूयन्ते जगति महाजनैरपि सारवोधसंवलितैः । केचिच्च वस्तुतः एव जगति कामपि घोरामसारतामभिगच्छन्तः शान्तरससंपृक्तान्तःकरणाः बाह्यकरणकृत्यविच्युताः च्युताः संसारासङ्गात् पुरुषार्थस्य

प्रधानसाधनं दर्शनशास्त्रमेवाप्तवाक्यतः समवधार्य तत्र प्रवर्तन्ते । इतरविषयेभ्यः सत्त्वपुरुषयोः परमात्मनो ब्रह्माभिधानस्य भेदमुपलभमानाः सुतरामात्मनिर्वृतिमुपगच्छन्ति च । परमपुरुषार्थश्च मतभेदेन परमात्मसाक्षात्कारो ब्रह्मसाक्षात्कारो वा सत्त्वपुरुषान्यताप्रत्ययात् पुरुषस्य चैतन्यात्मकस्य स्वरूपावस्थानं त्रिविधदुःखात्यन्तनिवृत्तिप्रयोज्यम् इत्यादिकम् । यथा च यत्किंचिद्दर्शनानुशीलनेन एव यथाक्रमानुशीलितप्राणायामादि प्रकारपरिज्ञानादात्मशुद्धिसमुदयः ततो मोक्ष इत्येवं दर्शनस्य परम्परया मोक्षानुकूलत्वमिति । न्यायशास्त्रस्य अनुमानादिबहुविषयप्रतिपादकतया अनुमानादिना च परमात्मविज्ञानोपयोगित्वम् । अनुमानं च—"क्षितिः सकर्तृका, कार्यत्वात्" इत्यादिना क्षितिधर्मिक–सकर्तृकत्वसिध्यात्मकम् । तेन च अनुमानेन कस्यचित् कर्तुः परमात्मरूपस्य सिद्धिरिति अन्यस्य कस्यापि पार्थिवकर्तुः शैलादिकुञ्जतो जातान् वृक्षादीन् प्रति कर्तृत्वाभावात् कार्यद्रव्याणां तेषां कर्तृव्यतिरेकेण च जननासंभवात् इति । सांख्यदर्शनादौ तु प्रकृत्यादिस्वरूपप्रतिपादनेन पुरुषस्वरूपप्रतिपादनेन च क्रमशः भेदेन द्रव्योपलम्भात् सत्त्वं पुरुषं च भेदेनोपलभन्ते । तेन च उपलब्धभेदेन आध्यात्मिकाधिभौतिकाधिदैविकदुःखानामत्यन्तनिवृत्तिः दुःखप्रागभावासमानाधिकरणदुःखध्वंसरूपा । तथा च साधारणकारणतः साधारणदुःखानां निवृत्तेः परं पुनरपि दुःखसमुत्पादो दृष्टः । तत एव न तादृशदुःखध्वंसः दुःखप्रागभावासमानाधिकरणः । किं तु दुःखप्रागभावसमानाधिकरण एव । अत एव न साधारणदुःखनिवृत्तित्वविरहात् मोक्षपदवाच्यत्वम् । शास्त्रानुशीलनस्य निष्प्रयोजनकत्वं च । पातञ्जलदर्शने सांख्यमतेन विशेषतो नास्ति प्रभेदः सृष्टिवादे सांख्यमतेन, सर्वथा सम्यक् परमेश्वरस्य प्रकृतिपुरुषातिरिक्तस्य नित्यपदार्थान्तरस्य स्वीकार एव तन्मते विशेषः । तथा च सांख्याः—"ईश्वरासिद्धेः प्रमाणाभावात्" इति । पातञ्जलसूत्रे च—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति । तस्यैव इच्छया प्रकृतिपुरुषयोः संयोगः, तेनैव च जगत्प्रवृत्तिरिति । तत्र च पातञ्जले योगविधीनां सुतरां निर्देशः । सांख्यमतानुयायिनोऽपि पातञ्जलमतानुसारेण योगविधिष्ववृत्ता न शक्नुवन्ति परमपुरुषार्थं लब्धुं, नापि पातञ्जलमतानुयायिनः शक्नुवन्ति सृष्टितत्त्वं सविशेषमधिगन्तुमिति परस्परमपेक्ष्यापेक्षिभावः । तथा च पातञ्जले प्रथमत एव "योगश्चित्तवृत्तिनिरोधः" इत्यादियोगविधिरारब्धः । तेन चारब्धेन योगोपदेशेन योगप्रकारमधिगच्छन्तः अन्तःकरणशुद्धिमापादयन्तः शुद्धबुद्धमुक्तस्वभावतामात्मनः समुद्भासयन्ति, न तु केवलं सृष्टितत्त्वनित्यानित्यत्वतत्त्वविनिवेदककपिलमतानुशीलनेनेति । मीमांसकादयः अपि परमापूर्वसंपादकयागादिविधिमारचयन्तः जीवाः क्रमेण ब्रह्मज्ञानोपयोगितामात्मसु

---

१ अत्र यद् वक्तव्यं प्रागेव तदुक्तम् । २ क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः । पुंविशेषो भवेदीशो जीववत्सोऽप्यसङ्गचित् ॥ ( पं० द० चि० श्लो० ५ ) तत्र क्लेशाः= अविद्यादयः पंच, कर्माणि="कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" इति सूत्रितानि, सति मूले तद्विपाका जात्यायुर्भोगा इत्युक्ताः कर्मविपाकाः=फलविशेषाः, तदाशयाः= तेषां संस्कारास्तैः क्लेशादिभिरसंस्पृष्टः पुरुषविशेष ईश्वरो भवति सोऽपि जीववदसङ्गश्चिद्रूपश्चेत्यर्थः, इत्येतद्व्याख्यायां रामकृष्णः ।

निर्वाहयन्ति । मीमांसादर्शनं हि पूर्वमीमांसावादेन, वेदान्तदर्शनं च ब्रह्ममात्रप्रमाणभूतम् उत्तरमीमांसावादेन लोके व्यवह्रियते । तत्र कारणमिदमेव यागादिकर्मणा अपूर्वं जातं सत् वेदान्तदर्शनोक्तं ब्रह्मज्ञानमनुकूलयति । अत एव परम्परया मीमांसादीनामपि दृष्टमनुकूलत्वं परमपुरुषार्थं प्रति । वैशेषिकमतसिद्धपदार्थस्वीकारिणश्च नैयायिका इति वर्तते द्वे द्वे दर्शने अधिकृत्य परमपुरुषार्थसाधनेषु उपयोगित्वं सामञ्जस्यं च मतवादानाम् । किं बहुना—सर्वेषामेव दर्शनानां दुःखवादेनैव प्रवृत्तिः, नास्ति च तथाविधं किमपि दर्शनं यस्य मोक्षो न पुरुषार्थः, अत एव दृष्टं सर्वेषामेव दर्शनानां मोक्षोपयोगित्वं नामेति दिक् ॥ ७ ॥

---

## क्षीणे पुण्ये मर्त्यलोकं विशन्ति

भुवनेषु शरीरिणां किमपि कर्मजन्यमदृष्टं समुपतिष्ठते आत्मसु । तदेवादृष्टं द्वेधा विभक्तं शास्त्रकारैर्धर्माधर्मभेदेन[1] परिणामे सुखदुःखरूपं फलद्वयं निर्वर्तयति । तौ च धर्माधर्मौ कर्मणा एव जायेते । तथा च सत्कर्मणा धर्मः असत्कर्मणा च अधर्मः समुत्पद्यते आत्मनि । अत एव नैयायिका धर्माधर्मयोरात्मगुणत्वं व्याचक्षते । अपरेऽपि दार्शनिकाः अपूर्वाद्याख्यया तावेव प्रख्यापयन्तः आत्मादिवृत्तितामनयोः स्वीकुर्वन्ति । तेनैव च आत्मवृत्तिविशेषगुणेन प्राक्तनकर्मकृतेन स्वर्गनरकरूपयोः फलयोरन्यतरत् समुपलभन्ते जीवाः । सत्कर्माणि धर्मोपपादकानि बहुविधानि देवपूजादीनि । तथा च प्रथमतस्तावदिदं मुख्यं यत् स्वीयसंप्रदायशुद्धस्य आचारस्य परिरक्षणं नाम साकल्येन निपुणा हि अस्माकं धर्मादिप्रस्तावप्रणेतारः पण्डितमुख्याः समुपलक्ष्य संप्रदायशुद्धव्यवहारप्रकारान् यथा यथा हितकरतामेव व्रजन्ति, तथैव तांस्तानुपनिबध्नन्तः जागतिकान् साम्प्रदायिकान् परिचालयन्ति । येन येन भोज्येन अस्माकं शरीरधातवः सुशृङ्खलतामुपगताः शारीरिकं बलादिकं प्रति उपयुज्यन्ते किंचिद्विकारमनाप्नुवन्तो देहाः यथायथं धर्मविधानं प्रति अनुकूलाः सर्वेषामेव उपकारकविधया इष्टसाधनताज्ञानविषयीभूताः प्रवृत्तिविषया भवन्ति । शरीरस्य अनिष्टसंपाते तत्प्रयोज्यस्य परमार्थसाधनानुकूलधर्मस्य एव व्याघातं विवेचयन्तः तत्परिहाराय कति नाम नियमान् प्रवर्तयन्ति । स्वास्थ्यतत्त्वादिषु नितरामभिज्ञाः सुयोग्ये पदे सुयोग्यमेव व्यवहारजातं निबध्नन्ति । तेनैव च सुव्यवहृतेन नियमजातेन धर्मस्य प्रधानसाधनी-

---

१ तथा च शास्त्रम्—"धर्माधर्मावदृष्टं स्यात् धर्मः स्वर्गादिसाधनम् । अधर्मो नरकायैव" इत्यादि । २ "स्वस्थलक्षणं सुश्रुते—"समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥" क्रिया अत्र कर्म, तेन समक्रियः—शरीरानुरूपकर्मा । तद्रक्षणविधिश्चेत्थमुपदिष्टो वैद्यके—"दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम् । आचरन् पुरुषः स्वस्थः सदा तिष्ठति नान्यथा ॥" प्रत्यूषकाले सूर्योदयात् प्रागेव शयनं विहाय हस्तपादादिकं प्रक्षाल्य सन्ध्यावन्दनादि प्रातः कृत्यं च समाप्य कियन्तं कालं विमलानिलसेवनं कर्तव्यम् यत्र देशे विशुद्धसमीरणः संचरति, तस्मिन् उषसि सायं च

भूतं शरीरं परिपाल्य परत्र कांचिदसीमां सुखसंपदमभिवन्दन्ते सुनिश्चितम् । तथा च श्रूयते—"शरीरमाद्यं खलु धर्मसाधनम्" । तथा हि—तपस्यायां सुकठोरायां

---

संचरतां जनानाम् आरोग्यं नूनमेव उपचीयते । किंवहुना, एकेनैव प्रभातपर्यटनेन वहवश्चिररोगिणोऽपि निरामयत्वं प्रापुः । अतः सुस्थैरसुस्थैर्वा प्रभातसंचरणं नोपेक्षणीयम् । तत्र चैवमुक्तम्—

"प्रत्यूपकाले परिहृत्य शय्यां परिभ्रमन् क्षिप्रपदं समन्तात् ।
करोति यः शुद्धसमीरसेवां विवर्द्धते स्वास्थ्यमतीव तस्य ॥"

व्यायामोऽपि शरीरस्वास्थ्यस्य परो हेतुः । अङ्गप्रत्यङ्गादीनि येन सम्यक् परिचाल्यन्ते स एव व्यायामः । यथारीति यथाशक्ति च व्यायामेन देहः स्थैर्यमापद्यते, हृष्टपुष्टो वलिष्ठश्च जायते । न केवलं व्यायामो देहोन्नतिं विदधाति चेतसोऽपि प्रफुल्लतां जनयति । यतः कायमनसोर्नित्यः संवन्धो विद्यते । प्रातः सायं च शुचौ विविक्ते सुप्रशस्ते च स्थाने मुक्तवायौ संवृतगात्रेण क्षिप्रपदं भ्रमणमेव व्यायामेषु श्रेष्ठं निरापच्च । शेषेषु च मुद्गरभजनं नद्यादौ संतरणं लौहदण्डसंचालनम् अश्वारोहणम् इत्यादीनि प्रशस्तानि । तत्रोक्तम्—

"लाघवं कर्मसामर्थ्यं विभक्तघनगात्रता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥"

नातिव्यायामः कर्तव्यः । नियमितव्यायामेन शरीरस्य यथैवोपकारो भवति तदातिशय्येन तथैवास्यापकारो जायते । तदा खलु शरीरात् स्तोकं स्तोकं स्वेदबिन्दवो निःसरन्ति श्वासप्रश्वासादिकं दीर्घतरं भवति क्लान्तिश्च काचित् समुपजायते, तदैव तस्माद्विरमेत् । यथोक्तम्—

"अतिव्यायामतः कासो ज्वरश्छर्दिः श्रमः क्लमः ।
तृष्णा क्षयः प्रतमको रक्तपित्तं च जायते ॥"

भोजनसमये भक्ष्यवस्तूनां मध्ये लघुपाकवस्तूनि भुञ्जीत बुभुक्षां विना लोभात् अनुरोधाद्वा न किंचिद् भक्षयेत् । सुश्रुते—व्याधिमिन्द्रियदौर्बल्यं मरणं चाधिगच्छति । विरुद्धरसवीर्यादीन् भुञ्जानोऽनात्मवान्नरः ॥ शतपथब्राह्मणे—"यदु ह वा आत्मसंमितमन्नं तदवति, तन्न हिनस्ति, यद् भूयो हिनस्ति तत्, यत् कनीयो न तदवति । सुश्रुतेऽपि—"हीनमात्रमसन्तोषं करोति च वलक्षयम् । आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम् ॥ किं वहुना, "वहूनामेव रोगाणामतिभोजनमाकरः । तस्मादारोग्यलिप्सुस्तद् यत्नतः परिवर्जयेत् ॥" निशायाः प्रथमे भागे शयीत । पञ्चदशदण्डव्यापिनी निद्रा हि स्वास्थ्यपरिरक्षणाय पर्याप्ता । दिवा निद्रा तु न शस्यते । यथोक्तम्—"अत्यम्बुपानाद्विषमाशनाच्च संधारणान्मूत्रपुरीषयोश्च । दिवाशयाज्जागरणाच्च रात्रौ षड्भिः प्रकारैः प्रविशन्ति रोगाः ॥" माधवनिदाने—"सर्वेषामेव रोगाणां निदानं कुपिता मलाः । तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥" अनियमिताचरणेन यद्यपि सद्य एव विकारो नोपलभ्यते, तथापि तत् परिहरणीयमेव । कालान्तरेऽनिष्टविधायकं यतस्तद् भवति । तथा चोक्तम्—"उप्तमेव यथा वीजमुत्पादयति नाङ्कुरम् । अपचारोऽपि रोगाय तथा सद्यो न कल्पते ॥" इत्यन्यत्र विस्तरः ।

महदेव शारीरं कष्टं भवति। पञ्चतपाद्युपभोगेन सर्वथा अव्यवस्थितशरीरधातुकस्य कदाचित् सुमहान् रोगोऽपि वा समुपगतः प्रतिहन्यात् कष्टसाध्यं तपः सञ्चयम्। तेन च तज्जन्यपुण्याद्यनुपगमेन भावि मुख्यं फलं सुखभोगो मुक्तिरूपपरमपुरुषार्थो वा विघटितः पुरुषचेष्टावैफल्यं संजनयेदिति। प्राणायामादिवहुलकर्मवन्धः सुस्थशरीरस्य एव साध्यः न तु असुस्थशरीरस्य। तथा च दृष्टं वहुशः केषांचित् नवीनतपसामाचारव्यत्ययेन समाश्रितपुण्यमार्गात् पतनम्। असदाचारतया क्षीणतेजस्कस्य राजयक्ष्मादिकठोररोगाद्युपगमेन जीवनादपि विच्यवो नाम। अत एव तत्तद्विचारेण पूर्वतनमुनीनां जगन्नियामकतया धर्मविधेरविचलितभावपरिरक्षणैकव्रततया स्वास्थ्यादिकं सुवहु विचार्य शरीरोपयोगिव्यवहारनियमं प्रति तथानुरागः, समीहितं च तत्तथैव इति। तस्य च आचारादिक्रियाकलापेन जातस्य धर्मस्य असत्क्रियाप्रचयेन च समुत्पन्नस्य अधर्मस्य अस्ति कश्चित् कालनिर्देशः। यथा हि कर्मभृतिविनिमयेन कर्मचारिणः केऽपि कंचन निर्दिष्टमेव कालमास्थाय कर्म कुर्वन्ति नाधिकमल्पं वा कालं कर्मव्यापारेण वर्तन्ते तन्मात्रं च कालं प्रभुजनस्य अधीनतामाश्रित्य स्वेच्छया न किमपि कर्म संपादयितुमीशते, संतिष्ठन्ते कर्मकालावसानमपेक्षमाणाः, तथैव धर्माधर्मफलभोगिनः केऽपि यावत्कालं धर्मस्य अधर्मस्य वा उपभोगो योग्यः तावन्तमेव कालं तत्फलमुपभुज्य पर्यवसाने पुनः कर्मानुवन्धेन यथापूर्वमवतिष्ठन्ते। तथा हि—कति नाम इन्द्रपदमध्यासीना अदृश्यन्त ये नानाविलासपरिभोगेन तृणमयमिव जगन्मन्यन्ते दुःखलेशमपि न स्पृशन्ति अविरतमेव देवैरभ्यर्थ्यमानचरणारविन्दाः वृन्दारकाभिनन्दनरूपं आत्मनो महान्तं प्रकर्षमनुभवन्तः सार्थकं जीवनमुत्प्रेक्षन्ते संवीक्षन्ते च सर्वमेव जगदिदं सुखपीयूषप्रवाहपरिषिक्तं अभिव्यक्तसत्त्वसारमिव भूयसा पुलोमजावदनकमलमधुपानमनुपममेव कर्म समुपगच्छन्तः जीवनभारं भारतया स्मर्तुमपि नावकाशमासीदन्ति। विलुप्यते अवसादस्य लेशोऽपि। विद्याधरजनस्तुतिगीतैरभिनन्दिताः जहति प्रभातनिद्राम्। संगीतसहचरितैः किन्नरीजनचामरव्यजनकर्मभिः सुमधुरतौर्यत्रिकचातुर्यसाहचर्येण सर्वदैवानन्दसन्दोहसमभिनन्दितचित्ताः परितः प्रकृष्यन्ते साधारणजनकाम्यगुणा एव। त एव पुनः काले तं अनन्तसुखसन्तानं अञ्जसा परिवर्ज्य निराकाङ्क्षीकृता इव अनायासलब्धेषु सुखासंपर्केषु सव्यथीकृताः कठोरदशाविपर्यासवार्तया तस्मादेव स्वर्गात् कर्मक्षयेण परिभ्रंश्यन्ते। कदाचिदसुरा अपि इन्द्रपदवीमुपगताः परिभ्रष्टाः। कदाचिच्च इतरेऽपि कर्मविशेषैर्लोकविशेषमुपाश्रिताः कालेन ततस्ततः परिच्युताः। सुखं दुःखं च क्रमेण कर्मवन्धानुसारेण संजायेते। नास्ति जगति केवलं सुखं दुःखं वा। यतः सांसारिकेषु केवलं सुकर्म दुष्कर्म वा न। प्रायो दृश्यते कुत्रचित् अंशे सुकर्म कुत्रचिच्च अंशे दुष्कर्म इति। तन्नियामकं च शासनं यथा—"चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च" इति। सावधिकानां पुण्यानां क्षये तत्फलीभूतस्वर्गादिपरमोत्तमस्थानेभ्यो विच्यवः। पापानां क्षये च तत्फलीभूतनरकादिनिकृष्टप्रदेशतः प्रस्थानम्। अपि च सुकृतदुष्कृतानुसारेण यादृशे देशे आत्मनो यावान् भोगो नियतः

---

१ एवम्—"एष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः" इत्यादि बोध्यम्।

तत्र तावत्कालमेव भोगमास्थाय आत्मा ततो विच्छिद्यते । विच्छिद्य च तत एव देहादात्मा शरीरान्तरसमालम्बनेन पुनः जन्मान्तरसंचितानां कर्मणां फलीभूतानि पापानि पुण्यादीनि च समुपभुङ्क्ते । पुनरपि तदवधिपर्यवसाने शरीरान्तरमायातीत्येवं हि नाम कर्मकृतपापपुण्यानुबन्धेन आत्मनः सुखदुःखादिभोगनियमः । तत्प्रमाणं च गीतासु यथा—"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥" इति । एवमेवार्थसमूहं हृदये कृत्वा प्राज्ञाः प्राहुः—"क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति । तस्मात् नित्यसुखप्राप्त्यर्थमेव सर्वथा सर्वदा सर्वैरेव यतनीयमिति प्रदर्शनार्थमेव दर्शनशास्त्राणां प्रादुर्भाव इति दिगिति शम् ॥ ॐ ॥

सरलसंस्कृता बाल्या विनायासेन बोधदा ।
अकारि भूमिका यत्नात्तया तुष्यतु शङ्करः ॥ १ ॥
दूरमुत्सार्य मात्सर्यं सदसद्व्यक्तिहेतवः ।
ज्ञास्तां गृह्णन्तु संशोध्य प्रार्थयामीति सादरम् ॥ २ ॥
पुराण इत्येव न सर्ववित्स्यान्नव्यो गुणी ज्ञः किमु नार्चनीयः ।
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥ ३ ॥
पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते, मूढः परप्रत्ययनेयबुद्धिः ॥ ४ ॥
गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ ५ ॥

इति प्रार्थयते—
विद्वद्वशंवदः शिवनारायणशर्मा ।

श्रीः ।

# अथ सविषयः साङ्ख्यकारिकापाठः ।

साङ्ख्यशास्त्रे प्रवृत्तेः कारणम् । (पृ० ८ पं० २६)

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

वैदिकोपायस्य अनुपायता । (पृ० ३१ पं० ५)

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

शास्त्रस्य संक्षिप्तोऽर्थः । (पृ० ८५ पं० १८)

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

प्रमाणं तद्भेदाश्च । (९५-९)

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

प्रत्यक्षादिप्रमाणानां लक्षणानि । (१०८-१६)

प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥

प्रमाणानां विषयभेदाः । (२०९-२१)

सामान्यतस्तु दृष्टात् अतीन्द्रियाणां प्रतीतिरनुमानात् ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥

विद्यमाने विषयेऽपि प्रत्यक्षप्रमाणस्य अप्रवृत्तेः कारणम् । (२१३-९)

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानाद् अभिभवात् समानाभिहाराच्च ॥ ७ ॥

प्रधानादीनां प्रत्यक्षाऽभवनस्य कारणम् । (२१६-२१)

सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः ।
महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥

सत्कार्यवादसाधकानि । (२२७-११)

असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥

व्यक्ताव्यक्तयोः साधर्म्यवैधर्म्ये । ( २५७–१३ )

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥

व्यक्ताव्यक्तयोः साधर्म्यम् ताभ्यां पुरुषस्य च वैधर्म्यम् । ( २६१–२४ )

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥

त्रयो गुणाः, तेषां लक्षणानि च । ( २७१–११ )

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

गुणानां प्रकाशादिप्रयोजनानां हेतुः । ( २७९–९ )

सत्त्वं लघु प्रकाशकमिष्टम् उपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

सत्त्वादिगुणेषु अविवेकित्वादेः सिद्धिः, तदर्थं च प्रधानस्य सिद्धिः । ( २९१–२० )

अविवेक्यादेः सिद्धिस्त्रैगुण्यात् तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥

अव्यक्तात् व्यक्तस्य उत्पत्तिः । ( २९५–२५ )

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥

अव्यक्तस्य प्रवृत्तेः प्रकारः ।

कारणमस्त्यव्यक्तम्, प्रवर्तते त्रिगुणतः समुदयाच्च ।

एकाव्यक्ततो विचित्रविचित्रकार्याणामुत्पत्तिः । ( ३०७–१९ )

परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १५ ॥ १६ ॥

पुरुषस्य-( आत्मनः ) सिद्धिः । ( ३१४–१८ )

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥

पुरुषाः ( आत्मानः ) बहवः सन्ति । ( ३०७–१९ )

जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

पुरुषस्य धर्माः। (३२२-१०)

तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

लिङ्गस्य चेतनसमानता पुरुषस्य च कर्तृसमानता। (३२६-१८)

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीनः ॥ २० ॥

पुरुषलिङ्गयोः संयोगस्य कारणम्। (३२८-१६)

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥

सृष्टेः क्रमः। (३३१-११)

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

बुद्धेर्लक्षणं तद्धर्माश्च। (३३३-१५)

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद् रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥

अहङ्कारस्य लक्षणं तदीयकार्यभेदाश्च। (३४६-११)

अभिमानोऽहङ्कारः तस्माद् द्विविधः प्रवर्तते सर्गः।
एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४ ॥

एकस्मादहङ्कारात् जडप्रकाशयोरुत्पत्तिः। (३४७-२२)

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसः तैजसादुभयम् ॥ २५ ॥

ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च। (३४९-३०)

बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगाख्यानि।
वाक् पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः ॥ २६ ॥

एकादशमिन्द्रियं मनः। (३५१-१२)

उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात्।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥

दशानामिन्द्रियाणाम् असाधारणा वृत्तयः। (३५९-२९)

रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

त्रयाणामन्तःकरणानां वृत्तयः। (३६०-२८)

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥

त्रयाणामन्तःकरणानाम् असाधारणवृत्तिषु सप्रकारौ क्रमाक्रमौ। (३६४-११)

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

इन्द्रियाणां त्रयाणामन्तःकरणानां च परिचालना। (३६७-२२)

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥

करणस्य भेदाः। (३६९-२९)

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ॥
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

त्रयोदशविधानि करणानि। (३७२-२२)

अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥

बाह्येन्द्रियाणां विषयाः। (३७६-२८)

बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।
वाग् भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥

करणानां परस्परं गौणता प्रधानता च। (३८१-१५)

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥

मनोऽहङ्कारापेक्षया बुद्धेः प्रधानता। (३८२-२२)

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

पुनः बुद्धेः प्रधानता । ( ३८४–२४ )

सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥

विशेषाणाम् अविशेषाणां च विभागः । ( ३८७–२० )

तन्मात्राण्यविशेषाः तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषा शान्ता घोराश्च मूढाश्च ॥ ३८ ॥

विशेषाणाम् अवान्तरो विशेषः । ( ३९१–७ )

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥

सूक्ष्मशरीरस्य निरूपणम् । ( ३९३–२७ )

पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥

लिङ्गशरीरस्य स्थूलशरीराऽपेक्षा । ( ३९८–७ )

चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद् विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥

लिङ्गशरीरस्य संसृतेः प्रकारः कारणं च । ( ४००–२३ )

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

निमित्तनैमित्तिकयोः विभागः । ( ४०२–२१ )

सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥

कतमस्य निमित्तस्य कतमत् निमित्तम् ? । ( ४०५–१२ ) ( ४०९–४ )

धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद् रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ ४५ ॥

बुद्धेः संक्षिप्तः सर्गः । ( ४१३–७ )

एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात् तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥

संक्षिप्तसर्गस्य पञ्चाशद्भेदानां गणना । (४१६–१९)

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥

विपर्ययभेदानां भेदाः । (४१९–२६)

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥

अष्टाविंशतिधा अशक्तिः । (४२३–३२)

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥

नवधा तुष्टिः । (४२६–२१)

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्याविषयोपरमात् पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥

गौण्यो मुख्याश्च सिद्धयः । (४३८–९)

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥

बुद्धिसर्गस्य भूतसर्गस्य च प्रयोजनम् । (४४७–२३)

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥

चतुर्दशधा भूतसर्गः । (४५१–१४)

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुषश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥

प्रकारत्रयेण भूतसर्गः । (४५४–११)

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥

सर्गस्य (सृष्टेः) दुःखरूपता । (४५६–२४)

तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ॥ ५५ ॥

उक्तः सर्वः सर्गः प्रकृतिकृतः । (४६०–१२)

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रकृतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥

विना अधिष्ठातारं प्रधानस्य प्रवृत्तौ युक्तिः । (४६२-३०)

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥

"स्वार्थ इव" इत्यस्य दृष्टान्तः । (४६७-२०)

औत्सुक्यविनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

प्रकृतेः प्रवर्तकस्तु पुरुषार्थः संभवति, परं निवृत्तिः कथं स्यात्? । (४६८-२४)

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥

केवलपरार्थारम्भे आक्षेपस्य समाधानम् । (४७०-१६)

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतः तस्यार्थमपार्थकं चरति ॥ ६० ॥

वेश्याया दर्शकानां कौतुहलात् पुनः प्रवृत्तावपि प्रकृतेर्न पुनः प्रवृत्तिः । (४७१-२१)

प्रकृतेः सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।
या दृष्टाऽसीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥

प्रकृतेरेव बन्धमोक्षौ, न पुरुषस्य । (४७३-८)

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥

प्रकृतेः बन्धमोक्षयोः साधनानि । (४७५-१४)

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

साङ्ख्यशास्त्रीयतत्त्वस्य उपयोगः । (४७६-२५)

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

पूर्णविशुद्धकेवलज्ञानस्य फलम् । (४८६-२३)

तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥

सृष्टिः कुतो न? । (४८९-१३)

दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमिति विरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥

तत्त्वज्ञानानन्तरं शरीरस्य स्थितिः । (४९२-१६)

सम्यग् ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशात् चक्रभ्रमिवद् धृतशरीरः ॥ ६७ ॥

संस्कारवशात् शरीरस्थितिरस्तु परं कदा तस्य मोक्षः । (५००-२४)

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥

शास्त्रस्य आविष्कारः । (५०३-१२) (५०४-१२) (५०४-२९)

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥

शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग् विज्ञाय सिद्धान्तम् ॥ ७१ ॥

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परिवादविवर्जिताश्चापि ॥ ७२ ॥

---

## अथ संक्षिप्ता

# विषयानुक्रमणिका ।

॥ श्रीः ॥

# साङ्ख्यतत्त्वकौमुदी ।

## छात्रबोधिनीव्याख्यासमलङ्कृता ।

नमो गणेशाय ।

नमस्तस्मै गणेशाय नरकुञ्जररूपिणे ।
यश्चागस्त्यायते नित्यं विघ्नसागरशोषणे ॥ १ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरां तां वाणीं वीणाकरां भजे ॥ २ ॥
कपिलाय नमस्तस्मै येनाविद्योदधौ जगन्निमग्ने ।
कारुण्यात्सांख्यमयी नौरिह विहिता प्रतरणाय ॥ ३ ॥
जींदाख्या राजधान्यस्ति रणवीरेण पालिता ।
तद्राष्ट्रे बुधवासेन गोतोलीत्याख्यया प्रथाम् ॥ ४ ॥
प्राप्ते ग्रामवरे सर्व-वर्णाश्रमसुखप्रदे ।
अभिजातस्तत्र विप्रो मामचन्द्रसुधीः सुखी ॥ ५ ॥
अमीलालस्तत्सुतोऽस्ति सर्वोपाध्यायकर्मवित् ।
अमीलालप्रसादास-रजिञ्जेत्यभिधा सती ॥ ६ ॥
रामधारिसुता तस्या गर्भजोऽयं विमूढधीः ।
शिवनारायणः शास्त्री शिवशक्त्योरुपासकः ॥ ७ ॥
प्रणम्य शङ्करं भक्त्या शिवदत्तान् गुरूंस्तथा ।
बालानां सुखबोधाय तनोति च्छात्रबोधिनीम् ॥ ८ ॥
क्वाहं मन्दमतिः क्वेयं व्याख्या वाचस्पतेः कृतेः ।
तथापि ब्रह्म दधतः किमसाध्यं भवेन्मम ॥ ९ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ १० ॥

अथेश्वरकृष्णकृतकारिकाव्याचिख्यासुः श्रीवाचस्पतिमिश्रः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिश्रुतिस्मृतिप्रमितं सांख्यसिद्धान्तं प्रकटयन् प्रारिप्सितग्रन्थस्य निर्विघ्नपरि-

---

१ इह खलु प्रारिप्सितप्रकरणपरिसमाप्तिप्रत्यर्थिप्रत्यूहव्यूहविध्वंसनाय प्रथारम्भे मङ्गलमनुतिष्ठन्ति शिष्टाः" इत्यास्तिकसम्प्रदायः । तत्र समाप्तिप्रतिबन्धकपापविशेषध्वंसकारणत्वं मङ्गलत्वम् । तत् त्रिविधम्, आशीर्वादः, नमस्कारः, वस्तुनिर्देशश्च । इष्टानां शिष्यादीनां शुभाशंसनमाशीः । परस्मिन् यदुत्कृष्टता ( पूज्यता ) ज्ञानं तदपेक्षया यत् स्वस्मिन् अपकर्षज्ञानम् 'अहमस्य सेवकः' इति बोधः तादृशबोधानुकूलो यः करपुटादिसंयोगविशेषः स एव नमस्कारः ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः ।

---

समासये, शिष्यशिक्षायै, वक्तृश्रोतॄणामनुषङ्गतो[1] मङ्गलाय च, प्रकृतिं बद्धाबद्धभेदेन द्विविधपुरुषांश्च ग्रन्थादौ प्रणमति—अजामिति । एकाम्=सजातीयद्वितीयरहिताम्, लोहितशुक्लकृष्णाम्=रजःसत्त्वतमोगुणात्मिकाम्, बह्वीः=सुखदुःखमोहात्मकत्वेन नानाविधाः प्रजाः=प्रकर्षेण–व्यक्तरूपेण जायन्ते=आविर्भवन्तीति प्रजाः=महदादयो विकाराः तान् सृजमानाम्=उत्पादयन्तीम्, महदादिनानाविधविकाररूपेण परिणममानामिति[2] यावत्, एवंभूताम् अजाम्=न जायत इति अजा=मूलप्रकृतिः तां नमामः=नमस्कुर्मः, वयमिति शेषः इत्यन्वयः ॥ ❀ ॥

तत्र लोहिता चासौ शुक्ला चेति लोहितशुक्ला, सा चासौ कृष्णा चेति कर्मधारयः[3] । ततश्च प्रधानं न गुणेभ्यस्तत्त्वान्तरं, किन्तु गुणा एव साम्यावस्थामापन्नाः प्रधानव्यपदेश्या भवन्तीति सिध्यति । यदाहुर्योगभाष्यकाराः—"प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तमः, इत्येते गुणाः प्रधानशब्दवाच्या भवन्ति" इति ॥ लोहितं शुक्लं कृष्णं यस्यामिति बहुव्रीहिस्तु न । तथा सति बहुव्रीहेरन्यपदार्थप्रधानतया गुणेभ्योऽर्थान्तरस्य गुणिरूपस्य प्रधानस्य सिद्धिप्रसङ्गात्, तस्य चानिष्टत्वात् ॥ ❀ ॥ न च लोहितशुक्लकृष्णशब्दानां रक्तादिगुणपरत्वात् कथं तै रजोगुणादिलाभ इति वाच्यम् । रञ्जनप्रकाशावरणात्मकत्वगुणयोगेन गौण्या[4] वृत्त्या तल्लाभसंभवात् । तथा हि—महारजनादि लोहितं यथा वस्त्रं रञ्जयति, रजोगुणोऽपि तथा प्रवृत्त्या मनो रञ्जयतीति लोहितं रजः । एवं शुभ्रं जलं यथा मालिन्यं दूरीकरोति तथा सत्त्वगुणोऽपि ज्ञानादिना मनो विमलं करोतीति शुक्लं सत्त्वम् । एवं नीलं मेघपटलं यथाऽऽच्छादयति, तथा तमोगुणोऽपि ज्ञानमावृणोतीति कृष्णं तमः इति । ततश्च "रागात्मकत्वात् लोहितं रजः, प्रकाशात्मकत्वात् शुक्लं सत्त्वम्, आवरणत्वात् कृष्णं तमः" इत्यत्र फलितम् । तत्र लोहितशब्दवाच्यरजोगुणस्य प्रवर्तकत्वात् सृष्टिक्रियाप्रवृत्तेश्च प्राथम्यात् रजसः प्रथमं निर्देशः । सत्त्वस्य प्रकाशात्मकत्वात् स्थितिदशायां च कार्याणां प्रकाशमानत्वात् तदनन्तरं सत्त्वस्योल्लेखः । तमस आवरणात्मकत्वात् प्रलयदशायां च कार्याणां स्वरूपावृतत्वात् तमसः पश्चान्निर्देश इति ध्येयम् । ततश्च सृष्टिस्थितिलयहेतुता प्रकृतेर्ध्वनितेत्यत्र फलितम् ॥ ❀ ॥

---

१ अन्यार्थं प्रति प्रवृत्तस्य नान्तरीयकफलजनकोऽनुषङ्गः । २ परिणामशीलताला-भायैव च 'सृजन्तीम्' इति विहाय तथाभिधानम् । तल्लाभश्च 'ताच्छील्यवयोवचन-शक्तिषु चानश्' इति सूत्रेण चानश्विधानात् । ३ प्रथमसमासे लोहिताशब्दस्य पुंवद्भावः, द्वितीये च लोहितशुक्लाशब्दस्येति बोध्यम् । ४ लक्षणा वृत्तिर्द्विविधा, शुद्धा गौणी च । सादृश्येतरसंबन्धरूपा शुद्धा । सादृश्यसंबन्धरूपा गौणी । आद्या यथा—गंगायां घोषः । द्वितीया—सिंहो माणवकः ।

अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान् ॥ १ ॥

अत्र 'एकाम्' इति विशेषणेन अनवस्थां नैयायिकाभिमतं परमाणुवादं च निराकरोति । एकापि गुणवैचित्र्यात् वैचित्र्यं कार्यं कर्तुं प्रभवतीति द्योतनाय लोहितेति द्वितीयं विशेषणम् । प्रकृतिसत्त्वे प्रमाणोपन्यासाय च 'बह्वीः प्रजाः सृजमानाम्' इति तृतीयं विशेषणमिति विवेकः ॥ ❀ ॥

इदं त्वत्रावधेयम्—

अजापदेन छागीश्लेषात् तदुपादानकवस्तून्यपि व्यपदिश्यन्ते । यथा— लोहितादिवर्णा एका छागी स्वसमानवर्णान् बर्करान् प्रसूते, तथेयमपि प्रकृतिस्त्रिवर्णा बहुसरूपं विकारजातं जनयतीति । ततश्च अजापदं योगेन प्रकृतिपरम्, रूपककल्पनया समुदायप्रसिद्धिस्वीकारे च छागीपरम् । रूपककल्पनाप्रकारस्तु—

"कल्पनोपदेशाच्च मध्वादिवदविरोधः" [ वे० १।४।१० ] इति सूत्रे भगवच्छ्रीमच्छङ्कराचार्यैः प्रदर्शितः—

"यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्याद् बहुबर्करा सरूपबर्करा च । तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्याद्, एवमियमपि प्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति । अविदुषा च क्षेत्रज्ञेनोपभुज्यते । विदुषा च परित्यज्यते" ॥ ❀ ॥ ॥ इति ॥ ❀ ॥

तदेवं प्रकृतिं प्रणम्य पुरुषान् प्रणमति—अजां ये तामिति ॥ ये=अहंप्रत्ययविषयत्वेन प्रसिद्धाः अजाः=अनादिनः पुरुषाः जुषमाणाम्=शब्दाद्युपभोगप्रदानेन पुरुषं सेवमानां तां=प्रकृतिं भजन्ते=सेवन्ते, प्रकृतितत्त्वाद् आत्मनो विभिन्नतामजानानाः प्रकृतिगतमेव सुखित्वादिकं स्वस्मिन् अभिमन्यमानाः 'सुखिनो दुःखिनो मूढा वयम्' इत्येवम् अभिनिविशन्ते इति यावत्, तान् बद्धान् पुरुषान् नुम इति संबन्धः ॥ ❀ ॥

अयं भावः—यद्यपि परमार्थतः पुरुषोऽसङ्ग एव, भोगादयो विकाराश्च चित्तस्यैव धर्माः, तथापि चितिचित्तयोः जपाकुसुमस्फटिकयोरिव सन्निधानात्

१ "विमताः प्रजाः सुखदुःखमोहात्मकवस्तुप्रकृतिकाः, सुखाद्यन्वितत्वात्, यद् येनान्वितं तत् तदुपादानकम्, यथा मृत्सुवर्णान्वितं घटकटकादिकम्, तथा चेमाः, तस्मात्तथा" इत्यत्र प्रयोगः ॥ २ यथा ह्यादित्यः खलु देवमधुत्वाभावेऽपि देवानां मोदनात् प्रसिद्धमधुसादृश्यं परिकल्प्य देवमधु, वाक् च धेनुत्वाभावेऽपि नानाविधभोग्यपदार्थदात्रीत्वात् प्रसिद्धधेनुसादृश्यं परिकल्प्य धेनुरित्युपदिश्यते—"असौ वा आदित्यो देवमधु" ( छा० ३।१।१ ) "वाचं धेनुमुपासीत" ( बृ० ५।८।१ ) इति, तथाऽव्यक्तत्वेऽपि जगतः कारणं प्रकृतिरनुशयनादेरविशेषात् प्रसिद्धाजासादृश्यं परिकल्प्य लोहितशुक्लकृष्णेति व्यक्तरूपेणोपदिश्यत इति ह्यत्र सूत्रतात्पर्यमवसेयम् ।

**कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ।**

अभेदग्रहे चित्तवृत्तीः स्वस्मिन् आरोप्य 'शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मि' इत्यध्यवस्यति पुरुषः, यथा मलिने दर्पणतले प्रतिबिम्बिते मुखे मालिन्यमारोप्य शोचति–आत्मानं–मलिनोऽस्मि' इति । ततश्चौपाधिक एव पुरुषस्य भोगो न वास्तविकः । तदुक्तं विष्णुपुराणे—"गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति । अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ॥" इति ॥ ❀ तथा च कापिल-सूत्रम्—"कुसुमवच्च मणिः" [सां० २।३५] इति ॥ ❀ ॥ बद्धान् पुरुषान् नत्वा विवेकिनः पुरुषान् प्रणमति—जहतीति । ये च अजाः="पुरुषश्चेतनः शुद्धोऽनन्तश्च, प्रकृतिस्तु जडा मलिना सान्ता च" इत्येवं प्राप्तप्रकृतिपुरुषान्यता-प्रत्ययाः पुरुषाः भुक्तभोगाम्=भुक्तः—निष्पादितो भोगः=कृत्यं यया ताम् निष्पादितकृत्याम् इत्यर्थः । अत्र भोग इति मोक्षस्याप्युपलक्षणम् । भोगापवर्गौ सम्पाद्य प्रकृतिनिवृत्तेर्वक्ष्यमाणत्वात् तथाच सम्पादितपौरुषेयभोगापवर्गत्वेन समाप्ताधिकारामित्यर्थः । एनां=प्रकृतिं जहति=अनात्मत्वेन परित्यजन्ति तान् विवेकिनोऽपि पुरुषान् वयं नुमः=स्तुम इत्यर्थः ॥ ❀ ॥

इदं त्वत्र बोद्धव्यम्—गुणत्रयात्मिका प्रकृतिर्ह्येका, पुरुषाश्च नाना । सा च पुरुषान् प्रति भोगापवर्गसम्पादनाय प्रवर्तते । तत्र यस्य पुरुषस्य भोगापवर्गौ तया निष्पादितौ, तं प्रति कृतार्थत्वान्नष्टापि नान्यान् प्रति नष्टा भवितुमर्हति कृता-र्थत्वाभावात् । अतो नैकस्मिन् विवेकिनि सति प्राकृतपरिणामविराम इति ॥ ❀ ॥

तथाच भगवान् पतञ्जलिः—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारण-त्वात्" [यो० २।२२] इति । पञ्चशिखाचार्योऽपि—"धर्मिणामनादि-संयोगात् धर्ममात्राणामप्यनादिः संयोगः" इति ॥ १ ॥ ❀ ॥

सम्प्रति "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति सुबालोपनिषच्छ्रुतिमाश्रित्य प्रकृतशास्त्रप्रवर्तक-संग्राहकाचार्यान् [अनुक्रमेणोद्दिश्य] प्रणमति—कपिलायेति । एते वयं कपि-लाय नमस्याम इति संबन्धः । 'एते' इत्यत्र 'वयम्' इति शेषः 'नमस्यामः' इत्युत्तमपुरुषवचनानुरोधात् । कपिलशब्देन विष्ण्वादीनां बोधो मा भूदिति तं

१ तत्र "शब्दाद्युपलब्धिर्भोगः' । प्रकृतिपुरुषान्यताख्यातिश्चापवर्गः । अपवृज्यते=केवलीभवति मुच्यते येन विवेकज्ञानेनेति तद्व्युत्पत्तेः । २ न हि रूपमन्धेन न दृश्यत इति चक्षुष्मतापि दृश्यमानमभावं प्राप्तं भवति । ३ कस्यचिदेकस्य मुक्तौ सत्यामपि न संसारोच्छेद इत्यर्थः । ४ धर्मिणाम्=गुणानाम् आत्मभिरनादिसंयोगात् धर्ममा-त्राणां=महदादीनामप्यनादिः संयोग इत्यर्थः । ५ तत्र प्रवर्तको भगवान् कपिलः, आसुरिप्रभृतयश्च संग्राहकाः । ६ विष्णु-शिव-नागविशेष-दानव-विशेषा अपि हि कपिल-शब्देनोच्यन्ते, "सनात् सनातनतमः कपिलः कपिरव्ययः" "कपिलः कपिशः शम्भुः" शंखश्च शंखपालश्च कपिलो वामनस्तथा" "अयोमुखः शंबरश्च कपिलो वामनस्तथा" इति यथेति भावः ।

पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥ २ ॥

---

विशिनष्टि—महामुनय इति । 'मन्यते=जानाति' इति व्युत्पत्त्या मुनित्वं ज्ञानवत्त्वम् । महत्त्वं च अप्रतिहतानौपदेशिकत्वम् । तस्य च मुनिपदार्थतावच्छेदके ज्ञानेऽन्वयः । तथाच अप्रतिहतानौपदेशिकज्ञानशीलायेत्यर्थः । अन्ये तु प्रतारणादिदोषाभावविशिष्टातीन्द्रियार्थावबोधसूचनाय 'महामुनये' इति विशेषणम्' इति प्राहुः ॥ ❀ ॥ एवं प्रथमसांख्याचार्यं प्रणम्य "पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥" [भा० १।३।१०] इत्युक्तं द्वितीयं सांख्याचार्यं प्रणमति—मुनय इति । तस्य=तादृशकपिलस्य । अत्र शिष्यपदेन विद्यालाभः सूचितः । कपिलात् प्राप्ततत्त्वज्ञानत्वेन तच्छिष्यायेत्यर्थः । यदाहुः पञ्चशिखाचार्याः—"आदिविद्वान्[२] निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति । अयं च न कपिलवत् महामुनिः किन्तु औपदेशिकज्ञानवत्त्वेन मुनिरेवेति सूचनाय 'मुनये' इति विशेषणम् । औपदेशिकज्ञानवत्तास्फोरणायैव 'तस्य शिष्याय' इति तस्य द्वितीयं विशेषणम् । विपरीतभानादिनिरासाय 'मुनये' इति विशेषणम्' इत्यन्ये ॥ ❀ ॥

एवं द्वितीयाचार्यं प्रणम्य सम्प्रति "आसुरेः[३] प्रथमं शिष्यं यमाहुश्चिरजीविनम् । पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः । पञ्चज्ञः पञ्चकृत् पञ्चगुणः पञ्चशिखः स्मृतः ॥" [महा० प० १२ । अ० २१८ । श्लो० १२] इत्युक्तं तृतीयं सांख्याचार्यं प्रणमति—पञ्चशिखायेति । अत्रापि मुन्यादिपदद्वयमनुवर्तनीयम् । तथा=

---

१ महत्त्वस्य । २ आदिविद्वान्=कपिलः शरीरादिवत्स्वसंकल्पेन निर्मितानि शरीरसमसंख्यानि चित्तानि निर्माणचित्तानि । अधिष्ठाय=आश्रित्य, तन्त्रं=शास्त्रम् । ३ अस्यति क्षिपति पापानि तत्त्वज्ञानेनेति असुरः=कपिलः तस्य छात्रः आसुरिः (इञ्) । पञ्च स्रोतांसि=विषयकेदारप्रणालिका यस्य तस्मिन् मनसि निष्णातः= ऊहापोहकौशलवान्, पञ्चरात्रो नाम=विष्णुत्वप्रापकः क्रतुः "पुरुषो ह वै नारायणोऽकामयताऽत्यतिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पञ्चरात्रं पुरुषमेधं क्रतुमपश्यत्" इति शतपथोक्तः, तत्र विशारदः=अनुष्ठिताखिलकर्मेत्यर्थः, पञ्च=अन्नमयादीन् कोशान् मिथ आत्मनश्च विविक्तान् जानातीति पञ्चज्ञः, अत एव पञ्चकृत्=पञ्च=तद्विषयाणि उपासनानि "भृगुर्वै वारुणिः" इत्यस्यामुपनिषदि "स तपस्तप्त्वाऽन्नं ब्रह्मेति व्यजानात्" इत्यादिविहितानि करोतीति पञ्चकृत्, पञ्च="शान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति श्रुताः शान्त्यादयो गुणा यस्मिन् स पञ्चगुणः, पञ्चभ्योऽतिरिच्यमानत्वात् शिखेवेति पञ्चशिखं पुच्छं ब्रह्म तज्ज्ञत्वान्मुनिरपि पञ्चशिख इत्यर्थः । इत्येतद् व्याख्यायां नीलकण्ठः ।

इह खलु प्रतिपिपित्सितमर्थं प्रतिपादयन्
प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम्
अप्रतिपिपित्सितं तु प्रतिपादयन् नायं लौकिको
नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत,

---

पूर्वोक्तप्रकारेण आसुरिशिष्याय पञ्चशिखाय मुनये नम इत्यर्थः । समुच्चये वा 'तथा'-शब्दो द्रष्टव्यः ॥ ❀ ॥

अधुना प्रकृतसांख्यार्याकर्तारं प्रणमति—ईश्वरकृष्णायेति। अयं चेश्वरकृष्णो न साक्षात् पञ्चशिखाचार्यशिष्यः किन्तु ततोऽर्वाचीन एव कश्चित् सांख्यतत्त्ववेत्ता, "शिष्यपरम्परयागतम्" इति ग्रन्थान्ते तदुक्तेरिति बोध्यम् ॥ ❀ ॥ 'कपिलाय' इत्यादौ सर्वत्र 'कपिलं प्रीणयितुम् अनुकूलयितुं वा' इत्यर्थविवक्षायां 'क्रियार्थोपपदस्य'—[ पा० २।३।१४ ] इति चतुर्थी । नमस्यशब्दे नमःशब्दो नार्थवान् इति तत्र 'नमःस्वस्ति'—[ २।३।१६ ] इति सूत्राप्रवृत्तेः, अर्थवत एव नमःशब्दस्य तत्र ग्रहणात्। यदाहुर्महाभाष्यकाराः—"अर्थवतो नमःशब्दस्य ग्रहणं, न च नमस्यशब्दे नमःशब्दोऽर्थवान्" इति ॥ २ ॥ ❀ ॥

सम्प्रति प्रतिपिपित्सितार्थप्रतिपादनेनैव शास्त्रस्योपादेयत्वं भवतीति प्रकृतशास्त्रस्य परमपुरुषार्थसाधनप्रकृतिपुरुषविवेकप्रत्ययरूपातिप्रतिपिपित्सितार्थप्रतिपादकत्वेन उपादेयत्वप्रतिपादनपरतया कारिकामवतारयन् पीठिकामारचयति—इहेत्यादिना। इह=उपदेशवेलायां, व्यवहारभूमौ, परीक्षकजनसंसदि, शास्त्रे वा, प्रतिपिपित्सितम्=प्रतिपत्तुं=ज्ञातुम् इष्टम्=अभिलषितम्, सन्दिग्धत्वेन सप्रयोजनत्वेन च जिज्ञासागोचरमित्यर्थः[1]। अर्थम्=अभिधेयं वस्तुतत्त्वं प्रतिपादयन्=ज्ञापयन्, वाग्व्यवहारेण स्वमनोगतं परत्र संक्रामयन्निति यावत्, प्रतिपादयिता=बोधयिता उपदेष्टा अवधेयवचनः=समादरपुरस्सरश्रवणीयवचनः[2], श्रद्धेयवाक्य इति यावत्, भवति । किं सर्वेषाम्? नेत्याह—प्रेक्षावतामिति । प्रकर्षेण ईक्षा प्रेक्षा=हेयोपादेयविषयिणी बुद्धिस्तद्वताम्, हेयोपादेयविवेकनिपुणधिषणातिशयवतामित्यर्थः। 'खलु' इत्यव्ययम् अवधारणे, वाक्यालङ्कारे वा ॥ ❀ ॥

एतद्विपरीतस्तु प्रतिपादयिता नावधेयवचनो भवति प्रेक्षावताम्, अपितूपेक्षार्ह इति ब्रूते—अप्रतिपिपित्सितं त्विति । अप्रतिपिपित्सितम्=असन्दिग्धत्वेन अप्रयोजनत्वेन च जिज्ञासानर्हम् अर्थं प्रतिपादयन् वर्तमानस्तु जनः प्रेक्षावद्भिः उपेक्ष्येत=त्यज्येत श्रद्धेयवचनतया न गृह्येतेत्यर्थः। 'उपेक्ष्यते' इति क्वचित् पाठः, तत्र 'त्यज्यते' इत्यर्थः। किं ज्ञात्वासावुपेक्ष्यते? इत्यत्राह—नायमिति। अयं=प्रतिपादयिता न लौकिकः=लोकव्यवहारज्ञः, नापि परीक्षकः=प्रमाणेन

---

१ न हि निर्णीते निष्प्रयोजने चार्थे कस्यचिज्जिज्ञासोदेतीति भावः । २ अवधातुं योग्यम् अवधेयं=मनोनिवेशेन श्रवणार्हमित्यर्थः श्रद्धेयमिति यावत्, एवंविधं वचनं यस्य स तथा, तदेवाह—समादरेति ।

स चैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पत, इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतु-

---

सदसत्त्वनिर्णायकः इति=इति कृत्वेत्यर्थः। 'ज्ञात्वा' इत्यध्याहारो वा। ततश्च लौकिकपरीक्षकजनविलक्षणोऽयं मतिविप्लवशील इति ज्ञात्वेत्यर्थः। तदेवाह—उन्मत्तवदिति। तथाच लौकिकानां परीक्षकाणां च अजिज्ञासितार्थनिर्णयप्रवृत्तत्वाभावादुन्मत्तानां च तथा व्यवहारात् तद्वदिति भावः। तत्र अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षा लौकिकाः, शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षाश्च परीक्षकाः। तथा चोक्तं न्यायभाष्ये—

"लोकसाम्यमनतीता लौकिका, नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः, तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्ति" "इति। [न्या० १।१।२५]" ॥ ॐ ॥

कस्तर्हि प्रेक्षावतां प्रतिपित्सितोऽर्थः? यस्य प्रतिपादनेन वक्ता श्रद्धेयवचनो भवति? तत्राह—स चैषामिति। यो ज्ञातः सन् परमपुरुषार्थाय कल्पते स प्रेक्षावतां प्रतिपित्सितोऽर्थ इत्यन्वयः। 'च' शब्दोऽवधारणार्थकः। योऽर्थो ज्ञातः सन् मननद्वारा परमपुरुषार्थाय=अत्यन्तदुःखनिवृत्तिलक्षणाय मोक्षाय, भोगापवर्गौ हि पुरुषार्थौ तत्रापवर्गस्यैव परमपुरुषार्थत्वात्, कल्पते=प्रभवति समर्थो भवति, स एवार्थः एषां=प्रेक्षावतां प्रतिपित्सितः=जिज्ञासागोचर इत्यर्थः। तथाच सूत्रम्—"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" [सां० १।१] इति ॥ ॐ ॥

इति=यत एवम् अतः, प्रारिप्सितं=प्रारब्धुमिष्टं यच्छास्त्रं=सांख्यशास्त्रं तस्य यो विषयः=अर्थः पञ्चविंशतितत्त्वविनिर्णयात्मकः तज्ज्ञानस्य=तद्विषयकज्ञा-

---

१ "नैसर्गिकं"=स्वाभाविकं प्राक्तनसंस्कारजन्यमिति यावत्। वैनयिकम्=उपदेशजन्यं गुरुविनयादिना लब्धम्, ऐहिकं शास्त्राभ्यासपरिशीलनजन्यमिति यावत्। बुद्ध्यतिशयम्=प्रज्ञोद्रेकम्। तद्विपरीताः=लौकिकविपरीता उभयविधमतिसम्पन्नाः इत्यर्थः॥ एतदुक्तं भवति–नैसर्गिकं वा वैनयिकं वा बुद्ध्यतिशयं प्राप्ताः परीक्षका इत्युच्यन्ते। तत्र केषांचित् शिक्षां विनैव बुद्ध्यतिशयो भवतीति ते नैसर्गिकबुद्ध्यतिशययुक्ता विज्ञेयाः, केषांचिच्च शिक्षया बुद्ध्यतिशयो भवतीति ते वैनयिकबुद्ध्यतिशययुक्ता विज्ञेयाः। शास्त्रीयज्ञानवन्तः परीक्षका इति फलितार्थः। २ पुरुषस्य अर्थः=प्रयोजनं पुरुषार्थः इति विग्रहः, "धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः" इत्यग्निपुराणे। यत् ज्ञातं सत् स्ववृत्तितयेष्यते, स पुरुषार्थः। बलवद्द्वेषाविषयो वा। तत्र सुखं दुःखाभावश्च पुरुषार्थ इति नैयायिकाः। भक्तिरपीति वैष्णवाः। भोगापवर्गौ पुरुषार्थ इति तु सांख्या इति विवेकः।

त्वात् तद्विषयजिज्ञासामवतारयति—"दुःखत्रयाभिघातात्" इति ॥

**दुःखत्रयाभिघाताज् जिज्ञासा तदपघातके हेतौ ।**

तस्य सांख्यशास्त्रप्रतिपाद्यपञ्चविंशतितत्त्वज्ञानस्येत्यर्थः[1], प्रकृतिपुरुषान्यताज्ञानस्येति यावत्, परमः=अत्यन्तो यः पुरुषार्थः=पुरुषप्रयोजनं त्रिविधदुःखात्यन्तनिवृत्तिरूपोऽपवर्गः तस्य साधनं यद् विवेकज्ञानं प्रकृतिपुरुषान्यताज्ञानमिति यावत्, तस्य हेतुत्वात्=तज्जननकारणत्वात् इत्यर्थः। तथाच शास्त्रस्य परम्परया मोक्षहेतुत्वमिति भावः । तद्विषयजिज्ञासां=शास्त्रविषयज्ञानेच्छाम्, परमपुरुषार्थसमर्थविवेकज्ञानसाधनतत्त्वग्रामविनिर्णयात्मकप्रकृतशास्त्रविषयज्ञानेच्छामिति यावत्[2], अवतारयति=व्यवस्थापयति, 'कारिकाकृत्' इति शेषः ॥ ❀ ॥

एतदेवोक्तं भाष्ये—

"तदिदं मोक्षशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम् । यथा हि रोगः, आरोग्यम्, रोगनिदानम्, भैषज्यम्, इति चत्वारो व्यूहाः=समूहाः चिकित्साशास्त्रस्य प्रतिपाद्याः, तथैव हेयम्, हानम्, हेयहेतुः, हानोपायश्चेति चत्वारो व्यूहा मोक्षशास्त्रस्य प्रतिपाद्या भवन्ति । मुमुक्षुभिर्जिज्ञासितत्वात् । तत्र त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति व्यूहशब्देन चैषामुपकरणसंग्रहः ॥" इति ॥ ❀ ॥

ततश्चायमत्र निष्कर्षः—

भोगापवर्गौ हि पुरुषार्थौ । यत्कृते प्रधानप्रवृत्तिरिति सांख्याः । तत्र भोगस्तावज्जन्यभावतया नान्तमतिक्रामति । तेनैष पुरुषार्थोऽपि नात्यन्तपुरुषार्थः । अन्तमतिक्रामतः पुरुषार्थस्यैव अत्यन्तपुरुषार्थत्वात् । अत एव तत्साधनोपदेशपरं शास्त्रमपि नारम्भणीयम् । मन्दप्रयोजनत्वापत्तेः । किन्तु दुःखात्यन्तनिवृत्तिसाधनोपदेशायैव । यतो दुःखात्यन्तनिवृत्तिरेव अन्तमतिक्रामन्ती पुरुषमात्राभिलाषगोचरतया परमपुरुषार्थः । तथाच प्रकृतशास्त्रार्थो ज्ञातः सन् परमपुरुषार्थसमर्थो यतोऽतो भवत्यस्यार्थस्य प्रतिपित्सितत्वमिति ॥ ❀ ॥

दुःखत्रयेति । दुःखत्रयेण=आध्यात्मिकादिदुःखत्रिकेण सह अभिघातात्=असह्यसंबन्धात्[3] प्रतिकूलवेदनीयत्वेन रूपेण संबन्धात्, तदपघातके=दुःखत्रयोच्छेदके हेतौ=विवेके पुरुषाणां जिज्ञासा=विविदिषा ज्ञानेच्छा भवति । ननु शारीरदुःखस्य रसायनादिसेवनात्, मानसस्य मनोज्ञस्त्रीपानभोजनादितः, आधिभौतिकस्य नीतिशास्त्राभ्यासनिरत्ययस्थानसेवनादितः, आधिदैविकस्य मणिमन्त्रौषधादितो दृष्टोपायादेवोच्छेदो भविष्यति, कृतं बह्वायाससाध्येन शास्त्रीयोपायेन

१ "पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे वसेत् । जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥" इति भगवद्गौडपादाचार्योक्तेः । २ ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्त्या विवेकख्यातिरूपहानोपायविषयकेच्छाम् इत्यर्थ इत्यन्ये ॥ ३ अभितो बुद्धितत्त्वपुरुषौ हन्ति गच्छतीत्यभिघातशब्दव्युत्पत्तेः ।

**दृष्टे साऽपार्था चेन् नैकान्तात्यन्ततोऽभावात् ॥ १ ॥**

**एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न**

---

विवेकप्रत्ययेनेति शङ्कते—दृष्ट इति । दृष्टे=लोकप्रसिद्धे सुकरे भेषजादौ दुःखोच्छेदके हेतौ सुलभे सति, सा=दुष्करे दुर्लभे विवेके जिज्ञासा, अपार्था[1]=निरर्थिका, व्यर्था, अन्यथासिद्धा इत्यर्थः । तामिमां शङ्कां परिहरति—नेति । इति चेत् । न । कुतः? एकान्तात्यन्ततोऽभावात्=दृष्टेन हेतुना एकान्तस्य=दुःखनिवृत्तेरवश्यंभावस्य अत्यन्तस्य=पुनर्दुःखानुत्पादस्य च अभावात्=असंभवादित्यर्थः । तत्र, दुःखनिवृत्तावेकान्तत्वम्=उपायानुष्ठानानन्तरं नियमेन भवनशीलत्वम्, अत्यन्तत्वं च भविष्यद्दुःखासहवर्तित्वम् । तथाच दृष्टादुपायात् एकान्तात्यन्तदुःखोच्छेदाभावान्न दृष्टे हेतौ जिज्ञासा कार्येत्यर्थः । दृष्टे उपाये नियमेन दुःखनिवर्तकत्वरूपम् एकान्तत्वं नास्ति, असाध्यरोगाणां भेषजादिनापि निवृत्तेरदर्शनात् । दृष्टोपायजन्यदुःखनिवृत्तौ च भविष्यद्दुःखासहवर्तित्वरूपम् अत्यन्तत्वं नास्ति, निवृत्तरोगाणामपि कालान्तरे पुनरुत्पत्तेर्दृष्टचरत्वादिति भावः । तथा च सूत्रम्—"नदृष्टात्तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्" [ सां० १।२ ] इति ॥ १ ॥ ❀ ॥

तदिदं शास्त्रं चतुर्व्यूहम्, हेयं, हेयसाधनं, हानं, हानसाधनं चेति । मुमुक्षुजिज्ञासितत्वात् । तत्र हेयं सर्वप्रतिकूलवेदनीयतया दुःखम्, हेयहेतुः प्रकृतिपुरुषयोरविवेकः, हानं दुःखस्यात्यन्तनिवृत्तिः परमपुमर्थः, हानहेतुः प्रकृतिपुरुषविवेकद्वारा शास्त्रम् । अतोऽत्र परमपुमर्थस्य स्वत एवेष्टत्वेन तदुपाये शास्त्रे प्रेक्षावतामिष्टसाधनताज्ञानादवश्यं जिज्ञासा भवतीत्याशयेन प्रवृत्तां कारिकां व्याचिख्यासुः शास्त्रविषयस्याऽजिज्ञास्यत्वप्रयोजकखण्डनायाऽऽदौ प्रयोजकविकल्पान् प्रदर्शयति—एवं हीत्यादिना । 'एवं हि' इति निपातसमुदायः 'तर्हि' इत्यर्थकः, उत्तरत्र 'यदि' इति पाठानुरोधात् । 'नाम' इति प्रसिद्धार्थकम् । यदि दुःखं नाम=पीडापरपर्यायं प्रत्यात्मप्रतिकूलवेदनीयं जगति=लोके न स्यात्=विद्येत एवं हि=तर्हि शास्त्रविषयो न जिज्ञास्येत=विविदिष्येत, इत्यन्वयः । अयमर्थः—दुःखनिवृत्त्यर्थं हि भवति प्रेक्षावतां शास्त्रविषयमवगन्तुं प्रवृत्तिः, "दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्" इति महाभारते शान्तिपर्वणि [ १३९।६१ ] व्यासदेववचनात्, दुःखाभावे तु "प्रयोजनं विना न मन्दोऽपि प्रवर्तते" इति न्यायेन को नाम प्रेक्षावान् शास्त्रविषयज्ञानाय प्रयतेत? अपि तु न कश्चिदिति । तथाच शास्त्रविषयज्ञानस्य दुःखनिवृत्तिरूपपरमपुरुषार्थफलकत्वात् जगति दुःखरूपप्रतियोग्यप्रसिद्धत्वे तस्यानुच्छेद्यत्वे वा कुतो लोकानां

---

१ अपगतोऽर्थः=प्रयोजनं यस्या इति विग्रहः ॥ २ "शास्त्रप्रतिपाद्यो विषय एव मुमुक्षुणा जिज्ञास्यः, तं प्रति दुःखत्रयनिवृत्तिरूपप्रयोजनवत्त्वात्, यद् यत् सप्रयोजनं तत् तज् जिज्ञास्यम्, यथा धर्मादिकम्" इति चात्र प्रयोगः ।

स्यात्, सद्वा न जिहासितं, जिहासितं वाऽशक्यसमुच्छेदम्, अशक्यसमुच्छेदता च द्वेधा—दुःखस्य नित्यत्वाद्वा तदुच्छेदोपायाप-

---

वज्ज्ञानेच्छा स्यात्? न हि शशविषाणस्येवासतः पदार्थस्य परिहारोपायः केनापि जिज्ञास्यत इति भावः। ततश्च जगति दुःखाभाव एव शास्त्रविषयस्याजिज्ञास्यत्वे प्रथमो हेतुरित्यत्र फलितम् ॥ १ ॥ ॐ ॥

शास्त्रविषयस्याजिज्ञास्यत्वे द्वितीयं विकल्पं प्रदर्शयति—**सद् वेति**। **सत्**=विद्यमानमपि तद्दुःखं यदि **जिहासितम्**=त्यक्तुमिष्टं न स्यात्, तदापि शास्त्रविषयो न जिज्ञास्येतेति संबन्धः। **अयमर्थः**—दुःखनिवृत्तिकामुकानां हि भवति शास्त्रविषयज्ञानाय प्रवृत्तिः, ये पुनः दुःखनिवृत्तिमेव न कामयन्ते, ते कथङ्कारं शास्त्रविषयबुभुत्सायै प्रयतेरन्? अपि तु न कथंचित् तेषां तत्र प्रवृत्तिर्घटते, प्रवृत्तिं प्रति कामनाया हेतुत्वादिति। **तद् यथोक्तम्**—

"आत्मजन्या भवेदिच्छा, इच्छाजन्या भवेत् कृतिः।
कृतिजन्या भवेच्चेष्टा, चेष्टाजन्या भवेत् क्रिया ॥" इति ॥

न हि सुखवद् अजिहासितस्य हानोपायजिज्ञासा संभवतीति भावः। ततश्च दुःखनिवृत्तिकामनाभाव एव शास्त्रविषयस्याजिज्ञास्यत्वे द्वितीयो हेतुरिति फलति ॥ २ ॥ ॐ ॥

शास्त्रविषयस्याजिज्ञास्यत्वे तृतीयं विकल्पमाह—**जिहासितं वेति**। **जिहासितं**=त्यक्तुमिष्टमपि तद् दुःखं यदि **अशक्यसमुच्छेदम्**=**अशक्यः**=असाध्यः **समुच्छेदः**=निवृत्तिर्यस्य तादृशम्, पुरुषार्थेन दूरीकर्तुमशक्यं स्यात्, तदापि शास्त्रविषयो न जिज्ञास्येतेति संबन्धः। **अयमर्थः**—यत्नसाध्ये हि विषये भवति मानवानां प्रवृत्तिः, प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य[1] कृतिसाध्यताज्ञानस्य[2] च हेतुत्वात्, येषां च "दुःखं नास्मत्पुरुषार्थनिवर्त्यम्" इति विद्यते बुद्धिः, ते कथङ्कारं शास्त्रे प्रवर्तेरन्? अपि तु न तादृशां तत्र प्रवृत्तिर्घटत इति। ततश्च दुःखनिवृत्तेरसाध्यताज्ञानमेव शास्त्रविषयस्याजिज्ञास्यत्वे तृतीयो हेतुरित्यत्र फलितम् ॥ ॐ ॥ ३ ॥ ॐ ननु न हि तादृशं किंचिदपि वस्तु वरीवर्ति, यत् पौरुषेण यत्नेन न सिध्येत्, "न तदस्ति जगत्कोशे शुभकर्मानुपातिना। यत्पौरुषेण शुद्धेन न समासाद्यते जनैः ॥" "एवं पुरुषकारेण सर्वमेव रघूद्वह। प्राप्यते नेतरेणेह तस्मात्स शुभदोऽस्तु ते ॥" इति रामं प्रति वसिष्ठवचनात्, तत्कथं दुःखमशक्यसमुच्छेदं भवितुमर्हतीति जिज्ञासायां दुःखस्याशक्यसमुच्छेदतां व्युत्पादयति—**अशक्येति**। अशक्यः समुच्छेदो यस्य, तस्य भावः तत्ता=दुःखस्य पौरुषेण यत्नेन अनपनेयता इत्यर्थः। प्रकारद्वयमेवाह—**नित्यत्वादिति**। "नाभावो विद्यते सतः" [ गी० २।१६ ] इति भगवदुक्तेर्दुःखस्य ध्वंसाप्रति

---

१ 'इदं मदिष्टसाधनम्' इत्येवम्। कृतिसाध्यत्वज्ञानेऽपि विषभक्षणादौ प्रवृत्त्यदर्शनादिति भावः। २ 'इदं मत्कृतिसाध्यम्' इत्येवम्। कृत्यसाध्ये चन्द्रस्पर्शादौ प्रवृत्त्यदर्शनादिति भावः॥

रिज्ञानाद्वा, शक्यसमुच्छेदत्वेपि च शास्त्रविषयस्य ज्ञानस्यानुपायत्वाद्वा सुकरस्योपायान्तरस्य सद्भावाद् वा।

योगितया न पौरुषेण यत्नेन शक्यं दूरीकर्तुमित्यर्थः। दुःखं हि नित्यपदार्थः, नित्यस्य च पदार्थस्य न भवति कदाचिद् विनाशः, ध्वंसाप्रतियोगित्वस्यैव नित्यपदार्थत्वादिति दुःखमशक्यसमुच्छेदमिति भावः॥ ॐ॥

द्वितीयं प्रकारमाह—तदुच्छेदेति। तस्य=दुःखस्य यः उच्छेदोपायः=निवृत्तिसाधनं तस्य अपरिज्ञानात्=अपरिचयात्-वा, अशक्यसमुच्छेदं तदित्यर्थः। दुःखं हि नाऽऽत्मवत् कूटस्थ[2]नित्यपदार्थं इति शक्यं पौरुषेण यत्नेन दूरीकर्तुं, परं केनोपायेन तद् दूरीकर्तुं शक्यते" इत्युपायविशेषस्यापरिचयाद् दुःखमशक्यसमुच्छेदमेवेति भावः। "असाध्यत्वेन आयुर्वेदावधारितस्य रोगस्येव यस्य उच्छेदोपायः केनापि न परिज्ञायते" इत्यवधारणं, कथं तदुच्छेदोपायो ज्ञातुमिष्टः स्यादिति हृदयम्॥ ॐ॥

शास्त्रविषयस्याजिज्ञास्यत्वे चतुर्थं विकल्पमाह—शक्यसमुच्छेदत्वेऽपीति। शक्यः समुच्छेदो यस्य तस्य भावः तत्त्वं, तथाभूते सत्यपि=उपायपरिज्ञानाद् दुःखस्य दूरीकर्तुं शक्यत्वेऽपि प्रकृतशास्त्रविषयज्ञानस्य अनुपायत्वात्=दुःखनिवृत्तेरसाधनत्वात् "यदि[3] विवेकज्ञानं साधनं न स्यात्," तदापि शास्त्रविषयो न जिज्ञास्येतेति संबन्धः। शास्त्रविषयस्य ज्ञानस्य दुःखसमुच्छेदानुपायत्वावधारणे शास्त्रवक्तारं प्रति न जिज्ञासावसर इति भावः॥ ४॥ ॐ॥

शास्त्रविषयस्याजिज्ञास्यत्वे पञ्चमं विकल्पमाह—सुकरस्येति। सुकरस्य=विवेकज्ञानापेक्षया अनायाससाध्यस्य, उपायान्तरस्य=विवेकभिन्नसाधनान्तरस्य सद्भावात्=विद्यमानत्वात् "यदि विवेकज्ञानं साधनं न स्यात्" तर्ह्यपि शास्त्रविषयो न जिज्ञास्येतेति संबन्धः। शास्त्रविषयस्य ज्ञानस्य दुःखसमुच्छेदोपायत्वावधारणेऽपि ततोऽपि सुलभोपायप्राप्तौ नैव शास्त्रवक्तारं प्रति जिज्ञासावसर इति भावः। ततश्च सुखसाध्यः साधनान्तरसद्भाव एव शास्त्रविषयस्याजिज्ञास्यत्वे पञ्चमो हेतुरित्यत्र फलितम्॥ ५॥ ॐ॥

दुःखाभावादेस्तात्त्विकत्वे सत्येव शास्त्रविषयस्य अजिज्ञास्यता संभवेत्, वस्तुतस्तदेव नेति मनसि निधाय सम्प्रति प्रागुक्तान् पञ्च विकल्पान् क्रमशः खण्डयितुमाद्यौ तावद् दूषयति—तत्रेति। तत्र पञ्चसु विकल्पेषु मध्ये। 'अजिहासितमिति' इत्यत्रत्य 'इति'शब्दः उभयत्रान्वेति। तथाच 'दुःखं नास्ति' इति न, किन्त्वस्त्येव, 'दुःखम् अजिहासितम्' इत्यपि न, किन्तु जिहासितमेवास्तीत्यर्थः। तदेव कारिकांशं पातयन् दर्शयति—अत उक्तमिति। एतदुक्तं भवति—

१ "ध्वंसाप्रतियोगित्वं नित्यत्वम्" इति हि नित्यलक्षणम्। २ कूटोऽयोघनः, तद्वत् निश्चलं यथा तथा तिष्ठतीति कूटस्थः=एकरूपतया सर्वकालस्थायी परिणामादिकार्यान्तरशून्य इत्यर्थः अचलोऽक्रियश्चेति फलितम्। ३ इदमध्याहारलभ्यम्॥ तेन पञ्चम्यन्तपाठोऽपि सङ्गच्छते॥

तत्र न तावद् दुःखं नास्ति, नाप्यजिहासितम् इति, अत उक्तं—"दुःखत्रयाभिघाताद्" इति। दुःखानां त्रयं दुःखत्रयं, तत् खलु आध्यात्मिकमाधिभौतिकमाधिदैविकं च।

तत्राध्यात्मिकं द्विविधं—शारीरं मानसं च, शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं, मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनं, सर्वं चैतद् आन्तरोपायसाध्यत्वादाध्या-

कारिकास्थ 'दुःखत्रयाभिघातात्' इति पदेन "दुःखमेव नास्ति" "सत्त्वेऽपि वा न जिहासितम्" इति शास्त्रविषयस्याजिज्ञास्यत्वप्रयोजकं विकल्पद्वयं निराकृतं भवतीति। 'दुःखत्रयाभिघातात्' इति पदं हि दुःखत्रिकेण सह पुरुषस्य असह्यसंबन्धमाख्याति, ततश्च दुःखसत्ता, असह्यसंबन्धत्वेन तत्परिहर्तव्यता चेति द्वयोः स्फुटमवगतेः शास्त्रविषयो जिज्ञास्य एव दुःखनिवृत्तिकामुकेन मुमुक्षुणेति तत्त्वम्॥ ॐ॥ "त्रिविधं दुःखम्" इति यद्यपि सूत्रं तथापि दुःखस्य वैजात्यानन्तत्वख्यापनायोत्तरपदप्राधान्यमादायाऽऽह—दुःखानामिति। "संख्यापूर्वो द्विगुः" इति स्मरणात् 'त्रिदुःखम्' इति स्यात्तद्व्यावृत्त्यर्थं वा।

किं तद् दुःखत्रयम्? इत्याकाङ्क्षायामाह—तत् खल्विति। आत्मानं=शरीरं मनश्च अधिकृत्य=निमित्तीकृत्य जायमानम् आध्यात्मिकम्। अध्यात्मादित्वाट्ठञ्। अनुशतिकादित्वादुभयपदवृद्धिः। भूतानि व्याघ्रसर्पादीनि अधिकृत्य जातम् आधिभौतिकम्। पूर्ववत् ठञ्, उभयपदवृद्धिः। देवान् अग्निवाय्वादीन् अधिकृत्य प्रवृत्तम् आधिदैविकम्। पूर्ववट्ठञ्, वृद्धिः, 'ठस्येकः'॥ ॐ॥

आध्यात्मिकं विभजते—तत्रेति। दुःखत्रये इत्यर्थः। द्वे विधे प्रकारसामान्यमस्य तत्। प्रकारद्वयमेवाह—शारीरमिति। आत्मानं=देहम् अधिकृत्य जायमानं यत्स्वाभाविकम् अशनायादिकं यच्च धातुप्रकोपजन्यं ज्वरातीसारादि, यच्च आत्मानम्=अन्तःकरणमधिकृत्य जायमानं कामादिनिबन्धनं दुःखं तत्सर्वमाध्यात्मिकमिति आध्यात्मिकशब्दव्युत्पत्तेरिति भावः। तत्र शरीरे भवं शारीरम्। मनसि भवं मानसम्। उभयत्रापि 'तत्र भवः' इत्यण्। 'तद्धितेषु'—इत्यादिवृद्धिः॥ ॐ॥

शारीरं निरूपयति—वातेति। श्लेष्मा=कफः। वैषम्यं=प्रकोपः। मानसं निरूपयति—कामेति। कामः=इष्टविषयाभिलाषः,। क्रोधः=अनिष्टविषयद्वेषः नेत्रलौहित्यादिहेतुर्दोषविशेषः, यस्मिन् सति ताडनाद्युद्यमः स्यात्। लोभः=सत्यपि धने तदादानेच्छा। धर्मविरोधेन परद्रव्यजिघृक्षा लोभ इत्यन्ये[1]। मोहः=हानोपादानविवेचनासामर्थ्यम्। कार्याकार्यहिताहितसारासारहेयोपादेयविवेकासामर्थ्यम्। भयम्=व्याघ्राद्यनिष्टजन्यस्त्रासः। अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम्। ईर्ष्या=परसम्पदुत्कर्षासहिष्णुता[2]। साधारणे वस्तुनि

१ परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते। अभिलाषो द्विजश्रेष्ठ! स लोभः परिकीर्तितः[1]॥ २ सम्पत्=उत्कर्षः। परोत्कर्षगोचरो द्वेष इति यावत्॥

1 विषयेषु न्यायविगर्हिता प्रवृत्तिर्लोभ इत्यत्र तत्त्वम्।

परस्वत्वात् तद्ग्रहीतरि द्वेषः, यथा दायादीनाम् । विषादः=स्त्रीपुत्रादिस्नेहास्पदपदार्थविच्छेदनिमित्तो व्याकुलीभावः । विषयविशेषादर्शनम्='स्थाणुर्वा पुरुषो वा' इत्येवम् अनवधारणात्मकमनेककोटिकं ज्ञानम् । संशय इत्यर्थः । विषयविशेषस्य अदर्शनम्=अज्ञानमिति षष्ठीतत्पुरुषः । एतन्निबन्धनम्=एतत्प्रयुक्तं दुःखं मानसम् । कामादिभिः सर्वैरेव विकारैर्मनस्येव प्रादुर्भूय नरो दुःखीक्रियत इति तन्निबन्धनं दुःखं मानसमित्युच्यत इत्यर्थः ॥ ❀ ॥

यद्यप्येतत् सर्वं दुःखं मानसमेव, दुःखस्य मनोधर्मत्वेन तज्जन्यत्वात्, तथापि "यत् मनोमात्रजन्यं तन्मानसं, यच्च बाह्यनिमित्तसापेक्षं मनोजन्यं तत् शारीरम्" इत्येवं मनोजन्यत्वाजन्यत्वाभ्यां विशेष इति विवेकः ॥ ❀ ॥

'कथमेतयोराध्यात्मिकत्वम्'? इति शिष्यजिज्ञासायां तयोराध्यात्मिकत्वे प्रवृत्तिनिमित्तमाह—**सर्वं चेति** । एतत्=अनुपदमेव प्रदर्शितं सर्वं=शारीरं मानसं च दुःखम् आन्तरोपायसाध्यत्वात्=आन्तराः=शरीराभ्यन्तरे वा अन्तःकरणे वा भवाः=सत्तावन्तो य उपायाः=अन्नाम्बुभेषजदमदयादानविवेचनादयः साधनविशेषाः, तैः साध्यत्वात्=निवर्तनीयत्वाद् दुःखमपि उपचारात् आन्तरं सत् आध्यात्मिकमित्युच्यत इत्यर्थः । तत्र "अन्नम् अन्तर्गतं सद् बुभुक्षां वारयति, जलं चान्तर्भवं सत् पिपासां दूरीकरोति, औषधं चान्तरं सत् ज्वरादिकमपनयति, दमश्च कामं शिथिलयति, दया च क्रोधं शमयति, दानं च लोभं विनाशयति, विवेचनं च मोहमुन्मूलयति," इत्येवम् अन्नादिभिः सर्वैरपि आन्तरैरेव सद्भिः तत्तद् दुःखमपनीयत इति आन्तरोपायसाध्यत्वात् आन्तरं सत् आध्यात्मिकमित्युच्यत इति भावः ॥ ❀ ॥

ननु मानसस्य दुःखस्याऽऽन्तरोपायनिवर्त्यत्वेऽपि शारीरस्य तु दुःखस्य नान्तरोपायसाध्यता घटते, भेषजादीनां बाह्यत्वेन आन्तरत्वाभावात्, न च शरीरसंसर्गेण भेषजादीनामान्तरत्वमिति वाच्यम्, तथा सति बाह्यानां मणिदण्डादीनामपि आन्तरत्वापत्तेः, तेऽपि हि शरीरसंसर्गिण एव सन्तो दुःखं शमयन्ति, न यत्र तत्र स्थिता इति चेत् । अत्राहुः—सत्यं भेषजादयो बाह्यास्तथापि यथान्तःप्रविष्टास्ते ज्वरादिकं शमयन्ति, न तथा मणिदण्डादयोऽन्तः

---

१ 'असाध्योऽयं रोगः' इत्यादौ साध्धातोर्निवृत्तिरूपार्थदर्शनात् साध्यशब्दोऽत्र निवर्तनीयपर्याय इति व्याचष्टे—निवर्तनीयत्वादिति । २ दानं=परस्वत्वापत्तिफलकः स्वस्वत्वत्यागः । दया=दुःखितेषु भूतेषु कृपा । दमो=बाह्येन्द्रियसंयमः । अन्नं चतुर्विधम्, भक्ष्यं भोज्यं लेह्यं चोष्यं चेति । तत्र यत् दन्तैरवखण्ड्यावखण्ड्य भक्ष्यतेऽपूपादि तद् भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते सूपौदनादि, तद् भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते द्रवीभूतं गुडादि, तत् लेह्यम् । यत्तु दन्तैर्निष्पीड्य रसांशं निगीर्य अवशिष्टं त्यज्यते, यथेक्षुदण्डादि, तत् चोष्यमिति भेदः ॥

त्मिकं दुःखम् । बाह्योपायसाध्यं च दुःखं द्वेधा, आधिभौतिकम् आधिदैविकं च । तत्राधिभौतिकं-मानुषपशुसरीसृपस्थावरनिमित्तम्,

---

प्रविश्य तथाकुर्वन्ति, अपि तु बहिरवस्थिता एव तत्तद् दुःखमपनयन्तीति बाह्यत्वाविशेषेऽपि अन्तःप्रवेशत्वाप्रवेशत्वाभ्यां विशेष इति विवेकः ॥ ❀ ॥

यद्वा[1] आन्तरोपायसाध्यत्वात्' इत्यत्र साध्यशब्दो जन्यपर्यायः[2] । तथाच आन्तरैः=शरीराभ्यन्तरभवैः मनोभवैर्वा उपायैः=धातुवैषम्यादिभिः कामादिभिर्वा निमित्तविशेषैः साध्यत्वात्=जन्यत्वात् शारीरं मानसं च आन्तरमित्युच्यते शरीरमनोबहिर्भूतैः सिंहव्याघ्रवर्पातपादिनिमित्तविशेषैर्जन्यत्वाच्च आधिभौतिकम् । आधिदैविकं च बाह्यमित्युच्यत इति व्याख्येयम् ॥ ❀ ॥

आन्तरदुःखवत् बाह्यदुःखमपि द्विविधमित्याह—बाह्येति । बाह्यैः=शरीराद् बहिर्भवैः उपायैः=दण्डछत्रमणिमन्त्रादिभिः साधनविशेषैः साध्यं=निवर्तनीयं जन्यं वा दुःखं बाह्यमित्युच्यते, तच्च द्वेधा=द्विप्रकारमित्यर्थः । प्रकारद्वयमेवाह—आधीति । कुक्कुरव्याघ्रादिजन्यं दुःखं दण्डादिना बाह्यसाधनेन शक्यं दूरीकर्तुमिति बाह्यसाधनसाध्यत्वात्=आधिभौतिकं दुःखं बाह्यमित्युच्यते, एवम् आतपादिजन्यं दुःखं छत्रादिना बाह्यसाधनेन, यक्षादिजन्यं दुःखं च बाह्यसाधनेन मण्यादिना शक्यमपनेतुमिति बाह्योपायसाध्यत्वात् आधिदैविकं च दुःखं बाह्यमित्युच्यत इत्यर्थः ॥ ❀ ॥

आधिभौतिकं निरूपयति—मानुषेति । पशवः=ग्राम्याश्चतुष्पदाः गवाश्वादयः, पक्षिणः=पतत्रवन्तो गृध्रादयः, सरीसृपाः=अल्पचरणाः चरणरहिता वा सर्पशतपदीवृश्चिकादयः, स्थावराः=प्रायः प्रत्यक्षचेष्टारहिता विषवृक्षादयः, प्रकृते स्थावरपदस्य विषवृक्षादिपरत्वात् । भूतानि=जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि[3]= चौरवैरिकुक्कुरसिंहव्याघ्रमहिष,-पक्षिसर्प,-यूकादंशमशकवृश्चिकनक्रमकर,-वृक्षशि-

---

१ नन्वस्मिन् व्याख्याने भेषजादीनामाभ्यन्तरत्वानुपपत्तिः, अपामार्गरूपभेषजविशेषेण हस्ते बद्धेन सता अन्तरप्रविश्यैव ज्वरादेः शमनादित्यभिप्रेत्य व्याख्यान्तरमाह—यद्वेति ।
२ 'जलहरणादिकं घटसाध्यम्' इत्यादौ साध्धातोर्जन्यार्थकत्वदर्शनादिति भावः ॥
३ तत्र गर्भवेष्टनचर्मपुटकं जरायुः, ततो जाता जरायुजाः=मनुष्यपशुमृगादयः । अण्डात् जाता अण्डजाः=सर्पविहङ्गमादयः । स्वेदात् जाताः स्वेदजाः=कृमिदंशाद्याः । उद्भिद्य भूमिं जाता उद्भिज्जाः=तरुगुल्माद्याः इति विवेकः । तदेवाह—चौरवैरीति । अत्र मनुः—"पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः । यानि चैवंप्रकाराणि स्थलजान्यौदकानि[1] च ॥ स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् । ऊष्मणश्चोपजायन्ते यच्चान्यत्किञ्चिदीदृशम् ॥ उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः ।" इति ।

---

1 स्थलजानि=कृकलासादीनि । औदकानि=शंखादीनि । अन्यत्=दंशादिसदृशं पुत्रिकापिपीलिकादि जायते ।

आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनम् ॥

तदेतत्प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते

---

लाप्रभृतीनि चराचरजातीयानि अधिकृत्य=निमित्तीकृत्य जायमानं यद्दुःखं तदाभौतिकमिति आधिभौतिकशब्दव्युत्पत्तेरिति भावः ॥ ॐ ॥

आधिदैविकं निरूपयति—यक्षेति । यक्षाः=देवयोनिभेदाः । विनायकावेशः= विनायकेनाऽऽक्रमणम् । ग्रहावेशः=पिशाचादिभिराक्रमणम् । तत्र विनायकोपसर्गो योगियाज्ञवल्क्येनेत्थं प्रादर्शि—

"विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः । गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत । स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ काषायवाससश्चैव क्रव्यादांश्चाधिरोहति । अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुगतं परैः । विमना विफलारम्भः संसीदत्यनिमित्ततः ॥ तेनोपसृष्टो लभते न राज्यं राजनन्दनः । कुमारी च न भर्तारमपत्यं गर्भमङ्गना ॥ आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा । वणिग् लाभं न चाप्नोति कृषिं चापि कृषीवलः ॥" इति ॥ ॐ ॥

देवान्=यक्षादीन्, दिवः प्रभवान् वातवर्षाऽऽतपशीतोष्णादीन् वा अधिकृत्य जायमानं यद् दुःखं तद् आधिदैविकमिति आधिदैविकशब्दव्युत्पत्तेरिति भावः ॥ॐ॥

अत्रेदं बोध्यम्—अत्र कायिकमानसिकदुःखयोरेकीकरणेन दुःखत्रयाभिधानम् । वस्तुतस्तु दुःखं द्विविधम्—आन्तरं बाह्यं च । आद्यं द्विविधं शारीरं मानसं च । अन्त्यमपि द्विविधम्, 'आधिभौतिकम् आधिदैविकं च' 'इत्येवं चतुर्विधं दुःखम्' । अत एव "बाह्योपायसाध्यं च दुःखं द्वेधा" इति उभयसाधारणधर्मोपपादकाग्रिमतद्ग्रन्थोऽपि सङ्गच्छते । अन्यथा तदुपपादनस्य निष्प्रयोजनत्वापत्तेरिति ॥ ॐ ॥

परमार्थतस्तु दुःखं द्विविधमेव, शारीरं मानसं च । देवसम्पादितस्य भूतकृतस्य वा दुःखस्य वस्तुतः मनःशरीरयोरेव जायमानत्वात्, नहि शरीरं मनश्च विहाय तत्कृतेऽन्यत् स्थानमस्ति येन आधिदैविकस्याधिभौतिकस्य पार्थक्येन कल्पनं सार्थकं स्यात् ।

तस्मात् त्रिधा वा चतुर्धा वा तत्प्रपञ्चनं केवलं शिष्यधीवैशद्यार्थमेवेति नव्याः ॥

एवं च सर्वमेव शारीरं दुःखम् आधिभौतिकमिति बाह्यमिति चोच्यते, मानसिकं च सर्वं दुःखम् आध्यात्मिकमिति आन्तरमिति चोच्यते, इति आधिदैविककल्पना व्यर्थेति सारम् ॥ ॐ ॥

प्रयोजकखण्डनावसरे यदुक्तं 'न तावद् दुःखं नास्ति' इति, तत्स्थिरीकरोति—तदेतदिति । रजःपरिणामभेदः=बुद्धितत्त्ववर्तिरजोगुणकार्यविशेषात्मकं प्रत्या-

---

१ जङ्गमाजङ्गमेत्यर्थः ॥ २ परिणामभेदः=कार्यविशेषः । परिणामो नाम तत्त्वानामन्यथाभावः, पूर्वधर्मपरित्यागपूर्वकधर्मान्तरग्रहणम् । यथा दुग्धस्य दधि मृदो वा घटः । दुग्धं हि स्वनिष्ठविलक्षणमाधुर्यातिद्रवीभूततारेचकतारूपं धर्मं परित्यज्य काठिन्यादिरूपधर्मान्तरं परिगृह्णद् दधि प्रोच्यते । ततश्च सांख्ये परिणामेति कार्यस्य संज्ञेति बोध्यम् ॥

प्रत्याख्यातुम्, तदनेन दुःखत्रिकेणाऽन्तःकरणवर्तिना चेतनाशक्तेः प्रतिकूलतयाऽभिसंबन्धोऽभिघात इति, एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः । यद्यपि न सन्निरुध्यते दुःखं तथापि तदभि-

---

त्मवेदनीयम्=आत्मानमात्मानं प्रतीति वीप्सायामव्ययीभावसमासे प्रत्यात्मं तेन वेदनीयं=साक्षात्कृतमित्यर्थः । सकलपुरुषानुभवसिद्धमिति यावत् । एतेन दुःखसत्त्वेऽनुभव एव मानमिति सूचितम् । तदेतत्=अनुपदोक्तं त्रिविधं दुःखं प्रत्याख्यातुं='दुःखं नास्ति' इत्येवं निराकर्तुं न शक्यते=पार्यते अनुभवसिद्धस्या-पलापायोगादित्यर्थः । यद्धि विद्यते सर्वानुभवसिद्धं, न तत् शक्यते जातु निराकर्तुम्, अनुभवसिद्धस्य प्रत्याख्यानासंभवात्, दुःखं चास्ति निखिलजनानु-भववेदनीयम् । 'अहं दुःखी' इति प्रतीतेर्विश्वजनीनत्वादिति कथङ्कारं तदप-लापः शक्यः कर्तुमित्यकामेनापि दुःखसत्तानूनमभ्युपेया । ततश्च "दुःखं नाम जगति नास्ति" इति यदुक्तं तत् केवलं साहसमात्रमेव । सम्यक् चानेन प्रथमविकल्पो निराकृतो भवतीति सर्वथा जिज्ञास्य एव शास्त्रविषयो मुमुक्षु-णेति तत्त्वम् ॥ ❀ ॥

सम्प्रति "सद् वा न जिहासितम्" इति द्वितीयविकल्पनिराकरणाय अभिवा-तपदं विवृणोति—तदनेनेति । तदनेन=अनुपदोक्तेन सर्वानुभवसिद्धेन दुःखत्रिकेण=आध्यात्मिकादिदुःखत्रयेण सह यः चेतनाशक्तेः=दृक्शक्तेश्चेतनस्य पुरुषस्य प्रतिकूलतया=अनिष्टतया द्वेषविषयतया अभिसंबन्धः=असह्यः संबन्धः सः अभिघातः=अभिघातपदस्यार्थ इत्यर्थः । "आत्मा, पुरुषः, दृक्शक्तिः, चेतनः, चेतनाशक्तिः, चितिः" इत्यनर्थान्तरम् । 'दुःखं नास्ति चेतनधर्मः' इति बोधनाय 'अन्तःकरणवर्तिना' इति दुःखविशेषणम् । ननु यदि दुःखं नास्ति चेतनधर्मः, तर्हि कथं चेतनस्य तेन संबन्ध इति चेत् । बुद्धितत्त्वप्रति-बिम्बितत्वेन तत्सारूप्यापत्त्येति गृहा[1]ण ॥—यथा चैतत् तथोक्तम् 'अजा येताम्'—इत्यस्य व्याख्याने प्रागत्रैवेति तत्रैव कणेहत्यालोचनीयम् ॥ ❀ ॥

एतेन यथा 'दुःखं न जिहासितम्' इति द्वितीयो विकल्पो निराकृतो भवति, तथा दर्शयति—एतावतेति । एतावता=अभिघातपदेन दुःखसंबन्धस्य असह्य-त्वाख्यानेन प्रतिकूलवेदनीयत्वं=स्ववृत्तितया इष्यमाणत्वाभावरूपं द्वेषविषयत्वं जिहासायां=दुःखत्यागेच्छायां हेतुः=बीजं कारणम् उक्तः=कथितः । यतो दुःख-संबन्धोऽनिष्टोऽतस्तज्जिहासितमिति 'अभिघातात्' इति हेतुपञ्चम्या प्रतिपादित-मित्यर्थः ॥

---

१ एतदुक्तं भवति—यद्यपि सांख्यानां दुःखादि सर्वं बुद्धेरेव; न पुरुषस्यात्मनः । तस्य कूटस्थनित्यत्वेन दुःखादिपरिणामानभ्युपगमात् । तथापि दुःखादिमत्या बुद्धेः सन्निधानात् पुरुषस्यात्मनः तत्र प्रतिबिम्बिततया बुद्धेरेव वा तत्र प्रतिबिम्बिततया दुःखादि च्छायापत्तौ विवेकाग्रहाभावेन सूर्ये बिम्बे जलकम्पादिवदौपाधिकं पुरुषेऽपि दुःखादि सर्वमस्त्येवेति ॥

अतः शक्यः कर्तुमित्युपरिष्टान्निवेदयिष्यते ।

अयं भावः—इह हि निर्गले मायिके सर्गे किं लौकिकाः किं परीक्षकाः सर्वेऽपि प्राणिनो दुःखमेव प्रतिकूलतया जानानास्तत्परिहाराय, सुखमेवानुकूलमिति तत्प्राप्त्यै च निरन्तरं प्रयतमानाः समुपलभ्यन्ते। न हि कोऽपि तादृक् प्राणी दृष्टिपथमवतरति, यो दुःखान्नोद्विजते सुखं च नाभिवाञ्छति । "दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्" इति भगवद्व्यासदेववचनात् । तत्रापि सर्वेषां सांसारिकसुखानां दुःखसंभिन्नतया परिणामे दुःखदायकतया च समीक्ष्यकारिणो दुःखसंभिन्नं सुखं विहाय दुःखपरिहारायैव प्रायशः प्रवर्तन्ते। तत्सिद्धमेतत्—ये हि प्राकृता जनास्ते सामान्यरूपेण दुःखनिवृत्तिं वैषयिकसुखं च कामयन्ते, ये पुनर्विवेकिनो विचारशीलाः प्रेक्षावन्तस्ते तात्कालिकदुःखनिवृत्तिं परिणामदुःखमिश्रितविषयसुखप्राप्तिं च परमपुरुषार्थतया अमन्यमाना आत्यन्तिकदुःखनिवृत्तिं दुःखासम्भिन्नसुखप्राप्तिं चैव परमपुरुषार्थतया मन्यन्त इति ।

इत्थं सर्व एव प्राणिसंघः स्वानुकूलवेदनीयेन संबन्धमभिलष्यति, न प्रतिकूलवेदनीयेन, अथ जातु जाते प्रतिकूलवेदनीयेन संबन्धे को वा तं निवारयितुं न प्रयतते? अपितु सर्वोऽपि प्राणिनिवहः प्रतिकूलसंबन्धपरिहाराय चेष्टमानः परिदृश्यते, पुरुषेणापि हि विद्यते प्रतिकूलतया दुःखस्य संबन्ध इति 'अभिघातात्' इति हेतुपञ्चम्या आख्यायत इति कथङ्कारं स तन्निवृत्त्यै न यतेत? अपि तु नूनं तेनास्ति दुःखं सर्वथा परिहर्तव्यमेवेति यदुक्तं 'सद्वा न जिहासितम्' इति, तत् सर्वथा निराकृतं भवति, दुःखस्य प्रतिकूलवेदनीयत्वेन सर्वथा सर्वदा जिहासाविषयत्वादिति ॥ ६३ ॥

ननु भवतु दुःखस्य त्यागेच्छा, परं सत्कार्यवादिनां सांख्यानां मते "नासत उत्पादो न वा सतो निरोधः" इत्यङ्गीकारात् सतो दुःखस्य विनाशासंभवात् व्यर्थैव सांख्यशास्त्रविषयिणी जिज्ञासेत्याशङ्क्य "जिहासितं वा अशक्यसमुच्छेदम्" इति तृतीयविकल्पनिराकरणाय दुःखनिवृत्तिमुपपादयति—यद्यपीति । यद्यपि दुःखं न सन्निरुध्यते=समूलमुच्छेत्तुं न शक्यते, तस्य नित्यत्वादिति भावः । तथापि तदभिभवः=तस्य=दुःखस्य अभिभवः=विनाशसामग्रीसम्पादनकृतः प्रतिरोधः, शान्तावस्थापादेन तदनाविर्भावः, कर्तुं शक्यः=पार्य इत्यर्थः । अन्ये तु "यतो दुःखं सत्=नित्यम् अतो 'नाभावो विद्यते सतः' इत्युक्तेर्न निरोद्धुं शक्यम्" इति व्याचक्षते । अनागतस्य दुःखस्य विवेकख्यात्या शक्याऽनुत्पत्तिः कर्तुमिति सरलार्थः ॥ ननु केन प्रकारेण तदभिभवः ? इत्याकाङ्क्षायामाह—इत्युपरिष्टादिति । "एवं तत्त्वाभ्यासात्"—इति (६४) चतुःषष्टिकारिकायामित्यर्थः । तत्र हि पुरुषान्तःकरणयोर्विवेकख्यात्या अन्तःकरणवर्तिनो दुःखस्य अनात्मीयत्वेन चिच्छक्तेरविषयत्वं प्रतिपादयिष्यते । अन्ये तु 'निवृत्तप्रसवाम्'

१ अत्र व्याख्यायां 'सम्' इति न उपसर्गः, किन्तु दुःखविशेषणं 'सत्' इति । संहितायां तथा च्छेदोऽपि शक्यः कर्तुमिति तदाशयः ।

इति (६५) पञ्चषष्टिकारिकायामित्यर्थः । अत्रापि विवेकख्यात्यैव तदभिभवो ध्वन्यते ॥ ⊛ ॥

अयं भावः—नैयायिका यथा उत्पत्तेः प्राक् भावस्य कारणे प्रागभावः, नाशकसामग्र्या च सतो भावस्य कारणे प्रध्वंसाभाव इति स्वीकुर्वन्ति, न तथा सांख्याः, तेषां सत्कार्यवादित्वेन असत उत्पादस्य सतो विनाशस्य चासंभवात् । किन्तु उत्पत्तेः प्राक् सूक्ष्मावस्थया कारणे वर्तमान एव भावोऽनागतावस्थावान् 'अव्यपदेश्य' इत्यभिधीयते, कारणव्यापारेण च स्थूलावस्थामापाद्यमानो वर्तमानावस्थावान् 'उदित' इत्युच्यते, नाशकसामग्र्या च कारणरूपतामापन्नः सन् अतीतावस्थावान् 'शान्त' इत्याख्यायते । तदेतत् "शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी" [यो० ३ । १४] इत्यत्र पातञ्जले व्यक्तम् । तथाच दुःखस्य यद् अतीतावस्थीकरणं तदेव सांख्यशास्त्रे दुःखोच्छेदो नात्यन्तनाश इति सिद्धम् ॥ ⊛ ॥

ननु यथा अनागतावस्थं सूक्ष्मं कार्यं कारणव्यापारेण पुनर्वर्तमानावस्थं सम्पद्यते, तथैव अतीतावस्थापन्नमपि कार्यं स्थूलावस्थां कुतो नापद्यते, सूक्ष्मत्वावि-

१ वस्तुतोऽग्रे न क्वापि दुःखाभिभवप्रक्रिया स्फुटमुपवर्णितेतीहैव वक्तुमुपक्रमते—अयं भाव इति ॥ २ उत्पत्तेः प्राक् कारणे कार्यस्याभावः प्रागभावः । यथा तन्तुषु पटाभावः । स चानादिरुत्पत्तेरभावात् । विनाशी च कार्यस्यैव तद्विनाशरूपत्वात् । उत्पन्नस्य कारणेऽभावः प्रध्वंसाभावः । यथा भग्ने घटे कपालमालायां घटाभावः । स च मुद्गरप्रहारादिजन्यः । स चोत्पत्तिमानपि अविनाशी, नष्टस्य कार्यस्य पुनरनुत्पत्तेः ॥' इति हि तार्किकाः । ३ तत्र मृदादिद्रव्ये वर्तमाना पिण्डघटाद्युत्पत्तियोग्यतारूपा शक्तिर्धर्मः । मृत्तिकादिश्च धर्मी । यद्यपि मृदि घटोत्पत्तियोग्यतारूपा शक्तिर्न प्रत्यक्षतोऽनुभूयते, तथापि "मृद एव घटो न वालुकातः, तन्तुभ्य एव पटो न मृत्तिकातः" इत्येवं कार्योत्पत्तिनियमेनैव तत्र तादृशी शक्तिरनुमीयते । तत्र प्रथमं मृत्तिकारूपधर्मिणः चूर्णरूपो विकारो भवति, ततः पिण्डरूपः, ततो घटरूप इति क्रमः । तत्र यदा चूर्णेन पिण्डो निर्मीयते तदा वर्तमानदशामापन्नः पिण्डः, अतीतावस्थाशालिचूर्णात् अनागतावस्थाशालिनो घटाच्च भिन्नोऽपि न मृत्तिकातो भिद्यते, तस्याः सर्वत्रानुगतत्वात् । यदा तु स पिण्डोऽपि अव्यक्तरूपेण मृत्तिकारूप आसीत्, तदा तु तस्य न कस्माच्चिद् भेदो भवति, मृत्तिकारूपधर्मिण एव सर्वत्रानुगतत्वात् । तथाच चूर्णपिण्डघटरूपाणां धर्माणां परस्परं भेदे सत्यपि योऽभिन्नरूपेण, सर्वत्रानुगतो भासते, स मृत्तिकारूपो धर्मीति सिध्यति । तस्य च मृत्तिकारूपधर्मिणः शान्तादयस्त्रयो धर्मा भवन्ति । तत्र ये स्वकार्यं कृत्वा उपरताः स्वकारणलीना इति यावत् ते शान्ता अतीता इत्याख्यायन्ते । ये च धर्माः स्वकार्यं कुर्वाणा विद्यन्ते, तेऽमी उदिता वर्तमाना इत्यभिधीयन्ते, उदयमिता इति तद्व्युत्पत्तेः । ये च धर्माः स्वकारणे सूक्ष्मरूपेणावस्थितास्ते तु धर्मा अपदेश्या इति अनागता इति भविष्यन्त इति च व्याह्रियन्ते । शक्तिरूपेण स्थितत्वात् भेदेन व्यपदेष्टुमशक्या इति तद्व्युत्पत्तेः । शक्तिश्च कार्यस्यानागतावस्था चेत्यनर्थान्तरम् ॥ इत्ययं बालोपयोगी मार्गो विवृतः ॥

## तस्मादुपपन्नं–'तदपघातके हेतौ' इति ।

शेषादिति चेत् । मैवम् । उपलब्धिविरहात् । यदि हि अतीतमपि कार्यं पुनर्वर्तमानं भवेत्, तदा "तदेवेदम्" इत्येवं प्रत्यभिज्ञायमानं कदाचिदुपलभ्येत, न चोपलभ्यते चेति अतीतावस्थस्य कार्यस्य पुनरनुन्मज्जनमेवावसीयेत इति । यदाहुर्योगभाष्यकाराः "यथाऽनागतवर्तमानयोः पूर्वपश्चिमता, नैवमतीतस्य, तस्मान्नातीतस्यास्ति समनन्तरः "तदनागत एव समनन्तरो भवति वर्तमानस्येति" [३।१४] इति ॥ ❀ ॥

तत्र यदतीतं दुःखं तत्तु स्वयमेव भोगेन अतीतावस्थां यातमिति न तद् हेयकोटिं प्रवेष्टुमर्हति, एवं यद् वर्तमानं दुःखं तदपि भोगारूढतया क्षणान्तरे स्वयमेव यास्यतीति न तस्यापि निवृत्तिः साधनीया भवितुमर्हति । तस्मात् परिशेषाद् अनागतं ( भावि ) दुःखमेव अतीतावस्थां यापनीयम् । तद् यथोक्तं समानतन्त्रेऽपि—

"हेयं दुःखमनागतम्" [ यो० २।१६ ] इति ॥

न चागतदुःखसद्भावे मानाभावेन कथं तन्निवृत्तिः साधनीया भवेदिति वाच्यम् । यावच्चित्तकालावस्थायिकार्यजननशक्त्या यावच्चित्तमनागतदुःखानुमानात्, स्पष्टं चैतत् 'सर्वं सर्वात्मकम्'—[ ३।१४ ] इत्यादिना योगभाष्य इति तत्रैव कणेहत्यालोचनीयम् ॥ ❀ ॥

प्रतिकूलवेदनीयत्वेन दुःखस्य जिहासितत्वात् स्वापघातकजिज्ञासाहेतुत्वं संभवतीत्युक्तमुपसंहरति—**तस्मादिति** । यतो दुःखस्याभिभवः कर्तुं शक्यः, अतः तदपघातके=दुःखत्रयाभिभावके हेतौ पुरुषाणां जिज्ञासा जायत इति यत्कारिकायामुक्तं तत् उपपन्नं=युक्तं समीचीनम् इत्यर्थः । 'तदपघातके' इत्यत्रत्यतच्छ-

---

१ तत्तेदन्तोभयविषयकं ज्ञानं प्रत्यभिज्ञा । (वे० प०) अतीतावच्छिन्नस्य वर्तमानभेदावगाहि प्रत्यक्षम् । सा च यथा—स एवायं घटः, यो मया पूर्वमुपलब्धः' इत्याकारिका । ( प० च० ) "पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवाप्रत्यभिज्ञा" (त० भा०) यथा वा–"स एवायं चैत्रः" इति प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानम् । (स०प्र०) एतदुक्तं भवति—पूर्वदृष्टस्य कालान्तरे पुनरिन्द्रियसंप्रयोगे "तदेवेदम्" इत्याकारकं ज्ञानमेव प्रत्यभिज्ञा ॥ २ निश्चीयते । ३ अनागताद् अनन्तरं वर्तमानो भवति, वर्तमानाद् अनन्तरम् अतीतो भवति, अतीताद् अनन्तरं तु पुनर्वर्तमानो न भवति, अनागतवर्तमानयोरेव पूर्वपश्चिमभावस्य दृष्टचरत्वात्, अतीतवर्तमानयोश्चापरिदृश्यमानत्वात् इत्यर्थः । ४ ननु यज्जिहासितं दुःखं तत् कीदृगिति जिज्ञासायां तद् विवेचयति—तत्रेति । ५ "चित्ततत्त्वम् अनागतदुःखसत्तावद् भवितुमर्हति, यावच्चित्तावस्थायिकार्यजननशक्तिमत्त्वात्, वह्निवत्" इत्यनुमानशरीरम् । यावत्कालं वस्तु तिष्ठति, तावत्तच्छक्तिरपि । शक्तिश्च कार्यस्यानागतावस्था चेत्यनर्थान्तरम् । एवंच चित्तरूपद्रव्यस्थितिपर्यन्तम् अनागतावस्थया तत्र दुःखस्थितिरपि निर्बाधैवेति मनसि निधायाऽऽह—**सर्वं सर्वात्मकमिति** । विस्तरस्तु तत्रैव ।

**तस्य दुःखत्रयस्यापघातकस्तदपघातकः, उपसर्जनस्यापि बुद्ध्या सन्निकृष्टस्य तदा परामर्शः ।**

**अवघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः ।**

---

१पदार्थमाह—दुःखत्रयस्येति । ननु तच्छब्देन दुःखत्रयस्य परामर्शो न संभवति, तस्य 'दुःखत्रयाभिघातात्' इत्यत्र समासे गुणीभूतत्वात्, सर्वनाम्नां चोत्सर्गतः प्रधानपरामर्शित्वनियमादित्याशङ्क्य समाधत्ते—उपसर्जनस्यापीति । समासेन गुणीभूतस्यापि बुद्ध्या=मानस्या कल्पनया समाकृष्टस्य=ज्ञानारूढस्य दुःखत्रयस्य तदा=तच्छब्देन परामर्शः=उन्नयनम् अध्याहार इत्यर्थः ।

अयं भावः—नात्र तच्छब्देन पूर्वाभिहितं दुःखत्रयं परामृश्यते येन भवच्छङ्कनमवकाशं लभेत, किन्तु बुद्ध्याकृष्टत्वेन ज्ञानारूढं यद् दुःखत्रयं तदेव परामृश्यते, एवंविधस्थले सर्वनाम्नां बुद्धिस्थपरामर्शकत्वस्यैवौत्सर्गिकत्वात् । यदाहुः—"अथ शब्दानुशासनम्" इति प्रस्तावे "केषां शब्दानाम्" इति महाभाष्यप्रतीकमुपादाय प्रदीपकाराः—"उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात् प्रत्यवमर्शः, यथा—"राजपुरुषोऽयम्" इत्युक्ते "कस्य ? राज्ञः" इति ।

तथाच प्रकृते तच्छब्दस्य बुद्ध्याकृष्टज्ञानारूढदुःखत्रयपरामर्शकत्वेन भवत्येव तदा दुःखत्रयस्य परामर्श इति ॥

ननु भवतु यस्मिन् कस्मिंश्चिद् दुःखत्रयोच्छेदके हेतौ मानवानां जिज्ञासा, तथापि कथं प्रकृतशास्त्रविषयजिज्ञासेत्याशङ्क्य 'शास्त्रविषयज्ञानस्यानुपायत्वाद्वा' इति चतुर्थं विकल्पं निराकुर्वन् समाधत्ते—अवघातकश्चेति । चशब्दोऽवधारणार्थकः, स च 'शास्त्रप्रतिपाद्यः' इत्यस्यानन्तरं द्रष्टव्यः । प्रकृतशास्त्रप्रतिपाद्यस्तत्त्वविवेक एव दुःखोच्छेदको हेतुरिति युक्ता तत्र जिज्ञासेत्यर्थः ॥ सम्प्रति "सुकरस्योपायान्तरस्य सद्भावाद्वा" इति पञ्चमं विकल्पं निराकुर्वन् "शास्त्रप्रतिपाद्य एव" इत्येवकारव्यवच्छेद्यमाह—नान्य इति । शास्त्रप्रतिपाद्यतत्त्वविवेकं विहाय इतरो दुःखोच्छेदको हेतुर्नास्तीत्यर्थः ।

---

१ अपघातकावघातकशब्दौ समानार्थकाविति 'अपघातक' इति पाठोऽपि साधुरेव । २ 'देवदत्तपुत्र आयाति तं पश्य' इत्यादौ तदादेः प्रधानपरामर्शकत्वस्य व्युत्पत्तिसिद्धत्वादिति भावः । ३ सर्वनामानि न केवलं प्रधानपरामर्शकान्येव, किन्तु बुद्धिस्थपरामर्शकान्यपि । अत एव "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इत्यादेर्नासङ्गतिः । ततश्च तच्छब्दस्य सामर्थ्यद्वयं—पूर्वाभिहितवस्तुपरामर्शकत्वं ज्ञानारूढपरामर्शकत्वं चेति । तथाच प्रकृते न तच्छब्दः पूर्ववस्तुपरामर्शकः, अपि तु बुद्ध्याकृष्टज्ञानारूढपरामर्शक इति भावः । ४ उत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह—उत्तरपदेति । ततः पृथगुपस्थितविषयस्येत्यर्थः । बुद्ध्या=मानस्या । यद्वा "वाक्यजन्यबुद्ध्या" इति तद्व्याख्यायाम् उद्द्योतकाराः ।

अत्राऽऽशङ्कते—"दृष्टे साऽपार्था चेद्" इति।

अयमर्थः—अस्तु दुःखत्रयं, जिहासितं च तद् भवतु, भवतु च तत् शक्यहानं, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुं, तथाप्यत्र प्रेक्षावतां न युक्ता जिज्ञासा,

दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात्।

तथाच लौकिकानामाभाणकः—"अर्के चेन्मधु विन्देत किमर्थं

"यं लब्ध्वा चापरं भावं मन्यते नाधिकं ततः। यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते" [ गी० ६।२२ ] इति भगवद्वचनादिति भावः॥ ® ॥

'नान्यः' इत्येव द्रढयितुं शङ्कामुत्थापयति—अत्राऽऽशङ्कत इति। अत्र='नान्यो दुःखोच्छेदक उपायः' इत्यंशे। शङ्काशरीरमाह—दृष्टे साऽपार्था चेदितीति। व्याख्यातं प्राक्। शङ्काग्रन्थस्य तात्पर्यमुद्घाटयति—अयमर्थ इति। 'दृष्टे साऽपार्था' इति शङ्काग्रन्थस्यायमाशय इत्यर्थः। तमेवाशयमाह—अस्त्विति। अस्तु दुःखत्रयं=विद्यताम् आध्यात्मिकादिदुःखत्रयं, भवतु च तत्=दुःखत्रयं जिहासितं=हानेच्छागोचरः, भवतु च तत् शक्यहानं=संभवतु च दुःखत्रयं शक्यसमुच्छेदं, सहतां च शास्त्रगम्य उपायस्तदुच्छेत्तुं=समर्थो भूयाच्च शास्त्रप्रतिपाद्यो विवेको दुःखत्रयोच्छेदाय, तथापि न अत्र=विवेके जिज्ञासा=विविदिषा युक्ता=समीचीनेत्यर्थः। कुत इत्यत आह—दृष्टस्यैवेति। दृष्टस्यैव=लोकप्रसिद्धस्यैव सुकरस्य=अनायाससाध्यस्य तदुच्छेदकस्य=दुःखनाशकस्य उपायस्य=साधनस्य भेषजादेः सत्त्वादित्यर्थः। न हि सुकरमुपेक्ष्य दुष्करं दुर्लभं कश्चिज्जिज्ञासत इति भावः॥ ® ॥

"अल्पायाससमुपायं हित्वा न कोऽपि महायासं तमाद्रियते" इति लोकसंवादेनापि सिद्धमित्याह—तथा चेति। सुकरमुपेक्ष्य दुष्कराचरणस्य अयोग्यत्वे चेत्यर्थः। लौकिकानां=लोकव्यवहारविदां प्राकृतानां जनानाम् आभाणकः=प्रसिद्धप्रवादः। तमेवाऽऽभाणकमाह—अर्के[1] इति। यथा मधुकामस्तदन्वेषणाय पर्वतं प्रस्थितः सन् यदि मार्ग एव अर्कवृक्षे अदूरे पथि वर्तमाने मधु=क्षौद्रं विन्देत=लभेत प्राप्नुयात्, तर्हि पर्वतं किमर्थं=किन्निमित्तं व्रजेत्= गच्छेत् अपि तु न गच्छतीत्यर्थः। एवम् इष्टस्य=अभिलषितस्य अर्थस्य=वस्तुनः संसिद्धौ=अनायासेन निष्पत्तौ सत्यां पुनस्तत्सिद्ध्यर्थम् आयाससाध्यं यत्नं=दूरादिगमनं[2] को विद्वान् अनुतिष्ठेत्=आचरेत् कुर्यात् न कोऽपीत्यर्थः॥ ® ॥

ननु कोऽसौ सुकर उपायो येन विवेके जिज्ञासा न करणीया स्यादित्याकाङ्-

१ समीपवचनोऽर्कशब्द इत्यानन्दगिरिः ( वे० ३।४।३ )। २ आदिना शास्त्रीयाभ्यासपरिग्रहः।

पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥" इति।

सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजां वरैरुपदिष्टाः। मानसस्यापि सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादिविषयप्राप्तिरुपायः सुकरः।

एवमाधिभौतिकस्य दुःखस्य नीतिशास्त्राभ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः।

---

क्षायां तान् सुकरानुपायानेव दर्शयति—सन्ति चेति। भिषजां वरैः=उत्कृष्टवैद्यैः। उत्कर्षश्चाध्यापनं, दुर्गतादिभ्यः स्वभेषजदानादि च। तथाच वैद्यधौरेयैश्चिकित्साकुशलैर्धन्वन्तरिचरकप्रमुखैः शारीरं यद् दुःखं ज्वरातीसारादि तस्य प्रतीकाराय=अपनोदाय निवृत्तये दूरीकरणाय उपदिष्टाः=वर्णिताः शतशः=अनेके उपायाः=साधनानि रसायनादयः ईषत्कराः=अनायाससाध्याः सुकराः सन्ति=विद्यन्ते इत्यर्थः। अतस्तदर्थं व्यर्था शास्त्रजिज्ञासेति भावः॥ ❀॥

ननु तर्हि मानसदुःखप्रतीकाराय विवेके जिज्ञासा करणीया स्यादिति चेत्, नेत्याह—मानसस्यापीति। मानसस्यापि=कामक्रोधादेः सन्तापस्य=दुःखस्य प्रतीकाराय=अपहाराय सुकरः=विवेकापेक्षया अनायाससम्पाद्यः मनोज्ञस्त्र्यादिविषयाणां प्राप्तिरूपः उपायः साधनम् अस्ति इति शेषः 'पानभोजनेति' पानीयभोजनीयेत्यर्थः। तत्तदभिलषितवनिताऽऽलिङ्गनाऽऽसवपानसदन्नाशनचन्दनविलेपनवसनभूषणात्मकविषयप्राप्तिरूपः उपायो मानससन्तापापहारायालमित्यर्थः। तत्तदभिलषितवस्तुनोऽप्राप्तौ हि भवति मानसः सन्तापः, तत्प्राप्तौ तु नैव कदापि मानसतापसंभव इति सत्यां मनसस्तुष्टौ नैव कामक्रोधादेरवसर इति तदर्थमपि न युक्ता शास्त्रजिज्ञासेति भावः॥ ❀॥

तदित्थं शारीरमानसरूपाध्यात्मिकप्रतीकारकरं सुकरमुपायमभिधाय आधिभौतिकतापप्रतीकारकरं सुकरमुपायमाह—एवमिति। तथेत्यर्थः। निरत्ययस्थानं=बाधशून्यं स्थलम्। अध्यासनादि=उपवेशनादि। तथाच आधिभौतिकस्य=व्याघ्राद्युत्थस्य दुःखस्य=तापस्य प्रतीकारहेतुः=निवृत्तिहेतुः विद्रावणकारणं नीतिशास्त्राभ्यासकुशलता=बार्हस्पत्यौशनसकामन्दकीयादिनीतिशास्त्राभ्यासनिपुणता, तथा निरत्ययस्थानाध्यासनादिः=निर्बाधनिरुपद्रवपरिखोपेतमणियन्त्राद्यन्तर्हितगिरिदुर्गादिरूपस्थानावलम्बनादिरुपायः सुकर इत्यर्थः। नीतिशास्त्रज्ञो हि

"शृङ्गिणां नखिनां चैव दंष्ट्रिणां दुर्जनस्य च।
नदीनां वसतौ स्त्रीणां विश्वासं नैव कारयेत्॥"

इत्यादिनीतिवचनपरम्परया "नखिनो दंष्ट्रिणः शृङ्गिणो दूरतः परिवर्ज्याः" "नादण्डो बहिर्गच्छेत्" इत्याद्युपायं जानानः शक्नुयाद् व्याघ्राद्युत्थभयं प्रतीकर्तुं, निरत्ययस्थानप्राप्तौ तु सुतरां तदसंभव इति भावः॥ ❀॥

**तथाऽऽधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीकारोपाय इति ॥**

अथ आधिदैविकदुःखप्रतीकारकरं सुकरमुपायमभिधत्ते—तथेति । उपयोगः=व्यवहारः । तत्र मण्यादेर्धारणम्, मन्त्रादेः पाठादिः, औषधादेः सेवनादिरिति विवेकः । मणिमन्त्रौषध्याद्युपयोग आधिदैविकदुःखस्य=यक्षाद्युत्थस्य प्रतीकारहेतुः सुलभ इत्यर्थः ।

"दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति ।
गुणैः समुख्यैः सकलैरुपेतं यः पद्मरागं प्रयतो बिभर्ति ॥
यस्तं बिभर्ति मनुजाधिपतिर्न तस्य, दोषा भवन्ति विषरोगकृताः कदाचित् ।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः, शत्रूंश्च नाशयति तस्य मणेः प्रभावात् ॥"

इत्यादिना मणिधारणस्य,

"वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ।
रक्षति त्वरितं बालं मुञ्च मुञ्च कुमारकम् ॥
कृष्ण ! रक्ष शिशुं शङ्ख-मधुकैटभमर्दनः ।
प्रातः सङ्गवमध्याह्ने सायाह्नेषु च सन्ध्ययोः ॥
महानिशि सदा रक्ष कंसारिष्टनिषूदनः ।
यद् गोरजः पिशाचांश्च ग्रहान् मातृग्रहानपि ॥
बालग्रहान् विशेषेण छिन्धि छिन्धि महाभयान् ।
त्राहि त्राहि हरे ! नित्यं त्वद्रक्षाभूषितं शिशुम् ॥
इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिशोर्ललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ॥" इत्यादिना,
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥"

इत्यादिना च मन्त्राणाम्[1],

"कृष्णामरीचसिन्धूत्थमधुगोरोचनाकृतम् ।
अञ्जनं सर्वदेवादिकृतोन्मादहरं परम् ॥"

इत्यादिनौषधस्य च तत्तदुपद्रवविद्रावकत्वप्रसिद्धेरिति भावः ॥ ॐ ॥

लौकिक उपायो नाभिलषितां दुःखनिवृत्तिं सम्पादयितुमलमित्यभिप्रायवान् कारिकागतं 'न' इत्यंशमवतारयति—निराकरोति—नेतीति । निराकरोति= आशङ्कामिति शेषः । 'न' इति पदेन 'दृष्टे साऽपार्था' इत्याशङ्कां परिहरतीत्यर्थः । लौकिकोपायनिराकरणे हेतुं पृच्छति—कुत इति । न दुःखनिवृत्तिमात्रमभिलषितम् तथासति शास्त्रस्यैव वैयर्थ्यापातात्, अपि तु ऐकान्तिकात्यन्तिकदुःखनिवृत्तिः, तस्या एव परमपुमर्थत्वात्, सा च दृष्टोपायान्न कथमपि लभ्येति

१ यन्त्र-मन्त्र-तन्त्राणामद्याप्यलौकिकश्चमत्कारः संयतेन्द्रियेषु दृष्टिपथमायात्येवेति नात्र किञ्चिद् वचनीयम् ।

निराकरोति—"न" इति। कुतः—'एकान्तात्यन्ततोऽभावाद्' एकान्तः=दुःखनिवृत्तेरवश्यम्भावः अत्यन्तः=निवृत्तस्य दुःखस्य पुनरनुत्पादः, तयोरेकान्तात्यन्तयोरभाव एकान्तात्यन्ततोऽभाव इति, षष्ठीस्थाने सार्वविभक्तिकस्तसिः।

एतदुक्तं भवति—यथाविधिरसायनादिकामिनीनीतिशास्त्रा-

---

मनसि निधाय कारिकागतं हेतुमाह—एकान्तेति। एकान्तशब्दं व्याचष्टे—दुःखनिवृत्तेरिति। अवश्यंभावः=उपायानुष्ठानानन्तरं नियमेन भवनशीलत्वम्। अत्यन्तशब्दं व्याचष्टे—निवृत्तस्येति। अत्यन्तत्वं च भविष्यद्दुःखासहवर्तित्वम्। तथाच दृष्ट उपाये नियमेन दुःखनिवर्तकत्वरूपमेकान्तत्वं नास्ति, दृष्टोपायजन्यदुःखनिवृत्तौ च भविष्यद्दुःखासहवर्तित्वरूपमत्यन्तत्वं नास्तीति दृष्टादुपायाद् एकान्तात्यन्तदुःखोच्छेदाभावान्न दृष्टे हेतौ जिज्ञासा कार्येति भावः॥ ॐ॥

अत्र परिष्कुर्वन्ति—

दुःखनिवृत्तेरैकान्तिकत्वं च नियमेन स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वम्। नियमस्तु यत्र यत्क्षणावच्छेदेन यद्धर्मावच्छिन्नसामग्री, तत्र तदुत्तरक्षणे तद्धर्मावच्छिन्नोत्पत्तिरिति व्याप्तिः। दुःखनिवृत्तेरात्यन्तिकत्वं च 'स्वसमानाधिकरणदुःखासमानकालीनत्वम्'। स्वमोक्षदशायां स्वसमानाधिकरणदुःखाभावेन दुःखध्वंसस्य तदसमानकालीनत्वाल्लक्षणसमन्वयः। संसारिणां दुःखसत्त्वेन इदानीन्तनदुःखध्वंसे तदसमानकालीनत्वाभावान्नातिव्याप्तिः। दुःखासमानकालीनत्वमात्रस्य दुःखध्वंसविशेषणत्वे चरममोक्षे लक्षणसमन्वयेऽपि इदानीन्तने शुकवामदेवादिमोक्षे स्वव्यधिकरणास्मदादिदुःखसमानकालीनतया लक्षणसमन्वयो न भवतीति स्वसमानाधिकरणत्वं दुःखविशेषणतयोपात्तम्। उपान्त्यदुःखध्वंसस्यापि तादृशचरमदुःखसमानकालीनतया न तत्रातिव्याप्तिरिति दिक्॥ ॐ॥

विग्रहं दर्शयति—तयोरिति। ननु कथमत्र तसिल् प्रत्ययः, किमादिपञ्चम्यन्तत्वाभावादत आह—षष्ठीस्थान इति। एवं च नात्र तसिल् प्रत्ययः, किन्तु आद्यादेराकृतिगणत्वात् "आद्यादिभ्य उपसंख्यानम्" [पा० ५।४।४४] इत्यनेन षष्ठ्यन्तात् तसिरिति भावः।

ननु कथम् एकान्तात्यन्तयोरभाव इत्याकाङ्क्षायां फलितमाह—एतदुक्तं

---

१ स्वं=दुःखध्वंसः। अत्र संसारकालीनस्य दुःखध्वंसस्य मोक्षत्ववारणाय—कालीनत्वान्तं दुःखनिवृत्तिविशेषणम्। अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय—स्वसमानाधिकरणेति दुःखविशेषणम्। तदेवाह—संसारिणामित्यादिना। अनेन स्वर्गेऽपि पातभयानुविद्धतया क्षयितया च न विवेकिनामुत्कटो रागः। वसिष्ठादीनां तु परंपरया लोकानां सन्मार्गप्रवृत्तिबोधनार्थैवेत्यन्यत्र विस्तरः।

भ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्श-नादनैकान्तिकत्वं, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादनात्यन्तिक-

---

भवतीति । तत्र रसायनम्=औषधविशेषः, दग्धधातुविशेषरूपः । तथा चोक्तं वैद्यके—

"यज्जराव्याधिविध्वंसि वयसः स्तम्भकं तथा ।
चाक्षुष्यं बृंहणं वृष्यं भेषजं तद् रसायनम् ॥" इति ।

शिष्टं व्याख्यातं प्राक् । निवृत्तेरदर्शनादिति । असाध्यरोगादेरौषधाद्यनुपशमनीयत्वादिति भावः । उत्पत्तिदर्शनादिति । 'कालान्तरे' इति शेषः । न ह्यत्यन्तनिवृत्तं पुनरुत्पद्यते । तस्मान्न तेन तदत्यन्तनिवृत्तिरिति भावः । तथाच शान्तिपर्वणि मोक्षधर्मे भगवान् व्यासः—

"सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखे मनुष्याणां चक्रवत् परिवर्ततः ॥ [ शा० २५।२३ ]

वनपर्वणि च—

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपसर्पन्ति नरं नेमिमरा इव ॥ [ व० २६०।४९ ] इति ।

उत्तरमेघे महाकविकालिदासोऽपि—

कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥" [ उ० मे० ४६ ] इति ।

---

१ अत्रेदं बोध्यम्—यत्किञ्चिदस्माकमिष्टं तत्सुखं यच्च नेष्टं तद् दुःखम् । "यदिष्टं तत्सुखं प्राहुः, द्वेष्यं दुःखमिहेष्यते" [ म. भा. शा. २९५।२७ ] इति भगवद्व्यासदेववचनात् । परं नेदं निर्दुष्टं लक्षणम्, तथासति इष्टपदार्थस्यापि सुखत्वापत्तेः । ततश्च पिपासायां लग्नायां पानीयमिष्टं भवतीति तदपि सुखमुच्येत, परं न केनापि कदापि पानीयं सुखमुच्यते, न हि नदीजले निमज्जन् 'सुखे मग्नः' इति केनचिदुच्यते । तस्मात् "अनुकूलवेदनीयं सुखम् । प्रतिकूलवेदनीयं बाधनालक्षणं दुःखम्" इति तार्किकाः ॥

२ इदमत्र तत्त्वम्—कर्मैवास्य संसारस्योत्पत्तौ कारणम् । यदि जीवानां कर्माणि न स्युः, तदा कदापि ते जन्ममरणचक्रे न गच्छेयुः ।, न च कदापि सुखदुःखमनुभवेयुः । सुकर्मणः फलं सुखं दुष्कर्मणस्तु दुःखमेव । यदुप्यते तदेव कर्त्यते । निम्बवृक्षं संवर्ध्याऽऽम्राणामाशा सिकतासु तैलभ्रमः;, अन्यस्य कृते गर्तं खनित्वा स्वयमपि कदाचित् तस्मिन्नेव पतन्ति मानवाः । इत्थं च यच्चिन्त्यते यच्च क्रियते तस्य फलमवश्यमेव भोग्यं भवति । 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' यत्कर्मणा करोति तदभिसंपद्यते" इत्यादिवचनात् । अतः संसारदुःखदहनाय विवेकिभिर्ज्ञानमेवाभ्यस्यम्, तन्मात्रनिवर्त्यत्वात्कर्मजालस्य । यदाह गीतासु श्रीभगवान्—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति ।

त्वम्, इति सुकरोऽप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उपाय इति नापार्था जिज्ञासेत्यर्थः ।

यद्यपि दुःखममङ्गलं तथापि तत्परिहारार्थत्वेन तदवघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्तनमिति ॥ १ ॥

स्यादेतद्-मा भूद्दृष्ट उपायो वैदिकस्तु ज्योतिष्टोमादिः संवत्स-

---

उपसंहरति—इति सुकरोऽपीति । इतिर्हेतौ । यत एवम् अतः सुकरोऽपि दृष्ट उपायः, तथापि ऐकान्तिकात्यन्तिकदुःखनिवृत्तेर्न स उपाय इति तमुपेक्ष्य विवेके जिज्ञासा न व्यर्थेत्यर्थः । एतेन "न दृष्टात्तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्" [ सा० १।२। ] इति सांख्यसूत्रं व्याख्यातम् ॥ ॐ ॥

ननु "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युः" इति महाभाष्यात्, "मङ्गलाचरणं शिष्टाचारात् फलदर्शनाच्छ्रुतितश्च" [ सां० ५।१ ] इति सांख्यसूत्राच्च ग्रन्थादौ मङ्गलाचरणमावश्यकम् । तच्च प्रशस्ताचरणमेव । "प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥" इत्यादिवचनात् । ततश्च कथमिह शास्त्रारम्भे दुःखेत्यप्रशस्तोच्चारणं तद्विरुद्धमाचरितमित्याशङ्क्य अमङ्गलदुःखसंकीर्तनस्यानौचित्यदोषं परिहरति—यद्यपीति । तत्परिहारार्थत्वेन=दुःखाभिसंबन्धाभावफलकत्वेन तदपघातः=दुःखत्रयापघातबोधकः शब्दो मङ्गलमेव=माङ्गल्यः, ॐकारादिशब्दवन्मङ्गलहेतुरित्यर्थः । मम्=अशुभं गालयति इति, मगं=शुभं लाति=गृह्णाति इति, मङ्गति=गच्छति दुरदृष्टमनेनेति वा तद्व्युत्पत्तेरितिभावः । युक्तमिति । तथाच दुःखापघात एव शास्त्रादौ कीर्तितः, तस्मिन् कीर्तनीये सति दुःखस्यापि कीर्तनमावश्यकमिति तत्कीर्तनं कृतमिति भावः ॥ ॐ ॥ १ ॥ ॐ ॥

हेयं हेयहेतुश्चेति व्यूहद्वयं संक्षेपेणोक्तं, सम्प्रति 'दृष्टवत्'-इति द्वितीयकारिकामवतारयितुं मीमांसकाशङ्कामुत्थापयति—स्यादेतदिति । दृष्ट उपायो दुःखनिवृत्तेर्हेतुर्माभूत्=नास्ति इति यदुक्तम् एतत् स्यात्=भवतु नाम, वैदिकस्तु ज्योतिष्टोमादिः कर्मकलापः=कर्मसमूहः उपायः अवश्यं तापत्रयम्=आध्यात्मिकादिदुःखत्रयम् एकान्तम् अत्यन्तं च यथा स्यात् तथा, अपनेष्यति=दूरीकरिष्यतीति पुनरपि विवेके जिज्ञासा व्यर्थेत्यर्थः । वैदिक उपायोऽस्ति विवेकापेक्षया सुकर इति सूचयितुमाह—संवत्सरपर्यन्त इति । अनेकजन्माभ्यासपरम्परासाध्यविवेकापेक्षयाऽल्पकालसाध्य इत्यर्थः । तत्र षोडशर्त्विक्साध्यो यज्ञभेदो ज्योतिष्टोमः । ननु ज्योतिष्टोमस्य पूर्णमासादिजन्यस्वर्गे व्यभिचारवारणाय

---

१ 'ब्राह्मणाभ्यां कृतं देहि' 'अहोविमलं जलं नद्याः कूले महिषश्चरति' इत्यादौ ब्राह्मणनद्यादेरिव उपायपदमावर्त्य व्याख्येयमिति मनसि निधाय पुनरुपायपदं प्रयुङ्क्ते—स उपाय इति ॥

रपर्यन्तः कर्मकलापस्तापत्रयमेकान्तमत्यन्तं चापनेष्यति,

श्रूयते हि 'स्वर्गकामो यजेत' इति ।

स्वर्गश्च—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।

---

विजातीयस्वर्गं प्रत्येव हेतुत्वावश्यकत्वे कृतज्योतिष्टोमस्यापि परोत्कर्षासहनजन्यदुःखसम्भवात्कथमात्यन्तिकदुःखनिवृत्तिरित्याशङ्कावारणायाभिहितं—कर्मकलाप इति । तथाच निखिलकाम्यकर्मानुष्ठाने परोत्कर्षासम्भवेन न दुःखोत्पत्तिरिति भावः ॥ ❀ ॥

ज्योतिष्टोमादिकर्मकलापस्य दुःखापनेतृत्वं श्रुत्या साधयति—श्रूयते हि स्वर्गकाम इति ॥ ननु "स्वर्गकामो यजेत" इति श्रुतिः "स्वर्गाभिलाषुको यागेनेष्टं स्वर्गं सम्पादयेत्" इत्येव बोधयति, न जातु "यागेनात्यन्तिकीं दुःखनिवृत्तिं सम्पादयेत्" इत्यभिधत्ते, ततश्च यागस्य स्वर्गफलकत्वे सिद्धेऽपि दुःखनिवृत्तिजनकत्वं नैवायातीति नेयं श्रुतिः प्रकृतार्थे प्रमाणं भवितुमर्हतीत्याशङ्क्य तादृशदुःखनिवृत्तेरेव नामान्तरं स्वर्ग इत्याशयेन स्वर्गं लक्षयति—स्वर्गश्चेति । अस्य "इति दुःखविरोधी सुखविशेषः" इत्यग्रिमेण संबन्धः ॥

यन्नेति । दुःखेन न संभिन्नं=मिश्रितं दुःखसम्पर्कविधुरं, दुःखासम्मिश्रमिति ।

ननु किं नाम दुःखासम्मिश्रत्वम्? किं दुःखासामानाधिकरण्यं दुःखासम्मिश्रत्वम्? उताहो दुःखासमानकालिकत्वं तत्? तत्र नाद्यः पक्षः संभवति । असंभवात् । न हि स्वर्गप्राप्तेरर्वाग् यद् दुःखाधिकरणम् आत्मा[1]ऽन्तःकरणं वा ततोऽधिकरणान्तरं स्वर्गस्येति संभवति । नापि द्वितीयः पक्षः संभवति, अस्मदादिसुखस्यापि दुःखसमानकालासत्वेनाविशेषात्, न ह्यस्माकं सुखं दुःखकाले सत्, येन स्वर्गपदवाच्यसुखस्य ततो विशेषः स्यात्, इतिचेत् । अत्राहुः[2]—'न च ग्रस्तम्,—इत्यादीतरविशेषणसहकारेण लौकिकसुखविलक्षणो मोक्षसलक्षणः सुखविशेष एवानेनोच्यत इति नोक्तदोपलेशोऽपीति । तथाहि—लौकिकं सुखं यथा स्वसमये अन्यसुखाप्राप्तिनिबन्धनदुःखेन मिश्रितं भवति, न तथा स्वर्गपदाभिधेयम्, अपि तु—दुःखेन न संभिन्नमिति । वर्तमानकालिकाऽन्याभिलषिताप्राप्तिनिबन्धनदुःखासम्मिश्रमित्यर्थः । एतेन "पुत्रस्ते जातः, कन्या ते गर्भिणी" इत्यादिवाक्यश्रवणजन्यदुःखसंवलितसुखस्य व्यावृत्तिः ॥

---

१ नैयायिकादिमतेन आत्मेति । सांख्यमतेन अन्तःकरणमिति । 'दुःखाधिकरणमात्मा' इति नैयायिक–वैशेषिकाः । बुद्धिधर्म इति सांख्य–पातञ्जलवेदान्तिनः प्रतिपद्यन्ते ॥

२ "अत्र दुःखासंभिन्नत्वं च स्वावच्छेदकशरीरानवच्छिन्नत्वम् । तेन दुःखसमानकालीने सुखे नातिव्याप्तिः" इतिन्यायकोशे ।

अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" ॥
इति दुःखविरोधी सुखविशेषः ।
स च स्वसत्तया समूलघातमपहन्ति दुःखं,

---

किंच—लौकिकं सुखं यथा सुखसाधनस्रक्चन्दनवनितादिसम्पादनाऽऽयासरूपप्राक्कालिकदुःखेन मिश्रितं भवति, न तथा स्वर्गपदवाच्यं सुखमस्ति, किन्तु—**अभिलाषोपनीतमिति** । अभिलाषेण=संकल्पमात्रेणैव उपनीतम्=सामीप्यमाप्तं, निकटमुपस्थितम्, नतु साधनसम्पादनाऽऽयासाधीनमित्यर्थः । एतेन शुकनारदादेराजन्माविर्भूतनिरतिशयसुखव्यावृत्तिः ॥

किंच—लौकिकं सुखं यथा अन्तराऽन्तरा तिरोभूय विरलप्रवाहशीलं भवति, न तथाविधं स्वर्गपदाभिधेयं सुखमस्ति, अपि तु—**अनन्तरमिति** । व्यवधानहीनम्, "प्रथमतः सुखं तदव्यवहितोत्तरक्षणे किंचिद्दुःखं, तदनु पुनः सुखम्" इत्येवं विच्छेदराहित्येन अविच्छिन्नम्, अविरलसंलग्नप्रवाहशीलत्वेन चिरकालस्थायित्वात् उत्तरकालिकदुःखेन असंवलितम् इत्यर्थः ॥

किंच—लौकिकं सार्वभौमादिकं सुखं यथा चिरकालस्थायिभवदपि अन्तेग्रस्तं भवति, न तथा स्वर्गपदवाच्यं सुखं ग्रस्तमस्ति, अपितु—**न च ग्रस्तमिति** । नाशाप्रतियोगि इत्यर्थः । अक्षयि इति यावत् । एतेन ऐहिकराज्यादिसुखव्यावृत्तिः । एवंभूतं यत् त्रैकालिकदुःखासम्मिश्रं सुखं, तत् स्वःपदास्पदं=स्वर्गपदवाच्यमित्यर्थः ॥

अत्र नाकपृष्ठविशेषः स्वर्गपदार्थ इति पूर्वपक्षिमीमांसकाशयः । वस्तुतो 'यन्न दुःखेन'—इत्यनेन मोक्षरूपसुखविशेष एव स्वर्गपदार्थत्वेनाभिधीयत इति पूर्वपक्षसमाधानावसरे व्यक्तीभविष्यति ॥ ❀ ॥

**इति दुःखेति** । इति=अनया श्रुत्याऽभिहितः दुःखविरोधी=दुःखेन सह एकत्रानवस्थायी सुखविशेषः स्वर्ग इति पूर्वेणान्वयः । ननु कर्मकलापस्य सुखविशेषरूपस्वर्गजनकत्वेऽपि आत्यन्तिकदुःखनिवृत्तिरूपमोक्षाजनकत्वात् कथं तेन जिज्ञासावैयर्थ्यमित्याशङ्कावारणायाभिहितं—**दुःखविरोधीति** । ननु "सुखविशेषरूपः स्वर्गो नागामिदुःखविरोधी, सुखत्वाद्, ऐहिकसुखवत्" इत्याशङ्क्य परिहरति—**सचेति** । उक्तसुखरूपविशेषरूपः स्वर्ग इत्यर्थः । स च=स्वर्गः दुःखम् अपहन्ति=विनाशयतीत्यन्वयः । ननु तत्तद्देशावच्छिन्नसुखस्य तत्तद्देशावच्छिन्नदुःखविरोधित्वादन्यदेशावच्छेदेन दुःखोत्पत्तौ बाधकाभाव इत्याशङ्क्य स्वरूपेणैव विरोधित्वान्नैवमित्याह—**स्वसत्तयेति** । स्वीयोदारावस्थयेत्यर्थः । दुःखविरोधित्वादितिभावः । ननु सुखनाशाधिकरणतृतीयक्षणवर्तिना पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण चतुर्थक्षणे दुःखोत्पादसंभव इत्याशङ्क्याह—**समू-**

---

१ 'अन्तर'शब्दो व्यवधानवचनः, निर्=नास्ति,—अन्तरो=व्यवधानं यस्मिन् तद् अनन्तरमिति, तदेवाह—व्यवधानहीनमिति ।

**न चैष क्षयी, तथाहि श्रूयते—“अपाम सोममसृता अभूम” इति,**

ल्घातमिति । क्रियाविशेषणमिदम् । मूलेन=कारणेन अधर्माख्येन दुरदृष्टेन सह दुःखं हन्तीति न पुनर्दुःखोद्भवशङ्केत्यर्थः । तथाच कर्मकलापान्तर्गतप्रायश्चित्तेन तस्य नाशान्न पुनरुत्पत्तिरिति भावः । न च प्रायश्चित्तेन तन्नाशे सुखेन तन्नाशाभिधानमसङ्गतमिति वाच्यम् । सुखपदस्य प्रायश्चित्तसहकृतस्वजनकसामग्रीपरत्वात् । एवंच वैदिकेनोपायेनेदृग्विधे स्वर्गेऽवाप्ते सत्यात्यन्तिकी दुःखनिवृत्तिरर्थात् सिद्धा भवतीति कृतं बह्वायाससम्पाद्यविवेकजिज्ञासयेति मीमांसकाकूतम् ॥ ॐ ॥

ननु ‘यत् कृतकं तदनित्यम्’ इति सामान्यतोदृष्टानुमानानुगृहीतया “तद् यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते” [ छा० ८।१।६ ] इति श्रुत्या कर्मजन्यस्वर्गस्याप्यनित्यत्वावगमान्न तेन जिज्ञासावैयर्थ्यमित्याशङ्कां प्रतिक्षिपति—न चैष क्षयीति। एष=स्वर्गः क्षयी=विनाशी नहीत्यर्थः ॥

कुत इत्याकाङ्क्षायां तस्याक्षयित्वं साधयति—तथाहीति । स्वर्गस्य यथाऽक्षयित्वं तथा श्रुत्यैव स्पष्टमुपपाद्यत इत्यर्थः । तां श्रुतिमेवाह—अपामेति । वयं देवाः सोमं=सोमलतारसम् अपाम=पीतवन्तः अतः अमृताः=मरणरहिताः मरणरहितस्वर्गशरीरभाजः जन्यत्वे सति ध्वंसाप्रतियोगिसुखाश्रया वा अभूम=भूतवन्त इत्यर्थः । हेतुभूतातीतसोमकर्मकपानानुकूलकृतिमन्तो वयं तत्कालीनतत्कार्यभूतामृतत्वभवनाश्रया इति बोधः ॥ ॐ ॥

“अपाम सोममसृता अभूमाऽगन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतमर्त्यस्य ॥ ”

इति हि पूर्णा श्रुतिः । इयं च भगवद्गौडपादाचार्यैरित्थं व्याख्याता—

“कदाचिद् इन्द्रादीनां देवानां कल्प[3] आसीत्, कथं वयम् अमृता अभूम ? इति विचार्योचुः—यस्माद् वयम् अपाम=पीतवन्तः सोमं तस्माद् अमृता-अभूम=अमरा भूतवन्त इत्यर्थः । किंच-अगन्म=गतवन्तो-लब्धवन्तो ज्योतिः=स्वर्गमिति, अविदाम देवान्=दिव्यान् विदितवन्तः । एवं च किं नूनमस्मांस्तृणवदरातिः=नूनं=निश्चितं किम् अरातिः=शत्रुः अस्मान् तृणवत् करोति । किमु धूर्ति-

---

१ समूलोपपदाद्धन्तेः ‘समूलाकृत’—इत्यादिना णमुल् । ‘हो हन्तेः’—इति कुत्वम् । उपधावृद्धिः । ‘हनस्तः’—इति तत्वम् । ‘कषादिषु यथा’–इत्यादिना यथाविध्यनुप्रयोगः । अनुप्रयोगे यथायथं लडादयः॥ क्रियाविशेषणं यत्स्यात् क्लीबलिङ्गं हि तद्भवेत् । स्यादेकवचनं तत्र द्वितीयायाश्च सर्वदा ॥” इति शाब्दिकाः । २ इह=लोके कर्मचितः=कृषिव्यापारादिकर्मणा संपादितः लोकः=धान्यधनादिः क्षीयते=नश्यति, तद् यथाऽयं दृष्टान्तः, एवमेव अमुत्र=लोकान्तरेऽपि यागादिजन्यपुण्यसंपादितः सुधापानाप्सरोरमणादिरूपो भोगोऽपि क्षीयत इति श्रुत्यर्थः । ततश्च “स्वर्गसुखं विनाशि, जन्यत्वात्, अस्मदादिसुखवत्” इत्यनुमानमत्र फलितं भवतीति विज्ञेयम् । ३ कल्पः=समाजः, सभेति यावत् ॥

**तत्प्रक्षये कुतोऽस्यामृतत्वसम्भवः,**

**तस्माद् वैदिकस्योपायस्य तापत्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससंवत्सरादिनिर्वर्तनीयस्यानेकजन्मपरम्परायाससम्पादनीयाद्विवेकज्ञानादीषत्करत्वात्पुनरपि व्यर्था जिज्ञासेत्याशङ्क्याह—**

---

रमृतमर्त्यस्य=धूर्तिः=जरा हिंसा वा किं करिष्यति अमृतमर्त्यस्येति" ॥ ® ॥

तथाच "अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यादिश्रुत्यविरोधाय प्रवाहानादित्वरूपं नित्यत्वमभ्युपेयते स्वर्गस्येति मीमांसकाशयः ॥ ® ॥

ननु 'अपाम सोमम्'—इति श्रुत्या स्वर्गवासिनाम् अमृतत्वं प्रतिपाद्यते, न तु स्वर्गस्याक्षयित्वमिति नेयं स्वर्गस्याक्षयित्वे प्रमाणं भवितुमर्हतीत्याशङ्क्याह—तत् प्रक्षय इति। तत्प्रक्षये=यागजनितस्वर्गस्य प्रक्षये सोमपानादिप्रयोज्य स्वर्गक्षये सति अस्य=लब्धस्वर्गस्य सोम-पानादिकर्तुः अमृतत्वसंभवः=मरणरहितत्वसंभवः अमृतत्वकथनसंभवः कुतः=कथम्। न कथमपि घटत इत्यर्थः। स्वर्गस्याक्षयित्वमन्तरा स्वर्गिणाम् अमृतत्वं भवितुं नार्हतीति तदन्यथानुपपत्त्या स्वर्गस्याक्षयित्वं कल्पनीयमिति भावः।

एवं च 'अपाम सोमम्'—इत्यमृतत्वश्रुतिविरोधात् 'तद् यथेह'—इत्यादिश्रुतीनां न स्वार्थपरत्वं, किंतु विधेयसन्न्यासपुरःसरज्ञानफलप्रशंसायै निन्दार्थवादपरत्वमेवेति बोधितम् ॥ ® ॥

तामिमां कर्ममीमांसकाशङ्कामुपसंहरति—तस्मादिति। तस्मात्=उपदर्शितात् हेतोः वैदिकस्योपायस्य=ज्योतिष्टोमादेः विवेकज्ञानात्=विवेकज्ञानरूपादुपायात् ईषत्करत्वात्=सुकरत्वात् पुनरपि विवेकज्ञाने जिज्ञासा व्यर्थेत्यन्वयः। वैदिकस्य सुकरत्वे हेतुमाह—मुहूर्तेति। किंचिद् वैदिकं स्वर्गसाधनं कर्म मुहूर्तनिर्वर्तनीयं, किंचिच्च यामादिसाध्यमित्यर्थः। घटिकाद्वयपरिमितः कालो मुहूर्तम्। यामः=प्रहरः दिवसस्याष्टमो भागः। सूर्योदयद्वयमध्यवर्ती कालः—अहोरात्रः। त्रिंशद्दिनात्मकः कालो मासः। द्वादशमासात्मकः कालः संवत्सरः। आदिना द्वादशवर्षादिसंग्रहः। तत्र मुहूर्तमात्रनिर्वर्तनीयं—सन्ध्योपासनादि, यामनिर्वर्तनीयं—पिण्डपितृयज्ञादि, मासनिर्वर्तनीयं—मासाग्निहोत्रचान्द्रायणादि, संवत्सरनिर्वर्तनीयं—ज्योतिष्टोमादि, इति विवेकः।

विवेकज्ञानस्य दुष्करत्वे हेतुगर्भितं विशेषणमाह—अनेकजन्मेति। अनेकजन्मपरम्परायां यो ज्ञानसाधनानुष्ठानाभ्यासरूप आयासः=परिश्रमः अतियत्नः, तेन सम्पादनीयात्=साध्यादित्यर्थः। बहुतरजन्मार्जितश्रवणादिसंस्कारमन्तरेण विवेकज्ञानप्रवृत्तेरसंभवादिति भावः[२] ॥ ® ॥

---

१ मर्त्यशब्दोऽत्र शरीरवाची, बहुवचने प्रयोक्तव्ये एकवचनमार्षम्। ततश्च मरणरहितशरीरवताम् अस्माकं जरादि नास्तीत्यर्थः। २ तथाच भगवद्वचः—"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इति, "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति च।

**दृष्टवदानुश्रविकः, स ह्यविशुद्धिक्षयातिशययुक्तः ।**
**तद्विपरीतः श्रेयान्, व्यक्ताव्यक्तज्ञविज्ञानाद् ॥ २ ॥**

गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः, एतदुक्तं भवति—श्रूयत

दृष्टवदिति । आनुश्रविकः=वैदिको यागादिक्रियाकलापरूप उपायः दृष्टवत्=औषधादिलौकिकोपायतुल्यः, ततोऽपि आत्यन्तिकदुःखनिवृत्तेरसंभवादितिभावः । तदेव साधयति—सहीति । हि=यस्मात् सः=वैदिक उपायः अविशुद्ध्यादियुक्तः । हिंसादिसंबन्धाद् अविशुद्धियुक्तः=अविशुद्धः । तथा क्षययुक्तफलजनकत्वात् क्षययुक्तः । तथा अतिशयवत्फलजनकत्वाद् अतिशययुक्तश्च । "अतिशयवत् फलं च यस्मादधिकं फलान्तरमस्ति तत्" । तस्मात् तद्विपरीतः=यागादिविपरीत-स्वभावः वैदिकक्रियागतदोषरहितः सत्त्वपुरुषान्यताप्रत्ययरूप उपायो विवेकः, श्रेयान्=प्रशस्यतरः अतिप्रशस्यः, ऐकान्तात्यन्तिकदुःखोच्छेदक्षमत्वात् । स कस्माद् भवति? तत्राह—व्यक्तेति । व्यक्तस्य=विकारजातस्य भूतादेः अव्यक्तस्य=मूलप्रकृतेः ज्ञस्य=पुरुषस्य च विज्ञानात्=विविच्य ज्ञानात् विवेकेन ज्ञानाद् भवतीत्यर्थः । व्यक्तं=महदादि—बुद्धिरहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि पञ्चमहाभूतानि, अव्यक्तं=प्रधानं, ज्ञः=पुरुषः, एवम् एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञाः कथ्यन्ते" एतद्विज्ञानाच्छ्रेय इति गौडपादाः ॥ ॐ ॥

अयमभिप्रायः—आत्मानात्मविवेकसाक्षात्कारात् कर्तृत्वाद्यखिलाभिमान-निवृत्त्या तत्कार्यरागद्वेषधर्माधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां[१] चाविद्यारागादिसहकार्युच्छेदरूपदाहेन विपाकानारम्भकत्वात् प्रारब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीति तादृशसाक्षात्कारहेतौ मननाख्यविचाररूपे शास्त्रे जिज्ञासा भवत्येवेति ॥ ॐ ॥ २ ॥ ॐ ॥

तामिमां कारिकां विस्तरेण व्याचक्षाण आनुश्रविकशब्दं तावद् व्याचष्टे—गुरुपाठादिति । 'अनु श्रूयते' इत्युक्तौ 'कस्मादनु' इत्यवधिजिज्ञासा जायते, अनोरानन्तर्यार्थकत्वात् तस्य च नियमेन अवधिसापेक्षत्वात्, अतः पञ्चम्यन्तमिदमध्याहृतम् । गुरुकर्तृकोच्चारणानन्तरमित्यर्थः । तदेव स्पष्टयति—एतदुक्तमिति । विद्यासम्प्रदायप्रवर्तकब्रह्मादिपरम्परया श्रूयत एव यः स वेद इत्यर्थः । यथाह, स निरुक्ते भगवान् यास्काचार्यः—

"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्यो[२]ऽसाक्षात्कृतधर्मभ्य उपदेशेन मंत्रान् संप्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" इति । परम=केवलम् ।

१ संचितकर्मणाम् । पूर्वेषु बहुषु जन्मसु निष्पादितानि कर्माणि संचितानि । संचितेभ्यो निष्कासितानि वर्तमानशरीरभोगादिकारणानि प्रारब्धकर्माणि । वर्तमानदेहेन भाविफलप्रेप्सया क्रियमाणानि आगामिकर्माणीति विवेकः । २ अवरेभ्यः=पाश्चात्त्येभ्यो मन्त्रदर्शनशक्तिहीनेभ्यः । सम्प्रादुः=उपदिदिशुः । ग्लायन्तः=पुनः पुनः पाठनेन कथं चेमे मन्दधियोऽल्पायुषश्च गृह्णीयुरिति संजातक्लेशाः । बिल्मग्रहणाय=वेदशाखानामङ्गप्रत्यङ्गानां च बहुधा भेदेन भासनेन वा ग्रहीतुम् । इमं=निरुक्ताख्यम् ।

एव परं न केनापि क्रियत इति, तत्र भव आनुश्रविक इति, तत्र प्राप्तो ज्ञात इति यावत्,

आनुश्रविकोपि कर्मकलापो दृष्टेन तुल्यो वर्तत इति,

ऐकान्तिकाऽऽत्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तु-

---

श्रुतिश्च—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति[1] तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"

[श्वेता० ६।१८] इति ॥

एवकारव्यवच्छेद्यमाह—न केनापि क्रियत इति । भारतादिवन्न केनापि निर्मित इत्यर्थः । तथाच स्मृतिः—

स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ॥" इति ॥

श्रवणादेव वेदानां श्रुतिरिति नाम पतितम् । अपौरुषेयो वेद इति हृदयम् । अत्र यद् अन्यद् वक्तव्यं तदग्रेऽभिधास्यते ॥

तत्र भव इति । तत्र=अनुश्रवे । यागादेर्वेदभवत्वा( जन्यत्वा )नुपपत्त्या फलितार्थमाह—तत्र प्राप्त इति । वेद उपलब्ध इत्यर्थः । तदेवाह—तत्र ज्ञात इति । वेदबोधित इत्यर्थः ।

किं निखिलस्यैव वेदबोधितस्योपायस्याऽऽनुश्रविकशब्देन ग्रहणं भवति? नेत्याह—कर्मकलाप इति । ज्योतिष्टोमप्रमुखयागसमूहो य आनुश्रविकः सोऽपि लौकिकेनोपायेन सम इत्यर्थः । 'दृष्टवत्' इत्यत्र "तेन तुल्यं क्रिया चेद्वतिः" [पा० ५।१।११५] इति सूत्रे क्रियाग्रहणादध्याहरति—वर्तत इति । तुल्यमिति वर्तनक्रियाविशेषणम् । तेन दृष्टस्य वर्तनतुल्यम् आनुश्रविकस्य वर्तनमित्यर्थः । अत एव 'तेन तुल्यम्'—इति सूत्रे "तेनेति तृतीयासमर्थात् तुल्यमित्यर्थे वतिः प्रत्ययो भवति, यत् तुल्यं क्रिया चेत् सा भवति" इति काशिका ॥

केनांशेन साम्यम्? इत्यपेक्षायां साधारणधर्मं दर्शयति—ऐकान्तिकेति । समूलदुःखोपरमसाधनत्वाभावस्य उभयत्रापि=लौकिके वैदिके चोपाये तुल्यत्वादित्यर्थः । यथा दृष्टोपायस्यौषधादेर्न दुःखात्यन्तनिवृत्तिसाधकत्वं, तथाऽदृष्टोपायस्यापि केवलयज्ञादेर्वैदिककर्मण इति भावः ॥

एतेन "अविशेषश्चोभयोः"[2] [सां० १।६] इतिसांख्यसूत्रं व्याख्यातम्॥७॥

ननु 'दृष्टवदानुश्रविकः' इत्यनेन वैदिकोपायमात्रस्य दृष्टसाम्यता प्रतिपाद्यते, नतु केवलकर्मणः, वैदिकोपायाश्च कर्मोपास्तिज्ञानभेदात् त्रयः, तत्कथमिह

---

१ प्रहिणोति=उपदिशति ॥ २ उभयोः=लौकिकवैदिकोपाययोः अत्यन्तदुःखनिवृत्त्यसाधकतायाम् अविशेषः=विशेषो नास्ति, किंतु साम्यं, तौल्यमेवेत्यर्थः ।

ल्यत्वात् । यद्यपि चाऽऽनुश्रविक इति सामान्येनाभिहितं, तथापि कर्मकलापाभिप्रायं द्रष्टव्यं, विवेकज्ञानस्याप्यानुश्रविकत्वात् ।

उपास्तिज्ञाने विहाय केवलकर्मकलापोपायपरतया व्याख्यातमित्याशङ्क्य समाधत्ते—यद्यपीति । सामान्येन=साधारण्येन । आनुश्रविक इत्यभिधानं कर्मकलापाभिप्रायं द्रष्टव्यम् इति योजना । 'कर्मकलापाभिप्रायः' इति पुंल्लिङ्गपाठेतु 'आनुश्रविक' इति प्रयोगः कर्मकलापाभिप्राय इत्येवं योज्यम् । आनुश्रविकपदेनात्र कर्मकलापग्रहण एव वक्तुस्तात्पर्यं, न वैदिकोपायमात्रग्रहण इत्यर्थः ।

नन्वस्तु वैदिकोपायमात्रस्यानुश्रविकशब्देन ग्रहणं को दोषः ? तत्राह—विवेकेति । साधारण्येन ग्रहणे हि विवेकज्ञानस्यापि वैदिकोपायत्वात् तस्यापि दृष्टोपायसाम्यमभिहितं स्यात्, तच्चानिष्टमित्यर्थः ।

विवेकज्ञानस्य वैदिकत्वे श्रुतिः प्रमाणमित्याह—तथाचेति । बृहदारण्यकोपनिषदि—"कथम् अमृता स्याम् ?" इति मैत्रेयीप्रश्ने—

"स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति, आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति, आत्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति ॥" [ २।४।५ ]

इत्यनेन 'सर्वं प्रेम आत्ममूलकमेव' इत्याख्याय, तस्मात् 'आत्मा कोऽस्ति' ? इति तत्साक्षात्काराय सर्वैरेव यतनीयमित्यभिप्रायेण महर्षियाज्ञवल्क्येनोपदिष्टम्—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [बृ० २।४।५] इति ।

१ "वै-शब्दः प्रसिद्धसरणार्थः, प्रसिद्धमेव एतत् लोके; पत्युः=भर्तुः कामाय=प्रयोजनाय जायायाः पतिः प्रियो न भवति, किं तर्हि ? आत्मनस्तु कामाय=प्रयोजनायैव भार्यायाः पतिः प्रियो भवति । तथा न वा अरे जायाया इत्यादि, समानमन्यत् । (शां० भा०) "यस्मादेवम् आत्मसाधनत्वादन्यत्र गौणी प्रीतिरात्मनि तु मुख्या, तस्माद् अरे मैत्रेयि ! परमप्रेमास्पदम् आत्मा वै=आत्मैव द्रष्टव्यः=साक्षाद् रूपदर्शनविषयतामापादयितव्यः । केनोपायेनेत्यतआह—श्रोतव्य इति । श्रोतव्यः—आचार्याऽऽगमतः । पश्चात् मन्तव्यः—तर्कतः । ततो निदिध्यासितव्यः=निश्चयेन ध्यातव्यः" इत्येतद्व्याख्यायां नित्यानन्दाश्रमः । तत्र 'कल्याणं मे भूयात्' इति प्रेप्सया श्रोत्रियब्रह्मनिष्ठगुरुमुखात् श्रुतिवाक्यार्थविज्ञानं श्रवणम् । अर्थात् तत्त्वपरिज्ञानार्थं यत् आप्तवाक्यार्थावधारणं तत् श्रवणम् । साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिस्तदर्थानुचिन्तनं मननम् । अर्थात् अवधृतस्यार्थस्य अनुकूलयुक्तिभिर्दृढीकरणं मननम् । श्रुतार्थस्य नैरन्तर्येण दीर्घकालमनुसन्धानं निदिध्यासनम् । अर्थात् दृढीकृतस्यार्थस्य निरन्तरं ध्यानं=चित्तस्य तैलधारावत् निरवच्छिन्नप्रवाहीकरणं निदिध्यासनम् ॥ तत्र आत्मश्रवणं च श्रुतिभिरेव साक्षात्कारहेतुः । "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्याद्युक्तेः । पुराणादिना तच्छ्रवणे आत्मस्वरूपं परोक्षकल्पविषयमेवावतिष्ठते नत्वपरोक्षम्, भाषाप्रबन्धादिश्रवणे तु द्विजातीनां निषेध एव । "न म्लेच्छितवैनापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" इत्यपशब्दभाषणस्यैव निन्द्यत्वादिति ध्येयम् । (भास्करोदया)

तथा च श्रूयते—"आत्मा वा अरे द्रष्टव्यः" (प्रकृतितो विवेक्तव्यः) "न स पुनरावर्तत" इति।

अस्यां प्रतिज्ञायां हेतुमाह—"स ह्यविशुद्धिक्षयातिशययुक्तः"

---

तत्र सांख्यनयेन 'द्रष्टव्य' इति श्रौतं पदं व्याचष्टे—प्रकृतितो विवेक्तव्य इति। प्रकृतिरचेतना जडा, पुरुषस्तु चेतनः, प्रकृतिः कर्त्री, पुरुषस्तु उदासीनोऽकर्ता, प्रकृतिः त्रिगुणात्मिका, पुरुषस्तु निर्गुणः, प्रकृतिरन्धा पुरुषस्तुसाक्षी, इत्येवं भेदेन ज्ञातव्य इत्यर्थः ॥ ❀ ॥

ननु भवतु विवेकज्ञानस्य वैदिकत्वम्, अस्तु च तस्यापि दृष्टोपायतुल्यत्वं, का हानिरित्याशङ्कां परिहरति—न स पुनरिति। सः=अहङ्ग्रहोपासनादिना ब्रह्मलोकं हिरण्यगर्भाख्यं गत उपासकः पुनस्ततो ब्रह्मलोकादवरुह्य न आवर्तते=जन्मान्तरं नानुभवति, किन्तु तल्लोकाधिष्ठातृणा ब्रह्मणा सह परं पदं प्रविशतीत्यर्थः। तथाच विवेकज्ञानस्य लौकिकोपायतुल्यत्वाभ्युपगमे तस्यामृतहेतुत्वं श्रूयमाणं विरुध्येत, तस्मात् सामान्येनाभिधानेऽपि कर्मकलापाभिप्रायेणैव व्याख्येयमिति भावः

ननु "न स पुनरावर्तते" [छा० ८।१५] इति श्रुतेरुपासकदशानिरूपकत्वेन प्रकृते विवेकज्ञाने उपयोगाभावात् कथमिह तदुपन्यास इति चेत्। अत्राहुः—"यदा किल अविद्यावतामपि ब्रह्मोपासकानां न पुनरावृत्तिः, तदा विध्वस्ताविद्यावतां ब्रह्मज्ञानिनां पुनरावृत्तिर्न भवतीति किमु वक्तव्यम्" इति कैमुतिकन्यायेन प्रकृते तदुपन्यासादिति ॥

नामग्राहं प्रकृतोपयोगिन्यस्तु—"तमेव विदित्वाऽतिमृत्युमेति" [यजु० ३१।१८] "य इत्तद्विदुस्तेऽमृतत्वमानशुः" [ऋ० २।३।१८।२३] "तमेव विद्वान् न बिभाय मृत्योः" [अथर्व० १०।५।४४] "ब्रह्मविदाप्नोति परम्" [तै० २।१] "य एतद्विदुरमृतास्ते भवन्ति" [श्वे० ३।१] "तरति शोकमात्मवित्" [छा० ७।१।३] इत्याद्याः श्रुतयो द्रष्टव्याः ॥ ❀ ॥

ननु कथम् आनुश्रविक उपायो दृष्टवदित्याकाङ्क्षायां तत्साधकं कारिकागतं हेतुमवतारयति—अस्यामिति। अस्याम्='आनुश्रविक उपायोऽपि दृष्टवत्' इत्याकारिकायां, वैदिकः कर्मकलाप ऐकान्तिकात्यन्तिकदुःखनिवृत्त्यनुपाय इत्यात्मिकायां प्रतिज्ञायाम्=अभ्युपगमे हेतुं=साधकम् आह=ब्रूते, कारिकाकृत्' इति शेषः। तदेव साधकमाह—स ह्यविशुद्धिक्षयातियुक्त इति। हिर्हेतौ। हि=यतः, सः=आनुश्रविकः कर्मकलापः–वैदिकउपायः, अविशुद्धिक्षयातिशययुक्तः, अतो दृष्टवदित्यर्थः।

---

१ "प्रकृतिर्जडा, पुरुषश्चेतनः, प्रकृतिः परिणामिनी, पुरुषो निर्विकारः, प्रकृतिर्गुणमयी पुरुषो निर्गुणः (गुणातीतः) प्रकृतिर्दृश्या पुरुषो द्रष्टा, प्रकृतिर्भोग्या पुरुषो भोक्ता, प्रकृतिर्विषयः पुरुषो विषयी" इत्यपि यथासंभवं दृश्यम्। २ दृष्टोपायसाम्यसाधकम्।

अविशुद्धिः=सोमादियागस्य पशुबीजादिवधसाधनता,

तत्राविशुद्धिशब्दार्थमाह—सोमेति। षष्ठ्या निरूपितत्वमर्थः। तथाच साध्यसोमादियागनिरूपिता या पशुबीजादिवधनिष्ठा साधनता=कारणता सैवात्राविशुद्धिरित्यर्थः। तत्र बीजवधः=बीजस्याङ्कुरजननशक्तिविनाशः। एतदुक्तं भवति—होम-देवपूजन-दक्षिणाप्रदानादिरूपपुण्यजनककर्मसाध्यस्य सोमयागादेर्यत् पशुहिंसन-बीजवधादिरूपपापजनककर्मसाध्यत्वं तदेव सोमयागादेरविशुद्धियुक्तत्वमिति।

यथा हि होमदेवपूजनादीनि पुण्यकर्माणि यागे भवन्ति, तथा पशुवधादीनि पापकर्माण्यपि, तत्र हिंसादिना यत् पापसंबन्धित्वं तदेव यागादेरविशुद्धियुक्तत्वमिति सरलार्थः।

एवंच[1] यथा यागाङ्गभूतदीक्षणीयादि दक्षिणावसानपुण्यकर्मणा परलोके सुखं जन्यते, एवं यागाङ्गभूतपशुबीजादिवधरूपपापकर्मणा दुःखमपि जन्येत, तथाच यथा भेषजादेर्लौकिकोपायस्य दुःखसम्मिश्रसुखजनकत्वं, तथा वैदिकोपायस्यापि ज्योतिष्टोमादेर्दुःखसंभिन्नसुखजनकत्वमिति सोऽपि दृष्टवदिति भावः॥ ❀॥

न च बीजादिषु प्राणाभावान्न तत्पीडनं हिंसनमिति भ्रमितव्यम्। "वृक्षः शरीरम्, आध्यात्मिक[2]वायुसंबन्धवत्त्वात्, मनुष्यादिशरीरवत्" इत्यनुमानस्य वृक्षादेः शरीरत्वे, "वृक्षः आध्यात्मिकवायुसंबन्धवान्, वृद्धिमत्त्वात् भग्नक्षतावयवसंरोहणवत्त्वाद्वा" इत्यनुमानस्य चाध्यात्मिकवायुसंबन्धसद्भावे जागरूकतया व्रीह्यादिबीजानामपि प्राणित्वाविशेषात्। तथाच भगवान् मनुः—

"शारीरजैः कर्मदोषैर्याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥"

महर्षियाज्ञवल्क्योऽपि—

"अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्मजैः।
दोषैः प्रयाति जीवोऽयं भवयोनिशतेषु च॥"

तत्र—"सर्वाभक्ष्यभक्षणमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रतिग्रहः परदारादिगमनं परद्रव्यापहरणं प्राणिहिंसा चेति शारीराणि।

पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाच्यानि। परोपतापनपरद्रव्याभिद्रोहौ क्रोधलोभौ मानोऽहङ्कारश्चेति मानसानि।

तदेतान्यष्टादशसमानरूपाणि कर्माणि। यस्मिन् यस्मिन् वयसि यः करोति शुभाशुभानि तस्मिंस्तस्मिन् वयसि शारीरवाचिकमानसान्याप्नोति।

---

१ ननु अविशुद्धियुक्तत्वाभिधानेन दृष्टसाम्यता नैव संजाघटीति, दृष्टे मणिमन्त्राद्युपाये कस्याप्यशुद्धियोगस्याप्रतीतेरतस्तात्पर्येण दृष्टसाम्यतां व्युत्पादयति—एवं चेति।

२ आध्यात्मिकवायुः=प्राणवायुः।

एवंह्याह—

"यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात् ॥
शारीरेण तु शारीरं वाङ्मयेन तु वाङ्मयम् ।
मानसं मनसा चैव स्वकर्मफलमश्नुते" ॥ इति हारीतः ॥

अतएव तत्तद्बीजपीडकानां तैलिकशौण्डिकानां सौनिकसाम्यमभिहितं मनुना "दशसूनासमश्चक्री दशचक्रसमो ध्वजी" इत्यादिनेतिध्येयम् ॥ ॐ ॥

अतएव च "कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" [ यो० ४।७ ] इति सूत्रे योगभाष्ये भगवता वेदव्यासेनापि—

"शुक्लकृष्णा बहिःसाधनसाध्या तत्र परपीडानुग्रहद्वारेण कर्माशयप्रचयः" इत्येवं यागस्याविशुद्धियुक्तत्वमभिहितम् ।

एतद्व्याख्यायां वाचस्पतिमिश्राः—

"यद् यावद् बहिःसाधनसाध्यं, तत्र सर्वत्रास्ति कस्यचित् पीडा । न हि व्रीह्यादिसाधनेऽपि यागादिकर्मणि परपीडा नास्ति । अवघातादिसमये पिपीलिकादिवधसंभवात्, अन्ततो वीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धात् । अनुग्रहश्च दक्षिणादिना ब्राह्मणादेरिति" ॥ ॐ ॥

अत्रेदं बोध्यम्—

चतुष्टयी खलु कर्मजातिः[1], कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाऽकृष्णा चेति । तत्र तमोमूला दुःखमात्रफलिका ब्रह्महत्यादिरूपा कृष्णा । सेयं दुरात्मनाम् । रजोमूला दुःखोपसर्जनसुखफलिका बाह्यसाधनसाध्या यागादिरूपा शुक्लकृष्णा । यज्ञादिकर्मणां परपीडापरानुग्रहद्वारा पुण्यपापजनकत्वात् । सेयं याज्ञिकानाम् । सत्त्वमूला सुखमात्रफलिका मनोमात्रसाध्या सन्ध्योपासनतपःस्वाध्यायप्रणवजपादिरूपा शुक्ला । परपीडाकरत्वाभावेन स्वाध्यायादीनां केवलपुण्यमात्रजनकत्वात् । इयं तु समेषाम् । गुणाहेतुका निजानन्दफलिका सम्प्रज्ञात[2]समाध्यादि-

१ प्रकारान्तरेण नित्यनैमित्तिककाम्यानि त्रिविधानि कर्माणि । तत्र प्रत्यवायसाधनाभावप्रतियोगि कर्म नित्यम् । यथा संध्योपासनादि । अत्र सन्ध्याभावे प्रत्यवायसाधनत्वम् । पुत्रजन्मादिनिमित्तमाश्रित्य विहितं जातेष्ट्यादिकर्म नैमित्तिकम् । फलमुद्दिश्य क्रियमाणं यज्ञदानादिकर्म काम्यम् । "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥" [ या० प्रा० २१९ ] २ अत्रेदं बोध्यम्—समाधिर्हि द्विविधः, सविकल्पको निर्विकल्पकश्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षया द्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् । निर्विकल्पकस्तु ज्ञातृज्ञानादिभेदलयापेक्षया द्वितीयवस्तुनि तदाकाराकारिताया बुद्धिवृत्तेरतितरामेकीभावेनावस्थानम् । तत्राद्ये मृण्मयगजादिभानेऽपि मृद्भानवद् द्वैतभानेऽपि अद्वैतं वस्तु भासते । द्वितीये तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवद् अद्वितीयवस्त्वाकाराकारितच्चित्तवृत्त्यनवभासेन अद्वितीयवस्तुमात्रमेवावभासते । तत्र स विकल्पक एव सम्प्रज्ञात इति नाम्नाभिधीयते ।

यथाह स भगवान् पञ्चशिखाचार्यः—

रूपा अशुक्लाऽकृष्णा । न शुक्लं=पुण्यं फलसन्न्यासात्, नवा कृष्णं=पापम् अनिषिद्धत्वात्। सेयं योगिनाम् । एवं च यथा दक्षिणाप्रदानादिपुण्यकर्मयोगेन शुक्लात्मकत्वाद् यागादेर्विशुद्धियुक्तत्वं तथा पशुवधादिपापकर्मयोगेन कृष्णात्मकत्वादविशुद्धियुक्तत्वमिति तत्त्वम् ॥ ❀ ॥

अथ यागादेरविशुद्धियुक्तत्वे पञ्चशिखाचार्योक्तिं प्रमाणयति—यथाह स्मेत्यादिना ॥

"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" [ यो० २।१२ ] "सति मूले तद्विपाको जात्यायुर्भोगाः" [ यो. २।१३ ] इति सूत्रे योगभाष्ये तीव्रसंवेगेनानुष्ठितस्य कर्मणो दृष्टजन्मवेदनीयत्वमभिधायाऽन्यस्यादृष्टजन्मवेदनीयस्याऽनियतफलस्य कर्मणस्तिस्रो गतयोऽभिहिताः—

'कृतस्याऽविपकस्य नाशः' इत्येका, 'प्रधानकर्मण्यावापगमनम्' इति द्वितीया,

१ पुण्यपापात्मकं कर्म तावद् द्विविधम्, दृष्टजन्मवेदनीयम् अदृष्टजन्मवेदनीयं च। तत्र अत्युग्रपुण्यपापकर्मणाम् इहैव सद्यःफलप्रदातृत्वाद् दृष्टजन्मवेदनीयत्वम् । यथा शिलादमुनिकुमारो नन्दिनामा अत्युग्रमहादेवपूजनेन मनुष्यदेहं हित्वा तस्मिन्नेव जन्मनि देवदेहलाभादमरोऽभूत्, नहुषश्च देवेन्द्रभावं गतोऽपि शिबिकासंलग्नान् महानुभावान् महर्षीन् पार्ष्णिप्रहारेण ताडयन् अगस्त्यमुनिशापेन तत्कालमेव देवदेहं विहाय, अजगरभावमवाप्नोत्। इतरस्य च परत्र फलप्रदत्वेन अदृष्टजन्मवेदनीयत्वम् । यथा यागादिजन्यस्य धर्मस्य परलोके स्वर्गादिफलप्रदत्वं, ब्राह्मणवधादिजन्यस्याधर्मस्य च नरकादिप्रदत्वम्। तत्रादृष्टजन्मवेदनीयकर्मणो नियतफलकालनिर्धारणासत्त्वेन तस्य तिस्रो गतयो भवन्तीत्युक्तमित्यर्थः। २ कृतानां कर्मणां फलमदत्त्वैव ध्वंस इत्यर्थः। येन हि पुरुषेण तपोवेदाध्ययनादीनि शुक्लकर्माणि अनुष्ठितानि तस्य पापानि फलमदत्त्वैव नश्यन्ति। तथाच श्रुतिः—"द्वे द्वे ह[1] वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति" ॥ तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव, ते कर्मकवयो वेदयन्ति"॥ ततश्च अदत्तफलस्य कस्यचित्पापकर्मणः प्रायश्चित्तादिना नाश इत्येका गतिरित्यर्थः। ३ प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावा-

1 पापकस्य=पापिनः पुंसः वेदितव्ये=भोग्ये द्वे द्वे कर्मणी=द्विविधे कर्मणी कृष्णकृष्णशुक्ले कर्मभूते ( वीप्सया भूयिष्ठता सूचिता ) पुण्यकृत एको राशिः=तपोवेदाध्ययनादिपुण्यकर्मजन्यः एकः शुक्लधर्मसमूहः अपहन्ति=नाशयति। एतदुक्तं भवति—ईदृशो नामायं परपीडादिरहितसाधनसाध्यः शुक्लः कर्माशयः, यदेकोऽपि सन् कृष्णान् कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्माशयान् भूयसोऽपि हन्ति। तत्=तस्मात् सुकृतानि कर्माणि कर्तुमिच्छस्व=धर्ममात्रजनकानि वेदाध्ययनादीनि शुक्लानि कर्माणि अनुष्ठातुं कामयस्व । यतः इहैव ते कर्मकवयो वेदयन्ति=अस्मिन् मनुष्यलोक एव त्वदर्थं कर्मानुष्ठानं विद्वांस उपदिशन्ति, अस्यैव कर्मभूमित्वात् स्वर्गादेश्च भोगभूमित्वादिति भावः। इच्छस्वेति छान्दसत्वादात्मनेपदम् ॥

2 स्वर्गसाधने ज्योतिष्टोमादौ या हिंसा क्रियते, तस्याः कार्यद्वयमस्ति, 'यज्ञमुपकरोति'

'नियत¹विपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम्' इति तृतीया।
तत्र प्रधानकर्मण्यावापगमने प्रमाणतया

---

पगमनम्, द्वे खलु हिंसादेः कार्ये, प्रधानाङ्गतया विधानाद् यागोपकारः, "न हिंस्यात्–" इति निषिद्धत्वादनर्थश्च। तत्र प्रधानाङ्गतयाऽनुष्ठानादप्रधानतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति, किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते। प्रधानसाहायकमाचरन्त्याश्च तस्याः स्वकार्ये बीजमात्रतयाऽवस्थानं प्रधाने कर्मण्यावापगमनम्" इत्येतद् भाष्यार्थं इति वाचस्पतिमिश्राः।

अयं भावः—यथा धान्यबीजैः सहोत्पन्नानां तृणबीजानां तैः सहैव कुसूलमध्यस्थापितानां वपनसमये धान्यबीजैः सहैव वपनप्राप्तिर्न स्वातन्त्र्येण, तद्वत् प्रधानयागाङ्गतयाऽनुष्ठितस्य पशुहिंसादेर्यत् स्वातन्त्र्येण फलदानासामर्थ्यं प्रधानकर्मविपाकसमये च फलदानोन्मुखत्वं तदेवाऽऽवापगमनमिति।

एवं च यज्ञगतपशुहिंसादेर्यत्स्वातन्त्र्येण दुःखरूपफलादानं यज्ञजन्यस्वर्गफलेन सह फलदानं चाऽऽवापगमनमिति फलति॥

१ नियतविपाकेन बलीयसा कर्मान्तरेण प्रतिबद्धस्य बलीयः कर्मभोगपर्यन्तं बहुकालमवस्थानमित्यर्थः। चिरस्थितिरपि तावदेव यावत् बलीयसोविरोधिनः कर्मणः फलभोगो न स्यात् एतत्समानफलं बलीयः कर्मान्तरं वाऽस्य सहायकं न स्यात्। परन्तु कस्मिन् काले विरोधिनोऽभावात् कर्मान्तरसाहाय्याद्वा फलोन्मुखमिदं भविष्यतीति विज्ञातुमशक्यम्, न हि अस्य कर्मणोऽस्मिन् 'समये फलम्' इति कश्चिद् वक्तुं शक्नोति। अत एव "गहना कर्मणो गतिः" इत्यादिना कर्मगतेर्वैचित्र्यं दुर्विज्ञेयत्वं चोक्तम्॥

---

इत्येकम्, हिंसारूपमङ्गं विना अङ्गीभूतस्य यज्ञस्य साङ्गताया असिद्धेः। 'दुःखं ददाति' इति द्वितीयम्। परमियं हिंसा स्वतन्त्रा सती पापरूपं फलं दातुं न प्रभवति, किन्तु यस्य यज्ञस्य सा अङ्गमस्ति, तस्य प्रधानरूपयज्ञस्य फलसमय एव सह सह दुःखं ददाति। अत एव स्वर्गवासिनां किंचित् किंचिद् दुःखं सर्वदैव भवति। इदमेव प्रधानकर्मण्यावापगमनम् इत्येतद् भावार्थः।

1 तत्र यैरद्यावधि फलं न दत्तं परिशिष्टानि च सन्ति तानि संचितानि कर्माणि। यैः स्वफलदानमारब्धं तानीमानि प्रारब्धकर्माणि। यानि च भाविफलमुद्दिश्य साम्प्रतं वर्तमानशरीरेण अनुष्ठीयन्ते तानीमानि आगामिकर्माणीत्याख्यायन्ते। तत्रेदं प्रसङ्गतो विचार्यते—किमेकं कर्म एकस्य जन्मनः कारणम्, अथैकं कर्म अनेकं जन्म आक्षिपतीति। द्वितीया विचारणा—किमनेकं कर्म अनेकं जन्म निर्वर्तयति, अथ अनेकं कर्म एकं जन्म निर्वर्तयतीति। तत्रैकं कर्म एकस्य जन्मनः कारणम्' इति प्रथमपक्षस्तु न संभवति; तथा सति "किं वर्तमानकाले कृतेषु कर्मसु किंचित् पुण्यं कर्म आगामि कर्म आरभते, अथ संचितेष्वेव किंचिदेकं कर्म आगामि जन्मन आरम्भकं भविष्यति" इति संशयात् पुरुषाणां शुभकर्मसु प्रवृत्त्यनुपपत्तेः। 'एकं कर्म अनेकस्य जन्मनः कारणम्' इति द्वितीयपक्षोऽपि न संभवति, तथासति अनेकेषु संचितेषु आगामिषु वा कर्मसु एकेनैव केनचित्कर्मणा अनेकजन्मदानात् परिशिष्टानां तेषां निष्फलत्वापत्तेः। 'अनेकं कर्म अनेकस्य जन्मनः कारणम्' इति तृतीयपक्षोऽपि न संभवति, अनेककर्मभिः एकस्मिन्नेव काले अनेकजन्मदानस्यासंभवात्,

"स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्ष"इति । स्वल्पः सङ्करः—ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण,

---

"स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः, कुशलस्य नाऽपकर्षायाऽलं, कस्मात् ? कुशलं हि मे बह्वन्यदस्ति, यत्राऽयमावापं गतः स्वर्गेऽपि अपकर्षमल्पं करिष्यति" इत्ययं पञ्चशिखग्रन्थ उद्धृतः ।

तत्रत्यं प्रकृतोपयुक्तं भागमत्र प्रमाणतयोद्धरति—स्वल्पः सङ्कर इति ।

मेलनं सङ्करशब्दार्थः । तत्र 'केन कस्य सङ्करः ?' इति सङ्करशब्दनिरूपिताभाकाङ्क्षां शमयन् षष्ठीतृतीययोरध्याहारेण सङ्करशब्दं व्याचष्टे—ज्योतिष्टोमेति । ज्योतिष्टोमादेः सकाशात् जन्म=उत्पत्तिर्यस्य तस्य, ज्योतिष्टोमादिजन्यस्य, प्रधानापूर्वस्य=प्रधानीभूतस्य धर्मस्य यः पशुहिंसादिजन्येन अनर्थहेतुना=नरकाद्यनिष्टकारिणा वृत्रासुरादिभयजनकेन अदृष्टेन=पापेन अप्रधानीभूताऽधर्मेण सह सामानाधिकरण्येन सहावस्थानरूपः संसर्गः स सङ्कर इत्यर्थः । यथा दक्षिणादानादिपुण्यकर्मयोगात् ज्योतिष्टोमादिना धर्म उत्पद्यते, एवं पशुवधादिपापकर्मयोगात् अधर्मोऽपि जायते, तथा च धर्माधर्मयोर्या सहावस्थितिः स एव सङ्कर इति सरलार्थः । यागे पुण्यमधिकं पापं च न्यूनमिति पुण्यापेक्षयाल्पत्वेन च स स्वल्पः । यागे हिंसाजन्यः स्वल्पः सङ्कराख्यः प्रत्यवायो विद्यत इत्यर्थः ।

---

१ अपूर्वं नाम यागादिजन्यः स्वर्गादिफलकः कश्चन गुणविशेषः । तं गुणविशेषम् अपूर्वमिति मीमांसका वदन्ति । प्रारब्धकर्मेति वेदान्तिनः । धर्माधर्माविति नैयायिकाः । अदृष्टमिति वैशेषिकाः । पुण्यपापे इति पौराणिकाः । तच्च मीमांसकमते त्रिविधम् । प्रधानापूर्वम्, अङ्गापूर्वम्, कलिकापूर्वं चेति । तत्र दर्शपूर्णमासाद्यपूर्वं प्रधानापूर्वं, [ तदेव 'परमापूर्वम्' इत्यप्युच्यते ] प्रयाजाद्यङ्गजन्यापूर्वम् अङ्गापूर्वम् । तदवान्तरक्रियाकूटजन्यमपूर्वं कलिकापूर्वम्, तच्च व्रीहिप्रोक्षणाभ्युक्षणादिजन्यं द्रव्यनिष्ठमिति मीमांसकाः । तत्र कलिकापूर्वं च परमापूर्वं जनयित्वा नश्यति, अङ्गापूर्वैस्तु परमापूर्वे विशेष आधीयत इति भेदः । तथाचाङ्गापूर्वसहितं परमापूर्वं विशिष्टफलं जनयति, तद्विहीनं तु स्वल्पं फलम् । यागस्याशुविनाशित्वेन स्वर्गोत्पत्तिकाले तस्यासत्त्वात्तदुत्पत्त्यर्थं यागजन्यमपूर्वं कल्प्यत इति ध्येयम् ॥

---

क्रमशस्तद्दाने तु एकेन कर्मणा एकमेव कर्म फलतीति प्रथमपक्षोक्तदोषेणैव दूषितत्वात् । तस्मात् जन्मन आरभ्य मरणपर्यन्तं कृतानि असंख्यातानि विचित्राणि गुणप्रधानभावेनावस्थितानि सर्वाण्येव शुभाशुभकर्माणि मरणकालेऽभिव्यक्तानि मिलित्वा एकमेव जन्म आरभन्ते । सोऽयम् एकभविकवादो योगभाष्योक्तो दृष्टजन्मवेदनीयनियतविपाकस्थलविषय एवेति सुधीभिर्विभाव्यम् ॥

सपरिहारः=कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः,
अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये

---

यतः सङ्कराख्यः प्रत्यवायोऽल्पोऽतोऽल्पेनैव प्रायश्चित्तेन स परिहर्तुं शक्य इत्यभिप्रायेण सपरिहारशब्दार्थमाह—कियतापीति । अल्पेनापीत्यर्थः ।

तत्राल्पं प्रायश्चित्तं च—

"यत्पशुर्मायुमक्रतोरो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥"

इत्यादिमन्त्रवर्णबोधितं ज्ञेयम् ।

तत्र यदुपचितमशुभं विनाशयति न तु फलान्तरं जनयति तत्कर्म "प्रायश्चित्तम्" । मिताक्षराकारोऽपि—"प्रायश्चित्तशब्दोऽयं पापनिवर्तके नैमित्तिके कर्मविशेषे रूढः" इति । तथा चोक्तम्—

"प्रायः पापं विजानीयात् चित्तं तस्य विशोधनम् ।
तपोनिश्चयसंयुक्तं प्रायश्चित्तं विदुर्बुधाः ॥"

एवं च प्रायस्य=पापस्य चित्तं=विशोधनं यस्मादिति प्रायस्य=तपसः चित्तं=निश्चय इति वा तद् व्युत्पत्तिः द्रष्टव्या । निश्चयसंयुक्तम्=पापक्षयसाधनत्वेन निश्चितमित्यर्थः ।

परिहर्तुं शक्य इति । तथाच अयं सङ्करः सपरिहारः=परिहारेण सह वर्तमानः प्रायश्चित्तपरिहरणीय इत्यक्षरार्थः । अयमाशयः—स्वयमुत्पादितस्यापि दुरदृष्टसङ्करस्य परिहाराय प्रायश्चित्तमावश्यकमिति ॥ तद् यथाह यमः—"तपसोऽन्ते विशुध्यन्ति कर्मणां वा परिक्षयात् । तस्मात् कर्तव्यमेतैस्तु प्रायश्चित्तं विशुद्धये ॥" कर्मणां भोगेन परिक्षयादित्यर्थः ॥ अङ्गिराः—"उद्यच्छन् यद्वदादित्यस्तमः सर्वं व्यपोहति । तद्वत् कल्याणमातिष्ठन् सर्वं पापं व्यपोहति ॥ कल्याणं=प्रायश्चित्तम् ॥ ॐ ॥

प्रायश्चित्तानाचरणे तु दुरितापूर्वजन्यं दुःखमवश्यमेव भोक्तव्यमित्याशयेन सप्रत्यवमर्षशब्दं व्याचष्टे—अथेति । अथ=यदि प्रमादतः=आलस्यात् प्रायश्चित्तमपि नानुष्ठितं 'तर्हि' प्रधानकर्मविपाकसमये=ज्योतिष्टोमफलभूतस्वर्गभोगकाले सः=सङ्कराख्यः प्रत्यवायः विपच्यते=फलोन्मुखी भवति, तथापि=एवं सति असौ=हिंसाजन्योऽधर्मः यावत्=यत्पर्यन्तम् अनर्थं=स्वफलं वृत्रासुरादिभयरूपं सूते=जनयति तावत्=तत्पर्यन्तं सप्रत्यवमर्षः=अवश्यं सहनीयः, सङ्करजन्यं दुःखमवश्यं भोक्तव्यमित्यर्थः ।

---

१ हन्यमानः पशुर्यत् मायुम्=आर्तनादं कृतवान् यच्च पीडया पादाभ्यां वक्षःस्थलं ताडितवान् तत्पशुपीडाकरपापात् अग्निर्मां मोचयतु इति मन्त्रार्थः ॥ २ यत्=तपःप्रभृतिकं कर्म, उपचितम्=संचितम् अशुभं=पापम् । ३ कर्तव्येऽकर्तव्यत्वधिया ततो निवृत्तिः, अकर्तव्ये कर्तव्यत्वधिया तत्र प्रवृत्तिर्वा प्रमादः । 'प्रमादोऽनवधानता' इत्यमरः । ४ विपच्यते=कर्मभिः साध्यत इति विपाकः=फलम् ।

स विपच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः—प्रत्यवमर्षेण=सहिष्णुतया सह वर्तत इति,

मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः

---

न हि फलमदत्त्वा कृतं कर्म क्षीयत इति भावः।

यद्यपि "अङ्गापूर्वं प्रधानापूर्वातिशयमुत्पाद्य विनश्यति" इति सिद्धान्तस्तथापि प्रकृते तस्य विनाशो नाङ्गीक्रियते, पशुहिंसाद्यङ्गापूर्वस्य प्रधानोपकारनरकोभयजनकतया प्रधानोपकारमात्रानन्तरमेव तस्य विनाशे नरकानुपपत्तेः, तस्मात् प्रधानोपकारमुत्पाद्यापि नरकोत्पादनाय तस्य प्रधानापूर्वेण सह मिश्रभावेन स्थितिरावश्यकीति प्रायश्चित्तानाचरणे तज्जन्यं दुःखमवश्यं भोक्तव्यं स्यादिति समस्तप्रघट्टकार्थः।

एतदेव विशदीकरोति—मृष्यन्ते हीति। हि शब्दो वैदिकपौराणिकप्रसिद्धिद्योतनार्थः। पुण्यपुञ्जोपनतस्वर्गाख्यसुखमयामृतसरोवरावगाहनशीलाः कुशलाः=य इन्द्रादयस्ते पापमात्रया=पापलेशेन उपपादितां=योजितां हिंसाजन्यस्वल्पपापेन जनितां देवासुरसंग्रामादिरूपां दुःखमेव वह्निकणिका सन्तापकत्वात् तां मृष्यन्ते=सहन्ते हि=प्रसिद्धमेतदित्यर्थः।

तथाच यागादिजन्यस्वर्गस्य दुःखसिश्रिततया वैदिकोपायस्यापि लौकिकोपायसाम्यमिति भावः॥ ॐ॥

ननु यदि सङ्करजन्यं दुःखमवश्यं सोढव्यं, तर्हि किमिति यज्ञानुष्ठाने याज्ञिकानां प्रवृत्तिरित्यपेक्षायाम्—

---

१ "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि॥" "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान्॥" इत्यादिस्मृतेः॥ कर्मविपाकश्च—"मृगाश्व सूकरोष्ट्राणां ब्रह्महा योनिमृच्छति। खरपुल्कसवेनानां सुरापो नात्र संशयः॥ कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात्। तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः॥ ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः। हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः॥ यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते। अन्नहर्तामयावी स्यान्मूको वागपहारकः॥ धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः। तैलहृत्तैलपायी स्यात्पूतिवक्त्रस्तु सूचकः॥ परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च। अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः॥ हीनजातौ प्रजायेत पररत्नापहारकः। पत्रशाकं शिखी हृत्वा गन्धान् छुच्छुन्दरी शुभान्॥ मूषको धान्यहारी स्याद्यानमुष्ट्रः कपिः फलम्। जलं प्लवः पयः काको गृहकारी ह्युपस्करम्॥ मधुदंशः पलं गृध्रो गां गोधाग्निं बकस्तथा। श्वित्री वस्त्रं श्वा रसं तु चीरीलवणहारकः॥ प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि। द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः॥" इत्यादिना याज्ञवल्क्यस्मृत्यादौ प्रदर्शितो द्रष्टव्यः। विस्तरभिया नाधिकं प्रपञ्च्यतेऽस्माभिः॥

---

1 मया दुष्कृतं कृतमित्येवमुद्वेगरहिता इत्यर्थः। "कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते। नैतत् कुर्यां पुनरिति निवृत्त्या पूयते नरः॥" इति विष्णुपुराणे।

कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् ।

न च "मा हिंस्यात्सर्वाभूतानि" इति सामान्यशास्त्रं विशेष-

---

"कुशलस्य नापकर्षायालं, कस्मात्? कुशलं हि मे बह्वन्यदस्ति, यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति ॥" इत्युत्तरपञ्चशिख-ग्रन्थ इति ध्येयम् ।

अस्य चायमर्थः—अयं स्वल्पः सङ्करः कुशलस्य=महतः पुण्यकर्मणः अपकर्षाय=प्रक्षयाय न अलम्=पर्याप्तः । कस्मात्? हि=यतः मे=मम यागानुष्ठातुः कुशलं=पुण्यात्मकं कर्म दीक्षणीयादिदक्षिणान्तं बहु=अधिकं विद्यते । यत्र=प्रधानकर्मणि अयं=स्वल्पः सङ्करः आवापं गतः=अन्तर्भूतः सन् स्वर्गेऽपि=स्वर्गात् अल्पं दुःखसंभेदं करिष्यतीति एतद् व्याख्यायां वाचस्पतिमिश्राः । एवं चाल्पदुःखभयेन महत्सुखं न त्याज्यं, "न हि मृगा सञ्चरन्तीति धान्यानि नोप्यन्ते, नापि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते" इति याज्ञिकाशयः ॥ ❀ ॥

अथ यागादेरविशुद्धियुक्तत्वमसहमानस्य कर्ममीमांसकस्याऽऽशङ्कामुत्थाप्य निराकरोति—न चेति । सर्वा=सर्वाणीत्यर्थः । 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । सामान्यशास्त्रम्=भूतसामान्यविषयकशास्त्रम् । विशेषशास्त्रेण=भूत-विशेषविषयकशास्त्रेण । बाध्यते=विशेषेतरविषयीक्रियते, सामान्यशास्त्रं यागेतरविषय एव प्रसरतीति । इति न च=नहि युक्तमित्यन्वयः । तत्र बहुव्यापकं सामान्यम्, अल्पव्यापको विशेषः ॥ ❀ ॥

अत्र शङ्ककमीमांसकस्यायमाशयः—

यागे पशुवधस्तृणवृक्षादिच्छेदश्च न हिंसा । "अध्वर' इति यज्ञनाम, ध्वरतिर्हिंसाकर्मा, तत्प्रतिषेधोऽध्वरः" इति निरुक्तात्,

न वा॑ उ॑ ए॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाँ २ ॥ इदे॑षि प॒थिभि॑ः सु॒गेभि॑ः । यत्रा-सते सु॒कृतो॒ यत्र॒ ते य॒युस्तत्र॑ त्वा दे॒वः स॑वि॒ता द॑धातु ॥" [ यजु० २३।१६ ] स्वधि॑ते॒ मैनं॑ ॳ हि ॳ सि" [ यजु० ४।१ ] इत्यादिश्रुतेश्च ।

प्रत्युत—

"ओष॑धे॒ त्राय॑स्वैनम्" [ यजु० ४।१ ] "कुशलत्वमिच्छन्ति तृणानि राजन्" इत्यादिश्रुतिस्मृतिभ्योऽभ्युदयः ।

---

१ हे अश्व! यत् त्वमस्माभिः संज्ञप्यसे एतत् त्वं न म्रियसे=मरणं न प्राप्नोषि न च रिष्यसि=विनश्यसि, [ वै उ निपातौ पादपूरणे ] अपि तु सुगेभिः=साधुगमनैः पथिभिः=देवयानमार्गैः देवान् इत्=प्रतिगच्छसि । यत्र=लोके सुकृतः=पुण्यात्मानो यन्ति=गच्छन्ति दुष्कृतश्च न गच्छन्ति तस्मिन् लोके सविता देवस्त्वां दधातु=स्थापयतु, इति मन्त्रार्थः । २ हे कुशतरुण! रक्षैनं यजमानम् । ३ हे क्षुर! मा एनं हिंसीरित्याह हिंसन् ।

शास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यत इति युक्तं,

---

अत एव—"इयं हिंसा, इयमहिंसा," इति वेदादेव ज्ञायते, निखिलस्यापि जगतः कल्याणाय प्रवृत्तो वेदश्च कथं पुरुषं हिंसायां प्रवर्तयेत्? अतो वेदप्रतिपादिता हिंसा अहिंसैव। यतः यज्ञे समर्पिता ओषधिवनस्पत्यादय उच्चां गतिं लभन्ते। सोऽयं तस्य हिंसां न करोति किन्तु यज्ञे विनियोगार्थं विधिना कर्तयन् तदुपरि अनुग्रहं करोति। यज्ञे विधिना सकृत् छिन्नो न भूयश्छेदमर्हतीति। सेयं तस्य रक्षा॥" इति निरुक्तभाष्ये भगवान् दुर्गाचार्यः।

'द्वेषपूर्वकं प्राणिवध एव हिंसा' [मीमां० १।१।२] इत्यत्र कुमारिलभट्टाः॥

यद्यपि "अग्नीषोमीयं पशुमालभेत" इत्यत्र प्राणवियोगानुकूलव्यापारार्थकत्वात् आलभतेरस्त्येव तत्र हिंसा,

तथापि सा "न हिंस्यात् सर्वा भूतानि" इति निषेधविषयपापजनिका न। एतस्य 'अग्नीषोमीयम्'—इत्यनेन कुण्डहोमस्य[2] पदहोमेनेव, आद्गुणस्य एचि वृद्ध्येव च अपवादत्वेन बाधात्। "अपवादो ह्युत्सर्गं बाधते" इति न्यायात्। तद् यथोक्तम्—

"येन[3] नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः" इति। विशेषशास्त्रं हि विशेषेषु झटिति प्रवर्तते, विशेषाणां स्वशब्देनोपात्तत्वात्। सामान्यशास्त्रं तु सामान्यमुखेन विशेषेषु प्रवर्तत इति तस्य तेषु मन्दप्रवृत्तिः। अतः सामान्यशास्त्रतो विशेषशास्त्रं प्रबलम्।

यदाहुर्भट्टवार्तिककाराः—

"अवश्यमेव सामान्यं विशेषं प्रति गच्छति।
गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवम्॥" इति।

अतः "अग्नीषोमीयं पशुमालभेत" इति विशेषशास्त्रेण "न हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं यागेतरविषयविषयी क्रियते। कथमन्यथा व्यापकविषयस्य 'न हिंस्यात्–' इति निषेधस्य यागेऽपि प्रवृत्तौ "अग्नीषोमीयम्–" इति यागमात्राल्पविषयकं शास्त्रं चारितार्थ्यमियात्।

तस्माद् वैदिकी हिंसा न पापावहा॥

---

१ अत एव मनुः—योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया। स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते॥ २ यथा, "आहवनीये जुहोति" इति कुण्डहोमपरसामान्यवाक्यस्य "अश्वस्य पदे जुहोति" इति पदहोमपरविशेषवाक्येन बाधः, यथा वा "आद्गुणः" इति सामान्यशास्त्रस्य 'वृद्धिरेचि' इति विशेषशास्त्रेण बाधस्तथेत्यर्थः। ३ अप्राप्त इति भावे क्तः, येनेति कर्तरि तृतीया, द्वौ नञौ प्रकृतार्थं गमयतः। तथा च यत्कर्तृकावश्यकप्राप्तौ यस्य विधेरवश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स=आरभ्यमाणो विधिः तस्य=अवश्यप्राप्तस्य अपवादः=बाधक इत्यर्थः॥

विरोधाभावात्, विरोधे हि बलीयसा दुर्बलं बाध्यते न चेहास्ति

अत एव "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः[1]" [छा० ८ १५।१।] इति श्रुतौ शास्त्रीयहिंसाया अपापावहत्वमुक्तम् ॥

तदेतदुक्तं भगवता मनुनापि—

"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः[2] ॥
ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युत्सृतीः[3] पुनः ॥
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषु[4] पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानं च पशुं चैव गमयत्युत्तमां गतिम् ॥
गृहे गुरावरण्ये[5] वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥
या वेदविहिता[6] हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥"
[म० ५।३९-४४] इति ।

वाराहपुराणेऽपि—

"हिंसा त्ववैदिकी या तु तयाऽनर्थो ध्रुवं भवेत् ।
वेदोक्तया हिंसया तु नैवानर्थः कथंचन ॥" इति ।

एतन्मूलक एव "वैदिकी हिंसा हिंसा न भवति" इति शिष्टानामुद्घोष इति ॥ ॐ ॥

न च युक्तमित्युक्तौ 'कुतो न युक्तम्'? इति जिज्ञासायां तत्र हेतुमाह—विरोधाभावादिति । "सति विरोधे सामान्यशास्त्राद् विशेषशास्त्रं प्रबलम्"

१ तीर्थेभ्यः=शास्त्रानुज्ञाविषयेभ्योऽन्यत्र स्थावरजङ्गमानि सर्वाणि भूतानि अपीडयन् वर्तेत । वेदादिसत्यशास्त्रविहितेभ्योऽन्यत्राहिंसाधर्मो मन्तव्य इत्यत्र सारम् । २ वधोऽवध एव हिंसाजन्यदोषाभावात् । ३ जात्युत्कर्षम् । ४ मधुपर्कादिषु पदार्थेषु । ५ गृहस्थाश्रमे ब्रह्मचर्याश्रमे वानप्रस्थाश्रमे वेत्यर्थः । ६ या श्रुतिविहिता अहिंसामेव तां जानीयात् हिंसाजन्याधर्मविरहात् । "दैक्षपशुहननम् अधर्मः, प्राणिहननत्वात्, ब्राह्मणहननवत्" इत्याद्यनुमानम् उपजीव्यशास्त्रबाधादेव न प्रवर्तते । दृष्टान्तीकृतब्राह्मणहननस्यापि अधर्मत्वे शास्त्रमेवोपजीव्यम् । यस्मादनन्यप्रमाणको धर्मो वेदादेव निःशेषेण प्रकाशतां गतः ॥ "शब्दप्रमाणकावयम्, यच्छब्द आह तदस्माकं प्रमाणम्" इति व्याकरणमहाभाष्ये भगवान् पतञ्जलिः । तस्मात् अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेवेति समस्तप्रघट्टकार्थः । अत एव लोकेऽपि चिकित्सकं तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञाः । किं बहुना—यत्र भूयिष्ठं फलं यथा देशोन्नयनं जात्युन्नयनं तद्धेतुशरीरोन्नयनं वा तत्र भवन्त्यपि प्राणिहिंसा हिंसा न मन्यते, यत्कारणं सा शास्त्रेणानुमन्यत इति सर्वमनाकुलम् ।

कश्चिद् विरोधः भिन्नविषयत्वात् ।

तथाहि 'न हिंस्याद्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि 'अग्नीषोमीयं पशुमालभेत' इत्यनेन वाक्येन च पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थहेतुत्वाभावः;

---

इत्येव न्यायस्वरूपं, न तु विरोधाभावेऽपि "सामान्यशास्त्राद् विशेषशास्त्रं प्रबलम्" इति कृत्वा भवति सामान्यशास्त्रस्य विशेषशास्त्रेण बाध इति भावः ।

एतदुक्तं भवति—न हि "प्रबलम्" इत्येतावता दुर्बलं बाध्यते, किन्तु सति विरोधे, न हि "सिंहेन मशको बाध्यते" इत्यस्तीति ।

ततः किम्? तत्राह—न चेति । इह कश्चिद् विरोधो नास्तीत्यर्थः । कुतस्तत्राह—भिन्नविषयत्वादिति । 'न हिंस्यात्–' 'अग्नीषोमीयम्–' इति वाक्ययोः सत्यपि सामान्यविशेषभावे भिन्नविषयत्वात्=विभिन्नगोचरचारित्वात् विषयभेदात् न विरोध इत्यर्थः । ननु सामान्यविशेषभावसत्त्वात् कथं न बाध्यबाधकभाव इति जिज्ञासायां तयोर्विभिन्नविषयत्वमेवोपपादयति—तथाहीति । यथा 'न हिंस्यात्–' 'अग्नीषोमीयम्–' इति वाक्ययोर्विभिन्नविषयत्वं, तथा स्पष्टमुपपाद्यत इत्यर्थः ।

अनर्थहेतुभाव इति । बलवदनिष्टसाधनत्वम् इत्यर्थः । न त्विति । अक्रत्वर्थत्वम्=यागानुपकारकत्वम् । यागानुपकारकत्वस्यापि ज्ञापकत्वे तु विरोधावश्यंभावः स्यादिति भावः ।

ननु यथा 'न हिंस्यात्–' इति निषेधेन हिंसाया बलवदनिष्टसाधनत्वं ज्ञाप्यते, तथा 'अग्नीषोमीयम्–' इति विधिनापि बलवदनिष्टाननुबन्धीष्टसाधनता बोध्यत इति विरोधावश्यंभाव इत्यत आह—अग्नीषोमीयमिति । क्रत्वर्थत्वम्=क्रतूपकारकत्वम् । अङ्गानां[2] क्रतूपकारकतया तद्विधेः क्रतूपकारकत्वमात्रबोधकत्वादिति भावः ।

ननु अङ्गविधेरपि विधित्वावश्यकतया क्रतूपकारकत्वस्येव बलवदनिष्टाजनकेष्टसाधनत्वस्यापि बोधकत्वमस्तु, इत्यत आह—नानर्थेति । अनर्थहेतुत्वाभावः=बलवदनिष्टाजनकत्वम् । अङ्गविधीनां विनियोगमात्रतात्पर्यकत्वेन बलवदनिष्टाननुबन्धित्वबोधने तात्पर्याभावादिति भावः ।

---

१ बलवत् यत् अनिष्टं तस्य अननुबन्धि=अजनकं यत् इष्टसाधनम् । २ प्रधाननिर्वहणद्वारा तज्जन्यजनकत्वम् अङ्गत्वम् । अङ्गानां साक्षात्फलजनकत्वाभावादुक्तम्—प्रधाननिर्वहणद्वारेति । यथा श्रीपूजनादौ तन्निर्वहणद्वारा तज्जन्यसंपत्प्राप्तिरूपफलजनकत्वात्संकल्पादीनामङ्गत्वम् ॥ "मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापारजनकत्वम्, अङ्गत्वम्" इति मीमांसकाः । अत्र च कार्यकालवृत्तित्वेनैव कारणत्वस्य मीमांसकैः स्वीकृतत्वात् प्रयाजादिहोमस्य अपूर्वं प्रत्येव जनकत्वेन मुख्यफलस्वर्गं प्रति अजनकत्वमुपपद्यत इति बोद्धव्यम् ।

**तथा सति वाक्यभेदप्रसङ्गात्,**

**नचानऽर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद् विरोधोस्ति, हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति ।**

---

ततश्चायमर्थः—'न हिंस्यात्–' इति निषेधेन हि "हिंसा पुरुषानर्थंकरी" इत्येव बोध्यते, न तु "हिंसा यागोपकारिणी न" इत्येवमपि, एवं "पशुमालभेत" इति वाक्येनापि "हिंसा यागोपकारिणी" इत्येव ज्ञाप्यते, न तु "हिंसानानर्थंकरी" इत्येवमपि, एवं च भिन्नविषयत्वान्न विरोध इति ।

अयं भावः—यो हि पुरुषप्रवर्तकः प्रधानविधिस्तेन स्वप्रवृत्तिसिद्धये बलवदनिष्टाननुबन्धित्वमपि तात्पर्यतो बोध्यते, "अग्नीषोमीयं पशुमालभेत" इत्याद्यङ्गविधयस्तु न पुरुषप्रवर्तकाः, अपि तु अङ्गानां प्रधानविनियोगतात्पर्यकाः, तत्सिद्धये चेष्टसाधनत्वमेव तात्पर्यगत्या तैः प्रतिपादनीयं, तस्मिन् प्रतिपादिते 'किं तदिष्टम्?' इत्याकाङ्क्षायाम् उपस्थितत्वात् 'क्रतूपकार एव' इत्यवगम्यते, न तु अनर्थहेतुत्वाभावोऽपीति ॥ ❀ ॥

ननु 'न हिंस्यात्–' इत्यस्य अर्थद्वयम्—"हिंसाऽनर्थहेतुः" इत्येकः, "अक्रत्वर्था च सा" इत्यपरः । एवम् "अग्नीषोमीयं पशुमालभेत' इत्यस्याप्यर्थद्वयम्—"पश्वालम्भनं क्रत्वर्थम्" इत्येकः, "इदं चालम्भनं नानर्थहेतुः" इत्यपरः । एवं च 'न हिंस्यात्–' इति सामान्यशास्त्रबोधितयोः अनर्थहेतुत्वाक्रत्वर्थत्वयोः 'अग्नीषोमीयम्–' इति विशेषशास्त्रबोधिताभ्याम् अनर्थाहेतुत्वक्रत्वर्थत्वाभ्यां विरोधात् कथमिह विरोधाभावः उपपादयितुं शक्य इति शङ्कमानं मीमांसकं प्रत्याह—**तथा सतीति** । अर्थद्वयाभ्युपगमे सतीत्यर्थः । "अन्याय्यश्चानेकार्थः" इति न्यायेन वाक्यभेदस्य त्वयैव मीमांसकेन दुष्टत्वव्यवस्थापनेन अर्थद्वयस्य विधातुमशक्यत्वात्, अन्यथा "संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते" इत्युक्तिविरोधादिति भावः ।

यथाश्रुतैकार्थत्वाभ्युपगमे तु न कश्चिद् विरोधः समापततीत्याह—**न चानर्थेति** । न हीत्यर्थः । अनर्थहेतुत्वक्रतूपकारत्वयोरविरोधमुपपादयितुं द्वयोः समावेशमाह—**हिंसा हीति** । आवक्ष्यति=जनयिष्यति, सम्पादयिष्यतीत्यर्थः । निषेधविषयत्वादिति भावः । **क्रतो[1]श्चेति** । उपकारं करिष्यतीत्यर्थः । अङ्गविधिविषयत्वादिति भावः । न च 'आलभेत' इत्यत्र विधिप्रत्ययेन हिंसाया इष्टहेतुत्वं बोध्यते, 'न हिंस्यात्–' इति निषेधेन च हिंसाया अनिष्टहेतुत्वं ज्ञाप्यते, तथा चैकत्र हिंसायामुभयवर्तनं विरुद्धमिति न यागीयहिंसा अनिष्टहेतुरिति शङ्क्यम् । मधुविषसंपृक्तभोजने परकीयकमनीयरमणीरमणे चेष्टहेतुत्वानिष्टहेतुत्वयोर्द्वयोरपि समावेशदर्शनेन विरोधाभावात् ॥

---

१ "सा लक्ष्मीरुपकुरुते यया परेषाम्" इतिवत् 'क्रतोः' इति कर्मणि षष्ठीति बोध्यम् ॥

तथाच हिंसायां परस्पराविरुद्धपुरुषानिष्टजनकत्वक्रतूपकारकत्वबोधकयोर्भिन्नविषयत्वान्न विरोध इति प्रघट्टकार्थः ॥ ॐ ॥

एतदुक्तं भवति—क्रतुप्रकरणे समाम्नातं पश्वालम्भनं क्रत्वर्थतामेवास्य गमयति, नत्वपनयति निषेधापादितं हिंसायाः पुरुषं प्रत्यनर्थहेतुत्वमिति भवतु निषेधात् पुरुषं प्रत्यनर्थहेतुता विधेश्च क्रत्वर्थता, को नामविरोधावकाश इति ।

अयं भावः—यथा "आमतक्रं कोष्ठे कफं हन्ति" इति वाक्यस्येष्टसाधनत्वं विषयः, "कण्ठे च तत् तक्रं कफं करोति" इति वाक्यस्यानिष्टसाधनत्वं विषय इति विषयभेदादुभयोरविरोधः, तथा 'न हिंस्यात्'—इति निषेधवाक्यस्य अनर्थहेतुत्वं विषयः, 'अग्नीषोमीयम्'—इति पश्वालम्भनवाक्यस्य च क्रतूपकारकत्वं विषय इति विषयभेदादुभयोरविरोध इति ।

तत्सिद्धमेतत्—यत्र हि सामान्यशास्त्रं विशेषशास्त्रविषयं क्रोडीकरोति, यथा—"आद्गुणः" इति सामान्यशास्त्रं "वृद्धिरेचि" इति विशेषशास्त्रविषयं गङ्गौघ इति, तत्रैव बाध्यबाधकभावो नान्यत्र, यथा सत्यपि सामान्यविशेषभावे लिङः सीयुटो न "सुट्तिथोः" इति सुटा बाधो, "लिङो यासुट् तकारथकारयोः सुट्" इति विषयभेदात्, तथाऽत्रापि विषयभेदान्न बाध्यबाधकभावः, "समाने विषय एव बाध्यबाधकभावः" इति नियमात्, प्रकृते च भिन्नविषयत्वेन बाध्यबाधकभावासंभवात्, निषिद्धत्वाच्च पशुहिंसायाः श्येनवदनर्थप्रापकत्वमेवेति ॥ ॐ ॥

अत्र समाधातृसांख्यानामयमाशयः—वैदिकी हिंसाऽपि हिंसैव, नत्वहिंसा, प्राणवियोगानुकूलव्यापारस्यैव हिंसात्वात्, तस्य च तत्र सत्त्वात् ।

यदुक्तं ब्रह्मविद्याभरणे—प्राणवियोगफलोपहितस्तदनुकूलो व्यापारो हिंसा, यागीयपश्वालम्भोऽपि भवति तथेति कथं न हिंसा? यथाहि व्रणिनो व्रणच्छेदनादिकं तदनुग्राहकमपि छेदनं भवत्येव, न तत्र तदनुग्राहकं यन्न भवति छेदनादि, तदेव छिदिधात्वर्थ इति कल्प्यते, एवमत्रापि न हिंसनीयानुग्रहरहितं यत्प्राणवियोजनं सैव हिंसेति कल्पयितुमुचितम् । ततश्च यदि यागीयपशोः "हिरण्यशृङ्ग"—इत्यादिवचनानुसारेण स्वर्गप्राप्तिः प्रतीयते, तदा सा भवतु नाम, देवताधिकरणोक्तन्यायेनार्थवाद[1]प्रतीयमानस्याप्यर्थस्योपगमात् । "न वा उ एतन्म्रियसे"—इत्यादि[2]वाक्यप्रतिपाद्यं तु तदालम्भस्याहिंसात्वं स्तुत्यर्थमारोप्यत इत्येवमुचितम् । प्रवृत्तिनिमित्तसद्भावेन तस्य हिंसात्वावश्यम्भावात् ॥" इति ।

---

१ अर्थवादवाक्यानां न स्वार्थे प्रामाण्यम् अपि तु विधेयनिषेध्यस्तवननिन्दनद्वारा प्रवृत्तिनिवृत्तिरूपे तात्पर्यमिति कर्ममीमांसकाः । प्रमाणान्तराविरुद्धस्वार्थेऽपि अर्थवादवाक्यानां प्रामाण्यमिति प्रथमाध्यायतृतीयपादेऽष्टमदेवताधिकरणे ब्रह्ममीमांसका इति भावः ॥

२ आदिना "यज्ञे हिंसितः पशुर्दिव्यदेहो भूत्वा स्वर्गं लोकं याति" "हिरण्यशरीर ऊर्ध्वं स्वर्गं लोकमेति" इत्यादि ।

ततश्च "हिंसनीयाननुग्राहकप्राणवियोगकरव्यापारस्यैव हिंसात्वं न यागीयपशुप्राणवियोगानुकूलव्यापारस्य, तस्य पश्वनुग्रहकरत्वात्" इति कथनं केवलमविचारितरमणीयमेव। न हि "त्वां ब्रह्माणं करोमि" इत्युक्तेऽपि कीटोऽपि प्राणांस्त्यक्तुमीहते, प्राणवियोगस्य साक्षाद् दुःखजनकत्वात्॥

किंच—"केनचिन्निमित्तेन शप्तेन धर्मेण मृगयोनिमापन्नेन "यदि त्वां कश्चिद् यज्ञे हन्यात् तदा तव मृगत्वं नङ्क्ष्यति" इति शापान्तं बुद्ध्वा श्यामाकनीवारादिचरुणा देवयजनं कुर्वाणं कंचिद् वनवासिनं सत्यनामानं ब्राह्मणमुपसृत्य छलेन "पशुपुरोडाशं विना यज्ञोऽयमङ्गहीनो न स्वर्गफलकः, पशुक्रयणासामर्थ्ये तु "मां भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमनिन्दित" इत्येवं प्रलोभ्य स्वकीयहिंसायां प्रवर्तितः सः। प्रवृत्तस्य च तस्यानुष्ठितं बहु तपो नष्टम्॥" इत्येवमाख्यायते भारते। [ महाभा० शा. प. मो. ध. अ. २७२। श्लो० १८ ] यदि च "हिंसनीयाननुग्रहकरव्यापारस्यैव प्रत्यवायकरत्वं नेतरस्य" इत्यभ्युपेयेत, तर्हि कथमेतत् संगच्छेत। तदवश्यं चैतन्मन्तव्यं यद् यागीयापि हिंसा अनर्थजनिकेति॥

एवं विचख्नुगीतेऽपि [ महाभा० मोक्षध० अ० २९५ श्लो० ५ ]

"अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता।
सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्॥"

इति हिंसां निन्दित्वा

"पायसैः सुमनोभिश्च तस्यापि यजनं मतम्।"

इत्येवं सात्त्विकं यजनमेवाभिहितं न हिंसादिमिश्रम्।

तथा पितापुत्रसंवादेऽपि—[ महाभा० शा० मो० अ० १७५ ]

"तातैतद् बहुशोऽभ्यस्तं जन्मजन्मान्तरेष्वपि।
त्रयीधर्ममधर्माढ्यं न सम्यक् प्रतिभाति मे॥"

इत्यादिना यागादेरधर्मयुक्तत्वमभिहितं भारते। तुलाधारजाजलिसंवादेऽपि व्यासदेवेनाहिंसैव समनुवर्णिता भारते। [ २९१। महा० शान्ति० मोक्षध० ]

अत एव किरातार्जुनीये स्वपुत्रं धनञ्जयं प्रति देवराजेनोपदिष्टम्—

यः[3] करोति वधोदर्का निःश्रेयसकरीः क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः॥

---

१ स्थूलाक्षरैः "वैदिकी हिंसा हिंसा न भवति" इति कथनम्। २ "तस्य तेनानुभावेन मृगहिंसात्मनस्तदा। तपो महत्समुच्छिन्नं तस्माद् हिंसा न यज्ञिया॥" [ शा. मो० २७२।१८ ] इति श्लोके यज्ञियापि हिंसा न धर्मायेति स्पष्टमेवाभिहितम्। ३ यः=पुरुषः निःश्रेयसम्=मुक्तिः तत्करीः=तद्धेतुभूताः क्रियाः=तपोऽनुष्ठानादीनि कर्माणि, वधोदर्काः=वधः=परहिंसा उदर्कः=परिणामो यासां तथाभूताः करोति, स मूढः=विवेकरहितः पुरुषः ग्लानिदोषच्छिदः=ग्लानिं=पिपासामेव दोषं छिन्दन्ति=नाशयन्ति तथाभूताः स्वच्छाः=निर्मलाः अपः=जलानि पङ्कयति=पङ्कं करोति पङ्कतां नयतीत्यर्थः।

इति ॥ [ ११।१९ ]

तस्मात् "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥"

इति भगवदुपदिष्टा पद्धतिरेव मुमुक्षुभिराश्रयणीयेति शास्त्ररहस्यम् । इति ॥ ॐ ॥

ननु "यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे वधोऽवधः ॥
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्बभौ ॥"

इति मनुवाक्यैर्यागीयहिंसाया अहिंसात्वबोधनेन पापाभावप्रतिपादकैः "निन्दाप्रायश्चित्तोपदेशासमव्याहृतविधिवाक्यबोध्यप्रवर्तनायाः स्वविषयप्रवृत्तिविषये धात्वर्थे सामान्यतोऽनर्थहेतुत्वप्रक्षेपकत्वम्" इति कल्पनेन 'न हिंस्यात्–' इति सामान्यनिषेधस्य वैधहिंसातिरिक्तहिंसापरत्वमास्थीयते । अत एव "हिंसा चैवाविधानतः" [ म० १२।७ ] इत्यवैधहिंसैव पापजनिकोक्ता मनुना न वैधहिंसा । छान्दोग्यश्रुतिरपि—"अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति तीर्थपदाभिधेययज्ञादिभ्योऽतिरिक्तस्थल एवाहिंसामुपदिशति । अत एव मरणान्तप्रायश्चित्ताऽऽहवाभिमुखहननोचितदण्डरूपचौरहननादीनां न पापजनकत्वम्, शुद्ध्यर्थं विहितमरणे तस्यायुक्तत्वात्, "न दोषो हिंसायामाहवे" इति स्मृतेश्च । चौराद्यवधे राज्ञो दोषश्रवणाच्च । तस्मादगर्हितहिंसातिरिक्तविषयोऽयं 'न हिंस्यात्–' इति निषेधः, अगर्हिता चानुपदिष्टप्रायश्चित्तिका हिंसेति चेत् ।

अत्राहुर्मञ्जूषाकाराः—"मनुवचने 'अवधः' इत्यादौ 'अनुदरा कन्या' इतिवदल्पार्थे नञः सत्त्वात्, अन्यथा 'घटोऽघटः' इतिवद् अस्याबोधकत्वेन अवधपदस्य पापाजनकत्वलक्षणापत्तेः । यज्ञान् उपक्रम्य "अहिंसा परमो धर्मो

---

१ "श्येनेनाभिचरन् यजेत" इति वाक्यबोध्यप्रवर्तनाया अभिचारस्योपपातकत्वेन गणनान्निन्दासमभिव्याहृतत्वेन "अभिचारहीनं च त्रिभिः कृच्छ्रैः" इति प्रायश्चित्तश्रवणेन च प्रायश्चित्तोपदेशसमभिव्याहृतत्वेन च न तस्याः स्वप्रवृत्तिविषये धात्वर्थेऽनर्थहेतुत्वप्रतिक्षेपकत्वमिति भावः । २ निन्दाप्रायश्चित्तोपदेशसमभिव्याहृतहिंसाया एव पापजनकत्वं, न निन्दाद्यसमभिव्याहृतहिंसाया इति स्वीकारादेव । ३ "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरामास्ये मृतः शुध्येत्" इति शुद्ध्यर्थं विहिताऽऽत्महननस्य पापजनकत्वाभिधानस्यायुक्तत्वादित्यर्थः । ४ परस्पराह्वानपूर्वके धर्मयुद्धे योद्धुमभिमुखस्य हनने दोषाभावस्य कण्ठत एवोक्तिश्चाऽऽहवाभिमुखहननस्य न पापजनकत्वमित्यर्थः । ५ "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैवाधिगच्छति ॥ स्तेनः प्रकीर्णकेशो मुसली राजानमीयात् कर्माचक्षाणः पूतो वधमोक्षाभ्याम्, अघ्नन्नेनस्वी राजा" इति राज्ञो दण्डरूपचोरहननाननुष्ठाने स्तेनाहनने च दोषस्मरणात् तादृशहननेऽपि दोषाभावः सिद्ध एवेत्यर्थः ॥

गीतो वै मनुना पुरा" इति ब्रह्मवैवर्तप्रथमखण्डे उक्ततया च मदुक्तस्यैवौचित्याच्च। परमत्वं च पापाजनकत्वेनास्य। अल्पीयः प्रायश्चित्तेन परिहर्तुं शक्यत्वात् तत्र न द्वेषः। किंच— महतः फलस्य कामनया क्षुद्रे तत्र न द्वेषः। पशुहिंसाजन्यपापस्य अल्पप्रायश्चित्तोपदेशेन बहुव्ययाऽऽयाससाध्ययागजन्यस्वर्गात् प्रथममेवाल्पस्य मनुना यागविषयेऽत्यल्पत्वबोधनात्। एवं च न तद्बलेन विधेः स्वविषयेऽनर्थहेतुताप्रतिक्षेपकत्वम्।

अत एव गीतायां "यज्ञानां जपयज्ञोऽस्मि" इत्यादिना जपयज्ञस्य अहिंसारूपत्वेन प्राशस्त्यमुक्तम्।

तथा "स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते॥"

इत्युपक्रम्य,

"सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥"

इत्यनेन विहितेऽपि युद्धे पापं वदता अतादृशस्य यज्ञेऽपि तद् उक्तप्रायमेव।

नच "अपशब्दज्ञानजाऽधर्मस्य कूपखानकन्यायेन सुशब्दज्ञानजधर्मेण नाशः फलान्तरं च" इति पस्पशायाम् उक्तम्, कूपखानकस्तत्खननवेलायां मृदालिप्तस्ततो जलं लब्ध्वा तं लेपं दूरीकरोति फलान्तरं च लभते, तेन न्यायेन यज्ञजधर्मेण तत्पापनाशः फलान्तरलाभश्चेति न दोष इतिवाच्यम्।

अपशब्दज्ञानाद् अधर्मस्य अवाचनिकत्वेन केवलं वैपरीत्यमात्रेण कल्प्यस्य अतिस्वल्पत्वाद् उत्कृष्टेन साधुशब्दज्ञानजधर्मेण नाशेऽपि 'न हिंस्यात्–' इति वचनबोधितपापस्य तेन धर्मेण वचनं विना नाशायोगाद्, उक्तगीतावाक्याच्च।

१ खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च॥" [ ११।६९ ] इति मनुना खरतुरगादिपशुहननस्य सङ्करीकरणरूपपापत्वमभिधाय, "सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्" [ ११।१२६ ] इति चान्द्रायणानुष्ठानरूपाल्पप्रायश्चित्तोपदेशेनेत्यर्थः। २ नैवं 'पापमवाप्स्यसि' इत्यनेन "एवं=फलाभिसन्धिशून्यतयाऽनुष्ठिते पापं न प्राप्नोषि" इत्युक्त्याऽर्थाद् एतद्गम्यते—"सकामकृते पापं प्राप्नोषि" इति। एवंच अतादृशस्य=सकामस्य, यज्ञेऽपि तत्=पापसत्वम्, उक्तप्रायमित्यर्थः। ३ महाभाष्ये प्रथमाह्निके भगवता पतञ्जलिना "किं पुनः शब्दज्ञाने धर्म आहोस्वित्प्रयोगे" इति पक्षद्वयमुत्थाप्य "ज्ञाने धर्म इति चेत्, तथाऽधर्मोऽपि प्राप्नोति, योहि शब्दान् जानाति अपशब्दानप्यसौ जानाति, यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः" इत्याक्षेपे "शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्, शब्दश्च शब्दज्ञाने धर्ममाह, नाऽपशब्दज्ञानेऽधर्ममाह" इति समाधाय, "अथवा कूपखानकवदेतद् भविष्यति" इति समाधानान्तरमुक्तमित्यर्थः॥

अत एव इन्द्रादेः शताश्वमेधफलस्वर्गभोगसमयेऽनेकशो रावणमहिषासुरादिभ्यो दुःखधाराः श्रुतिपुराणादिषूपवर्णिताः । यज्ञान्तर्गतहिंसादिजन्यपापफलस्य यज्ञफलभोगान्तरुत्पत्तेरुपपत्तिसिद्धत्वात् ।

एतेन "अध्वर इति यज्ञनाम, ध्वरतिर्हिंसाकर्मा, तत्प्रतिषेधोऽध्वरः" इति निरुक्तम्, "अहिंस्रः" इति तद्भाष्यमपि व्याख्यातम् । नञोऽल्पार्थत्वात् । अतएव "तस्मादभ्युदययोगादहिंस्रः इत्युपपद्यते" इति तद् भाष्ये उपसंहृतम् ।

उक्तंच—"स्वर्गेऽपि पापभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः" इति ।

"अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतिस्तु अवैधहिंसात्यागस्य इष्टसाधनत्वं वैध्याश्च तत्त्वमाह, न तु वैध्या अनिष्टसाधनत्वाभावम् । हिंसाविधयोऽपि हि हिंसायाः स्वर्गसाधनत्वमाहुर्नत्वनर्थहेतुताप्रतिक्षेपमपि । अल्पायुष्ट्वाद्यनिष्टबोधकस्मृतिविरोधात् ।

तदुक्तं पातञ्जलभाष्ये—"यदि कथञ्चित् पुण्यावापगता हिंसा भवेत्, तदा तत्र सुखप्राप्तौ भवेदल्पायुः" [ यो० २।३४ ] इति । अत एव क्षत्रियाणामपि युधिष्ठिरादीनां स्वधर्मयुद्धेन जातज्ञातिहिंसायां प्रायश्चित्तश्रवणम् ।

तथाच भागवते मुचुकुन्दं प्रति कृष्णवाक्यम्—

"क्षत्रधर्मे स्थितो जन्तून्यवधीर्मृगयादिभिः ।
समाहितस्तत्तपसा जह्यघं मदपाश्रितः ॥" इति ।

आदिना युद्धम् ॥ इति ॥" [ मञ्जूषा ] ॥ ७ ॥

अत्रेदं बोध्यम्—

भवतु नाम शुद्ध्यापादकदण्डप्रायश्चित्तरूपहननस्य पापाजनकत्वम्, तथापि अदण्डनीयाप्रायश्चित्तिपशुहननस्य पापाजनकत्वे मानाभावः, इति न तद्दृष्टान्तबलेन यागीयपशुहननस्य पापाजनकत्वमास्थातुं युक्तम्, इति ॥ ८ ॥

वस्तुतस्तु—तैत्तिरीयश्रुतौ—"परागावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्" इति पापभयेन अध्वर्योः पशुहननपराङ्मुखत्वाभिधानात्,

"रिच्यत इव वा एषः प्रेव वा रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिः स्वाध्यायमधीयीत" इति ऋत्विजां प्रायश्चित्तोपदेशाच्च,

१ 'मृगयादिभिः' इत्यादिपदेन युद्धं गृह्यत इत्यर्थः । तथाच "आखेटे रणे च यत् प्राणिहननमाचरितं तत्प्रयुक्तमघं मत्परायणः सन् तपसा विनाशय" इत्युक्त्याऽऽहवाभिमुखहननेऽपि प्रत्यवायोऽस्तीति बोधितम् । यदि नाम "न दोषो हिंसायामाहवे" इति कण्ठतोऽभिहितेऽपि दोषाभावे प्रत्यवायसत्ताऽभ्युपेयते, तदा किमु वक्तव्यं कण्ठतो दोषाभावानभिधानस्थले प्रत्यवायोऽस्तीति भावः । २ संज्ञप्यमानात्=हिंस्यमानात् । संज्ञपनम्, आलम्भनं, हिंसनमित्यनर्थान्तरम् ।

"यत्पशुर्मायुमकृतोरो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥"

इतिमन्त्रवर्णे पशुहननजन्यपापविमोचनाय अग्निप्रार्थनाश्रवणाच्च,

यागीयहिंसाया अपि पापरूपत्वेन प्रायश्चित्तोपदेशसमभिव्याहृतत्वेन गर्हितत्वाच्च "अगर्हित हिंसातिरिक्तविषयोऽयं 'न हिंस्यात्' इति निषेधः" इत्युपगमेऽपि न निस्तारः इति दिक्[१] ॥ ❀ ॥

तथाच, "अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत्" इति हृदयम् ॥ ❀ ॥

यत्तु शारीरकीये भाष्ये—

"हिंसादियुक्तत्वेन वैदिककर्मणोऽशुद्धत्वेन तत्प्रयुक्त एव स्वर्गादवरोहतां व्रीह्यादिभावेन प्रादुर्भावः" इत्याशङ्कायाम्—

"अशुद्धमिति चेन्न शब्दात्" [ वे० ३।१।२५ ] इति सूत्रमवतार्य

"शास्त्राद् हिंसानुग्रहात्मकज्योतिष्टोमस्य धर्मत्वावधारणत्वान्न वैदिकं कर्माऽशुद्धम्" इत्येवं शङ्कराचार्यैर्यागस्याविशुद्धियुक्तत्वविरहाभिधानं, तत्तु भट्टपक्षसंरक्षणमात्रं, न तु व्यासाशयानुगुणम् । योगभाष्ये भगवता व्यासेन स्पष्टं यागादेः शुक्लकृष्णत्वप्रतिपादनेन धर्माधर्मात्मकत्वाभिधानेनात्र तद्विपरीताशयवर्णनस्यायुक्तत्वात् ।

कस्तर्ह्यत्र व्यासाशयानुसारी सूत्रार्थं इति तु विद्वत्तोषिण्यां[२] द्रष्टव्यम् ।

---

१ अत्रायं भावः–वैधपशुहिंसा राजसत्वेन न ब्राह्मणविषया; अपितु क्षत्रियादिविषयैव । तत्रापि तस्या नरकसाधनत्वमस्त्येव, "मा हिंस्यात् सर्वाभूतानि" इति शास्त्रेण तद्धिंसाया अपि निषेधात् । घृतपिष्टादिरूपपशूनां तु न काम्यविषयत्वम्, अपितु मोक्षफलकतत्त्वज्ञानसाधनयागाङ्गत्वमेव । तथा च मनुः—"कुर्याद् घृतपशुं संगे कुर्यात् पिष्टपशुं तथा । न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कदाचन ॥" इति । अत्र 'संगे' इत्यस्य सन्=सम्यक् गम्=गतिः'–इतिव्युत्पत्त्या सम्यग् ज्ञानम् इत्यर्थः, तत्त्वज्ञानम् इति यावत् । (न्या० को०)

२ एवं हि तत्रोक्तम्–पापफलत्वेन अशुद्धं व्रीह्यादिजन्मेति कथं कृतसुकृतस्तत्प्राप्नुयादिति न शंक्यम्, कुतः ? शब्दात्=वेदात् तथाप्रतीतेः सत्त्वात् एतस्यार्थस्याऽशङ्कनीयत्वात् । अयं भावः–द्विविधो हि स्थावरभावः, एको व्रीह्यादीन् अधिष्ठाय तदभिमानित्वरूपः, अपरश्च व्रीह्यादिसंसर्गमात्ररूपः । तत्राद्यो व्रीह्याद्यभिमानेन तदवच्छेदेन दुःखभाक्त्वसद्भावात् पापफलरूपः, तदभिप्रायेणैव "शारीरजैः" इति स्मरणम् । द्वितीयस्तु तदभिमानाभावेन न पापफलत्वरूपः, किन्तु रेतः सिग्योगयोनिप्रवेशद्वारा पुनर्जन्मग्रहणे द्वारभूतो व्रीह्यादिसंश्लेषरूपः । समानेऽपि व्रीह्यादिसंसर्गे "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इतिवत् अभिमानाभावेन न संसर्गिणां दुःखयोगः । अर्थात् यथासमानेऽपि अन्तःकरणसंसर्गे देहसंबन्धे वा जीवस्तदभिमानित्वेन तत्प्रयुक्तं फलं भुङ्क्ते, ईश्वरस्तु कूटस्थः सन् साक्षितया प्रकाशते, एवं समानेऽपि व्रीह्यादिसंसर्गे तदभिमानिनो लवनकण्डनपेषणादिजन्यं दुःखमनुभवन्ति, इतरे तु तत्संसर्गिणो न तत्प्रयुक्तं दुःखमनुभवन्ति । अत एव व्रीह्यादिषु

अपि च एवं कथंचित् यागीयहिंसाया अहिंसात्वापादनेऽपि सोमोच्छिष्टभक्षणस्य सौत्रामण्यादिषु सुराग्रहणादीनां चानुच्छिष्टभक्षणत्वासुराग्रहणत्वाद्यापादनस्य वक्तुमशक्यत्वात् तत्प्रयुक्ताशुद्धेर्दुर्वारत्वात् कथं यागादेरविशुद्धियुक्तत्वविरहाभिधानमित्यपि ते प्रष्टव्याः । इत्यास्तां विस्तरः ॥ ❀ ॥

ननु यागीया हिंसा यद्यनिष्टहेतुस्तर्हि कथं तत्राऽऽस्तिकानां प्रवृत्तिरिति चेत् । अत्रोच्यते—यथा सत्यपि अभिचारस्यानिष्टहेतुत्वे तद्दोषसहिष्णोरेव क्रोधान्धस्य श्येनयागादौ प्रवृत्तिर्नेतरस्य, तथाऽत्रापि तद्दोषसहिष्णो रागान्धस्यैव प्रवृत्तिर्नेतरस्येति न प्रवृत्तिविरहः ।

तदुक्तमभियुक्तैः—"स्त्रीकामा धनकामाश्च किं न कुर्वन्ति पातकम्" इति ।

केचित्तु—यथा मरणरूपमहानिष्टसाधने सहगमनवेणीप्रवेशनादौ,—आत्माऽऽहुत्यङ्गके सर्वस्वारयज्ञे च उत्कटफलेच्छावशात् प्रवृत्तिः, तथाऽत्रापि उत्कटफलरागवशात्प्रवृत्तिरित्याहुः ।

अन्ये तु—यथा द्रव्यव्ययादिना यागादीनामनिष्टफलकत्वेऽपि यागजनितफले रागवशात्प्रवर्तते, तथा हिंसायाः प्रत्यवायकरत्वेऽपि यागफलेऽत्यन्तरागवशात्प्रवर्तते, इयाँस्तु विशेषः—द्रव्यव्ययादिना प्राप्तमनिष्टं प्रत्यक्षप्रमाणकं, हिंसादौ तु प्रत्यवायकरता 'न हिंस्यात्' इति शास्त्रप्रमाणिकेति वदन्ति ।

---

लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनामेवोत्क्रमणं न संसर्गिणाम् । यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने तत उत्क्रमतीतिप्रसिद्धेः । संसर्गिणां तदभिमानित्वे तु व्रीह्यादिदेहनाशे तेषां देहिनामप्युत्क्रान्तेरवश्यंभावाद् रेतःसिग्योगादिना पुनस्तेषां जन्माभिधानं न संभवेत् । एवं च व्रीह्यासंश्लेषरूपजन्मनः पापफलत्वाभावेन नाशुद्धं तदिति सिद्धम् इत्यादि ॥

१ अभिचारः=श्येनयागादिना शत्रुमारणम् । "श्येनेनाभिचरन् यजेत" इति श्रुतिः । अभिचरन्=शत्रुवधं कामयमानः । २ गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः [ ११।५९ ] इत्युपक्रम्य "अभिचारो मूलकर्म च" इति मध्ये पठित्वाऽन्ते "नास्तिक्यं चोपपातकम्" ( ६६ ) इत्येवं मनुनोपसंहारादभिचारस्योपपातकत्वेनानिष्टहेतुत्वस्य स्पष्टत्वादिति भावः । ३ बृहद्वैयाकरणभूषणकाराः कौण्डभट्टाः ४ सहगमनम्=पत्न्याः पत्या सहैकचित्यारोहणम् । वेणीप्रवेशनम्=अनशनादिना मज्जनेन वा प्रयागमरणम् । आदिना हिमालयगमनरूपमहाप्रस्थानगमनम् । आत्माहुत्यङ्गकसर्वस्वारयज्ञस्तु=एकाहसाध्यः स्वर्गकामस्यविहितः क्रतुविशेषः । तत्र हि आर्भवस्तोत्रकाले "ब्राह्मणाः समापयत मे यज्ञम्" इति प्रैषम् ऋत्विग्भ्यः प्रदाय यजमानेन आत्माहुतिप्रदानेन मर्तव्यमिति विहितम् । एतच्च "सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्" [ पू० मी० अ० १० । पा० २ ] इति द्वाविंशेऽधिकरणे जैमिनीये व्यक्तम् । ५ ब्रह्मविद्याभरणकारा अद्वैतानन्दा इत्यर्थः ।

"स्वर्गसुखापेक्षया हिंसाजन्यदुःखस्याल्पत्वज्ञानेन यागादौ प्रवृत्तिरिति" तत्त्वम् । एतच्च 'कुशलस्य नापकर्षायाऽलम्"—इति पञ्चशिखाचार्यवचनेन पूर्वमेव व्यक्तीकृतम् ॥ ॥ ॥

**सर्वथैव हिंसामसहमाना अर्वाचीनास्त्वित्थं वदन्ति**—त्रिविधा तावत् प्राणिनां प्रकृतिः, सात्त्विकी राजसी तामसी चेति । तत्र वेदबोधितकर्मात्मज्ञानोपायानुष्ठानप्रवृत्तिहेतुः सात्त्विकी । वैदिकनिषेधातिक्रमेण स्वभावसिद्धरागद्वेषानुसारिसर्वानर्थप्रवृत्तिहेतुभूता राजसी । तामसी च अशुभवासना आसुरी राक्षसी च प्रकृतिरुच्यते । तत्र च विषयभोगप्राधान्येन रागबाहुल्यादासुरीत्वं, हिंसाप्राधान्येन द्वेषप्राबल्याद्राक्षसीत्वमिति विवेकः ।

तत्रापि शास्त्रानुसारेण तद्विहितप्रवृत्तिहेतुभूता सात्त्विकी शुभवासना दैवी सम्पत्, शास्त्रातिक्रमेण तन्निषिद्धविषयप्रवृत्तिहेतुभूता राजसी, तामसी चाशुभवासना आसुरी सम्पदित्येवं राक्षस्यासुर्योरेकीकरणेन द्विविधैव प्रकृतिः पर्यवस्यति ।

तत्र ये आसुरीसम्पत्तिकास्ते[1] स्वभावत एव मद्यमांसाभिरुचयो विषयलम्पटाः कामिनश्च भवन्ति; ब्राह्मणादिजातिष्वपि सन्त्येव तादृशाः शतशो मानवाः, आस्तां तावत् कलेः कथा, युगान्तरेष्वपि रावणप्रभृतयोऽनेकशस्तथाविधाः प्राणिन आसन्नेव, तथाभूतानां प्राणिनां कल्याणार्थमेव वेदे धर्मशास्त्रादौ च यज्ञादिप्रकरणे मांसप्रसङ्गः, । स च परिसंख्यैव न विधिः । "प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" इति मनूक्तेः ॥

**एतदुक्तं भवति**—वेदस्मृत्यादीनि खलु सर्वदेशीनि शास्त्राणि नैकस्य कस्यचित् कल्याणार्थं प्रवृत्तानि, किन्तु सर्वेषामेव भूतानां कल्याणसाधनाय तेषामुपदेशः, तत्र "यज्ञादौ मांसभक्षणेन कल्याणम् अन्यत्र भक्षणेन नरकपातः" इत्युपदेशेन 'तथाविधा अपि निश्चितं सदा वृथा मांसभक्षणतो निवृत्ताः स्युः' इत्यत्रैव तेषां तात्पर्यम् । यथा काचिदबला निरन्तरं मृदं भुञ्जानं स्वसुतं ततो निवर्तनाय वदति—'वत्स ! गङ्गामृदं भुङ्क्ष्व' इति । नात्र गङ्गामृद्भक्षणे तस्यास्तात्पर्यं किन्तु गङ्गामृदोऽलाभेन स्वयमेव ततो निवृत्तः स्यादित्यत्रैव तत्तात्पर्यम्, तथैव वेदस्मृत्यादीनामपि यागादेर्बहुद्रव्यव्ययसाध्यतया सर्वदा सर्वैर्विधातुमशक्यत्वात् शक्यत्वेऽपि वा तत्र दीक्षणीयादिदक्षिणावसानपुण्यकर्म-

१ "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् । दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति संपदं दैवीमभिजातस्य भारत ॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥" दैवी संपद् विमोक्षाय निबन्धायाऽऽसुरी मता ॥" इति षोडशाध्याये गीतासु भगवतोक्तमनुसन्धेयम् ।

णोऽपि सद्भावेन न तथा । अनिष्टप्रसक्तिरिति धिया परिसंख्यारूपेणैव तत्रत्य-मांसभक्षणोपदेश इति ।

अत एव "मद्यमांसादिसेवनं यक्षराक्षसपिशाचादीनामेव कार्यम्" इति स्पष्टमेव मनुनोक्तम्–"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥" [मनु० ११।९५] इति ॥ न हि हिंसा धर्मः इति कस्यापि सम्मतम्, परस्परं विवदमानानामपि सर्वेषां शास्त्राणाम् "अहिंसा परमो धर्मः" इत्यत्रैकमत्यात् । किंबहुना? हिंसा हि लोकविद्विष्टं गर्हितं सर्वथा घृणितं कर्म, न जातु धर्मकोटौ प्रवेष्टुमर्हति । अत एव महाभारते शान्तिपर्वणि "न हिंसा धर्म, उच्यते" इति स्पष्टमेव व्यासदेवैरुक्तम् ।

तस्मात् श्राद्धे यज्ञे च पितॄन् देवाँश्चापि निमित्तीकृत्य न केनापि कदाचिदपि कस्यापि प्राणिनो हिंसा विधेया, श्रेयोविघातकत्वात्तस्याः, किन्तु "अतो यदात्मनोऽपथ्यं परेषां न तदाचरेत्" इति शिष्टोक्तिरेवानुसर्तव्येति ॥ ❀ ॥ हिंसायामपि[2] कर्तव्यत्वाकर्तव्यत्वविचारोऽस्त्येवेति तु गीतारहस्ये द्रष्टव्यम् ॥ ❀ ॥ ❀ ॥

तदित्थं हिंसाद्यविशुद्धियुक्तत्वेन वैदिककर्मकलापस्य ज्योतिष्टोमादेर्हिंसाजन्यदुःखसंभिन्नस्वर्गरूपसुखजनकत्वेन लौकिकोपायतुल्यतामभिधाय धर्मान्तरेणापि तत्साम्यमभिधातुमुक्तं कारिकायां—"क्षयातिशययुक्त" इति, तत्र "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥" इति स्मृतेर्भोगम् अदत्त्वा कर्म न क्षीयते, किंतु "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादिस्मृतेः फलमेव क्षीयते, तत्कथमिह वैदिककर्मकलापस्य क्षयाति-

१ अत्रेदं बोध्यम्—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्रचान्यत्र च प्राप्तौ परिसंख्या विधीयते" ॥ तत्र "अहरहः सन्ध्यामुपासीत" इत्यादिरपूर्वविधिः । अत्र विधेयस्य सन्ध्यादेः शास्त्रतो रागतो न्यायतो वा कचिदप्यप्राप्तेः । "ऋतौ भार्यामुपेयात्" इत्यादिर्नियमविधिः । विधेयस्य भार्याभिगमनस्य रागतः प्राप्तावपि रागाभावात् पक्षतोऽप्राप्तेः । अत्र हि ऋतावेव, भार्यामेव, असति प्रतिबन्धके उपेयादेव, इति नियम्यते । 'पर्ववर्जम्' इत्यादिना ऋतावपि सहवासस्य निषिद्धत्वात् सति रोगे तदसंभवाच्चोक्तम्–असति प्रतिबन्धक इति । "पञ्च पञ्च नखाभक्ष्याः" इत्यादिपरिसंख्याविधिः । विधेयस्य मांसभक्षणस्य च रागतः प्राप्तेः । अत्र हि यदृच्छया श्वादिषु शशादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तयति । तत्र अत्यन्ताप्राप्त प्रापणं विधिः । पक्षे प्राप्तस्याप्राप्त पक्षान्तरप्रापणं नियमः । एकस्यानेकत्र प्राप्तस्याऽन्यतो निवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्येति विवेकः ॥

२ वैदिकी यागीया हिंसा निरुक्ता लौकिकी व्यावहारिकी सा निर्वक्तव्येति जिज्ञासायां संप्रति तद्विषयेऽपि व्यवस्थां वक्तुं भूमिकामारचयति हिंसायामपीति । आततायिनमायान्तं हन्यादेवाविचारयन् । आर्जवं हि कुटिलेषु न नीतिः । यादृशीतलादेवी तादृशं खरवाहनम् । शठे शाठ्यं समाचरेत् । तादृशस्थले आततायीस्वदुष्कर्मभिः स्वयमेव हतो भवतीति न तद्धिंसको हिंसादोषेण लिप्यते, इत्यादि हि तत्रोक्तम् । परमिदं सर्वं क्षात्रधर्मानुसारेणेति विभावयन्तु सुधियः ।

**क्षयातिशयौ च फलगतावप्युपाय उपचरितौ, क्षयित्वं च स्वर्गादेः सत्त्वे सति कार्यत्वादनुमितम् । ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं, वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम्,**

---

क्षययुक्तत्वाभिधानमित्याशङ्कामपनुदन् क्षयातिक्षयौ व्याचष्टे—**क्षयातिशयौ चेति**। यद्यपि क्षयातिशयौ फलगतौ=यागफले स्वर्गे एव वर्तमानौ न तु तदुपाये यागे, तथापि उपाये=स्वर्गसाधने यागे उपचरितौ=उपचारेणाभिहिताविल्यर्थः। उपचारश्चात्र स्वा[1]श्रयजनकत्वरूपः, उपायोपेययोरभेदविवक्षारूपो वा बोध्यः । तथाच क्षयातिशययुक्तत्वं=क्षयातिशयविशिष्टफलजनकत्वम् इत्यर्थः । एवं च यथा लौकिक उपायः क्षयातिशयसुखजनकस्तथा वैदिकोऽपि यागाद्युपायस्तथाविधसुखजनक इति सिद्धं वैदिकोपायस्य लौकिकोपायसाम्यमिति भावः। तत्र क्षयः=ध्वंसप्रतियोगित्वम्, अतिशयः=तारतम्यं न्यूनाधिक्यमिति विवेकः ॥ ❀ ॥

"तद् यथेह"—इत्यादिश्रुत्या स्वर्गादेः सिद्धेऽपि क्षयित्वे तत्र दार्ढ्याय सहकारमप्याह—**क्षयित्वं चेति** । "स्वर्गादिकं क्षयित्ववद्, भावत्वे सति कार्यत्वाद् घटादिवत्" इत्यनुमानेन स्वर्गादेः क्षयित्वमवगतमित्यर्थः । यद् यद् भावकार्यं तत्तद् विनाशि, 'यथा घटः' इति व्याप्तेरिति भावः। ध्वंसस्य कार्यत्वेऽपि क्षयित्वाभावादुक्तं—सत्त्वे सतीति । तथाच स्वर्गादिफलस्य क्षयित्वात्, स्वर्गिणः पातभयादिजन्यदुःखावश्यभावाच्च नित्यत्वं दुःखासम्भिन्नत्वं च न संभवतीति सिध्यति ।

तथाच श्रुतिः—"प्लवा ह्येते अदृढा यज्ञरूपा अष्टा[2]दशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति" ॥ इति ॥ ❀ ॥

स्वर्गादेः क्षयित्वं प्रसाध्य सातिशयत्वं प्रदर्शयति—**ज्योतिष्टोमादय इति**। स्वर्गमात्रस्य=देवभावावाप्तिपुरःसरामृतपानाप्सरोविहारादिरूपसुखमात्रस्य साधनं ज्योतिष्टोमादयः, स्वाराज्यस्य=स्वर्गाधिपत्यरूपदेवेन्द्रभावस्य साधनं वाजपेयादयः "साधनभूयस्त्वे फलभूयस्त्वम्" इति न्यायाद् इत्यस्ति यागादेरतिशययुक्तत्वमित्यर्थः । 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इति, 'स्वाराज्य[3]कामो वाजपेयेन यजेत' इति च श्रुतेरिति भावः। अतिशयवत्त्वं च स्वापेक्षयोत्कृष्टफलान्तरसत्ताकत्वम् । यदपेक्षया फलानामुत्कृष्टत्वमस्ति तथाविधफलकत्वमिति यावत् ॥ ❀ ॥

---

१ स्वौ=क्षयातिशयौ तदाश्रयः=स्वर्गादिः तज्जनकत्वं यागादेरित्यर्थः । उपचारो=गौणीवृत्तिः। २ अष्टादशेति। षोडशर्त्विजः, यजमानः पत्नी चेति द्वौ। ३ स्वः=स्वर्गे राजत इति स्वाराट् तस्य भावः स्वाराज्यम्=इन्द्रत्वं तत्कामः । वाजम्=अन्नं घृतं वा पेयं यत्र सः, यज्ञभेदः । इन्द्रत्वविषयाभिलाषवान् वाजपेयेनेष्टं स्वाराज्यं सम्पादयेदित्यर्थः ।

परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति । "अपाम सोममममृता अभूम" इति चामृतत्वाभिधानं चिरस्थेमा-

नन्वु भवतु यागादेः सातिशयत्वं, तथापि तेषां दुःखसंभिन्नसुखजनकता तु नाऽऽयातेति कथं दृष्टतुल्यत्वमित्यत आह—परसम्पदुत्कर्षो हीति । हि=यतोऽन्यदीयैश्वर्याधिक्यमुपलभ्यमानं न्यूनैश्वर्यशालिनं जनं दुःखाकरोति=क्लेशयति पीडयति, अतोऽतिशययुक्तत्वमपि दुःखकरमित्यर्थः । स्वाराज्यवन्तं विलोकयन् हि स्वर्गी "अहो दौर्भाग्यं नाहमस्मि राजा" इति निर्वेदमनुभवत्येव; ततश्च न स्वर्गस्य निरतिशयसुखरूपत्वं दुःखासम्भिन्नत्वं चेति स्वर्गादेरपि क्षयातिशययुक्तत्वेन दुःखसंभिन्नत्वात् तदुपाययागादेर्नात्यन्तिकसुखजनकत्वमित्यायातं वैदिकस्यापि कर्मकलापस्य दृष्टोपायतुल्यत्वमिति भावः ।

तद् यथोक्तं श्रीमद्भागवते—

"एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥
श्रुतं च दृष्टवद् दुष्टं स्पर्द्धाऽसूयात्ययव्ययैः ।
बह्वन्तरायकामत्वात् कृषिवच्चापि निष्फलम् ॥"

[ भाग० स्क० ११ । अ० ३ । श्लो० २० ] इति ॥ ॐ ॥

ननु स्वर्गस्य क्षयित्वे 'अपाम सोमम्'—इति प्रागुक्ताया अमृतत्वबोधिकायाः श्रुतेः का गतिरित्यत आह—अपामेति । चिरस्थेमानं=चिरकालस्थायित्वं, सुदीर्घकालस्थायित्वम् । अमृता इत्यत्र हि नञोऽल्पत्वमर्थः 'अनुदरा कन्या' इति यथा । ततश्च अल्पं=मनुष्यापेक्षया न्यूनं मृतं=मरणं येषां ते अमृताः=चिरकालस्थायिन इति तदर्थः । युक्तं चैतत् "नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं

१ परस्य=अन्यस्य या सम्पत्=ऐश्वर्यं तस्य उत्कर्षः=आधिक्यम् । हीना=न्यूना सम्पत्=ऐश्वर्यं यस्येति विग्रहः । तदाह—अन्यदीयेति । २ 'दुःखात्प्रातिलोम्ये' इति सूत्रेण डाचि दुःखाकरोतीति रूपम् । ३ सतुल्यातिशयध्वंसं=सहतुल्येन अतिशयेन ध्वंसेन च वर्तमानम्, अतस्तुल्ये स्पर्द्धा, अतिशयेऽसूया, ध्वंसालोचनैर्भयादिकं चापरिहार्यमित्यर्थः । यथा खण्डमण्डलपतीनां स्पर्द्धादि तद्वत् । श्रुतं=स्वर्गादि तदपि दुष्टं, स्पर्द्धा=परसुखासहनम्, असूया=परगुणे दोषाविष्करणम्, अत्ययः=नाशः व्ययः=अपक्षयः तैर्दुष्टम् । यद्वा व्ययो=नाशः अत्ययः=अन्यस्यातिशयः । तं दृष्ट्वा=तदप्राप्त्या दुःखमित्यर्थः । किंच बहवोऽन्तरायाः=वैगुण्यादिरूपा विघ्ना यस्मिन् कामे=सुखे तस्य भावस्तत्वं तस्मात्, कृषिर्यथा बहुविघ्ना तद्वत्" इति एतद्व्याख्यायां श्रीधरस्वामिनः । ४ "सादृश्यं तदभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥" "अब्राह्मणः, अपापम्, अघटः पटः, अनुदरा कन्या, अकेशा, असुरः" इति क्रमेणोदाहरणानि । ५ नाकस्य=स्वर्गस्य पृष्ठे=उपरिस्थाने सुकृते=पुण्यकर्मफलभूते कर्मफलम् अनुभूत्वा=अनुभूय [ छान्दसो ल्यबभावः ] इमं लोकं=मनुष्यलोकं हीनतरं वा=मनुष्यलोकान्निकृष्टं तिर्यङ्नरकादिलक्षणं वा विशन्ति=प्राप्नुवन्ति, अभुक्तसंचितकर्मवशादिति भावः ॥

नमुपलक्षयति। यदाहुः—"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत" इति।

अत एव च श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैकेऽ-

---

हीनतरं वा विशन्ति" [ मुं० १ । २ । १० ] "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" [ गी० ९ । २१ ] इति श्रुतिस्मृतिभ्यां स्वर्गिणामधःपतनरूपमरणसत्त्वावगतेरिति भावः। उक्तमेवार्थं प्रामाणिकं कर्तुं विष्णुपुराणवाक्यमुद्धरति—यदाहुरित्यादिना।

"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते।
त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते॥"

[ विष्णु पु० अंश २ । अ० ५ । श्लो० ९६ ] इति हि तत्रत्यं पूर्णं पद्यम्। पूर्वत्र 'देवयानमार्गेण जनादिलोकं गता अमृतत्वं भजन्ते' इत्युक्तं, तत्र 'कीदृशममृतत्वम्?' इत्याकाङ्क्षयामुक्तम्—आभूतसंप्लवमिति। आभूतसंप्लवं=ब्रह्माहःपर्यन्तं यत् स्थानं तदेव अमृतत्वम् उपचाराद् उच्यते। उपचारबीजमाह—त्रैलोक्येति। अपुनर्मारः=पुनर्मृत्युरहितः क्रममुक्तिस्थानत्वात्" इत्येतद् व्याख्यायां विष्णुचित्त्यां रत्नगर्भभट्टः, आत्मप्रकाशाख्यायां श्रीधरस्वामी च।

एवं च यदा ब्रह्मलोकवासिनामपि गौणममृतत्वं तदा किमु वक्तव्यं स्वर्गिणां गौणं तदिति बोध्यते इति भावः॥ ॐ॥

यागादेर्नामृतत्वप्रापकत्वमिति स्वोक्तं दृढीकर्तुं माम्नायसाक्ष्यमाह—अत एवेति। यतो न यागादेरमृतत्वोपायत्वम् अतएव च श्रुतिरपि तथा शास्तीत्यर्थः।

का सा श्रुतिरित्याकाङ्क्षायां कैवल्यश्रुतिमुदाहरति—न कर्मणेति। कर्मणा=श्रौतेन स्मार्तेन वा कर्मकलापेन नामृतत्वं आनशुः=आप्तवन्तः 'पूर्वे महात्मानः' इति शेषः। एवं प्रजया=पुत्रेणापि न, एवं धनेन[1]=दैवेन मानुषेण वा वित्तेनापि नेत्यनुषङ्गः, किन्तु एके=मुख्या विवेकिनः त्यागेन[2]=त्यागसाध्येन विवेक[3]ज्ञानेनामृतत्वं प्रापुरित्यर्थः।

"सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया[4] देवलोकः" [ बृ० १ । ५ । १६ ] इति बृहदारण्यकश्रुत्या कर्मादीनाम्

---

१ धनं द्विविधम्, अपरविद्याभिधेयं प्राणोपासनादि दैवम्, पशुवित्तादि मानुषमिति। २ त्यागेन=अभिमानत्यागेन एके=केचिदेवामृतत्वम् आनशुः=प्राप्तवन्तो न सर्वे, अभिमानत्यागस्य तत्त्वज्ञानजन्यतया दुर्लभत्वादित्यर्थ इति सांख्यप्रवचनभाष्ये विज्ञानभिक्षवः। [ सां० १ । ८५ ]। ३ 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इत्यादिश्रुतेः। येन=ज्ञानप्राप्तिबलत्वेन मुच्यते—कृत्स्नबन्धात्। ४ विद्यया=परया। तत्र साङ्गवेदचतुष्टयस्याऽपरविद्यात्वम् उपनिषदां च परविद्यात्वम्। "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां गतिः। ज्योतिषामयनं चेति षडङ्गो वेद उच्यते॥"

मृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति" ॥

तथा "कर्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः। तथाऽपरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः" ॥ इति।

---

अन्यसाधनत्वेनाभिधानान्न कर्मादीनाममृतत्वोपायत्वमिति तत्त्वम्। किं तद् अमृतत्वं स्वर्ग एव, नेत्याह—परेण नाकमिति। नाकं=नाकपदाभिधेयस्वर्गात् परेण=परम्—उत्कृष्टं भिन्नं चेत्यर्थः। स्वर्गात् भिन्नत्वेऽपि न ब्रह्मलोकवद् दूरमपि तु सन्निहितमित्याह—निहितमिति। गुहायां=बुद्धौ निहितं=ब्रह्मरूपेण स्थितं विभ्राजते=स्वयं प्रकाशत्वेन दीप्यते। तर्हि बुद्धिस्थत्वेन अतिसुलभत्वात् सर्वैरेव कथं न प्राप्यमित्यत्राह—यद् यतयो विशन्तीति। यतयः=यत्नशीलाः संन्यासिनो यत्=स्वरूपभूतं तत्त्वं विशन्ति=स्वात्मतया साक्षात्कुर्वन्ति, विवेकिनां स्वरूपभूतत्वेन सन्निहितमपि अविवेकिनां दूरभूतमित्यर्थः ॥ ॐ ॥

एतच्छ्रुतिसमानार्थकश्रुत्यन्तरमप्यस्तीत्याह—तथेति। तदेव श्रुत्यन्तरं दर्शयति—कर्मणेति। ये प्रजावन्तः=पुत्रिणो गृहस्थाः द्रविणमीहमानाः=सुवर्णपशुप्रभृति मानुषं वित्तमभिलषन्तः सकामाः, ये चैवंविधाः सकामा ऋषयः=वानप्रस्थास्ते सर्वे कर्मणा मृत्युमेव=प्रेत्यभावाख्यं पुनर्जन्मैव निषेदुः=प्रापुः, नामृतत्वमित्यर्थः। यथा सकामा गृहस्था वानप्रस्था वा कर्मणा मृत्युं प्रापुस्तथा तेभ्योऽपरे=ये निष्कामा मनीषिणः=पुत्रवित्तादिभ्यो विरज्य संन्यासपुरस्सरं प्रकृतिपुरुषान्यता प्रत्ययशालिनस्ते ऋषयः कर्मभ्यः परं=कर्मकलापजन्यस्वर्गादिभ्य उत्कृष्टममृतत्वं प्रापुरित्यर्थः ॥ ॐ ॥

---

१ नाकमिति अविद्यामुपलक्षयति, अविद्यातः परमित्यर्थ इति तात्पर्यटीकायां वाचस्पतिमिश्राः; स्वर्गस्योपरि अथवा परं नाकम्=आनन्दात्मानमित्यर्थ इति दीपिकायां शङ्करानन्दाः। २ 'निहितं गुहायामिति लौकिकप्रमाणागोचरत्वं दर्शयति' इति तात्पर्यटीका। ३ सर्वथा कर्मत्यागिनश्चतुर्थाश्रमिणः, इत्यर्थः, इति शङ्कराचार्यप्रभृतयः, कर्मफलत्यागिनो गृहस्था अपि संन्यासिन एवेति गीतानुयायिनः। ४ 'इदं वयं सः' इति साक्षात्कारेण तदेव भवन्तीत्यर्थः। "दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" इति मुण्डकश्रुतिः। ५ "लोहदारुमयैः पाशैर्दृढबद्धोऽपि मुच्यते। स्त्रीधनादिषु संसक्तो मुच्यते न कदाचन ॥" किरातार्जुनीये च—"युक्तः प्रमाद्यसि हितादपेतः परितप्यसे। यदि नेष्टात्मनः पीडा मासञ्जि भवताजने ॥" (११।१९) इत्येवम्। ६ यद्वा 'कर्मभ्य' इतिल्यब्लोपे पञ्चमी। कर्माणि संन्यस्येत्यर्थः। तात्पर्यटीकायां मिश्रास्तु—"परं कर्मभ्य" इति कर्मपरित्यागमपवर्गसाधनं सूचयति, "अमृतत्वम्" इति चापवर्गो दर्शित इत्याहुः।

नन्वेवं यागादिजन्यस्वर्गस्य हिंसाजन्यदुरदृष्टप्रयुक्तदुःखेन सातिशयत्वप्रयुक्तदुःखेन च संभिन्नत्वात्, क्षयित्वेन च ग्रस्तत्वसद्भावात् कथं तत्र "यन्न दुःखेन संभिन्नम्'-इति श्रुत्युक्तलक्षणसङ्गतिः, न हि दुःखसंभिन्ने ग्रस्ते च "दुःखेन न संभिन्नं न च ग्रस्तम्" इति वक्तुं पार्यते, एवम् 'अनन्तरम्' इत्यपि तत्र न घटते, मध्ये मध्ये देवासुरसंग्रामजन्यदुःखस्य तत्र सद्भावात्, एवम् "अभिलाषोपनीतम्" इत्यपि तत्र न संभवति, देवेन्द्रभावस्य तत्रत्यैः सर्वैरेवेष्यमाणत्वात्। तस्मात् श्रुत्युक्तलक्षणसङ्गमनं तत्र सर्वथा दुर्घटमेवेति चेत्।

अत्राहुः—स्वर्गशब्दोऽयं किल तत्तदर्थविशेषे तत्रतत्र प्रयुज्यमानो दृष्टिपथमवतरति। तथाहि—एकत्र तावद् "अणुः[1] पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः॥" इत्यादौ मोक्षस्थले तत्त्ववित्प्राप्यनिरतिशयब्रह्मानन्दरूपसुखविशेषे,

अपरत्र, "स्वर्गकामो यजेत" इत्यादौ "नाकस्य पृष्ठे सुकृतेऽनुभूत्वा" इति वाक्यान्तरसहकारेण कर्मिप्राप्यनाकपृष्ठभोग्यक्षयिसुखविशेषे,

इतरत्र च "चन्दनं सूक्ष्मवासांसि च स्वर्गः" इत्यादौ क्षणिकसुखसाधने मनोज्ञे चन्दनादौ, इति।

तत्र त्वेष निर्णयः—तत्त्ववित्प्राप्यो यो निरतिशया[2]ऽलौकिकसुखविशेषो मोक्षापरपर्यायः, स एव स्वर्गशब्दस्य मुख्योऽर्थः, तदभिप्रायेणैव च "यन्नदुःखेन सम्भिन्नम्"—इत्यादिलक्षणवाक्यम्। इतरत्र च क्वचि[3]ल्लक्षणावृत्त्या, क्वचि[4]द् गौण्या वृत्त्या स्वर्गशब्दस्य प्रयोग इति।

तथा चाहुरप्पयदीक्षिताः—"निरतिशयब्रह्मानन्दवाचकस्य स्वर्गशब्दस्य स्वर्गकामादिवाक्येऽनेकमन्त्रलिङ्गाद्यवगतनाकपृष्ठभोग्यसुखविशेषे लक्षणा, तत्प्रशंसार्थं तस्य लक्षणोपपत्तेः। "चन्दनं स्वर्गः, सूक्ष्मवासांसि स्वर्गः" इति सुख-

१ अणुः=सूक्ष्मः दुर्विज्ञानः, विततः=विस्तीर्णः—विस्पष्टतरणहेतुः, पुराणः=चिरन्तनः श्रुतिसिद्धः, पन्थाः=ज्ञानरूपब्रह्मप्राप्त्युपायः, मां स्पृष्टः=स्पृष्टवान्, मया स्पृष्ट इति वा, लब्ध इति यावत्, मयाऽनुवित्तः फलपर्यवसायिनीं परिपाकदशामानीतः। 'मया' इतिशब्दो मन्त्र द्रष्टृऋषिपरामर्शी। तेन=ज्ञानमार्गेण धीराः=प्रज्ञावन्तोऽन्येऽपि ब्रह्मविदः इतः=शरीरपाताद् ऊर्ध्वं स्वर्गं लोकं=प्रकाशस्वरूपं निरतिशयब्रह्मानन्दम् अपियन्ति=प्राप्नुवन्ति इतिमन्त्रार्थः। २ यद्वस्तु कस्यचिदपेक्षया न्यूनम् अधिकं वा भवेत् सातिशयं तदुच्यते, यच्च परां काष्ठां प्राप्तं सत् कुत्रचिद् विश्रान्तं भवति तदेव निरतिशयं कथ्यते। यथा अणुपरिमाणं परमाणौ महत्त्वपरिमाणं चाकाशे काष्ठां प्राप्तं सत् निरतिशयं भवति। एवमेव यत्र गत्वा सुखं काष्ठां प्राप्तं सत् निरतिशयरूपेण तिष्ठति स एव मोक्षः। ३ क्वचित्='स्वर्गकामो यजेत' इत्यादौ लक्षणावृत्त्या=निरतिशयालौकिकसुखविशेषस्य स्वर्गपदाभिधेयत्वेऽपि भागत्यागलक्षणयाऽलौकिकसुखविशेषरूपमर्थमादाय स्वर्गशब्दस्य प्रयोग इत्यर्थः। ४. क्वचित्='चन्दनं स्वर्गः' इत्यादौ, उत्कृष्टत्वमनोज्ञत्वादिकं गुणमादाय स्वर्गशब्दस्य प्रयोग इत्यर्थः।

तदेतत्सर्वमभिप्रेत्याह—"तद्विपरीतः श्रेयान्"।

---

साधनेऽपि प्रशंसार्थं तत्प्रयोगदर्शनात्, ऐहिकसुखापेक्षया नाकलोकभोग्यसुखे नितान्तोत्कर्षसत्त्वेन निरतिशयसुखवाचिना तत्प्रशंसौचित्याच्च" [परिमले अ० ४ पा० ३ अधि० ५] इति ॥

एवंच—तत्त्वविप्राप्यनिरतिशयानन्दरूपमुख्यामृतत्वलक्षणसुखविशेषस्यैव "यन्न दुःखेन"—इति श्रुत्या स्वर्गपदार्थत्वेन लक्षितत्वाद् यागादिजन्यसातिशयसुखविशेषरूपस्वर्गे लक्षणसङ्गमनाभावेऽपि दोषाभावान्नाऽसङ्गतिरिति विद्वत्तोषिण्यां विस्तरः ॥ ❀ ॥

तत्सिद्धमेतद्—आनुश्रविककर्मकलापोपायप्राप्यक्षयिसातिशयसुखविशेषरूपस्वर्गादतिरिक्तोऽक्षयिनिरतिशयसुखरूपो मोक्ष इति, तस्य च कर्मकलापातिरिक्त एव प्रकृतशास्त्रप्रतिपाद्यस्तत्त्वविवेक उपायोऽतः स एव जिज्ञासागोचर इत्याशयेनाभिहितं कारिकायां—तद्विपरीतः श्रेयानिति। तदेवाह—

तदेतत्सर्वमिति। एतत्सर्वम्=आत्यन्तिकदुःखनिवृत्तिस्वरूपस्य मोक्षस्य आनुश्रविकयागाद्यसाध्यतायाः श्रुतियुक्त्यादिसिद्धत्वमित्यर्थः। तद्विपरीतः=यागादिविपरीतस्वभावः। अत्र विवेक इत्यध्याहार्यम् ॥ ❀ ॥

अत्रेयं विचारणा—

ननु ज्ञानमेव निःश्रेयसहेतुरिति तावद् रिक्तं वचः, ज्ञानवत् कर्मणोऽपि निःश्रेयसहेतुत्वावगमात्। यथाहि ब्रह्मज्ञानं निःश्रेयसस्य कारणं, तथा कर्मापि तत्कारणमवगम्यते। नहि कारणत्वाभावे तस्य यावज्जीवं कर्तव्यतोपदेष्टुं शक्यते। तत्कर्तव्यतां चोपदिशति भगवान् वेदः—

---

१ केचित्तु 'यन्न दुःखेन संभिन्नम्' इतिवाक्येन नाकलोकभोग्यः क्षयी सुखविशेष एव लक्ष्यते न निरतिशयब्रह्मानन्दरूपो मोक्षाख्यः सुखविशेष इत्याशयेन "दुःखासंभिन्नत्वं नाम दुःखजनकाधर्माजन्यशरीरजन्यत्वम्। अग्रस्तत्वं च चिरकालस्थायित्वम्। अनन्तरत्वं च अविरललग्नप्रवाहत्वम्। अभिलाषोपनीतत्वं च—इच्छामात्रयोनित्वम्" इत्येवमुपलक्षणतया तात्पर्यतया वा वाक्यार्थमुपवर्ण्य—"दुःखजनकाधर्माजन्यशरीरजन्याविरललग्नप्रवाहचिरस्थायीच्छामात्रयोनिसुखत्वं स्वर्गपदशक्यतावच्छेदकम्" इत्येवं वर्णयन्ति" इत्यादि हि तत्रोक्तम्। ननु यन्मते नाकलोकानुभवनीय एव सुखविशेषः स्वर्गपदार्थो न तु निरतिशयब्रह्मानन्दरूपस्तन्मते "ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः" इति पूर्वोक्तायां श्रुतौ तत्त्वविदनुभवनीये निरतिशयब्रह्मानन्दे स्वर्गपदप्रयोगानुपपत्तिरिति चेत्। अत्राहुर्बृहदारण्यकभाष्ये श्रीशंकराचार्याः—"स्वर्गलोकशब्दस्त्रिविष्टपवाच्यपि सन्निह प्रकरणान्मोक्षाभिधायकः" इति ॥ विवृतं चैतद् भाष्यमानन्दविज्ञानैः—"यथा ज्योतिष्टोमप्रकरणे श्रुतो ज्योतिःशब्दो ज्योतिष्टोमयागविषयस्तथा मोक्षप्रकरणे श्रुतः स्वर्गशब्दो मोक्षमधिकरोति। रूढ्यङ्गीकारे ब्रह्मविद्याया निकृष्टत्वप्रसङ्गादिति भावः" इति।

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥"

[ यजु० ४० । २ ] इति ।

न चेह केवलं यावज्जीवं कर्मानुष्ठानमेवोपदिश्यते, अपि च ये मूढधियो यथोपदेशं वैदिकं कर्म नानुतिष्ठन्ति, तेषां पौनःपुन्येन निकृष्टनिकृष्टतरनिकृष्टतमयोनिप्राप्तिलक्षणः संसारोऽपि साक्षात्प्रदर्श्यते—

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥" ॥

[ यजु० ४० । ३ ] इति ।

अनेन हि स्पष्टमधिगम्यते—विद्यते तावद् ज्ञानवत् कर्मापि निःश्रेयसस्य कारणमिति । कथमन्यथा तद्भावे संसारलेपाभावस्तदभावे च संसारलेप इत्युपदिशेत् । न चैतावन्मात्रमेव, अपि च ? मुमुक्षुणा निःश्रेयसं प्रति ज्ञानकर्मणोः समुच्चयो विज्ञातव्य इत्यपि साक्षादाम्नायते—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥"

[ यजु० ४ । ११ ] इति ।

यथा चैषा श्रुतिर्ज्ञानकर्मणोः समुच्चये प्रमाणं, तथा लिङ्गमपि प्रमाणमुपलभ्यते । अस्ति तावन्मुण्डकोपनिषदि—

"प्राणोह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥"

[ मु० ३ । १ । ४ ] इति मन्त्रः ।

---

१ इह=अस्मिन् कर्माधिकारे भूलोके कर्माणि=नित्यान्यग्निहोत्रादीन्यन्यानि च कुर्वन्नेव=यथाशास्त्रमनुतिष्ठन्नेव [ एवकारेण फलाभिसन्धिर्व्यावर्त्यते ] शत ँ समाः=शतं संवत्सरान् जिजीविषेत्=जीवितुमिच्छेत् । एवं=यथोक्तकर्मानुष्ठानेन त्वयि=कर्माधिकारिणि नरे=नराभिमानिनि कर्म=अशुभं कर्म न लिप्यते=संबध्यते । इतः=स्ववर्णाश्रमोचितकर्मानुष्ठानात् अन्यथा=अशुभकर्मलेपाभावे विहितकर्मानुष्ठानातिरिक्तसाधनान्तरं नास्ति=न विद्यते । येन प्रकारेणाशुभकर्मलेपो न स्यादित्यर्थः ॥ २ असुर्याः=प्राणमात्रपोषणे रताः असुराः=पश्वादयः तेषामिमे, नाम=प्रसिद्धाः ते=ये, लोकाः=योनिविशेषाः अन्धेन=विशालेन तमसा=तमोगुणेन आवृताः=आच्छन्नाः तान्=लोकान् ते जनाः प्रेत्य=शरीरं त्यक्त्वा अभिगच्छन्ति=प्राप्नुवन्ति, ते के ? ये के च=येकेऽपि आत्महनाः वैदिककर्माननुष्ठानेन स्वानिष्टकारिणः, "उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः" [ गी० ६।५ ] ॥ ३ यो=मुमुक्षुः विद्यां=ज्ञानम् अविद्यां=कर्म च तद्=ज्ञानं कर्म च उभयं=द्वयं सह=समुच्चितं मिलितं वेद=जानीते, अनुतिष्ठति स पुरुषः अविद्यया=कर्मणा मृत्युं तीर्त्वा=अतिक्रम्य विद्यया=ज्ञानेन अमृतं=निःश्रेयसम् अश्नुते=प्राप्नोति ॥ ४ यो विद्वान्=शास्त्रार्थवेत्ता विजानन्=उक्तप्राणम् आत्मभावेन साक्षात्कुर्वन्

तत्र भगवतो ब्रह्मविदः 'क्रियावान्' इति विशेषणमुपादीयते । क्रिया च वैदिककर्मणामनुष्ठानम् । न च तज् ज्ञानेन कर्मणः समुच्चयाभावे कथंचिदुपपद्यते । न चानुपपद्यमानं किञ्चिदौपनिषदो मन्त्रः खलु कर्हिचिदुपादातुमर्हति । तस्मात् प्रतिपद्यतेऽस्ति ज्ञानवत् कर्मापि निःश्रेयसस्य कारणम् । भगवान् बादरायणोऽपि तथाऽसूत्रयत्—"विहितत्वाच्चाश्रमकर्मापि" [ वे० ३।४।३२ ] "सहकारित्वेन च" [ वे० ३।४।३३ ] इति ।

तथा च ज्ञानमेवैकं निःश्रेयसस्य कारणमित्यनुपपन्नमिति चेत् । नैवम्,

कर्मणो ज्ञानप्राप्तिहेतुत्वोपदेशेऽपि निःश्रेयसप्राप्तिहेतुत्वोपदेशादर्शनात् । यथा हि वेदोपनिषच्छ्रुतिषु ब्रह्मज्ञानं निःश्रेयसस्य साधनमुपदिश्यते । न च तथा कर्म तत्साधनमुपदिश्यते । न हि उदाहृतश्रुतिवाक्येषु तादृशं किंचिद् वाक्यं वरीवर्ति, येन "कर्मणाऽमृतत्वमश्नुते' इति साक्षादनुशिष्यते ।

न च 'कुर्वन्नेव' [ यजु० ४० । १ । ] इति मन्त्रेण यावज्जीवं कर्मानुष्ठानस्य तत्फलस्य संसारलेपाभावस्य चोपदेशात् "असुर्या नाम" [ यजु० ४० । ३ ] इति मन्त्रेण च यथोपदेशं कर्मानुष्ठानाभावे पश्वादियोनिप्राप्तिलक्षणसंसारलेपस्य चानुशासनात् कर्मणो निःश्रेयससाधनत्वं कल्पयितुं शक्यते । "विद्यां चाविद्यां च" [ यजु० ४० । ११ ] इत्यग्रिममन्त्रेऽमृतत्वरूपनिःश्रेयससंप्राप्तिलक्षणाज् ज्ञानफलाद् भेदेन कर्मफलस्य मृत्युतरणस्याभिधानात् ।

चेदिमे ज्ञानकर्मणी समुच्चिते निःश्रेयसकारणे तावदभविष्यतां तदा नूनमेष मन्त्रो निःश्रेयसप्राप्तिलक्षणाज् ज्ञानफलाद् भेदेन मृत्युतरणलक्षणं कर्मफलं नाभ्यधास्यत ।

नहि ज्ञानकर्मणोरुभयोर्निःश्रेयसं प्रति समुच्चित्य कारणत्वे भेदेन फलाभिधानं कथंचिद् युज्यते ।

मृत्युश्चेह न पौनःपुन्येन मरणमभिप्रेयते, तत्तरणस्य ज्ञानफलत्वाच्चिनाऽमृतपदेनाभिहितत्वात्, किन्तु तत्कारणं चेतोमालिन्यम् । तेन चात्र ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिर्विवक्ष्यते । न च तत्तरणफलकं कर्म ज्ञानोत्पत्तिसाधनं भवदपि निःश्रेयसप्राप्तिसाधनमुपपद्यते ।

---

सन् अतिवादी=आत्मातिरिक्तान् सर्वान् अतिक्रम्य वदितुं शीलमस्य सोऽतिवादी भवति आत्मवित्तु नात्मनोऽन्यत्पश्यति अतोऽतिवादी न भवते=न भवति । आत्मन्येव क्रीडा केलिर्यस्य न बाह्यपुत्रादाविति आत्मक्रीडः । आत्मनि रतिः प्रीतिर्यस्य स आत्मरतिः । बाह्यसाधनापेक्षा क्रीडा, बाह्यसाधननिरपेक्षा रतिरिति तयोर्भेदः । एष उक्तविशेषणो विद्वान् ब्रह्मज्ञानिनां मध्येऽतिश्रेष्ठः ॥

१ "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति गीतासु भगवदुक्तेः "प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥" इति नैष्कर्म्यसिद्ध्युक्तेश्च चित्तशुद्धिपूर्वकब्रह्मज्ञानेच्छैव कर्मसाध्यास्तीति तत्त्वम् ।

कर्म हि अनभिसंहितफलं क्रियमाणं ज्ञानोत्पत्तिप्रतिबन्धिकां बुद्धिसत्त्वाच्छादिकामविशुद्धिमपनयति। यां किलाध्यात्मविदो मालिन्यं दुरितं पाप्मा चेति सङ्गिरन्ते।

ततश्च जायमानया विविदिषया शास्त्रश्रवणादितः समुत्पन्नेन आत्मतत्त्वज्ञानेन निखिलसाधनसम्पत्तौ ब्रह्मसाक्षात्कारे जाते निःश्रेयसं समवाप्यते।

चेत् पूर्वं यथाविधानं कर्म नानुष्ठीयेत, न जातु ज्ञानोत्पत्तिप्रतिबन्धकं चेतोमालिन्यमपनीयेत। तदनपनयने च न कर्हिचिद् विविदिषा तदनन्तरं ज्ञानं चोत्पद्येत। तदनुत्पत्तौ च न किंचित् साधनं सम्पद्येत। तदसम्पत्तौ च न ब्रह्मसाक्षात्कारः प्रजायेत। तदप्रजनने च न निःश्रेयसं समवाप्येत।

सर्वस्यास्य कर्मानुष्ठानमूलकत्वात्। यथाविधि कर्मानुष्ठाने सत्येव सर्वमेतत् सम्पद्यते, नान्यथा, इत्येतावता याजुपमन्त्रयोर्यावज्जीवं कर्मानुष्ठानं तत्फलं संसारलेपाभावोऽननुष्ठाने संसारलेपश्चानुशिष्यते। न च साक्षान्निःश्रेयससाधनत्वाभिप्रायात्। एतेन

"आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्रतीर्थेभ्यः। स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते" [छा० ८।१५।१]

इति छान्दोग्यश्रुतिरपि व्याख्याता वेदितव्या। तत्रापि परम्पराकारणत्वाभिप्रायेणैव "यावदायुषम्" इत्याम्नानात्। कर्म हि ज्ञानप्राप्तितः पूर्वं तत्प्राप्त्यर्थमनुष्ठीयते, पश्चाच्चेश्वराज्ञापरिपालनार्थमिति ज्ञानिनां जिज्ञासूनां च सर्वेषामविशेषेण यत्र तत्र श्रुतिषु यावज्जीवं तत्कर्तव्यतोपदिश्यते।

"क्रियावानेष ब्रह्मविदांवरिष्ठः" [मु० ३।१।४] इति लिङ्गादपि चैतदेवावगम्यते नान्यत् किंचित्।

तत्र जिज्ञासुभिर्महाभागैर्बाह्यसाधनैर्ज्ञानिभिश्च चतुर्थाश्रमिभिरान्तरसाधनैर्यथाविधानं यावज्जीवं कर्मानुष्ठातव्यमिति विशेषोऽवगन्तव्यः।

१ कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥ इति गीतासु भगवद्वचनादिति बोध्यम्। २ "अकुर्वन् बिहितं कर्म निन्दितं च समाचरन्। प्रसंजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति॥" [मनु० ११।४४] ३ गुरुकुलात् सार्थं वेदचतुष्टयं पठित्वा यथाविधि आचार्यस्य शुश्रूषादिलक्षणं कर्म कृत्वा अवशिष्टेन कालेन वेदमधीत्येत्यन्वयः। समावर्तनं कृत्वा धर्मजिज्ञासां परिसमाप्य गुरुकुलान्निवृत्य दारानाहृत्य गार्हस्थ्ये कर्मणि स्थित्वा शुचौ देशे आसीनो वेदं पठन् धर्मयुक्तान् पुत्रान् शिष्यांश्च कुर्वन् स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि उपसंहृत्य शास्त्रानुज्ञाविषयेभ्योऽन्यत्र सर्वाणि भूतानि अपीडयन् तिष्ठेदिति शेषः। ४ अज्ञानिना आरुरुक्षुणा सत्त्वशुद्ध्यर्थं सर्वकर्माणि सर्वदा अनुष्ठेयानि। ज्ञानिना आरूढेन तु सर्वथा सर्वाण्येव कर्माणि त्याज्यानीति शङ्करराद्धान्तः। लोकसंग्रहार्थं तेनापि तानि कर्तव्यानीति गीतासिद्धान्तमवलम्ब्य ब्रूते—कर्म हीति।

सर्वबाह्योपकरणपरित्यागेन प्रव्रज्याश्रमग्रहणस्यापि श्रुतिस्मृतिषु दर्शनात्।

यथा चैतत् कर्म दुरितक्षयेण विविदिषामुत्पादयद् ब्रह्मज्ञानप्राप्तेरेव साधनं न निःश्रेयसप्राप्तेस्तथा भगवती श्रुतिः स्वयमभिवदति—

"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" [ बृ० ४।४।२२ ] इति।

फलमनभिसन्धाय यथाविधि क्रियमाणानि खल्वेतानि कर्माणि बुद्धिसत्त्वाविशुद्धिकारणं दुरितजातं निरस्य पुरुषं ब्रह्मप्राप्तियोग्यतां नयन्ति।

यत्रेदं स्मर्यते—

"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥" [ मनु० २।२८ ] इति।

ततश्चैष प्रक्षीणाशेषकल्मषो विशुद्धसत्त्वो जातविविदिषः समवाप्ताखिलसाधनो द्रागित्येव ब्रह्मज्ञानमुपसम्पद्यते। तदेवं ब्रह्मज्ञानप्राप्तिसाधनं कर्म॥ ※॥

ननु "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" [ बृ० ४।४।२२ ] इत्यत्र यज्ञादिकर्मणां विविदिषासंयोगे सति ब्रह्मज्ञानप्राप्तिसाधनं कर्मेति घटते। नच तेषां विविदिषया संयोगः संभवति। प्राधान्याभावात्। तत्र हीष्यमाणत्वेन वेदनस्यैव प्राधान्यं वर्तते, न विविदिषायाः। वेदनं च मानाधीनं, न यज्ञादिकर्माधीनमिति तत्रापि न तान्यन्वीयन्ते। न चान्यत् किंचित् प्रसज्यते यत्रान्वयः कल्प्येत। पारिशेष्याद् वेदनफले निःश्रेयसे तदन्वयो वक्तव्यः। साधनविभक्त्योपात्तानां कुत्रचित् साध्येऽन्वयस्यावश्यकत्वात्। तत्र तदन्वये च निःश्रेयसप्राप्तिसाधनं कर्मेति युज्यते, न ज्ञानप्राप्तिसाधनम्।

---

१ वेदानुवचनादिषु त्रैवर्णिकानामप्यधिकारादत्र ब्राह्मणशब्दो द्विजपरस्तेन ब्राह्मणाः=ब्राह्मणक्षत्रियवैश्याः तम्=पूर्वोक्तम् एतम्=स्वप्रकाशत्वेन नित्यापरोक्षं साक्षित्वोपलक्षितम् अद्वैतचिदात्मानम्, वेदानुवचनेन=यथाविध्यधीतसाङ्गस्वशाखाजपेन तथा यज्ञेन="अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥" इतिस्मृतेः पंचमहायज्ञान्तर्गतब्रह्मयज्ञेतरदेवयज्ञादिरूपेण तथादानेन='दातव्यम्'-इति श्रीमद्भगवद्गीताविवृतेन सात्त्विकवित्तवितरणेनैव, तथा तपसा=कृच्छ्रादिलक्षणेन। यद्वा—देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥ मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत् तपो मानसमुच्यते॥ इति श्रीमद्भगवद्गीतोक्तं कायिकादि तपः। तथा अनाशकेन=अनशनव्रतेन विविदिषन्ति=वेदितुमिच्छन्ति। जिज्ञासासूत्रे भामत्यां वाचस्पतिमिश्रास्तु—"कामानशनमेव तपः। हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति न तु सर्वथाऽनश्नतो मरणान्नापि चान्द्रायणादितपःशीलस्य धातुवैषम्यापत्तेरिति प्राहुः। अर्थद्वयमपि व्यवस्थयाऽधिकार्यवस्थाविशेषेण ग्राह्यमिति दिक्॥ वेदानुवचनं ब्रह्मचर्ये, यज्ञोदानं च गार्हस्थ्ये, तपोऽनाशकं च वानप्रस्थ्ये, इत्याश्रमविभागोऽप्यत्र प्रदर्शितो भवति।

इति चेत् । न । वेदनस्य वस्तुतः प्राधान्येऽपि शब्दतः प्राधान्याभावात् । प्रकृतिप्रत्ययार्थयोर्हि प्रत्ययार्थः प्रधानं भवति, न प्रकृत्यर्थः । प्रत्ययार्थश्चेह विविदिषा न वेदनम् । तस्य प्रकृत्यर्थत्वात् । प्रधानाप्रधानयोश्च प्रधाने कार्यसम्प्रत्ययो नाप्रधाने । न हि "राजपुरुषमानय" इत्युक्ते वस्तुतः प्रधानमपि राजा पुरुषविशेषणतया शब्दतोऽप्रधानमानीयते । अपि च ? पुरुष एव । तस्य शब्दतः प्राधान्यात् । प्रधानं चेह शब्दतो विविदिषायाः पुरुषवत् । अतो यज्ञादिकर्मणां तत्संयोगः संभवति, नास्ति किञ्चिद् दूषणम् । तथाच युक्तं ज्ञानप्राप्तिसाधनं कर्म ॥ ७ ॥

नन्वेवं "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" [ यजु० ४० । १४ ] इति मन्त्रो विरुध्येत । तत्र ज्ञानकर्मणोः सह वेदनस्योपदेशात् । न ह्येष तयोः समुच्चित्यानुष्ठानं विना सङ्गच्छते । इति चेत् । मैवम् ।

क्रमसमुच्चयाभिप्रायत्वात् । क्रमसमुच्चयाभिप्रायेण ह्येतत् सहवेदनमुपदिश्यते, न समसमुच्चयाभिप्रायेण । कथमेतदवगम्यते ? फलभेदाभिधानात् । मन्त्रस्योत्तरार्धे खलु ज्ञानकर्मणोः फलं भेदेनाभिधीयते, कर्मणो मृत्युतरणं, ज्ञानस्य च निःश्रेयसाधिगम इति । न चैतत् समुच्चये कथंचिदुपपद्यते नहि समुच्चयवतामाग्नेयादिकर्मणां क्वचिद्भेदेन फलमभिधीयते । क्रमसमुच्चये तु नास्ति कश्चिद्दोषः । "यत्र ह्यनुष्ठीयमानात् कर्मणो दुरितक्षये पूर्वं सत्त्वशुद्धिस्ततो विविदिषा, तदनु ज्ञानं, ज्ञानाच्च निःश्रेयसाधिगम इति प्रनाड्या निःश्रेयसप्राप्तौ कर्म ज्ञानेन समुच्चीयते, स क्रमसमुच्चयः । यत्र च साक्षात्, स समसमुच्चयः" इति समुच्चयविदो व्याचक्षते । ज्ञानकर्मणोः सहवेदनं च समसमुच्चये यथोपदेष्टुं शक्यते, तथा क्रमसमुच्चयेऽप्यनुशासितुं पार्यते । सहत्वस्योभयत्र समानत्वात् । अतो न मन्त्रविरोधः ॥

एतेन "विहितत्वाच्चाश्रमकर्मापि" [ वे० ३।४।३२ ] "सहकारित्वेन च" [ वे० ३ । ४ । ३३ ] इति पूर्वोदाहृतसूत्रद्वयविरोधोऽपि प्रत्युक्तो वेदितव्यः । ज्ञानस्यात्मोत्पत्त्यर्थं कर्मापेक्षाया अभ्युपगमात् । यथा हि ज्ञानं शमदमादिसा-

१ विवेको वैराग्यं शमदमादिसम्पत् मुमुक्षा चेति साधनचतुष्टयम् । तत्र शरीरादिप्रकृत्यन्तेभ्यः पदार्थेभ्यः प्रत्यगात्मनो भेदज्ञानं विवेकः । ततो दृष्टानुश्रविकविषयवैतृष्ण्यं प्रकृत्यन्तेषु सर्वपदार्थेषु असक्तिरलंबुद्धिरिति यावद् वैराग्यम् । तत्परिपाकाज्जायमाना सम्पत् शमदमादिसम्पत् । आदिना उपरतितितिक्षा श्रद्धा समाधानं चेति चतुष्टयं परिगृह्यते । वेदान्तसिद्धान्तसारसंग्रहे श्रीशंकराचार्याः—"साधनचतुष्टयसंपत्तिर्यस्यास्ति धीमतः पुंसः । तस्यैवैतत्फलसिद्धिर्नान्यस्य किंचिदूनस्य ॥ चत्वारि साधनान्यत्र वदन्ति परमर्षयः । मुक्तिर्येषां तु सद्भावे नाभावे सिध्यति ध्रुवम् ॥ आद्यं नित्यानित्यवस्तुविवेकः साधनं मतम् । इहामुत्रार्थफलभोगविरागो द्वितीयकम् ॥ शमादिषट्कसंपत्तिस्तृतीयं साधनं मतम् । तुरीयं तु मुमुक्षुत्वं साधनं शास्त्रसंमतम् ॥ ब्रह्मैव नित्यमन्यत्तु ह्यनित्यमिति वेदनम् । सोऽयं नित्यानित्यवस्तुविवेक इति कथ्यते ॥ ऐहिकामुष्मिकार्थेषु ह्यनित्यत्वेन

धनं तावत् स्वोत्पत्तये नियमेनापेक्षते, तथा विहितत्वात् सर्वाश्रमकर्माऽप्यपेक्षत इत्यभ्युपगम्यते । ज्ञानादूर्ध्वं च विधिपरिपालनार्थं तस्यावश्यानुष्ठेयत्वात् सहकारित्वमप्युपपद्यते । द्विविधं हि सहकारित्वं फलोपकारलक्षणं सहभावलक्षणं च । यत् खलु सहवर्तमानं फलमुपकरोति, तत्फलोपकारलक्षणं सहकारित्वं भजते । यथाऽऽग्नेयादीनां प्रयाजादिकम् । यच्च फलं न किञ्चिदुपकरोति केवलं सह वर्तते, तत् सहभावलक्षणम् । यथा प्रत्यगात्मनः शरीरं, गर्दभ्याः वा भारवाहिकायाः विंशत्यर्द्धाः पुत्राः ।

तत्राद्यम् "अत एव चाग्नीन्धनाद्यनपेक्षा" [ वे० ३ । ४ । २५ ] इति निःश्रेयसलक्षणे फले ज्ञानस्य कर्मानपेक्षायाः सूत्रणान्नाभ्युपेयते । द्वितीये तु नास्ति काचिद् विप्रतिपत्तिः । अतो ज्ञानमेवैकं निःश्रेयस्य साधनमिति निष्प्रत्यूहम् ।

तत्र च सन्ति भगवतो वेदस्योपनिषदां च तादृश्यो बह्व्यः श्रुतयो याः खलु ब्रह्मज्ञानस्यैव निःश्रेयससाधनतामुपदिशन्ति । तद् यथा—"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [ यजु० ३१ । १८ ] "ब्रह्मविदाप्नोति परम्" [ तै० २ । १ । ] इत्याद्याः ॥ इत्ययं दार्शनिको मार्गः ॥ ॐ ॥ ॐ ॥

अथ स्मार्तसिद्धान्तः—विद्याऽपरपर्यायस्याऽऽत्मबोधस्याऽऽवश्यकवर्णाश्रमरहितस्य क्षेमप्राप्तिर्न फलं किन्तु प्रत्यवाय इत्याह माध्यन्दिनी श्रुतिः—

"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्याया ँ रताः ॥" [ यजु० ४० । १२ ] इति ।

---

निश्चयात् । नैःस्पृह्यं तुच्छबुद्ध्या यत् तद्वैराग्यमितीर्यते ॥ शमो दमस्तितिक्षोपरतिः श्रद्धा ततः परम् । समाधानमिति प्रोक्तं षडेवैते शमादयः । एकवृत्त्यैव मनसः स्वलक्ष्ये नियतस्थितिः । शम इत्युच्यते सद्भिः शमलक्षणवेदिभिः ॥ उत्तमो मध्यमश्चैव जघन्य इति च त्रिधा । निरूपितो विपश्चिद्भिः तत्तल्लक्षणवेदिभिः ॥ स्वविकारं परित्यज्य वस्तुमात्रतया स्थितिः । मनसः सोत्तमा शान्तिर्ब्रह्मनिर्वाणलक्षणा ॥ प्रत्यक् प्रत्ययसंतानप्रवाहकरणं धियः । यदेषा मध्यमा शान्तिः शुद्धसत्त्वैकलक्षणा ॥ विषयव्यापृतिं त्यक्त्वा श्रवणैकमनस्थितिः । मनसश्चेतरा शान्तिर्मिश्रसत्त्वैकलक्षणा ॥ ब्रह्मचर्यादिभिर्धर्मैर्बुद्धेर्दोषनिवृत्तये । दण्डनं दम इत्याहुर्दमशब्दार्थकोविदाः ॥ तत्तद्वृत्तिनिरोधेन बाह्येन्द्रियविनिग्रहः । योगिनो दम इत्याहुर्मनसः शान्तिसाधनम् ॥ आध्यात्मिकादि यद्दुःखं प्राप्तं प्रारब्धवेगतः । अचिन्तया तत्सहनं तितिक्षेति निगद्यते ॥ उपरतिशब्दार्थो ह्युपरमणं पूर्वदृष्टवृत्तिभ्यः । सोऽयं मुख्यो गौणश्चेति वृत्त्या द्विरूपतां धत्ते ॥ वृत्तेर्दृश्यपरित्यागो मुख्यार्थ इति कथ्यते । गौणार्थः कर्मसंन्यासः श्रुतेरङ्गतया मतः । पुंसः प्रधानसिद्ध्यर्थमङ्गस्याश्रयणं ध्रुवम् । कर्तव्यमङ्गहीनं चेत्प्रधानं नैव सिध्यति ॥ [ एवंच निगृहीतेन्द्रियाणां विषयेभ्य उपरमणं, विहितकर्मणां विधिना परित्यागो वा उपरतिः ] गुरुवेदान्तवाक्येषु बुद्धिर्या निश्चयात्मिका । सत्यमित्येव सा श्रद्धा निदानं मुक्तिसिद्धये ॥ श्रुत्युक्तार्थावगाहाय विदुषा ज्ञेयवस्तुनि । चित्तस्य सम्यगाधानं समाधानमितीर्यते ॥ संसारबन्धनिर्मुक्तिः कदा झटिति मे भवेत् । इति या सुदृढा बुद्धिरीरिता सा मुमुक्षुता ॥ इति ॥ ॐ ॥

अस्यार्थः—ये मूढचेतसो विद्याम्=आत्मज्ञानमुपेक्ष्य अविद्यायां=कर्मण्येव रतास्तेऽन्धं तमः प्रविशन्ति, ये नित्यनैमित्तिककर्मरहितायां विद्यायाम्=आत्मज्ञाने रतास्तेऽपि ॥ तत्र नित्यकर्मत्वं च–तदनुष्ठाने चित्तशुद्ध्यतिरिक्तफलविशेषाजनकत्वे सति तदननुष्ठाने प्रत्यवायसाधकत्वम् । नैमित्तिककर्मत्वं च–तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायजनकत्वमिति विवेकः । एवं केवलां विद्यां केवलं च कर्म निन्दित्वा तयोरन्योन्यसमुच्चितयोर्मोक्षोपायत्वं विधत्ते श्रुतिः—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥" [ यजु० ४० । ११ ] इति ।

विद्याम्=आत्मोपासनाम् अविद्याम्=वर्णाश्रमधर्मजातम् अन्योन्यसमुच्चितम् एतदुभयं यो मोक्षोपायत्वेन वेद=जानाति नासावन्धंतमः प्रविशति । किं विद्याकर्मणोः समुच्चय आधानोत्तरक्रतुवत्, ? किंवाऽऽग्नेयाग्नीषोमीयादिवत्? यद्वाऽङ्गप्रधानवत्? इति विमर्शे निर्णयार्थमुक्तम्—

"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । विद्यया साक्षादमृतं= मोक्षम् अश्नुते=प्राप्नोति । किंतु मृत्युं=मृत्युतुल्यं मोक्षविघ्नं तीर्त्वा विद्यया=आत्मज्ञानेनाऽमृतं प्राप्नोति, न पुनः सत्कर्मनिबन्धनं विघ्नोपशममन्तरेणैव विद्यया मोक्षं कश्चिदाप्नोति ।

ततश्चामृतप्राप्तिकारणभूताया विद्याया विघ्नतरणरूपमुपकारं जनयद्भिः कर्मभिः सह विद्याया अङ्गाङ्गिलक्षणः समुच्चय इति सिद्धम् ।

न च वाच्यं कर्मणां मृत्युतरण एव हेतुभावो नतु मोक्षे, तेन तानि विद्याङ्गानीति । तथा हि सति "अविद्यया मृत्युं तरति, विद्ययाऽमृतमश्नुते" इत्यर्थद्वयपरत्वे वाक्यद्वयभेदः स्याद्, एकं चेदं वाक्यं क्त्वाप्रत्ययसामर्थ्याद् गम्यते । एककर्तृकतां हि मृत्युतरणाऽमृतप्राप्त्योः स ब्रूते । न च निमित्तनैमित्तिकभावमन्तरेण सा तयोः संभवति । तस्माद् विद्याङ्गतया कर्मणां मोक्षं प्रति निमित्तभावोऽत्र विधीयते ॥

यानि तु—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"

इत्यादीनि कर्मणां मोक्षं प्रति निमित्तभावनिषेधकानि, तानि केवलकर्मविषयाणीत्यविरोधः । यत एव मोक्षं प्रति कर्मणां निमित्तभावोऽस्त्यत एव— "य आत्मानमेव लोकमुपास्ते । नेहास्य कर्म क्षीयते" इति कर्मणोऽक्षयत्वं प्रतिपा-

---

१ यथा–"यावज्जीवं अग्निहोत्रं जुहोति," "अहरहः सन्ध्यामुपासीत" इत्यादि । २ यथा–"यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" "राहूपरागे स्नायात्" इत्यादि । एवं–काम्यकर्मत्वं च–तदनुष्ठाने फलविशेषजनकत्वे सति तदननुष्ठाने प्रत्यवायाजनकत्वम् । यथा–"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" "उद्भिदा यजेत पशुकामः" इत्यादावित्यपि बोध्यम् । ३ ज्ञानकर्मणोः ।

दयद् वाक्यम् अस्य मोक्षोपायत्वं गमयति । अक्षयफलत्वेन हि कर्मणोऽक्षयत्वं न स्वभावतः, क्षयित्वात् ।

अत एव—"विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति मोक्षोपायभूतविद्याङ्गतां तृतीयाश्रुतिः प्रतिपादयति । न च वाच्यं सन्प्रत्ययवाच्येच्छाङ्गत्वेन तृतीया कर्मणां विनियोक्त्रीति, यतः प्रत्ययार्थीभूतेच्छां प्रतीप्सितकर्मत्वेन सन्नन्तेषु धात्वर्थः प्रतीयते, इति स एव प्रधानम् । अतः स एव पदार्थान्तरैः संबध्यते । यथा "अश्वेन जिगमिषति" इत्यश्वस्य करणभावो गमने प्रतीयते, न तदिच्छायाम् ।

स्पष्टं च ज्ञानकर्मणोः समुच्चयं मोक्षविषयमाह—"तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च" इति ॥

एतावच्छ्रुतिवाक्यानि केवलबुद्धिक्षेमप्रापकत्वपक्षप्रतिक्षेपकाण्युदाहृतानि ॥ॐ॥

अथ स्मृतिवाक्यान्युदाह्रियन्ते, तत्र मनुः—

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥
अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैव कर्मभिः ।
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्परम् ॥"

योगयाज्ञवल्क्यः—

"स्वकर्मणामनुष्ठानात् सम्यगात्मनिदर्शनात् ।
वेदान्तानां परिज्ञानाद् गृहस्थोऽपि विमुच्यते ॥"

अपिशब्दादन्येऽप्याश्रमिण एवं विमुच्यन्त इति गमयति ।

मार्कण्डेयपुराणे—

विहिताकरणात् पुंभिरत्यन्तं क्रियते तु यः ।
संयमो मुक्तये मोहात् प्रत्युताधोगतिप्रदः ॥
प्रक्षालयामीति भवान् वत्साऽऽत्मानं तु मन्यते ।
विहिताकरणोद्भूतैः पापैस्त्वं न विदह्यसे ॥
अविद्याप्युपकाराय विषवज्जायते नृणाम् ।
अनुष्ठिताप्युपायेन बन्धायाऽन्यायतोऽपि वा" ॥

पुलस्त्यः—

"ज्ञानकर्मसमायोगात् परं प्राप्नोति पूरुषः ।
पृथग्भावान्न सिध्यन्ति उभे तस्मात्समाश्रयेत् ॥
ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्मादुभाभ्यां तु भवेत्प्रसिद्धिर्नह्येकपक्षो विहगः प्रयाति ॥"

व्यासः—

"योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥
अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥"

हविरर्प्यते=प्रक्षिप्यते स्रुगादिना येन तदर्पणम् । कारकेषु क्रियायां च ब्रह्मबुद्धिकरणमनेन विधीयते । ब्रह्मात्मकं कर्म यः समादधाति=बुध्यते स ब्रह्मकर्मसमाधिः ।

विष्णुधर्मेऽश्विनौ

"द्वे कर्मणी नरश्रेष्ठ ब्रह्मणा समुदाहृते ।
प्रवृत्तं च निवृत्तं च स्वर्गमुक्तिफले हि ते ॥
प्रवृत्तमपि मोक्षाय कर्म पार्थिव जायते ।
कर्म स्वरूपतो भ्रष्टमनाकाङ्क्षिफलं स्मृतम् ॥"

विष्णुः—

"एवं ज्ञानवतां कर्म कुर्वतोऽपि प्रजादिकम् ।
भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्यस्य वचनं यथा ॥
अनिर्वातो यथा वह्निर्ध्मायमानः प्रणश्यति ।
तथा कर्मविहीनस्य ज्ञानाग्निः संप्रणश्यति ॥
तस्मादाश्रमिभिः सर्वैर्नित्यं यज्ञोपवीतिभिः ।
नित्यनैमित्तिकं कर्म काले कार्यमतन्द्रितैः ॥"

हारीतः—

"यथाऽश्वा रथहीनास्तु रथो वाऽश्वैर्विना यथा ।
एवं तपोऽप्यविद्यस्य विद्या वाऽप्यतपस्विनः ॥
यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥"

इति याज्ञवल्क्यस्मृतिव्याख्यायाम् अपरार्कापराभिधायाम् अपरादित्यदेवः ॥ ❀ ॥ ❀ ॥

॥ ❀ ॥ अथ तात्पर्योद्घाटनम् ॥ ❀ ॥

याज्ञवल्क्यः—

"न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥"

एतद्व्याख्यायाम् अपरादित्यदेवः—एवंविधो गृहस्थोऽपि विमुच्यते=अपवृज्यते । अपिशब्देन अन्येऽप्याश्रमिणो गृह्यन्ते । अत्र च न्यायार्जित-धनत्वादिभिर्वर्णाश्रमधर्मा नित्यनैमित्तिकाश्चोपलक्षिता ज्ञानसहिता मुक्तये विधीयन्ते ।

तदेतद्व्याख्यानं केचिन्नानुमन्यन्ते, यत एतदर्थायाः स्मृतेरस्याः श्रुतिविरोधः स्यात् ।

तथाहि—

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद् यतयो विशन्ति ॥"

इत्यनेन गृहस्थधर्माणां यागादिकर्मप्रजोत्पादनादीनाम् अमृतत्वप्राप्तिहेतुभावं प्रतिषिध्य यतीनामेव तत्प्राप्तिर्विधीयते । तेनात्र त्यागशब्देन ब्रह्मचर्याद्याश्रम-त्रयकर्मणां त्यागाद् अमृतीभाव इति प्रतिपाद्यते ।

तथा यतिव्यतिरिक्ताश्रमिणां पुण्यलोकप्राप्तिर्यतेरेवामृतप्राप्तिरिति छान्दोग्योपनिषत्—

"सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥" (छा० २।२३।१–२) इति । ब्रह्मसंस्थो=भिक्षुः ।

१ "तुरीयाश्रममन्तरेण नैव कदापि कस्यापि कुत्राप्याश्रमे स्वप्नेऽपि मुक्तिः" इति चतुर्थाश्रमिणः । अत एव श्रुतौ "त्रयो धर्मस्कन्धाः" इत्युपक्रम्य "यज्ञोऽध्ययनं दानमिति प्रथमः । तप एवेति द्वितीयः । ब्रह्मचार्याचार्यकुलवासी तृतीयः, अत्यन्तमाचार्यकुले एव आत्मानमवसादयन्" इति गार्हस्थ्यवानप्रस्थ्यनैष्ठिकत्वस्वरूपमभिधाय "सर्वे एते पुण्यलोका भवन्ति" इति त्रयाणामाश्रमिणां पुण्यलोकप्राप्तिमभिधाय "ब्रह्मसंस्थोऽमृतत्वमेति" इति पारिशेष्यात् परिव्राजकस्यैव ब्रह्मसंस्थस्य मुक्तिलक्षणाऽमृतत्वप्राप्तिरभिहिता । यदपि "श्राद्धकृत् सत्यवादी गृहस्थोऽपि विमुच्यते" इति गृहस्थस्यापि मोक्षप्रतिपादनं तद् भवान्तरानुभूतपारिव्रज्यस्येत्यवगन्तव्यमिति हि शाङ्करसिद्धान्तः ।

1 धर्मस्कन्धाः=धर्मविभागाः । यज्ञोऽध्ययनं दानमिति त्रयं मिलित्वा एको धर्मस्कन्धः । अनेन गृहस्थाश्रमोऽभिलप्यते । तपो द्वितीयो धर्मस्कन्धः । अनेन तपःप्रधानो वानप्रस्थाश्रमो निगद्यते । आचार्यकुलवासी ब्रह्मचारी तृतीयो धर्मस्कन्धः । अत्यन्तम्=अतिशयेन आत्मानं=देहम् आचार्यकुले=गुरुकुले अवसादयन्=विविधैर्नियमैः क्षपयन् आचार्यकुलवासीत्यन्वयः । अनेन ब्रह्मचर्याश्रमः कथ्यते । तदानीमेवाचार्यकुले वासोपपत्तेरित्येतच्छ्रुत्यर्थः ।

तथाऽग्निहोत्रादीन्यावश्यकानि कर्माणि दुरितक्षयाय श्रुत्या विहितानि । तानि मुक्तये विदधाना स्मृतिः श्रुत्या विरुध्यत एव ।

यदुच्यते श्रुत्यैव—

"विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"

इत्यादिकया वर्णाश्रमकर्माणि मुक्तौ विनियुक्तानीति, तन्न । ब्रह्मज्ञानेच्छायामेव ह्येषा श्रुतिः कर्मणां विनियोक्त्री, न मुक्तौ नापि तत्साधने ज्ञाने । इच्छाऽपि च विधेयप्रतियोगिनी भवति । यथा भेषजविशेषस्य बुभुक्षा ॥

ननु च प्रधानेऽन्यत् प्रधीयते न गुणे, 'विविदिषन्ति' इत्यत्र च वेदनमिच्छां प्रति प्रधानम् । तेन विद्यायाम् एवम् आद्येच्छां प्रति कर्मीभूतायां कर्मणां विनियोगो, नेच्छायाम् । यथा 'अश्वेन जिगमिषति' इत्यश्वस्य गतौ, न पुनस्तदिच्छायामित्युच्यते ।

सत्यम् । प्रधानेऽन्यद् विनियुज्यते । प्रधानं तु द्विविधम्–शाब्दमार्थं च । तत्र शाब्दमन्वय उपयुज्यते, नाऽऽर्थम् । अत एव 'अश्वमानय' इति पुरुष आनयनेन संबध्यते, न राजाऽर्थतः प्रधानोऽपि । स हि शब्देन विशेष्यतया प्रधानभूतं पुरुषं प्रति विशेषणतां नीयते । सन्नन्तेषु च शब्देषु इच्छैव प्रत्ययार्थत्वात्प्रधानम् । तेन तत्रैव यज्ञादिविनियोगः । अश्वस्य तु गत्यन्वयः प्रमाणान्तरवशान्न शब्दतः प्रसिद्धहेतुकायामपि विविदिषायां, वैदिको यज्ञादिरुपायः पशुप्राप्ताविव चित्रादिः, "चित्रया यजेत पशुकामः" इत्यत्र ।

किंच—कर्माणि कुर्वता "अहं कर्ता कर्मणां फलभोक्ता च" इति प्रत्ययदार्ढ्यम् अवलम्बनीयम् । तत्त्वज्ञाननिष्ठेन पुनरस्यैव प्रत्ययस्य मिथ्यात्वम् आपाद्यम् । ततश्च ज्ञानकर्मणोर्विरोधादसमुच्चयः, षोडशिन इव ग्रहणाग्रहणयोः ।

किंच—परमकार्याभेदेऽवान्तरव्यापारभेदे तु कारकं कारकान्तरेण समुच्चीयते । यथा—

"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति"

इत्यत्राऽऽरुण्यम् एकहायन्या, न पुनरवान्तरव्यापारैक्ये, न हि व्रीहयो यवैः समुच्चीयन्ते । तुल्यं च ज्ञानकर्मणोर्दुरितक्षपणम् अवान्तरकार्यम् ।

नच ज्ञानस्याविद्यानिवृत्तिरेव कार्यं न तु कर्मक्षय इति वाच्यम् । नहि कर्मजन्याया अविद्यायाः कर्मण्यपक्षयता ज्ञानेन निवृत्तिः शक्या कर्तुम् ।

तस्मान्न्यायविरुद्धमपि समुच्चयस्मरणं स्मृत्यन्तरविरुद्धं च ।

तत्र महाभारते शुक उवाच—

"यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया याति कां च गच्छति कर्मणा ॥
एते चान्योन्यवैरूप्ये वर्तेते प्रतिकूलतः ।
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ॥

कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ।
यां दिशं विद्यया यान्ति यां च गच्छति कर्मणा ।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥"
"कर्मणा बध्यते जन्तुर्विद्यया च प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
कर्मणा जायते प्रेत्य मूर्तिमान् षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजातानि रमयन्त उपासते ॥
ये तु बुद्धिपथं प्राप्ता धर्मनैपुणदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥
कर्मणा फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न हीयते यत्र गत्वा यत्र गत्वा न वर्धते ॥" इति ॥

मार्कण्डेयपुराणे पितापुत्रसंवादे—

"एवं संसारचक्रेऽस्मिन् भ्रमता तात संकटे ।
ज्ञानमेतन्मया प्रोक्तं मोक्षसंप्राप्तिकारणम् ॥
विज्ञाते यत्र सर्वोऽयमृग्यजुः सामसंज्ञितः ।
क्रियाकलापो विगुणो न सम्यक् प्रतिभाति मे ॥
तस्मादुत्पन्नबोधस्य वेदैर्मे किं प्रयोजनम् ।"

बृहस्पतिः—

सत्यं ज्ञानं तपो दानमेतद्धर्मस्य साधनम् ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥" इति ॥"

तस्माद् उक्तविरोधपरिहाराय स्मृतिरियमेवं व्याख्यातव्या—

"गृहस्थोऽपि विधिविहितकर्मकारी मुक्त्यनर्होऽपि तत्त्वज्ञाननिष्ठत्वाद् विमुच्यते, किं पुनर्भिक्षुः कर्मत्यागी तत्त्वज्ञानैकनिष्ठः" इति ॥ ꣸ ॥

तदेतद् अन्ये नानुमन्यन्ते । नहि समुच्चयविधायकस्मृतेः श्रुतिविरोधादप्रामाण्यमस्ति । यतः समुच्चयविधायकं प्रत्यक्षमेव श्रुतिवाक्यमस्या मूलमस्ति ।

तद् यथा—

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥" इति ।

विद्यां=ब्रह्मज्ञानम् । अविद्यां=कर्म । तदुभयं सह=समुच्चयं यो वेद=अनुष्ठानपर्यन्ततया जानाति, स कर्मणा मृत्युं=मृत्युफलदं दुरितं तीर्त्वा=अतिक्रम्य

विद्ययाऽमृतमश्नुत इति प्रसिद्धार्थम् । अत्र च विद्याशब्दं देवताज्ञानपरत्वेन केचन व्याचक्षते, तदयुक्तम् । प्रकृतहान्यप्रकृतप्रक्रियाप्रसङ्गात् । "ईशावास्यम्—" इत्यादिना परमेश्वरस्यैव प्रकृतत्वात् ।

एवमत्र मन्त्रे विद्याकर्मणोरमृतीभावे समुच्चयः । तदुपपादकतया चावान्तरव्यापारभेदो अविद्यया मृत्युं तीर्त्वेति कथितः । क्त्वाप्रत्ययेन च विद्यां प्रति कर्मणोऽङ्गभावः । एतदेव स्पष्टयति—"विविदिषन्ति यज्ञेन" इत्यादिश्रुतिः ।

यद्यप्यत्र विविदिषा प्रत्ययार्थत्वाच्छब्दतः प्रधानम् । तथापि न तत्र यज्ञान्वयो वाक्यप्रमेयोऽर्थसिद्धत्वात् ।

तथाहि—नहि विविदिषासंबन्धमन्तरेण विद्यार्थता यज्ञादीनामस्ति । नह्यनिष्यमाणं प्रधानं भवति । तेन यज्ञादीन् प्रति विद्यायाः प्राधान्याद् विविदिषान्वयस्तेषां गम्यमानो न विधेयः, किंतु विद्यान्वय एवाप्राप्तत्वात् ।

यथा "एतयाऽन्नाद्यकामं याजयेत्" इत्यत्र याजनान्वयमनूद्य यागान्वय एव प्राप्तोऽन्नाद्यकामस्य विधीयते । अत एव च "अश्वेन जिगमिषति" इत्यत्राश्वेन गत्यन्वयः शाब्द एव । अस्तु वा विविदिषैव यज्ञादीन् प्रति प्रधानं, किंतु विविदिषाप्रयोजनीभूतया च विद्यया विशिष्टेच्छा विविदिषोच्यते ।

यच्च प्रयोजनवतोऽङ्गं, तत् प्रयोजनस्यापि । यथा "अग्निं चित्वा सौत्रामण्या यजेत" इति ।

अत्र सौत्रामण्यग्निं प्रत्यङ्गं भवन्ती तत्प्रयोजनं यागं प्रति चाङ्गतां याति । विद्यापि चापवर्गेण फलेन फलवती सती इच्छायाः प्रयोजनं भवति, न केवला । ततश्च विद्याङ्गभावं भजन्तोऽप्यविद्यादयोऽपवर्गेऽङ्गतां यान्ति । विद्यायाश्चापवर्गः फलम्, "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्म भवति" इत्यादिवाक्यप्रसिद्धेः ॥ न च वाच्यं यथाऽऽधानम् आहवनीयादिस्वरूपोत्पत्त्यङ्गं, नतु तत्कार्योत्तरक्रत्वर्थं तथा यज्ञादयोऽपि विद्यास्वरूपमुत्पादयन्ति, नतु तत्कार्यमपवर्गं कुर्वन्तीति । युक्तं ह्याधानस्य आहवनीयादिस्वरूपोत्पत्तिमात्रशेषत्वम् । नहि आधानविनियोगदशायां—"यदाहवनीये जुह्वति" इत्यादिभिः आहवनीयादीनां प्रयोजनतावगमोऽस्ति । प्रसिद्धे ह्याहवनीयादौ तत्प्रयोजनावगमो भवति । तत्प्रसिद्धिश्च आधानविनियोगायत्ता । तेन पूर्वम् आधानमग्निषु विनियोज्यं पश्चात् क्रतुष्वन्वयः, तेनागत्या विनियोक्ष्यमाणातीन्द्रियाऽऽहवनीयादिस्वरूपशेषताऽऽधानस्याऽऽश्रीयते, नतु गतिसंभवेऽपि । संभवति चात्र गतिः । यज्ञादिविनियोगात्प्रागेव विद्याया अपवर्गताज्ञानात् । विद्यास्वरूपस्य चैन्द्रियकत्वात् ॥

नच यथा पश्वादीनां प्रमाणान्तराद् विदितपुरुषार्थभावानां शास्त्रेण चित्रादिरुपायो विधीयते, तथा विद्यायां यज्ञादिरिति वाच्यम् । तस्य प्रमाणान्तरतः पुरुषार्थत्वावेदनात् । तस्माच्छास्त्रावगम्याऽपवर्गहेतुभूतायां विद्यायां साक्षादिच्छाद्वारेण वा यज्ञादयो विनियोज्यन्त इति सिद्धम् । ततश्च सर्वाण्येवाऽऽवश्य-

कानि वर्णाश्रमकर्माणि मोक्षे साध्ये ब्रह्मज्ञानेन समुच्चीयन्ते । "न कर्मणा—" इत्यादयस्तु कर्मणां मोक्षोपायत्वनिषेधाज् ज्ञानरहितकर्मविषयाः । अन्यथा समुच्चयविधिनिरोधः स्यात् ॥

अत एव मन्त्रेणाविद्याशब्दवाच्यं कर्म केवलं निन्दित्वा विद्याऽपि केवला निन्द्यते—

"अन्धं तमः प्रविशन्ति ये विद्यामुपासते ।
ततोभूय इव ते तमो यदविद्यायां रताः ॥" इति ॥

यदपि च "सर्व एते पुण्यलोका भवन्ति" इति वाक्यं, तदपि केवलकर्मविषयम् । "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यस्यायमर्थः—प्रकृतानामाश्रमिणां मध्ये यो ब्रह्मसंस्थो=ब्रह्मप्रवणो ब्रह्मज्ञानाङ्गभूतं कर्म करोतीतियावत्, सोऽमृतत्वमेतीति । न पुनर्ब्रह्मसंस्थशब्देन भिक्षुराख्यायते । तस्य तत्संज्ञत्वे प्रमाणाभावात् । योऽपि विद्याकर्मणोर्विरोध उक्तः, सोऽपि नोपासनात्मिकया विद्यया, किंतु साक्षात्कारात्मिकया ।

तथा चोक्तम्—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" ॥ इति ॥

तस्माद् "गृहस्थोऽपि विमुच्यते" इति स्मृतिर्न भङ्गेन व्याख्येया ॥ गृहस्थस्य तु मुक्तिरुक्ता छान्दोग्ये—

"कुटुम्बी शुचौ देशे वेदमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः, स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते, न पुनरावर्तते ॥" इति ।

विहिता हिंसा तीर्थेषु । ब्रह्मैव लोको ब्रह्मलोकः ॥ ❀ ॥

मुक्तौ ज्ञानकर्मसमुच्चयं स्मृतिकाराश्चाहुः ।

तत्र मनुः—

"सुखाभ्युदयिकं चैतन्नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥
इह वाऽमुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
ज्ञानपूर्वं तु विद्वद्भिर्निवृत्तमुपदिश्यते ।
प्रवृत्तं कर्म संसेव्य देवानामेति सात्म्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥"

वसिष्ठः—

"यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥"

योगयाज्ञवल्क्यः—

"परिज्ञानाद् भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्ति पण्डिताः ॥
ज्ञानकर्मसमायोगात्परमाप्नोति पूरुषः ।
पृथग्भावो न सिध्येत उभे तस्मात् समाश्रयेत् ॥ इत्यादि ।

तस्मात् "न्यायार्जितधनः" इत्यादिस्मृतिर्मुख्यतयैव व्याख्यातव्येति । तदन-योर्मतयोर्यन्न्याय्यं तद्ग्राह्यम् ॥" इति ॥ ❀ ॥

॥ ❀ ॥ अथोपसंहारः ॥ ❀ ॥

तत्सिद्धमेतत्—संसारोऽयं सर्वथा कर्ममयो वरीवर्ति । तत्र कर्मकर्तारश्च द्विविधा दृष्टिपथमवतरन्ति, कर्मकाण्डिनो ज्ञानिनश्चेति । तत्र ये शास्त्रविधि-मनतिक्रम्य फलाशया कर्मानुतिष्ठन्ति, ते कर्मकाण्डिनः इत्युच्यन्ते । ये पुनः कर्तव्यत्वधिया निष्कामं ज्ञानपूर्वं कर्माचरन्ति, ते ज्ञानिन इत्याख्यायन्ते । तत्र ये कर्मकाण्डिनोऽनित्यं ते स्वर्गप्राप्तिरूपं फलं लभन्ते, निष्कामबुद्ध्या कर्माचरन्तो ज्ञानिनस्तु नित्यं मोक्षरूपं फलं प्राप्नुवन्ति ॥

"कर्माणि हि स्वरूपतो न कंचिद् बध्नन्ति नापि कंचिन् मुञ्चन्ति, जडेषु कर्मसु बन्धनमोचनयोर्द्वयोरप्यसंभवात्, किन्तु फलाशया वा स्वासक्त्या वा बध्यते पुरुषः स्वयमेव । फलाशां परित्यज्य कर्म कुर्वाणस्तु न कदाचिद् बध्यते पुरुषः ।

"प्रवाहपतितः कार्यं कुर्वन्नपि न लिप्यते ।
बाह्ये सर्वत्र कर्तृत्वमावहन्नपि राघव ॥"

[ अध्यात्मरामा० २।४।४२ ] इति लक्ष्मणं प्रति श्रीरामचन्द्रोक्तेः ।

ज्ञानकाम्यकर्मणोः परस्परं विरोधे सत्यपि निष्कामकर्मणोः ज्ञानस्य तु नास्ति कश्चित् परस्परं विरोधः, उभयोरेव मोक्षरूपसमानफलजनकत्वात् । अत एव—

"कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात् कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ॥
यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान् सर्वान्नाभिमानात् समाचरेत् ॥"

इत्यादिना महाभारते कर्मासक्तिं कर्तृत्वाभिमानं च परित्यज्य कृतानां कर्म-णामबन्धकत्वमेवोक्तं व्यासदेवैः ॥ वेदान्तशास्त्रमपि नैव कर्मयोगविरुद्धं शिक्ष-यति प्रत्युत अकर्मा हि नैव सत्यो वेदान्ती" इत्येव स्पष्टमुद्घोषयति, कुर्वत एव कर्माणि 'यदा कर्मातीता' ( पूर्णकर्मत्यागो वा ) अन्तिमा दशा भवति तदा वेदान्तिनं कर्माणि स्वयं परित्यजन्ति, न तु वेदान्तिना कर्मत्यागः कर्तव्यो भवतीति सर्वसम्मतः पन्थाः ॥

किं वा वहुनोक्तेन? कर्मसंन्यासो निष्कामकर्मयोगश्चेति द्वावपि स्वतन्त्रौ मुक्तिसाधकौ मार्गौ । नहि निष्कामतया ज्ञानपूर्वकं विहितानि कर्माणि कथंचिद् वन्धकानि भवन्ति । सकामानामेव तेषां बन्धकत्वस्य सर्वैरभ्युपगमात् ॥

यदाहुः श्लोकवार्तिके भट्टपादाः—

"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥" इति ।

"काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, इति न शरीरारम्भं परिजिहीर्षता ते कर्तव्ये, नित्यनैमित्तिके च पूर्वकृताधर्मक्षयाय कर्तव्ये" इति तद्व्याख्यायां पार्थसारथिमिश्राः । तत्र "अहरहः क्रियमाणानि सन्ध्योपासनादीनि कर्माणि नित्यकर्माणि" अनिष्टग्रहादिशान्त्याद्यर्थं क्रियमाणानि नैमित्तिकानि, पुत्रप्राप्त्यादिफलविशेषकामनया क्रियमाणानि काम्यानि, शास्त्रवर्जितानि मद्यपानपरदाराभिगमनादीनि निषिद्धकर्माणीति विवेकः ।

तत्र कर्मयोग एव प्रवृत्तिमार्ग इत्युच्यते, कर्मसंन्यास एव च निवृत्तिमार्ग इत्याख्यायते । "प्रवृत्तिलक्षणो योगः ज्ञानं संन्यासलक्षणम्" [ महा० भा० अश्व० ४३ । २५ ] इति भगवद्व्यासदेववचनात् ।

तत्र त्यागशब्दस्य नायमर्थः—कर्माणि न कर्तव्यानीति, किन्तर्हि? फलाशापरित्याग एव त्यागशब्दस्य मुख्योऽर्थः । "सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" [ गी० १८।२ ] इति भगवद्वासुदेववचनात् । आसक्तिं परित्यज्य साम्यबुद्ध्या क्रियमाणस्य कर्मजातस्य मुक्तिजनकत्वस्य निखिलतन्त्रसिद्धत्वात् ।

"यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥" [गी० १८।५, ६]

इति भगवता कण्ठत एवोक्तेश्च ।

तेन निष्कामबुद्धियोगेन क्रियमाणैः कर्मभिस्तेषां बन्धनानि त्रुट्यन्तीति न तानि मोक्षप्रतिबन्धकानि भवन्ति, ज्ञानेन च मनसः सन्देहा अपाकृता भवन्तीति द्वयोरेव मिलितयोर्मोक्षहेतुत्वमिति सिध्यति । अत एव गीतासु ज्ञान-

१ लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥' इति गीतासु श्रीभगवदुक्तेरिति भावः । २ एतान्यपि तु=काम्यान्यपीत्यर्थः ।

कर्मसमुच्चयात्मककर्मयोग एव भगवतोपदिष्टः—"ज्ञानयोगव्यवस्थितिः" [ गी० १६।१ ] इति ।

तस्मात् निष्कामनया ज्ञानपूर्वं कर्मानुष्ठानं च तत्त्वविवेकश्चेति सुवर्णसुगन्धयोर्योग इत्येव निखिलशास्त्रतात्पर्यमिति विदाङ्कुर्वन्तु सुधियः इत्यास्तां विस्तरः ॥

तदेतद्गीतं गीतासु भगवता—"सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥" इति ॥ ❀ ॥

ननु मोक्षस्वर्गयोः परस्परं को भेद इति चेत् । न, स्वर्गः क्षयी मोक्षोऽक्षयी, स्वर्गः सातिशयः मोक्षो निरतिशयः, इत्येवं क्षयित्वाक्षयित्वसातिशयत्वनिरतिशयत्वाभ्यां तयोः परस्परं प्रभेदस्य विस्पष्टत्वात् । कर्ममीमांसकमतेऽपि न स्वर्ग एव मोक्षः किन्तु तदतिरिक्त एव । अत एव श्लोकवार्तिककृद्भिः—"सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते । स्वर्ग एव भवेदेष[१] पर्यायेण क्षयी च सः ॥ न हि कारणवत्किंचिदक्षयित्वेन गम्यते ।" इत्यादिना जन्यस्य स्वर्गसुखस्य क्षयित्वमुक्त्वा—कुतस्तर्हि मुक्तिः किंस्वरूपा च सेति जिज्ञासायां—"तस्मात्[२] कर्मक्षयादेव हेत्वभावेन मुच्यते । नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् । नच क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥ तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः ॥ कर्मजन्योपभोगार्थं शरीरं नः प्रवर्तते । तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥" इत्यादिना "कर्मक्षयनिमित्तः शरीरसं-

---

१ एषः=मोक्षः स्वर्गएव—न ततो भिद्यते, सः=स्वर्गः । २ तस्मादिति । शरीरसंबन्धो बन्धः, तदभावो मोक्षः, तेन निष्पन्नानां देहादीनां यः प्रध्वंसाभावः, यश्चानुत्पन्नानां प्रागभावः स मोक्षः, कर्मनिमित्तश्च बन्धः कर्मक्षयादेव न भवति । सिध्यति चाभावात्मकत्वे मोक्षस्य नित्यता, न त्वानन्दात्मकत्वे, इत्याह—न हीति । यदि त्वभावरूपस्यापि मोक्षस्य ज्ञानमेव साधनमित्युच्यते, अतआह—न च क्रियाया इति । यदि च न क्रियाफलमभावः, कुतस्तर्हि तत्सिद्धिः ? ननु कर्मक्षयादेव, सत्यं, स एव तु कुतः सिध्यति ? तत्राह—तत्र ज्ञातेति । यो हि देहाद् विविक्तमजरममरमदुःखमात्मानं जानाति तस्य देहसम्प्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतितेऽनागतानां च कर्मणामननुष्ठानादेवाऽसत्त्वाद् देहान्तरानुत्पत्तेरत्यन्तासंबन्धः शरीरेण भवति । न चासत्यपि कर्मणिमातापितृसंयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिरत आह—कर्मजन्येति । धर्माधर्मसहितो मातापितृसंयोगः शरीरहेतुर्न तन्मात्रमिति नः=अस्माकं शरीरमित्यन्वयः । तेन मोक्षार्थिभिर्न विवेकज्ञानमात्रेण कृतार्थं मन्यमानैः स्थातव्यं, किन्त्वेवं कर्तव्यमित्याह—मोक्षार्थीति । काम्यनिषिद्धे हि स्वफलयोरभ्युदयप्रत्यवाययोरुपभोगाय शरीरमारभेते, न शरीरारम्भं परिजिहीर्षता ते कर्तव्ये, नित्यनैमित्तिके च पूर्वकृताऽधर्मक्षयाय कर्तव्ये, तदैव चात्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वम् । उपासनाभिप्रायमेव च—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति भगवद्वासुदेववचनं न विवेकज्ञानाभिप्रायम्" इति श्लोकवार्तिकार्थे इत्येतद्व्याख्यायां पार्थसारथिमिश्राः ।

तस्माद्=आनुश्रविकाद् दुःखापघातकादुपायात् सोमपानादेर-विशुद्धादनित्यसातिशयफलाद्, विपरीतः=विशुद्धो हिंसादिसङ्करा-भावाद्, नित्यनिरतिशयफलोऽसकृदपुनरावृत्तिश्रुतेः ।

नच कार्य्यत्वेनानित्यता फलस्य युक्ता, भावकार्य्यस्य तथा-त्वाद्, दुःखप्रध्वंसस्य तु कार्यस्यापि तद्वैपरीत्यात् ।

---

बन्धरूपबन्धप्रध्वंसो मोक्षः" इत्येवं मोक्षस्वरूपं प्रतिपाद्य—"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥" (श्लो० १०५-११०) इत्येवं मुक्तये उपायान्तरमभ्यधायि । यागादिकाम्यकर्म-जन्य एव स्वर्गश्चेत् तन्मते मोक्षोऽभविष्यत्, तर्हि काम्ययागादित्यागपुरस्सरं "मोक्षार्थी न प्रवर्तेत" इत्येवं मोक्षोपायान्तरं नाभ्यधास्यत, अभिधीयते च, अतः स्वर्गादतिरिक्त एव मोक्षो मीमांसकैरभ्युपेयत इति सुस्पष्टं विज्ञायते ॥ ❀ ॥ ❀ ॥

प्रकृतमनुसरामः—'तद्विपरीतः' इति तच्छब्दार्थमाह—तस्मादिति । विपरीतपदं व्याचष्टे—विशुद्ध इति । एतेन अविशुद्धाद् वैपरीत्यं दर्शितम् । विशुद्धत्वे हेतुमाह—हिंसादिसङ्कराभावादिति । अनित्यसातिशयफलाद् वैपरीत्यं दर्शयति—नित्येति । नित्यम्=अक्षयि निरतिशयं=स्वसमानाधिकरणस्व-समानकालीनसुखदुःखादिसंबद्धं यद् तद्भिन्नं च फलं यस्य स तथा । 'विवेकः' इति शेषः । विवेकज्ञानस्य नित्यनिरतिशयफलत्वे हेतुमाह—असकृदिति । असकृत्=पुनः पुनः अनावृत्तिश्रुतेः=अनावृत्त्यापादकश्रुतेः । "न स पुनरावर्तते, न स पुनरावर्तते" इति पौनःपुन्येन मुक्तस्यानावृत्तिश्रवणादित्यर्थः । ततश्च अपुनरावृत्तिफलकत्वात् फलस्य नित्यत्वं निरतिशयत्वं च सिध्यतीति भावः ।

ननु यथा यागादिकार्यत्वेन स्वर्गादेरनित्यत्वं तथा मोक्षस्याप्यनित्यत्वं दुर्वारं, तस्यापि विवेककार्यत्वेन "यत्कृतकं तदनित्यम्" इति व्याप्तिकुक्षौ प्रविष्टत्वात्, तथाच कथं विवेकस्य नित्यफलत्वेन तद्विपरीतत्वमित्याशङ्क्य समाधत्ते—

नचेति । फलस्य=विवेकज्ञानसाध्यस्य मोक्षस्येत्यर्थः । कार्यत्वेन=कार्यत्व-हेतुना । फलानित्यत्वसाधकम् अनुमानं तु "फलम् (मोक्षः) अनित्यम्, कार्यत्वात्, घटादिवत्" इति बोध्यम् ॥

'नच युक्ता' इत्यत्र हेतुमाह—भावकार्यस्य तथात्वादिति । भावरूप-कार्यस्यैव तथात्वात्="यत्कृतकं तदनित्यम्" इति व्याप्त्याऽनित्यत्वबोधनादि-

---

१ यत्र काष्ठाप्राप्तिः फलस्य तत् निरतिशयम् । निरतिशयत्वं=काष्ठा, यतः परमतिश-यवत्ता नास्तीति । यद् यत् सातिशयं तत्तत्सर्वं निरतिशयं, यथा कुवलयाऽऽमलकबिल्वेषु सातिशयं महत्त्वम्, आत्मनि निरतिशयम्' इति तत्त्ववैशारद्यां मिश्राः (यो० १।२५)

न च दुःखान्तरोत्पादः, कारणाप्रवृत्तौ कार्यानुत्पादाद्, विवेकज्ञानोपजननपर्यन्तत्वाच्च कारणप्रवृत्तेः। एतच्चोपरिष्टादुपपादयिष्यते ॥

---

त्यर्थः। घटध्वंसस्य कृतकत्वेऽपि नित्यत्वसम्प्रतिपत्तेः "यत्कृतकं तदनित्यम्" इति व्याप्तेर्व्यभिचरितत्वेन "भावत्वे सति यत्कृतकं तदनित्यम्" इत्यास्थेयम्। तथा च आत्यन्तिकदुःखोपरमरूपस्य मोक्षस्य विवेकज्ञानसाध्यतया कृतकत्वेऽपि भावरूपत्वाभावान्न कृतकत्वमात्रेणाऽनित्यता युक्तेति भावः।

तदेवाह—दुःखप्रध्वंसस्येति। तद्वैपरीत्यात्=उक्तव्याप्तिप्रयुक्तभावरूपकार्यगतानित्यत्वधर्मविभिन्ननित्यधर्मवत्त्वादित्यर्थः।

"मोक्षोऽनित्यः, कृतकत्वात्, स्वर्गादिवत्" इति प्रयोगो भावत्वोपाधिसंवलितत्वेन सोपाधिकत्वाद् दुष्ट इति भावः।

यद्यपि—सांख्यानां सत्कार्यवादितया तन्मते दुःखप्रध्वंसस्य मोक्षत्वाभिधानं व्याहतम्, तथापि दुःखप्रध्वंसपदेनात्र दुःखातीतावस्थैव गृह्यत इति न काचिदनुपपत्तिः, अतीतावस्था च यथा नित्या, तथा "यद्यपि दुःखं न सन्निरुध्यते" इत्यस्य व्याख्याने प्रागेव निरूपितमिति तत्रैव द्रष्टव्यम् ॥

नन्वतीतावस्थाया नित्यत्वेन माभूदतीतावस्थं दुःखमुदितावस्थापन्नं, दुःखान्तरोत्पत्तिस्तु केन वार्येत्यत्राह—नचेति। दुःखान्तरस्य=अन्यस्य दुःखस्य उत्पादः=उत्पत्तिर्नहि भवतीत्यर्थः। कुत इत्यत आह—कारणेति। कारणस्य=दुःखजनकस्य पुम्प्रकृत्योरविवेकस्य अप्रवृत्तौ विवेकेन नाशितत्वादनुपस्थितौ सत्यां कार्यस्य=दुःखरूपकार्यस्य अनुत्पादात्=उत्पत्त्यसंभवादित्यर्थः। दुःखान्तरकारणाभावाद् दुःखोत्पादो न स्यादिति भावः। ननु "भुक्तिविवेकख्यातिनिष्पत्त्यर्थं प्रकृतिप्रवृत्तिः" इतिं हि सिद्धान्तरीतिः, तथा च यथा प्रकृत्या जनितेऽपि भोगे भूयो विवेकख्यात्यर्थं प्रकृतेः प्रवृत्तिरभ्युपेयते, तथा जातायामपि विवेकख्यातौ कथं न भूयः प्रकृतेः प्रवृत्तिरित्याशङ्कां निराकरोति—विवेकेति। कारणप्रवृत्तेः=मूलकारणभूतायाः प्रकृतेः प्रवृत्तेर्विवेकज्ञानजननपर्यवसानत्वाभ्युपगमान्न विवेकज्ञानोत्तरं प्रकृतेः प्रवृत्तिरित्यर्थः। 'प्रकृतिर्हि पुरुषस्य विवेकज्ञानमुत्पाद्य ततः स्वयं निवृत्ता भवति' इति स्वीकारान्न विवेकज्ञानोत्तरं प्रकृतिप्रवृत्त्युपपत्तिरिति सरलार्थः। ननु विवेकज्ञानोत्तरं न प्रकृतेः प्रवृत्तिरिति कथं

---

१ "साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः" इत्युपाधेर्लक्षणम्। यत्रानित्यत्वं घटादौ तत्र भावत्वस्य सत्त्वात् साध्यव्यापकत्वम्, यत्र कृतकत्वं घटध्वंसादौ तत्र भावत्वस्याभावात् साधनाव्यापकत्वमिति एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वाद् भावत्वमुपाधिरिति ज्ञेयम्।

अक्षरार्थस्तु—तस्माद्=आनुश्रविकाद् दुःखापघातकाद् हेतोः, विपरीतः=सत्त्वपुरुषान्यताप्रत्ययः=तत्साक्षात्कारो दुःखापघातको हेतुः, अत एव श्रेयान् । आनुश्रविको हि वेदविहितत्वान्मात्रया दुःखापघातकत्वाच्च प्रशस्यः, सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः, तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्ययः श्रेयान् ।

कुतः पुनरस्योत्पत्तिरित्यत उक्तं—"व्यक्ताऽव्यक्तज्ञविज्ञानाद्"

---

निश्चेतव्यम् ? तत्राह—एतच्चेति । उपरिष्टात्="दृष्टामयेत्युपेक्षकः"—[ ६६ ] इति षट्षष्टितमकारिकाव्याख्यायामित्यर्थः ॥ ॐ ॥

'तद्विपरीतः' इत्यस्य व्याख्यामुखेन वैधर्म्यद्वारा तात्पर्यमुक्त्वा सम्प्रति अन्वयमुखेन अक्षरार्थमाह—

अक्षरार्थस्त्विति । सत्त्वपुरुषान्यताप्रत्ययः=सत्त्वम्=बुद्धितत्त्वं, सत्त्वादिगुणत्रयात्मकप्रकृतितत्त्वं वा, पुरुषः=चित्स्वरूप आत्मा, तयोः अन्यताप्रत्ययः="प्रकृतिर्जडा परिणामशीला च, पुरुषस्तु चेतनोऽपरिणामी दृशिरूपः" इत्येवं परस्परं विभिन्नत्वेन निश्चय इत्यर्थः ।" जडपरिणामिप्रकृतितत्त्वाद् विभिन्नोऽहम् "अपरिणामी दृशिरूपः" इत्याकारकः प्रकृत्यवधिकपुरुषान्यतासाक्षात्कार इति यावत् । तदेवाह—साक्षात्कार इति । सत्त्वपुरुषान्यतासाक्षात्काररूपो हेतुः आनुश्रविकाद् दुःखापघातकाद् हेतोर्विपरीत इति पूर्वेणान्वयः । अतएव=आनुश्रविकवैपरीत्यादेव, ऐकान्तात्यन्तिकदुःखापघातकहेतुत्वादेव । श्रेयान्=प्रशस्यतरः । ननु अतिशयेन प्रशस्यः श्रेयानुच्यते, तथा च कोऽन्यः प्रशस्यो यदपेक्षया विवेकोऽयं प्रशस्यतरो भवेदित्याकाङ्क्षायां प्रशस्यतरत्वं व्यञ्जयति—आनुश्रविको हीति । मात्रया=लेशेन, ईषत् । सत्त्वपुरुषान्यताख्यातिरूपसाधनस्य प्रशस्यतरत्वलाभाय मात्रापदोपादानम् । अल्पकालावच्छिन्नमानसातिरिक्तदुःखापघातकत्वादिति समुदायार्थः । श्रेयान्=वेदविहितत्वात् कात्स्न्येन दुःखापघातकत्वाच्च प्रशस्यतर इत्यर्थः । 'अयमनयोरतिशयेन प्रशस्यः' इत्यर्थे प्रशस्यशब्दादीयसुनि श्रादेशे श्रेयश्शब्दनिष्पत्तेरिति भावः ।

एवंविधस्य तत्त्वसाक्षात्कारस्य किं कारणमिति पृच्छति—कुतः पुनरिति । अस्य=विवेकज्ञानस्य ।

---

१ अयमाशयः—पुरुषस्य स्वत एव दुःखं नास्ति, किंतु अन्तःकरणगतदुःखेनैवाऽविवेकदशायां पुरुषस्य दुःखाभिमानित्वम् । प्रकृतिपुरुषयोर्विविक्तताज्ञानात्तु दुःखित्वाभिमानिता निवर्तेत इति दुःखनिवृत्तिर्विवेकज्ञानफलतयोच्यते । तस्यां विवेकज्ञानावस्थायां बुद्धावुत्पन्नमपि दुःखं पुरुषो नात्मीयत्वेनाभिमन्यते इति पुरुषस्य दुःखोत्पादो न स्यादेवेति ।

इति । व्यक्तं चाव्यक्तं च ज्ञश्च व्यक्ताव्यक्तज्ञाः, तेषां विज्ञानं= विवेकेन ज्ञानं, व्यक्तज्ञानपूर्वकमव्यक्तस्य तत्कारणस्य ज्ञानं, तयोश्च पारार्थ्येनात्मा परो ज्ञायत इति ज्ञानक्रमेणाभिधानम् ।

---

ननु ज्ञस्य चेतनत्वेनाभ्यर्हितत्वादल्पाच्तरत्वाच्च "ज्ञाव्यक्तव्यक्तविज्ञानात्" इति क्रमेण प्रयोक्तव्ये कथं "व्यक्ताव्यक्तज्ञविज्ञानात्" इति विपरीतक्रम आश्रित इत्याशङ्क्य मननोपयोग्यनुष्ठानक्रममादाय पूर्वनिपातविपरीतक्रमाश्रयणमित्याशयेनाह—व्यक्तज्ञानपूर्वकमिति । व्यक्तम्=बुद्धिरहङ्कारः, पञ्चतन्मात्राणि, एकादशेन्द्रियाणि, पञ्चमहाभूतानि च । तज्ज्ञानपूर्वकं=तज्ज्ञाननिबन्धनम् । तत्कारणस्य=व्यक्तकारणस्य अव्यक्तस्य प्रधानस्य ज्ञानम्=अनुमानम्, तयोः=व्यक्ताव्यक्तयोश्च पारार्थ्येन=पुरुषभोगापवर्गहेतुत्वेन परः आत्मा ज्ञायते=अनुमीयत इत्यर्थः । तथाच यतो व्यक्तज्ञानं विनाऽव्यक्तज्ञानं न संभवति, तदुभयज्ञानं विना पुरुषविज्ञानम्, अतस्तथाऽभिधानमिति भावः ।

अयमत्र निष्कर्षः—स्थूलभूतरूपात् कार्यात् तत्कारणतन्मात्राणामनुमानम् । "स्थूलभूतानि स्वविशेषगुणवत्सूक्ष्मद्रव्योपादानकानि, स्थूलत्वाद्, घटादिवत्" इति । बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तन्मात्रैश्च तत्कारणस्य अहङ्कारस्य अनुमानम्—"तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि, अभिमानकार्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथापुरुषः" इति । इन्द्रियादीनां प्रवृत्तेरहङ्कारपूर्वकत्वं प्रसिद्धमेव ।

अभिमानेन बुद्ध्याख्यमहत्तत्त्वस्यानुमानम्,—अभिमानस्य निश्चयपूर्वकत्वात् । तथाच प्रयोगः—

"अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकम्, निश्चयकार्यद्रव्यत्वात्, यन्नैवं तन्नैवं यथा पुरुषादिः" इति ।

बुद्ध्याख्यमहत्तत्त्वेन प्रकृतेरनुमानम्—"सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या, कार्यत्वे सति सुखदुःखमोहात्मकत्वात्" इति । व्यक्ताव्यक्ताभ्यां पुरुषस्यानुमानम्—"विवादास्पदं प्रकृतिमहदादिकं स्वेतरस्य भोगापवर्गफलकम्, संहतत्वात्, शय्यासनादिवत्" इति ।

तथाच सांख्यसूत्राणि—

स्थूलात्पञ्चतन्मात्रस्य" [सां० १।६२] "बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य"[3]

---

१ 'यद्धि अभ्यर्हितम् अल्पाच्कं च भवति तद् द्वन्द्वे पूर्वं निपतति' इति हि शाब्दिकसङ्केत इति भावः । २ 'समुद्राभ्राद्घः' इत्यादिनिर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वबोधनाद् नियामकत्वाभावेन तात्पर्यविशेषमादाय अन्यथाप्रयोगेऽपि न दोष इति भावः । ३ मनआदिज्ञानकर्मेन्द्रियाभ्याम् । तैः=पञ्चतन्मात्रैः ।

एतदुक्तं भवति—श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा शास्त्रयुक्त्या च व्यवस्थाप्य दीर्घकालनैरन्तर्यादरसेविताद् भावनामयाद् विज्ञानादिति।

१।६३। "तेनान्तःकरणस्य' १।६४। "ततः प्रकृतेः" १।६५। "संहतपरार्थत्वात् पुरुषस्य" १।६६। इति ॥ ॐ ॥

'व्यक्ताव्यक्तज्ञविज्ञानात्' इत्यत्रत्यविज्ञानपदेन न श्रवणमात्रेण व्यक्तादीनां स्वरूपज्ञानं विवक्षितम्, अपितु निदिध्यासनपर्यवसन्नं स्वसाक्षात्कारजनकं भावनारूपमपेक्षितमिति मनसि निधाय विज्ञानादित्येतत् स्पष्टयति—एतदुक्तं भवतीति। श्रुत्वा=श्रवणेन तत्त्वसंख्यां तत्त्वस्वरूपं चावगत्येत्यर्थः। एतेन श्रवणमुक्तम्। मननमाह—शास्त्रयुक्त्या=प्रकृततन्त्राभिहितपरस्परतत्त्ववैधर्म्यालोचनरूपमननेन, व्यवस्थाप्य=प्रमेयासम्भावनानिरासमुखेन तत्त्वस्वरूपं विनिश्चित्येत्यर्थः। निदिध्यासनमाह—दीर्घकालेति। अनिर्वेदेन दीर्घकालेन=आमरणाद्दीर्घकालेन नैरन्तर्येण=आसुपुप्तेर्विच्छेदराहित्येन आदरेण=श्रद्धातिशयेन-सेवितात्=अनुष्ठितात् सम्पादितात् भावनामयात्=चिन्तनरूपात् पुनःपुनश्चेतसि निवेशनलक्षणात् निदिध्यासनरूपात्, विज्ञानात्=विवेकज्ञानात् तत्त्वसाक्षात्कारो जायत इत्यर्थः। अदीर्घकालसेवने, दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने च नैरन्तर्येऽपि श्रद्धातिशयाभावे च सङ्गदोषाद् विजातीयप्रत्ययप्राबल्येनाऽदृढभूमिरभ्यासः फलाय न भवेत्, प्रत्युत विपरीतभावनातः स्वरूपात् प्रच्यवेत, अतो विशेषणत्रयविशिष्टोऽभ्यासः सम्पादनीयः, एतादृशाच्च भावनामयाद् विज्ञानादवश्यं तत्त्वसाक्षात्कारो जायत इति भावः। एतेन "स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" [यो० १।१४] इति योगसू-

१ तेन=अहङ्कारेण। अन्तःकरणम्=बुद्धिः। २ ततः=अन्तःकरणात्, बुद्धितत्त्वात्। ३ संहतानां=परस्परमिलितानां प्रकृतितत्कार्याणां परार्थत्वात्=परप्रयोजनकत्वात्। 'अनुमानेन बोधः' इति सर्वत्रशेषः॥ ४ तत्र श्रवणं नाम सांख्योक्ततत्त्वानां तात्पर्यावधारणानुकूलमानसी क्रिया, मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः, निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्य आत्मविषयकस्थैर्यानुकूलो मानसो व्यापार इति विवेकः। ५ "विषयान्तरपरिहारपूर्वकं कस्मिंश्चिद् ध्येयपदार्थे वारंवारं चित्तनिवेशो भावना" अतो व्याचष्टे—चिन्तनेति। ६ अनिर्वेदेन दीर्घकालसेवितो विच्छेदाभावेन निरन्तरासेवितः सत्कारेण=श्रद्धातिशयेन वा सेवितः सः=अभ्यासो दृढभूमिः=विषयसुखवासनया चालयितुमशक्यो भवति। अदीर्घकालत्वे-दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने श्रद्धातिशयाभावे च लयविक्षेपकषायसुखास्वादानामपरिहारे व्युत्थानसंस्कारप्राबल्याददृढभूमिरभ्यासः फलाय न स्यादितित्रयमुपात्तम्" इति तद्व्याख्यायां मधुसूदनस्वामिनः [गी० ६।३६]। उपासनीयाऽऽत्म-

तथा च वक्ष्यति—"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्। अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्" ॥ इति ॥ २ ॥

---

त्रार्थो वर्णित इति बोध्यम्। एतच्च मूलकार एवाग्रे स्पष्टीकरिष्यतीत्याह—तथा चेति ॥ ॐ ॥

इति सारबोधिन्यां शास्त्रविषयजिज्ञासावतरणिकानिरूपणम् ॥ २ ॥ ॐ ॥

---

---

स्वरूपमाह महर्षियाज्ञवल्क्यः—"द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः। हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ॥ मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः। स ज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥" कथं पुनरसावात्मा ध्यातव्य इत्यत आह स एव—"अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम्। ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥" अत्र टीका मिताक्षरा—हृदयप्रदेशाद् अभिनिःसृताः=कदम्बकुसुमकेसरवत्सर्वतो निर्गताः हिताहितकरत्वेन हिताहितसंज्ञा द्वासप्ततिसहस्राणि नाड्यो भवन्ति। अपरास्तिस्रो नाड्यः, तासामिडा पिंगलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विपर्यस्ते नासाविवरसंबद्धे। प्राणापानायतने सुषुम्नाख्या पुनस्तृतीया दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्गता। तासां नाडीनां मध्ये मण्डलं चन्द्रप्रभं तस्मिन्नात्मा निर्वातस्थदीप इवाचलः प्रकाशमान आस्ते स एवंभूतो ज्ञातव्यः। तत्साक्षात्कारकरणादिह संसारे न पुनः संसरति, अमृतत्वं प्राप्नोति ॥ * ॥ आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृतीन्द्रियाणि प्रत्याहृत्य—आत्मैकविषयाणि कृत्वा आत्मा ध्येयः। योऽसौ प्रभुर्निर्वातस्थप्रदीपवद्देदीप्यमानो निष्प्रकम्पो हृदि तिष्ठति। एतदेव तस्य ध्येयत्वम् यच्चित्तवृत्तेर्बहिर्विषयावभासतिरस्कारेण आत्मप्रवणता नाम शरावसंपुटनिरुद्धप्रभाप्रतानप्रसरस्येव प्रदीपस्यैकनिष्ठत्वम् इति ॥ * ॥

# अथ संक्षेपतः पदार्थनिरूपणम् ।

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं सङ्क्षेपतः प्रतिजानीते—"मूलप्रकृतिः" इत्यादिना—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

"गण्डसिन्दूरमार्तण्डखण्डिताघतमश्चयः ।
शुण्डोक्षिप्तारिवृक्षोऽसौ रक्षताद् गणनायकः ॥ १ ॥ (रङ्गनाथस्य)

येषां व्यक्ताव्यक्तज्ञतत्त्वानां विज्ञानाच्छ्रेयस्करः साक्षात्कारः समुदेति, तेषां तत्त्वानामवान्तरं विशेषमभिधातुं प्रवृत्तां तृतीयां कारिकामवतारयति—तदेवमित्यादिना । प्रेक्षावतां[1]=मतिमताम् अपेक्षितः=ईप्सितः योऽर्थः=दुःखात्यन्तनिवृत्तिलक्षणः तद्वत्त्वेन हेतुना शास्त्रारम्भं समाधाय=प्रकृतशास्त्रानारम्भशङ्कां निरस्येत्यर्थः । "अनन्यथासिद्धप्रयोजनवत्त्वादेतच्छास्त्रमवश्यारम्भणीयम्" इति सिद्धान्तीकृत्येति भावः । श्रोतृबुद्धेः समवधानत्वं श्रवणानुकूलयत्नोत्पादकत्वम् । प्रतिज्ञां विना गुरूच्चारणस्य सन्दिग्धत्वेन तादृशप्रयत्नासंभवात् । तदर्थम्=प्रकृतशास्त्राभिधेयविवेकानुयोगिप्रतियोगि[2]भूततत्त्वजातमित्यर्थः । शास्त्रविषयम् इति सरलार्थः । प्रतिजानीते=बोधयतीत्यर्थः ॥ ॐ ॥

मूलप्रकृतिरिति । मूलप्रकृतिः, महान्, अहङ्कारः, पञ्चतन्मात्राः, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, पञ्चमहाभूतानि, मनः, पुरुषश्चेति पञ्चविं[3]शतिः तत्त्वानि ।

तत्र मूलप्रकृतिः=प्रधानम् अविकृतिः=अन्यस्य कस्यचिद् विकारो न, कस्यचित्कार्यं न भवतीत्यर्थः । नासावन्यस्य विकृतिरपि तु प्रकृतिरेव, तदिदमुक्तम्—मूलेति । महदाद्याः सप्त=महदहङ्कारपञ्चतन्मात्राणि प्रकृतिविकृतयः=प्रकृतयो विकृतयश्च, कस्यचित् तत्वस्य कारणानि भवन्ति कस्यचिच्च कार्याणीत्यर्थः । षोडशको गणः=पञ्चभूतानि एकादशेन्द्रियाणीति षोडशसंख्यावच्छिन्नो गणः, विकारश्च=विकार एव न प्रकृतिः, तत्त्वान्तरोपादानत्वाभावात् । पुरुषस्तु कूटस्थनित्योऽपरिणामीति न कस्यचित्प्रकृतिरस्ति नापि विकृतिरित्यर्थः ॥ ३ ॥ ॐ ॥

---

१ हेयोपादेयविवेक्त्री शेमुषी प्रेक्षा, तद्वन्तः प्रेक्षावन्तस्तेषाम्=हेयोपादेयविवेकनिपुणधिषणातिशयवतामित्यर्थः । २ विवेकानुयोगी पुरुषः प्रतियोगिनश्च प्रकृतिमहदादयो विकारा इत्यर्थः । ३ ईश्वरसहितानि षड्विंशतिः तत्त्वानि योगशास्त्रे । अत एव तत्र 'सेश्वरसांख्यम्' इति कथ्यते ॥

सङ्क्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः—कश्चिदर्थः प्रकृतिरेव, कश्चिदर्थो विकृतिरेव, कश्चित् प्रकृतिविकृतिः, कश्चिदनुभयरूपः। तत्र का प्रकृतिरेवेत्यत उक्तम्—'मूल' इति। मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिः। विश्वस्य कार्यसङ्घातस्य सा मूलं न त्वस्या मूलान्तरमस्ति, अनवस्थाप्रसङ्गात्, नचानवस्थायां प्रमाणमस्तीति भावः।

---

कारिकां व्याख्यास्यन् तत्त्वानामवान्तरविशेषमाह—संक्षेपतो हीति। शास्त्रार्थस्य=एतच्छास्त्राभिधेयतत्त्वग्रामस्य, अवान्तरभेदाश्चत्वार इत्यर्थः। विधाः= प्रकाराः। तानेव प्रकारभेदानाह—कश्चिदर्थ इत्यादिना। अनुभयरूपः= अप्रकृतिविकृतिः। एवं सांख्ये योगे च सर्वाणि तत्त्वानि चतुर्पु भागेपु विभक्तानि सन्ति। केवला प्रकृतिः, केवला विकृतिः, प्रकृति-विकृत्युभयम्, अनुभयं चेति॥

तत्र=चतसृषु विधासु, प्रकृतिरेव केत्यन्वयः। 'मूलप्रकृतिः' इत्यत्र मूलपदोपादानात् 'कस्य मूलम्?' इति जिज्ञासा समुदेति, तां शमयति—विश्वस्येति। विश्वस्य=समग्रस्य। पुरुषोऽप्यस्ति विश्वान्तःपातीति तस्यापीयं कारणं स्यात्, तच्चानिष्टमित्यत उक्तम्—कार्यसंघातस्येति। पुरुषस्य विश्वान्तःपातित्वेऽपि कार्यरूपत्वाभावान्न तत्रातिप्रसङ्ग इति भावः।

ननु प्रकृतिशब्दस्य कारणार्थकत्वात् 'प्रकृतिः' इत्येतावतैव प्रधानस्य जगत्कारणत्वे लब्धे पुनः कारणार्थकमूलपदोपादानं व्यर्थमित्याशङ्कायामाह—न त्वस्या- मूलान्तरमिति। कारणमेव प्रधानं न कस्यचित्कार्यमिति विशेषबोधनाय मूलपदोपादानमित्यर्थः।

नन्वस्तु प्रधानस्यापि कार्यत्वं को दोषः? तत्राह—अनवस्था[1]प्रसङ्गादिति। सजातीयपरम्पराऽनिष्टपातोऽनवस्था। 'क्वचिदपि विश्रामाभावः' इति यावत्। कार्यत्वे हि "प्रकृतौ प्रकृत्यन्तरं, तत्रापि प्रकृत्यन्तरं, तत्रापि प्रकृत्यन्तरम्" इत्येवमुत्तरोत्तरमनास्थायिनी धारा आपतेत्, तस्मात् कारणमेव प्रधानं न कस्यचित्कार्यमिति भावः। ननु बीजाङ्कुरवदनवस्थाया अदोषत्वम्, "प्रामाणिकी अनवस्था न दोषाय" इति प्रवादादित्यत्राह—न चेति। व्यवस्थायां सत्यामनवस्थाभ्युपगमस्याप्रामाणिकत्वादित्यर्थः[2]।

---

१ तस्या अपि मूलान्तरसत्त्वे तस्यापि मूलान्तरं तस्यापि तदिति मूलकल्पनाया अनिवृत्त्यापत्तेरित्यर्थः। २ 'अजामेकाम्'-इत्यादिश्रुत्या "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति स्मृत्या च प्रकृतेरजन्यत्वेनाऽनादित्वेन च तत्रैव कारणपरम्पराया विश्रान्तेः सत्त्वाद् व्यवस्थायाः संभवेनाऽनवस्थाया मूलक्षयकरीरूपाया अनभ्युपगमादित्यर्थः। यदाहुरुदयनाचार्याः—

"मूलक्षतिकरीमाहुरनवस्थां हि दूषणम्।
वस्त्वानन्त्यादशक्तेश्च नानवस्था हि दूषणम्॥" इति।

कतमाः पुनः प्रकृतिविकृतयः कियत्यश्च इत्यत उक्तम्—

---

बीजाङ्कुरस्थले व्यवस्थाया असंभवेनाऽनायत्या तथास्वीकारेऽपि व्यवस्थास्थलेऽनवस्थाकल्पने मानाभावादिति भावः । इति भावः=मूलपदस्यायमभिप्रायः इत्यर्थः ।

अयमत्राभिसंन्धिः[1]—प्रधानकारणत्वेनाभिमतं यत् तत्त्वान्तरं तस्मिन् प्रधानापेक्षया कश्चिद् अतिशयविशेषोऽभ्युपेयते? न वा? नेति चेत्, न तस्य कारणभावः, अतिशयाभावात्, न ह्यतिशयमन्तरेण क्वापि कार्यकारणभावो दृष्टचरो नाम। 'अस्त्यतिशयः' इति चेत्, तर्हि 'किंस्वरूपोऽसौ' इति तावद् निर्वचनीयम्। "निर्गुणत्वचेतनत्वापरिणामित्वरूपोऽसौ" इति चेत्, तथापि न कारणत्वम्, अपरिणामिनः कार्यजनकत्वस्यादृष्टचरत्वात्। "शक्तिरूपोऽसावतिशयः" इति चेत्। तर्हीदं वक्तव्यम्—सा शक्तिर्जन्याऽजन्या वा। 'जन्या' इति चेत्, तदवस्था तर्हि अनवस्था, तस्या अपि पराधीनोत्पत्तिसापेक्षत्वात्, "स्वोत्पत्तावपेक्षितपरव्यापारो हि भावः कृतक इष्यते" इति नियमात्। 'अजन्या' इति चेत्, सैव 'शक्तिः प्रकृतिरजाऽविद्या प्रधानम्' इति नाममात्रे विवाद इति किमपराद्धम् अधिकृतप्रधानेनेति ॥ ॐ ॥

ततश्च कृत्रिममकृत्रिमं च यत्किंचिदिह दृश्यजातमस्ति तस्य सर्वस्य मूलं स्थूलभूतानि, स्थूलभूतानां मूलं सूक्ष्मभूतानि पञ्चतन्मात्राणि, सूक्ष्मभूतानां मूलम् अहं तत्त्वम्, अहंतत्त्वस्यमूलं महत्तत्त्वं बुद्ध्याख्यं, महत्तत्त्वस्य यन्मूलं सैव प्रकृतिरिति प्रधानमिति चाख्यायते, तस्यास्तु नान्यत् किंचिन्मूलान्तरमस्तीति सा मूलप्रकृतिरिति जेगीयते' इति पर्यवसन्नम् ॥ ॐ ॥ तथाचाहुर्महर्षिकपिलाचार्याः—

"मूलेमूलाभावादमूलं[2] मूलम्" [सां० १।६७] "पारम्पर्येऽप्येकत्र[3] परिनिष्ठेति संज्ञामात्रम्" [१।६८] इति ॥ ॐ ॥

कतमा इति। चतुर्विंशतितत्त्वानां मध्ये प्रकृतिविकृतयः का इति धर्मिस्व-

---

१ अभिसन्धिः=गूढोऽभिप्रायः। २ मूलं=महदादित्रयोविंशतितत्त्वानां मूलकारणं प्रधानं–प्रकृतिः, अमूलं=मूलान्तरवर्ज्यं, कुतः? मूले=मूलकारणे तस्मिन् मूलाभावात्=अनवस्थापत्त्या मूलान्तरासंभवादित्यर्थः॥ ३ ननु 'तस्माद्व्यक्तमुत्पन्नम्' इत्यादिना प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात्पुरुषएव प्रकृतेर्मूलं भवतु, पुरुषस्य नित्यतया च नानवस्था, अविद्याद्वारकतया च न पुरुषकौटस्थ्यहानिः। तथा च स्मर्यते—"तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि" इति। इत्याशङ्क्याह–पारम्पर्येऽपीति। अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्यविद्यादौ यत्र कुत्रचिन्नित्ये द्वारे परम्परायाः पर्यवसानं भविष्यति, पुरुषस्यापरिणामित्वाद् यतो, यत्र पर्यवसानं सैव नित्या प्रकृतिः, प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः" इति सांख्यप्रवचनभाष्ये विज्ञानभिक्षवः॥

"महदाद्याः प्रकृतिविकृतयः सप्त" इति। प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्त।

तथाहि—महत्तत्त्वमहङ्कारस्य प्रकृतिः, विकृतिश्च मूलप्रकृतेः, एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः, विकृतिश्च महतः, एवं पञ्चतन्मात्राणि तत्त्वानि भूतानामाकाशादीनां प्रकृतयो, विकृतयश्चाहङ्कारस्य।

अथ का विकृतिरेव कियती चेत्यत उक्तं—"षोडशकस्तु विकार" इति। षोडशसङ्ख्यापरिमितो गणः षोडशकः। 'तु'-शब्दोऽवधारणे भिन्नक्रमः। पञ्च महाभूतानि एकादशेन्द्रियाणीति षोडशको गणो विकार एव न प्रकृतिः।

यद्यपि पृथिव्यादिनामपि गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयः, तथापि न पृथिव्यादिभ्यस्तत्त्वान्तरं,

---

रूपप्रश्नः, 'कियत्यः' इति च संख्या प्रश्न इति विभागः। स्वरूपमाह—महदाद्या इति। संख्यामाह—सप्तेति। "प्रकृतिविकृतित्वं च तत्त्वान्तरोपादानत्वे सति तत्त्वान्तरोपादेयत्वम्।" कस्य का विकृतिः? प्रकृतिश्च कस्य? इत्यतस्ता विवृणोति—तथाहीति। महत्तत्त्वं=बुद्धिः। अहङ्कारतत्त्वं बुद्धेर्जायत इत्यर्थः। एवमन्यत्रापि। अहङ्कारतत्त्वमिति। तत्र तामसोऽहङ्कारः पञ्चतन्मात्राणां शब्दादीनां प्रकृतिः, सात्त्विकश्चैकादशेन्द्रियाणामित्यग्रे स्पष्टीभविष्यति। पञ्चतन्मात्राणि=शब्दादीनि पञ्च सूक्ष्मभूतानि। भूतानां=स्थूलभूतानाम्। भिन्नक्रम इति। भिन्नः=पाठस्थानाद् अन्यः क्रमः=निवेशस्थानं यस्यासौ भिन्नक्रमः यत्सन्निधौ श्रुतः तं विहाय यत्रापेक्षितः तत्र योजनीय इत्यर्थः। 'विकारस्तु' इत्येवम् अवधारणार्थकस्तुशब्दो विकारशब्दोत्तरं संबन्धनीय इति भावः। तदेव दर्शयति—पञ्च भूतानीत्यादिना। 'संख्यायाः संज्ञासंघ'—[५।१।५८] इति संघार्थे कनि षोडशक इति रूपम्॥ "विकारत्वं च तत्त्वान्तराजनकत्वे सति जन्यत्वम्"। आद्यविशेषणेन प्रकृतिविकृतिनिरासः। द्वितीयेन पुरुषस्य॥ ३॥

ननु 'षोडशको गणो विकार एव' इत्यवधारणमनुपपन्नम् एकादशेन्द्रियाणां कं प्रति प्रकृतित्वाभावेऽपि षोडशान्तःपातिनां पञ्चस्थूलभूतानां गोघटवृक्षादीन् प्रति प्रकृतित्वस्य संप्रतिपन्नत्वादित्याशयेन शङ्कते—यद्यपीति। अत्र गोपदं गोशरीरपरम्। तद्विकारभेदानां=पृथिव्यादिविकारभूतगोवृक्षादेर्विकारविशेषाणां पयोबीजादीनां=पयसो गोविकारत्वं बीजस्य वृक्षविकारत्वं, तेषां दध्यङ्कुरा-

तत्त्वान्तरोपादानत्वं च प्रकृतित्वमिहाभिप्रेतमिति न दोषः,

दयः=विकारा इति शेषः, दध्नः पयोविकारत्वम् अङ्कुरस्य तु बीजविकारत्वमित्यर्थः। स्थूलभूतानां गोवृक्षादयो विकाराः, गोवृक्षादीनां पयोबीजादयो विकाराः, पयोबीजादीनां च दध्यङ्कुरादयो विकारा इति सरलार्थः।

एवं च स्थूलभूतानि पञ्चतन्मात्राणां विकृतयः प्रकृतयश्च गोवृक्षादेः, एवं गोवृक्षादयः स्थूलभूतानां विकृतयः प्रकृतयश्च पयोबीजादीनाम्, एवं पयोबीजादयो गोवृक्षादीनां विकृतयः प्रकृतयश्च दध्यङ्कुरादीनामिति फलति।

तथाच 'विकार एव न प्रकृतिः' इति न संभवति, पृथिव्यादीनां घटादिप्रकृतित्वसंभवात्। 'प्रकृतिविकृतयः सप्त' इत्यपि न संभवति, पृथिव्यादिविकाराणां गोवृक्षादीनां पयोबीजादिजनकत्वेन तेषामपि अधिकानां सत्त्वादिति भावः॥ ❀॥

'कार्योपादानत्वं प्रकृतित्वम्' इति प्रकृतेर्लक्षणं नाश्रीयते, किन्त्वन्यदेव प्रकृते प्रकृतिलक्षणमित्याशयेन समाधत्ते—तथापीति। 'न पृथिव्यादिभ्यस्तत्त्वान्तरम्' इत्यत्र "गोघटादयो विकाराः" इति शेषो बोध्यः। तत्त्वान्तरं=पदार्थान्तरं, भिन्नपदार्थः।

ननु माभूद् गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वं, तथापि गोघटादिजनकत्वेन कुतो न पृथिव्यादीनां प्रकृतित्वमित्याशङ्क्य प्रकृताभिप्रेतं प्रकृतिलक्षणमाह—तत्त्वान्तरोपादानत्वमिति। तत्त्वान्तरं=विजातीयतत्त्वम्॥

ननु "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" [१।६१] इत्यादिसांख्यसूत्रे, "सत्त्वादीनि द्रव्याणि, न वैशेषिका गुणाः, संयोगविभागवत्त्वात्[1], लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च। तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणकत्वात्, पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते। तेषां सत्त्वादिद्रव्याणां या साम्यावस्था=अन्यूनानतिरिक्तावस्था, न्यूनाधिकभावेन असंहतावस्थेति यावत्, अकार्यावस्थेति निष्कर्षः। "अकार्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिः" इत्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतित्वनाशप्रसङ्गात्। "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्॥" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनुगमाय-'सामान्येति', पुरुषव्यावर्तनाय-'गुणेति', महदादिव्यावर्तनाय च-'उपलक्षितान्तम्' इति। महदादयोऽपि हि कार्यसत्त्वादिरूपाः पुरुषोपकरणतया च गुणा भवन्तीति" इति तद्भाष्ये च,

"प्रकृष्टवाचकः[2] 'प्र'श्च 'कृति'श्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता॥ ५॥

१ गुणत्वे तु संयोगविभागवत्त्वं न स्यात्, गुणे गुणानङ्गीकारादित्यर्थः। २ प्रकृतिलक्षणं विवक्षुः प्रथमतस्तटस्थलक्षणमाह—प्रकृष्टवाचक इति। 'प्रा पूरणे' इति धातोः पचाद्यचि निष्पन्नः प्राशब्दः, कृतिशब्दस्य व्यापारसामान्यार्थकत्वात् सृष्टिव्यापारार्थक-

गुणे प्रकृष्टसत्त्वे च 'प्र'शब्दो वर्तते श्रुतौ ।
मध्यमे रजसि 'कृ'श्च 'तिः'शब्दस्तमसि स्मृतः ॥ ६ ॥
त्रिगुणात्म[1]स्वरूपा या सर्वशक्तिसमन्विता ।
प्रधानं सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥ ७ ॥
प्रथमे वर्तते 'प्र'श्च 'कृति'श्च सृष्टिवाचकः ।
सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता ॥ ८ ॥

[ देवीभा० स्क० ९ । अ० १ । श्लो० ५ । ६ । ७ । ८ ]

इत्येवमादिपौराणिकवाक्येषु च,

श्रूयमाणं प्रकृतिलक्षणं परित्यज्य कुतस्तद्विपरीतं प्रकृते प्रकृतिलक्षणमाश्रितमित्याक्षेपपरिहारायाऽऽह—इहाभिप्रेतमिति । प्रकृतिविकृतिभूते महदादावपि प्रकृतित्वव्यवहारसिद्ध्यर्थं तत्त्वान्तरोपादानत्वरूपमेव प्रकृते प्रकृतित्वलक्षणमाश्रीयते, न सूत्राद्युक्तमित्यर्थः । अयमत्राभिसन्धिः—प्रकृतिशब्दस्तावत् तत्तल्लक्षणः तत्तदर्थविशेषे तत्र तत्र प्रयुज्यमान उपलभ्यते, यथा—साम्यावस्थोपलक्षितगुणत्रयात्मकत्वलक्षणो मूलकारणे प्रधाने, तत्त्वान्तरोपादानत्वलक्षणश्चाऽहङ्कारादिकारणे महदादौ, उपादानत्वमात्रलक्षणश्च खलु प्रकृतिशब्दो घटकटकादिकारणे मृत्कनकादाविति । तत्र यदि साम्यावस्थोपलक्षितगुणत्रयात्मकत्वरूपं सूत्राद्युक्तमेव प्रकृतिलक्षणमत्राश्रीयेत, तदा प्रधाने प्रकृतित्वव्यवहारसम्पत्तावपि महदादौ प्रकृतित्वव्यवहारो न स्यादित्यव्याप्तिः, यदि चोपादानत्वमात्रमेव प्रकृतिलक्षणमत्राश्रीयेत, तदा महदादौ प्रकृतित्वव्यवहारसंपत्तावपि मृत्कनकादेरपि प्रकृतित्वव्यवहारापत्तिः स्यादित्यतिव्याप्तिः, अतः प्रधा-

त्वम् । तथा च "प्रा=प्रकृष्टा मुख्या कृतौ=सृष्टौ या सा प्रकृतिः" इति व्यधिकरणपदबहुव्रीहिणा त्वेतस्यार्थस्य लाभः । पृषोदरादित्वात् प्राशब्दस्य ह्रस्वत्वम् । तथाच "मुख्यत्वेन सृष्टिकर्त्री या सा प्रकृतिः" इत्यर्थः ॥ ५ ॥ स्वरूपलक्षणमाह—गुणे इति । प्रकृष्टे सत्त्वे गुणे प्रशब्दो वर्तते, व्युत्पत्तिस्तु पूर्ववदेव । मध्यमे रजसि मध्यमः 'कृ'शब्दो वर्तते, मध्यमत्वसादृश्यात्, तमसि=तमोगुणे चरमे 'ति'शब्दो वर्तते, चरमत्वतादित्वसादृश्यादित्यर्थः ॥ ६ ॥

१ पदार्थमुक्त्वा विशिष्टार्थमाह—त्रिगुणात्मा निरतिशयावरणविक्षेपादिशक्तिरहिता गुणत्रयसाम्यावस्थात्मिका सृष्टिकरणे प्रधाना या सा प्रकृतिशब्देनोच्यत इत्यर्थः । तथाच प्र–संयुक्तः कृः–प्रकृः=सत्त्वेन गुणेन सहितो रजोगुणः [ शाकपार्थिवादित्वात् संयुक्तपदलोपः ] पुनः प्रकृयुक्तः तिः=सत्त्वगुणरजोगुणेन युक्तः तिः=तमोगुणो यस्यां वर्तेत इति बहुव्रीहिणा गुणत्रयात्मिकेत्यर्थः । पृषोदरादित्वात्साधुत्वम् ॥ ७ ॥ पुनर्लक्षणान्तरमाह—प्रथमे इति । प्रशब्दव्युत्पत्तिः पूर्ववत् । तथाच प्रा=प्रथमा सृष्टेर्या सा प्रकृतिः सृष्टेरादिभूतेत्यर्थः । व्यधिकरणबहुव्रीहिः, पृषोदरादित्वात्साधुत्वम् ( नीलकण्ठः ) ॥ ८ ॥

नवत् महदादावपि प्रकृतित्वव्यवहारो यथा स्यात्, मृत्कनकादौ च प्रकृतित्वव्यवहारो यथा न भवेदित्यव्याप्त्यतिव्याप्तिदोषपरिहाराय तत्त्वान्तरोपादानत्वरूपमेव प्रकृतित्वलक्षणमत्राश्रीयते, नान्यदिति ॥ ❀ ॥

एवं च न क्वापि दोष आपततीत्याह—इति न दोष इति । एतादृशलक्षणकरणे महदादौ प्रकृतित्वव्यवहारानुपपत्तिरूपः, पृथिव्यादौ प्रकृतित्वव्यवहारापत्तिरूपश्च दोषो नेत्यर्थः ।

सूत्राद्युक्तं प्रकृतिलक्षणं केवलं प्रधान एव घटते, न सर्वत्रेति न तत् सर्वानुगतं लक्षणम्, अतः सर्वानुगतं तत्त्वान्तरोपादानत्वरूपमेव प्रकृतिलक्षणमास्थेयं, न सूत्राद्यभिहितम्, मृत्कनकादौ च प्रकृतित्वव्यवहारो लाक्षणिको गौणो वेति भावः ॥ ❀ ॥

अथ किमिदं तत्त्वान्तरत्वम्? इति चेत् । तत्त्वं च द्रव्यत्वं "तत्त्वान्तरत्वं च स्वावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्" । पञ्चविंशतितत्त्वेषु पञ्चविंशतिजात्यनङ्गीकारे च "तत्त्वान्तरत्वं स्वावृत्तिद्रव्यविभाजकोपाधिमत्त्वम्" इति योगवार्तिकोक्तमेव तत्त्वान्तरत्वमिति विभावय ।

अत्र लक्षणे स्वशब्दः उपादानत्वाभिमत-तत्त्वपरः । तथाच स्वम्=अहङ्काराद्युपादानं महत्तत्त्वादि, तदवृत्तिर्या द्रव्यत्वस्य साक्षाद्व्याप्या जातिः=अहङ्कारत्वादिः, तद्वत्त्वम् अहङ्कारादाविति अहङ्कारादयो महत्तत्त्वादिभ्यस्तत्त्वान्तरमिति लक्षणसमन्वयः ।

गोघटादौ तु स्वं=गोघटाद्युपादानं पृथिव्यादि, तत्र द्रव्यत्वस्य साक्षाद्व्याप्या पृथिवीत्वादिजातिर्वर्तते एवेति अवृत्तित्वं नास्तीति नातिव्याप्तिः ॥

एतदुक्तं भवति—यथाऽहङ्कारादेः स्वोपादानमहदाद्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्याहङ्कारत्वादिजातिमत्त्वेन महदादिभ्यस्तत्त्वान्तरत्वं, न तथा गोघटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वं, तेषां स्वोपादानपृथिव्यादिवृत्तिद्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्त्वेन उपादानावृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वाभावादिति ॥ ❀ ॥

---

१ ननु यदि तत्त्वान्तरोपादानत्वस्यैव प्रकृतित्वं, तदा "मृत्प्रकृतिको घटः, कनकप्रकृतिकं कटकम्" इत्यादिव्यवहारस्य का गतिरित्यत्राह—मृत्कनकादौ चेति । तत्त्वान्तरोपादानत्वरूपेऽर्थे शक्तमपि प्रकृतिपदं भागत्यागलक्षणया उपादानत्वमात्रमर्थमादाय मृदादौ लाक्षणिकः प्रकृतित्वव्यवहारः, एकदेशभूतोपादानत्वरूपसाधर्म्यमादाय गौणो वा व्यवहार इत्यर्थः । २ घटादेरपि पृथिव्यवृत्तिघटत्वादिजातिमत्त्वेन तत्त्वान्तरत्वं माभूदित्यत उक्तं—द्रव्यत्वसाक्षाद्व्याप्येति । द्रव्यत्वसाक्षाद्व्याप्यजातयश्च महत्त्वाहङ्कारत्वपृथिवीत्वादयो ज्ञेयाः । जात्यनङ्गीकारे च महत्त्वादीनां पदार्थविभाजकोपाधित्वमास्थेयमिति भावः ॥

सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम् ।

---

तदिदं सर्वं हृदि निधाय गोघटादीनां तत्त्वान्तरत्वाभावे स्वोपादानपृथिव्यादिवृत्तिधर्मवत्तारूपं हेतुमाह—

सर्वेषामित्यादिना । समेति–इतिशब्दो हेतौ । यतो गोघटादीनां स्थूलता इन्द्रियग्राह्यता च पृथिव्यादिभिः समा=तुल्या, अतो न घटादीनां पृथिव्यादिभ्यस्तत्त्वान्तरत्वं, स्वोपादानपृथिव्यादिवृत्तिधर्मवत्त्वादित्यर्थः ॥

ननु यथा पृथिवीतद्विकारघटयोरुभयोरपि स्थूलत्वादिरूपसमानधर्मवत्वेन न पृथिव्यपेक्षया घटस्य तत्त्वान्तरत्वं, तथा महत्तद्विकाराऽहङ्कारयोरुभयोरपि सूक्ष्मत्वातीन्द्रियत्वादिरूपसमानधर्मवत्त्वेन समानतत्त्वात् कथं महदपेक्षया तत्त्वान्तरत्वम् इति चेत् ।

अत्राभिधीयते—'स्थूलत्वेन्द्रियग्राह्यत्वसहकृतपदार्थविभाजकपृथिवीत्वरूपोपाधेः पृथिवीघटयोरुभयोरपि वृत्तित्वेन तयोः समानधर्मवत्त्वान्न घटादेः पृथिव्यास्तत्त्वान्तरत्वम्' इत्यर्थे तात्पर्येणोक्तदोषाभावात् ।

तथाच पृथिव्यादेस्तत्त्वान्तरपरिणामवत्त्वान्न प्रकृतित्वम् अपि तु विकृतित्वमेवेति निष्पन्नम् ॥ ॐ ॥

तथा चाहुर्योगभाष्ये व्यासदेवाः—

"न[1] विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः, तेषां तु धर्मलक्षणावस्थाः परिणामा व्याख्यायिष्यन्ते" [ यो० २।१९ ] इति । तदिदं सर्वं विद्वत्तोषिण्यां स्पष्टम् ॥ ॐ ॥

अत्र स्थूलत्वेन्द्रियग्राह्यत्वनिष्कर्षस्त्वित्थमवसेयः—"गोघटादयः पृथिव्यादिभ्यस्तत्त्वान्तरं न भवन्ति, स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्याभावात् ।

यत्र हि तत्त्वान्तरत्वं, तत्र स्थूलत्वेन्द्रियग्राह्यत्वयोस्तारतम्यमनुभूयते । यथा सांख्यनये गुणगुणिनोरभेदाद् आकाशः शब्दैकगुणः अत्यन्तं सूक्ष्मः,

---

१ अत्र विशेषपदेन भूतेन्द्रियाणि ग्राह्याणि, तत्किमिदानीमपरिणामिन एव विशेषास्तथाच नित्याः प्रसज्येरन्नित्यतआह—तेषां तु धर्मलक्षणावस्था इति । तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः, धर्माणां च अतीतानागतवर्तमानतालक्षणपरिणामः, वर्तमानलक्षणापन्नस्य गवादेर्बाल्यकौमारयौवनवार्धकमवस्थापरिणामः, घटादीनामपि नूतनपुरातनताऽवस्थापरिणामः, एवमिन्द्रियाणामपि तत्तन्नीलाद्यालोचनं धर्मपरिणामः, धर्मस्य वर्तमानतादिर्लक्षणपरिणामः, रत्नाद्यालोचनस्य स्फुटत्वादिरवस्थापरिणाम इत्येवं ध्येयमित्यर्थः । व्याख्यायिष्यन्ते=तृतीये पदे त्रयोदशसूत्रे इत्यर्थः । ( विद्वत्तोषिणी )

**अनुभयरूपमाह-"न प्रकृतिर्न विकृतिः पुरुष" इति।**
**एतत्सर्वमुपरिष्टादुपपादयिष्यत इति ॥ ३ ॥**

---

ततो द्विगुणो वायुः स्थूलः, ततस्त्रिगुणं तेजः स्थूलं, ततोऽपि चतुर्गुणा आपः स्थूलतमाः, ततोऽपि पञ्चगुणा समष्टिरूपा पृथिवी अत्यन्तं स्थूला।

अत एव पृथिवीतो जलं सूक्ष्मं, तदपेक्षया किंचित् सूक्ष्मं तेजः, इत्येवं क्रमेण सूक्ष्मत्वतारतम्यमनुभूयते।

यद्यपि अहङ्कारतत्त्वापेक्षया आकाशोऽपि स्थूल एव,
तथापि पृथिव्याद्यपेक्षया सूक्ष्मत्वं द्रष्टव्यम्।

एवं च यादृशं पञ्चभूतानां प्रत्येकं स्थूलत्वतारतम्यमनुभवसिद्धं, तादृशं गोघटादीनां पयोबीजादीनां वा नानुभूयते, किंतु सर्वेष्वेव समानं स्थूलत्वमनुभूयते। पृथिव्यां हि सर्वापेक्षया स्थूलत्वमनुभूयते, यथा जले उन्मज्जननिमज्जनादिकं कर्तुं शक्यते न तथा पृथिव्यां, तस्याः प्रतिघातादिधर्मवत्त्वात्। एवं पृथिव्याः पञ्चगुणात्मकत्वात् पञ्चेन्द्रियग्राह्यता विद्यते, जले एकस्य गुणस्य ह्रासात् चतुरिन्द्रियग्राह्यता, तेजसि इन्द्रियत्रयग्राह्यत्वं त्रिगुणत्वात्, तदपेक्षया वायौ द्विगुणत्वात् द्वीन्द्रियग्राह्यता। एवं यत्र यत्र तत्त्वान्तरत्वं पञ्चभूतेषु तत्र तत्र स्थूलत्वेन्द्रियग्राह्यत्वयोः तारतम्यं स्पष्टं दृश्यते, नैवं घटादिषु। तत्र हि यादृशं स्थूलत्वम् इन्द्रियग्राह्यत्वं च पृथिव्यां, तादृशमेव गोघटादिषु। कुतः? सर्वेषां समानगुणत्वात्। एतदेवाह—ग्रन्थकारः—**स्थूलतेति** ॥ ❀ ॥

**एवमेव** पञ्चभूतकारणस्य अहङ्कारस्य पञ्चभूतापेक्षया सूक्ष्मत्वं, महत्तत्त्वापेक्षया स्थूलत्वम्, एवं महत्तत्त्वस्य तत्कारणस्य तदपेक्षया सूक्ष्मत्वम्, एवम् अव्यक्तापेक्षया स्थूलत्वम्, एवम् अव्यक्तस्य च सर्वकारणत्वात् सर्वापेक्षया सूक्ष्मत्वम्, अत एव तस्य अव्यक्तशब्दाभिधेयत्वम्।

इत्येवं रीत्या यत्र यत्र तत्त्वान्तरत्वं तत्र तत्र स्थूलत्वसूक्ष्मत्वतारतम्यमस्त्येवेति न व्यभिचारप्रसक्तिः। इन्द्रियग्राह्यत्वस्य महदादावभावादेव तेषु तत्तारतम्यं न भवति, किं तु पृथिव्यादिषु तदुभयमपि विद्यत इति तदुभयं हेतुत्वेनोपात्तम्। अत एव समुच्चयार्थश्चकारः।

ततश्चायं प्रयोगः—"गोघटादयो न पृथिव्यादिभ्यस्तत्त्वान्तरम्, स्थूलत्वेन्द्रियग्राह्यत्वाभ्यां पृथिव्यादिसमत्वात्, यन्नैवं तन्नैवम्" इति ॥ ❀ ॥ ❀ ॥

तदेवं चतसृषु शास्त्रार्थस्य विधासु प्रकारत्रयमभिधाय चतुर्थं प्रकारमभिधातुमाह—**अनुभयरूपमिति**। "अनुभयरूपत्वं च अजनकत्वे सति अजन्यत्वम्।" "तत्त्वान्तरानुपादानत्वे सति तत्त्वान्तरानुपादेयत्वम्"।

ननु प्रकृत्यादीनां सामान्यतोऽभिधानेऽपि 'किं तत्त्वं कस्य प्रकृतिः? कस्य वा

विकृतिः? इति विशेषानभिधानान्न तत्त्वविवेकदार्ढ्यमित्यत आह—एतत्सर्वमिति। उपरिष्टात्='प्रकृतेर्महान्'—[ २२ ] इत्यादावित्यर्थः ॥ ॥

## अथ मूलतत्त्वानां वर्गीकरणयन्त्रम्।

| | | |
|---|---|---|
| अनुभयरूपः[1] | १ पुरुषः | १ ज्ञः |
| प्रकृतिः[2] | १ मूलप्रकृतिः | २ अव्यक्तम् |
| प्रकृतिविकृतयः[3] | १ महान्<br>१ अहङ्कारः<br>५ तन्मात्राः | २३ व्यक्तानि[3]<br>३ |
| १६ विकृतयः[4]<br>४ | १ मनः<br>५ बुद्धीन्द्रियाणि<br>५ कर्मेन्द्रियाणि<br>५ महाभूतानि<br>२५ | |

इति सारबोधिन्यां संक्षेपतः पदार्थनिरूपणम् ॥ ॥ ३ ॥ ॥

---

१ मूलप्रकृतेरेकत्वादेकवचनम्। यत्तु गर्भोपनिषदि "अष्टौ प्रकृतयः षोडश विकाराः" इति श्रुतं, यच्च "भिन्ना प्रकृतिरष्टधा" इति भगवता गीतं, तत्तु महदादीनां विकृतीनामप्यहङ्कारादीनां प्रकृतित्वेन एकांशसाम्यमादाय महदहङ्कारपञ्चतन्मात्राण्यपि संकलय्याभिहितं, न तु मूलप्रकृत्यभिप्रायेणानेकत्वाभिधानमिति बोध्यम्। न च "मायां तु प्रकृतिं विद्यात्" "सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम्। एतन्मयी च प्रकृतिर्माया या वैष्णवी मता" ॥ इति श्रुतिस्मृत्योर्मायाप्रकृत्योः पर्यायत्वावगमाद् मायायाश्च "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुत्याऽनेकत्वावगतेः प्रकृतेरेकत्वाभिधानमयुक्तमिति वाच्यम्, "मायाभिः" इति बहुवचनस्य प्रकृतिगतानन्तज्ञानक्रियासर्गस्थितिप्रभृतिरूपशक्तिभेदाभिप्रायेण, प्रकृत्यात्मकगुणत्रयभेदाभिप्रायेण वापि योजयितुं शक्यत्वात्। अत एव 'अजामेकाम्' इति श्रुतौ "अजाम्" इत्येकवचनं संगच्छते। तस्मात् "अजामेकाम् इति श्रौतश्रुत्या "मायाभिः" इति लैङ्गिकस्य बहुत्वस्य बाधान्न प्रकृत्यनेकत्वकल्पना शोभना। एवं "माया चाविद्या च स्वयमेव भवति" इति तापनीयश्रुतिरपि "स्वयम्" इति पदमुपाददती वास्तवमनेकत्वमपह्नुवाना सती प्रकृत्येकत्वेऽनुकूलेत्यास्तां विस्तरः।

# अथ प्रमाणसामान्यनिरूपणम् ।



**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥**

तमिममर्थं प्रामाणिकं कर्तुमभिमताः प्रमाणभेदा लक्षणीयाः, न च सामान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्तुम् इति प्रमाणसामान्यं तावल्लक्षयति—"प्रमाणमिष्टम्" इति ।

---

अञ्जनानन्दनानन्ददायिनं रघुनन्दनम् ।
वन्दारुजनमन्दारं दशास्यदमनं भजे ॥ २ ॥

तत्त्वान्युक्तानि, तेषां सिद्धिः प्रमाणेन भवति, न चैकप्रमाणेन सर्वेषां तत्त्वानां सिद्धिः संभवति, तथाच प्रमाणबहुत्वमुचितं, तत्र कानि प्रमाणानि कियन्ति चेत्यत आह—**दृष्टमिति** ।

दृष्टं=प्रत्यक्षम्, अनुमानम्, आप्तवचनं=शब्दप्रमाणम् इत्येवं त्रिविधं प्रमाणम् इष्टम् । हि=यतः प्रमेयाणां=पञ्चविंशतितत्त्वानां सिद्धिः प्रमाणाद् भवति, अतः 'प्रमाणनिरूपणम्' इति शेषः । तत्र किंचित् प्रत्यक्षेण साध्यं किंचिदनुमानेन किंचिदागमेनेति त्रिविधं प्रमाणमुक्तम् । अन्यानि तु प्रमाणानि एष्वेव त्रिष्वन्तर्भवन्तीति तानि नोक्तानीत्यत उक्तम्—**सर्वप्रमाणसिद्धत्वादिति** ॥ ४ ॥ ॐ ॥

तदेवं तत्त्वजातमुक्तं, तदिदं तत्त्वजातं न प्रमाणविहीनमपि तु प्रमाणोपेतमित्याशयेन प्रवृत्तां चतुर्थीं कारिकामवतारयति—**तमिममर्थमिति** । पूर्वोक्तं तत्त्वग्राममित्यर्थः । **प्रामाणिकमिति** । "लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः" इति न्यायादिति भावः । अत एवाहुः—मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् इति । ननु कणादगोतमादिभिः प्रमाणविशेषाणां निरूपितत्वात् तैरेव प्रकृते निर्वाहसंभवात् कृतं प्रमाणनिरूपणेनेत्याक्षेपं परिहरन्नाह—**अभिमता इति** । महर्षिमनुप्रमुखसम्मता इत्यर्थः । कणादादिनिरूपिताः प्रमाणभेदास्तु न सतां सम्मताः,

"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥"

[ १२।१०५ ] इति मनुना प्रमाणत्रयस्यैव स्वीकृतत्वेन तद्विरुद्धत्वादिति भावः । इति केचित् ॥

वस्तुतस्तु—'तत्त्वजातं प्रामाणिकं कर्तुमिष्टाः' इत्येवार्थः । अन्यथा 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायप्रसारादिति बोध्यम् । व्याप्यरूपविशेषस्य व्यापकाधीनत्वादाह—**नचेति** । न हीत्यर्थः । अन्तरेण=विना । यदाहुः श्लोकवार्तिके भट्टपादाः—

**अत्र च प्रमाणमिति समाख्या लक्ष्यपदं, तन्निर्वचनं च लक्षणं, प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वमवगम्यते ।**

---

"सामान्यलक्षणं त्यक्त्वा विशेषस्यैव लक्षणम् ।
न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥" इति ॥

ननु 'प्रमाणसामान्यं लक्षयति' इत्युक्तं, तच्च न संभवति, । आर्यायां सामान्यलक्षणादर्शनात्, तदकथनप्रयुक्ता मूलकर्तुर्न्यूनता चेत्याशङ्क्याह—

**अत्र चेति ।** अत्र कारिकायामित्यर्थः । समाख्या यौगिकः[1] शब्द इति मीमांसकसंकेतः, लक्ष्यबोधकं पदं लक्ष्यपदम् । प्रमाणमिति यौगिकं पदं लक्ष्यबोधकमित्यर्थः ।

ननु लक्ष्यपदं लक्षणपदप्रयोगसापेक्षमिति लक्षणपदमन्तरेण कथं लक्ष्यपदप्रयोग इत्याशङ्क्य 'प्रमाणम्' इति पदं यौगिकमिति तदवयवार्थमादाय लक्षणपदमपि तदेवेत्याह—

**तन्निर्वचनं चेति ।** तस्य प्रमाणपदस्य यत् निर्वचनं=निरुक्तिः—अवयवार्थः तदेव प्रमाणम् । प्रमाणपदावयवभूतप्रकृतिप्रत्ययार्थश्च लक्षणमित्यर्थः । निर्वचनप्रकारमेवाह—**प्रमीयतेऽनेनेति ।** यथार्थज्ञानमुत्पाद्यतेऽनेनेत्यर्थः । **अवगम्यत इति ।** प्रपूर्वस्य माधातोरर्थः प्रमा, कृत्प्रत्ययार्थश्च करणत्वमिति प्रमाकरणत्वलाभ इत्यर्थः ।

**तथाच** लक्षणपदमपि 'प्रमाणम्' इत्येवेति बोध्यम् । सकृदुच्चरितमपि प्रमाणपदं तन्त्रेणोच्चरितत्वात्[2] 'प्रमाणं प्रमाणम्' इत्येवं द्विरावृत्तिं[3] कृत्वा "प्रमाणं=प्रमाकरणं—प्रमायाः साधनं जनकं यत् तत् प्रमाणं=प्रमाणपदप्रतिपाद्यम्" इत्यर्थेन एकमेव प्रमाणपदं लक्ष्यलक्षणोभयपरमिति भावः ॥ ❀ ॥

ननु 'प्रमाकरणं प्रमाणम्' इत्युक्तं, तत्र प्रमैव का ? इति जिज्ञासायां प्रमा-

---

१ सं=समीचीना—अवयवार्थवती आख्या समाख्या, तदेवाह—यौगिक इति । संकेत इति । "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम्" इति जैमिनीयसूत्रे भाष्यकृता—"श्रुतिद्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव च संहतानि । सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या ॥" इति ग्रन्थेन समाख्याशब्दस्य यौगिकपरत्वेन व्यवहृतत्वात् । योगबलं=यौगिकम् । २ एवं च विभागपराऽप्यार्या-प्रमीयतेऽनेनेति निर्वचनेन प्रमाणसामान्यमपि लक्षयति तन्त्रयुक्त्येति तत्त्वम् । एतेन कारिकाया अस्या विभागपरत्वेन लक्षणपरत्वाभावादेकं किंचिदुपसंग्राहकं सामान्यलक्षणमन्तरा विभागाऽयोगाल्लक्षणानभिधानेन न्यूनतेति निराकृतं बोध्यम् । ३ "अनेकार्थबुबोधयिषया सकृदुच्चारणं तन्त्रोच्चारणम्" । ईदृक्स्थले उच्चारयितुस्तन्त्रेणोच्चारणं बोद्धुस्त्वावृत्त्या बोधः" इति शब्दरत्नकारोक्तिमनुरुध्याह—द्विरिति ।

**असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः, बोधश्च पौरुषेयः फलं प्रमा।**

णघटकप्रमालक्षणमाह—असन्दिग्धेति। असंदिग्धः='किंस्वित्' इति वितर्कात्मकानवधारणज्ञानविषयः 'इदमिदं न वा' इति संशयविषयः इति यावत्, संदिग्धः स न भवतीति असन्दिग्धः=निश्चितः, अविपरीतः=स्वरूपाप्रतिष्ठितो मिथ्याज्ञानात्मकविपर्ययज्ञानविषयो, विकल्पात्मकज्ञानविषयश्च विपरीतः स न भवतीति अविपरीतः, अनधिगतः=पूर्वानुभवजन्यसंस्कारमात्रोपस्थापितोऽधिगतः निश्चयात्मकज्ञानविषय इति यावत्, स न भवतीति अनधिगतः=अननुभूतः एवम्भूतः पदार्थो विषयो यस्याश्चित्तवृत्तेः सा असन्दिग्धाऽविपरीताऽनधिगतविषया चित्तवृत्तिः="इदमेव" इत्येवंप्रकारा बुद्धेरध्यवसायाख्या वृत्तिः। 'प्रमा' इत्यग्रिमेण संबन्धः। "संशय–विपर्यय–विकल्प–स्मृतिरूपचित्तवृत्तिभिन्ना या चित्तवृत्तिः सा प्रमा" इत्यर्थः।

तदित्थमिन्द्रियसन्निकर्षजन्याममुख्यां बौद्धप्रमामभिधाय चित्तवृत्तिफलभूतां मुख्यां पौरुषेयप्रमामभिधत्ते—**बोधश्च पौरुषेयः फलं प्रमेति**। चित्तवृत्तेः फलं यः पुरुषवर्ती बोधः सा मुख्या प्रमेत्यर्थः। "द्वयोरेकतरस्य[2] वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा" [१।८७] इति सांख्यसूत्रे प्रमाद्वैविध्यस्योक्तत्वेन बुद्धिवृत्तिः[3] पौरुषेयबोधश्चेत्युभयमपि प्रमेति भावः।

---

१ "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" [यो० १।९] इति लक्षितविकल्पात्मकज्ञानस्यापि विपर्ययविशेषत्वेन तद्विषयोऽपि 'विपरीतः' इत्यनेन संगृहीतः, शब्दं च ज्ञानं च शब्दज्ञाने, ते अनुपातिनी=जनके यस्य स शब्दज्ञानानुपाती=श्रोतुः श्रूयमाणशब्दहेतुकः, प्रयोक्तुः पदार्थोपस्थितिहेतुको, बाधनिश्चयेऽपि कलहादौ नरशृङ्गादिप्रयोगे, उत्प्रेक्षादौ च सर्वानुभवसिद्धः, वस्तुशून्यः=बाधितविषयप्रत्ययः–नरविषाणं, खपुष्पं, चैतन्यं पुरुषस्य स्वरूपम्, इत्याद्याकारा विकल्पाख्या वृत्तिरिति तत्सूत्रार्थाद् इति ध्येयम्। २ 'तत्साधकतमं यत् तत् त्रिविधं प्रमाणम्' इति सूत्रशेषः। असन्निकृष्टः=प्रमातरि अनारूढः–अनधिगत इति यावत्, एवंभूतस्य अर्थस्य=वस्तुनः परिच्छित्तिः=अवधारणं प्रमा, सा च द्वयोः=बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु किंवा एकतरमात्रस्य=बुद्धिसत्त्वस्यैव वा पुरुषस्यैव वा, उभयथैव तस्याः=प्रमायाः यत् साधकतमं=फलायोगव्यवच्छिन्नं कारणं तत्प्रमाणं=प्रमाणसामान्यं तच्च त्रिविधं=त्रिप्रकारं प्रत्यक्षानुमानशब्दभेदादिति तत्सूत्रार्थः" इति सांख्यप्रवचनभाष्यकारा विज्ञानभिक्षवः। ३ बुद्धिवृत्तिरिति चित्तवृत्तिरिति चानर्थान्तरम्। सांख्यनये महत्तत्त्वपदाभिधेयबुद्धितत्त्वस्य चित्ततत्त्वस्य चैकत्वात्, अतः क्वचिद् "बुद्धिवृत्तिः" इति क्वचिच्च "चित्तवृत्तिः" इति च पर्यायेण लेखे सत्यपि नार्थभेदे प्रपतितव्यं केनापीति सावधानतासूचनाय 'चित्तवृत्तिः' इत्यनुक्त्वा 'बुद्धिवृद्धिः' इत्युक्तम्।

अत्रेदं[1] तत्त्वम्—सांख्यनये कश्चिदर्थः प्रमाणमेव, यथा चक्षुरादिः, 'अयं घटः' इति बौद्धप्रमाया[2] जनकत्वात्। कश्चित् प्रमाप्रमाणोभयरूपः, यथा चित्तवृत्तिः। एषा हि चक्षुरादिजन्यत्वेन 'प्रमा' इति पौरुषेयबोधं [पुरुषनिष्ठ-ज्ञानरूपफलप्रमां] प्रति करणत्वेन च 'प्रमाणम्' इति व्यवह्रियते। कश्चित् प्रमैव, यथा पौरुषेयबोधः। 'घटमहं जानामि' इति पुरुषनिष्ठबोधस्य फलरूपत्वेन कस्यापि करणत्वाभावात्। कश्चित् प्रमातैव, यथा बुद्धिप्रतिबिम्बितं चैतन्यम्। बुद्धिप्रतिबिम्बितचेतनस्य प्रमाया आश्रयत्वात्। कश्चित् साक्षी एव, यथा बुद्धिवृत्त्युपहिता चितिः। बुद्धिवृत्त्युपहितशुद्धचेतनस्य साक्षिमात्रत्वादिति ॥ ❀ ॥

ननु "चित्तवृत्तेः फलं यः पुरुषवर्ती बोधः सा मुख्या प्रमा" इत्यनेन 'पुरुषवर्ती यो बोधः स चित्तगताया वृत्तेः फलम्' इत्युक्तं भवति, तच्च न संभवति, बोधस्य पुरुषवर्तितया वृत्तेश्च चित्तवर्तितया सामानाधिकरण्यविरहात्, नहि खदिरे व्यापारितेन कुठारेण पलाशे छिदा क्रियते' इत्यस्ति, इति चेत्।

अत्राहुः—नहि चित्तवृत्त्या पुरुषगतो बोधो जन्यते, येन भवदुद्रेकणं समीचीनं स्यात्, अपितु चैतन्यमेव तत्तद्विषयोपरक्त[3]बुद्धिदर्पणे प्रतिबिम्बितं सत् बुद्धिवृत्त्या विषयाकारया तदाकारतामापद्यमानं फलमित्यभिधीयते, तच्च चित्तप्रतिबिम्बितं फलभूतं चैतन्यं चितिचित्तयोरभेदग्रहाच्चित्तात्मकं भवति, प्रमाणभूता चित्तवृत्तिरपि चित्तात्मिकास्तीति फलभूतस्य चैतन्यस्य प्रमाणभूतायाश्चित्तवृत्तेश्चोभयोरपि चित्तात्मकत्वेन अस्त्येव तयोः सामा[4]नाधिकरण्यमिति युक्तं पौरुषेयबोधस्य चित्तवृत्तिफलत्वेनाभिधानमिति ॥ ❀ ॥

---

१ ननु "फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः, बुद्धेः प्रतिसंवेदी पुरुषः" इति योगभाष्याच्चित्तवृत्तेः प्रमाकरणत्वेन प्रमाणत्वं पौरुषेयबोधस्य च प्रमात्वमिति लभ्यते। एवं च चक्षुरादीनां प्रमाकरणत्वेन प्रमाणत्वं तैर्थिकैराख्यातं तत्कुत्रोपयुक्तमिति जिज्ञासायामाह—द्वयोरेकतरस्येति। एतत्सूत्रात् पौरुषेयबोधो बुद्धिवृत्तिश्चेत्युभयमपि प्रमेत्याख्यायते सांख्यैः। एवं च बौद्धप्रमाऽपेक्षया चक्षुरादीनां करणत्वव्यवहारः, पौरुषेयबोधापेक्षया च बुद्धिवृत्तेः करणत्वव्यवहारः, अर्थात् 'अयं घटः' इत्याद्याकारां बौद्धप्रमां प्रति चक्षुरादेः करणत्वं, "अहं घटं जानामि" इत्याद्याकारं पौरुषेयबोधं प्रति बुद्धिवृत्तेः करणत्वम्। तदेतत्सकलं हृदि निधायाऽऽह—अत्रेदं तत्त्वमिति। २ सरोवरजलं यथा कुल्याद्वारा क्षेत्रे प्रविष्टं सत् तदा (क्षेत्रा)कारतां भजति, तथा चित्तमपि चक्षुरादीन्द्रियद्वारा बाह्यविषयैः संबद्धं सत् तत्तदाकाररूपं परिणामं लभते, तादृशचित्तस्य येयम् 'अयं घटः' इत्यात्मिका चित्तवृत्तिः सेयं 'बौद्धप्रमा' इत्याख्यायते, चक्षुरादीन्द्रियमेव चास्याः प्रमाया विषयसंबन्धद्वारा भवति जनकमिति तत् प्रमाणपदवाच्यमिति भावः। ३ उपरागः वृत्तिद्वारा संबन्धः। ४ चितिचित्तयोरभेदग्रह एव सामानाधिकरण्यम्। एवं च बुद्धावेव प्रमाख्यं फलं जायते, न पुरुषे। तस्याऽसङ्गत्वादिति भावः। तथा चोक्तमादित्यपुराणे—

"नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया।
यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते ॥" इति।

नन्वेवमपि 'पौरुषेयो बोधः' इत्यनेन बोधस्य पुरुषनिष्ठत्वमुक्तं भवति, तच्च न साम्प्रतम् । तथा सति प्रमातृत्वादिधर्मवत्त्वेन पुरुषस्य परिणामित्वप्रसङ्गादिति चेत् । उच्यते—बोधो हि वस्तुतो बुद्धिवृत्त्यात्मक एवास्ति, न तु पुरुषधर्मः केवलं चितिचित्तयोरभेदग्रहात् पुरुषे स उपचर्य्यते, एतावतैव तस्य 'पौरुषेय' इत्यभिधानं न वास्तविकम्, बुद्धौ प्रतिविम्बितत्वेन तत्तादात्म्यापन्नत्वेनैव पुरुषस्य ज्ञानादिमत्त्वोपचारादिति ।

एतदुक्तं भवति—योऽयं प्रमारूपो बोधो वरीवर्ति, नासौ पुरुषस्य मुख्यो धर्मः, 'असङ्गो ह्ययं पुरुषः', 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिविरोधात् अपि तु चित्तप्रतिविम्बितचेतनस्य चित्ताविविक्तत्वात् पुरुषे स उपचरित इति ॥

तथा चोक्तं योगभाष्यकृद्भिः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः[1], बुद्धेः प्रतिसंवेदी पुरुषः" [ यो० १।७ ] इति ॥

बोधस्य बुद्धिवृत्त्यात्मकत्वेऽपि यथा पौरुषेयत्वं तथा "द्रष्टा[2] दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" [ यो० २।२० ] "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ[3]

१ चित्तवृत्तिबोधः=इन्द्रियप्रणालिकया[1] विषयसन्निकर्षानन्तरं जायमाना या "अयं घटः" इत्याकारा चित्तवृत्तिस्तद्विषयको यः "अहं घटं जानामि" इत्याकारोऽनुभवः, स प्रमाणभूतायाश्चित्तवृत्तेः फलम् । स चायमनुभवः पौरुषेयः=चितिचित्तयोरभेदग्रहात पुरुषे उपचार्यमाणत्वेन पुरुषवर्ती । तदेवाह—अविशिष्टः=चित्तवृत्त्या सह अविशिष्टः—बुद्धिवृत्त्यात्मक इत्यर्थः । तत्र हेतुमाह—बुद्धेः प्रतिसंवेदी पुरुष इति । संवेदिन्या बुद्धेः प्रतिरूपः, तत्तादात्म्यापन्नत्वेन तत्समानाकार इत्यर्थः । बुद्धिदर्पणे पुरुषप्रतिविम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः । २ द्रष्टा=पुरुषः, दृशिमात्रः=चिन्मात्रो न ज्ञानादिधर्मकः, अतः शुद्धोऽपि=पारार्थ्याचेतनत्वपरिणामित्वादिरूपाशुद्धिरहितोऽपि—अपरिणाम्यपीति यावत् । प्रत्ययं=बुद्धिवृत्तिमनुसृत्य पश्यतीति प्रत्ययानुपश्यः=बुद्धिवृत्तितादात्म्यापत्त्या बुद्धिवृत्त्यनुकारीत्यर्थः । स्वस्य बुद्ध्यविवेकाद् वृत्तिभिरेकीभूतः सन् शब्दादीन् पश्यतीति यावत् । ३ अप्रतिसंक्रमायाश्चितेः सान्निध्यात्तस्याश्चितेराकारश्छाया यत्र तद्भावापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनमिति योजना घटादिवच्च चितेर्बुद्धौ न प्रतिसंक्रमः, अपरिणामित्वात् । किं तु सूर्यस्य जले प्रतिविम्बवच्चित्ते बुद्धौ प्रतिविम्बिते सति बुद्धौ चिदाकारतापत्तौ स्वस्य भोग्याया बुद्धेः संवेदनं भवति । चिच्छायावाह्यत्वसंबन्धेन चिदुपरक्तत्वं चित्ते चिद्वेद्यत्वमित्यर्थः । अप्रतिसञ्चाराया अपरिणामिन्या अपि चितेः स्वीयबुद्धिवृत्तिविषयकं ज्ञानं बुद्धिवृत्त्याकारतापत्त्यैव भवति न स्वत इति भावः ।

1 इन्द्रियाण्येव प्रणालिका=कुल्या इव चित्तवृत्तिसञ्चरणमार्गास्तयेत्यर्थः। एतेन चित्तवृत्तेरेव प्रमाणत्वं मुख्यं, चक्षुरादीनां तु द्वारत्वमेवेति प्रमाणत्वव्यवहारो भाक्त इति बोधितम् । शंखपैत्याद्याकारताया नेत्रादिगतकामलादिदोषाऽन्वयव्यतिरेकाऽनुविधायित्वाच्चित्तस्येन्द्रियसाहित्येनैवार्थाऽऽकारपरिणामो न केवलस्येत्यत एव चक्षुरादीनामपि करणत्वव्यवहार इत्येके ।

स्वबुद्धिसंवेदनम्" [ यो० ४।२२ ] इत्यादियोगसूत्रतद्भाष्ययोः,

"अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति। तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" [ यो० ४।२२ ]

इति पञ्चशिखाचार्यवाक्ये च स्पष्टमिति तत्रैवाधिकं निरीक्षणीयम् ॥

तथाच यथा ह्यन्तरेणापि चन्द्रमसः क्रियाम् उपसंक्रान्तचन्द्रप्रतिबिम्बम् अमलं जलं स्वयं चलत् सत् अचलमपि चन्द्रप्रतिबिम्बं चलमिव अवभासयति, एवं विनाऽपि चितिव्यापारम् उपसंक्रान्तचितिप्रतिबिम्बा बुद्धिः असङ्गामपि चितिशक्तिं स्वगतया ज्ञानादिक्रियया सङ्गताम् अवभासन्ती सती प्रमातृभावमापादयति, परमार्थतस्तु न पुरुषस्य प्रमातृत्वं न वा तन्निष्ठो बोधः फलमिति निष्कर्षः ॥ ❀ ॥ ❀ ॥

---

१ आदिना "सत्त्वपुरुषयोः अत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः" [यो. ३।३५] इत्यादिसमुच्चयः ॥ २ भोक्तृशक्तिः=पुरुषाख्या चितिशक्तिः, हि=यतः स्वभावतः परिणामरहिता, अतः अप्रतिसंक्रमा=संचाररहिता विषयदेशे गमनाभाववती, तथापि परिणामिनि बुद्धिरूपेऽर्थे प्रतिसंक्रान्ता=प्रतिबिम्बिता सती विषयाकारां बुद्धिवृत्तिम् अनुपतति= अनुगच्छति । प्राप्तः चैतन्योपग्रहः=चैतन्यप्रतिबिम्बाख्योपरागो येन रूपेण तत् तथा, प्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता, एवंभूतायास्तस्याः बुद्धिवृत्तेः अनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा=बुद्धितादात्म्यमापन्ना सती ज्ञानवृत्तिः=ज्ञानरूपवृत्तिमती प्रमात्रीत्याख्यायते' इत्यर्थः । ३ बुद्धितत्त्वप्रतिबिम्बितस्य पुंसः कथंचित् प्रमातृत्वेऽपि शुद्धस्य तदयोगादिति भावः । तथाचाहुः—सांख्यप्रवचनभाष्यकाराः—"पुरुषस्तु प्रमासाक्ष्येव न प्रमाता" [ सां० १।८७ ] इति । योगवार्तिकेऽपि—"प्रतिबिम्बरूपयाऽऽरोपितक्रियया कल्पितं दर्शनकर्तृत्वं वस्तुतस्तु बुद्धेः साक्ष्येव पुरुषः" [ यो० २।२० ] इति । दर्शनकर्तृत्वम्=प्रमातृत्वम् । ४ 'असङ्गो ह्ययं पुरुषः' इत्यादिश्रुतेरिति भावः । अत एवोक्तमभियुक्तैः "ज्ञानं नैवात्मनो धर्मो न गुणो वा कथंचन । ज्ञानस्वरूप एवाऽऽत्मा नित्यः सर्वगतः शिवः" इति ॥ ५ अत्र केचित्—"न बुद्धौ प्रमाख्यं फलं जायते तथा सति पौरुषेयशब्दस्य यथाश्रुतार्थत्यागापत्तेः । किंतु बुद्धिवृत्ति प्रतिबिम्बोपहितायाश्चितेरेव फलत्वंयुक्तम् । प्रतिबिम्बस्याऽर्थक्रियाकारितायाः क्वाप्यदर्शनात् । तथाच—इन्द्रियसंनिकर्षादिना पूर्वंबुद्धेरर्थाकारा वृत्तिर्जायते तदनु चार्थोपरक्ता बुद्धिवृत्तिः प्रतिबिम्बरूपेण पुरुषारूढा सती भासते । "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥" इत्यादिस्मृतिषु परस्परं प्रतिबिम्बस्य सिद्धत्वात् । तस्मात्—यथा बुद्धौ चित्प्रतिबिम्बम् एवं चितावपि बुद्धिप्रतिबिम्बं स्वीकार्यम् । किंच बुद्धेरेव प्रमातृत्वे पुरुषो न सिध्येदित्याहुः । तदसत्, "चितेरप्रतिसंक्रमायाः"—इत्यादियोगसूत्रतद्भाष्यपूर्वोक्तपञ्चशिखाचार्यवचनेभ्यो बुद्धौ चैतन्यप्रतिबिम्बस्य प्रामाणिकत्वेऽपि पुरुषे बुद्धिप्रतिबिम्बस्याप्रामाणिकत्वात् । यास्तु—"तस्मिंश्चिद्दर्पणे—" इत्यादयः स्मृतयस्ताः

**तत्साधनं प्रमाणमिति।**
**एतेन संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः।**

तदेवं लक्षिता प्रमा, सम्प्रति प्रमाणं लक्षयति—**तत्साधनं प्रमाणमिति।** तस्याः चित्तवृत्तेर्यत् साधनं=सन्निकर्षरूपव्यापारवच्चक्षुरादि, यच्च पौरुषेयबोधकरणं चित्तवृत्तिरूपं, तदुभयमपि प्रमाणमित्यर्थः। 'अयं घटः' इति गौण्या बौद्धप्रमायाश्चक्षुरादेः करणत्वात् "घटमहं जानामि" इति मुख्यायाः फलप्रमायाश्च चित्तवृत्तेः करणत्वात्, व्यापारवतोऽसाधारणकारणस्यैव करणत्वात् "व्यापारवदसाधारणं कारणं करणम्" इति तल्लक्षणादिति भावः॥ ॐ॥

सांख्यप्रवचनभाष्यकारास्तु—न व्यापारवत्कारणं करणम्, अपि तु "फलायोग[1]व्यवच्छिन्नमेव कारणं करणम्" इत्यभिप्रायेण—

"अथ यदि प्रमारूपं फलं पुरुषनिष्ठमात्रमुच्यते, तदा बुद्धिवृत्तिरेव प्रमाणम्, यदि च बुद्धिनिष्ठमात्रमुच्यते, तदा तूक्तेन्द्रियसन्निकर्षादिरेव प्रमाणम्, यदि च पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते, तदा तूक्तमुभयमेव प्रमाभेदेन प्रमाणं भवति, चक्षुरादिषु तु प्रमाणव्यवहारः परम्परयैव सर्वथा" [सां० १।८७] इति प्राहुः॥ ॐ॥

सम्प्रति चित्तवृत्तिरूपप्रमालक्षणघटकविशेषणानां सार्थक्यमुपपादयति—**एतेनेति।** 'असन्दिग्ध'—इत्यादिविशेषणत्रयोपादानेन, संशयविपर्यय-

---

अपि सूत्राद्यऽऽनुगुण्येन "बुद्धिदर्पणप्रतिबिम्बितत्वेन तत्तादात्म्यापन्ने दर्पणवत्स्वच्छे चितिइमा वस्तुदृष्टयः=बुद्धेर्धर्मभूतानि ज्ञानान्यविवेकाद् प्रतिभासन्ते" इत्येवमर्थपरतया नेयाः। अपि च—नहि पारमार्थिकत्वघटितं पुरुषनिष्ठत्वमेव यथाश्रुतः पौरुषेयशब्दस्यार्थः, किन्तर्हि? पुरुषस्व[1]त्वं तन्निष्ठत्वमात्रं वा। तच्च पारमार्थिकं वौपचारिकं वेति नाऽऽग्रहः। प्रकृते च मुख्यस्याऽसंभवादौपचारिकं तन्निष्ठत्वमाश्रीयते, अतो न यथाश्रुताऽर्थत्यागापत्तिः। यच्चोक्तम्—'प्रतिबिम्बस्याऽर्थक्रियाकारित्वं नास्तीति'। तदपि न। जडप्रतिबिम्बस्याऽर्थक्रियाकारित्वाभावेऽपि चेतनप्रतिबिम्बस्याऽर्थक्रियाकारित्वसंभवात्। यदपि-'बुद्धेरेव प्रमातृत्वे पुरुषो न सिध्येदिति, तदतिस्थवीयः, न केवलं बुद्धितत्त्वं प्रमातृ इत्यभ्युपगम्यते येन तदसिद्धिरापतेत्, किन्तु "उपरागात्कर्तृत्वं चित्सान्निध्यात्" (सां० १।१६४) "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्" (सां० का० २०) इत्यादिसांख्यस्मृतिभ्य उपसंक्रान्तचितिप्रतिबिम्बमेव तत्प्रमातृ' इति स्वीक्रियते। तथा च—प्रतिबिम्बत्वाऽन्यथाऽनुपपत्त्या बुद्धिसाक्षितया च पुरुषसिद्धेर्न दोष इत्यास्तां विस्तरः।

१ फलायोगेन=फलाभावेन व्यवच्छिन्नं=शून्यं—स्वाव्यवहितोत्तरक्षणावच्छेदेन फलोपहितमिति यावत्। एवं च यस्य कारणस्याऽव्यवहितोत्तरकाले कार्यं, तदेव करणम्॥

---

1 पुरुषस्यायमित्यर्थे "तस्येदम्" इत्यणि पुरुषस्वत्वं पौरुषेयशब्दार्थः पुरुषे भव इत्यर्थे 'तत्र भवः' इत्यणि तु पुरुषनिष्ठत्वं पौरुषेयशब्दस्यार्थो भवतीति विवेकः।

सङ्ख्याविप्रतिपत्तिं निराकरोति—"त्रिविधम्" इति ।

तिस्रो विधा यस्य प्रमाणसामान्यस्य तत् त्रिविधं, न न्यूनं नाप्यधिकमित्यर्थः ।

---

स्मृतिरूपवृत्तिभिन्नचित्तवृत्तेरेव प्रमात्वाभिधानेन, तत्करणस्यैव च प्रमाणत्व प्रतिपादनेन, संशयविपर्ययस्मृतिरूपवृत्तीनां साधनेषु=साधारणज्ञानादिरूपकरणेषु[१], अप्रसङ्गः=न प्रमाणलक्षणसंगमनरूपो दोष इत्यर्थः । संशयादिवृत्तीनां प्रमात्वाभावात् तत्साधनानां न प्रमाणत्वमिति भावः ॥ ❀ ॥

अत्रेदमवधेयम्—

स्मृतेर्यथार्थत्वं नास्ति, न हि यादृशोऽर्थः स्मर्यते यदा, तादृश एवासौ तदा, अनुभवेन हि 'घटोऽयम्' इत्याकारेण वर्तमानो घटो विषयीक्रियते, स्मृत्या तु 'स घटः' इति पूर्वावस्थाविशिष्टः । न च स्मृतिकाले पूर्वावस्था वर्तमाना, तस्या अनिवृत्तौ हि पूर्वतैव न स्यात्, वर्तमानध्वंसप्रतियोगिन एव पूर्वत्वात् । तथा च पूर्वावस्थाधारत्वविशिष्टस्य तद्विशिष्टतया विषयीकरणात् स्मृतिः अप्रमा । न च निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बत इति वाच्यम्, पूर्वावस्थानिवृत्तेरननुभूतत्वात्, अननुभूते चार्थे स्मृतेरप्रवृत्तेः । तस्मात् स्मृतेरलक्ष्यत्वमाश्रित्य 'अनधिगत'पदेन तद्वारणं साम्प्रतमेवेति ॥ ❀ ॥

प्रमाणसंख्याऽवधारणपरं कारिकांशमवतारयति—**संख्याविप्रतिपत्तिमिति** । विप्रतिपत्तिः=संशयः । 'कियत्संख्याकं प्रमाणम्' इति वितर्कं शमयतीत्यर्थः । विधाः=प्रकारसामान्यम् । विधीयते=विभज्यते आभिरिति व्युत्पत्त्या विभाजकधर्मपरो वा विधाशब्दः । विभाजकधर्मत्रयविशिष्टमित्यर्थः । संख्याविशेषनिर्देशस्य न्यूनाधिकसंख्यत्वव्यावर्तकत्वादाह—**न न्यूनमिति** । नन्वैक[२]विध्यद्वैविध्याभ्यामुपपत्तौ कथं प्रमाणानां त्रैविध्यमङ्गीकृतम्, अथवा मा भून्न्यू-

---

१ तत्र संशयसाधनम्=उच्चैस्त्वादिसाधारणधर्मज्ञानम्, स्थाणुपुरुषयोर्हि साधारणधर्मम् ऊर्ध्वतादिलक्षणं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं, पुरुषत्वनिश्चायकं शिरःपाण्यादिकं चानुपलभमानस्य दोलायमानं संशयज्ञानमुत्पद्यते—"किमयं स्थाणुर्वा पुरुषो वा" इति । विपर्ययसाधनं=दुष्टेन्द्रियसन्निकर्षादि, स्मृतिसाधनं च संस्कारः तद्द्वाराऽनुभवो वा' इति विवेकः । तत्र न प्रमाणत्वव्यवहारप्रसङ्ग इत्यर्थः । २ प्रत्यक्षमेकमेव प्रमाणमिति लौकायतिकाः । प्रत्यक्षमनुमानं चेत्युभयविधमेव प्रमाणमिति काणादाः । प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणानीति नैयायिकाः । अर्थापत्त्या सह पञ्चैव प्रमाणानीति प्राभाकराः । अनुपलब्ध्या सह षडिति मीमांसकाः । संभवैतिह्ये अपि द्वे तदितरे प्रमाणे इति अष्टौ प्रमाणानीति पौराणिकाः । चेष्टया सह नवेति तान्त्रिकाः । इति मनसि निधाय शङ्कामुत्थापयति—नन्विति ।

विशेषलक्षणानन्तरं चैतदुपपादयिष्यामः ।

कतमाः पुनस्तिस्रो विधाः? इत्यत आह—"दृष्टमनुमानमाप्तवचनं च" इति ।

एतच्च लौकिकप्रमाणाभिप्रायं, लोकव्युत्पादनार्थत्वाच्छास्त्रस्य, तस्यैवात्राधिकाराद् । आर्षं तु

---

ननु अधिकं तु कुतो न? तन्त्रान्तरेऽधिकानामपि प्रमाणान्तराणां दृष्टचरत्वादित्यतआह—विशेषलक्षणानन्तरमिति । एतत्=त्रैविध्यम्, उपपादयिष्यामः=युक्त्या साधयिष्यामः, स्थापयिष्यामः ॥ ४ ॥

ननु "आम्नाय विधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेष्वर्थेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगाद् धर्मविशेषाच्च यत् प्रातिभं यथार्थनिवेदनं ज्ञानमुत्पद्यते, तद् आर्षम् इत्याचक्षते" इति गुणग्रन्थे बुद्ध्यधिकारे कणाददर्शने प्रशस्तपादाचार्यैरार्षविज्ञानस्यापि स्वीकृतत्वेन त्रिविधमित्यवधारणमनुपपन्नमित्याशङ्क्याह—एतच्चेति । एतच्च=प्रमाणत्रैविध्याभिधानं च, लौकिकप्रमाणाभिप्रायम्=योगिजनभिन्नसाधारणजनानां यानि प्रमाकरणानि तदभिप्रायम्, साधारणजनज्ञानजननोपयोगीनि प्रमाणानि त्रीण्येवेति तात्पर्यकमित्यर्थः ।

तत्र हेतुमाह—लोकव्युत्पादनार्थत्वादित्यादिना । शास्त्रस्य साधारणजनबोधनप्रयोजनत्वात् तस्यैव=लौकिकप्रमाणत्रयस्यैव, अत्र=प्रकृतशास्त्रे अधिकारात्=निरूपणयोग्यत्वादित्यर्थः ।

के पुनरार्षविज्ञानाधिकारिणः? तत्राह—आर्षं त्विति । 'तु' शब्दः पुनरर्थे । यत् पुनः ऊर्ध्वस्रोतसाम्[2]=ऊर्ध्वं=विषयेभ्यो बहिः परे तत्त्वे स्रोतः=वृत्ति-

---

१ "आम्नायो=वेदः तस्य विधातारः=कर्तारो ये ऋषयः तेषाम् अतीतेषु अनागतेषु वर्तमानेषु अतीन्द्रियेषु=धर्माधर्मदिक्कालप्रभृतिषु ग्रन्थोपनिबद्धेषु=आगमप्रतिपादितेषु अनुपनिबद्धेषु=आगमाप्रतिपादितेषु च आत्ममनसोः संयोगात् यत् प्रातिभं ज्ञानं यथार्थनिवेदनं=यथास्वरूपसंवेदनं संशयविपर्य्ययरहितं ज्ञानमुत्पद्यते तद् आर्षम् इत्याचक्षते विद्वांसः । इन्द्रियलिङ्गाद्यभावे यद् अर्थप्रतिभानं सा प्रतिभा, प्रतिभैव प्रातिभम् इत्युच्यते तत्र भवद्भिः, तस्योत्पत्तिरनुपपन्ना कारणाभावादित्यनुयोगे सतीदमुक्तम्—धर्मविशेषादिति । विशिष्यत इति विशेषो धर्म एव विशेषो धर्मविशेषः=विद्यातपःसमाधिजः प्रकृष्टो धर्मस्तस्मात् प्रतिभोदयः" इत्येतद्भाष्यार्थं इति कन्दल्यां श्रीधराचार्याः ।

२ अथवा 'ऊर्ध्वस्रोतसाम्' इति पृथक् कोटिः । ऊर्ध्वं=स्थूलेभ्यो विषयेभ्यो बहिरतीन्द्रियेऽर्थे स्रोतो=ज्ञानं येषां तेषां देवर्षीणां योगिनां चेत्यर्थः । विनाऽपि चकारं समुच्चयस्य दृष्टत्वात्, "अहरहर्नयमानो गामश्वं पुरुषं पशुम्" इति यथा ।

**विज्ञानं योगिनामूर्ध्वस्रोतसां, न लोकव्युत्पादनायाऽलम्, इति सदपि नाभिहितम्, अनधिकाराद् ।**

---

प्रवाहो येषां तेषां योगिनां संबन्धि आर्षं विज्ञानम्, तत्तु सामान्यजनबोधनाय नालं=न समर्थम् इति=हेतोः सदपि=विद्यमानमपि तद् आर्षं विज्ञानम् अत्र नोक्तम् अनधिकारात् उपयोगाभावाद् इत्यर्थः ।

तथा चाहुः प्रशस्तपादाचार्याः—"तत्तु [आर्षविज्ञानं तु] प्रस्तारेण[2] देवर्षीणां, कदाचिदेव लौकिकानां यथा कन्यका ब्रवीति—"श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीति[3]" इति ॥ ❀ ॥

अत्रेदं बोध्यम्—बुद्धितत्त्वं हि प्रकाशस्वभावत्वेन सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृतं सत् सर्वदा सर्वं न गृह्णाति, यत्र तु रजसोद्घाट्यते सत्त्वेन चोद्रिच्यते तत्रैव गृह्णाति । यदा तु अभ्यासवैराग्याभ्याम् अपास्तसमस्तरजस्तमोमलस्य योगजधर्मानुगृहीतस्य अस्य अनवद्यवैशारद्यम् उद्द्योतते, तदा अस्य अतीताऽनागतविप्रकृष्टव्यवहितसूक्ष्मपदार्थग्रहणसमर्थस्य प्रकाशानन्त्ये सति किन्नाम तद् वस्तु, यन्नास्य गोचरो भवेत्, अपि तु सर्व एवास्य गोचरो भवति, ईदृग्विधमेव ज्ञानम् । आर्षम् ऋतम्भरा इति चाख्यायते । इदं चार्षविज्ञानं योगजप्रत्यक्षत्वात् प्रत्यक्षान्तर्गतमेव न प्रमाणान्तरम्, पञ्चमकारिकाव्याख्यायां "विषयाः पृथिव्यादयः सुखादयश्च, अस्मदादीनामविषयास्तन्मात्रलक्षणा योगिनामूर्ध्वस्रोतसां च विषयाः, विषयं विषयं प्रति वर्तते यदिन्द्रियं तदाश्रितं ज्ञानं प्रत्यक्षम्" इति वक्ष्यमाणत्वात्; तथा च प्रत्यक्षान्तर्भावान्न तत् पार्थक्येनाभिहितम् ।

यदि तु "विद्याऽपि चतुर्विधा, प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा" इति प्रशस्तपादोक्त्या[4] तदतिरिक्तमेव न प्रत्यक्षान्तर्भूतमिति विभाव्यते, तदा लोकोपयोगाभावान्नात्र तदभिहितमिति ॥ ❀ ॥

एवं सिद्धज्ञानमपि प्रत्यक्षाद्यन्तर्भूतत्वान्न ज्ञानान्तरम् । तथाचाहुः प्रशस्तपादाचार्याः—

---

१ मननोपयोग्युभयमतसिद्धदृष्टान्ताघटकत्वादिति भावः । मननं=विचारः, उभयम्=व्युत्पाद्यव्युत्पादकौ । एतदुक्तं भवति—व्युत्पित्सोर्व्युत्पादने प्रवृत्तः शास्त्रकृत् उदाहियमाणलौकिकप्रमाणसिद्धवस्तुनैव समर्थो भवतीति । २ प्रस्तारेण=बाहुल्येन । ३ इदं च कन्यकाज्ञानं न संशयः, उभयकोटिसंस्पर्शाभावात्, न च विपर्ययः, संवादात्, अतः प्रमाणमेवेति ज्ञेयम् । ४ एतच्च "प्रातिभाद्वा सर्वम्" [यो० ३।३३] इत्यत्र पातञ्जले व्यक्तम् । यथा सूर्योदयस्य पूर्वलिङ्गं प्रभा, तद्वत् प्रसंख्यानस्य पूर्वलिङ्गं प्रातिभं ज्ञानमित्येतत्सूत्रार्थः । स्वप्रतिभोत्थमनोपदेशिकं ज्ञानं प्रातिभमित्युच्यते । अनेन ज्ञानेन करामलकवत्सर्वं जानाति योगीति भावः । ५ गोबलीवर्दन्यायेन पृथगभिधानमित्यपि केचित् ।

स्यादेतद्—माभून न्यूनम्, अधिकं तु कस्मान्न भवति, सङ्गिरन्ते हि प्रतिवादिन उपमानादीन्यपि प्रमाणानि, इत्यत आह—"सर्वप्रमाणसिद्धत्वाद्" इति । एष्वेव दृष्टानुमानाप्तवचनेषु सर्वेषां प्रमाणानां सिद्धत्वाद्=अन्तर्भावादित्यर्थः ।

---

"सिद्धदर्शनं न ज्ञानान्तरम् । कस्मात्? प्रयत्नपूर्वकम् अञ्जनपादलेपखड्गगुलिकादिसिद्धानां दृश्यद्रष्टॄणां सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु यद् दर्शनं, तत् प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्राणिनां ग्रहनक्षत्रसंचारादिनिमित्तं धर्माधर्मविपाकदर्शनम् इष्टम्, तदपि अनुमानमेव । अथ लिङ्गानपेक्षं धर्मादिषु दर्शनम् इष्टम्, तदपि प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतम्" [ वै० ९।२।१३ ] इति ।

एतदुक्तं भवति—यदि सिद्धानां गुटिकाञ्जनादिसिद्धिनिमित्तप्रभवं व्यवहितविप्रकृष्टविषयं तदुच्यते, तदा प्रत्यक्षमेव, यदि तु दिव्यान्तरिक्षभौमानां ग्रहनक्षत्रसंचारादिनिमित्ताधीनं तदा तल्लैङ्गिकमेव तथा सहचारदर्शनेन व्याप्तिपरिच्छेदादिति ॥ ❀ ॥

नन्वार्षविज्ञानस्यालौकिकत्वेन लोकोपयोगाभावादत्रानिरूपणेऽपि लोकोपयोगिनां तूपमानादीनामवश्यं निरूपणीयत्वेन तदनिरूपणप्रयुक्ता न्यूनताऽस्त्येवेति शङ्कते—स्यादेतदित्यादिना ॥ एकविधद्विविधाभ्यां प्रमाणाभ्यां सर्वार्थसिद्धिर्न स्यादिति न्यूनसंख्या नाद्रियताम्, अधिकसंख्या तु पुनः कथं नाद्रियते, तन्त्रान्तराचार्यैर्लौकिकप्रमाणानामप्यधिकसंख्यत्वाङ्गीकारादिति भावः । तदेवाह—सङ्गिरन्ते हीति । प्रतिवादिनः=तन्त्रान्तराचार्या गोतमादयः, सङ्गिरन्ते=प्रतिजानते । सम्पूर्वात् 'गॄ निगरणे' इति धातोः "समः प्रतिज्ञाने" इति प्रतिज्ञानार्थे तङ् ॥

अन्तर्भावादिति । अन्तर्भावो नाम स्वकुक्षीकरणम् । प्रमाणत्रय एव तदितरेषामन्तर्गतत्वादित्यर्थः । एतेन "तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः"

---

१ दृश्यानां=दर्शनयोग्यानां स्वरूपवतां पदार्थानां द्रष्टारो ये अञ्जनादिसिद्धास्तेषां यत् सूक्ष्मादिष्वर्थेषु दर्शनं=इन्द्रियाधीनानुभवस्तत्प्रत्यक्षमेवेत्यर्थः । तत्र सूक्ष्माः=परमाण्वादयः व्यवहिताः=नागभुवनादयः विप्रकृष्टा=मेर्वादयः । दिवि भवं दिव्यम्=उल्कापातादि, अन्तरिक्षे भवम् आन्तरिक्षं=दिग्दाहादि, भूमौ भवं भौमं=भूसंचलनादि; इति विवेकः । २ एतादृशं दैवज्ञानं यदि सिद्धज्ञानमभिमतं तर्हि तदनुमानमेव, ग्रहसंचारादीनां लिङ्गत्वात् । ३ यदि धर्मादिदर्शनमिन्द्रियजं तदा प्रत्यक्षान्तर्भूतम्, अथेन्द्रियानपेक्षं तदा आर्षम् इत्यर्थः । ४ तत्सिद्धौ=तस्य त्रिविधप्रमाणस्य सर्वार्थसाधकत्वसिद्धौ सर्वसिद्धेः=सर्वेषां प्रतिवादिभिरभ्युपगतानामुपमानामपि तेष्वेवान्तर्भावसिद्धेः नाधिक्यसिद्धिः=प्रमाणाधिकस्य सिद्धिर्न भवतीति तत्सूत्रार्थः । तत्रोपमानस्य, "गवयपदं गवयवाचकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्, योऽसति वृत्त्यन्तरे वृद्धैर्यत्र प्रयुज्यते, स तद्वाचकः, यथा

एतच्चोपपादयिष्यत इत्युक्तम् ।

अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात्प्रमाणं सामान्यतो विशेषतश्च लक्षयति? इत्यत आह—"प्रमेयसिद्धिः प्रमाणाद्धि" इति । सिद्धिः=प्रतीतिः । सेयमार्याऽर्थक्रमानुरोधेन पाठक्रम-मनादृत्यैवं व्याख्याता ॥ ४ ॥

---

[सां० १।८८] इति कापिलसूत्रार्थः संगृहीतः प्रतिपत्तव्यः । कथमन्तर्भावः? इत्यत्राह—एतच्चेति । इतरप्रमाणानामेतदन्तर्भावित्वमित्यर्थः । उक्तमिति । "विशेषलक्षणानन्तरं चैतदुपपादयिष्यामः" इत्यनुपदोक्तग्रन्थेन "प्रागेवेति शेषः" ॥ ❀ ॥

ननु पदवाक्यप्रमाणप्रमेयभेदभिन्नेषु[1] विद्याप्रस्थानेषु सांख्ययोगवेदान्तरूप-प्रस्थानत्रयस्य प्रमेयप्रतिपादनपरत्वात् प्रमेयव्युत्पादनस्यैव प्रकृतोपयोगितया प्रमाणव्युत्पादनं व्यर्थमित्याशङ्क्य परिहरति—अथेत्यादिना । प्रमाणाद्धि=हि= यतः प्रमेयावगतिः प्रमाणाऽऽयत्ता, अतः प्राधान्येन प्रमेयप्रतिपादनपरमप्ये-तत् तन्त्रं तदुपयोगितयाऽऽपाततः प्रमाणमपि प्रतिपादयतीत्यर्थः । "मानाधीना मेयसिद्धिः" इति हि न्याय इति भावः ॥ ❀ ॥

ननु पाठक्रमं परित्यज्य कथं कारिकेयं विपरीतक्रमेण भवता व्याख्यातेति शङ्कायां पाठक्रमत्यागे बीजमाह—सेयमिति । आर्या=आर्याख्यछन्दोबद्धा कारिका । आर्याछन्दोलक्षणमुक्तं श्रुतबोधे—

"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" इति ।

अर्थक्रमानुरोधेनेति । अर्थक्रमः=प्रयोजनानुसारिक्रमस्तदनुरोधेनेत्यर्थः । आकाङ्क्षायोग्यतादिकमेव परस्परान्वयकारणं नानन्तरश्रवणमात्रमिति भावः । अत्रायं निष्कर्षः—यथा "अग्निहोत्रं जुहोति," "यवागूं पचति" इति

---

गोशब्दादिः, गवयो गवयपदवाच्यो गोसदृशत्वात्, व्यतिरेके घटवत्" इत्याद्यनुमाने । अर्थापत्तेरपि, "अयं रात्रिभोजी, दिवाऽभुञ्जानत्वे सति पीनत्वात्" इत्यनुमाने । अनुपल-लब्धेस्तु, यदि स्यादुपलभ्येतेत्यादि प्रतियोगिसत्त्वप्रसञ्जितप्रतियोग्युपलब्ध्यभावरूपायाः प्रत्यक्षासहकारित्वेन प्रत्यक्षे । 'इति होचुः' इत्यैतिह्यस्य तु शब्दे । संभवस्य तु, खार्या द्रोणादिपरिमाणसंभावनारूपस्यानुमाने । चेष्टाया अपि, गेहे कति घटाः सन्तीति प्रश्ने, दशाङ्गुलीप्रदर्शनरूपाया अनुमाने, दशादिपदस्मरणे तु शब्द एवान्तर्भावात् त्रीण्येव प्रमाणानीति भावः ।

१ पदविद्या=व्याकरणम्, वाक्यविद्या=मीमांसा, प्रमाणविद्या=न्यायशास्त्रम्, प्रमेय-विद्या=सांख्ययोगवेदान्ताः ।

होमपाकबोधकवाक्ययोः पौर्वापर्यादग्निहोत्रानन्तरं यवागूपाकप्राप्तावपि यवागूपाकस्याग्निहोत्रप्रयोजनकतया अग्निहोत्रेऽनुष्ठिते यवागूपाकस्य प्रयोजनाभावादर्थक्रमानुरोधेन 'पक्त्वैव होतव्यम्' इत्येवं यवागूपाकानन्तरमेवाग्निहोत्रानुष्ठानं न तु पाठक्रममादायादावग्निहोत्रानुष्ठानमित्यास्थीयते व्यक्तं चैतत् "अर्थाच्च" [ मीमां० ५।१।२ ] इत्यत्रजैमिनीये, तथा प्रकृतेऽपि "दृष्टमनुमानमाप्तवचनं च' इति प्राथमिकवाक्यमुत्सृज्य 'त्रिविधं प्रमाणमिष्टम्' इत्युत्तरवाक्यमेवार्थक्रममादाय व्याख्यातम्, प्रमाणसामान्यज्ञानमन्तरा दृष्टादीनां प्रमाणविशेषत्वप्रतीतेर्दुर्घटत्वात्, न हि प्रथमं प्रमाणविशेषनिरूपणं ततः सामान्यनिरूपणमिति कस्यापि सम्मतमिति प्रकृतेऽर्थक्रम एवास्थेयो न पाठानुपूर्वीति ॥ ७ ॥

इति सारबोधिन्यां प्रमाणसामान्यनिरूपणम् ॥ ७ ॥ ४ ॥ ७ ॥

---

१ पाठक्रमादर्थक्रमस्य बलवत्त्वं चोक्तमभियुक्तैः—"अर्थक्रमविरोधे वा कः पाठमनुरुध्यते" इति। तत्र वाक्ययोः पौर्वापर्य=पाठक्रमः। २ अविसंवादि ज्ञानम्, अनधिगततत्त्वबोधो वा प्रमा, तत्करणं प्रमाणमिति प्रमाणसामान्यलक्षणं योगचन्द्रिकायाम्। "यत् अर्थविज्ञानं सा प्रमा" इति न्यायभाष्यकाराः। यत्र यदस्ति तत्र तस्यानुभवः प्रमा' इति तत्त्वचिन्तामणौ। 'यथार्थानुभवः प्रमा" इति तर्कभाषायाम्। किमुक्तम्? 'तद्वति तत्प्रकारकोऽनुभवः प्रमा' इति नैयायिकाः। "वृत्तीद्धो बोधः प्रमा" इति मायावादिनः। 'पुरुषनिष्ठबोधः प्रमा' इति पातञ्जलाः। 'अनधिगतार्थस्य वस्तुनोऽवधारणं प्रमा' इति तु सांख्याः। वस्तुतः पातञ्जलसांख्ययोरेकैव प्रमेति बहु प्रपञ्चितं सारबोधिन्यामिति नात्र किञ्चिद् वक्तव्यम्। तत्साधनं प्रमाणमिति प्रमाणसामान्यलक्षणविवेकः।

# अथ प्रमाणविशेषनिरूपणम् ।

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्, तदधीनत्वाच्चानुमानादीनां, सर्ववादिनामविप्रतिपत्तेश्च तदेव तावल्लक्षयति—"प्रतिविषयाध्यवसायो दृष्टम्" इति ।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥ ५ ॥**

अत्र 'दृष्टम्' इति लक्ष्यनिर्देशः । परिशिष्टन्तु लक्षणम् ।

---

अथ प्रमाणविशेषलक्षणपरां पञ्चमकारिकामवतारयति—सम्प्रतीत्यादिना । प्रमाणानां ये विशेषाः=प्रत्यक्षादयो भेदास्तेषां यानि लक्षणानि तन्निरूपणावसरे सति तदेव=प्रत्यक्षमेव तावत्=आदौ लक्षयतीति संबन्धः । प्रत्यक्षस्य प्रथमनिरूपणे हेतुमाह—प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वादिति । ज्येष्ठत्वात्=पूर्ववर्तित्वात्, निखिलप्रमाणोपजीव्यत्वादिति यावत् । तदेवाह—तदधीनत्वाच्चेति । अनुमानादीनां प्रत्यक्षसापेक्षत्वादित्यर्थः[१] ।

हेत्वन्तरमाह—सर्ववादिनामविप्रतिपत्तेश्चेति । प्राकृतचार्वाकादेरपि प्रत्यक्षे विवादाभावेन सर्वसम्मतत्वाच्चेत्यर्थः ॥ ॐ ॥

प्रतिविषयेति । प्रतिविषयाध्यवसायः=घटादिविषयव्यापृतेन्द्रियाधीनं ज्ञानं दृष्टं=प्रत्यक्षम् । लिङ्गलिङ्गिपूर्वकं=व्याप्यव्यापकपूर्वकम् अनुमानम्=अनुमानसामान्यलक्षणम् । तत्=सामान्यतो लक्षितमनुमानम् त्रिविधं=विशेषतः त्रिप्रकारम् [ पूर्ववत्, शेषवत्, 'सामान्यतोदृष्टम्' इति भेदात् ] आख्यातम्=उक्तं "सांख्याचार्यैः" इति शेषः । आप्तश्रुतिः=युक्तवाक्यजन्यज्ञानम् आप्तवचनम्=शब्दप्रमाणम् इत्यन्वयः ॥ ४ ॥ ॐ ॥

अत्रेति । कारिकायाम् । दृष्टमिति=प्रत्यक्षवाचकदृष्टपदप्रयोगेण लक्ष्यनिर्देशः=लक्ष्यस्य=प्रत्यक्षस्य निर्देशः=कीर्तनम् । परिशिष्टम्=अवशिष्टं 'प्रतिविषया-

---

१ अनुमानस्य भूयोदर्शनमूलकत्वात्, आप्तवचनस्य च व्यवहारदर्शनाधीनशक्तिग्रहसापेक्षत्वादिति भावः । अत्र 'अनुमानादीनाम्" इति बहुवचनं तु पराभिमतोपमानाद्यभिप्रायेण नेयम् । सांख्यासिद्धान्ते प्रत्यक्षातिरिक्तयोः शब्दानुमानयोर्द्वयोरेव प्रमाणयोः सत्त्वात् । प्रत्यक्षानन्तरमनुमाननिरूपणे अनुमानात् प्राक् प्रत्यक्षनिरूपणे च हेतुमाह—ज्येष्ठत्वादिति । अत्र अनुमानात्प्राक् प्रत्यक्षनिरूपणे "प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्" इति हेतुः, प्रत्यक्षानन्तरमनुमाननिरूपणे तदधीनत्वाच्चानुमानादीनाम्" इति च हेतुरिति विभाग इति बोध्यम् ।

## समानासमानजातीयव्यवच्छेदो लक्षणार्थः ।

ध्यवसायः' इत्येतत्, लक्षणं=लक्षणनिर्देश इत्यर्थः । लक्षणकरणस्य प्रयोजनमाह—समानेति । समानजातीयेभ्यः=सजातीयेभ्यः असमानजातीयेभ्यः=विजातीयेभ्यश्च पदार्थेभ्यो यो व्यवच्छेदः=व्यावर्तनं–विभज्य लक्ष्यस्थापनं स लक्षणार्थः=लक्षणकरणप्रयोजनमित्यर्थः । यदुक्तम्—"व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" । एतेन "समानासमानजातीयव्यवच्छेदकत्वं लक्षणत्वम्" इति लक्षणलक्षणमप्यनेन ज्ञापितं भवति । लक्षणं हि व्यतिरेकिहेतुवचनं सत् सजातीयविजातीयेभ्योऽर्थेभ्यो व्यावर्त्य लक्ष्यं व्यवस्थापय-

---

१ यथा "सामान्यमितरेभ्यो भिद्यते, 'सामान्यम्' इत्याकारकव्यवहारविषयो वा भवति, नित्यत्वे सति अनेकसमवेतत्वात्, यन्नैवं तन्नैवं यथा द्रव्यम्" इति । एवमेव सर्वत्र लक्षणेषु ज्ञेयम् । २ यथा पृथिव्या गन्धवत्त्वं लक्षणं "पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद् गन्धवत्, यथा जलम्, न चेयं तथा, तस्मान्न तथा" इत्येवं व्यतिरेकिहेतुवचनं सत् पृथिवीमितरेभ्यो व्यावर्त्य व्यवस्थापयति । अत्र "यद्गन्धवत् तद् इतरभेदवत्" इत्यन्वयदृष्टान्ताभावात् अन्वयव्याप्तिर्नास्ति, किंतु "यत्र यत्र पृथिवीभूजलाद्यष्टभेदाभावः तत्र तत्र गन्धाभावः" इति व्यतिरेकव्याप्तिरेवेतिगन्धवत्त्वं व्यतिरेकि लिङ्गमित्यन्यत्र विस्तरः । इदं तु बोध्यम्—लक्षणं द्विविधं, स्वरूपलक्षणम्, तटस्थलक्षणं च । लक्ष्यतावच्छेदकव्यापकं लक्षणं स्वरूपलक्षणम् । किमुक्तम्? यावल्लक्ष्यकालमवस्थायित्वे सति यत् व्यावर्तकं तत् स्वरूपलक्षणम् । लक्ष्यतावच्छेदकसमानाधिकरणं लक्षणं तटस्थलक्षणम् । किमुक्तम्? यावल्लक्ष्यकालमनवस्थायित्वे सति यत् व्यावर्तकं तत् तटस्थलक्षणम् । तत्राद्यं यथा—"सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मणः स्वरूपलक्षणम् । द्वितीयं तु—"जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणम्" इति तटस्थलक्षणम् । एवं गन्धवत्त्वं पृथिव्यास्तटस्थलक्षणम्, महाप्रलये परमाणुषु, उत्पत्तिकाले घटादिषु च गन्धाभावात् । पृथिवीत्वं तु स्वरूपलक्षणम् । एवं "पताकावद् देवदत्तगृहम्" इत्यादीनि तु तटस्थलक्षणान्येवेति विवेकः । तत्र स्वरूपलक्षणेनैव सर्वत्र प्रयोजनम्, तटस्थलक्षणं तु बालानामुपलालनैव; "असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इत्युक्तदिशा केवलं स्थूलमार्गप्रदर्शकत्वात्तस्य, तदन्तरा सूक्ष्मे स्वरूपलक्षणे सहसा प्रवेशो नैव जाघटीतीति तदपि तत्र तत्राश्रीयते शास्त्रकृद्भिरित्यवधेयम् ।

---

1 सर्वं लक्षणं (अभिधेयत्वादिवर्जम्) व्यतिरेकिहेतुर्भवति । तस्य केवलव्यतिरेकिहेतुत्वे प्रयोगः—"लक्षणं केवलव्यतिरेकिहेतुः, विशेषधर्मत्वात्, यत् केवलव्यतिरेकिहेतुर्न भवति, तन्न विशेषधर्मो भवति, यथाऽभिधेयत्वम्, न चेदं तथा, तस्मान्न तथा" इति । "गोःसास्नादिमत्त्वं लक्षणम्" इत्युक्त्या, गौ पक्षः, महिष्याद्यात्मकेतरभेदः साध्यः, सास्नादिमत्त्वं हेतुः, व्यतिरेकदृष्टान्तः । यथा—"गौरितरेभ्यो भिन्ना, सास्नादिमत्त्वात्, यन्नैवं तन्नैवं महिष्यादिवत्" इत्यनुमाने गोर्लक्षणं सास्नादिमत्त्वं व्यतिरेकिहेतुरेव भवति, नान्वयिहेतुः, गोरितरत्र सास्नादिमत्त्वाभावेन दृष्टान्ताभावादित्यादि ।

तीति भवति लक्षणस्य सजातीयविजातीयव्यवच्छेदकत्वम्। 'नीलमुत्पलम्' इत्यत्र सजातीयमात्रव्यवच्छेदके विशेषणेऽतिव्याप्तिवारणाय—असमानेति। 'रूपं गुणः' इत्यादौ विजातीयद्रव्यव्यवच्छेदकधर्मेऽतिव्याप्तिनिरासाय च—समानेति। समानजातीये=अनुमानाप्तवचने असमानजातीयाः=स्मृतिसंशयविपर्ययास्तेभ्यः पृथक्करणं प्रत्यक्षलक्षणस्य प्रयोजनमिति सारम्। यथा च प्रत्यक्षलक्षणमिदं भवति सजातीयविजातीयव्यवच्छेदकं तथाऽग्रे प्रत्यक्षलक्षणावसाने मूल एव स्पष्टीभविष्यतीति नात्र किंचिद् वचनीयम्। अत्रायं सरलो मार्गः—सजातीयविजातीयव्यावर्तकतया लक्ष्यावधारणं लक्षणस्य प्रयोजनम्। "अस्मिन् ग्रामे देवदत्तगृहम्" इति वार्तां श्रुतवतः पुरुषस्य तद्ग्रामस्थेषु सर्वेषु गृहेष्वपि देवदत्तगृहबुद्धिप्रसक्तौ "पताकावद् देवदत्तगृहम्" इति लक्षणज्ञाने सति "इदमेव देवदत्तगृहं, नान्यत्" इत्यवधारणज्ञानं जायते। एवं "सास्नादिमान् गौः" इति लक्षणज्ञाने सति, यं यं सास्नादिमन्तं पिण्डं पश्यति, तं तं गोशब्दवाच्यं प्रत्येति ॥ ❀ ॥

इदं तु बोध्यम्—लक्ष्यते=निश्चीयते लक्ष्यमनेनेति व्युत्पत्त्या "असाधारणधर्मो लक्षणम्" इति लक्षणलक्षणम्। एतदुक्तं भवति—यत्र अव्याप्तिः अतिव्याप्तिः असंभवश्चेति त्रिषु दोषेषु अन्यतमोऽपि दोषो न भवेत् तदेव लक्षणमित्युच्यते। तत्र "**किंचिल्लक्ष्यवृत्तित्वे सति किंचिल्लक्ष्यावृत्तित्वम् अव्याप्तिः**"। किमुक्तम्? यत् क्रियमाणं लक्षणं क्वचिल्लक्ष्यैकदेश एव घटेत न तु सर्वदेशे, स दोषोऽव्याप्तिर्नाम। यथा केनचित् पृष्टं—'गोः किं लक्षणम्?' इति। तत्रोत्तरदाता यद्येवं वदेत्—"कपिलत्वं गोत्वम्" अथवा "कृष्णत्वं गोत्वम्" इति। तर्हीदं न लक्षणम्। अव्याप्तिदोषग्रस्तत्वात्। यतः कपिलायामेव गवि कपिलत्वं वर्तते न सर्वासु गोव्यक्तिषु, एवं कृष्णत्वमपि कृष्णायामेव गवि वर्तते न तु सर्वासु गोव्यक्तिषु। लक्ष्यं चास्माकं गोमात्रमेव। तस्मात् कपिलत्वं कृष्णत्वं वा न सर्वलक्ष्यवृत्तीति उक्ते लक्षणेऽव्याप्तिः प्रथमो दोषः।

**लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः।**

"**अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम्।**" किमुक्तम्? यत् क्रियमाणं लक्षणं सर्वत्र लक्ष्ये घटितं सत्, अलक्ष्येऽपि वर्तेत, स दोषोऽतिव्याप्तिर्नाम। यथा 'गोः किं लक्षणम्?' इति पृष्टे सति यदि कश्चि-

१ प्रत्यक्षस्य समानजातीयं प्रमाणान्तरम् अनुमानादिकं, प्रमेयजातं चासमानजातीयं ततोव्यवच्छेदः=व्यावृत्तिः भेद इति यावल्लक्षणस्य प्रयोजनम्। तच्चातिव्याप्त्यादिदोषनिराकरणात्सेद्धुमर्हतीति अतिव्याप्त्यादिदोषान् वक्तुमुपक्रमते—इदं त्विति। २ समानासमानजातीयव्यवच्छेदो लक्षणार्थः, स च साधारणधर्मेण न भवतीति असाधारणेत्युक्तम्। यत्र सर्ववृत्तीत्यसाधारणशब्दार्थः। किमुक्तम्? इतरानतिप्रसक्तत्वमसाधारणत्वम्। लक्षणे तान्येव पदानि ग्राह्याणि यैरव्याप्त्यसंभवाद्या दोषा निराक्रियन्ते ॥

अवयवार्थस्तु-विसिन्वन्ति=विषयिणमनुबध्नन्ति—स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावद्, विषयाः=पृथिव्यादयः सुखादयश्च,

---

देवं ब्रूयात्—"शृङ्गित्वं गोत्वम्" इति, तन्न लक्षणम्। अतिव्याप्तिदोषग्रस्तत्वात्। शृङ्गित्वं हि यथा लक्ष्यभूतासु सर्वासु गोव्यक्तिषु वर्तते, तथा अलक्ष्यभूतासु अजामहिष्यादिव्यक्तिष्वपि तदस्ति। तस्मात् शृङ्गित्वं लक्ष्यवृत्ति सत् अलक्ष्यवृत्त्यपि भवतीति उक्ते लक्षणेऽतिव्याप्तिलक्षणो दोषो द्वितीयः। अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः।

"असंभवश्च लक्ष्यमात्रावृत्तित्वम्"। किमुक्तम्? यत् क्रियमाणं लक्षणं लक्ष्यमात्रे कुत्रापि न घटेत, स दोषोऽसम्भवो नाम। यथा केनचित् "एकशफत्वं गोत्वम्" इति गोलक्षणं कृतं चेत्, तन्न लक्षणम्। असंभवदोषग्रस्तत्वात्। एकशफत्वं हि गोमात्रे कुत्रापि न घटते, गोमात्रस्य द्विशफतया एकशफत्वस्य कुत्रापि गव्यनुपलब्धेः, तस्मादयमसम्भवो दोषस्तृतीयः। क्वापि लक्ष्येऽवर्तनमसंभवः। इदं च त्रयं सर्वत्र परिहर्तव्यम्। एतद्दोषत्रयरहितं यत् स एवासाधारणो धर्मः, तदेव लक्षणम्। यथा—"गोः सास्नादिमत्त्वम्"। एवम् "असाधारणधर्मो लक्षणम्" इति निष्पन्नम्॥ ॐ॥

'प्रतिविषयाध्यवसायः' इति लक्षणपदघटकशब्दार्थं निराह—अवयवार्थस्त्विति। अवयवार्थः=प्रतिपदार्थः। अत्र पदानामेव वाक्यावयवत्वात्। 'विसिन्वन्ति' इति 'षिञ् बन्धने' इत्यस्य रूपम्। तस्य विवरणमाह—विषयिणमनुबध्नन्तीति। विषयिणं चित्तवृत्तिरूपं ज्ञानम्। 'अनुबध्नन्ति' इत्यस्य फलितार्थमाह—स्वेन रूपेणेति। स्वेन=स्वकीयेन रूपेण=आकारेण निरूपणीयं=निरूपणार्हं स्वाकारोपरक्तं कुर्वन्तीति यावत्।

घटादयो विषया हीन्द्रियसन्निकर्षादिना विषयिणं=चित्तं स्वाकारेण उपरञ्जयन्ति, यदिदम् उपरञ्जनं=विषयिणि चित्ते विषयाणां स्वाकारार्पणम् एतदेव स्वेन रूपेण निरूपणीयत्वमिति तत्त्वम्। विषयशब्दबोध्यमाह—पृथिव्येति।

---

१ तन्मात्रवृत्तिरसाधारणः। तन्मात्रवृत्तित्वं च तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम्। किंबहुना? यन्न सर्ववृत्तीति असाधारणशब्दार्थः। अत्र परिष्कुर्वन्ति—"असाधारणत्वं च लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम्। 'गोः सास्नादिमत्त्वम्' इति लक्षणे गौर्लक्ष्या, तद्वृत्तिलक्ष्यताया अवच्छेदको धर्मः-गोत्वं, तद्व्याप्यत्वमपि सास्नादिमत्त्वे, 'यत्र सास्नादिमत्त्वं तत्र गोत्वम्' इति रीत्या। एवं गोत्वव्यापकत्वमपि सास्नादिमत्त्वलक्षणे, 'यत्र गोत्वं तत्र सास्नादिमत्त्वम्' इति रीत्या। तदेवं-सास्नादिमत्त्वं लक्ष्यतावच्छेदकीभूतगोत्वस्य व्यापको व्याप्यश्चेति लक्षणसमन्वयः। तत्र 'यस्य यत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वं तस्य तं प्रति व्यापकत्वम् यस्य यदत्यन्ताभावाधिकरणावृत्तित्वं तस्य तं प्रति व्याप्यत्वमिति ज्ञेयम्। "व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्" इति तु स्थूलो मार्गः॥

असदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्द्धस्रोतसां च विषयाः, विषयं विषयं प्रति वर्तत इति प्रतिविषयं=इन्द्रियम् । वृत्तिश्च=सन्निकर्षः । अर्थसन्निकृष्टमिन्द्रियमित्यर्थः ।

---

पृथिव्यादयः=स्थूलपृथिव्यादयः । विषयशब्देन न केवलं स्थूला एव विषया गृह्यन्तेऽपि तु सूक्ष्मा अपीत्याह—असदादीनामिति । तन्मात्रलक्षणाः= सूक्ष्मभूतात्मका ये पदार्था असदादीनामविषयास्तेऽपि योगिनामूर्ध्वस्रोतसां च विषया इति तेऽपि विषयपदेन गृह्यन्त इत्यर्थः ।

सूक्ष्मभूतात्मका अपि पदार्था योगिनां विषया इत्यत्र योगसूत्रम् "परमाणुपरममहत्त्वान्तोऽस्य वशीकारः"[1] [ यो० १।४० ] इति ।

ऊर्ध्वं=लौकिकविषयेभ्योऽतिरिक्तेष्वपि स्रोतो=मनो येषां ते ऊर्ध्वस्रोतसो= देवाः ।

तथा चोक्तम्—

"स्रवते वा ततो यस्मात् सूयते वा समन्ततः ।
स्रोतस्तस्मान्मनः प्राहुर्निगमार्थविचक्षणाः ॥" इति ।

अत एव विष्णुपुराणे देवसर्गस्य ऊर्ध्वस्रोतोभवत्वमभिहितम्—

"प्रकाशाद्बहिरन्तश्च ऊर्ध्वस्रोतोभवाः स्मृताः ।
तुष्टात्मनस्तृतीयस्तु देवसर्गस्ततः स्मृतः ॥" इति ।

तदेवं विषयपदार्थमुक्त्वा प्रतिविषयपदार्थमाह—विषयं विषयं प्रतीति । "अव्ययं विभक्ति"—इत्यादिना यथार्थेऽव्ययीभावः ।

'विषयं विषयं प्रति वर्तते' इत्यनेन यदिन्द्रियाणां विषयं प्रति वर्तनमभिहितं, तन्नेन्द्रियाणां स्वस्थानपरित्यागपूर्वकं विषयदेशगमनं; तथा सत्यन्धत्वादिप्रसङ्गात्, अपि तु संबन्धविशेष[2] इत्याह—वृत्तिश्च सन्निकर्ष इति । 'वर्तते' इति पदघटकवृतुधात्वर्थरूपा वृत्तिश्चात्र सन्निकर्ष एव न त्विन्द्रियाणां विषयदेशगमनमित्यर्थः ।

---

१ एभिरुपायैश्चित्तस्य स्थैर्यं भावयतो योगिनः सूक्ष्मविषयभावनाद्वारेण परमाण्वन्तो वशीकारोऽप्रतिघातरूपो जायते, क्वचित् परमाणुपर्यन्ते सूक्ष्मे विषये अस्य मनो न प्रतिहन्यत इत्यर्थः । एवमाकाशादिपरममहत्त्वपर्यन्तं भावयन्न क्वचिच्चेतसः प्रतिघात उत्पद्यते, सर्वत्र स्वातन्त्र्यं भवतीत्यर्थः" इति भोजवृत्तिः । २ स च संबन्धविशेषो नोच्छिन्नमूलोऽपि त्वच्छिन्नमूल एवेति ज्ञेयम् । तथा चाहुर्वाचस्पतिमिश्राः— "निर्गताऽप्यच्छिन्नमूला चक्षुःसन्ततिः कार्याय समर्था न छिन्नमूला" इति । एतेन "यदि च चक्षुःप्राप्यार्थं गृह्णीयात् तदोन्मील्य निमीलितनयनोऽपि रूपं पश्येत्"

तस्मिन्नध्यवसायः=तदाश्रितइत्यर्थः । अध्यवसायश्च बुद्धिव्यापारो ज्ञानम् ।

---

अयमेव सन्निकर्षो व्यापार इति नाम्नाऽप्यभिधीयते । तथा चोक्तम्—"वृत्तिस्तु सन्निकर्षः" [ न्या० १।१।३ ] इति न्यायभाष्यप्रतीकमुपादाय तात्पर्यटीकाकृद्भिः—

"वृत्तिरिति हि व्यापारः, स तु व्यापार उच्यते यः कारकैः फले जनयितव्ये चरमभावी धर्मभेदः फलोत्पादानुकूलोऽपेक्ष्यते । यथा—पटे जनयितव्ये तन्तुभिश्चरमभाविनः संयोगविशेषाः, स्वर्गे जनयितव्ये यागेनाऽपूर्वमात्मधर्मः, तथेहापीन्द्रियादिना प्रमाणेन प्रमायां फले प्रवृत्तेन तदुत्पादनानुकूलः सन्निकर्षो ज्ञानं वा चरमभावी धर्मोऽपेक्ष्यत इति भवति व्यापारः, स एव वृत्तिरित्याख्यायते" इति ॥ ७ ॥

एवम् अवयवार्थमुक्त्वा 'प्रतिविषयम्' इति समुदायस्य निर्गलितमर्थमभिधत्ते—अर्थसन्निकृष्टमिन्द्रियमिति । अर्थो=घटादिविषयः तत्संबद्धं चक्षुरादीन्द्रियमित्यर्थः ।

प्रतिविषयेऽध्यवसाय इति विग्रहे सप्तमीति योगविभागात् 'सुप्सुपा—' इति वा सप्तमीसमासमाश्रित्याह—तस्मिन्नध्यवसाय इति । तस्मिन्=प्रतिविषये

---

इति निरस्तम् । अच्छिन्नमूलसन्तत्यङ्गीकारे च अन्धत्वादिप्रसङ्गोऽपि नेत्यपि बोध्यम् । इन्द्रियाणां व्यापारमाह—वृत्तिश्चेति । विषयाकारवृत्तिरूपपरिणामविशेषः, न तु संयोग इत्यर्थः । अयमभिसन्धिः—इन्द्रियैः सह विषयस्य संयोगो भवति, परं तन्मात्रस्य कारणत्वे परमाणुभिस्तस्य संयोगसत्त्वेन तेषामपि प्रत्यक्षं स्यात् । अतः चित्तवद् इन्द्रियाणामपि विषयाकारेण परिणामः स्वीकार्यः । तेन परमाण्वाकारेन्द्रियपरिणामाभावेन नाऽतिप्रसङ्गः । न च कार्यमात्रं प्रति स्वस्वकारणकूटेनैव कार्योत्पत्त्यभ्युपगमेन प्रत्यक्षरूपकार्यस्यापि स्वकारणकूटेनैवोत्पत्त्या महत्त्वस्यापि तत्कूटान्तर्गततया परमाणुषु तदभावेन न तेषां प्रत्यक्षमितीन्द्रियपरिणामः किमर्थं स्वीकार्य इति वाच्यम् । प्रत्यक्षत्वेन तत्परिणामत्वेन कार्यकारणभावे लाघवात् । महत्त्वेन प्रत्यक्षकारणत्वपक्षे उद्भूतरूपत्वादिनापि कारणत्वकल्पनाया आवश्यकतया गौरवात् । मम मते तु महत्त्वादेरिन्द्रियपरिणाममात्रोपयोगितया प्रत्यक्षेऽन्यथासिद्धत्वात् ॥ तथा चोक्तं विज्ञानभिक्षुभिर्योगवार्तिके—"इन्द्रियाण्येव नाडी चित्तसंचरणमार्गाः, तैः संयुज्य, तद्गोलकद्वारा बाह्यवस्तुषूपरक्तस्य चित्तस्येन्द्रियसाहित्येनैवाऽर्थाकारः परिणामो भवति, न केवलस्य चित्तस्य, शंखपैत्याद्याकारतायां नयनादिगतपित्ताद्यन्वयव्यतिरेकाभ्याम्, अतोरूपादिवृत्तिषु चक्षुरादीनामपि कारणत्वं शास्त्रेषूच्यते" [ यो० १।७] इति केचित् ।

१ "आस्ये प्रयत्न आस्यप्रयत्नः, शब्दे संज्ञा शब्दसंज्ञा" इत्यादिप्रयोगेषु महाभाष्यकारादिभिः सप्तमीतत्पुरुष आश्रित इत्यनुक्तोऽपि 'सप्तमी शौण्डैः' इत्यत्र योगविभाग ऊहनीय इति भावः । योगविभागस्यागतिकगतित्वादाह—सुप्सुपेति ।

.. उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः, सोऽध्यवसाय इति, वृत्तिरिति, ज्ञानमिति चाख्यायते ।

---

इत्यर्थः । समासान्तर्गतलुप्तसप्तम्यर्थमाह—तदाश्रित इति । विषयव्यावृत्तेन्द्रियाधीन इत्यर्थः । इन्द्रियनिष्ठ इत्याशयः ।

'तदाश्रितः' इत्यनेन अध्यवसायस्य इन्द्रियनिष्ठत्वाभिधानेन "अध्यवसाय इन्द्रियधर्मः" इति नाऽऽस्थेयम् अपि त्विन्द्रियमाश्रित्य बुद्धौ वर्तमानत्वेन बुद्धेरेव स धर्मोऽभ्युपेय इत्याह—अध्यवसायश्चेति । अध्यवसायपदाभिधेयं ज्ञानं च बुद्धेरेव व्यापारो नेन्द्रियधर्मं इत्यर्थः ।

यथा बीज-काल-सलिल-धरणीसंयोगादिसन्निधाने जायमानस्याप्यङ्कुरस्य 'कालाङ्कुरः' 'सलिलाङ्कुरः' 'धरण्यङ्कुरः' इत्येवं व्यपदेशो नैव भवति, तस्य कालादिधर्मत्वाभावात्, किं तु बीजेनैव तस्य भवति व्यपदेशो—'यवाङ्कुरः 'शाल्यङ्कुरः' इति, तस्य[१] तद्धर्मत्वात्, एवं बुद्धिविषयेन्द्रियालोकसंयोगसन्निधानेन जायमानस्यापि ज्ञानस्य 'इन्द्रियधर्मः' 'विषयधर्मः' 'आलोकधर्मः' इत्येवं नैव व्यपदेशो भवितुमर्हति, तस्य तद्धर्मत्वाभावाद् अपि तु बुद्धिधर्मत्वेनैव तस्य भवति व्यपदेशो—'बुद्धिवृत्तिः' इति, 'बुद्धिव्यापारः' इति, तस्य तद्धर्मत्वादिति भावः ॥ ❀ ॥

अध्यवसायपदाभिधेयबुद्धिव्यापारस्य ज्ञानस्य लक्षणमाह—उपात्तविषयाणामिति । उपात्तः=गृहीतः प्रतिबिम्बरूपेण लब्धो विषयो यैस्तेषामिन्द्रियाणां वृत्तौ[२] सत्यां=विषयाकाराकारितत्वे सति यो बुद्धेस्तमोरूपावरणानादरपुरस्सरसत्त्वात्मकप्रकाशबाहुल्यरूपो[३] धर्मविशेषः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाभिधीयत इत्यर्थः ।

---

१ तस्य=अङ्कुरस्य, तद्धर्मत्वात्=बीजधर्मत्वात् । २ चित्तवृत्तेर्विषयाकारतासम्पादने चक्षुरादयः कारणम् । ३ बुद्धेः=त्रिगुणात्मकस्य बुद्धिसत्त्वस्य । "बुद्धेस्तयोऽभिभवे सति यः सत्त्वसमुद्रेकः" इत्युक्त्या तमसः सत्त्वसमुद्रेकस्य प्रतिबन्धकत्वं सूचितम् । न च तमसः प्रतिबन्धकत्वे मानाभाव इति वाच्यम् । सर्वदा सत्त्वकार्यापत्त्या तत्कल्पनात् । तदभिभवश्च क्वचिदिन्द्रियसन्निकर्षेण, क्वचिच्च योगिनां धर्मेण, अञ्जनसंयोगे नयनमालिन्यवत् । तथा च रजस्तमसोर्गुणत्वेन सहकारित्वे सतीति तात्पर्यार्थः । एतदुक्तं भवति—सत्त्वरजस्तमसां परस्परं व्याप्यतया तदन्यतमस्यापि विभागासंभवेन सत्त्वप्रधानकार्ये रजस्तमसोरप्रधानत्वमात्रमिति । अत एव वक्ष्यति—'अन्योन्याभिभव–' इत्यादि ( का० १२ ) । सत्त्वसमुद्रेकः=परिणामविशेषः । तैजसेन्द्रियसंबन्धेन बुद्धेरावरणात्मकस्य तमोगुणस्य अभिभवे=न्यक्कारे सति यः सत्त्वसमुद्रेकः=प्रकाशात्मकस्य सत्त्वगुणस्य स्फोरणं सोऽध्यवसाय इति सरलार्थः । स चाध्यवसाय आत्मधर्म इति नैयायिकाः । बुद्धिधर्म ( बुद्धेर्व्यापारः ) इति सांख्यादयः । ( सांख्ययोगवेदान्तिनः )

यद्वा—उपात्तशब्दः सन्निहितवाची, सन्निहितविषयाणामिन्द्रियाणां वृत्तौ=सन्निकर्षे सतीत्यर्थः । सन्निहित एव विषये सन्निकर्षो जायते न व्यवहित इति भावः ॥ अत्र तमोऽभिभवतुल्यकाले जातो यो बुद्धेः सत्त्वसमुद्रेकः स एव वृत्तिपदार्थत्वेनाभिप्रेयते, न तु 'उपात्तविषयाणामिन्द्रियाणाम्' इत्यादिना इन्द्रियसन्निकर्षाद्यभिधानमपि, तस्य[1] तमोनिरसनमुखेन वृत्त्युत्पत्तिहेतुत्वेऽपि वृत्तिलक्षणघटकत्वाभावात् । तेन नानुमानागमवृत्तिषु वृत्तिलक्षणस्याव्याप्तिः । अन्यथा[2] लिङ्गादिजन्यानुमानादिवृत्तेरिन्द्रियजन्यत्वाभावेन तत्र वृत्तिलक्षणाव्याप्तेर्दुरुद्धरत्वात् ।

तथा च सत्त्वोद्रेक एव वृत्तिपदार्थः, तत्र च तमोऽभिभवनं कारणं, तमोऽभिभवे चेन्द्रियसन्निकर्षव्याप्तिज्ञानादिकं निमित्तमित्यत्र फलितम् ॥ ❀ ॥

अत्रेदं बोध्यम्—यथा तडागोदकं स्वभावतः चलनस्वभावमपि निर्गममार्गप्रतिबन्धे सति न क्षेत्रमुपसृत्य तदाकारं भवति, तदेव तु प्रतिबन्धापगमे छिद्रद्वारा बहिर्निर्गत्य कुल्यात्मना क्षेत्रमुपसर्पत् तद्वदेव चतुष्कोणाद्याकारं केदारान् प्रविश्य परिणतं भवति, तथा स्वभावतः सर्वविषयप्रकाशनसमर्थमपि बुद्धिसत्त्वं तमोगुणेन प्रतिबद्धं सत् स्वयं घटपटादिविषयोपसर्पणेऽसमर्थमपि चक्षुरादीन्द्रियसन्निकर्षद्वारा तमोनिरासे सति इन्द्रियात्मकनालिकाद्वारा घटादिविषयदेशं गत्वा तत्तद्विषयाकारेण परिणमते, यश्चायं बुद्धितत्त्वस्य विषयाकारपरिणामः, स एव 'अध्यवसाय' इति, 'वृत्ति'रिति 'ज्ञान'मिति प्रमाणमिति चाभिधीयते इति ।

इयांस्त्वत्र विशेषः—यः खलु चक्षुरादीन्द्रियसन्निकर्षद्वारा तमोऽभिभवसमकालीनसत्त्वसमुद्रेकप्रयुक्तो बुद्धेर्विषयाकारपरिणामः सोऽयं 'प्रत्यक्षप्रमाणम्' इति व्यवह्रियते, व्याप्तिज्ञानजन्यश्च यस्तथा[3]विधः परिणामः सोऽनुमानप्रमाण-

१ तस्य=इन्द्रियसन्निकर्षादेः । २ विषयेन्द्रियसन्निकर्षजन्यस्यैव बुद्धेः सत्त्वोद्रेकस्य वृत्तिलक्षणत्वे इत्यर्थः । ३ तथाविधः=विषयप्रकाशकः सत्त्वोद्रेकरूपः । अत्रायं निष्कर्षः—इन्द्रियसंचारमार्गेण बाह्यवस्तुसंबन्धाच्चित्तस्याऽखिलार्थवासनावत इन्द्रियविषयसामान्यविशेषात्मनोऽर्थस्य विशेषाऽवधारणप्रधाना वृत्तिः प्रत्यक्षम् । यथा—"घटोऽयम्" इत्यादि । गृहीतव्याप्तिकेन हेतुना साध्यवति पक्षे ज्ञायमानेन साध्यस्य सामान्यात्मनाऽध्यवसायोऽनुमानम् । यथा—"वह्निमान् धूमात्" इत्यादि । प्रकृतवाक्यार्थयथार्थज्ञानवत्त्वरूपाऽऽप्तत्वविशिष्टेन पुरुषेण दृष्टश्रुतानुमितार्थानां परं प्रति यथार्थबोधनार्थमुपदिष्टेनाऽऽकाङ्क्षासत्तियोग्यतादिमता शब्देन श्रोतुस्तदर्थाकारा वृत्तिरागमः । यथा—"स्वर्गकामो यजेत" इत्यादिवाक्यात् स्वर्गकामनावता यागः कार्य इति पौरुषेयबोधः सर्वत्र फलम् । येन—"जानामि, ज्ञातः स्फुरति घटादिः प्रकटः" इत्येवं व्यवहरति जनः । तत्र यस्य शब्दस्य भ्रमादिमान् अनाप्तो वक्ता स नागमः । यथा—"चैत्यवन्दनं कार्यम्" इत्यादि । मन्वादिस्मृतयस्तु—निर्णीतप्रमाणमूलकत्वादागमा एव । एवमन्येऽपि दृष्टार्थका अस्मदादिशब्दा इति । ( योगचन्द्रिकायां नारायणतीर्थस्वामिनः )

इदं तावत् प्रमाणम् ।

मिति व्यपदिश्यते, वाक्यजन्यश्च यस्तादृशः परिणामविशेषः स आगमप्रमाणमित्यभिधीयते । तदेवाह—इदं तावत् प्रमाणमिति ।

'तावत्' इति वाक्यालङ्कारे । इदम्=इन्द्रियसन्निकर्षादिना जायमानं यद् बुद्धितत्त्वगतसत्त्वाधिक्यप्रयुक्तं बुद्धेर्विषयाकारपरिणामशीलत्वं तदिदं प्रमाणमित्युच्यत इत्यर्थः । नन्वन्तःकरणस्य चित्तस्य निरवयवत्वेन पुरुषवदपरिणामित्वात्कथं विषयाकारपरिणामशीलत्वं तस्येति चेत् । अत्राहुः—न खलु निरवयवत्वम् अपरिणामित्वे तन्त्रम्, अन्यथा प्रधानस्यापि निरवयवत्वेन परिणामित्वानुपपत्तेः, अपि तु चेतनत्वं तत्र तन्त्रम्, एवं चान्तःकरणस्य चित्तस्य चेतनत्वाभावेन तस्य विषयाकारपरिणामशीलता सूपपादैवेति ॥ एवं च "चित्तमपरिणामि निरवयवत्वादात्मवत्" इति प्रयोगश्चेतनत्वोपाधिसंवलितत्वेन दुष्ट इति तत्त्वम् ॥

वस्तुतस्तु—"हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥" [सां० १।१२४ । सां० का० १०] इति सांख्यस्मरणात् प्रधानातिरिक्तस्य सर्वस्यैव बुद्ध्यादेः सावयवत्वेन मध्यमपरिमाणवत्त्वान्न विषयाकारपरिणामानुपपत्तिः, मध्यमपरिमाणत्वेऽपि अतिनिर्मलविरलतैजसद्रव्यत्वेन तरणिकिरणवत् सत्वरप्रसरोपपत्तेर्न विलम्बेन विप्रकृष्टध्रुवादिविषयप्रतिभासानुपपत्तिश्च, ध्रुवादिविषयपर्यन्तगमनेऽपि अच्छिन्नमूलसन्तत्यङ्गीकारेण अन्तःकरणस्य देहसंबन्धसद्भावान्न देहस्य निर्जीवत्वापत्तिरित्यपि ध्येयम् ॥

एतेन "अन्तःकरणस्याणुपरिमाणत्वे प्राणनक्रियाधारस्य[१] तस्य दूरवर्तिविषयप्रदेशगमने प्राणस्यापि निर्गतत्वेन देहपातापत्तिः, तस्य विभुत्वे च निष्क्रियत्वेन बहिर्निर्गमनासंभवेन विषयाकारपरिणामानापत्तिः, तस्य मध्यमपरिमाणत्वे च देहवन्मन्दगामित्वेन झटिति विषयप्रतिभासानुपपत्तिः" इति शङ्काऽपि निराकृता वेदितव्या ॥

तथा चाहुर्योगभाष्यकाराः—"घट[२]प्रासादप्रदीपकल्पं संकोचविकाशि-

१ "सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च" [२।३१] इति कापिलसूत्रादन्तःकरणत्रयव्यापारस्यैव प्राणत्वादन्तःकरणनिर्गमे प्राणनिर्गमस्यावश्यंभावादिति भावः । तस्य=अन्तःकरणस्य ॥ २ घट–राजमन्दिररूपाल्पमहदाश्रयभेदात् दीपस्य प्रकाशो यथा संकुचितो विशालश्च भवति, एवं पिपीलिकागजरूपाल्पमहाश्रयभेदात् चित्तमपि स्वल्पमहत्परिमाणवज् जायते, अतएव तत्तच्छरीरपरिमाणतुल्यपरिमाणं चित्तमिति सांख्याः स्वीकुर्वन्ति, तथाच= शरीरपरिमाणतुल्यपरिमाणवत्त्वे च परलोकगमनरूपोऽन्तराभावः. पुनस्ततः आगमनरूपः संसारश्चेति द्वयमपि स्वरसत उपपन्नं भवति । एतदुक्तं भवति—चित्तं यदि विभु स्वीक्रियेत तदा निष्क्रियत्वात् तस्य परलोके गमनरूपा तत आगमनरूपा च क्रिया नोपपद्येत, तस्मात् मध्यमपरिमाणं चित्तमित्युपेयमिति भाष्यार्थः ।

अनेन यश्चेतनाशक्तेरनुग्रहः, तत्-फलं, प्रमा बोध इति ।

बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत् । एवं बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा

चित्तं शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्नाः, तथा चान्तराभावः संसारश्च युक्तः" इति ॥

यथा चान्तःकरणस्य नाणुत्वं विभुत्वं वा, तथा,—"न व्यापकत्वं[1] मनसः करणत्वादिन्द्रियत्वाद्वा" [५।६९] "सक्रियत्वाद् गतिश्रुतेः" [५।७०] "न निर्भागत्वं तद्योगाद् घटवत्" [५।७१] इत्यादिसांख्यसूत्रेषु व्यक्तम् ॥ ॐ ॥

इत्थं प्रमाणसामान्यस्य लक्षणमभिधाय साम्प्रतं तत्फलभूतां प्रमामाह—अनेनेति । अनेन=विषयाकारधारिणा बुद्धितत्त्वेन चेतनाशक्तेः=चेतनस्य पुरुषस्य यः अनुग्रहः=स्वोपगृहीतानां विषयाणां स्वप्रतिबिम्बिते चेतने समर्पणं तत् 'फलम्' इति, 'बोध' इति, 'प्रमा' इति चोच्यत इत्यर्थः ।

अन्तःकरणस्य स्वभाव एवायं यदिदमिन्द्रियैरुपनीतान् विषयान् स्वस्वामिन आत्मने समर्पयतीति ।

यथोक्तं विष्णुपुराणे—"गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति ।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः ॥" [१।१४।३५] इति ।

इन्द्रियसन्निकर्षादिना जायमानः 'अयं घटः' इत्यादि बौद्धो बोधः प्रमाणं, तदनूपजायमानो 'घटमहं जानामि' इत्यादिपौरुषेयो बोधश्च प्रमेति भावः ॥ॐ॥

यदुक्तं 'चेतनाशक्तेरनुग्रहः' इति, तत्र 'कोऽसावनुग्रहः'? इति जिज्ञासायाम् अनुग्रहपदार्थं विशदीकरोति—बुद्धीति । हि=यतः बुद्धितत्त्वं प्राकृतत्वात्=जडप्रकृतिकार्यत्वात् अचेतनम्, इति=अतस्तद्धर्मोऽध्यवसायोऽपि अचेतन इत्यर्थः । तदीयः=बुद्धिसंबन्धी, अध्यवसायः='इदमेवे'ति वृत्तिविशेष इत्यक्षरार्थः । तथा च प्रकृतेरचेतनत्वात् तद्विकृतेर्बुद्धितत्त्वस्याचेतनत्वम्, तस्याऽचेतनत्वात्तद्वृत्तिविशेषरूपाध्यवसायाप्यचेतनत्वमिति[2] सरलार्थः । "कार्यगुणाः कारणगुणानारभन्ते"[3] इति न्यायादिति भावः । तत्र दृष्टान्तमाह—घटादिवदिति । यथा अचेतनमृदुपादानका घटादयः साक्षात्परम्पराविकारा अचेतना एव प्रसिद्धास्तद्वदित्यर्थः ।

१ मनो न विभु, करणत्वात्, इन्द्रियत्वात्, क्रियावत्त्वात्, परलोके गमनशालित्वाच्च । निर्भागत्वं=निरवयवत्वं मनसो नेत्यर्थः । कुतः? तद्योगात्=एककाले अनेकेन्द्रियैः सह संयोगात् किन्तु घटवत् सावयवम्, इति क्रमेण सूत्राणामर्थः । २ एवं च "सर्वं साक्षात्परम्पराविकारजातम् अचेतनं, अचेतनोपादानकत्वात्" इत्यनुमानं तत्र प्रमाणमिति भावः। ३ तथा च कणभुक्सूत्रम्—"कारणगुणपूर्वकः कार्यगुणो दृष्टः" (वै० २।१।२४) अस्य चायमर्थः—कार्यस्य=घटपटादेर्यो रूपादिविशेषगुणः स कारणस्य=कपालतन्त्वादेर्यो रूपादिविशेषगुणस्तत्पूर्वक उपलब्ध इति । इदमत्रोपदिष्टं भवति—कार्ये त एव गुणाः

अचेतनाः, पुरुषस्तु सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धितत्त्व-

सुखादीनामपि चित्संबन्धमन्तरेण स्वयं प्रकाशासंभवप्रदर्शनाय तेषामप्य-चेतनत्वं साधयति—एवमिति। उक्तयुक्तेरित्यर्थः। बुद्धितत्त्वस्येति। परिणाम-भेदा इत्यन्वितम्। तथा च-बुद्धितत्त्वस्य परिणामभेदाः=विकारविशेषाः सुखादयः=सुखदुःखादयोऽप्यचेतना इत्यर्थः।

कस्तर्हि चेतनः? इत्यत्राह—पुरुषस्त्विति। 'तु' शब्दो बुद्धितत्त्वाद् वैल-क्षण्यं पुरुषस्य द्योतयति। तदेवाह—चेतन इति।

'चेतनोऽहं जानामि' "सुखी" इति चैतन्यसामानाधिकरण्येन ज्ञानसुखादे-रनुभूयमानत्वेन पुरुषस्यैव ज्ञानसुखादिमत्त्वोपपत्तेः कथमभिहितं 'बुद्धेः परिणा-मविशेषाः ज्ञानसुखादयः' इति, इत्याशङ्क्याह—सुखाद्यननुषङ्गीति। 'असङ्गो ह्ययं पुरुषः' इतिश्रुतेर्ज्ञानसुखाद्यनाधार इत्यर्थः। एतेन तन्त्रान्तराभिमतं ज्ञान-सुखादीनामात्मधर्मत्वमनादृतं भवति। तथा चोक्तम्—

"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमया धर्मा प्रकृतेस्ते तु नाऽऽत्मनः॥" इति।

कथं तर्हि "चेतनोऽहं जानामि, सुखी" इति प्रतीतिः? न ह्यन्यदीयज्ञानसु-खादिना अन्यो ज्ञानसुखादिमान् भवतीत्यत्राह—सोऽयमिति। 'ज्ञान-सुखादिना' इत्यस्य 'ज्ञानसुखादिमानिव भवति' इत्यत्रान्वयः। तत्प्रतिबिम्बितः= बुद्धिप्रतिबिम्बितः=बुद्धितत्त्वे प्रतिफलितः सन्। चित्तगतेन ज्ञानादिना पुरुषस्य

प्रादुर्भवन्ति, ये तत्कारणे समवयन्ति। येषां च कारणे न समवायः, न च तत्पूर्वकाः कार्यगुणाः कथंचिदाविर्भवन्ति। न वा कदाचिदिदमित्थं विपर्येति—कारणे वर्तमानाः गुणाः कार्ये न प्रादुःष्युः, ततो विलक्षगाः वा तत्र प्रादुर्भवेयुः। अतः कार्यं दृष्ट्वा निःशंकमनुमातुं शक्यते—येऽमी कार्यगुणाः अनुभूयन्ते, नूनं तत्सजातीयास्तत्कारणे विद्यन्ते, ये चात्र कार्ये नोपलभ्यन्ते, न च ते तत्रापि वर्तन्ते इति। सर्वस्य जगतः (पदार्थमात्रस्य) कारणं प्रकृतिरचेतना इति तत्कार्यं तद्धर्मश्चापि सर्वः अचेतन एव, किमुक्तम्? ऋते चितिशक्तेः सर्वमेव पदार्थजातमचेतनम्, साक्षात् परम्परया वा सर्वस्यैव प्रकृतिकार्यत्वात्, 'घटादिवत्' इत्युदाहरणप्रदर्शनं तु "मृदचेतना तत्कार्यं घटोऽप्यचेतनः" इति स्थूलधियामपि प्रसिद्धिद्योतनायैव, लोकप्रसिद्धप्रत्यक्षोदाहरणेनैव हि लोकातिगानां (इन्द्रियागोचराणां) तथात्वं निश्चाययन्ति शास्त्रकाराः, एवं हि झटिति प्रतिपत्तारो भवन्ति श्रोतारः, एतदिव तदपि भवेदेवेति, तस्मान्नापार्थं तत्प्रदर्शन-मिति विभावनीयं सुधीभिः॥ ❀॥

१ असङ्गः=निर्लेपः। ननु किमिदं नाम निर्लिप्तत्वम्? उच्यते—अनुयोगिता-संबन्धेन विजातीयसंयोगवत्त्वं लिप्तत्वम्। तदभाववान् निर्लेपः। तत्त्वं च निर्लिप्तत्वम्। वैजात्यं चात्र—"अम्भसा लिप्तम् भसना लिप्तम्, तैलेन लिप्तं शरीरम्" इत्याद्यनुगत-प्रतीतिसिद्धनोदत्वव्याप्यजातिविशेषरूपं बोध्यम्। विस्तरस्त्वन्यतोऽनुसन्धेयः।

वर्तिना ज्ञानसुखादिना तत्प्रतिविम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते ।

चितिच्छायापत्त्या चाऽचेतनाऽपि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतनवद् भवतीति ।

---

ज्ञानादिमत्त्वप्रतीतिरित्यर्थः । अन्यगतस्याऽन्यत्रभाने निमित्तमाह—तच्छायापत्त्येति । बुद्धितत्त्वतादात्म्यापत्त्येत्यर्थः । चितिचित्तयोरभेदग्रहादिति यावत् । अयमेवास्मिताख्योऽविवेक इत्यभिधीयते । यथाहुः—

"दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" [ यो० २।६ ] इति,

"बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात् तत्रात्मबुद्धिं मोहेन" इति च ॥ बुद्धितादात्म्यापत्तौ प्रयोजकमाह—तत्प्रतिविम्बित इति । बुद्धितत्त्वे प्रतिविम्बित इत्यर्थः । तथाच सन्निकर्षात् विषयाणामिन्द्रियेषु प्रतिविम्बो जायते । तानि च विषयप्रतिविम्बसहितानीन्द्रियाणि बुद्धावुपतिष्ठन्ते । तत्संबन्धात्तमोऽभिभवे सति सत्त्वोद्रेकात् "अमुकोऽयम्" इति बुद्धेरध्यवसायो नाम वृत्तिर्जायते । तेन बुद्धेरध्यवसायेन बुद्धिप्रतिविम्बिततया बुद्धिस्वरूपतापन्नस्य चेतनस्यापि अध्यवसायवत्त्वमिव प्रतिभाति । सरः प्रतिबिम्बितस्य सूर्यस्य सरस्तरङ्गेण तरङ्गायमानत्वमिवेति भावः । तस्मात् 'ज्ञानसुखादिमानिव' इति 'इव' शब्दः सुष्ठूक्तः ॥ ☙ ॥

नन्वस्तु बुद्धितादात्म्यापत्त्या पुरुषस्य ज्ञानादिमत्त्वं, तथापि कथमचेतनस्य बुद्धितत्त्वस्य तद्धर्मस्य चाध्यवसायस्य चेतनत्वेन भानमित्यत्राह—चितिच्छायापत्त्या चेति । न केवलं ज्ञानसुखाद्यननुषङ्गिणः पुरुषस्यैव बुद्धिस्वरूपतापन्नतया बुद्धिधर्मेणाभिसंबन्धाज् ज्ञानसुखादिमत्त्वमिव भवति, अपितु अचेतनस्य बुद्ध्यादेरपि चेतनपुरुषाभिन्नतापन्नत्वेन पुरुषधर्मेण चैतन्येन संबन्धात् चेतनावत्त्वमिव भवतीति भावः ॥

एवं च बुद्धिपुरुषयोरसंसर्गाग्रहात् (विवेकग्रहाभावात्) पुरुषगतं चैतन्यं बुद्धौ, बुद्धिगतं च ज्ञानसुखादिकं पुरुषे प्रतीयते, वस्तुतो न चैतन्यं बुद्धिधर्मो नापि ज्ञानसुखादिकं पुरुषधर्म इत्यत्र फलितम् ॥ ☙ ॥

---

१ दृक्शक्तिः=पुरुषः, दर्शनशक्तिः=बुद्धिः, इत्येतयोरेकस्वरूपापत्तिरिवास्मितेत्यर्थः ।

२ पुरुषस्य आकारः=स्वरूपं–सदा विशुद्धिः शीलम्=औदासीन्यं; विद्या=चैतन्यम्, पुरुषः सदा शुद्धः उदासीनश्चैतन्यरूपश्चेति सरलार्थः, बुद्धिः अविशुद्धा अनुदासीना जडा च, इति सत्यपि बुद्धिपुरुषयोर्विभागे तथापि मोहेन=अस्मिताख्याऽविवेकेन विभक्तमपश्यन् तत्रात्मबुद्धिं करोतीति पञ्चशिखाचार्यग्रन्थार्थः । तथा च दर्पणमुखयोरसंसर्गाग्रहात् दर्पणनिष्ठमालिन्यस्य यथा मुखे भ्रमस्तथाबुद्धिपुरुषयोरसंसर्गाग्रहात् बुद्धिनिष्ठज्ञानपरिणामित्वस्यापि पुरुषे भ्रम इति भावः ॥

तथा च वक्ष्यति—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेपि तथा कर्तेव भवत्युदासीनः ॥ (का. २०) इति ।

तत्र वक्ष्यमाणकारिकां प्रमाणतयोद्धरति—तथा चेति । यतः चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्मात् पुरुषसन्निधानात् अचेतनमपि महदादिकं लिङ्गं चेतनवद् भवति, तथा गुणानामेव कर्तृत्वेऽपि पुरुषोऽकर्तापि उदासीनः कर्तेव भवतीति वक्ष्यमाणकारिकार्थः ॥

एवम्—"ज्ञानं नैवात्मनो धर्मो न गुणो वा कथंचन । ज्ञानस्वरूप एवाऽऽत्मा नित्यः सर्वगतः शिवः ॥ इत्याद्यपि बोध्यम् ॥

एवं च बुद्धावेव प्रमाख्यं फलं जायते न पुरुषे, तस्याऽसङ्गत्वेन प्रमाधारत्वाभावात्, चितिचित्तयोरभेदग्रहाच्च पौरुषेयबोध इत्युपचर्यत इत्यत्र फलितम् । यद्यपि पूर्वत्र चित्तवृत्तिः पौरुषेयबोधश्चेति प्रमाद्वैविध्यमुक्तम्, इह तु 'अनेन यश्चेतनाशक्तेरनुग्रहः' इत्यादिना चित्तवृत्तेः प्रमाणत्वं पौरुषेयबोधस्य च प्रमात्वमाख्यायते, इति विरोधः, तथापि "फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः" [यो० १।७] इत्यादिना योगभाष्ये पौरुषेयबोधस्यैव फलत्वा-

१ अयमत्र निष्कर्षः—"विज्ञानं यज्ञं तनुते" "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" "ध्यायतीव लेलायतीव" इत्यादिश्रुतिभ्य औपाधिका एव पुरुषे भोगादयो धर्मा न पारमार्थिका इति । ननु पुरुषस्यापि स्वातन्त्र्येण भोगोऽस्त्येव "बुद्धेरेव पुरुषार्थाऽपरिसमाप्तिर्बन्धः, तदर्थाऽवसायो मोक्षः" (यो० २।१८) इति योग भाष्येण तु परिणामरूपः पुरुषस्य भोगो निराक्रियते, "पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति भगवदुक्तेरिति चेत् । नैवम्, भगवद्वाक्यस्य मुख्ये भोगे तात्पर्याभावात् । तथाहि—"कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते" इत्यनेन प्रकृतेः संसारकारणत्वमभिधाय सा किमर्थं करोतीत्याकाङ्क्षायां—"पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इत्यनेन पुरुषस्य भोक्तृत्वेन तद्भोगार्थमित्युक्त्वा, तत् किंपुरुषस्य भोक्तृत्वं स्वाभाविकमिति जिज्ञासायाम्—"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥" इत्यनेन प्रकृतितादात्म्यापन्नस्य गुणसङ्गेन औपाधिकमेव भोक्तृत्वं न पारमार्थिकमित्युक्त्वा—"उपद्रष्टाऽनुमन्ता" इत्यादिवाक्येन स्वाभाविकं साक्षित्वमेव पुरुषस्येति सिद्धान्तितं भगवतेत्यन्यत्र विस्तरः ।

२ एषोऽत्र सरलोऽर्थः—चक्षुरादीन्द्रियद्वारा येयं विषयाकारा चित्तवृत्तिरुदेति सा प्रत्यक्षप्रमाणमिति व्यवह्रियते । किमुक्तम्? चक्षुरादीन्द्रियद्वारा घटादिबाह्यपदार्थैः सह चित्तस्य उपरागे (वृत्तिद्वारा संबन्धे) सति येयं घटादिपदार्थाऽऽकारेण जातिविशिष्टव्यक्तिविषयिका "अयं घटः" इत्याकारा चित्तवृत्तिः सा प्रत्यक्षप्रमाणमित्यभिधीयते । तदनन्तरम् "अहं घटं जानामि" इत्याकारं यद् विषयसहितं चित्तवृत्तिविषयकं पुरुषनिष्ठं ज्ञानं तत् 'फलप्रमा' इति भाष्यते । इन्द्रियार्थसंनिकर्षजन्यार्थाकाराश्रया इन्द्रियाश्रितवृत्तिः प्रत्यक्षं प्रमाणमिति निष्कर्षः ।

अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्यानवस्थितग्रहणेनाऽनिश्चितरूपत्वात्। निश्चयोऽध्यवसाय इति चाऽनर्थान्तरम्।

भिधानेन प्रमाद्वयस्वीकारो नावश्यक इत्याशयेनात्र चित्तवृत्तेः प्रमाणत्वं पौरुषेयबोधस्य च प्रमात्वमिति प्रमैकत्वमभिहितमिति बोध्यम्।

अत एव पूर्वोक्तसांख्यसूत्रे "द्वयोरेकतरस्य वा" इत्यनियमबोधको वाशब्दोऽभिहितः सूत्रकारेण।

एवं च 'चित्तवृत्तिः प्रमाणं, पौरुषेयबोधश्च प्रमा', चित्तवृत्तिस्तु न प्रमा, चक्षुरादिषु च परम्परयैव प्रमाणत्वव्यवहारो न साक्षादिति सिद्धान्तः॥ ॐ॥

एवं प्रत्यक्षलक्षणमाख्याय लक्षणं सङ्गमयितुं लक्षणघटकपदानां प्रयोजनं साम्प्रतं वक्ति—अत्रेति। 'प्रतिविषयाध्यवसायः' इति प्रत्यक्षलक्षणे अध्यवसायशब्देन संशयम्=अनवधारणात्मकमनेककोटिकं ज्ञानं व्यवच्छिनत्ति=व्यावर्तयति इत्यर्थः। तत्र "एकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशयः" इति वैशेषिकदर्शनव्याख्याने शङ्करमिश्राः। "यद्वै विशेषं बुभुत्समानस्य किंस्विदित्यनवधारणं ज्ञानं स संशयः" इति काणादभाष्ये। तत्र "एकधर्मिकविरुद्धभावाभावप्रकारकमनवधारणात्मकं ज्ञानं संशयः" इति निकृष्टलक्षणम्।

ननु कथम् अध्यवसायपदेन संशयस्य व्यावृत्तिरविरोधादत आह—संशयस्येति। अनवस्थितग्रहणेन=एकधर्मिकनानाधर्मरूपनानाकोटिप्रकाशनेन, अनिश्चितरूपत्वात्=एककोटिकत्वासत्त्वारूपानवधारणात्मकत्वादित्यर्थः।

ननु अनिश्चितज्ञानस्य निश्चयपदेनैव वारणं युक्तियुक्तं, तस्यैव तद्विरुद्धत्वादिति निश्चयपदाभावे कथम् अध्यवसायपदेन अनिश्चयज्ञानवारणमित्यत्राह—निश्चय इति। अन्योऽर्थः—अर्थान्तरम्, न अर्थान्तरम् अनर्थान्तरं=न भिन्ना-

१ चित्तवृत्तेर्विषयाकारतासंपादने कारणत्वात् चक्षुरादीनां प्रमाणत्वमिति भावः, प्रमाणोपयोगित्वात् तत्र प्रमाणत्वव्यवहार इति तत्त्वम्। २ 'ह्रदपर्वतौ वह्नितदभाववन्तौ' इति ज्ञानमपि विरुद्धभावाभावप्रकारकमिति तत्राति व्याप्तिवारणाय—एकधर्मिकेति। 'वृक्षः संयोगवान् तदभाववांश्च' इति समुच्चयवारणाय—विरुद्धेति। 'घटो द्रव्यं पृथिवी च' इति ज्ञानस्य संशयत्ववारणाय—भावाभावेति। इच्छाद्युदासार्थं ज्ञानमिति विशेष्यभागः" इति दिनकर्यां महादेवः। यदा हि प्रतिपत्ताऽयमुभयसाधारणं कंचिद् धर्मं क्वचिदेकत्र धर्मिणि प्रतिपद्यते, तस्य धर्मिणो विशेषं च कुतश्चिन्निमित्तान्नोपलभते, पूर्वप्रतीतयोः परस्परविरुद्धयोः सामान्यविशेषयोश्च स्मरति, स्मृतयोश्च तयोर्मिथो विरुद्धत्वादेकत्र सद्भावं, तदविनाभूतस्य च सामान्यस्य दर्शनात्तत्राप्यभावं, संभावयति, तदाऽस्य प्रतिपत्तुः सामान्याश्रयत्वेनावधारिते धर्मिणि विशेषानवधारणात्मको यः प्रत्ययो जायते, स एव संशय इति सारम्।

विषयग्रहणेनाऽसद्विषयं विपर्ययमपाकरोति ।

---

र्थकम् एकार्थकमिति यावत् । निश्चयाध्यवसायशब्दौ पर्यायाविति सरलार्थः । ततश्च अध्यवसायपदेन निश्चितरूपेण अनिश्चितरूपस्य संशयस्य वारणं युक्तियुक्तमेव, तेजस्तिमिरयोरिव परस्परं विरुद्धत्वादिति भावः ॥

तदेवम् अध्यवसायपदव्यावर्त्यं दर्शयित्वा विषयपदव्यवच्छेद्यं सम्प्रति दर्शयति—विषयग्रहणेनेति । असद्विषयम्=न विद्यते सन् विषयो यस्य तादृशं मिथ्याज्ञानात्मकं विपर्ययं व्यावर्तयतीत्यर्थः । विपर्ययस्तु "अतस्मिंस्तद्ग्रहः" भ्रम इति यावत् । यथा पुरोवर्तिन्यरजते शुक्त्यादौ रजतारोपः—'इदं रजतमिति' ।" इति तर्कभाषायां केशवमिश्राः । "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्"[1] [ यो० १।८ ] इति योगे पतञ्जलिः । "इन्द्रियदोषात्[2] संस्कारदोषाच्च विपर्ययः" [ वै० ९।२।१० ] इति वैशेषिके भगवान् कणादः ॥

तत्सिद्धमेतत्—विपरीतवृत्तिरूपं ज्ञानं विपर्ययः । एवं च यत्र स्थाणाविन्द्रियसन्निकर्षात् पुरुषाकारा बुद्धिवृत्तिर्जायते, तत्र तद्वृत्तेर्विषयो नास्तीति भावः ॥ ❀ ॥

---

१ विपर्यय इति लक्ष्यनिर्देशः, मिथ्याज्ञानमित्यादि लक्षणम् । तच्चायथार्थज्ञानम् । तद्विकल्पेऽप्यनुगतमित्यत आह—अतद्रूपप्रतिष्ठमिति । तच्च रूपं चेति तद्रूपं=ज्ञानस्वरूपम्, तस्मिन्न विद्यते प्रतिष्ठा=बाधाऽप्रतिबध्यत्वं यस्य तत् । यथा—शुक्त्यादिविशेषदर्शनप्रतिबध्यत्वं रजतादिज्ञानम् । विकल्पस्तु प्रत्यक्षप्रमावद् बाधाऽप्रतिबध्य एव । 'इदमनित्यम्' इति ज्ञातेऽपि बाधितत्वे कलहादौ शाब्दज्ञानोदयात् । अतो न तत्रातिव्याप्तिः । बाधबाध्यपरोक्षप्रमायामतिव्याप्तिवारणाय—मिथ्याज्ञानमिति । इत्येतद् व्याख्यायां नारायणतीर्थस्वामिनः । 'अतद्रूपप्रतिष्ठम्' इति पदे तद्रूपशब्देन ज्ञानस्य नैजं रूपं गृह्यते । तथा च यज् ज्ञानं निजे रूपे प्रतिष्ठितं न भवति, अतद्रूपप्रतिष्ठं तत्कथ्यते, चन्द्रे एकत्वज्ञानं सर्पे सर्पज्ञानं च निजरूपप्रतिष्ठितत्वात् तद्रूपप्रतिष्ठमस्तीति प्रमाणज्ञानं तद्भवति, यत्तु चन्द्रे द्विचन्द्रज्ञानं रज्ज्वां वा सर्पज्ञानं न तत् तद्रूपप्रतिष्ठं वर्तते, उत्तरकालिकेन यथार्थज्ञानेन तस्य बाधितत्वात्, अतस्तद् विपर्ययज्ञानमित्युच्यते । एवं च सर्पविषयकं सर्पज्ञानं न केनचिज् ज्ञानेन बाधितं भवतीति प्रमाणपदवाच्यं तद् भवति, रज्जुविषयकं सर्पज्ञानं तूत्तरकालिकयथार्थज्ञानेन बाधितं भवतीति स्वरूपाप्रतिष्ठितत्वाद् विपर्ययज्ञानपदवाच्यं तज्जायते । तत्र यज् ज्ञानं यथार्थवस्तु विषयीकृत्य न बाधितं भवति तत्प्रमाणं, यच्च ज्ञानम् उत्तरज्ञानेन बाधितं जायते न तत्प्रमाणमिति सरलार्थः । २ इन्द्रियदोषो=वातपित्ताद्यभिभवकृतम् अपाटवम्, संस्कारदोषो=विशेषादर्शनसाहित्यं तदधीनं हि मिथ्याज्ञानं जायते, इत्येतद् व्याख्यायां शङ्करमिश्राः । इन्द्रियदोषादन्यथाभूतमन्यथोपलभते, संस्कारदोषादन्यथाभूतमन्यथा स्मरति । यच्चान्यथा भूतस्यान्यथानुमानं तदपीन्द्रियदोषादेवेति चन्द्रकान्तः ॥

प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराकृता भवन्ति ।

तदेवं समानासमानजातीयव्यवच्छेदकत्वात् 'प्रतिविषयाध्यवसाय' इति दृष्टस्य संपूर्णं लक्षणम् ।

---

'विषयं विषयं प्रति वर्तते' इति प्रतिपदादानव्यावर्त्यमाह—प्रतिग्रहणेन चेति । "विषयं विषयं प्रति वर्तते" इत्यनेन इन्द्रियस्य विषयवृत्तित्वकथनादिन्द्रियार्थयोः सन्निकर्षलाभ इति भावः । अनुमानस्मृत्यादय इति । अनुमितौ स्मृतौ शाब्दबोधे च याश्चित्तवृत्तयस्ताः पराकृताः=निराकृता भवन्तीत्यर्थः । तासां विषयेन्द्रियसन्निकर्षजन्यत्वाभावान्न प्रत्यक्षप्रमाणत्वमिति भावः ॥

प्रत्यक्षलक्षणे लक्षणलक्षणं सङ्गमयन् प्रकृतमुपसंहरति—तदेवमिति । यस्मात् लक्षणान्तर्गतविशेषणपदैरलक्ष्यनिरासस्तस्मादित्यर्थः । प्रत्यक्षत्वेन समानजातीयाः संशयादयः, विजातीयत्वेन असमानजातीया अनुमानस्मृत्यादयः, तेषां व्यवच्छेदकत्वात्=व्यावर्तकत्वात् "प्रतिविषयाध्यवसायः" इति दृष्टस्यादुष्टं लक्षणमित्यर्थः । तदेतदाहुर्जैमिनीयन्यायमालायां माधवाचार्याः—

"सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धः आकारो लक्षणम् । तेन च लक्षणेन लक्ष्ये वस्तुनि संभावनाबुद्धौ जातायां प्रमातुमुद्युक्तः प्रमाणेन तदवगच्छति । तद्यथा—"सास्नादिमती गौः" इत्युपश्रुत्य चतुष्पात्सु जीवेषु तल्लक्षणलक्षितपदार्थमन्विष्य "इयं गौः" इति चक्षुषाऽवगच्छति" इति ॥ लक्षणस्योपयोगश्च पूर्वाचार्यैर्दर्शितः—

"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥" इति ॥

---

१ प्रत्यक्षादिप्रमाणेनानुभूतस्य ( ज्ञातस्य ) विषयस्य यदिदं कालान्तरे पुनरुद्बोधकसांनिध्यात् संस्कारद्वारा स्फुरणं स चित्तस्य परिणामविशेष एव स्मृतिरुच्यते । एतदुक्तं भवति—यदा किंचिद् वस्तु दृष्टं श्रुतं वा भवति, तदावश्यमेकविधस्तदाकारसंस्कारश्चित्तेऽङ्कुरितो जायते, पुनः समयान्तरे यदा काचित्तदुद्बोधिका सामग्री उपस्थिता भवति तदा स एव चित्तवर्ती संस्कारः जागरितो भूत्वा ज्ञातपदार्थाकारेण चित्तं रञ्जयति योऽयं ज्ञातपदार्थविषयकश्चित्तस्य तदाकारपरिणामः सैव स्मृतिरिति । इयं च चित्तवृत्तिर्नेन्द्रियसन्निकर्षजन्या भवतीति युक्तं प्रतिग्रहणेन तद्वारणमित्याशयः । एवमनुमानेऽपि सा न तथा भवतीति विज्ञेयम् । २ समानजातीयम्=अनुमानादि असमानजातीयं=प्रत्यक्षाभासप्रमेयादि ततो व्यावृत्तिः प्रत्यक्षलक्षणकरणस्य प्रयोजनम् । यः खलु कुतश्चिद् व्यामोहात् समानासमानजातीयव्यावृत्तं तद्रूपं न शक्नोति ग्रहीतुं सोऽनेन लक्षणेन बोध्यते—एवं लक्षणकं प्रत्यक्षमिति ।

तन्त्रान्तरे लक्षणान्तराणि तैर्थिकानां न दूषितानि, विस्तरभयाद् इति ।

नाऽनुमानं प्रमाणमिति वदता लौकायतिकेनाऽप्रतिपन्नः

---

ननु शास्त्रान्तरे "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" [ सर्वदर्शनसंग्रहे ] "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्', [ अनिमित्तं विद्यमानोपलम्भनत्वात् ]" [ जैमि० अ० १ । पा० १ । अधि० ४ ] "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" [ न्या० १।१।४ ] इत्येवंविधानि यानि प्रत्यक्षलक्षणानि तैस्तैस्तैर्थिकैरुक्तानि, तानि किं दुष्टानि, आहोस्विददुष्टानि ? यदि दुष्टानि तर्हि कुतो न दूषितानि ? अथादुष्टानि तर्हि किमर्थं लक्षणान्तराश्रयणम् इत्याशङ्क्य यद्यपि दुष्टान्येव तानि तथापि विस्तरभयान्न दूषितानीत्याह—

तन्त्रान्तर इति । तन्त्रान्तरे=दर्शनान्तरे सांख्यातिरिक्तन्यायप्रभृतिशास्त्रे तैर्थिकानां=दार्शनिकानां शास्त्रप्रणेतॄणां गोतमप्रभृतिमुनीनां यान्यन्यानि प्रत्यक्षलक्षणानि तानि विस्तरभयान्न दूषितानीत्यर्थः । कथं तानि दुष्टानीति तु प्रत्यक्षलक्षणोपसंहारावसरे न्यायवार्तिके तात्पर्यटीकायां, तत्त्वप्रदीपिकायां च सुधीभिराकलनीयं, ग्रन्थविस्तरभियैव तु नास्माभिरविविच्यते ॥ इति सारबोधिन्यां प्रत्यक्षनिरूपणम् ॥ १ ॥ ॐ ॥

## अथानुमाननिरूपणम् ।

अथानुमाननिर्वचनपरं "त्रिविधमनुमानम्" इति कारिकांशं व्याचिख्यासु-

---

१ कल्पनाया अपोढम्=अपेतं कल्पनास्वभावरहितं, यत् किल न नाम्नाऽभिधीयते न च जात्यादिभिर्व्यपदिश्यते तत् प्रत्यक्षमित्यर्थ इति बौद्धाः । यदुक्तम्—"कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् । विकल्पो वस्तुनिर्भासादविसंवाद्युपप्लवः ॥" २ पुरुषस्येन्द्रियाणां सति=विद्यमाने विषये संप्रयोगे सति यद् बुद्धेः=ज्ञानस्य जन्म तत्प्रत्यक्षम् इति जैमिनिः । एतत् प्रत्यक्षं धर्मज्ञाने न निमित्तं=प्रत्यक्षप्रमासाधनानीन्द्रियाणि धर्मप्रमां न साधयन्ति, तत्र हेतुमाह—विद्यमान इति । वर्तमानस्यैव वस्तुन इन्द्रियैरुपलम्भात् धर्मस्य च ज्ञानकालेऽसत्त्वेनेन्द्रियायोग्यत्वादिति तत्सूत्रार्थः ३ इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज् ज्ञानं तत् प्रत्यक्षम् । भ्रमवारणाय—अव्यभिचारीति । भ्रमभिन्नमित्यर्थः । तद्विभागमाह—अव्यपदेश्यं=निर्विकल्पकं, व्यवसायात्मकं=सविकल्पकमिति ॥ ४ तीर्थं=दर्शनशास्त्रं "तीर्थं स्याद्दर्शनेष्वपि" इति कोशात्, तदधीयते विदन्ति वा तैर्थिकास्तदाह—दार्शनिकानामिति । ५ गौतमीयलक्षणस्य तत्र दुष्टत्वानुक्तेरुक्तम्—तत्त्वप्रदीपिकायामिति । द्वितीयपरिच्छेदे चित्सुखाचार्यैः 'मानाधीना मेयसिद्धिः' इति कारिकाव्याख्यायामित्यर्थः ।

सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? नच पुरुषान्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम् ।

स्तावदनुमानाप्रामाण्यवादिनं चार्वाकं शिक्षयति—नानुमानं प्रमाणमिति । लोके आयतं=विस्तीर्णमिव यत् प्रसिद्धं प्रत्यक्षप्रमाणं तल्लोकायतं, तत्प्रतिपादकं चार्वाकशास्त्रमपि लोकायतं, तदधीते तद् वेद यः स लौकायतिकः; तेन=प्रत्यक्षमेवैकं प्रमाणं नानुमानादिकमिति वादिना चार्वाकेण अप्रतिपन्नः= अज्ञानयुतः पदार्थविशेषविषयकज्ञानाभाववान्, सन्दिग्धः=संशययुक्तः पदार्थविशेषविषयकसंशयवान् विपर्यस्तः=भ्रान्तियुक्तः पदार्थविशेषविषयकविपरीतज्ञानवान्, अतद्वति तत्प्रकारकज्ञानवानिति यावत्, एवंविधः पुरुषः कथं प्रतिपद्येत=ज्ञायेत एवंविधत्वेन निश्चीयेत इत्यर्थः । तथाच कस्यचित् पुरुषस्य पुरोवर्तिनो घटस्य घटत्वेन ज्ञानं नास्ति, कस्यचित् घटे 'घटो वा अन्यो वा' इति संशयो वर्तते, कस्यचिच्च पित्तलघटस्य सौवर्णघटत्वेन ज्ञानमस्ति, एतत्सर्वं लौकायतिकेन[2] कथमवधारयितव्यमिति भावः ।

ननु प्रत्यक्षेणैव तत्सर्वं प्रतिपत्तव्यमित्यत्राह—न चेति । पुरुषान्तरगताः= परपुरुषवर्तिनः अज्ञानादयः गौरत्वादिवद् देहधर्मा अपि न प्रत्यक्षेण प्रतिपत्तुं= ज्ञातुं शक्याः, रूपादिमत्त्वाभावाद्, योगिना ज्ञायेतापि प्रत्यक्षेण परकीयाज्ञानादिकं, न तु चार्वाकेण तच्छक्यमित्याह—अर्वाग्दृशेति । बाह्यदृष्टिमता, बाह्यस्थूलवस्तुविषयकज्ञानवताऽयोगिना चार्वाकेणेत्यर्थः । तथाच विष्णुपुराणम्—

यस्मादर्वाग् व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ।
प्रकाशाद्बहिरन्तश्च मनुष्याः साधकाश्च ते ॥ इति ॥

योगिजनो यद्यपि स्वतपोमाहात्म्येन शक्नोति परकीयाज्ञानादिकं सर्वं बोद्धुं, योगीतरस्य तु पुंसो रूपादिमत एव वस्तुनो भवति प्रत्यक्षेण प्रतिपत्तिर्नारूपादि-

---

१ चारु=शास्त्रीयसंस्कारविधुरनरमनोहरम् अङ्गनालिङ्गनादिजन्म सुखमेव पुरुषार्थ इत्येवं विधं वाक्यं यस्य स चार्वाकः[1]=देहात्मवादी प्रत्यक्षैकप्रमाणमानी प्राकृतः पुरुषः । पृषोदरादित्वात् साधुः । राजपुत्रव्यामोहनाय बृहस्पतिना लोकायतं शास्त्रं प्रणीतमिति महाभारतीयखिले हरिवंशे स्पष्टम् । तन्मतं तु सर्वदर्शनसंग्रहादौ सायणादिना किंचित् किंचित् प्रदर्शितम्, तस्मादेव तज् ज्ञातव्यम् । २ लोकायतशब्दात् 'क्रतूक्थादिसूत्रान्ताट्ठक्' इति ठक् ।

---

1 "यद्यपि सुखास्पदमपि वस्तु सर्वथा दुःखसंभिन्नमेव, यथा कमलिनीनालमपि कण्टकाकीर्णं, सुशीतलसलिलमपि रुजाकरं, भ्रमरनिन्दिकेशकलापोऽपि पलितविरूपः, मत्स्योऽपि सशङ्ककण्टकस्तथापि अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव सर्वथोपादेयत्वम् । "न हि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते" । यः खलु दृष्टं सुखं भिया परित्यजेत् स पशुवत् मूर्खो भवेत्" इत्यादिरूपेण हि तदुपदेशशैली या सर्वथा प्राकृतानन्दकरी ॥

नापि प्रमाणान्तरेण, अनभ्युपगमात् । अनवधृताऽज्ञानसंशयविपर्यासस्तु यं कञ्चन पुरुषं प्रति वर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत ।

तदनेनाऽज्ञानादयः परपुरुषवर्तिनोऽभिप्रायभेदाद् वचनभेदाद्

---

मतः, अज्ञानादयश्च न रूपादिमन्त इति कथङ्कारम् अयोगिना चार्वाकेण ते ज्ञायेरन्निति भावः ।

ननु मा भूदध्यक्षेण तेषां[1] ज्ञानं, तद्वचनात्तु तज्ज्ञानं स्यादेवेत्याशङ्क्य वचनस्यापि प्रत्यक्षातिरिक्तत्वेन तेनानभ्युपगमादित्याह—नापीति । प्रमाणान्तरेण=प्रत्यक्षातिरिक्तवचनरूपप्रमाणेन । कुत इत्यत आह—अनभ्युपगमादिति । लौकायतिकेन प्रत्यक्षेतरप्रमाणानङ्गीकारादित्यर्थः ॥ वचनं च प्रत्यक्षातिरिक्तमिति भावः ।

परपुरुषवर्तिनोऽज्ञानादीनबुद्ध्वैव परपुरुषबोधनाय वाक्यं प्रयुञ्जानस्तून्मत्तवदुपहसनीय एव स्याल्लौकायतिक इत्याह—अनवधृतेति । अनवधृताः=अपरिज्ञाताः परपुरुषवर्तिनोऽज्ञानसंशयविपर्यासा येन स तथाभूत इत्यर्थः । वर्तमानः=किमपि वक्तुमितिशेषः । अनवधेयेति । अनवधेयं=प्रयोज्यस्य मनोनिवेशानर्हं वचनं यस्य अश्रद्धेयवाक्यतयेत्यर्थः । पुरुषविशेषमनधिकृत्य अनर्थकवचनप्रयोगेण नायं लौकिको नापि परीक्षक इति धियेति भावः । एतदुक्तं भवति—यदि कंचिद् देशान्तरादागतं पुरुषं प्रति केनचिदुच्येत—"देवदत्तगृहात् तमाह्वय" इति, तदाऽसौ प्रयोज्योऽहं तावद् आगन्तुको देवदत्तगृहमेव न जानामीति जानताऽपि अनेन मां प्रति कथमेवमुच्यते इति तद्वचने मनो न निवेशयति । एवं संशयविपर्यासवन्तावपि । एवं ते सर्वे प्रेक्षावन्तः प्रयोज्या उन्मत्तवदेनमुपेक्षन्त इति ॥

नन्वेतावता कथमनुमानाभ्युपगमस्यावश्यकत्वमित्यत्राह—तदनेनेति[2] । यतो न प्रत्यक्षेण परपुरुषगताज्ञानादिप्रतिपत्तिः संभवति, ततोऽनेन=चार्वाकेण परपुरुषवर्तिनोऽज्ञानादयोऽनुमातव्याः[3]=अनुमानेनैव ज्ञातव्या इति=यत एवम्

---

१ तेषाम्=परपुरुषवर्तिनामज्ञानादीनाम् । तद्वचनात्=परपुरुषवाक्यात् । तज्ज्ञानम्=परवर्त्यज्ञानाद्यवबोधः । २ ननु सत्यमनवधृतपरकीयाज्ञानादिः प्रवर्तमानोऽनवधेयवचनः स्यात् । परन्तु अस्त्येव परकीयाज्ञानादिप्रतिपत्तेरुपायः । तथा हि—'देवदत्तमाह्वय' इत्युक्तो यदि 'इतस्ततो दत्तदृष्टिस्तिष्ठति' तदा तस्य भावविशेषात्, यदि च "कतरस्मिन् प्रदेशे तद् गृहम्" इति प्रतिवक्ति, तदा वचनविशेषाल्लिङ्गात् तदज्ञानं प्रत्येतव्यम् । एवं संशयविपर्यासावपि लिङ्गविशेषात् प्रत्येतव्याविल्यत आह—तदनेनेति । तत्=तस्मात् । ३ तथा च अभिप्रायविशेषलिङ्गेन अभिप्रायविशेषरूपलिङ्गेन वचनविशेषरूपलिङ्गेन वा अज्ञानादयोऽनुमानेनैव ज्ञातव्या इति भावः ।

वा लिङ्गादनुमातव्याः, इत्यकामेनाप्यनुमानं प्रमाणमभ्युपेयम् ।

अतोऽकामेनाऽपि=अनुमानस्य प्रमाणत्वमनिच्छताऽपि तेनानुमानं प्रमाणम् अभ्युपेयम्=अवश्यमङ्गीकरणीयम् ।

ननु केन लिङ्गेन परकीयाज्ञानाद्यनुमितिर्येनानुमानाभ्युपगमस्यावश्यकत्वमित्यत्राह—अभिप्रायभेदादिति । वक्तृतात्पर्यविशेषाद् लिङ्गादित्यर्थः । तात्पर्यप्रतिपत्तिरेव कुतस्त्येत्यत आह—वचनभेदादिति । "अयं जन ईदृशाभिप्रायवान्, एवं वचनप्रयोक्तृत्वात्, सम्प्रतिपन्नवत्" इत्येवं तात्पर्यविशेषम् अनुमाय "अयम् एतद्विषयाज्ञानादिमान्, एतादृशाभिप्रायवत्त्वात्" इत्येवमज्ञानाद्यनुमानमित्यर्थः । यद्वा—अभिप्रायभेदः=अज्ञानादिविशेषः, तस्माज् जातो यो वचनभेदः तस्माद् लिङ्गादित्यर्थः ॥

तथाच "एतद् वचनम् एतदन्तःकरणस्थाज्ञाननिमित्तम्, असंबद्धवचनत्वात्, मदीयासंबद्धवचोवत्" इत्येवं परकीयाज्ञानस्य, "एतद् वचः एतदन्तःकरणस्थसंशयनिमित्तम्, अनिश्चितवचनत्वात्, मदीयानिश्चितवचोवत्" इत्येवं परकीयसंशयस्य, "एतद् वाक्यम् एतदन्तःकरणस्थविपर्ययनिमित्तम्, भ्रान्तिवचनत्वात्, मदीयभ्रान्तिवचोवत्" इत्येवं परकीयविपर्ययस्य च प्रतिपत्तिरनुमेयेति फलितम् ॥

एतदुक्तं भवति—चार्वाकेण "प्रत्यक्षमेवैकं प्रमाणम्" इति स्वगृहेऽवस्थाय उद्घोषितमपि न स्वाभिलषितसाधनाय पर्याप्तं भविष्यतीति परिषदि वादिना समं कस्यांचित्कथायामेतत्संसाधनीयम्, परन्तु यद्यसौ परकीयमज्ञानं संशयं विपर्ययं वा नाऽवधारयेत् तर्हि कथङ्कारं तन्निवारणाय वाक्यमुच्चारयेत्? यद्यपरिज्ञायैवाऽज्ञानादीनि वाक्यमुच्चारयेत्, तर्हि प्रेक्षावद्भिरुन्मत्तवदुपेक्षेतेत्यवश्यमनेन चार्वाकेण "अयं वादी अस्मिन्नर्थेऽज्ञानवान् सन्दिग्धो विपर्यस्तो वा, विलक्षणचेष्टाविशेषात्, नाहं जाने सन्दिहानोऽहं विपर्यस्तोऽहम् इति वाक्यप्रयोक्तृत्वात्" इति लिङ्गद्वारा परकीयमज्ञानादिकमनुमातव्यम् । न चैतदनुमानप्रामाण्यमन्तरा सेद्धुमर्हतीति सिद्धमनुमानस्य प्रमाणान्तरत्वमिति ॥ ॐ ॥

विशदीकृतश्चात्रत्योऽयमर्थो भामत्यां तात्पर्यटीकायां च विस्तरेण शब्दान्तरैर्मिश्रैरेवेति तदेवात्रोद्धृत्य प्रदर्श्यते—

तत्र भामत्यां यथा—"प्रतिपन्नं[2] पुमांसम् अपहाय अप्रतिपन्नसन्दिग्धाः

१ क्वचित्तु पुस्तके 'अभिप्रायभेदाद् वचनभेदलिङ्गात्' इति पाठो दृश्यते, तत्र वचनभेदो लिङ्गं यस्य तादृशात् अभिप्रायभेदात्=अभिप्रायभेदरूपलिङ्गाद् अज्ञानाद्यनुमानमिति व्याख्येयम् । २ प्रतिपन्नः=सम्प्रतिपत्तिमान् पुमान्, तं विहाय अप्रतिपत्तिविपरीतप्रतिपत्तिसंशीतिमन्तः पुमांसः प्रेक्षावद्भिर्न्युपेक्षणीयत्वान्त इत्यर्थः ।

प्रेक्षावद्भिः प्रतिपाद्यन्ते, न चैषाम्[1] इत्थंभावो भवत्प्रत्यक्षगोचरः, न खल्वेते गौरत्वादिवत् प्रत्यक्षगोचराः[2], किन्तु वचनचेष्टादिलिङ्गानुमेयाः, न च लिङ्गं प्रमाणं यत एते सिध्यन्ति, न पुंसाम् इत्थंभावमविज्ञाय यं कंचन पुरुषं प्रतिपिपादयिषतोऽनवधेयवचनस्य प्रेक्षावत्ता नाम। अपि[4] च पशवोऽपि हिताहितप्राप्तिपरिहारार्थिनः कोमलशष्पश्यामलायां भुवि प्रवर्तन्ते, परिहरन्ति चाऽऽश्यानतृणकण्टकाकीर्णाम्। नास्तिकस्तु पशोरपि पशुरिष्टानिष्टसाधनमविद्वान्। न खल्वस्मिन्ननुमानगोचरप्रवृत्तिनिवृत्तिगोचरे प्रत्यक्षं प्रभवति। न च परप्रत्यायनाय शब्दं प्रयुञ्जीत, शाब्दस्यार्थस्याप्रत्यक्षत्वात्। तदेवं मा नाम भून्नास्तिकस्य जन्मान्तरमस्मिन्नेव जन्मन्युपस्थितो मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महान् नरकः" ॥ [ वे० ३।३।५४ ] इति।

तात्पर्यटीकायां यथा—"अनुमानमप्रमाणमिति वाक्यप्रयोगोऽज्ञं विप्रतिपन्नं सन्दिग्धं वा पुरुषं प्रत्यर्थवान्, न च परपुरुषवर्तिनो देहधर्मा अपि सन्देहाज्ञानविपर्यासा गौरत्वादिवत् प्रत्यक्षा वीक्ष्यन्ते। न च तद्वचनात् प्रतीयन्ते, वचनस्यापि प्रत्यक्षादन्यस्याप्रामाण्योपगमात्। पुरुषविशेषमनधिकृत्य तु वचनमनर्थकं प्रयुञ्जानो नायं लौकिको न परीक्षक इत्युन्मत्तवदनवधेयवचनः स्यात्, तस्मादकामेनापि प्रमाणमनुमानमुपेतव्यम्" [ न्या० १।१।५ ] इति ॥ ७ ॥

किंच—"अनुमानमप्रमाणम्" इति वदन् वादी 'कस्य हेतोरप्रमाणम्' इत्येवं पर्यनुयोगे[5] यदि 'प्रमितिकरणत्वाभावात्'[6] इति हेतुपदं प्रयुञ्जीत, तदा गलेपतितमनुमानमिति चार्वाकत्वमेवात्मनः स जह्यात्। तथा चाहुस्तात्पर्यटीकायां मिश्राः—

"दृष्टप्रामाण्याप्रामाण्यविज्ञानव्यक्तिसाधर्म्येण हि कासांचिद् व्यक्तीनां प्रामाण्यमप्रामाण्यं वा विदधीत, दृष्टसाधर्म्यं चानुमानमेवेति कथं तेनैव तस्याप्रामाण्यम्[7]" [ न्या० १।१।५ ] इति।

---

१ एषां=अप्रतिपन्नविपर्यस्तसन्दिग्धानाम्, इत्थं भावः=अप्रतिपत्तिमत्त्वादिरूपः, भवदभिमतप्रत्यक्षविषयो नेत्यर्थः। २ तत्र हेतुमाह—न खल्विति। एते=अज्ञानादयः। ३ रूपादिमत्त्वाभावाद् इति भावः। ४ न केवलं चार्वाकस्य परप्रत्यायनाय प्रवृत्त्यभाव एव दोषोऽपि तु लोकयात्राविरोधोऽपीतिवक्तुमाह—अपि चेति। शष्पं=बालतृणम्, आश्यानम्=ईषत् शुष्कम्, इष्टानिष्टसाधनमजानन् पशोरपि पशुरित्यर्थः। अनुमानगोचरश्चासौ प्रवृत्तिगोचरश्चेष्टानिष्टसाधनत्वं, तत्र प्रत्यक्षं नहि प्रभवतीति योजना। "अयमोदनः क्षुन्निवर्तकः, ओदनत्वात्, प्राग्भुक्तौदनवत्" इत्याद्यनुमानाद्धीष्टसाधनत्वावगमः, ततः प्रवृत्तिः, अनिष्टसाधनत्वानुमानाच्च विषभक्षणादितो निवृत्तिरिति, शब्दप्रामाण्यानिष्टेर्मूकत्वमापन्नं, प्रवृत्तिनिवृत्तिविरहश्चानुमानप्रामाण्यविरहादापन्न इति विभागः। ५ प्रश्ने। ६ हेतुपदप्रयोगस्थल एवानुमानत्वव्यवहारस्य सर्ववादिसम्मतत्वादिति भावः। ७ यदि च हेतुपदप्रयोगमन्तरैवानुमानमप्रमाणमिति ब्रूयात्, तर्हि "न प्रतिज्ञामात्रेणार्थसिद्धिः" इति कथं स्वपक्षसंरक्षणमित्यपि बोध्यम्।

तत्र प्रत्यक्षकार्यत्वाद् अनुमानं प्रत्यक्षानन्तरं निरूपणीयं, तत्राऽपि सामान्यलक्षणपूर्वकत्वाद्विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति—"तल्लिङ्गलिङ्गिपूर्वकम्" इति । लिङ्गं=व्याप्यं, लिङ्गि=व्यापकम् ।

किंच—अनुमाननिष्ठाप्रामाण्यस्य रूपादिमत्त्वाभावेन चक्षुराद्यविषयत्वात्कथमनुमानमवधारितवान् भवान् इति स प्रष्टव्यः ।

"यथाहुर्भामत्यां मिश्राः—"नाप्रत्यक्षं प्रमाण"मिति ब्रुवाणः प्रष्टव्यो जायते—'कुतो भवान् अनुमानादीनामप्रामाण्यमवधारितवान्' इति, प्रत्यक्षं हि लिङ्गादिरूपमात्रग्राहि नाप्राण्यमेषां विनिश्चेतुमर्हति, नहि धूमज्ञानमिवैषामिन्द्रियार्थसन्निकर्षादप्रामाण्यज्ञानमुदेतुमर्हति, किन्तु देशकालावस्थारूपभेदेन व्यभिचारोत्प्रेक्षया, न चैतावान् प्रत्यक्षस्य व्यापारः संभवति[1] । तस्मादस्मिन्ने-निच्छतापि प्रमाणान्तरमभ्युपेयम् ॥" [ वे० ३।३।५४ ] इति ।

तत्सिद्धमेतत्—प्रत्यक्षादतिरिक्तमनुमानाद्यप्यस्त्येवप्रमाणं न प्रत्यक्षमात्रम् । अन्यथा गृहाद् गतं पतिमपश्यन्ती चार्वाककामिनी मृतं मत्वा सोरस्ताडमाक्रन्देत्, पत्रादिलिङ्गेन तत्[3]सत्ताज्ञाने तु अनुमानप्रमाणस्वीकार इति सर्वथा "नाप्रत्यक्षं प्रमाणम्" इत्यभिधानं युक्तिप्रमाणविरुद्धं चार्वाकस्येति सर्वं समञ्जसम् ॥ ॐ ॥

एवम् अनुमानप्रामाण्यं प्रसाध्य तल्लक्षणपरं कारिकांशमवतारयति—तत्रेति । तत्र=युक्तियुक्तत्वेन अनुमानस्यावश्याभ्युपेयत्वे सतीत्यर्थः । प्रत्यक्षानन्तरमनुमानं निरूपणीयमित्यन्वयः । निरूपणीयम्=लक्षणादिना प्रतिपादनीयम् । तत्र[4] हेतुमाह—प्रत्यक्षकार्यत्वादिति[5] । भूयोदर्शनमूलकत्वादित्यर्थः । तत्रापि=लक्षणद्वाराऽनुमानस्य निरूपणीये सत्यपीत्यर्थः । सामान्येति । विशेषस्य सामान्यधर्मव्याप्यधर्मवत्त्वेन अनुमानसामान्यधर्मज्ञानमन्तरेण तद्विशेषज्ञानासम्भवादिति भावः । 'लिङ्गलिङ्गिपूर्वकमनुमानम्' इत्यनुमानसामान्यलक्षणम् । 'लिङ्गलिङ्गिज्ञानजन्यं ज्ञानमनुमानम्' इति तदर्थः । तथा चोक्तं न्यायभाष्यकृद्भिः—"अनुमानं च लिङ्गलिङ्गिनोः संबन्धदर्शनम्" [ न्या० १।१।५ ] इति । तत्र लिङ्गं=साधनं धूमादि, लिङ्गि=साध्यं वह्न्यादि ॥ 'लिङ्गलिङ्गिपूर्वकम्' इत्यनुमानलक्षणं विवृण्वन् लिङ्गलिङ्गि-

१ यथाहुः—"न हीदमियतो व्यापारान् कर्तुं समर्थं संनिहितविषयबलेनोत्पत्तेरविचारकत्वात्" इति । २ अस्मिन्=अनुमाने । ३ तच्छब्देन पतिपरिग्रहः । ४ तत्र=प्रत्यक्षानन्तरमनुमानस्य निरूपणे । ५ प्रत्यक्षस्य कार्यमेव हि अनुमानम् । सति हि धूमादिप्रत्यक्षज्ञाने अप्रत्यक्षस्य वह्न्यादेरनुमितिरुदेति, अतो धूमादिप्रत्यक्षं कारणं भवति वह्न्यादेरनुमितिज्ञानं च कार्यं भवतीति भावः ।

शब्दौ व्याचष्टे—लिङ्गं व्याप्यमिति । लिङ्ग्यते=गम्यते—ज्ञायतेऽप्रत्यक्षोऽर्थोऽनेनेति लिङ्गम् ।

"यदनुमेयेन संबद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥"

इति प्रशस्तपादलक्षितं पक्षवृत्तित्वसपक्षसत्त्वविपक्षव्यावृत्तत्वादिधर्मोपपन्नं धूमादिवस्तु इति यावत् । धूमादिना हि वह्न्यादिरप्रत्यक्षोऽर्थो ज्ञायत इति धूमादिवस्तु लिङ्गम्, । एतदेव च पक्षवृत्तित्वादिधर्मैर्व्याप्यमानत्वाद् व्याप्यमित्यभिधीयते,

यस्य च वह्न्यादेस्तद् धूमादि लिङ्गमस्ति तद् वह्न्यादि लिङ्गि=व्यापकमिति चोच्यत इत्यर्थः ।

"स्वभावप्रतिबन्धे सत्यर्थोऽर्थं गमयेत् तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात्" इति न्यायबिन्दावभिहितत्वेन "स्वभावप्रतिबन्धो व्याप्तिः" इति भादन्ताः, "अनौपाधिकः संबन्धो व्याप्तिः" इति जरन्तस्तार्किकाः, तदेतादृग् व्याप्त्याश्रयं च व्याप्यम् इत्यभिप्रेत्य परिष्कृत्य व्याप्यं निर्वक्ति—'शङ्कित' इत्यादिना ।

शङ्कितः=शङ्काविषयत्वेन सन्दिग्धः, समारोपितः=सम्यगारोपितत्वेन निश्चितः,

तथाचाहुः—तत्त्वचिन्तामणिकाराः—"सचायं द्विविधः, निश्चितः सन्दिग्धश्च । साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्च-

१ व्याप्यं=व्याप्तिविशिष्टं—यस्मिन् सत्त्वे च यदवश्यंभावि तत् । व्यापकं=व्याप्तिनिरूपकम्—यद्विना यन्न भवति तत् । २ एषा व्युत्पत्तिर्न्यायबिन्दौ । सिद्धान्तचन्द्रोदये तु व्याप्तिबलेन लीनमर्थं गमयतीतिलिङ्गम्' इति व्युत्पत्त्यन्तरमपि दृश्यत इति तदपि बोध्यम् । ३ अनुमेयः=प्रतिपिपादयिषितधर्मविशिष्टो धर्मी पर्वतादिः पक्षः, तेन संबद्धं=तस्मिन् वर्तमानम् इति यावत्, पक्षवृत्तीत्यर्थः । तदन्विते=साध्यधर्मान्विते सपक्षे महानसादौ प्रसिद्धं=सपक्षे सत्तावदित्यर्थः । तदभावे=साध्यधर्मस्याभावे विपक्षे जलह्रदादौ नास्ति=विपक्षावृत्तीत्यर्थः । एवं चात्र "अनुमेयेन संबद्धम्' इतिकथनेन पक्षसत्त्वम्, प्रसिद्धं च तदन्विते' इत्यनेन सपक्षसत्त्वम्, 'तदभावे च नास्त्येव" इत्यनेन विपक्षाद् व्यावृत्तत्वम् इति लिङ्गमर्मत्रयी उक्ता । एतदन्यतमेनोनं तु लिङ्गं न पारमार्थिकं लिङ्गम् अपितु लिङ्गाभासः स भवतीति भावः । ४ लिङ्गं यस्यास्ति तल्लिङ्गि इत्यभिप्रेत्य लिङ्गिपदस्यार्थमाह—यस्य चेति । ५ स्वभावेनप्रतिबन्धः स्वभावप्रतिबन्धः, "साधनं कृता" इति समासः । स्वभावप्रतिबद्धत्वं=प्रति बद्धस्वभावत्वमित्यर्थः, इति न्यायबिन्दुटीकायां धर्मोत्तराचार्यः । ६ भादन्ताः=बौद्धाः ।

1 लीनं=संदिग्धम्, अर्थं=साध्यम्, लिङ्गं=हेतुः ।

याधायकत्त्वेन निश्चितोपाधिः । यथा-वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम्[1] । यत्र साधनाव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः । यथा-मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहार[2]परिणतिजत्वम्" इति ।

एवंविधौ यावुपाधी तयोर्निराकरणेन=राहित्येनेत्यर्थः ।

एतेन "अनौपाधिकः[3] संबन्धो[4] व्याप्तिः" इत्यंशः संगृहीतः ॥

"स्वभावप्रतिबन्धो व्याप्तिः" इत्यंशं संग्रहीतुमाह—'वस्तुस्वभाव' इति । वस्तुनः=धूमादेर्यः स्वभावः=वह्न्यादिना विनाभावाभावः—अविनाभावनियमः, तेन प्रतिबद्धम्=आक्रान्तमित्यर्थः । यद्[5] वस्तु यद्वस्त्वन्तराविनाभूतं तद् वस्तु तद्व्याप्यम् इति यावत् । अविनाभावः=यत्रैकं तत्रेतरदिति ।

'स श्यामो मित्रातनयत्वात्, दृष्टश्यामत्वविशिष्टमित्रातनयवत्' इत्यत्र

१ भवति च तत् ( आर्द्रेन्धनम् ) साध्यस्य ( धूमस्य ) व्यापकम् 'यत्र यत्र धूमस्तत्रार्द्रेन्धनम्' इति नियमसत्त्वात्, भवति च साधनस्य ( वह्नेः ) अव्यापकम् यत्र यत्र वह्निस्तत्रार्द्रेन्धनम्' इति नियमासत्वात्; तप्तायःपिण्डे वह्निसत्त्वेऽप्यार्द्रेन्धनाभावादिति बोध्यम् । २ शाकाद्याहारपरिणतिजत्वम्=शाकादिसंयोगघटितशाकपाकजश्यामसामग्रीमत्त्वमित्यर्थः, इत्युपाधिविभागरहस्ये मथुरानाथः । अत्र 'मित्रातनयत्वव्याप्यश्यामत्वसामग्र्यास्थातव्यम्' इत्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात्संदेह इति ध्येयम् । ३ उपाधिविधुरः—स्वाभाविकः अनन्यप्रयुक्तः । ४ स चानुमित्यौपयिकः साधननिष्ठः साध्यस्य संबन्धः, इति विज्ञेयम् । तथा च"—वस्तुस्वभावसिद्धः साध्यसाधनयोरव्यभिचरितसंबन्धो व्याप्तिः" इति लक्षणनिष्कर्षः । ५ यत् वस्तु=धूमादिवस्तु, यद् वस्त्वन्तरम्=वह्न्यादिकम् । अयमत्र सरलार्थः—लिङ्गज्ञानजन्यं ज्ञानमनुमितिः । यथा—पर्वते धूमज्ञानाद् वह्निज्ञानम् । अत्र धूमस्य प्रत्यक्षज्ञानं लिङ्गज्ञानमुच्यते, ततो वह्निज्ञानमुपजायते, इति वह्निज्ञानम् अनुमितिर्भवति । यज्ज्ञानात् साध्यज्ञानं भवति, तत् 'लिङ्ग'मित्युच्यते । अनुमितिज्ञानविषयश्च 'साध्य'मित्यभिधीयते । प्रकृते अनुमितिज्ञानस्य विषयो वह्निरस्तीति स साध्यो भवति, धूमज्ञानात् वह्निरूपसाध्यस्य ज्ञानं भववीति धूमो लिङ्गं भवति । व्याप्यज्ञानात् व्यापकस्य ज्ञानं भवतीति व्याप्यं लिङ्गमुच्यते, व्यापकं च साध्यमभिधीयते । व्याप्तिमत् ( व्याप्तिविशिष्टं ) व्याप्यं कथ्यते, व्याप्तिनिरूपकं च व्यापकमुच्यते । अविनाभावरूपसंबन्धश्च व्याप्तिः । यथा—धूमे वह्नेरविनाभावरूपः संबन्धो वर्तते, इयमेव धूमे वह्नेर्व्याप्तिः । तस्य च व्याप्तिरूपस्य संबन्धस्य निरूपको वह्निरस्तीति धूमस्य व्यापकः स भवति । यद् विना यन्न भवति तस्याविनाभावरूपसंबन्धस्तत्र भवति, वह्निं विना धूमो न भवतीति वह्नेरविनाभावसंबन्धो धूमे कथ्यते । वह्नौ तु धूमस्य अविनाभावो भवितुं नार्हति, तप्तलोहपिण्डे धूमं विनापि वह्नेः सत्त्वात् । अतो न धूमस्य व्याप्यो वह्निः, अपि तु वह्नेरेव व्याप्यो धूमो भवतीति ।

**शङ्कितसमारोपितोपाधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम्,**

मित्रातनयत्वमपि श्यामत्वप्रतिबद्धत्वेन व्याप्यं स्यात् तन्माभूदित्यत उक्तम्—'शङ्कितोपाधिनिराकरणेन' इति।

'अयं धूमवान् वह्नेर्महानसवत्' इत्यत्र वह्नेरपि महानसादौ धूमाविनाभूतत्वदर्शनाद् वह्नेरपि धूमव्याप्यत्वं स्यादत उक्तम्—'समारोपितोपाधि निराकरणेन' इति।

स्वाभाविकः संबन्धोऽभिप्रेतो नौपाधिक इत्यर्थः। तथाचाहुर्मिश्राः—

"धूमादीनां वह्न्यादिसंबन्धः स्वाभाविको न तु वह्न्यादीनां धूमादिभिः, ते हि विनाऽपि धूमादिभिरुपलभ्यन्ते। यदा स्वार्द्रेन्धनादिसंबन्धमनुभवन्ति, तदा धूमादिभिः सह संबध्यन्ते। तस्माद् वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः संबन्धो न स्वाभाविकस्ततो न नियतः, स्वाभाविकस्तु धूमादीनां वह्न्यादिसंबन्ध उपाधेरनुपलभ्यमानत्वात्" इति॥ ❀ ॥

**अयमत्र निष्कर्षः—**

"साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधित्वम्। साध्यत्वाभिमतव्यापकत्वं तु यः साध्यत्वेनाभिमतस्तदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वम्। साध्यत्वाभिमताधिकरणे यस्यात्यन्ताभावः कदाचिदपि नावतिष्ठते तत्त्वमिति यावत्। साधनत्वाभिमताव्यापकत्वं तु यस्य साधनत्वमभिमन्यते तदधिकरणे यस्यात्यन्ताभावः कदाचित् स्यात् तत्त्वम्।

**यदाहुरुदयनाचार्याः—**

"साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः"[1]। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्[2]। साधनवन्निष्ठात्यन्ताभावप्रति-

---

१ यो धर्मः साध्यस्य व्यापकः—अर्थात् साध्यसमानाधिकरणो भवति, अर्थात् यत्र २ साध्यं भवति तत्र सर्वत्र नियमेन वर्तते, साधनस्य=हेतोरव्यापकः—अर्थात् यत्र २ हेतुर्भवति तत्र सर्वत्र नियमेन न वर्तते, असौ धर्मः तत्र हेतावुपाधिरित्युच्यते। २ साध्यसमानाधिकरणो योऽत्यन्ताभावः—अर्थात् यस्मिन्नधिकरणे साध्यं वर्तते तत्रैव वर्तमानो योऽत्यन्ताभावः तस्याऽप्रतियोगित्वमेव साध्यव्यापकत्वम्। यथा 'पर्वतो धूमवान् वह्नेः' इति स्थापनायां पर्वतः पक्षः, धूमः साध्यं, वह्निर्हेतुः। अस्मिन् हेतौ 'आर्द्रेन्धनसंयोग' उपाधिः, स च नियमेन 'यत्र यत्र धूमः तत्र तत्र आर्द्रेन्धनसंयोगः' इति व्याप्त्या प्रकृते साध्यीभूतस्य धूमस्याधिकरणे पर्वतादौ वर्तते, तत्रैव वर्तमानो यो घटाभावः तस्य प्रतियोगी घटः, प्रतियोगित्वं घटे अप्रतियोगित्वमार्द्रेन्धनसंयोगे विद्यते, इत्येव तस्य साध्यव्यापकत्वम्=धूमव्यापकत्वम्।

योगित्वं साधनाव्यापकत्वम्'' इति।

तथाहि—'धूमवान् वह्नेः' इति साध्यसाधनत्वाभिमाने आर्द्रेन्धनमुपाधिः। साध्यधूमाधिकरणे आर्द्रेन्धनस्यात्यन्ताभावाभावात्। आर्द्रेन्धनमन्तरेण हि धूमो न संभवति। साधनवह्न्यधिकरणे तु क्वचिदार्द्रेन्धनस्यात्यन्ताभावस्यापि सत्वात्, यथाऽयोगोलके।

एवं च—

"यद्विशेषणान्वितस्य साधनस्य साध्यव्यभिचारित्वं न स्यात् तद्विशेषणरहितस्य तस्य यदि केनचित् साधनत्वमभिमन्यते तदा व्यभिचारोन्नायकं तद् विशेषणम् उपाधिः" इत्युपाधेः स्थूलं स्वरूपम्।

तथाच—आर्द्रेन्धनावच्छिन्नवह्नेः साधनत्वाभिमाने न धूमव्यभिचारसंभवः। वह्निसामान्यस्य साधनत्वाभिमतौ तु अयोगोलके व्यभिचार इत्यार्द्रेन्धनमुपाधिः।

"प्रत्यक्षः प्रत्यक्षविषयस्पर्शाश्रयत्वात्" इत्यत्र उद्भूतरूपत्वमुपाधिः[2]। 'उद्भूतरूपवत्त्वे सति प्रत्यक्षविषयस्पर्शाश्रयत्वादित्युक्तौ तु न व्यभिचारः। अन्यथा वायौ व्यभिचारः स्यात्।

तथा—"विनाशी जन्यत्वात्[3]" इत्यत्र भावत्वमुपाधिः। भावत्वे सति

१ अस्यायमाशयः—प्रकृते साधनं वह्निः, साधनाधिकरणं पर्वतादिकमिव अयोगोलकमपि। तत्र वर्तमानो योऽत्यन्ताभावः—आर्द्रेन्धनसंयोगात्यन्ताभावः तस्य प्रतियोग्येवार्द्रेन्धनसंयोग इत्येतदेव तस्मिन् साधनाव्यापकत्वं=वह्निरूपहेतोरव्यापकत्वमिति। तदेतदुपपादयितुमुपक्रमते—तथाहीति। यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिः। यावान् साधनदेशोयावत्साधनदेशन्। "यावदवधारणे" इत्यव्ययीभावः। तत्रावर्तमानः=साधनव्यापक इत्यर्थः। यावत्साध्यदेशं वृत्तिर्यस्येत्यव्ययपूर्वपदो बहुव्रीहिः। साध्यव्यापक इत्यर्थः इति मल्लिनाथः। तथाच—अत्रार्द्रेन्धनसंयोगस्य धूमरूपसाध्याधिकरणे महानसादौ यावत्येव वर्तमानतया साध्यव्यापकत्वं, वह्निरूपहेत्वधिकरणे यावदन्तर्गतेऽयोगोलके चाऽवर्तमानतया वह्निरूपहेत्वव्यापकत्वमिति तस्योपाधित्वमिति सारम्। २ तस्य—'यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वम्' इति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात्, किं तु 'द्रव्यत्वलक्षणो यः पक्षधर्मस्तदवच्छिन्नवहिः प्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वम्' इति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव। आत्मनि व्यभिचारवारणाय—'बहिः' पदम्। यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च, वायावुद्भूतरूपविरहात्। तदेवं पक्षधर्मावच्छिन्नसाध्यव्यापकस्योपाधेरिदमुदाहरणम्—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादिति। ३ ध्वंसो विनाशी जन्यत्वादिति साधनावच्छिन्नसाध्यव्यापकस्योपाधेरुदाहरणम्। तस्य (उपाधेः) 'यत्र विनाशित्वं तत्र भावत्वम्' इति न केवलसाध्यव्यापकत्वं, प्रागभावे भावत्वविरहात्, किं तु 'जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्वम्' इति साधनावच्छिन्नसाध्यव्यापकत्वमेव। 'यत्र जन्यत्वं तत्र भावत्वम्' इति साधनाव्यापकत्वं च, ध्वंसे भावत्वविरहादिति बोध्यम्। एवमन्यत्रापि।

जन्यत्वादित्यङ्गीकारे व्यभिचाराभावः । तद्विशेषणाभावे ध्वंसे व्यभिचारः ।

तथा—"द्रव्यं सत्त्वात्" इत्यत्र वैशिष्ट्यमुपाधिः । विशिष्टसत्त्वादित्यभिमतौ व्यभिचारास्पर्शः । अन्यथा गुणादौ व्यभिचार आपद्येत । वैशिष्ट्यं हि गुणकर्मान्यत्वम् ।

तथा—"गुणकर्मान्यत्वविशिष्टसत्तावान् जातिमत्त्वात्" इत्यत्र द्रव्यत्वमुपाधिः । द्रव्यत्वे सति जातिमत्त्वादित्यनेन व्यभिचारासंभवात् । अन्यथा गुणकर्मणोर्व्यभिचारापातः ।"

एवं च उपाधेर्व्यभिचारोन्नायकत्वमेव दूषकताबीजम् । अत एव मणिकारैः—"यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः" इत्यभिहितम् ॥

स चायमुपाधिर्द्विविधः, निश्चितः सन्दिग्धश्च । यत्र साध्यव्यापकतासाधनाव्यापकतयोर्निश्चयः तत्र निश्चितोपाधिर्व्यभिचारनिश्चायकः । यथा—"धूमवान् वह्निमत्त्वात्" इत्यत्र आर्द्रेन्धनप्रभवत्वम्[1] । तस्य साध्यव्यापकत्वसाधनाव्यापकत्वयोर्लोकादेवावधारणात् ।

यत्र तु तयोः संशयस्तत्र सन्दिग्धोपाधिः व्यभिचारसंशयाधायकः । यथा—"स श्यामो मित्रातनयत्वात्"[2] इत्यत्र शाकाहारपरिणतिजन्यत्वम् ।

तत्र 'शाकाहारपरिणतिजन्यत्वे सति मित्रातनयत्वात्' इत्युक्तौ न व्यभिचारः । वैद्यके शाकाहारातिशयजन्यरसविशेषस्य पुत्रादीनां श्यामताहेतुत्वोक्तेः । तद्विशेषणानुपादाने तु गौराङ्गे तत्पुत्रे श्यामत्वव्यभिचारः स्यात् । परन्तु शास्त्रमूलकत्वादप्रत्यक्षत्वेन शाकपाकजन्यत्वस्य तनयगतश्यामत्वव्यापकतायां मित्रातनयत्वाव्यापकतायां च संशयेन सन्दिग्धोपाधित्वम् ।

एवं चोपाधिनिश्चयात् तत्संशयाच्च जायमानौ व्यभिचारनिश्चयसंशयौ व्याप्तिनिश्चयं प्रतिबध्नीत एवेति तयोरुभयोरेव निराकरणमावश्यकमित्यत उक्तम्—शङ्कितसमारोपितेति[3] ॥ ॐ ॥

१ आर्द्रेन्धनसंयोगो हि "यत्र यत्र धूमस्तत्र तत्रार्द्रेन्धनसंयोगः" इति साध्यस्य व्यापको भूत्वाऽपि "यत्र यत्र वह्निस्तत्र तत्रार्द्रेन्धनसंयोगः" इति साधनसहचारव्यभिचारी भवति, यतः तप्तायःपिण्डे वह्निमत्त्वेऽप्यार्द्रेन्धनसंयोगाभावात् । २ मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकत्वे सति मित्रातनयाव्यापकत्वात् । कथं तद् व्यापक इति चेत् । उच्यते—मित्रानाम्नी काचिद्योषिदासीत् तस्यां विपत्पातादुत्तमाहारालाभेन शाकाद्याहारपरिणतिवशात् सप्तसुताः श्यामवर्णाः संजाताः, पश्चात् संपदुपगमादुत्तमाहारलाभेनाष्टमो गौर उत्पन्नोऽतस्तस्मिन् शाकपाकजत्वाभावात्साधनाव्यापकत्वं सुस्पष्टमेवेति बोध्यम् ॥ ३ अत्र परिष्कुर्वन्ति—"स्वावच्छिन्नानधिकरणहेतुमन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नसाध्यसमानाधिकरणा यावद्धर्मा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्वत्त्वमुपाधित्वम्" इति । स्वम्=

**येन च प्रतिबद्धं, तद् व्यापकम्।**

**लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्रत्ययमुपलक्षयति।**

---

व्याप्यं निरूप्य व्यापकं निरूपयति—**येन चेति**। येन च=वह्न्यादिना प्रतिबद्धम्=अविनाभूतं धूमादिकं तद्=वह्न्यादिकं व्यापकमित्यर्थः।

ननु लिङ्गादिज्ञानमेवास्ति अनुमितेर्हेतुः[1], न जातु लिङ्गादिवस्तु, तत्कथं लिङ्गादिवस्तुनोऽत्रोल्लेख इत्याशङ्क्य ज्ञानज्ञेययोरविनाभावदर्शनेन ज्ञेयनिर्देशो ज्ञानोपलक्षणार्थं इत्याह—**लिङ्गलिङ्गिग्रहणेन चेति**। विषयवाचिना=वस्तुबोधकेन लिङ्गलिङ्गिग्रहणेन=लिङ्गलिङ्गिशब्देन[2] विषयिणं=लिङ्गलिङ्गिरूपविषयोद्दीपकं प्रत्ययं=ज्ञानम् उपलक्षयति=उपलक्षणविधया बोधयति,–'कारिकाकृत्' इति शेषः। लिङ्गलिङ्गिशब्दौ नात्र वस्तुपरावभिप्रेतौ, वस्तुनोऽनुमितेरहेतुत्वात्, अपि तु उपलक्षणविधया ज्ञानपरावेव तावभिप्रेतौ, ज्ञानज्ञेययोरविनाभावदर्शनेन तु ज्ञेयनिर्देशः कारिकायामिति सरलार्थः।

---

उपाधितावच्छेदकम् आर्द्रेन्धनत्वादि। स चायमुपाधिश्चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्यो यथा—'धूमवान् वह्नेः' इत्यादावार्द्रेन्धनं (धूमसामग्र्यादिकम्) उपाधिः। भवति हि, आर्द्रेन्धनत्वावच्छिन्नानधिकरणं यत् वह्निमत् (अयोगोलकम्) तन्निष्ठो यत्किंचिद्धर्मः (द्रव्यत्वम्) तदवच्छिन्नो धूमः, तदधिकरणनिष्ठा यावन्तो धर्मा आर्द्रेन्धनत्वावच्छिन्नसमानाधिकरणा भवन्ति, अतस्तद्वदार्द्रेन्धनमुपाधिः। द्वितीयो यथा—"वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्" इत्यत्र उद्भूतरूपवत्त्वमुपाधिः। भवति हि, उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रत्यक्षस्पर्शाश्रयत्वावच्छिन्नम् (वायुः) तन्निष्ठो धर्मः (बहिर्द्रव्यत्वम्) तदवच्छिन्नं साध्यम् (प्रत्यक्षत्वम्) तदधिकरणं यत् (घटपटाद्येव) तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति, अत उद्भूतरूपवत्त्वमुपाधिः। तृतीयो यथा—"स श्यामो मित्रातनयत्वात्" इत्यत्र शाकपाकजत्वमुपाधिः। भवति हि, शाकपाकजत्वत्वावच्छिन्नानधिकरणं यत् मित्रातनयत्ववत् (अन्योऽश्यामो मित्रातनयः) तन्निष्ठायावन्तो धर्माः शाकपाकजत्वत्वावच्छिन्नसमानाधिकरणा भवन्ति, अतः तद्वच्छाकपाकजत्वमुपाधिः। तुरीयो यथा—"घटरूपं प्रत्यक्षं प्रमेयत्वात्" इत्यादौ उद्भूतरूपमुपाधिः। भवति हि, उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रमेयत्ववत् (चक्षुरादि) तन्निष्ठो यत्किंचिद्धर्मः (बहिर्द्रव्यत्वम् उदासीनधर्मः) तदवच्छिन्नं प्रत्यक्षत्वम्, तदधिकरणं यत् (घटपटादि) तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति, अत उद्भूतरूपमुपाधिरित्यादिकं तर्कग्रन्थेषु द्रष्टव्यमित्यलमत्राधिक्येन।

१ धूमवह्न्योः स्वरूपसत्त्वमप्रयोजकं तज्ज्ञानस्यैव हेतुत्वादिति भावः। २ गृह्यते=ज्ञायतेऽनेनेति ग्रहणं=शब्दः। तदाह—शब्देनेति।

**धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्वकम् ।**

**लिङ्गिग्रहणं चावर्तनीयम् । तेन लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमपि दर्शितं भवति ।**

**तद् व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानमिति—अनुमानसामान्यं लक्षितम् ।**

---

एवं सति यत्फलितं तदाह—धूमादिर्व्याप्य इत्यादिना । नन्[2]नु केवलाद् व्याप्यव्यापकत्वज्ञानादेवानुमितिर्न संभवति, व्याप्यस्य पक्षवृत्तित्वज्ञानमन्तरेणानुमित्यसंभवात् तत्कथं हेतोः पक्षवृत्तित्वज्ञानमन्तराऽनुमित्युदय इत्याशङ्क्य तल्लाभोपायमाह—लिङ्गिग्रहणं चेति । तथाच लिङ्गि च लिङ्गि च ते लिङ्गिनी, लिङ्गं च लिङ्गिनी च तानि लिङ्गलिङ्गीनि, तत्पूर्वकम् इत्येकशेषगर्भकत्वात् 'लिङ्गलिङ्गिलिङ्गिपूर्वकम्' इत्यायातम् ।

द्वितीयलिङ्गिपदं व्याचष्टे—लिङ्गमस्यास्तीति । पक्षधर्मतेति । व्याप्यस्य[3] पक्षवृत्तित्वज्ञानमित्यर्थः । निर्गलितार्थमाह—तदिति । यस्मादेवं तत्=तस्माद् अयं व्याप्योऽयं व्यापक इति व्याप्यव्यापकभावकज्ञानपुरस्सरं यद् व्याप्यस्य पक्षवृत्तिताज्ञानं तत्पूर्वकं तज्जन्यं यद् ज्ञानं तद् अनुमानम् इत्यनुमानसामान्यं लक्षितमित्यर्थः ।

तथाच 'पर्वतो वह्निमान् धूमात्' इत्यनुमितौ प्रथमं वह्निधूमयोर्व्याप्यव्यापकत्वस्मरणरूपं व्याप्तिज्ञानम् । अनन्तरं व्याप्यस्य धूमस्य पर्वतवृत्तित्वज्ञानरूपं पक्षधर्मताज्ञानम् । तदनन्तरं च यो वह्न्याकारवृत्तिरूपो बुद्धिव्यापारो जायते स एव व्यापारः प्रमाकरणत्वादनुमानं प्रमाणम् । तस्य चित्संबन्धः फलं प्रमाबोधः । चित्सान्निध्यं तत्र करणव्यापार इति सिध्यति ।

एवं च सत्यपि प्रत्यक्षप्रमाणस्य बुद्धिव्यापाररूपत्वे तस्य व्याप्तिज्ञानजन्यत्वाभावान्नानुमानत्वापत्तिः । नाप्यनुमानस्य प्रत्यक्षप्रमाणतापत्तिरिन्द्रियसन्निकर्षजन्यत्वाभावात् । एवं शब्दप्रमाणस्यापि वाक्यार्थज्ञानजन्यत्वात् परस्परं भेद इति वक्ष्यते ॥ ५ ॥

---

१ प्रत्ययस्या( ज्ञानस्या )कारं दर्शयति—धूमादिरिति । २ तथापि पक्षधर्मादेर्ज्ञानाभावात्कथमनुमानमित्याशयेन मूलमवतारयति–नन्विति । व्याप्यस्य=हेतोः । ३ व्याप्यस्य=व्याप्त्याश्रयस्य धूमादेः पक्षवृत्तित्वज्ञानम्=पक्षेण सह संबन्धज्ञानं परामर्श इत्यर्थः । व्याप्तिविषयकं यत् पर्वतादिपक्षवृत्तित्वज्ञानम् अर्थात् तादृशधूमादिविशिष्टपक्षविषयकं ज्ञानं स परामर्श इति यावत् । 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानं प्रसिद्धानुमाने परामर्शस्याकारः । 'साध्यव्याप्यहेतुमान् पक्षः' इति परामर्शस्य सामान्याकारो बोध्यः । साध्यव्याप्तिविशिष्टस्य हेतोः पक्षे प्रत्यक्षं परामर्श इति सरलं परामर्शलक्षणम् । पक्षधर्मताज्ञानम्=पर्वतवृत्तिधूमज्ञानमित्यर्थः ॥ साध्यनिरूपितव्याप्तिविशिष्टस्य धूमादिहेतोः पर्वतादिरूपपक्षवृत्तित्वमेव हि पक्षधर्मता ।

अत्रेदमवधेयम्—

'साध्यसामानाधिकरण्यं व्याप्तिः' इति व्याप्तिलक्षणम् । 'पर्वतो वह्निमान्' इत्यनुमानवाक्ये साध्यं (व्यापकः) वह्निः तस्य सामानाधिकरण्यं धूमे वर्तते, धूमो हि नियमेन वह्निसहचरो भवति, वह्निं विना धूमस्यासंभवात्, वह्निस्तु न धूमसहचरः, तप्तायःपिण्डे धूमं विनापि वह्निदर्शनात्, तस्मात् "यत्र यत्र धूमः तत्र तत्र वह्निः" इत्येवं वह्नेरेव व्याप्तिर्धूमशिरसि तिष्ठति, नत्वेवं भवति—"यत्र यत्र वह्निः तत्र तत्र धूमः" इति । न हि धूमो वह्नेर्व्यापकः अपि तु वह्नेर्व्याप्यः । यस्य शिरसि साध्यस्य व्याप्तिस्तिष्ठति असौ व्याप्य इत्युच्यते, अत एव व्याप्तिलापनकाले "यत्र यत्र धूमः' इति रीत्या पूर्वं धूम उच्यते पश्चाच्च 'तत्र तत्र वह्निः' इति वह्निरुच्यते । व्याप्तिलापनकाले व्याप्यस्य वचनं पूर्वं भवति व्यापकस्य च परं भवतीति नियमात् ।

यदाहुः श्लोकवार्तिके भट्टपादाः—

"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥
व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् ।
एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः ॥" इति ॥ ॐ ॥

ज्ञातेन पदार्थेन अज्ञातस्य पदार्थस्य यज् ज्ञानं साऽनुमितिः । यथा पर्वते धूमं दृष्ट्वा तत्र वह्नेरपि यत् सत्त्वं निश्चीयते—'अस्ति पर्वते वह्निः' इति, सैवानुमितिः । यथा वा मेघस्य गर्जनं श्रुत्वा गृहाभ्यन्तरस्थितस्यापि पुरुषस्य गगने मेघनिश्चयो जायते साप्यनुमितिरेव । सर्वत्रैवानुमितिषु पक्षः, साध्यं, हेतुः, दृष्टान्तः, इति चतुष्टयस्य ज्ञानमत्यावश्यकम् । यत्र किंचित् वस्तुजातं साधयितुमिच्छयाऽनुमीयतेऽसौ पक्षो भवति, यथा पर्वते वह्निसाधनेच्छायां जातायां वह्निरनुमीयत इति पर्वतः पक्षः । यत्साधनेच्छाविषयो भवति तत्साध्यम्, यथा तत्रैव वह्निः साध्यमित्युच्यते । तस्यैव धूमलिङ्गेन सिसाधयिषाविषयत्वात् । सिसाधयिषा च साधयितुमिच्छा । यस्य ज्ञानं [व्याप्तिज्ञानम्] साध्यस्यानुमितिमुत्पादयति स 'हेतु' रित्युच्यते । दृष्टेन धूमेन वह्नेरनुमितिज्ञानं जायते इति धूमो हेतुः । अपि च हेतुः साधनमित्युच्यते । साध्यस्य व्याप्तिः साधनोपरि वर्तते, अतो हेतुः 'साध्यव्याप्तिविशिष्ट' इति कथ्यते । एवंच अनुमितिज्ञानात्पूर्वं 'साध्यव्याप्ति-

१ अभिलापः आकार इति यावत् । अन्वये=अन्वयव्याप्तौ । व्यतिरेकव्याप्तेस्त्वयं क्रमः—अन्वयव्याप्तौ यद् व्याप्यं तदभावोऽत्र व्यापकः, यच्च व्यापकं तदभावोऽत्र व्याप्य इति । अन्वयव्याप्तौ साध्यं व्यापकं हेतुश्च व्याप्यः, व्यतिरेकव्याप्तौ तु साध्याभावो व्याप्यः हेत्वभावो व्यापको भवति । साधनात्ययः=हेत्वभावः ।

विशिष्टो हेतुः वर्तते' इति ज्ञानमत्यावश्यकम्। इदमेव च ज्ञानं 'परामर्श' इति नैयायिकानां परिभाषा। तत्रायं क्रमः—महानसादौ जायमानं धूमाग्न्योः साहचर्यरूपं ज्ञानं प्रथमम्। पश्चात् पर्वतादौ धूमदर्शनेन जायमानं स्मृतिरूपं व्याप्तिज्ञानं द्वितीयम्। ततः परामर्शनामकं ज्ञानं तृतीयम्। तस्मात् चतुर्थक-क्षायां यत् 'पर्वतो वह्निमान्' इत्याकारकं ज्ञानं जायते तदेवानुमितिरिति। एवम् अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारः, अनुमितिः फलम् इति सिद्धं भवति ॥ ॐ ॥

किंच 'यत्र यत्र हेतुः तत्र तत्र साध्यम्' इत्यन्वयसाहचर्यमन्वय-व्याप्तिः। 'यत्र यत्र साध्याभावः तत्र तत्र साधनाभावः' इति व्यतिरेकसाहचर्यं व्यतिरेकव्याप्तिरिति द्विविधा व्याप्तिः। 'यत्र धूमस्तत्राग्निः' यथा महानसम्' इत्यन्वयव्याप्तिः। 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रदः' इति व्यतिरेकव्याप्तिः ॥ ॐ ॥ अनुमितिप्रमाकरणम् अनुमानम्। तच्च द्विविधं स्वार्थं परार्थं च। तत्र स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्। तच्च स्वानुमिति हेतुः। तथाहि—कश्चित् पुरुषः स्वयमेव भूयो[2] भूयो दर्शनेन "यत्र यत्र धूमस्तत्र तत्राग्निः" इति महानसादौ व्याप्तिं[3] गृहीत्वा पर्वतसमीपं गतः, तद्गते चाग्नौ सन्दिहानः[4] पर्वते वर्तिनीम् अविच्छिन्नमूलाम्[5] अभ्रंलिहां धूमलेखां पश्यन् धूमदर्शनादुद्बुद्धसंस्कारो व्याप्तिं स्मरति—'यत्र धूमस्तत्राग्नि'-रिति। तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते। अयमेव 'लिङ्गपरामर्शः' इत्युच्यते। तस्मात् 'पर्वतो वह्निमान्' इति स्वस्य ज्ञानमनुमि-तिरुत्पद्यते। तदेतत्स्वार्थानुमानम् ॥ ॐ ॥

यत्तु कश्चित् स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्[6]। यथा—(१) "पर्वतो वह्निमान्, (२) धूमव-त्त्वात्, (३) यो यो धूमवान् स स वह्निमान्। यथा महानसम्, (४)

१ अत्र पूर्वं महानसादौ लिङ्गलिङ्गिनोर्व्याप्तिज्ञानं, तदनु लिङ्गस्य पक्षधर्मतया ज्ञानं, पश्चाद् व्याप्तिस्मरणपूर्वकपरामर्शापरनामधेयं 'व्याप्यवानयम्' इति व्याप्तिविशिष्टस्य लिङ्गस्य पक्षवृत्तित्वज्ञानं तृतीयमनुमितिकरणत्वादनुमानम्, "फलायोगव्यवच्छिन्नं च कारणं करणम्" इति सांख्यसिद्धान्तः। व्यापारवत्कारणमेव करणं न तु फलायोगव्यव-च्छिन्नं कारणमपि करणमिति, नव्यमते तु व्याप्तिज्ञानमेवानुमितिकरणतयाऽनुमानम्, लिङ्गपरामर्शस्तु व्यापारः, तदभिप्रायेणैव चेयमुक्तिरिति विशेषो द्रष्टव्यः। २ पुनः पुनः वह्निधूमयोः साहचर्यदर्शनेन समानदेशादिवृत्तित्वज्ञानेन। ३ व्याप्तिम् उपर्युक्तलक्षणां साध्यसाधनयोः साहचर्यरूपाम्। ४ 'अत्र पर्वते वह्निरस्ति नवा' इति सन्देहं प्राप्तः। ५ तेन जलधूमे, वह्निशमनानन्तरं महानसीयधूमे च वह्न्यसत्त्वेऽपि न व्यभिचारः, यस्या मूलं नोच्छिन्नं तादृश्या उन्नतया धूमरेखया वह्नेर्व्यभिचाराभावादिति भावः। ६ परार्थानुमानं नाम न्यायप्रयोज्यानुमानम्। न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदा-यत्वम्। अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम्।

अनुमानविशेषाँस्तन्त्रान्तरे लक्षितान् स्मारयति–'त्रिविधमनुमानमाख्यातं तद्' इति,

---

तथा चायम्, (५) तस्मात्तथा" इति । अनेन प्रतिपादिताल्लिङ्गात् परोऽप्यग्निं प्रतिपद्यते । तदेतत्परार्थानुमानम् ॥ ॐ ॥

प्रतिज्ञा[1]हेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । 'पर्वतो वह्निमान्' इति प्रतिज्ञा । 'धूमवत्त्वात्' इति हेतुः । 'यो यो धूमवान् स सोऽग्निमान् यथामहानसम्' इत्युदाहरणम् । 'तथा चायम्' इत्युपनयः । 'तस्मात्तथा' इति निगमनम्[2] ॥ ॐ ॥

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् इत्यनुमानसंक्षेपः ॥ ॐ ॥

अत्रेयं विप्रतिपत्तिः—केचित् "वह्निव्याप्यधूमवान् पर्वतः" इत्याद्याकारकं परामर्शज्ञानमेवानुमितिकरणमिति मन्यन्ते, तेषां मते "फलायोगव्यवच्छिन्नं कारणं करणम्" इति करणलक्षणं बोध्यम् । अन्ये तु ज्ञातं लिङ्गमेवानुमानमाहुः । अपरे तु 'पक्षे लिङ्गज्ञानमेवानुमानं' मन्यन्ते व्याप्तिस्मृतिं परामर्शं च मध्ये व्यापारमाहुः । इतरे[3] पुनः स्मृतिरूपं व्याप्तिज्ञानमनुमानं, परामर्शं च व्यापारमाहुः । तदित्थं बहूनि मतानि नैयायिकानाम् । तथापि परामर्शस्वीकारे न कस्यचिद् विवादः, मुक्तकण्ठतः सर्वैरेव तस्य स्वीकारात् । केचित् परामर्शं करणं वदन्ति केचिच्च व्यापारमिति त्वन्यत्, । परामर्शं विना नानुमितिरुदेतीति सकलनैयायिकराद्धान्तः, इत्यनया रीत्या अन्यदपि न्यायशास्त्राद् बोद्धव्यमित्यलम् ॥ ॐ ॥

'त्रिविधम्' इत्यायांशमवतारयति—अनुमानविशेषानिति । तन्त्रान्तरे= अक्षपाददर्शने "अथ तत्पूर्वकं[4] त्रिविधमनुमानं पूर्ववत् शेषवत् सामान्यतो दृष्टं च" [ न्या० १।१।५ ] इति सूत्र इत्यर्थः । 'तल्लिङ्गलिङ्गिपूर्वकम्' इति कारिकाद्वितीयार्धप्रथमोपन्यस्तं 'तत्'पदं प्रथमार्धशेषेण योजयन्नाह—तदिति । तच्छब्दा-

---

१ साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा । यथा पर्वतो वह्निमान् । तृतीयान्तं पञ्चम्यन्तं वा लिङ्गबोधकवचनं हेतुः । यथा—'धूमवत्त्वात्' इति । हेतुसाध्ययोः सहचारबोधकं यत् दृष्टान्तप्रतिपादकवचनं तदुदाहरणम् । यथा—'यो यो धूमवान् स सोऽग्निमान् यथा महानसम्' इति । व्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनम् उपनयः । यथा–'तथा चायम्' इति । अयं=पर्वतः तथा=धूमवान् । पक्षे साध्यस्य अबाधितत्वप्रतिपादकवचनं निगमनम् । यथा—'तस्मात्तथा' इति । तस्मात्=धूमवत्त्वात् तथा=वह्निमान् इत्यर्थः ॥ तदेतदाह—पर्वत इत्यादि । २ आद्यास्त्रय एवावयवा इति सांख्या योगाः पूर्वोत्तरमीमांसकाश्च । स्वार्थानुमाने आद्यास्त्रयः परार्थानुमाने तु पंचैवावयवा भवन्तीति नैयायिका वैशेषिकाश्चेति बहूनां प्रवादः । ३ यस्मिन् मते 'व्यापारवत्कारणं करणम्' तन्मतेनाह—इतर इति । सांख्यनये तु 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति प्रागुक्तं न विसर्तव्यम् । ४ प्रत्यक्षादिपूर्वकम् ।

तत्=सामान्यतो लक्षितमनुमानं विशेषतस्त्रिविधं—पूर्ववत्, शेषवत्, सामान्यतो दृष्टं च।

तत्र प्रथमं तावद् द्विविधं—वीतमवीतं च। अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्।

र्थमाह—सामान्यत इति। साधारणत इत्यर्थः। 'तत्रान्तरलक्षितान्' इति यदुक्तं, तद्दर्शयति—पूर्ववदित्यादिना। स्वमतेन अवान्तरविशेषमाह—तत्रेति। तत्र=पूर्ववदादिभेनानुमानस्य त्रैविध्ये सत्यपि प्रथमं=पूर्वम्[1] आदौ तावदनुमानं द्विविधं, ततो द्विविधमध्ये एकं द्विविधम्[2] एकं चैकविधमित्येवं त्रिविधं बोध्यमित्यर्थः। तदेव दर्शयति—वीतमवीतं चेत्यादिना। एतदुक्तं भवति—प्रथमं तावदनुमानं द्विविधं, वीतमवीतं च, ततो वीतं द्विविधं पूर्ववत् सामान्यतोदृष्टं चेति भेदात्, अवीतं पुनरेकविधं शेषवदिति, इत्येवं त्रिविधमनुमानमिति। तत्र वीतम्=वि-विशेषेण इतं=ज्ञातं-प्रसिद्धम्-अन्वयव्याप्तिहेतुकमित्यर्थः। तदेवाह—अन्वयमुखेनेति। अन्वयसहचारग्रहजन्यव्याप्तिग्रहत्वेनेत्यर्थः। प्रवर्तमानं=अनुमितिजनकम्। तत्सत्त्वे तत्सत्त्वम् अन्वयः' इत्याकारकोऽन्वयसहचार एव मुखम्=मुखमिव प्रधानभूतं, तेन=साध्याधिकरणनिरूपितवृत्तित्वरूपान्वयव्याप्तिप्राधान्येन 'यो यो धूमवान् स स वह्निमान्' इत्येवं प्रवर्तमानं सद् यद् विधायकं=वह्नेः साधकं तद् वीतमित्यर्थः। 'अन्वयेन प्रवर्तमानं वीतम्' इत्युक्ते केवलान्वयिन[3] एव वीतत्वं स्याद्, अन्वयव्यतिरेकिणश्च[4] वीतत्वं न स्यादत उक्तम्—मुखेनेति। अन्वयव्याप्तिप्राधान्यमेव केवलं वीतत्वे प्रयोजकं नतु तत्र व्यतिरेकव्याप्त्यसत्त्वमप्यभिप्रेतमित्यर्थः। एवं च 'ज्ञेयं वाच्यत्वात्' इत्यादौ केवलान्वयिनः, 'पर्वतो वह्निमान्' इत्यादौ अन्वय-

१ प्रथमशब्दो न पूर्वाभिहितत्रिविधमध्ये प्रथमीभूतपूर्ववत्परः, तथा सति वक्ष्यमाणग्रन्थेन विरोधापत्तेरपि तु 'आदौ' इत्यर्थकः, तदेवाह—आदाविति। पूर्ववदादिविभागात् प्रागिति यावत्। २ एकं=वीतं पूर्ववत् सामान्यतो दृष्टभेदेन द्विविधमित्यर्थः। ३ अन्वयमात्रव्याप्तिकत्वं केवलान्वयित्वम्। यथा "घटोऽभिधेयः प्रमेयत्वात्, पटवत्" इत्यत्र प्रमेयत्वाभिधेयत्वयोर्हेतुसाध्ययोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि पदार्थस्य प्रमेयत्वादभिधेयत्वाच्च तदभावस्यैवाप्रसिद्धेः। अत्यन्ताभावाप्रतियोगित्वं च केवलान्वयित्वम्। तच्चाभिधेयत्वे प्रमेयत्वे च बोध्यम्। प्रमेयत्वं हि प्रमाविषयत्वम्, अभिधेयत्वं च सकलपदाऽभिधेयत्वम्। तच्च—अत्यन्ताभावाऽप्रतियोगितया केवलान्वयि। यो धर्मः सर्वत्र वर्तते, यस्य चाऽत्यन्ताभावोऽप्रसिद्धः स धर्मो हि केवलान्वयीत्युच्यते। ४ अन्वयव्यतिरेकोभयप्रयोज्यव्याप्तिसत्त्वम्—अन्वयव्यतिरेकिहेतुत्वम्। यथा—"वह्निमान् धूमवत्त्वात्" इत्यत्र धूमवत्त्वमन्वयव्यतिरेकि। तत्रहि—धूमवत्त्वहेतौ "यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानसम्" इत्यन्वयव्याप्तेः, "यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रदः" इति व्यतिरेकव्याप्तेश्च सत्त्वात्।

तत्रावीतं शेषवत् । शिष्यते=परिशिष्यत इति शेषः, स एव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत् ।

---

व्यतिरेकिणश्चेत्युभयोरेवान्वयमुखेन प्रवर्तमानत्वाविशेषाद् वीतत्वमेवेति भावः। निषेधविधायकेऽवीतेऽतिप्रसङ्गो मा भूदत उक्तम्—अन्वयमुखेन प्रवर्तमानमिति ।

न वीतम् अवीतं=व्यतिरेकव्याप्तिहेतुकमित्यर्थः, तदेवाह—व्यतिरेकमुखेनेति । व्यतिरेकसहचारमात्रग्रहजन्यव्याप्तिग्रहत्वेनेत्यर्थः । निषेधकम्=अप्रसिद्धसाध्यकम् । तदसत्त्वे तदसत्त्वं व्यतिरेकः" इत्याकारो व्यतिरेकसहचार एव मुखं=प्रारम्भः, तेन साध्याभावव्यापकीभूताभावप्रतियोगि[1] स्वरूपव्यतिरेकव्याप्तिप्राधान्येन 'यत्र इतरभेदाभावस्तत्र गन्धाभावः' इत्येवं प्रवर्तमानं गन्धाभावरूपव्यापकस्य पृथिव्यां निवृत्त्या तद्व्याप्यक्षितिभेदस्य निषेधकं[2] यत् "पृथिवी इतरभेदवती गन्धवत्त्वात्" इत्याद्यनुमानं तदवीतमित्यर्थः ।

"वर्णा न क्षणिकास्त एवेति प्रत्यभिज्ञायमानत्वात्" इति क्षणिकत्वनिषेधकेऽतिप्रसङ्गो मा भूदत उक्तम्—'व्यतिरेकमुखेन' इति । निषेधकमपीदमनुमानं न व्यतिरेकमुखेन प्रवर्तमानमिति नातिप्रसङ्गः। अत्र केवलव्यतिरेक्यनुमानमवीतमिति सारम् ।

वीतावीतभेदेनानुमानस्य द्वौ भेदौ प्रतिपाद्य सम्प्रति तदवान्तरभेदेन त्रिविधतामाख्यातुं सूचीकटाह[3]न्यायेन प्रागवीतं निरूपयति—तत्रेति । तत्र=तयोर्वीतावीतयोर्मध्ये यदवीतं तत् शेषवत्संज्ञकमेवेत्यर्थः । "शेषवत्" इत्यस्य

---

१ "पृथिवी इतरेभ्यो जलादिभ्यो भिद्यते, गन्धवत्त्वात्, यदितरेभ्यो न भिद्यते न तद् गन्धवत्, यथा जलम्, न चेयं पृथिवी गन्धाभाववती, तस्मान्न इतरभेदाभाववती" इत्यत्र पृथिवीमात्रस्य पक्षतया "यद् गन्धवत् तदितरभिन्नम्" इत्यन्वयदृष्टान्तस्याभावेन गन्धरूपहेतुव्यापकेतरभेदरूपसाध्यसामानाधिकरण्यात्मकाऽन्वयव्याप्तिग्रहस्याभावः । "यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावः, यथा जलादिकम्" इति व्यतिरेकदृष्टान्ते च जलादावितरभेदाभावरूपसाध्याभावव्यापकत्वं गन्धाभावे (हेत्वभावे) गृह्यते । एवं च—साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्त्वं तत्रास्तीति समन्वयः । २ अत्रायं निष्कर्षः—"पृथिवी जलादिचतुष्काद् भिद्यते, गन्धवत्त्वात्" इत्यत्र गन्धवत्त्वस्य स्वव्यापकसाध्यसामानाधिकरण्यज्ञानमादौ न संभवति, किंतु जलादिचतुष्टयभेदाभाववति जलादिचतुष्टयरूपे गन्धवत्त्वाभावज्ञानमेव प्राक् प्रवर्तेत इति गन्धवत्त्वस्य साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्यत्वादनुमानस्य केवलव्यतिरेकित्वं, वीतभिन्नत्वेनावीतत्वं च सिध्यति । सिध्यति च पृथिव्यां जलादिचतुष्टयतादात्म्यं नास्तीति अभावग्राहकत्वात् प्रतिषेधकत्वमिति । ३ यद्यपि "वीतमवीतं च" इति पूर्वोक्तरीत्या वीतस्यैव पूर्वं निरूपणमुचितम्, तथापि स्वल्पायाससाध्यसूचीनिर्माणानन्तरं बह्वायाससाध्यकटाहनिर्माणवत् पूर्वमवीतनिरूपणमिति न्यायार्थः ।

यदाहुः—'प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच् छिष्यमाणे सम्प्रत्ययः परिशेष' इति। (न्या० भा० १।१।५)

---

'शेषविषयम्' इत्यर्थं दर्शयितुं तद्व्युत्पत्तिमाचष्टे—शिष्यत इति। शेषोऽस्त्यस्येति शेषवत्, कर्मघञन्तात् शेषशब्दान्मतुबिति भावः। एवं च "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संबन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति वार्तिकेन संबन्धेऽस्तिविवक्षायां मतुपो विधानाज् ज्ञाने च पदार्थाः विषयताख्य संबन्धेनैव भान्तीति "विषयतया" इत्यर्थादेव लभ्यते इति ध्येयम्। शेषवत एव नामान्तरं परिशेष इत्यर्थे न्यायभाष्यकृतां सम्मतिमाह—यदाहुरिति। न्यायभाष्यकृत इति शेषः। तत्र हि "शेषवन्नाम परिशेषः" इत्युक्त्वा "प्रसक्तप्रतिषेधे—" इत्युक्तम्। यथा—"शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति समवायिकारणकत्वात्, यन्नैवं, तन्नैवं यथारूपम्" इति परिशेषानुमानम्। परिशेषपदार्थस्य समन्वयश्चेत्थम्—प्रसक्तस्य=अष्टद्रव्याश्रितत्वस्य प्रतिषेधे=अभावे वक्तव्ये, अन्यत्र=शब्दादन्यत्ररूपादौ, अप्रसङ्गात्=तादृशप्रतिषेधस्य प्राप्त्यभावात् परिशिष्यमाणे शब्दे, संप्रत्ययः=प्रसक्तप्रतिषेधस्य संबन्ध इति। यथोक्तं न्यायमकरन्दव्याख्यायां चित्सुखाचार्यैः—

"शब्दः समवायिकारणजन्यः, गुणत्वाद्, रूपवत्" इत्यत्रसामान्येन समवायिकारणेऽवगते शब्दाश्रयत्वेन प्रसक्तानां=पृथिव्यादीनां दिक्कालमनसां च तदाश्रयत्वप्रतिषेधे अन्यत्र=गुणादावप्रसङ्गाच् छिष्यमाणे=नभसि यः प्रत्ययः="शब्दोऽष्टद्रव्यव्यतिरिक्तद्रव्याश्रितोऽष्टद्रव्यागुणत्वे सति गुणत्वाद् रूपवत्" इति यत् केवलव्यतिरेक्यनुमानं स परिशेष इत्यर्थः॥ इति।

अयं भावः—"शब्दो गुणः, मानुषचाक्षुषप्रत्यक्षाविषयत्वे सति-बहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्" इत्येवं शब्दस्य गुणत्वे स्थिते, गुणत्वेन च समवायिकारणजन्यत्वाद् अनिर्धारितयत्किंचिद् द्रव्याश्रितत्वे च साधिते "तदाश्रयीभूतं द्रव्यं किम्" इत्यपेक्षायां सम्भावनामात्रेण तदाश्रयत्वेन प्रसक्तानां=पृथिव्याद्यष्टद्रव्याणां प्रतिषेधे="प्रत्यक्षत्वे सत्यकारण-

---

१ यत्र प्राप्तिसंभावना तत्र निषेधे सति, तद्भिन्नेऽप्राप्तिपूर्वकं शेषविषयेऽनुमितिकरणं परिशेषानुमानम्, इत्यक्षरार्थसारम्। २ घटादौ व्यभिचारवारणाय—चाक्षुषेत्यादि। शब्दस्य सर्पेण चक्षुषा ग्रहणादुक्तं—मानुषेति। आत्मनि व्यभिचारणाय—बहिरिन्द्रियेति। रसत्वादौ व्यभिचारवारणाय—जातिमत्त्वादिति। ३ सम्प्रति शब्दस्य द्रव्याश्रितत्वं साधयति—गुणत्वेन चेति। शब्दो द्रव्यसमवेतः, गुणत्वाद, 'संयोगवत्' इत्यनुमानमत्र बोध्यम्। तदाश्रयत्वेन=शब्दाश्रयत्वेन। ४ स्पर्शवतां=पृथिव्यप्तेजोवायूनां विशेषगुणः शब्दो नेत्यर्थे हेतुनाह—'प्रत्यक्षत्वे'—इत्यादिना। पटरूपादयो हि स्वाश्रयस्य यत् समवायिकारणं तद् गुणपूर्वका दृष्टा अयं तु न तथाऽतो न रूपादिवत्पृथिव्यादिगुणः शब्दः। कारणगुणोत्पन्नत्वं च स्वाश्रयसमवायिसमवेतगुणजन्यत्वम्। तद्यथा—स्वं

गुणपूर्वकत्वाद्, अयावद्द्रव्यभावित्वाद्[1], आश्रयादन्यत्रोपलब्धेश्च[2] न स्पर्शवद् विशेषगुणः । बाह्येन्द्रियप्रत्यक्षत्वाद्[3], आत्मान्तरग्राह्यत्वाद्[4], आत्मन्यसमवायाद्[5], अहङ्कारेण[6] च विभक्तग्रहणाच्च नात्म-गुणः । श्रोत्रग्राह्यत्वाद्[7], वैशेषिकगुणभावाच्च न दिक्कालमनसाम्" इति प्रशस्तपादोक्तदिशा तदाश्रयत्वनिरासे, अन्यत्र=द्रव्यातिरिक्ते गुणादौ, अप्रसङ्गात्="गुणा-

---

पटस्य रूपं तदाश्रयः=पटः तस्य समवायी=तन्तुः तत्र समवेतो गुणः=तन्तुरूपमेव, तेन तन्तुरूपेण असमवायिकारणेन पटरूपं जन्यते, अतः कारणगुणपूर्वकमेवैषां प्रत्यक्षमिति युक्तम् । पार्थिवपरमाणुरूपादयोऽपि स्पर्शवद्विशेषगुणा अकारणगुणपूर्वकाश्च परमाणोरकार्यत्वात्, तद्वारणाय-प्रत्यक्षत्वेसतीति ।

१ यथा रूपादयो यावत्स्वाश्रयद्रव्यं वर्तन्ते न तथा शब्दो यावद्द्रव्यं वर्तते, विद्यमानेऽपि स्वाश्रये शंखादौ विनाशदर्शनादतो न स्पर्शवद्विशेषगुणः । एतदुक्तं भवति– द्रव्यस्थितिकालपर्यन्तं यस्य स्थितिः असौ यावद्द्रव्यभावी । यथा–पृथिव्या गन्धादिगुणा उत्पद्यमाना यावत्कार्यस्थायिनो यावद्द्रव्यभाविन इत्युच्यन्ते । शब्दस्तु न तथा, किन्त्वयं मन्द–मन्दतर–मन्दतमा–दि तारतम्यविशिष्टः शनैः शनैर्विनाशमुपयाति, अस्याश्रयो द्रव्यमाकाशं तु न नश्यति । तस्मात् पृथिव्यादिगतगन्धादिगुणविपरीतधर्मवानयं न पृथिव्यादीनां विशेषगुण इति । २ यथा रूपादयः स्वाश्रयादन्यत्र नोपलभ्यन्ते नैवं शब्दः, तस्य स्वाश्रयाच्छंखादेरन्यत्र कर्णशष्कुलीदेशे समुपलभ्यमानत्वादतोऽपि न स्पर्शवद्विशेषगुण इत्यर्थः । ३ यथा रूपं बहिरिन्द्रियजन्यप्रत्यक्षत्वधर्मवत् अतो नात्मगुणः एवं शब्दोऽपि । आत्मविशेषगुणानामिच्छादीनां बहिरिन्द्रियेण प्रत्यक्षमेव न भवतीति भावः । ४ अनेकप्रतिपत्तृसाधारणत्वादित्यर्थः । या खलु वीणावेण्वादिजा शब्दव्यक्तिः सन्ततिद्वारेण एकेन पुरुषेण प्रतीयते, सैवापरेणापि तद्देशवर्तिना प्रतीयते, नत्वेवमात्मगुणः सुखादिरित्यात्मगुणवैधर्म्यान्नात्मगुण इत्यर्थः । ५ रूपादिवद् आन्तरत्वेन अनवगमाद् आत्मनि समवेतत्वाभावान्नात्मगुण इत्यर्थः । एतदुक्तं भवति,—आत्मभिन्ने समवायात् नात्मगुणः, यदिशब्दो ज्ञानादिवदात्मनि समवेतः स्यात् तर्हि बधिरोऽपि शृणुयात् इति । ६ यः खल्वात्मगुणः सोऽहङ्कारेण समानाधिकरणो गृह्यते–'सुख्यहम्' इत्यादि, नत्वेवं शब्दस्य ग्रहणम् अतो नात्मगुणः इत्यर्थः । ७ ये किल दिक्कालमनसां गुणाः संयोगादयस्ते श्रोत्रग्राह्या न सन्ति, अयन्तु श्रोत्रग्राह्योऽतो न तद्गुण इत्यर्थः । ८ "शब्दो न दिंगादिगुणो विशेषगुणत्वात् सुखादिवत्" इति भावः । यो लौकिकसंयुक्तसमवायादिसंबन्धेन इन्द्रियग्राह्यः, अस्ति च तेनैव संबन्धेन न द्वीन्द्रियग्रहणाऽयोग्यत्वधर्मवान् गुणत्वव्याप्यजातिमांश्च स विशेषगुण इत्युच्यते । दिक्कालमनःसु तु न कश्चिदपि विशेषगुणो वर्तत इति तत्त्वम् । ९ एतच्च "परत्रसमवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः, । परिशेषाल्लिङ्गमाकाशस्य" ( वै० २।१।२६।२७। इति सूत्रयोरुक्तम् ।

---

1 यावद्द्रव्यं=स्वाश्रयद्रव्यस्थितिकालपर्यन्तं भवति=विद्यते तद् यावद्द्रव्यभावि, स्वाश्रयध्वंसप्रयोज्यध्वंसप्रतियोगीति यावत् । तदाह—द्रव्यस्थितीति ।

अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते ।

---

दीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे" इत्येवं शब्दगुणाश्रयत्वप्राह्यभावात्, परिशिष्यमाणे=नभोद्रव्ये यः संप्रत्ययः="शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति गुणत्वाद्, यन्नैवं न तदेवम्, यथा गन्धादि" इति केवलव्यतिरेकिप्रयोगप्रयोज्यं यदनुमानं स परिशेष इति ॥ ॐ ॥

यथा वा उद्योतकराचार्याः—इच्छादीनां गुणत्वेन पारतन्त्र्यप्रतिपत्तिः सामान्यतो दृष्टानुमानेन साधनीया, आत्मतन्त्रताप्रतिपत्तिस्तु परिशेषानुमानादिति।

अयं भावः—"इच्छादयो गुणा अनित्यत्वे सति अस्मदाद्यचाक्षुषप्रत्यक्षत्वात्, गन्धवत्, ते च क्वचिदाश्रिता गुणत्वाद् रूपादिवत्" इति सामान्यतो दृष्टानुमानद्वाराऽनिर्धारिते कस्मिंश्चिदाश्रये सिद्धे, न तावत् पृथिव्यादिचतुष्टयगुणाः प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात् । नाप्याकाशविशेषगुणा बाह्येन्द्रियाप्रत्यक्षत्वात् । नापि दिक्कालमनसां गुणा विशेषगुणत्वात् । इत्येवं प्रसक्तप्रतिषेधे सति "इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः" इत्याद्युक्तरीत्याऽऽत्मतन्त्रतासिद्धिरिति ॥ ॐ ॥

ननु सांख्यसिद्धान्त इच्छादीनामात्मधर्मत्वाभावेनावीतोदाहरणासंभवात् तदतिरिक्तं प्रकृतशास्त्रीयसिद्धान्तानुसारमवीतोदाहरणं किमिति जिज्ञासायामाह—अस्य चावीतस्येति । अग्रे='असदकरणात्'—इति नवमकारिकायां "न पटस्तन्तुभ्यो भिद्यते" इत्यारभ्य "तान्येतान्यभेदसाधनान्यवीतानि" इत्यन्तेन ग्रन्थेन वक्ष्यते मयेत्यर्थः ॥ ॐ ॥

अयमत्र निष्कर्षः—साङ्ख्याः किल उपादानोपादेययोस्तादात्म्यमभ्युपयन्ति । तच्च भेदसमानाधिकरणोऽभेदः तेन च आत्यन्तिकभिन्नत्वम् आत्यन्तिकाभेदश्च व्यावर्त्यते । अतः तद्धर्मत्वहेतुना पटे तन्तुभेदाभावे साधनीये न भेदमात्रं साध्यम्, तस्यानिष्टत्वात्, किन्तु अभेदासहचरितमभेद एव निषेध्यः। अत एव भेदाभावमात्रसाधने अभेदो न सिध्यति । तथाच "पटे तन्तुना सह आत्यन्तिकाभेदस्य कार्यकारणभावादेव अप्रसक्त्या नैयायिकाभ्युपगतदिशा आत्यन्तिकभेदस्य प्रसक्तत्वात् तन्निषेधे परिशिष्यमाणं तादात्म्यमेव । तदेव "न पटस्तन्तुभ्यो भिद्यते, "तद्धर्मत्वात्" इत्यनुमानेन साध्यते । साध्यहेत्वोरन्वयव्याप्तः पूर्वमप्रसिद्धत्वाद् भवतीदमनुमानं व्यतिरेकीति ॥ ॐ ॥

---

१ "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतेः, "कामः संकल्पः"—इत्यादिश्रुतेश्चेति भावः । केचित्तु—"इच्छादयः क्वचिदाश्रिता गुणत्वात्, रूपवत्" इत्यादौ गुणत्वेन पृथिव्यादिकार्ये—शरीरेन्द्रियाद्याश्रितत्वप्रसक्तौ अधिकरणाप्रत्यक्षत्वेन तन्निषेधे दिक्कालादिगुणानामतीन्द्रियतया तदाश्रितत्वाप्रसङ्गात् अप्रसक्तेः शिष्यमाणे बुद्ध्याश्रितत्वे संप्रत्ययः=प्रमारूपः, स यस्यानुमानस्य प्रतिपाद्यतया अस्ति, "तच्छेषवत्" इति रीत्या इहैव लक्षणं संगमयन्ति ।

वीतं च द्वेधा—पूर्ववत्, सामान्यतो दृष्टं च । तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं=प्रसिद्धं—दृष्टस्वलक्षणसामान्यमिति यावत्, तदस्य विषयत्वेनास्त्यनुमानस्येति पूर्ववत् ।

---

निरूपितमवीतं, सम्प्रति वीतं निरूपयितुं तद्विभागं तावदाह—वीतं चेति । वीतमनुमानं द्विविधम्—एकं पूर्ववत्, द्वितीयं सामान्यतो दृष्टम् इत्यर्थः । तत्र तयोः स्वरूपजिज्ञासायामाह—तत्रेति । तत्र=तयोर्द्वयोर्वीतयोर्मध्ये एकं यत् दृष्टस्वलक्षणसामान्यविषयं तत् पूर्ववन्नामकं वीतम् इत्यन्वयः । ननु 'पूर्ववत्' इत्यतिलघीयसा पदेन कथं "दृष्टस्वलक्षणसामान्यविषयम्' इति महतोऽर्थस्य लाभ इति चेत्, तद्व्युत्पत्त्येत्याह—पूर्वमित्यादिना । 'पूर्व'शब्दं विवृणोति—प्रसिद्धमिति । प्रसिद्धपदार्थमाह—दृष्टस्वलक्षणसामान्यमिति । स्वलक्षणशब्दः "स्वम्=असाधारणं लक्षणं=रूपम्" इतिव्युत्पत्त्या तत्तदवयवसन्निवेशविशेषालिङ्गिततत्तद्व्यक्तिपरः । यथोक्तं न्यायबिन्दौ—"यस्यार्थस्य सन्निधानाऽसन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणम्" इति ।

---

१ अत्रेदं व्याख्यान्तरम्—पूर्वपदस्य प्रागनुभूतत्वमर्थमुपादाय व्याचष्टे—प्रसिद्धमिति । सहचारदर्शनवेलायां व्यापकत्वेन ज्ञातमित्यर्थः । ननु महानसे महानसीयो वह्निर्धूमसहचारितया दृष्टः, पर्वतादावनुमिति दशायां तु स नानुमीयते, तस्य पर्वतीयत्वात्, तत्कथं "पर्वतो वह्निमान् धूमात्" इत्यादौ प्राक्सहचारदर्शनवेलायां यो व्यापकत्वेन प्रतीतस्तद्विषयत्वेन पूर्ववत्त्वमनुमानस्य घटते, इत्यतो व्यक्तमर्थमाह—दृष्टस्वलक्षणेति । दृष्टं=सहचारदर्शनवेलायां प्रत्यक्षीकृतं स्वलक्षणं=स्वस्वरूपं यस्य सामान्यस्य तत् दृष्टस्वलक्षणम् । तच्च तत् सामान्यं चेति विग्रहः । अत्र सामान्यपदं सामान्यधर्मावच्छिन्नवस्तुविशेषपरम् । तदस्यास्तीतिपूर्ववत् । तथाविधसाध्यविषयकमनुमानमित्यर्थः । तथा च यत् सामान्यधर्मावच्छिन्नं वस्तु साध्यं तत्स्वरूपं वस्तु यदि सहचारदर्शनकाले दृष्टं तदा तत्साध्यकमनुमानं पूर्ववदिति तात्पर्यम् । एतदेव दर्शयति—यथेति । वह्नित्वेति । वह्नित्वरूपसामान्यधर्मवान् विशेष इत्यर्थः । अनुमीयत इति । एतेन वह्नित्वरूपसामान्यधर्मावच्छिन्नः साध्य इति दर्शितम् । सहचारदर्शनवेलायामपि तत्स्वरूपं दृष्टमितीदानीं दर्शयति—तस्येति । २ महानसे दृष्टं प्रत्यक्षेण स्वलक्षणम्=अननुगतं वह्निव्यक्तिमात्रं तद्वृत्ति यत्सामान्यं वह्नित्वं जातिः तद्विषयो यस्य ज्ञानस्य तदित्यर्थ इति केचित् । महानसादौ प्रसिद्धस्य महानसीयवह्नेरनुमानविषयत्वासंभवादाह—दृष्टेति । दृष्टं च तत् स्वलक्षणं चेति विग्रहः । स्वलक्षणं च—वह्नित्वावच्छिन्नमहानसादिवृत्तित्वविशिष्टो महानसीयवह्निव्यक्तिविशेषः, तस्य सामान्यं=तज्जातीयं—वह्नित्वावच्छिन्नम्" इत्यन्ये । ३ अर्थशब्दो विषयपर्यायः, यस्य ज्ञानविषयस्य सन्निधानं=निकटदेशावस्थानम्, असन्निधानम्=दूरदेशावस्थानम्, तस्मात्सन्निधानादसन्निधानाच्च ज्ञानप्रतिभासस्य=ग्राह्याकारस्य भेदः=स्फुटत्वाऽस्फुटत्वाभ्याम्, यो हि ज्ञानस्य विषयः सन्निहितः सन् स्फुटमाभासं ज्ञानस्य करोति असन्निहितस्तु योग्यदेशावस्थित एवास्फुटं करोति तत्स्वलक्षणम् । सर्वाण्येव हि वस्तूनि दूरादस्फुटानि दृश्यन्ते, समीपे त्वस्फुटानि तान्येव स्वलक्षणानि" इत्येतदर्थ इति धर्मोत्तराचार्यः ।

यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च

---

एतदुक्तं भवति—वस्तुनो हि द्विविधं रूपम्—असाधारणं साधारणं च। तत्र यदसाधारणं पृ[१]थुबुध्नोदरादिकं तत्स्वलक्षणम्। यच्च सकलव्यक्तिसाधारणं घटत्वादिकं तत् सामान्यलक्षणम् इति भावः। तथा च दृष्टम्=पूर्वमधिगतं स्वलक्षणम्=असाधारणं यस्य सामान्यस्य तद् दृष्टस्वलक्षणं सामान्यम्, तद्विषयकं यज्ज्ञानं तत् पूर्ववदनुमानमित्यत्र फलितम्। एवं च प्रत्यक्षीकृत-जातीयसाध्यकमनुमानं पूर्ववदिति सरलं लक्षणम्।

यज्जातीयसाध्यं व्याप्तिज्ञानविषयः, तज्जातीयसाध्यविषयकानुमितिरिति तु परमार्थः। तदिदमुदाहरणद्वारा स्पष्टयति—यथेत्यादिना। पर्वतो वह्निमान् 'धूमात्' इति प्रयोगः। वह्नित्वसा[२]मान्यविशेष इति। अत्र वह्नित्वसामान्यस्य विशेष इति नार्थः, येन व्यक्तिविशेषस्यानुमेयत्वं स्यात्, किन्तु वह्नित्व-रूपः सामान्यविशेषोऽनुमीयत इत्येवाभिप्रेतमिति बोध्यम्। एतेन "सामान्या-वधारणप्रधाना वृत्तिरनुमानम्" इति योगभाष्याद् (१–७) वह्नित्वरूपसा-मान्यस्यैवानुमेयत्वावगतेः "वह्नित्वसामान्यविशेषोऽनुमीयते" इति व्यक्तिरूप-विशेषस्यानुमेयत्वप्रतिपादनमयुक्तमित्यपास्तम्। ननु "वह्नित्वरूपः सामान्य-विशेषः" इत्युक्तोऽर्थस्तदैव संभवति यदि वह्नित्वस्य सामान्यविशेषोभयात्मकत्वं स्यात्, तदेव तु कथमिति चेदत्र प्रशस्तपादाचार्याः—"सामान्यं द्विविधं परमपरं चानुवृत्तिप्रत्ययकारणम्। तत्र परं=सत्ता, महाविषयत्वात्। सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव। द्रव्यत्वादि=अपरम्, अल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद् विशेषाख्यामपि लभते" इति।

अयमर्थः—अत्यन्तव्यावृत्तानां तत्त्वानां यतः कारणादन्योन्यस्वरूपानुगमः प्रतीयते तत् "सा[३]मान्यम्" इत्यभिधीयते। तच्च द्विविधम्—एकं द्रव्यादित्रिक-

---

१ पृथु-इति। स्थूलवर्तुलोदर इत्यर्थः। २ अग्नित्वसामान्यस्य जातेर्विशेषः=अग्नि-व्यक्तिः। ३ 'अनुवृत्तिप्रत्ययहेतुभूतो धर्मः सामान्यम्' इति सामान्यलक्षणम्। एतदुक्तं भवति-समानावयवसंस्थानासु अनेकासु व्यक्तिषु यत् समानाकारप्रत्ययस्य कारणं तदेव "सामान्यम्"। यथा-सकलासु व्यक्तिषु-"इयं गौः, इयं गौः" इत्याकारः समानः प्रत्ययो भवति, तस्य हेतुभूतो यो धर्मः गोत्वं नाम, तदेव सामान्यमिति जातिरिति चोच्यते। "तत्र सत्ता=परं सामान्यमनुवृत्तिप्रत्ययकारणमेव। यथा—परस्परविशिष्टेषु चर्मवस्त्र-कम्ब-लादिषु एकस्मान्नीलीद्रव्याभिसंबन्धात्-"नीलम्, नीलम्" इति प्रत्ययानुवृत्तिः, तथा पर-स्परविशिष्टेषु द्रव्यगुणकर्मसु-अविशिष्टा "सत्, सत्" इति प्रत्ययानुवृत्तिः। सा चार्थान्तराद् भवितुमर्हतीति यत्तदर्थान्तरं सा सत्ता, इति सिद्धा सत्ता। सत्तासंबन्धात् "सत्" इति प्रत्ययानुवृत्तिः। तस्मात् सत्ता सामान्यमेव। अपरं=द्रव्यत्व-गुणत्व-कर्मत्वादि; अनुवृत्ति-व्यावृत्ति-प्रत्ययहेतुत्वात् सामान्यं विशेषश्च भवति। तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्या-दिषु अनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद् विशेषः।

वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् ।

अपरं च वीतं सामान्यतो दृष्टम्—अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम् ।

---

वृत्ति "सत्ताख्यं परम्" । एतच्च स्वाश्रयस्यानुवृत्तेरेव हेतुत्वात् 'सामान्यम्' इत्येव कीर्त्यते । अपरं च द्रव्यत्वपृथिवीत्वगोत्वादिरूपम् "अपरं सामान्यम्" । एतच्च स्वाश्रयस्य विजातीयेभ्योऽपि व्यावृत्तेरपि हेतुत्वाद् "विशेष" इत्यपि व्यवह्रियते । तथा च सिद्धं वह्नित्वादेः सामान्यविशेषोभयरूपत्वमिति । सत्ताजातिः सामान्यमेव, द्रव्यत्वादयस्तु सर्वा जातयः सामान्यविशेषोभयरूपा इति परः सारः । लक्ष्ये लक्षणं सङ्गमयति—तस्य चेति । रसवत्याम्=पाकशालायाम् । स्वलक्षणशब्दस्य विवरणं—वह्निविशेष इति । वह्नित्वावच्छिन्नमहानसीयवह्निव्यक्तिविशेष इत्यर्थः । द्वितीयं वीतं निरूपयति—अपरं चेति । 'सामान्यतोदृष्टम्' इत्यस्यार्थमाह—अदृष्टस्वलक्षणेति । न दृष्टं स्वलक्षणं यस्य सामान्यस्य तत्तथा तद्विषयमित्यर्थः । न दृष्टं प्रत्यक्षेण तत् अदृष्टं अदृष्टं, च तत् स्वलक्षणं, च अदृष्टस्वलक्षणं, तस्य सामान्यं यज्जातीयं, तत् विषयो यस्य

---

तथा–गुणत्वं परस्परविशिष्टेषु रूपादिषु अनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, द्रव्यकर्मभ्यो व्यावृत्तिहेतुत्वाद् विशेषः । तथा—कर्मत्वं परस्परविशिष्टेषु उत्क्षेपणादिषु अनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, द्रव्यगुणेभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद् विशेषः । एवम्—पृथिवीत्व—रूपत्वोत्क्षेपणत्व–गोत्व–पटत्वादीनां प्राण्यप्राणिगतानाम् अनुवृत्ति–व्यावृत्ति–प्रत्ययहेतुत्वात् सामान्यविशेषभावः सिद्धः" (प्रशस्तभाष्यम्) । इति निष्कर्षः ।

१ न दृष्टं प्रत्यक्षेण स्वलक्षणं=व्यक्तिर्यस्येन्द्रियत्वसामान्यस्य तददृष्टस्वलक्षणसामान्यं तद्विषयकं ज्ञानमदृष्टलक्षणम् । अत्रेदं व्याख्यान्तरम्—अत्रापि सामान्यपदं सामान्यधर्मावच्छिन्नपरम् । न दृष्टं=सहचारदर्शनवेलायां न प्रत्यक्षीकृतं स्वलक्षणं=स्वस्वरूपं यस्य सामान्यस्य तत् अदृष्टस्वलक्षणम् । तच्च तत् सामान्यं=सामान्यधर्मावच्छिन्नं चेति विग्रहः । तद्विषयमित्यर्थः । तथाच यत्र यत्सामान्यधर्मावच्छिन्नं साध्यं तत्स्वरूपमेव वस्तु यदि सहचारदर्शनसमये व्यापकत्वेन न दृष्टं तदा तदनुमानं सामान्यतो दृष्टमिति तात्पर्यम् । तदनुमानस्य अदृष्टस्वलक्षणविषयत्वं विशदयति—अत्र हीति । नन्वत्र करणत्वसामान्यधर्मावच्छिन्नं साध्यं सहचारदर्शनसमयेऽपि करणस्वरूपमेव व्यापकतया दृष्टम्, तदस्यापि दृष्टस्वलक्षणसामान्यविषयत्वमेव संभवति, कथमदृष्टस्वलक्षणसामान्यविषयत्वमुच्यत इत्यत आह—करणत्वेति । करणत्वरूपसामान्यधर्मावच्छिन्नस्य स्वलक्षणं=स्वस्वरूपं करणस्वरूपमिति यावत् वास्यादि छेदनादौ उपलब्धं=सहचारदर्शनसमये व्यापकतया दृष्टमित्यर्थः । ननु मा भूच्छिदादिक्रियायां रूपादिज्ञानकरणसजातीयकरणदर्शनम्, अन्यत्र तज्जातीयकरणदर्शनं भवितुमर्हतीत्यत आह—इन्द्रियजातीयमिति । तत्करणं=रूपादिज्ञानकरणम् । अर्वाग्दृशाम्=योगीतरमनुष्याणाम् । इन्द्रियाणाममूर्तत्वादिति भावः ।

अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते। यद्यपि करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्, तथापि यज्जातीयस्य रूपादिज्ञाने करणत्वमनुमीयते तज्जातीयस्य करणस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण। इन्द्रियजातीयं हि तत्करणम्, न चेन्द्रियत्वसामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्वाग्दृशाम्, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः।

सोऽयं पूर्ववतः सामान्यतो दृष्टात् सत्यपि वीतत्वेन तुल्यत्वे विशेषः।

---

साध्यतयाऽनुमानस्य तदिति वा। अप्रत्यक्षीकृतजातीयसाध्यकमनुमानं सामान्यतोदृष्टमिति सरलं लक्षणम्। यज्जातीयं साध्यं व्याप्तिज्ञानविषयः, तज्जातीयभिन्नविषयकानुमितिरिति तु परमार्थः। उदाहरणमाह—यथेति। "रूपादिज्ञानानि करणवन्ति, क्रियात्वाच् छिदिक्रियावत्" इतीन्द्रियसाधकमनुमानं सामान्यतोदृष्टमित्यर्थः। तदेवोपपादयति—अत्रहीति। अत्र=इन्द्रियसाधकेऽनुमान इत्यर्थः। न च ज्ञानस्य क्रियात्वाभावाद्धेत्वसिद्धिरिति शङ्क्यम्, स्वमताभिप्रायेण तथाभिधानात्।

नन्वत्रापि छेदनादिक्रियायां कुठारादिस्वलक्षणं करणं दृष्टमेव तत्कथमस्य दृष्टस्वलक्षणसामान्याद्भिन्नत्वमित्याशङ्कते—यद्यपीति। छिदादौ=छेदनादिक्रियायां करणत्वसामान्यस्य स्वलक्षणं वास्यादि=कुठारादि उपलब्धमित्यन्वयः। तथा चास्यापि दृष्टस्वलक्षणसामान्यविषयत्वान्न पूर्ववतोऽतिरिक्तत्वमिति भावः। साधारणतया दृष्टत्वेऽपि विशेषतयाऽदर्शनान्नेदं पूर्ववद् भवितुमर्हतीत्याशयेन समाधत्ते—तथापीति[1]। रूपादिज्ञाने यज्जातीयस्य=यादृग्जातिमतः करणत्वमनुमेयं तादृग्जातिमतः करणस्य स्वरूपं प्रत्यक्षेण न दृष्टमित्यर्थः। ननु तर्हि किंजातीयं तत् करणं, यन्न प्रत्यक्षगोचरः? इति जिज्ञासायामाह—इन्द्रियेति। इन्द्रियत्वजातिमद् हि तत्करणम्=रूपादिज्ञाने करणमित्यर्थः। नन्वस्तु इन्द्रियं करणं तावतापि प्रकृते किमायातमित्यत्राह—नचेति। अर्वाग्दृशाम्=अयोगिनाम् इन्द्रियविशेषो (इन्द्रियम्) न प्रत्यक्षगोचरो निरवयवत्वेनातीन्द्रियत्वात्, तथा चायातमिन्द्रियस्यादृष्टत्वमिति। तत्र व्यतिरेकिदृष्टान्तमाह—यथेति। यथा वह्नित्वसामान्यस्य स्वलक्षणं=वह्निः प्रत्यक्षगोचरो न तथा इन्द्रियत्वसामान्यस्य स्वलक्षणम्[2]=इन्द्रियं प्रत्यक्षगोचर इति सिद्धं पूर्ववतोऽनुमानादस्यातिरिक्तत्वमिति तत्त्वम्। तदेवाह—सोऽयमिति। वीतत्वेनोभयोः समानत्वेऽपि सोऽ-

---

१ रूपोपलब्धिः सकरणिका क्रियात्वाच्छिदादिक्रियावत्' इति करणानुमाने, वास्यादि= स्वलक्षणं करणत्वस्याश्रयीभूता व्यक्तिरुपलब्धा तत्कथमदृष्टसामान्यं करणत्वमिन्द्रियमित्यर्थः।

२ स्वलक्षणम्=इन्द्रियव्यक्तिस्तन्नास्माकमर्वाग् दृशां गोचर इति अदृष्टस्वलक्षणमिन्द्रियत्वम्। "इन्द्रियं त्वतीन्द्रियम्" इत्युक्तेरिति भावः।

अत्र च दृष्टं=दर्शनं सामान्यत इति सामान्यस्य, सार्वविभक्तिकस्तसिः। अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतो दृष्टमनुमानमित्यर्थः॥

---

यम्=अनन्तराभिहित एव दृष्टस्वलक्षणसामान्यविषयत्वरूपः पूर्ववतः=पूर्ववदनुमानस्य सामान्यतो दृष्टानुमानाद् विशेषः=प्रभेदः इत्यर्थः। तथाच द्वयोरेव वीतत्वाविशेषेऽपि दृष्टस्वलक्षणादृष्टस्वलक्षणसामान्यविषयत्वभेदेन द्वैविध्यमिति भावः। करणत्वसामान्यविशेषत्वस्य वास्यादावभिधानं तु सकरणकत्वस्य साध्यस्य करणे एव पर्यवसानमित्यभिप्रायेणेति बोध्यम्॥

"सामान्यतो दृष्ट"पदाद् "अदृष्टस्वलक्षणसामान्यविषयम्" इत्युक्तोऽर्थो न लभ्यते, अत उक्तार्थपरत्वं शक्त्यैव दर्शयति—अत्रचेति। अत्र="सामान्यतो दृष्टम्' इति वाक्ये। 'दृष्टम्' इत्यस्य विवरणम्—दर्शनमिति। भावे क्तप्रत्ययादिति भावः। 'दर्शनम्' इत्यस्य ज्ञानमित्यर्थः। सामान्यत इत्यस्य विवरणं—सामान्यस्येति। ननु सामान्यत इति पञ्चम्यन्तस्य षष्ठ्यन्तपरतया व्याख्यानं कथमत आह—सार्वेति। तथा चात्र षष्ठ्यन्तादेव तसिर्न पञ्चम्यन्तात्तसिलिति भावः। एतदुक्तं भवति—'सामान्यत' इत्यस्य षष्ठ्यन्तप्रकृतिकतसन्तत्वेन 'सामान्यस्य' इत्यर्थपरत्वम्, 'दृष्टम्' इत्यस्य च भावक्तान्तत्वेन 'दर्शनम्' इत्यर्थपरत्वमिति "सामान्यस्य दर्शनम्" इत्यर्थलाभाद् आयातमर्थाद् विशेषस्यादृष्टत्वमिति, तमिममार्थिकार्थमभिप्रेत्यैव "सामान्यतो दृष्टम्=अदृष्टस्वलक्षणसामान्यविषयम्" इत्युक्तमिति। तथाच विशेषदर्शनस्थले पूर्ववदनुमानं सामान्यदर्शनस्थले च सामान्यतो दृष्टानुमानम्' इति दृष्टादृष्टत्वप्रयुक्तस्तयोर्भेद इति फलितम्॥ ॐ॥

न्यायवार्तिककारास्तु—"पूर्ववदिति वतिप्रत्यय एषः, यथा पूर्वं प्रत्यक्षेण दृष्टोऽर्थस्तथानुमानेनापि तमेवार्थं प्रतिपद्यत इति पूर्ववद् दृष्टो भवति। यदितरधर्मदर्शनाद् धर्मिणोऽधिगतिसाधनं तत्सामान्यतो दृष्टम्, यथेच्छादिभिरात्मा"

---

१ अदृष्टस्वलक्षणता इत्यर्थः। २ प्रकृतमुपसंहरति—अदृष्टेति। विशेषस्य=व्यक्तेरित्यर्थः। ३ एतेन 'सामान्यतोदृष्टम्' इत्यत्रत्यदृष्टपदस्य" अदृष्टलक्षणसामान्यविषयम्" इत्येवम् अदृष्टार्थपरत्ववर्णनमयुक्तम्, दृष्टपदस्य तद्विरुद्धाऽदृष्टार्थकत्वासंभवादित्यपास्तम्। ४ यद्धि स्वलक्षणशब्देन विवक्षितं तस्यैवात्र विशेषशब्देन व्यवहार इति ज्ञेयम्। ५ पूर्वेण तुल्यं वर्तत इति पूर्ववत्, क्रियातुल्यतायां च वतिः, यथा पूर्वमन्यतरदर्शनेन सहान्यतरदर्शनं दृष्टान्तधर्मिणि, एवं साध्यधर्मिण्यन्यतरसाधनधर्मदर्शनेनान्यतरसाध्यधर्मस्यानुमितिदर्शनमिति भवति क्रियातुल्यतेत्यर्थः' इति वाचस्पतिमिश्राः।

इत्यादिग्रन्थेन "यत्र साध्यतावच्छेदकहेतुतावच्छेदकरूपपुरस्कारेण व्याप्तिग्रहस्त-त्पूर्ववदनुमानम् । यत्र च साध्यतावच्छेदकहेतुतावच्छेदकरूपव्यापकधर्मपुरस्कारेण व्याप्तिग्रहस्तत्सामान्यतोदृष्टमनुमानम्" इत्येवं तयोर्भेदमाहुः ।

न्यायभाष्ये तु—"पूर्ववदिति—यत्र कारणेन कार्यमनुमीयते, यथा—मेघोन्नत्या भविष्यति वृष्टिरिति । शेषवत् तद् यत्र कार्येण कारणमनुमीयते । पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते—भूतावृष्टिरिति । सामान्यतोदृष्टं=व्रज्यापूर्वकमन्यत्र दृष्टस्याऽन्यत्र दर्शनमिति । तथाचादित्यस्य

१ यथा–पर्वते पक्षे धूमेन हेतुना वह्नौ साध्ये धूमत्ववह्नित्वरूपपुरस्कारेण महानसादौ व्याप्तिग्रहः । २ यथेच्छादिभिरात्मनि साध्ये इच्छात्वाऽऽत्मत्वव्यापकाभ्यां गुणत्वद्रव्यत्वाभ्यां व्याप्तिग्रहः । शेषवदनुमानं तु प्रसिद्धे पक्षेऽसिद्धस्येतरभेदस्य साधकमनुमानमिति दिक् ३ तयोः=पूर्ववत्सामान्यतोदृष्टयोः । ४ एवं च–पूर्वः=कारणं तद्वत् पूर्ववत् । कारणदर्शनेन कार्यविषयकमनुमानं पूर्ववदित्युच्यते । यथा मेघोन्नत्या=उन्नतेन वृष्ट्युन्मुखेन मेघेन भविष्यत्कालिका वृष्टिरनुमीयते । अत्र मेघोन्नतिः कारणं वृष्टिश्च तत्कार्यमिति स्पष्टमेव । "वृष्टिमन्त एते मेघाः, गम्भीरध्वानवत्त्वे सति बहुबलाकावत्त्वे सति अचिरप्रभवत्त्वे सति उन्नतिमत्त्वात्, वृष्टिमन्मेघवत्" इत्यत्र प्रयोगाकारः । (न्या० वा०) ५ शेषः=कार्यं तद्वत् शेषवत्=कार्यवत् । कार्यदर्शनेन कारणविषयकमनुमानं शेषवदित्युच्यते । यथा–पूर्वोदकविपरीतं=मलिनमुदकं दृष्ट्वा नदीपात्रस्य पूर्णत्वं च दृष्ट्वा स्रोतसः=प्रवाहस्य शीघ्रत्वं=शीघ्रगामित्वं च दृष्ट्वा तत्कारणभूता वृष्टिरनुमीयते—"भूतावृष्टिः" इति । अत्रोदकादीनां मालिन्यादिकं कार्यं वृष्टिश्च तत्कारणमिति कार्येण कारणानुमानं सिद्धम् । "उपरि वृष्टिमद्देशसंबन्धिनी नदी, स्रोतःशीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात्, पूर्णवृष्टिमन्नदीवत्" इति चात्र प्रयोगः ( न्या० वा० )। ६ अन्यत्र दृष्टस्य यदन्यत्र दर्शनं तद् व्रज्यापूर्वकम्=गतिपूर्वकमेव भवति, यथा मथुरायां दृष्टस्य चैत्रस्य यत् काश्यां दर्शनं तद् गतिपूर्वकमेव भवति, गतिहीनस्य तथादर्शनाभावादिति सामान्यतो दर्शनेनाऽप्रत्यक्षमनुमीयते । तथा चादित्यस्यापि पूर्वस्यां दृष्टस्य यत् पश्चिमायां दर्शनं तेन देशान्तरप्राप्तिदर्शनेनाऽऽदित्यस्य अप्रत्यक्षाऽपि व्रज्या=गतिरनुमीयते—"अस्तीति" । देशान्तरप्राप्तिमान् आदित्यः, द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसंबन्धात्, अनुत्पन्नपादविहारस्य परिवृत्य[1] तत्प्रत्ययविषयत्वात्, मण्यादिवत्" इति न्यायाकारः । ( न्या० वा० )

1 तत्प्रत्ययविषयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः, सोऽपि हि प्रत्यभिज्ञानविषयो भवति तत्रैव स्थितस्तन्निवृत्त्यर्थ–परिवृत्येत्युक्तम् । तथापि गुणादिभिर्व्यभिचारस्तन्निवृत्त्यर्थ–द्रव्यत्वे सतीति । तथापि प्रदीपप्रभाभिर्व्यभिचारस्तन्निवृत्त्यर्थ—क्षयवृद्धिप्रत्ययाविषयत्वे सतीति । तथापि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थ—प्राङ्मुखोपलभ्यत्वे सतीति । तथापि दृष्ट्वैव यदि पुरोऽवस्थितस्य पश्चिमाभिमुखस्य

सर्वं चैतदस्माभिर्न्यायवार्तिकतात्पर्यटीकायां (१।१।५) व्युत्पादितमिति नेहोक्तं विस्तरभयात् ।

प्रयोजकवृद्धशब्दश्रवणसमनन्तरं प्रयोज्यवृद्धप्रवृत्तिहेतुज्ञाना-

---

तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति" इति व्याख्यान्तरमप्युक्तं तदप्यत्रानुसन्धेयम् । वृत्तिकाराः श्रीविश्वनाथन्यायपञ्चाननास्तु—"पूर्ववदिति अन्वय्यनुमानम्, शेषवदिति व्यतिरेक्यनुमानम्, सामान्यतो दृष्टमिति अन्वयव्यतिरेक्यनुमानम्" इत्येवं सूत्रमिदं व्याचख्युः ॥ ❀ ॥

अत्रत्यो बहुवागाडम्बरस्तु न्यायदर्शनीयचतुर्थसूत्रे न्यायवार्तिकव्याख्याने द्रष्टव्य इत्याह—सर्वं चेति । व्युत्पादितम्=विशेषेण प्रतिपादितम् । पूर्वम्=अन्यतरदर्शनेन सह यत्रान्यतरदर्शनं दृष्टान्तधर्मिणि, ततः पक्षेऽन्यतरदर्शनेनाऽन्यतरस्य–साध्यधर्मस्य दर्शनमनुमानमनुमित्यात्मकं ज्ञानमिति भवति क्रियातुल्यता, इत्यादिरीत्या तत्र व्युत्पादनादिति भावः ॥ ❀ ॥ इति सारबोधिन्यामनुमाननिरूपणम् ॥ २ ॥ ❀ ॥

## अथ शब्दनिरूपणम् ।

अनुमानं निरूप्य साम्प्रतमुद्देशक्रमप्राप्तं शब्दं निरूपयितुकामोऽनुमानानन्तरं शब्दनिरूपणे उपजीवकत्वरूप–सङ्गतिं[2] तावद्दर्शयति—प्रयोजकेत्यादिना ।

---

१ पूर्वम्=अन्वयस्तद्वत्केवलान्वयीत्यर्थः । यथा—"इदमभिधेयं, प्रमेयत्वात्, सम्मतवात्" इत्यादि । शेषो=व्यतिरेकस्तद्वत् केवलव्यतिरेकीत्यर्थः । यथा—"पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वात्, व्यतिरेके जलादिवत्" इत्यादि । सामान्यतो दृष्टम्=अन्वयेन व्यतिरेकेण च गृहीतव्याप्तिकम् । यथा—"वह्निमान् धूमात्" इत्यादि ।" इति योगचन्द्रिकायां नारायणतीर्थस्वामिनोऽप्येवमेव स्वीचक्रुः । २ यत् यदनन्तरं निरूपणीयं भवति, तत् तन्निरूपितसङ्गतिमत् भवति' इति व्याप्तिः । "नासङ्गतं प्रयुञ्जीत" इत्यभियुक्तोक्तेः । सङ्गतिश्च अनन्तराभिधाने प्रयोजकजिज्ञासाजनकज्ञानविषयरूपा । षड्विधा च सा भवति—तथा चोक्तम्—"सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते" ॥ इति । तत्र प्रसङ्गः=उपेक्षानर्हत्वम्, उपोद्घातादिभिन्नत्वे सति स्मरणप्रयोजकसंबन्धो वा । प्रकृतोपपादकत्वम् उपोद्घातः, हेतुता=उपजीव्योपजीवकभावः, उपजीव्यत्वं कारणत्वम् उपजीवकत्वं कार्यत्वम् । अवसरः=अवश्यवक्तव्यत्वम् । निर्वाहकैक्यम्=एकप्रयोजकप्रयोज्यत्वम् । कार्यैक्यम्=एककार्यकारित्वम् इत्यन्यत्र विस्तरः ।

---

प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारस्तन्निवृत्त्यर्थम्—अनुत्पन्नपादविहारस्येत्युक्तम् । तदभिमुखदेशसंबन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्य अनुत्पन्नः पादविहारो यस्य स तथोक्तः । तमुद्दिश्य खल्वयं पद्भ्यां संचरमाणः प्रासादस्य पृष्ठतो भवतीति भावः (ता. टी.) ।

नुमानपूर्वकत्वाच्छब्दार्थसंबन्धग्रहणस्य, स्वार्थसंबन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति—"आप्तश्रुतिराप्तवचनं तु" इति ।

"अनुमानानन्तरं शब्दं लक्षयति" इति संबन्धः । ननु प्रत्यक्षशब्दयोः सारूप्येण अनुमानस्य च सामान्यविषयत्वेन वैरूप्यात् प्रत्यक्षानन्तरमेव शब्दो निर्वक्तव्यो नानुमानानन्तरम्, अस्ति च प्रत्यक्षशब्दयोः सारूप्यम्, "उभयं सहाविषयं शब्दः प्रत्यक्षं च, कथमिति, प्रत्यक्षेणापि सामान्यविशेषतद्वतां ग्रहणं, शब्देनापि" इति न्यायवार्तिककारोक्तेरित्याशङ्कायामाह—अनुमानपूर्वकत्वमिति, इति । इति=यतः शब्दस्य अनुमानपूर्वकत्वम् अतस्तदनन्तरमेव आगमनिरूपणं युक्तमित्यर्थः । यद्यपि शब्दस्यास्तिप्रत्यक्षसारूप्यम्, तथापि अन्तरेण अनुमाननिरूपणं नासौ[1] शक्यो निरूपयितुमिति तस्यानुमानपूर्वकत्वात् तयोरुपजीव्योपजीवकभावसङ्गतिरिति भावः । ननु कथं शब्दस्यानुमानपूर्वकत्वमत आह—स्वार्थेति । स्वम्=शब्दश्च अर्थः=वाच्यं चेति स्वार्थौ, तयोर्यः संबन्धः=शक्तिवृत्त्यादिप्रयुक्तो वाच्यवाचकत्वादिरूपः संसर्गविशेषः, तज्ज्ञानसहकृतस्यैव शब्दस्य अर्थज्ञानजनकत्वादित्यर्थः । ननु भवतु शक्तिज्ञानसहकृतस्य शब्दस्यार्थप्रत्यायकत्वं, तावतापि कथमुपजीव्योपजीवकभावोऽत आह—शब्दार्थेति । प्रयोजक[2]वृद्धः=प्रेरको गुर्वादिः, प्रयोज्यवृद्धः=प्रेर्यः शिष्यादिः, प्रयोज्यवृद्धस्य या प्रवृत्तिः सैव हेतुर्यस्य प्रवर्तकज्ञानस्य तस्य यदनुमानं त[3]त्पूर्वकत्वाच्छब्दार्थसंबन्धज्ञानस्येत्यर्थः ।

अयं भावः—'गामानय' इत्यादिप्रयोजकवृद्धोच्चरितवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य गवानयनमुपलभ्य पार्श्वस्थो व्युत्पित्सुर्बाल इत्थमाकलयति—"इयमस्य प्रवृत्तिर्ज्ञानपूर्विका, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत्" इति, तदनु च—"अयं प्र[4]वर्तकप्रत्यय आचार्योच्चरितवाक्यजन्यः, तदनन्तरभावित्वात्" इत्येवं स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्वं चानुमाय शब्दानन्तरभाविनि तस्मिन् शब्दस्य श[5]क्तिं गृह्णाति, तदनु च 'गां बधान समिधं चानय' इत्यादिप्रयोगान्तरेषु आनयनगोशब्दयोरुद्वारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्श-

१ असौ=शब्दः, तस्य=शब्दस्य, तयोः=अनुमानागमयोः । २ अन्यव्यापारानधीनव्यापारवान् प्रयोजकः, अन्यव्यापाराधीनव्यापारवांश्च प्रयोज्यः । ३ प्रवृत्तिलिङ्गकप्रवर्तकज्ञानानुमानपूर्वकत्वादित्यर्थः । ४ प्रवर्तकप्रत्ययः=प्रवर्तकज्ञानम्, इदं ज्ञानमेतद्वाक्यजन्यम् एतद्विनाऽसत्त्वे सति सत्त्वात् इति सरलार्थः । तस्मिन्=प्रवर्तकज्ञाने । ५ शक्तिग्रहस्तु व्याकरणादितः । तद्यथोक्तम्—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च । वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।" प्रकृते व्यवहारो बोध्यः ।

तत्राप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम्।
आप्ता=प्राप्ता-युक्तेति यावद्, आप्ता चासौ श्रुतिश्चेत्याप्तश्रुतिः।
श्रुतिः=वाक्यजनितं वाक्यार्थज्ञानम्।

---

नादन्वयव्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यमवधारयतीति, स्फुटं संबन्धज्ञानस्यानुमानपूर्वकत्वमिति ॥ ॐ ॥

'आप्तश्रुतिराप्तवचनं तु' इति मूलवाक्ये कस्य लक्ष्यत्वं कस्य वा लक्षणत्वमिति जिज्ञासायां लक्ष्यलक्षणभावेन तद्विभागमाह—तत्रेति। तत्र='आप्तश्रुतिराप्तवचनं तु' इति मूलवाक्ये। लक्ष्यनिर्देश इति। "दृष्टमनुमानमाप्तवचनं च" इत्यत्र तस्यैव लक्ष्यत्वेन निर्देशादिति भावः। परिशिष्टम्="आप्तश्रुतिः" इत्येतत्। 'आप्तश्रुतिः' इति पदं विग्रहमुखेन व्याचष्टे—आप्ता=प्राप्तेति। 'प्राप्ता' इत्यस्य विवरणम्—युक्तेति। सत्यार्थबोधनसामर्थ्येन समीचीना, दोषविहीनेति वार्थः। ननु सांख्यसिद्धान्ते ज्ञानरूपा बुद्धिवृत्तिरेव प्रमाणत्वेन व्यवह्रियत इति कथं श्रुतेरागमप्रमाणता भवितुमर्हतीत्याशङ्क्य श्रुतिपदं व्याचष्टे—वाक्यजनितं वाक्यार्थज्ञानमिति। ननु "श्रुतिः स्त्री वेद आम्नायः" इति कोषाच्छ्रुतिपदस्य वेदवाक्य एव शक्तत्वात्कथमस्यार्थस्योपलब्धिरिति चेत्। श्रुतिपदमत्र जहदजहल्लक्षणया[2] सामान्यवाक्यपरमाश्रित्य

---

१ अन्ये तु व्याचक्षते—प्रयोजकवृद्धस्य शब्दः='गामानाय' इत्यादि वाक्यं, प्रयोज्यवृद्धस्य या प्रवृत्तिः=गवानयनादिप्रयत्नस्तद्धेतुभूतं यज् ज्ञानं=गवानयनस्य कर्तव्यज्ञानं तस्यानुमानं तत्रस्थस्योदासीनस्य व्युत्पित्सोरिति शेषः। प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यस्य यद्गवानयनविषयकं ज्ञानं जातम् उदासीनस्य तज्ज्ञानविषयकमनुमानम्। शब्दार्थसंबन्धग्रहणस्य=शब्दार्थयोर्यः संबन्धः=वाच्यवाचकभावरूपस्तद्ग्रहणस्य=तज्ज्ञानस्य तदनुमानपूर्वकत्वादित्यर्थः। तथाच—प्रयोजकवृद्धेन 'गामानय' इति प्रयुक्ते तत् श्रुत्वा प्रयोज्यवृद्धो गामानयति, तद्दर्शी च व्युत्पित्सुरेवमनुमिनोति—"अयं गामानयेति वाक्यात् गवानयनगोचरज्ञानवान्, तद्वाक्यश्रवणानन्तरमेव गवानयनवत्त्वात्" इति। अनन्तरं च "गामानयेति" पदकदम्बकं गवानयनविषयकज्ञानजनकताशक्तिमत्, तत्पदकदम्बेन प्रयोज्यस्य तथाविधज्ञानजननात्" इत्येवं शब्दस्यार्थबोधकताशक्तिमनुमिनोति। तस्मादनुमानपूर्वकत्वं शब्दनिष्ठवाचकताशक्तिग्रहस्येति भावः। शक्तिग्रहस्यानुमानपूर्वकत्वेऽपि शब्दप्रमाणस्यानुमानपूर्वकत्वं कथं सिध्यतीत्यत आह—स्वार्थेति। यः संबन्धः=शक्तिरूपस्तज्ज्ञानं=सहकारि यस्य तथाविधस्य शब्दस्य अर्थबोधकत्वादित्यर्थः। शक्तिज्ञानं विना शब्दस्यार्थबोधकत्वासंभवादिति भावः। अयमाशयः—प्रागुक्तप्रकारेण अनुमानाच्छक्तिग्रहः, शक्तिग्रहसहकारेण च शब्दादर्थप्रतीतिः, शब्दार्थप्रतीतौ च वाक्यार्थज्ञानं, तदेव च शब्दाख्यप्रमाणमिति परंपरया शब्दस्यानुमानमूलकं प्रमाणत्वमिति ॥ ॐ ॥ २ अनभिप्रेतभागत्यागरूपया" इत्यादिः। शक्त्युपस्थितार्थे किञ्चिदंशं परित्यज्य अवशिष्टार्थे लक्षणा जहदजहल्लक्षणा।

पुनरुपचारात् वाक्यजन्यज्ञानपरं तदाश्रीयत इत्येवमुक्तार्थलब्धेरिति गृहाण ।

यद्वा—"द्विरेफः शब्दायते" इत्यादौ तार्किकैर्यथा पूर्वं 'द्विरेफ'पदेन रेफद्वयघटितं 'भ्रमर'पदं लक्ष्यते पुनश्च भ्रमरपदेन स्वशक्यसंबन्धी जन्तु-विशेषरूपोऽर्थो लक्ष्यते, तथाऽत्रापि पूर्वं 'श्रुति'पदेन वाक्यं लक्ष्यते, पुनश्च वाक्येन तज्जन्यं ज्ञानं लक्ष्यत इत्येवं लक्षितलक्षणासमाश्रयणेन पूर्वोक्तार्थ-लाभ इति बोध्यम् ।

यद्वा श्रूयत इति श्रुतिः=श्रोत्रग्राह्यं वाक्यमिति व्युत्पत्त्या श्रुतिपदस्य वाक्य-मिति वाच्योऽर्थः, तज्जन्यं ज्ञानं च लाक्षणिकोऽर्थ इत्येवं रीत्या पूर्वोक्तार्थलाभ इति ध्येयम् ॥ ॐ ॥

न च "ऋजुमार्गेण कार्यसिद्धौ को वा कुटिलं पन्थानमाश्रयेत्" इति न्यायात् श्रुतिपदं श्रुतिस्मृत्यादिवाक्यपरत्वमेव किमिति न वर्ण्यत इति भ्रमि-तव्यम् । आप्तेति विशेषणस्य तथा सत्यसङ्गतत्वाऽऽपातात् शाक्यभिक्ष्वादि-वाक्यानां हि प्रमाणत्ववारणाय तदुपात्तमित्युत्तरत्र व्यक्तम्, श्रुतिशब्देन श्रुति-स्मृत्यादिवाक्यानां ग्रहणे तु शाक्यादिवाक्यानां ग्रहणाप्रसक्त्या तद्वारकमाप्तेति पदं पुनरुक्तं सदसङ्गतमेव स्यात्, तस्मादत्र सर्वथा श्रुतिपदं वाक्यजन्यज्ञान-परमिति ग्राह्यमिति तत्त्वम् ॥ ॐ ॥

ननु श्रुतिशब्दस्य शाब्दबोधपरत्वे कथम् 'आप्तवचनम्' इत्यनेन सामाना-धिकरण्यं, न हि वचनमेव ज्ञानं भवितुमर्हतीति चेत् । मैवम्, 'आप्तवचनम्' इत्यत्रापि उपचारेण आप्तवचनजन्यस्य ज्ञानस्यैव विवक्षितत्वात् । न चैवं

किमुक्तम् ? यत्र खलु विरोधी भागः परित्यज्यते, अविरोधी भागश्चोपादीयते सा भाग-त्यागलक्षणा । यथा–तत्त्वमसीत्यादौ तत्त्वमिति पदोपस्थितयोः सर्वज्ञत्वकिंचिज्ज्ञत्वांशयोः परित्यागपूर्वकं केवलचैतन्याभेदप्रतिपादनमिति वेदान्तेषु विस्तरः ।

१ यथा प्राणसाधनत्वेऽप्यन्नस्योपचारात् "अन्नं प्राणाः" इति प्रयोगस्तथा प्रकृतेऽपि वाक्यजन्ये ज्ञाने वाक्यमित्युपचारेण प्रयोगः । "कुतश्चिन्निमित्तादतत्त्वेऽपि तत्त्वव्यवहार उपचारः" (न्या० २।२।५९) २ तत्पदीयशक्यार्थस्य परम्परासंबन्धो लक्षितलक्षणा । यत्र लक्षितपदेन लक्ष्यार्थोऽवगम्यते, नतु शक्यार्थः, तत्र लक्षितलक्षणेति तार्किकाः । यत्र लक्षिताच्छब्दार्थाभिधानम्, तत्रैव लक्षितलक्षणेत्यालंकारिकाः, इत्यन्यत्र विस्तरः । ३ वाक्यार्थज्ञानं वाक्यार्थविषयकोऽध्यवसायापरनामा बुद्धेर्वृत्तिविशेषः । अत एवोक्तं प्राक्—बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति, वृत्तिरिति, ज्ञान-मिति चाख्यायते" इति । यद्यपि प्रत्यक्षानुमानयोरपि बुद्धेरध्यवसायत्वाविशेषस्तथापि प्रत्य-क्षस्य विषयेन्द्रियसन्निकर्षजन्यत्वात् अनुमानस्य लिङ्गलिङ्गिज्ञानजन्यत्वात्, आप्तवचनस्य च वाक्यजन्यत्वात् परस्परं भेद इति द्रष्टव्यम् । एतेन प्रथमं वाक्यश्रवणम्, अनन्तरं वाक्यार्थ-विषयकं बुद्धेरध्यवसायलक्षणं ज्ञानं जायते, तदेव शब्दप्रमाणम् । तस्य चाध्यवसायलक्ष-णज्ञानस्य चित्संबन्धः शाब्दी प्रमा । चित्सान्निध्यं तत्र करणव्यापार इति सिद्धम् ।

तच्च स्वतःप्रमाणम्—अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाऽऽशङ्काविनिर्मुक्तेर्युक्तं भवति।

'वाक्यजनितं वाक्यार्थज्ञानम् आप्तवचनजनितं ज्ञानम्' इत्येवं योजनया पौनरुक्त्यं स्यादिति शङ्क्यम्, अनुवादस्थल इव लक्ष्यलक्षणभावस्थलेऽपि पौनरुक्त्याऽनङ्गीकारात्, कथमन्यथा "प्रमाकरणं प्रमाणम्" इत्यादीनां सङ्गतिः स्यात्, प्रमाणपदस्यापि प्रमाकरणरूपार्थबोधकत्वेन पौनरुक्त्यस्य तत्रापि स्पष्टत्वात्। तस्मात् "शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् [ न्या० ५।२।१४ ] इति गोतमसूत्रेऽनुवादपदं लक्ष्यलक्षणभावस्थलस्याप्युपलक्षणमिति द्रष्टव्यम्।

नन्वेवमपि 'वाक्यजन्यं ज्ञानम्' इत्येवास्तु किं निरर्थकेन 'वाक्यार्थ' इति पदोपादानेन, न हि वाक्यार्थज्ञानभिन्नमन्यत् किंचित् वाक्यजन्यं ज्ञानं संभवति, यद्व्यावर्तनाय 'वाक्यार्थे'ति विशेषणं सार्थकं स्यादिति चेत्। मैवम्, वाक्येन अर्थ्यते=स्वकीयतात्पर्यविषयतया प्रार्थ्यते योऽभिधेयस्तज्ज्ञानस्यैव वाक्यजन्यस्याऽऽगमप्रमाणत्वं न तु यथाश्रुतवाक्यजन्यज्ञानस्येत्यर्थबोधनार्थं तत्सार्थक्यात्। अतएव "गावः सत्रमासत" "यजमानः प्रस्तरः" इत्याद्यर्थवादवाक्यजन्यज्ञानस्याप्यागमप्रमाणत्वं सिध्यति, तात्पर्यविषयीभूतस्य वाक्यजन्यार्थज्ञानस्यैवागमप्रमाणतया तेषाम्[1]पि स्वबोध्यतात्पर्यविषयीभूतप्राशस्त्यादिरूपार्थज्ञानप्रत्यायकत्वात्, यथाश्रुतवाक्यजन्यज्ञानस्यैवागमप्रमाणत्वे तु तस्य प्रामाण्यं न स्यात्, यथा श्रुतस्य तस्य प्रत्यक्षादिविरुद्धत्वेनासम्भवग्रस्तत्वात्॥ ३३॥

अथाऽऽगमप्रमाणस्यावान्तरविशेषप्रदर्शनपुरस्सरं तस्य[2] युक्ततां भणति—तच्च स्वतःप्रमाणमित्यादिना। तच्च=वाक्यार्थज्ञानं च, यत् स्वतःप्रमाणं तद् युक्तं भ[3]वति, इति संबन्धः। वाक्यजन्यं ज्ञानं हि द्विविधम्—स्वतःप्रमाणं परतःप्रमाणं च। तत्र अन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थं स्वतःप्रमाणम्। तच्च आम्नायवाक्यजन्यम्। यच्च प्रमाणान्तरसापेक्षस्वार्थबोधनसमर्थं तत् परतःप्रमाणम्। तच्च आम्नायरूपमूलप्रमाणसापेक्षस्मृत्यादिवाक्यजन्यम्। तत्र स्वतःप्रमाणस्य युक्तत्वे हेतुमाह—सकलेति। सकला ये भ्रमप्रमादविप्रलिप्साकरणापाटवादयः पुंदोषाः—तेषां या आशङ्का=संभावनामात्रेण प्रसक्तिः तस्या विनिर्मुक्तेः=विरहात्। अयुक्तत्वापादकपुंदोषराहित्यादित्यर्थः। भ्रमादीनां स्वरूपं तु तर्कप्रकाशे श्रीकण्ठैः प्रादर्शि। तद् यथा—भ्रमश्च—उच्चारणीयवाक्यार्थगोचरो भ्रमः। प्रमादः=अनवधानता। सा च वाक्यार्थज्ञानस्वरूपयोग्यस्य वक्तुरुच्चारणीयवाक्यार्थनिश्चयव्यतिरेकः। शुकीयवाक्यार्थ-

१ तेषाम्=अर्थवादवाक्यानाम्, तस्य=अर्थवादवाक्यजन्यज्ञानस्य। २ तस्य=आगमप्रमाणस्य। ३ अबाधितार्थविषयं भवतीत्यर्थः।

निश्चयव्यतिरेकवारणाय षष्ठ्यन्तनिवेशः। अन्यथा प्रतीतस्यार्थस्यान्यथाप्रतिपिपादयिषा प्रतारणा सैव विप्रलिप्सा। इच्छाविषयीभूतपूर्ववर्णानुकूलकण्ठताल्वाद्यभिघातानुत्पादकालीनाऽपरवर्णानुकूलकण्ठताल्वाद्यभिघातः=करणापाटवम्, करणम्=कण्ठताल्वाद्यभिघातः तस्य अपाटवम्=असामर्थ्यम् इच्छाविषयीभूतवर्णाननुकूलत्वम् इति यावत् इत्यर्थः" इति ॥ ॐ ॥

ननु कुतः पुरुषदोषाऽऽशङ्काराहित्यमिति जिज्ञासाशमनाय हेतुं तत्र प्रदर्शयति—अपौरुषेयेति। कापिलनये जैमिनीयनये चेश्वरान[2]ङ्गीकाराद् वेदस्य पुरुषविशेषेश्वरप्रणीतत्वाभावेनापौरुषेयत्वम्। तथा च सूत्रम्—"न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् [सां० ५।४६] इति। एवं च प्रणेतृपुरुषासत्त्वेन निराश्रयाणां दोषाणां वेदेऽभाव इति "अपौरुषेय" इत्यनेन बोधितम्। तदुक्तं चोदनासूत्रे कुमारिलस्वामिभिः—"यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः" इति। वेदस्य यथा स्वतःप्रमाणत्वं यथा वाऽपौरुषेयत्वं तथा स्पष्टं "यदा स्वतःप्रमाणत्वं तदाऽन्यन्नैव गृह्यते। निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥" इत्यादिना चोदनासूत्रे श्लोकवार्तिके, इति तत्रैवाधिकं द्रष्टव्यम् ॥ ॐ ॥

ननु "एतस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः" इत्यादिश्रुत्या महतो भूतस्य=महत्तत्वा[3]ख्याद्यादिविकारस्य पुरुषस्य निःश्वासभूता वेदा इति प्रतीतेः कथमपौरुषेयत्वमिति चेत्। अत्राहुः—

अत्राहुः—"यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् [सां० ५।५० ] इति सूत्रे सांख्यप्रवचनभाष्यकाराः—

"दृष्ट इवादृष्टेऽपि यस्मिन् वस्तुनि कृतबुद्धिः=बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः। एतदुक्तं भवति—

न पुरुषोच्चरिततामात्रेण पौरुषेयत्वं, श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयव्यवहाराभावात्, किन्तु बुद्धिपूर्वकत्वेन। वेदास्तु निश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुवः सकाशात्स्वयं भवन्तीत्यतो न पौरुषेया इति ॥ ॐ ॥

---

१ एतदुक्तं भवति—"वक्तव्यपदार्थविषयकः" सन्देहो भ्रमः। चित्तचाञ्चल्याद् वक्तव्यपदार्थविषयको निश्चयाभावः प्रमादः। अन्यप्रकारेण ज्ञातस्य पदार्थस्य प्रकारान्तरेणाभिधानं विप्रलिप्सा, इयमेव 'प्रतारणा' इति भाष्यते। अन्यवर्णोच्चारणेच्छायां सत्यामपि यदिन्द्रियदोषाद् वर्णान्तरोच्चारणं तदेव करणापाटवम् इति। २ अत्रेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादान्न विरोधः। अन्यथा लोकायतिकमतानुसारेण नित्यैश्वर्यं न प्रतिषिध्येत, तदा पूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्धापत्तेः। एवं च सर्वेषामप्यास्तिकदर्शनानां सेश्वरवाद एव तात्पर्यमिति सूक्ष्ममीक्षणीयम्। ३ सांख्यैरीश्वरानङ्गीकारात् तन्मतेन व्याचष्टे—महत्तत्त्वेति। पुरुषोपाधित्वेन महानपि पुरुष उच्यत इति भावः। ४ अत्रैष सरलार्थः—यथा विनैव यत्नं पुरुषाणां मुखात् श्वासो निःसरति, तथैव वेदरूपः शब्दोऽपि विनैव यत्नं परमेश्वरादुत्पन्नः, पौरुषेयश्च

एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तं भवति ।

---

वेदान्तिनस्तु—सत्यपीश्वरविवर्तत्वे वेदानां प्रमाणान्तरेणार्थमुपलभ्य निर्मितत्वाभावरूपं, पूर्वकल्पीयानुपूर्वीसमानानुपूर्वीघटितत्वरूपं वाऽपौरुषेयत्वं वेदानामित्येवमातिष्ठन्ते ॥ ❀ ॥

जैमिनीयास्तु—सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वम् अपौरुषेयत्वं वेदानामित्येवं प्रतिजानते ॥ ❀ ॥ एवं सत्यप्यवान्तरविशेषे पुरुषाऽस्वातन्त्र्यमात्रमपौरुषेयत्वं सर्वत्र समानमेवेत्यत्र बोद्धव्यम् ॥ ❀ ॥

तथाचोक्तं भामत्यां शास्त्रयोनित्वाधिकरणे मिश्रैरेव—

"यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः, एवं सर्गान्तरेष्वपीति तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरचयन्न स्वतन्त्रः, पुरुषाऽस्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि, तच्चास्माकमपि समानम् अन्यत्राभिनिवेशात्" इति ॥ ❀ ॥ तथा चापौरुषेयाम्नायवाक्यजन्यत्वेन निरस्तसकलदोषाशङ्कतया युक्तमाम्नायवाक्यजन्यस्य ज्ञानस्य युक्तत्वमित्यत्र फलितम् ॥ ❀ ॥

इत्थं स्वतःप्रमाणस्य युक्ततामाख्याय साम्प्रतं परतःप्रमाणस्य तामाचष्टे—

एवमिति । वेदमूलकस्मृत्यादिवाक्यजन्यं ज्ञानं युक्तम् अन्यद् अयुक्त-

---

सशब्दो भवति, योऽर्थं विचार्य प्रयुक्तो भवति, किमुक्तम्? पुरुषेणोच्चारितमिति कृत्वा न किंचिद् वचनं पौरुषेयं भवति, अपितु स्वमनसि विचारं कृत्वा पुरुषोच्चरितमेव वचनं पौरुषेयमुच्यते, वेदरूपः शब्दस्तु न तथेति तस्यापौरुषेयत्वम् । नन्वर्थविचारं विनोच्चरितं वचनं चेदपौरुषेयं तर्हि लौकिकपुरुषाणामपि तथाविधं वचनमपौरुषेयं स्यादिति चेत् । अत्राहुः—जीवोऽयं भ्रमप्रमादादिदोषयुक्तो वरीवर्ति, अतोऽर्थविचारं विना यद् यद् वचनमुच्चारयति, उन्मत्तवचनवत् तत्सर्वं व्यभिचार्येव भवति, सर्वज्ञः परमात्मा तु सर्वथा भ्रमप्रमादादिदोषविहीन इति विचारं विनापि तदुच्चरितं वचनं न कथमपि व्यभिचारि भवितुमर्हति । यस्य वचनस्यार्थः प्रत्यक्षादिप्रमाणेन बाधितो भवति, तद् वचनं स्वार्थे व्यभिचारि कथ्यते । यथा केनचित् पुरुषेण "शीतोऽग्निः" इत्युच्चरितं वचनं स्वार्थे व्यभिचारि वर्तते, अग्नौ शीतलताया असंभवात्, सर्वज्ञपरमात्मोच्चरितं वेदवचनं तु न कदापि स्वार्थे व्यभिचारीति न तत्सिद्धये कस्यचित्प्रमाणस्य प्रत्यक्षादेरावश्यकतेति दिक् ॥

१ यथा वृत्तमर्थजातं पूर्वमुपलभ्य पुनर्विरचिता भारतादयः यथा वा पूर्वकल्पीयानुपूर्वीविभिन्नानुपूर्वीघटिता भारतादयस्तथा न वेदा इत्यर्थः ।

२ अज्ञातकर्तृके जीर्णकूपारामादौ व्यभिचारनिरासाय—संप्रदायाविच्छेदे सतीति । भारतादिषु व्यभिचारवारणाय च—अस्मर्यमाणकर्तृकत्वमिति ।

मित्यर्थः । मन्वादिवाक्यानां स्मृतिपदवाच्यतया वेदार्थानुभवजन्यत्वावश्यकत्वादिति भावः । स्मृत्यादीनां पुरुषनिर्मिततया तत्र भ्रमप्रमादादिपुंदोषाणां संभवेन कथं तेषां युक्ततेति शङ्काशमनाय "वेदमूल" इति हेतुगर्भविशेषणम् ।

किञ्चित् स्मृत्यादिकं प्रत्यक्षवेदमूलकं, किञ्चिच्चोच्छिन्नवेदशाखामूलकम् इत्यर्थः । ननु यदि सर्व एव स्मार्तोऽर्थो वेदेऽभिहितस्तर्हि पुनरुक्तदोषग्रस्ततयाऽनुवाददोषग्रस्ततया च स्मृत्यादीनां कथं प्रामाण्यम् अपूर्वार्थप्रतिपादकवाक्यानामेव मीमांसकैः प्रामाण्याभ्युपगमात् स्मृत्यादीनां चाज्ञातज्ञापकत्वाभावादिति चेत् । मैवम् । वेदे कस्यांचिच्छाखायाम् अष्टकादिकर्मस्वरूपं निरूपितम्, कुत्रचिच्च तन्मन्त्राः, क्वचिच्च तद्देवतादिकम् इत्येवं विप्रकीर्णानामर्थानामेकत्रोपसंहरणं मन्वादयः कृतवन्तः सर्वज्ञत्वात्तेषामिति एकत्रसंग्रहरूपापूर्वार्थप्रतिपादकत्वात् वेदाविरुद्धत्वाच्च स्मृत्यादीनां प्रामाण्यस्य ध्रौव्यात् । तथा चाहुः—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" हेतुदर्शनाच्च [ जै० अ० १ पा० ३ सू० ३।४। ] इत्यादिसूत्रेषु तन्त्रवार्तिककाराः—

"शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वाक्यानि पुरुषधर्मानुष्ठानक्रमेणापठितानि वेदसमाम्नायविनाशभयात्[१] स्वरूपेणानुपन्यस्यार्थोपनिबन्धनद्वारलभ्यानि विशिष्टध्वनिस्थानीयेन तेनैव परोक्षाण्यपि व्यज्यमानानि पिण्डीकृत्य स्मर्यन्ते" इत्यादि ॥ स्मृतीनाम् उच्छिन्नशाखामूलकत्वे च "विवादपदं[२] स्मृतिः स्मृत्यर्थानुभावकवेदमूला, अक्लृप्तमूलान्तरत्वे सति महाजनपरिगृहीतत्वात्, प्रत्यक्षवेदमूलस्मृतिवत्" इति वर्द्धमानोपाध्यायभणितः प्रयोगोऽवसेयः । यथा च वेदशाखोच्छेदसंभवस्तथा द्वितीयस्तबके तृतीयकारिकायां

१ यदि हि स्वरूपत एव वेदवाक्यानि उद्ध्रियेरन्, तदा वेदीयनियतानुपूर्वी विनाशेन तत्स्वाध्यायस्य प्रत्यवायकरत्वं भवेत्, "नियतानुपूर्व्या भवन्ति" इति यास्कोक्तेः, अतस्तथा न कृत्वा तत्तदर्थोपनिबन्धेनैव वेदवाक्यानां संग्रहोऽकारीति भावः । २ प्रत्यक्षवेदमूलस्मृत्यंशे लोभादिमूलस्मृत्यंशे च सिद्धसाधनबाधादिवारणार्थम्—विवादपदमिति । ताद्रूप्यसिद्धये—अनुभावकान्तम् । न्यायादिमूलकस्मृतौ व्यभिचारवारणाय—अक्लृप्तेति । असंभवन्मूलान्तरत्वे सतीत्यर्थः । भ्रम एवात्र मूलमित्यसिद्धिशङ्कानिरासाय—'महाजनपरिगृहीत'पदम्, इत्येतद्व्याख्यायां मकरन्दकारो रुचिदत्तः । याः शाखा उपलभ्य–उपनिबद्धा मन्वादिमिर्धर्मास्ता इदानीमुच्छिन्ना इति भावः । अत्रायं निष्कर्षः—"यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥"

"स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात्" इत्यादिना कुसुमाञ्जलिग्रन्थे विस्तरः । एवम् इतिहासपुराणयोरपि वेदमूलकत्वं ज्ञेयम् । तत्र इतिहासपुराणानां वैदिकोपाख्यानोपबृंहणपरत्वान्न पौनरुक्त्यम्, यथोक्तम्—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति । स्मृतित्वाविशेषात् कापिलस्मृतेरपि "अजामेकाम्—" "असङ्गो ह्ययं पुरुषः" इत्यादिवेदमूलकत्वेन युक्तत्वमर्थात्सिद्धमित्यत्र हृदयम् ।

तत्र स्मृतिः=धर्मशास्त्रम्, स्मर्यते वेदधर्मोऽनयेति व्युत्पत्तेः । "श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः" इति मनुः । पुरावृत्तप्रकाशको ग्रन्थविशेष इतिहासः, इति=एवम् ह=स्फुटम् आस=बभूव इति तद्व्युत्पत्तेः । सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितेति पञ्चलक्षणात्मकः शास्त्रविशेषः पुराणम् । यथोक्तम्—"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥" उपलक्षणमिदमष्टादशानामपि विद्यानाम् । तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति वेदाश्चत्वारः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट् । पुराणानि न्यायो मीमांसा धर्मशास्त्राणि चेति चत्वार्युपाङ्गानि । अत्रोपपुराणानामपि पुराणेष्वन्तर्भावः । वैशेषिकशास्त्रस्य न्याये, वेदान्तशास्त्रस्य मीमांसायाम्, महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां च धर्मशास्त्रेष्विति मिलित्वा चतुर्दश विद्याः । तथा चोक्तम्—"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति । एता एव चतुर्भिरुपवेदैः सहिता अष्टा-

---

[ सः मनुः सर्वज्ञानमयः=उत्सन्नविप्रकीर्णपठ्यमानवेदार्थाभिज्ञत्वेन सर्वज्ञ इत्यर्थः ] इति मनुः । अत्रेयमाशङ्का—यदि सर्वे एव स्मार्ता धर्मा वेदेऽभिहिता हन्त तर्हि कथमनुवादकत्वेन मन्वादिस्मरणानां प्रामाण्यमिति । तत्र केचिदाहुः—इदानीमुत्सन्नास्ताः शाखा यास्वमी स्मार्ता धर्मा आसन्, मन्वादिभिश्च ता उपलभ्य ते धर्मा उपनिबद्धा इति न पुनरुक्तत्वं, न वा वेदानभिहितत्वमिति । अपरे पुनर्वदन्ति—"अद्यत्वेऽपि पठ्यन्त एव ताः शाखाः किन्तु विप्रकीर्णास्ते धर्माः । कस्यांचिच्छाखायामष्टकादीनां कर्मणामुत्पत्तिः, कस्यांचिद् देवता, कचिन्मन्त्रः, कचिद् द्रव्यम्, इत्येवं विप्रकीर्णानां मन्वादयोऽङ्गोपसंहारं सुखावबोधार्थं चक्रुरिति । तत्रान्तिम एव पक्षो ज्यायान् । यथाहुः—"शाखाः काश्चित् समुत्सन्ना नैष पक्षो मतो मम" इति ।

दश विद्या भवन्ति । आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति चत्वार उपवेदाः । ता एता अष्टादश विद्या उपलक्षणविधयात्रोपन्यस्ता वेदितव्याः । अन्यथा न्यूनता प्रसङ्गात् । सर्वेषां चास्तिकानामेतावन्त्येव शास्त्रप्रस्थानानि । अन्येषामप्येकदेशिनामेष्वेवान्तर्भावात् ॥ ॐ ॥

अथ संक्षेपेणैषां प्रस्थानानां स्वरूपभेदहेतुः प्रयोजनभेद उच्यते बालानां व्युत्पत्तये—

"तत्र धर्मब्रह्मप्रतिपादकम् अपौरुषेयं प्रमाणवाक्यं वेदः[2] । स च मन्त्र-

---

१ "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु ॥ इति विष्णुपुराणे । २ वेदस्तावत् काण्डद्वयात्मकः । तत्र पूर्वस्मिन् काण्डे नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं कर्म प्रतिपाद्यम् । "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिकं नित्यम्, तस्य नियतनिमित्तत्वात् । "यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" इत्यादिकं नैमित्तिकम्, तस्यानियतनिमित्तत्वात् । "चित्रया यजेत पशुकामः" इत्यादिकं काम्यम् । "तस्मान्मलवद्वाससा न संवदेत न सहासीत" इत्यादिकं निषिद्धम् । तेषु नित्यनैमित्तिकानुष्ठानात्तदकरणे प्रत्यवायरूपमनिष्टं परिह्रियते । स च प्रत्यवायो याज्ञवल्क्येन स्मर्यते—"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥" (या० स्मृ० ३।२१९) इति । यावज्जीवादिवाक्येषु अनुक्तोऽपि अवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते । तथा चापस्तम्बः—"तद्यथा आम्रे फलार्थे निर्मिते छायागन्धावित्यनूत्पद्येते एवं धर्मेऽपि चर्य्यमाणेऽर्था अनूत्पद्यन्ते" इति । काम्यस्येष्टप्राप्तिहेतुत्वं तद्विधिवाक्य एव स्पष्टम् । इष्टविघातमनिष्टं चार्थात् परिह्रियते । निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठानजन्यो नरकपातः परिह्रियते । न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः, किं तु धीशुद्ध्यादिविविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति । तथा च वाजसनेयिनः समामनन्ति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति । एवं तर्हि पूर्वकाण्ड एवाशेषपुरुषार्थसिद्धेः कृतमुत्तरकाण्डेनेति चेत् । न, अपुनरावृत्तिलक्षणस्यात्यन्तिकपुरुषार्थस्य तत्रासिद्धेः । अत एवाथर्वणिकाः कर्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चामनन्ति—"स सोमलोके विभूतिमनुभूय पुनरावर्तते" इति । अत उत्तरकाण्ड आरब्धव्यः । आत्यन्तिकपुरुषार्थसिद्धिश्च द्विविधा—सद्योमुक्तिः क्रममुक्तिश्चेति । वर्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः । उत्तरमार्गेण गत्वा ब्रह्मलोके चिरं भोगाननुभूय तत्रोत्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः । तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते । ब्रह्मोपास्तिप्रसङ्गाद् ब्रह्मदृष्ट्या प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते । ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे प्रतीकोपासकस्य विद्युल्लोकादूर्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्तेरप्यभावादस्ति पुनरावृत्तिः । एतच्च—"अप्रतीकालम्बनाव् नयति" [वे० ४।३।१५–१६] इत्यधिकरणे द्रष्टव्यम् ।" इति तैत्तिरीयसंहिताभाष्यभूमिकायां सायणाचार्याः ।

ब्राह्मणात्मकः । तत्र मन्त्रा अनुष्ठानकारणभूतद्रव्यदेवताप्रकाशकाः । तेऽपि त्रिविधाः । ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः, "अग्निमीळे पुरोहितम्" इत्याद्याः । ता एव गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि । "अग्नीदग्नीन् विहर" इत्यादिसंबोधनरूपा निगदसंज्ञा मन्त्रा अपि यजुरन्तर्भूता एव । तदेवं निरूपिता मन्त्राः ॥ ❀ ॥

ब्राह्मणमपि त्रिविधम् । विधिरूपम्[1], अर्थवादरूपम्[2], तदुभयविलक्षणं च । तत्र शब्दभावना विधिरिति भाट्टाः । नियोगो विधिरिति प्राभाकराः । इष्टसाधनता विधिरिति तार्किकादयः । सर्वो विधिरपि चतुर्विधः । उत्पत्त्यधिकारविनियोगप्रयोगभेदात् । तत्र "देवताकर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः", "आग्नेयोऽष्टाकपालो भवति" इत्यादिः । "सेतिकर्तव्यताकस्य करणस्य यागादेः फलसंबन्धबोधको विधिरधिकारविधिः", "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिः । "अङ्गसंबन्धबोधको विधिर्विनियोगविधिः"—"व्रीहिभिर्यजेत" "समिधो यजति" इत्यादिः । "साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः प्रयोगविधिः" । स च श्रौत इत्येके । काल्प इत्यपरे ॥ ❀ ॥

कर्मस्वरूपं च द्विविधम् । गुणकर्म, अर्थकर्म च । तत्र क्रतुकारकाण्याश्रित्य विहितं 'गुणकर्म' । तदपि चतुर्विधम्—उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्र "वसन्ते ब्राह्मणोऽग्नीनादधीत" "यूपं तक्षति" इत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः । "स्वाध्यायोऽध्येतव्यः" "गां पयो दोग्धि" इत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः । "सोममभिषुणोति" "व्रीहीनवहन्ति" "आज्यं विलापयति" इत्यादावभिषवावघातविलापनैः सोमादीनां विकारः । "व्रीहीन् प्रोक्षति" "पत्न्यवेक्षते" इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कारः । एतच्चतुष्टयं चाङ्गमेव ॥ ❀ ॥

तथा क्रतुकारकाण्यनाश्रित्य विहितम् "अर्थकर्म" । तच्च द्विविधम्—अङ्गं प्रधानं च । अन्यार्थम् अङ्गम् । अनन्यार्थं प्रधानम् । अङ्गमपि द्विविधम्—

१ यद्वाक्यं विधिमुखेन निषेधमुखेन वा प्रेरयति—"सत्यं वद, धर्मं चर" मा गृधः कस्यस्विद्धनम्' इत्यादिः स विधिः । २ न्याये तु स्तुतिलक्षणः, निन्दालक्षणः, परकृतिलक्षणः, पुराकल्पलक्षणश्चेत्येवमर्थवादचातुर्विध्यमुक्तम् । तत्र स्तुतिः फलश्रवणात् प्रवर्तिका । यथा—"शिरो वै यज्ञस्यातिथ्यम्' ( शत० ३।४।२।१ ) अनिष्टफलवादो निन्दा । यथा—"समूलो वा एष परिशुष्यति योऽनृतमभिवदति" ( प्रश्नोपनिषद् ६।१ ) अन्यकर्तृकस्य विधेर्वादः परकृतिः । यथा—"हुत्वावपामग्रेऽभिधारयन्ति अथ पृषदाज्यम् ( शत० ३।८ ३।२४ ) ऐतिह्यसमाचरितो विधिः पुराकल्पः । यथा—सर्वां ह वै पापकृत्यानपहन्ति योऽश्वमेधेन यजते" ( शत० १३।५।६। )

संनिपत्योपकारकम् आराद्उपकारकं च। तत्र "प्रधानस्वरूपनिर्वाहकं प्रथमम्। यथा—अवहननप्रोक्षणादि फलोपकारि। द्वितीयं यथा—प्रयाजादि। एवं संपूर्णाङ्गसंयुक्तो विधिः प्रकृतिः। विकलाङ्गसंयुक्तो विधिर्विकृतिः। तदुभयविलक्षणो विधिः—दर्वीहोमः। एवमन्यदप्यूह्यम्। तदेवं निरूपितो विधिभागः॥ ॐ॥

प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यम् "अर्थवादः"। स च त्रिविधः—"गुणवादोऽनुवादो भूतार्थवादश्चेति। तत्र प्रमाणान्तरविरुद्धार्थबोधको 'गुणवादः'—"आदित्यो यूपः" इत्यादिः। प्रमाणान्तरप्राप्तार्थबोधको'ऽनुवादः'—"अग्निर्हिमस्य भेषजम्" इत्यादिः। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको 'भूतार्थवादः'—"इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादिः। तदुक्तम्—

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः॥" इति।

१ अयमर्थः—विरोधे=विशेष्यविशेषणयोः सामानाधिकरण्येन अन्वयविरोधे गुणवादः अङ्गकथनरूपत्वात्। यथा—"यजमानः प्रस्तरः" इति। अत्र प्रस्तरः=कुशमुष्टिः तस्य यजमानेऽभेदान्वयबाधात् यजमानस्य कुशमुष्टिधारणरूपार्थवादरूपत्वात् गुणवादः। अवधारिते=प्रमाणान्तरसिद्धेऽर्थे यो वादः सोऽनुवादः। यथा—"नान्तरीक्षेऽग्निश्चेतव्यः" "अग्निर्हिमस्य भेषजम्" इत्यादि च। अन्तरीक्षेऽग्निचयनस्यासंभवेन तदभावस्य, अग्नेर्हिमनाशकत्वस्य च लौकिकप्रमाणसिद्धत्वात् अनुवादः। तद्धानौ=तयोर्विरोधावधारणयोरभावे भूतार्थवादः। यथा—इन्द्रो वृत्रहन्नित्यादिः। सोऽपि द्विविधः, स्तुत्यर्थवादो निन्दार्थवादश्च। यथा—"सन्ध्यामुपासते ये च" इत्यादि स्तुत्यर्थवादः। स्त्रीतैलमांससंभोगी पर्वस्वेतेषु वै पुमान्। विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः॥" इत्यादिनिन्दार्थवादः। सोऽयमर्थवादः विधिवाक्येनैकतामापन्नोऽर्थवान् भवति। यथाह भगवान् जैमिनिः—"विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" (पू० मी० १।२।७) इति। अस्य चायमर्थः—अर्थवादानां स्तुतिपरत्वेन विधिना सह एकवाक्यत्वात् ते अर्थवादाः प्रमाणानि स्युः। तथा च विधेयप्रवृत्तावेव तेषां तात्पर्यं तत्रैव प्रामाण्यम्, "यत्परः शब्दः स शब्दार्थः" इति सिद्धान्तात्, न स्वार्थे स्तुत्यादौ, तत्र तात्पर्याभावात्। तर्हि "यन्न दुःखेन संभिन्नम्" इत्यादेः स्वतन्त्रार्थवादानां का गतिरित्यत्राह—तत्रेत्यादिना। तथा च जैमिनेः सूत्रम्—"भूतार्थानां क्रियार्थेन समाम्नायः" इति। अस्यार्थः—भूतार्थानां=सिद्धार्थानां क्रियार्थेन=क्रियाबोधकेन विधिनेति यावत्, समाम्नायः=पाठः कार्य इति शेषः। ततश्च विधिवाक्याकाङ्क्षापूरकत्वेन कार्यान्वितबोधकतया तेषां प्रामाण्यम्। यथा लिखिष्यमाणयूपाहवनीयवाक्यानां यूपाहवनीयपरिचयाय कार्यान्वितबोधकत्वेन स्वार्थबोधत्वे प्रामाण्यं, तथा "स्वर्गकामो यजेत" इत्यत्र स्वर्गरूपपरिचयाय स्वर्गबोधकत्वेन "यन्न दुःखेन संभिन्नम्" इत्यादिवाक्यानामपि प्रामाण्यम्। अन्यथा यूपादिपदार्थापरिचये च तत्तद्विधिवाक्यानां प्रवृत्तिर्न स्यात्, अतो विधिनैकवाक्यत्वात् सिद्धार्थकानामपि प्रामाण्यमित्यन्यत्र विस्तरः।

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वतःप्रामाण्यम् । देवताधिकरणन्यायात् । अवाधिताज्ञातार्थज्ञापकत्वं हि प्रामाण्यम् । तच्च वाधितविषयत्वाज् ज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं न विहन्यते । तदेवं निरूपितोऽर्थवादभागः ॥ ❀ ॥

विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्चाज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थपरमानन्दज्ञानात्मकब्रह्मणि स्वार्थे [1]उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतःप्रमाणभूतं सर्वानपि विधीन् अन्तःकरणशुद्धिद्वारा स्वशेषताम् आपादयद् अन्यशेषत्वाभावाच्च नार्थवादः । तस्मादुभयविलक्षणमेव वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते । विधिपदरहितमपि प्रमाणवाक्यत्वेन च क्वचिद् भूतार्थवाद इति व्यवह्रियत इति न दोषः । तदेवं त्रिविधं निरूपितं ब्राह्मणम् ॥ ❀ ॥

एवं च कर्मकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः । स च प्रयोगत्रयेण यज्ञनिर्वाहार्थम् ऋग्यजुःसामभेदेन भिन्नः । तत्र हौत्रप्रयोग ऋग्वेदेन, आध्वर्यवप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन । ब्राह्मयजमानप्रयोगौ त्वत्रैवान्तर्भूतौ । अथर्ववेदस्तु यज्ञानुपयुक्तोऽपि शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेन अत्यन्तविलक्षण एव । एवं च प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः । एवं च कर्मकाण्डे व्यापारभेदेऽपि सर्वासां वेदशाखानामेकरूपकत्वमेव ब्रह्मकाण्डमिति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः ॥ ❀ ॥ १ ॥ ❀ ॥

अथाङ्गानामुच्यते—तत्र [2]शिक्षाया उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यंजनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनम् । तदभावे मन्त्राणामनर्थकफलत्वात् । तथा चोक्तम्—

---

१ उपक्रमादि तावत्—"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥" इति । तत्रोपक्रमोपसंहारत्वं—विचार्यवाक्याद्यन्तभागयोरेकार्थपर्यवसानत्वम् । अभ्यासत्वम्—अनन्यपरं पुनः पुनः श्रूयमाणपदत्वम् । अपूर्वत्वम्—प्रकृतवाक्यात्पूर्वमज्ञातत्वम् । फलत्वम्—उक्तधियः प्रयोजनवत्त्वम् । अर्थवादत्वम्—स्तुतिनिन्दान्यतरबोधकवाक्यत्वम् । उपपत्तित्वं—तद्धीविषयस्यावाधितत्वम् । इत्यास्तां विस्तरः ॥ २ अतिगम्भीरस्य वेदस्य अर्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि । अत एव तेषाम् अपरविद्यारूपत्वं मुण्डकोपनिषदि आथर्वणिका आमनन्ति—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवाऽपरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा, यया तदक्षरमधिगम्यते" (मुण्ड० १।१।४) इति ।

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति ।

तत्र सर्ववेदसाधारणी शिक्षा "अथ शिक्षां प्रवक्ष्यामि" इत्यादिनवखण्डात्मिका पाणिनिना प्रकाशिता । प्रतिवेदशाखं च भिन्नरूपाः प्रातिशाख्यसंज्ञिता अन्यैरेव मुनिभिः प्रदर्शिताः ॥ ॐ ॥

एवं वैदिकपदसाधुत्वज्ञानेन ऊहादिकं व्याकरणस्य प्रयोजनम् । तच्च "वृद्धिरादैच्" इत्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव प्रकाशितम् । तत्र कात्यायनेन मुनिना पाणिनीयसूत्रेण वार्तिकं विरचितम् ।

---

साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां कर्मकाण्डानाम् अपरविद्यात्वम् । परमपुरुपार्थभूतब्रह्मज्ञानहेतुत्वाद् उपनिषदां परविद्यात्वम् ।" (ऋ० भा० भू० सायणाचार्याः)

३ वर्णस्वराद्युच्चारणप्रकारो यत्र उपदिश्यते सा शिक्षा । तथा च तैत्तिरीया उपनिषदारम्भे समामनन्ति—"शीक्षां व्याख्यास्यामः । वर्णः, स्वरः, मात्रा, बलं, साम, सन्तान इत्युक्तः शीक्षाध्यायः" (तै० आ० ७।२) इति । वर्णः=अकारादिः, स्वरः=उदात्तादिः, मात्रा=ह्रस्वादिः, बलं=स्थानप्रयत्नौ, । सामशब्देन साम्यमुक्तम्, अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेन उच्चारणं=साम्यम् ।" सन्तानः=संहिता । 'वायवायाहि' इत्यत्रावादेशः, 'इन्द्राग्नी आगतम्' इति प्रकृतिभावः । तत्र त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः" (पा० शि० ३) इत्यादिना वर्णाः, "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः" (पा० शि० १९) इति स्वरः, "ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि" (पा० शि० ११) इति मात्रा, "अष्टौ स्थानानि वर्णानाम्"–इत्यादिना स्थानम्, "अचोऽस्पृष्टा यणस्त्वीषद्" इत्यादिना प्रयत्नः, "गीतीशीघ्रीशिरःकम्पी" इत्यादिना, "उपांशु दष्टं त्वरितम्" इत्यादिना दोषाः, "माधुर्यमक्षरव्यक्तिः" इत्यादिना गुणाश्चोक्ताः । सन्तानस्तु व्याकरणेऽभिहितत्वात् शिक्षायाम् उपेक्षितः ।

१ स्वरेण स्वरतः । आद्यादित्वात्तसिः । मिथ्याप्रयुक्त इति । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्र "इन्द्रशत्रुर्वर्धस्व" इति मन्त्र ऊहितः । तत्रेन्द्रस्य शातयिता शमयिता भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः । तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थभेदः । तत्रेन्द्रामित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्य आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता संपन्नः ।" इत्ये० व्या० कैयटः । "इन्द्रशत्रुर्वर्धस्व" (तै० सं० २।४।१२।१) इत्यस्मिन् मन्त्रे विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" इति सूत्रेण तत्पुरुषत्वाद् अन्तोदात्तेन भवितव्यम् । आद्युदात्तस्तु प्रयुक्तः । तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वाद् इन्द्रो घातको यस्य इत्यर्थः संपन्नः । तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः । (सायणः) २ ऊहादिकं तु "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इत्यादिना व्याकरणमहाभाष्ये प्रदर्शितमिति तत्रैव कणेहत्य निरीक्ष्यम् ।

तद्वद् वार्तिकोपरि च भगवता पतञ्जलिना महाभाष्यमारचितम्। तदेतद् त्रिमुनिव्याकरणं वेदाङ्गमाहेश्वरमित्याख्यायते। कौमारादिव्याकरणानि तु न वेदाङ्गानि किन्तु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगन्तव्यम्॥ ❀॥

एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणे पदसाधुत्वे च ज्ञाते वैदिकमन्त्रपदानाम् अर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन "समाम्नायः समाम्नातः, स व्याख्यातव्यः" इत्यादित्रयोदशाध्यायात्मकं निरुक्तमारचितम्। तत्र च नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदानामर्थः प्रदर्शितः। मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात्, पदार्थज्ञानाधीनत्वाच्च वाक्यार्थज्ञानस्य मन्त्रस्थपदार्थज्ञानाय निरुक्तमवश्यमपेक्षितम्। अन्यथानुष्ठानासंभवात्। "सृण्येव जर्भरी तुर्फरीतून" इत्यादीनामतिदुरूहाणां प्रकारान्तरेण अर्थज्ञानस्यासंभावनीयत्वाच्च॥ एवं निघण्ट्वादयोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव। तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः। अन्येऽपि अमरहेमचन्द्रादिप्रणीताः कोषाः सर्वे निघण्टुरूपत्वेन निरुक्तान्तर्गता द्रष्टव्याः॥ ❀॥

एवम् ऋङ्मन्त्राणां पादबद्धच्छन्दोविशेषविशिष्टत्वात् तदज्ञाने च निन्दाश्रवणात्, छन्दोविशेषनिमित्तानुष्ठानविशेषविधानाच्च, छन्दोज्ञानाकाङ्क्षायां तत्प्रकाशनाय "धी, श्री, स्त्रीम्" इत्याद्यष्टाध्यायात्मिका छन्दोविचितिर्भगवता पिङ्गलनागेन विरचिता। तत्र "अथ लौकिकम्" इत्यन्तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीति सप्त छन्दांसि सर्वाणि सावान्तरभेदानि प्रसङ्गान्निरूपितानि। "अथ लौकिकम्" इत्यारभ्याध्यायपञ्चकेन पुराणेतिहासादावुपयोगीनि लौकिकानि छन्दांसि प्रसङ्गान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत्॥ ❀॥

एवं वैदिककर्माङ्गदर्शादिकालज्ञानाय ज्योतिषं भगवता आदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव॥ ❀॥ एवं शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि। तानि च प्रयोगत्रयभेदात् त्रिविधानि। तत्र हौत्रप्रयोगप्रतिपादकानि आश्वलायनसांख्यायनादिप्रणीतानि। आध्वर्यवप्रयोगप्रतिपादकानि बौधायनापस्तम्बकात्यायनादिप्रणीतानि। औद्गात्रप्रयोग-

१ तत्र होता ऋत्विक् तादृशीनाम् ऋचामध्ययनं करोति, यत्र देवानां यथार्थस्वरूपं कर्मणो मर्मस्थानीयक्रियाश्च वर्णिताः, यासामध्ययनेन कर्मपुष्टिश्च भवति। अध्वर्युनामा ऋत्विक् यज्ञस्य नानेतिकर्तव्यतां विधत्ते। उद्गाता च ऋत्विक् शक्करीषु ऋक्षु गायत्रं नामछन्दो गायति सामगानं तस्य कर्मेति यावत्। ब्रह्मा च 'इदमत्र कुरु' इति ऋत्विग्भ्य उपदिशतीति निरुक्ते विस्तरः।

प्रतिपादकानि तु लाट्यायनत्रीह्यायणादिभिः प्रणीतानि। एवं निरूपितः षण्णामङ्गानां प्रयोजनभेदः ॥ ॐ ॥ २—७ ॥ ॐ ॥

**चतुर्णामुपाङ्गानामधुनोच्यते**—तत्र सर्गप्रतिसर्गवंशमन्वतरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणानि। तानि च ब्राह्मं पाद्मं वैष्णवं शैवं भागवतं नारदीयम् मार्कण्डेयम् आग्नेयं भविष्यं ब्रह्मवैवर्तं लैङ्गं वाराहं स्कान्दं वामनं कौर्मं मात्स्यं गारुडं ब्रह्माण्डं चेत्यष्टादश। एवम् उपपुराणान्यपि अनेकप्रकाराणि द्रष्टव्यानि ॥ ॐ ॥

**न्याये** आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता। प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-वयव-तर्क-निर्णय-वादजल्प-वितण्डा-हेत्वाभास-च्छल जाति-निग्रहस्थानाख्यानां षोडशपदार्थानाम् उद्देश-लक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्याः प्रयोजनम्। तत्र प्रथमाध्याये प्रमाणादिषोडशपदार्थानां लक्षणम्। द्वितीयाध्याये संशयप्रमाणानां परीक्षा, शब्दानित्यत्वव्यवस्थापनं च। तृतीयाध्याये चतुर्थाध्यायप्रथमाह्निके च आत्मादिप्रमेयपरीक्षा। चतुर्थाध्यायद्वितीयाह्निके तत्त्वज्ञानतत्फलतत्कारणनिरूपणं, परमाणोर्नित्यत्वव्यवस्थापनं च। पञ्चमाध्यायस्य प्रथमाह्निके जातिभेदाः, द्वितीयाह्निके निग्रहस्थानभेदाश्च निरूपिताः। तत्र प्रमेयतत्त्वज्ञानं स्वतः, प्रमाणादितत्त्वज्ञानं च परतोऽपवर्गहेतुरिति विवेकः।

---

१ एतेषां च वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वं शिक्षायामेवमुदीरितम्—छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते "शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्म लोके महीयते ॥" (पा० शि० ४१–४२) २ षडङ्गवत् पुराणादीनामपि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते—"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" (या० स्मृ० १।३) इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ॥" (म० भा० १।१।२६७) इत्यन्यत्रापि स्मर्यते। ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि हरिश्चन्द्रनाचिकेताद्युपाख्यानानि धर्मब्रह्मावबोधोपयुक्तानि तेषु तेषु इतिहासग्रन्थेषु स्पष्टीकृतानि। उपनिषदुक्ताश्च सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः। "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥" (वि० पु० ३।६।२५) इति सृष्ट्यादेः पुराणप्रतिपाद्यत्वावगमात्। न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनां षोडशपदार्थानां निरूपणात् तदनुसारेण "इदं वाक्यमस्मिन् अर्थे प्रमाणं भवति नेतरद्" इति निर्णयः कर्तुं शक्यते। पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्ट एव। मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसंध्यावन्दनादिविधयः प्रपञ्चिताः। "तद्ध्वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमन्त्रिता आपः ऊर्ध्वं विक्षिपन्ति" (तै० आ० २।२।२) इत्यादिकः संध्यावन्दनविधिः। "पञ्च वा एते महायज्ञाः सतति प्रतायन्ते" (तै० आ० २।१०) इत्यादिको महायज्ञविधिः। एवं विध्यन्तराणि द्रष्टव्यानि। उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद् विद्यास्थानत्वं युक्तम्।" (ऋ० भा० भू० सायणः)

अत्रायं क्रमः—तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः, वासनानाशे च दोषस्य=वासनाविशिष्टरागादेरभावः, विशेषणाभावे विशिष्टाभावात्, तादृशरागादिरूपहेत्वभावे च प्रवृत्तेर्धर्माधर्मरूपाया अभावोऽनुत्पत्तिः, तदनुत्पादे प्रारब्धकर्माधीनदेहान्यदेहसंबन्धरूपजन्माभावः, भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्नकर्मनिवृत्तिः, जन्माभावे च दुःखानुत्पादः। आत्यन्तिकी दुःखनिवृत्तिरेव चापवर्गः। दुःखानि तु न्यायनये शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखं चेत्येकविंशतिः। ईश्वरो जीवः संसारो मोक्षश्चेति चत्वार एव विषयाः सर्वेषामास्तिकदर्शनानां मुख्यतमा इति स्पष्टम्। संसारो दुःखमय इति दुःखवादेनैव च सर्वेषामास्तिकदर्शनानां प्रारम्भः। दुःखनिवृत्तिश्च संसारोपरम एव सेद्धुमर्हति नान्यथा। संसारप्रवृत्तिश्चाज्ञाननिबन्धनैवेति तदेव निवर्तनीयतया संसिध्यति। अज्ञाननिवृत्तिश्च तत्त्वज्ञानैकमात्रसाध्येति सर्वेषामैकमत्यम्। तद् यथोक्तं सांख्ययोगवेदान्तेषु—"नियतकारणात्तदुच्छित्तिर्ध्वान्तवत्" (सां० १।५९) "विवेकख्यातिरविप्लवा हानोपायः" (यो० १।२९) "विद्यैव तु निर्धारणात्" (वे० ३।३।४८) इति। तच्च तत्त्वमधिकारिभेदेन केषांचिन्मते पदार्थरूपम्, केषांचित् प्रकृतिपुरुषरूपम्, केषांचिच्चात्मरूपमित्यन्यदेतत्, सर्वथा तत्त्वज्ञानान्मुक्तिरिति निर्विवादम्। अत एव कनिष्ठाधिकारिकृते न्यायवैशेषिकदर्शने, मध्यमाधिकारिकृते सांख्ययोगौ, उत्तमाधिकारिकृते च वेदान्तमिति विदुषां परामर्शः साधु संगच्छते। पूर्वोक्तक्रमश्चायं स्वयं महर्षिणैव प्रादर्शि—

---

१ मिथ्याज्ञानं तु "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (न्या० १।१।९) इति मोक्षोपयोगिद्वादशविधप्रमेयेषु मुख्ये आत्मनि 'नास्ति' 'क्षणिकविज्ञानमात्मा' इत्यादि, अमुख्ये च शरीरादौ "शरीरमात्मा" इत्याद्यनेकविधम्। तद्विरोधि तत्त्वज्ञानं च "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" (न्या० १।१।१०) इति सूत्रोक्तविशेषगुणलिङ्गकशरीरादिभेदविशिष्टात्मविषयकज्ञानम्। तेन मिथ्याज्ञानं निवर्त्यते। मिथ्याज्ञानाभावे "प्रवर्तनालक्षणादोषाः" (न्या० १।१।१८) "तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्" (न्या० ४।१।३) इति सूत्रोक्ता रागद्वेषमोहाख्या दोषा निवर्तन्ते। दोषाभावे "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" (न्या० १।१।१७) इति सूत्रोक्ता प्रवृत्तिर्निवर्तते, सा च जन्महेतुर्धर्माधर्मरूपा। यौ वाऽनागतौ धर्माधर्मौ, तौ कारणाभावान्नोत्पद्येते, वर्तमानौ स्वकार्येण निवर्त्येते। प्रवृत्त्यभावे जन्माभावः, यद् अन्यच्छरीरं तद् न भवति, न तु वर्तमानं न भवतीति। वर्तमानशरीरस्य निवृत्तिस्तु तदवस्थितिहेतुधर्माधर्मसंस्कारनिवृत्त्या। जन्माभावे दुःखाभावः, निरायतनस्यानुपपत्तेः। यद्यपि दुःखाभावान्नापवर्गः किन्तु स एव, तथाप्यभेद एव तत्र पञ्चम्यर्थ इत्यन्यत्र विस्तरः।

२ सर्वेषामेवास्तिकदर्शनानां साक्षात्परम्परया चात्मतत्त्वज्ञान एव तात्पर्यमित्यविरोध इति ध्येयम्।

"[1]दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" (न्या० १।१।२) इति। तत्त्वज्ञानं पदार्थज्ञानं वा न सर्वेषामविशेषेण, किन्तर्हि यः कश्चिदास्तिकधिया नियमेन शुभान्येव कर्माण्यनुतिष्ठति, देवभक्तो गुरुभक्तश्च भवति शास्त्राभ्यासं चाहर्निशं विधत्ते तस्यैव कस्यचिदिति निखिलतन्त्रसिद्धान्तः। तथा च श्रूयते—"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति। तस्मात्सर्वथा सर्वदास्तिकेनैव भवितव्यं कल्याणमिच्छता पुरुषेणेति सकलदर्शनशास्त्रीयोद्घोष इत्यास्तां विस्तरः॥ एवं दशाध्यायं **वैशेषिकशास्त्रं** भगवता कणादेन प्रणीतम्। द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां भावपदार्थानामभावसप्तमानां व्युत्पादनं तस्य प्रयोजनम्। एतदपि न्यायपदेनोक्तम्॥ ॐ॥ ८॥ ॐ॥

एवं **मीमांसापि** द्विविधा—कर्ममीमांसा शारीरकमीमांसा च। तत्र द्वादशाध्यायी कर्ममीमांसा "अथातो धर्मजिज्ञासा" इत्यादिः "अन्वाहार्ये च दर्शनात्" इत्यन्ता भगवता जैमिनिना प्रणीता। तत्र धर्मप्रमाणम् १, धर्मभेदाभेदौ २, शेषशेषिभावः ३, क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः ४, श्रुत्यर्थपाठनादिक्रमभेदः ५, अधिकारविशेषः ६, सामान्यातिदेशः ७, विशेषातिदेशः ८, ऊहः ९, बाधः १०, तन्त्रम् ११, प्रसङ्गश्च १२, इति क्रमेण द्वादशानामध्यायानामर्थाः। तथा च संकर्षणकाण्डमप्यध्यायचतुष्टयात्मकं जैमिनिना प्रणीतम्। तच्च देवताकाण्डसंज्ञया प्रसिद्धमपि उपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसान्तर्गतमेव॥ ॐ॥

तथा चतुरध्यायी **शारीरकमीमांसा** "अथातो ब्रह्मजिज्ञासा" इत्यादिः "अनावृत्तिः शब्दात्" इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान् न्यायान् उपदर्शयन्ती भगवता बादरायणेन कृता। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात् परम्परया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः। तत्र च प्रथमपादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि द्वितीयपादे त्वस्पष्टब्रह्मलिङ्गयुक्तान्युपास्यब्रह्म-

१ दुःखाद्युक्तेषु मध्ये उत्तरोत्तराणां=मिथ्याज्ञानादीनाम् अपाये=निवृत्तौ सत्यां तदनन्तराणां=तत्पूर्वाणां दोषादीनाम् अपायात्=निवृत्त्या अपवर्ग इति सूत्रार्थः। मिथ्याज्ञानापाये रागद्वेषादिदोषापायः—मिथ्याज्ञानस्यैवदोषकारणत्वात् कारणनिवृत्तौ कार्यनिवृत्तेः प्रसिद्धत्वात्, दोषापाये धर्माधर्मलक्षणप्रवृत्तेरपायः—दोषाणामेव प्रवृत्तिकारणत्वात्, प्रवृत्त्यपाये जन्मापायः—प्रवृत्तेरेव जन्मकारणत्वात्, जन्मापाये सर्वविधदुःखापायः—जन्म हि शरीरसंबन्धः शरीरसंबन्धं विनादुःखासंभवात् जन्मन एव दुःखमूलत्वात् दुःखापायेऽपवर्गः—आत्यन्तिकदुःखनिवृत्तेरेवापवर्गत्वादिति व्यक्तोऽर्थः। मिथ्याज्ञानं च=विपरीतज्ञानम् अविद्येति यावत्। सा च प्राधान्येन चतुर्विधा। तथा च योगसूत्रम्—"अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति।

विषयाणि[१]। तृतीयपादेऽस्पष्टब्रह्मलिङ्गानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण वाक्यविचारः समापितः। चतुर्थपादे तु प्रधानविषयत्वेन सन्दिह्यमानानि अव्यक्ताजादिपदानि चिन्तितानि। एवं वेदान्तानामद्वये ब्रह्मणि सिद्धे समन्वये तत्र संभावितस्मृतितर्कादिविरोधमाशङ्क्य तत्परिहारः क्रियत इत्यविरोधो द्वितीयाध्यायेन दर्शितः। तत्राद्यपादे सांख्ययोगकाणादादिस्मृतिभिः संख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितं, स्वपक्षस्थापनपरपक्षनिराकरणरूपपक्षद्वयात्मकत्वाद् विचारस्य। तृतीये पादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेन परिहृतः। उत्तरभागेन तु जीवविषयाणाम्। चतुर्थपादे इन्द्रियादिविषयश्रुतीनां विरोधपरिहारः। तृतीयाध्याये साधननिरूपणम्। तत्र प्रथमपादे जीवस्य परलोकगमननिरूपणेन वैराग्यं निरूपितम्। द्वितीयपादे पूर्वभागेन त्वंपदार्थः शोधितः। उत्तरभागेन च तत्पदार्थः। तृतीयपादे निर्गुणे ब्रह्मणि नानाशाखापठितः पुनरुक्तपदोपसंहारः कृतः। प्रसङ्गाच्च सगुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ। चतुर्थपादे निर्गुणब्रह्मविद्याया बहिरङ्गसाधनानि आश्रमधर्मयज्ञदानादीनि, अन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च निरूपितानि। चतुर्थेऽध्याये सगुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमपादे श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म, उपासनावृत्त्या सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता। द्वितीयपादे म्रियमाणस्य उत्क्रान्तिप्रकारश्चिन्तितः। तृतीयपादे सगुणब्रह्मविदो मृतस्य उत्तरमार्गोऽभिहितः। चतुर्थपादे पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता। उत्तरभागेन सगुणब्रह्मविदो ब्रह्मलोके स्थितिरुक्तेति। इदमेव सर्वशास्त्राणां मूर्धन्यं, शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशङ्करभगवत्पादोदितप्रकारेणेति रहस्यम् इति श्रीमधुसूदनस्वामिनः॥ ॐ॥

---

१ 'तत्त्वमसि' इति महावाक्यं छान्दोग्योपनिषदि श्वेतकेतुं प्रति तत्पित्रोद्दालकमुनिनोपदिष्टम्। "प्रज्ञानं ब्रह्म" इति ऋग्वेदीयं महावाक्यम्। 'अहं ब्रह्मास्मि' इति यजुर्वेदीयं महावाक्यम्। "अयमात्मा ब्रह्म" इति महावाक्यं चाथर्ववेदीयम्, इत्थं चत्वारि महावाक्यानि वेदान्तशास्त्रेषूपलभ्यन्ते। तत्र प्रथमे महावाक्ये य एव तत्पदस्य वाच्योऽर्थः लक्ष्योऽर्थश्च शुद्धं ब्रह्मास्ति, स एव शेषेषु त्रिषु महावाक्येषु "ब्रह्म"शब्दस्य वाच्योऽर्थः लक्ष्योऽर्थश्च वरीवर्ति। एवं य एव 'त्वं'पदस्य वाच्योऽर्थो जीवो लक्ष्यार्थश्च कूटस्थसाक्षी वर्तते, स एवोक्तमहावाक्यत्रये "प्रज्ञानं" "अहं" "अयं" इति पदसहितः "आत्मा" एषां त्रयाणां पदानां वाच्योऽर्थो लक्ष्यार्थश्च भवति। एवं समस्तस्य 'तत्त्वमसि' इति वाक्यस्य य एव जीवब्रह्मणोरेकतारूपोऽर्थो वर्तते, स एवोक्तानां त्रयाणां महावाक्यानामर्थ इति विवेकः। 'तत्' पदस्य वाच्यलक्ष्यार्थौ चेत्थमवसेयौ—अव्याकृतं—माया ईश्वरस्य देशः। उत्पत्तिस्थितिप्रलयाः कालाः। सत्त्वरजस्तमांसि वस्तूनि सृष्टिसामग्र्यः। विराड्-हिरण्यगर्भाऽव्याकृतानि शरीराणि। वैश्वानर—सूत्रात्माऽन्तर्यामिणः ईशत्वाभिमानिनः।

अस्यैव वेदान्तशास्त्रस्य 'उत्तरमीमांसा' इति नामान्तरं वरीवर्ति। अनयोश्च पूर्वोत्तरमीमांसयोः एकवाक्यतां समामनन्ति रामानुजमतानुयायिनः। परन्तु तयोः भिन्नशास्त्रत्वं समर्थितमद्वैतग्रन्थेषु। यत एतयोर्द्वयोः शास्त्रयोरनुबन्ध-चतुष्टयभेदो विद्यते। तथाहि—पूर्वमीमांसायां धर्माधर्मौ विचार्यतया विषयौ, उत्तरमीमांसायां परं ब्रह्म। अत एव जैमिनिना "अथातो धर्मजिज्ञासा" इति धर्मस्यैव जिज्ञास्यत्वेन वर्णनं, बादरायणेन च "अथातो ब्रह्मजिज्ञासा" इति ब्रह्मणः जिज्ञास्यत्वेनोपवर्णनमपि संगच्छते। पूर्वमीमांसायां वेदाध्ययनवतः अधिकारित्वम्, उत्तरमीमांसायां तु "नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोग-विरागः, शमदमोपरतितितिक्षाश्रद्धासमाधानानि, मुमुक्षुत्वम्" इत्येवं साधन-

"एकोऽहं बहु स्याम्" इतीक्षणामारभ्य "जीवरूपेण प्राविशत्" इत्यन्ता सृष्टिः कार्यम्। सर्व-शक्तिमत्त्वम्, सर्वज्ञत्वम्, व्यापकत्वम्, एकत्वम्, स्वाधीनत्वम्, प्रभुत्वम्, परोक्षत्वम्, मायोपाधिमत्त्वम्, इत्यष्टौ धर्माः। एतैः सर्वैः सहिता माया, तत्र प्रतिबिम्बरूपश्चिदा-भासः; तेषाम् अधिष्ठानं ब्रह्म च, एतत्सर्वं मिलित्वा 'ईश्वर' उच्यते। स एव 'तत्' पदस्य वाच्योऽर्थः। एतैः सहितां मायां चिदाभासभागं च परित्यज्य विराट्हिरण्यगर्भाऽव्या-कृताधिष्ठानम् ईश्वरसाक्षि शुद्धं ब्रह्म च 'तत्' पदस्य लक्ष्योऽर्थः। ब्रह्मणः सत्यतायाः ईश्वरे संसर्गः (तादात्म्यसंबन्धः) अध्यस्त इति ईश्वरः सत्यः प्रतीयते, ईश्वरतत्कारणता-स्वरूपं च ब्रह्मणि अध्यस्तम् अतो ब्रह्म जगतः कारणं प्रतीतं भवति। एवं ब्रह्मेश्वरयोः परस्परमध्यासः। अध्यासनिवृत्तिस्तु विवेकज्ञानाद्भवति। 'त्वं'पदस्य वाच्यलक्ष्यार्थौ चैवं विज्ञेयौ—चक्षुःकण्ठहृदयानि जीवस्य देशः। जाग्रत्स्वप्नसुषुप्तयः कालाः। स्थूल-सूक्ष्मकरणानि वस्तूनि—भोगसामग्र्यः। एतान्येव शरीराणि। विश्वतैजसप्राज्ञाः जीवत्वा-भिमानिनः। जाग्रन्तमारभ्य मोक्षपर्यन्तं भोगरूपः संसारः कार्यम्। अल्पशक्तिमत्त्वम्, अल्पज्ञत्वम्, परिच्छिन्नत्वम्, अप्रभुत्वम्, अपरोक्षत्वम्, अविद्योपाधिमत्त्वम्, इत्यष्टौ धर्माः। एतैः सर्वैः सहिता अविद्या, तत्र प्रतिबिम्बरूपश्चिदाभासः, तेषामधिष्ठानं कूटस्थः, एतत्सर्वं मिलित्वा 'जीव' इत्युच्यते[1]।

1 सोऽयं जीवः "त्वं"पदस्य वाच्योऽर्थः। एभिः सर्वैः सहितं चिदाभासं परित्यज्य स्थूलसूक्ष्मकारणशरीराधिष्ठानं जीवसाक्षी कूटस्थ आत्मा "त्वं"पदस्य लक्ष्यार्थः। कूटस्थस्य सत्यतायाः संसर्गः (तादात्म्यसंबन्धः) जीवेऽध्यस्त इति न जीवस्य मिथ्यात्वेन प्रतीतिः, जीवतत्कर्तृत्वादिधर्मस्य स्वरूपं च कूटस्थेऽध्यस्तमिति कर्तृत्वादिधर्मवानिव कूटस्थो भाति, इत्थं कूटस्थजीवयोः परस्परमध्यासः, स च विवेकज्ञानान्निवर्तते। यद्यपि 'तत्' "त्वं"पदवाच्ययोः उपाधिसहितयोः ईश्वरजीवयोरेकतायां विरोधो वरीवर्ति, तथापि तत्पदलक्ष्यार्थस्य ब्रह्मणः 'त्वं'पदलक्ष्यार्थस्य आत्मनश्चैकतायां नैव कश्चिद् विरोध इति महावाक्यसंगतिः। जीवभावाधिष्ठानकूटस्थस्य ब्रह्मणा सह मुख्योऽभेदः, बुद्धिसहितचिदा-भासस्य ब्रह्मणा सह स्वस्वरूपं प्रबाध्य अभेदो भवतीति स्वं कूटस्थरूपं विजानाति अहं शब्दस्य लक्ष्यार्थम्, स्वकूटस्थस्य "कूटस्थोऽहमस्मि" इत्यभिमानेन "अहं ब्रह्मास्मि" इत्येवं स्वं ब्रह्मरूपं मन्यते चिदाभास इति वेदान्तेषु विस्तरः।

चतुष्टयसम्पन्नस्यैवाधिकारः। पूर्वमीमांसायाः वेदार्थविचारद्वारा धर्माधर्मपरिज्ञानं प्रयोजनं, ब्रह्ममीमांसायास्तु पराभिन्नस्य निर्गुणस्यात्मनः साक्षात्कारः प्रयोजनम्। एवमनयोरुभयोरनुबन्धचतुष्टयभेदो वरीवर्ति। अपि च पूर्वमीमांसायाम् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति सूत्रेण जैमिनिना वेदघटकविधिवाक्यानामेव प्रामाण्यम्, इतरेषामर्थवादरूपतया स्तुतिनिन्दापरतया विधिशेषतयैव प्रामाण्यं निरूपितम्, वैयासिकनये तु ब्रह्मणः सिद्धवस्तुस्वरूपत्वात् सिद्धवस्तुप्रतिपादकवाक्यानामपि प्रामाण्यं सिद्धान्तितम्, इत्यनयोः शास्त्रयोर्महान् भेद इत्यन्यत्र द्रष्टव्यम्॥ ॥ ९ ॥ ॥

एवं धर्मशास्त्राणि—मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि, वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि। एवं व्यासकृतं महाभारतं, वाल्मीकिकृतं रामायणं च धर्मशास्त्र एवान्तर्भूतं स्पष्टमितिहासत्वेन प्रसिद्धम्। सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात् पृथगेव सङ्गतिर्वाच्या॥ ॥ १० ॥ ॥

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः। तत्र आयुर्वेदस्य अष्टौ स्थानानि भवन्ति—सूत्रं शारीरम् ऐन्द्रियं चिकित्सा निदानं विमानं कल्पः सिद्धिश्चेति। ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्टश्चरकेण संक्षिप्तः। तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम्। एवं वाग्भटादिभिरपि बहुधेति न शास्त्रभेदः। कामशास्त्रमपि आयुर्वेदान्तर्गतमेव। सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात्। तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम्। तस्य च विषयवैराग्यमेव प्रयोजनम्। शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात्। चिकित्साशास्त्रस्य च रोगतत्साधनरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम्। एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः। तत्र प्रथमो दीक्षापादः। द्वितीयः संग्रहपादः। तृतीयः सिद्धिपादः। चतुर्थः प्रयोगपादः। तत्र प्रथमपादे धनुर्लक्षणम् अधिकारिनिरूपणं च कृतम्। तत्र धनुःशब्दश्चापे रूढोऽपि चतुर्विधायुधवाची वर्तते। तच्च चतुर्विधं—मुक्तम् अमुक्तं मुक्तामुक्तं यन्त्रमुक्तं च। तत्र मुक्तं=चक्रादि, अमुक्तं=खड्गादि, मुक्तामुक्तं=शल्यावान्तरभेदादि, यन्त्रमुक्तं=

१ अत्र च धर्मशब्दः षड्विधस्मार्तधर्मविषयः। तद्यथा—वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति। तत्र वर्णधर्मः—"नित्यं मद्यं ब्राह्मणो वर्जयेत्" इत्यादिः। आश्रमधर्मः—अग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः—"पालाशो दण्डो ब्राह्मणस्य" इत्येवमादिः। गुणधर्मः—शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः। निमित्तधर्मः—विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम्। साधारणो धर्मः—अहिंसादिः। "न हिंस्यात्सर्वा भूतानि" इत्याचाण्डालं साधारणो धर्मः। (मिताक्षरा)

शरादि । तत्र मुक्तम् 'अस्त्रम्' इत्युच्यते । अमुक्तं 'शस्त्रम्' इत्युच्यते । तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम् । एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदातिरथगजतुरगारूढाः, दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमपादे निरूपितम् । सर्वेषां शस्त्रविशेषाणाम् आचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितः द्वितीये पादे । गुरुसम्प्रदायसिद्धानां शस्त्र-विशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे । एवं देवतार्चनाभ्यासादिभिः सिद्धानाम् अस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरू-पितः । क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनु-र्वेदस्य प्रयोजनम् । एवं च ब्रह्मप्राजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेद-शास्त्रम् ॥ एवं **गान्धर्ववेदशास्त्रं** भरतेन प्रणीतम् । तत्र नृत्यगीतवाद्यभेदेन बहुविधोऽर्थः प्रपञ्चितः । देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्व-वेदस्य प्रयोजनम् । एवम् **अर्थशास्त्रं** च बहुविधम्—नीतिशास्त्रम् अश्वशास्त्रं गजशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानामुनिभिः प्रणीतम् । तस्य च सर्वस्य लौकिकालौकिकतत्तत्प्रयोजनभेदो द्रष्टव्यः । एवम् अष्टादशविद्या अत्रोपलक्षणतयोक्ता वेद्याः ॥ ॐ ॥

तथा **सांख्यशास्त्रं** कपिलेन भगवता प्रणीतम् । तत्र "त्रिविधदुःखात्यन्त-निवृत्तिरत्यन्तपुरुषार्थः" इत्यादि षडध्यायाः । तत्र प्रथमेऽध्याये विषया निरू-पिताः । द्वितीयेऽध्याये प्रधानकार्याणि । तृतीयेऽध्याये विषयवैराग्यम् । चतुर्थे-ऽध्याये विरक्तानां पिङ्गलाकुररादीनाम् आख्यायिकाः । पञ्चमेऽध्याये परपक्ष-निर्जयः । षष्ठे च सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानं **सांख्यशास्त्रस्य** प्रयोजनम् ॥ ॐ ॥

तथा **योगशास्त्रं** भगवता पतञ्जलिना प्रणीतम् "अथ योगानुशासनम्" इत्यादि पादचतुष्टयात्मकम् । तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकं समाधि-वैराग्यरूपं च तत्साधनं निरूपितम् । द्वितीये पादे विक्षिप्तचित्तस्यापि समाधि-

---

१ अत्रेदं बोध्यम्–(क) विषयेष्वलं प्रत्ययवतः उदासीनस्य बहिरिन्द्रियेभ्यो व्यावृत्तं मनो यदाऽऽत्ममात्रनिष्ठं भवति, तदा तत्कर्मानुगुणप्रयत्नाभावात् कर्म मनसि नोत्पद्यते, स्थिरतरं मनो भवति, स एव योगः । (वै० उ० ४।२।१९) (ख) आत्मस्थे मनसि षडङ्गयोगेन इन्द्रियादिकं परित्यज्य मनो यदाऽऽत्ममात्रे तिष्ठति, तदा मनः कर्मणोऽनुत्पादः, तदा मनो निश्चलं भवति । तदवस्थायां शरीरावच्छेदेन दुःखं न जायते । स आत्मना बाह्यव्यावृत्तमनसः संयोगो योग उच्यते । (वै० सू० ५।२।१९) (ग) इन्द्रियाणि विषयेभ्यः प्रत्याहृत्येन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं योगः, इति । (नील० ) ॥

---

1 आसनं प्राणसंरोधः प्रत्याहारश्च धारणा । ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥" (स्कन्दपुराणे)

सिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि निरूपितानि । तृतीयपादे योगविभूतयः । चतुर्थपादे कैवल्यमिति । तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम् ॥ ॐ ॥

तथा पाशुपतं शास्त्रं भगवता पशुपतिना पशुपाशविमोक्षणाय "अथातः पाशुपतयोगविधिं व्याख्यास्यामः" इत्यादिपञ्चाध्यायं विरचितम् । तत्राध्यायपञ्चकेनापि कार्यरूपो जीवः पशुः, कारणं पशुपतिरीश्वरः, योगः पशुपतौ चित्तसमाधानं, विधिर्भस्मना त्रिषवणस्नानादिर्निरूपितः । दुःखान्तकसंज्ञको मोक्षश्चास्य प्रयोजनम् । एते एव कार्यकारणयोगविधिदुःखान्ता इत्याख्यायन्ते ॥ ॐ ॥

१ उपासनाप्रकारश्च योगियाज्ञवल्क्येनेत्थं प्रादर्शि—

"ऊरुस्थोत्तानचरणः सव्ये न्यस्योत्तरं करम् ।
उत्तानं किंचिदुन्नाम्य मुखं विष्टभ्य चोरसा ॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चलः ॥
संनिरुध्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः ।
द्विगुणं त्रिगुणं वापि प्राणायाममुपक्रमेत् ॥
ततो ध्येयः स्थितो योऽसौ हृदये दीपवत् प्रभुः ।
धारयेत्तत्र चाऽऽत्मानं धारणां धारयन् बुधः ॥

अत्र मिताक्षराकाराः—"ऊरुस्थावुत्तानौ चरणौ यस्य स तथोक्तः बद्धपद्मासनः, तथोत्ताने सव्यकरे दक्षिणमुत्तानं न्यस्य मुखं किंचित् उन्नाम्य उरसा च विष्टभ्य=स्तम्भयित्वा तथा निमीलिताक्षः, सत्त्वावस्थः=कामक्रोधादिरहितः, दन्तैर्दन्तान् असंस्पर्शयन्, तथा तालुनि स्थिता अचला जिह्वा यस्य स तथोक्तः, तथा संवृतास्यः=पिहिताननः, सुनिश्चलः=निष्प्रकम्पः, तथा सम्यक् इन्द्रियसमूहं विषयेभ्यः प्रत्याहृत्य नातिनीचासनो नात्युच्छ्रितासनो यथा चित्तविक्षेपो न भवति तथोपविष्टः सन्, द्विगुणं त्रिगुणं वा प्राणायामाभ्यासम् उपक्रमेत् । ततो वशीकृतपवनेन योगिना योऽसौ हृदये दीपवत् अप्रकम्पः प्रभुः स्थितः असौ ध्यातव्यः । तत्र च=हृदि आत्मानं मनोगोचरतया धारयेत् । तथा धारणां च धारयेत् । धारणास्वरूपं च—जान्वग्रभ्रमणेन छोटिका[1]दानकालो=मात्रा, ताभिः पञ्चदशमात्राभिरधमः प्राणायामः, त्रिंशद्भिर्मध्यमः, पञ्चचत्वारिंशद्भिरुत्तमः इति । प्राणायामत्रयात्मिका एका धारणा, तास्तिस्रो योगशब्दवाच्याः, ताश्च धारयेत् । यथोक्तमन्यत्र—

"संभ्रम्य च्छोटिकां दद्यात्कराग्रं जानुमण्डले ।
मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः ॥
मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा ।
त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव च ॥" इति ।

1 अङ्गुष्ठमध्यमाङ्गुलिसंघर्षजनितः शब्दश्छोटिकेत्युच्यते, तदवच्छिन्नः कालो मात्रा । तथा चोक्तं स्कन्दपुराणे—"जानुं प्रदक्षिणीकुर्यान्न द्रुतं न विलम्बितम् । प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते ॥" इति ।

एवं शैवं मन्त्रशास्त्रमपि पाशुपतशास्त्रान्तर्गतमेव द्रष्टव्यम् ॥ ‌ ॥

एवं च वैष्णवनारदादिभिः कृतं पञ्चरात्रम् । तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः । भगवान् वासुदेवः परमेश्वरः सर्वकारणं तस्मादुत्पद्यते संकर्षणाख्यो जीवस्तस्मान्मनः प्रद्युम्नस्तस्मादनिरुद्धोऽहंकारः । सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति तस्य वासुदेवस्य मनोवाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितम् ॥ एवं वैष्णवमन्त्रशास्त्रमपि पञ्चरात्रमध्येऽन्तर्भूतम् । वामागमादिशास्त्रं तु वेदबाह्यमेवेति न तत्प्रमाणम् ॥ ‌ ॥

सर्वसिद्धान्तसंग्रहे श्रीशङ्कराचार्याः—अङ्गोपाङ्गोपवेदाः स्युर्वेदस्यैवोपकारकाः । धर्मार्थकाममोक्षणामाश्रयाः स्युश्चतुर्दश ॥ वेदाङ्गानि षडेतानि शिक्षा व्याकरणं तथा । निरुक्तं ज्योतिषं कल्पश्छन्दोविचितिरित्यपि ॥ मीमांसा न्यायशास्त्रं च पुराणं स्मृतिरित्यपि । चत्वार्येतान्युपाङ्गानि बहिरङ्गानि तानि वै ॥ आयुर्वेदोऽर्थवेदश्च धनुर्वेदस्तथैव च । गान्धर्ववेदश्चेत्येवमुपवेदाश्चतुर्विधाः ॥ शिक्षा शिक्षयति व्यक्तं वेदोच्चारणलक्षणम् । वक्तिव्याकरणं तस्य संहितापादलक्षणम् ॥ वक्ति तस्य निरुक्तं तु पदनिर्वचनं स्फुटम् । ज्योतिः शास्त्रं वदत्यत्र कालं वैदिककर्मणाम् ॥ क्रमं कर्मप्रयोगाणां कल्पसूत्रं प्रभाषते । मात्राक्षराणां संख्योक्ता छन्दोविचितिभिस्तथा ॥ मीमांसा सर्ववेदार्थप्रविचारपरायणा । न्यायसूत्रं प्रमाणादिसर्वलक्षणतत्परम् ॥ पुराणं नष्टशाखस्य वेदार्थस्योपबृंहणम् । कथारूपेण महता पुरुषार्थप्रवर्तकम् ॥ वर्णाश्रमानुरूपेण धर्माधर्मविभागतः । धर्मशास्त्रमनुष्ठेयधर्माणां तु नियामकम् ॥ हेतुलिङ्गौषधस्कन्धैरायुरारोग्यदर्शकः । आयुर्वेदोह्यनुष्ठेयः सर्वेषां तेन बोध्यते ॥ अर्थवेदोऽन्नपानादिप्रदानमुखतत्परः । दक्षिणाज्यपुरोडाशचरुसंपादनादिभिः ॥ तत्पालनाच्चतुर्वर्गपुरुषार्थप्रसाधकः । धनुर्वेदो भवत्यत्र परिपन्थिनिरासकः ॥ सप्तस्वरप्रयोगो हि सामगान्धर्ववेदयोः । समेतो लौकिको योगो वैदिकस्योपकारकः ॥ अङ्गोपाङ्गोपवेदानामेवं वेदैकशेषता । इत्यादि ॥ ‌ ॥

तदेवं दर्शितः प्रस्थानभेदः । सर्वेषां संक्षेपेण त्रिविध एव प्रस्थानभेदः। तत्र आरम्भवाद एकः, परिणामवादो द्वितीयः, विवर्तवादस्तृतीयः । पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्माण्डपर्यन्तं जगदारभन्ते । असदेव कार्यं कारणव्यापारादुत्पद्यत इति प्रथमः[१] तार्किकाणां मीमांसकानां च । सत्त्वरजस्तमोगुणात्मकप्रधानमेव महदहंकारादिक्रमेण जगदाकारेण परिणमते, पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत

१ यथा पितामहादीनां जीर्णे पुरातने गृहे विनष्टे सति तत्स्थेष्टकादिसामग्र्या नूतनं गृहं निर्मीयते—आरम्यते, एवमेव कार्यरूपपृथिव्यादीनां विनाशेऽपि परमाणवो यथास्थिता एव अवतिष्ठन्त इति तैः पुनरन्यपृथिव्यादीनामारम्भो भवतीति रीत्याऽऽरम्भवादोऽभ्युपगम्यते । अत्र कार्यकारणयोः परस्परं भेदः ।

इति द्वितीयः पक्षः सांख्ययोगपाशुपतानाम्, ब्रह्मणः परिणामो जगदिति वैष्णवानामपि। स्वप्रकाशपरमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्प्यत इति तृतीयः[2] पक्षो ब्रह्मवादिनाम्। सर्वेषां च प्रस्थानकर्तॄणां मुनीनां विवर्तवादपर्यवसानेनाद्वितीये परमेश्वरे एव वेदान्तप्रतिपाद्ये तात्पर्यम्। न हि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम्, किन्तु बहिर्विषयप्रवणानामापाततः परमपुरुषार्थे झटिति प्रवेशो न भवतीति नास्तिक्यनिवारणाय तैः प्रकारभेदाः प्रदर्शिताः॥ इति मधुसूदनस्वामिनः॥ किं बहुना—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥ ११ ॥॥ ॥

प्रकृतमनुसरामः—ननु यथा मन्वादिभिर्वेदानधीत्य तदर्थं चावगत्य तत्र तत्र विप्रकीर्णानि वेदवाक्यानि लोकोपकारार्थम् अर्थतः पिण्डीकृत्योपनिबद्धानि न तथा कपिलेन मुनिना, "ऋषिं[3] प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति"—इत्यादिश्रुत्या जातमात्रस्यैव तस्य ज्ञानसंपन्नत्वश्रवणाद् वेदाध्ययनमन्तरैव प्रकृतशास्त्रस्य प्रणीतत्वात्, तथाच तदीयं वाक्यं वेदमूलकं भवितुं नार्हति, आदिविदुषो वेदाध्ययनस्यैवासंभवात्, अभियुक्ताश्चाहुः—सर्गादावादिविद्वान् कपिलो धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूव इति स्मरन्ति" इति। पञ्चशिखाचार्याश्च—"आदिविद्वान्[4] निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् पर-

१ यथा दुग्धस्य परिणामः (रूपान्तरं) दधि, तथा सांख्यमते प्रकृतेः परिणामो जगदस्ति। उपासका अपि परिणाममेवाभ्युपगच्छन्ति, तन्मते ब्रह्मणः परिणामो जगज्जीवौ। अत्र कार्यकारणयोः परस्परमभेदः। २ निर्विकाररज्जौ रज्जुरूपाधिष्ठानतो विषमसत्तावान् अन्यथास्वरूपो यथा सर्पो भवति, स रज्ज्वाः विवर्तः—(कल्पितकार्यम्) अस्ति, एवमेव निर्विकारे ब्रह्मणि अधिष्ठानब्रह्मतो विषमसत्तावत् अन्यथास्वरूपं जगद् भवति तदपि ब्रह्मणो विवर्तः (कल्पितकार्यम्) एवास्ति। अत्रापि कार्यकारणयोर्बाधक्ततोऽभेद इत्यन्यत्र विस्तरः। ३ यः कपिलऋषिः अग्रे=सर्वसृष्ट्यादौ जायमानम् आत्मानं ज्ञानैर्बिभर्ति तं प्रसूतम्=उत्पन्नं कपिलम् ऋषिं पश्येदित्यर्थः। तत्र मन्त्रद्रष्टृत्वम् ऋषित्वम्, 'ऋषिर्दर्शनात्' इति यास्कोक्तेः। सायणोऽपि—अतीन्द्रियार्थद्रष्टारो हि ऋषयः। तेषां वेदद्रष्टृत्वं स्मर्यते—"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनु ज्ञाताः स्वयम्भुवा॥" इति। तच्च (ऋषित्वं) वसिष्ठवामदेवादिषु वर्तते। मननशीलत्वं मुनित्वम्। तच्च शौनकादिषु वर्तते। तल्लक्षणं यथा—"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते॥ भगवदवतारे कपिले तु मन्त्रद्रष्टृत्वज्ञानवत्त्वरूपयोरुभयोरपि धर्मयोः सद्भावाद् 'ऋषिं प्रसूतम्'—इत्यत्रर्षित्वेन व्यपदेशः, "सिद्धानां कपिलो मुनिः" इत्यत्र च मुनित्वेन व्यपदेशो न विरुध्यते इतिध्येयम्। ४ आदिविद्वान्=सर्गादावाविर्भूतो हिरण्यगर्भः स्वयम्भूः, निर्माणचित्तं=योगबलेन स्वनिर्मितं चित्तम्, अधिष्ठाय=स्वांशेन प्रविश्य, कपिलाऽऽख्यपरमर्षिर्भूत्वा कारुण्याज्जिज्ञासवे आसुरये तन्त्रं प्रोवाचेत्यर्थः। यो हिरण्य-

आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः ।

तथाचाऽऽवट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्ति जन्मस्मरणमात्मन उवाच—"दशसु महाकल्पेषु विपरिवर्तमानेन मया" (यो० भा० ३।१८) इत्यादिना ग्रन्थसन्दर्भेण ।

---

मर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति । न च वेदवाक्यवत् कापिलवाक्यस्यापि[1] स्वतःप्रमाणत्वम्, पुरुषबुद्धिप्रभवस्य तस्य तत्त्वायोगादित्याशङ्कायामाह—आदिविदुषश्चेति । कल्पादौ=एतत्कल्पीयप्राथमिकसृष्टिसमये । तथाच कापिलस्मृतेरपि वेदमूलकत्वाद् युक्तमेतस्या अपि युक्तत्वमिति भावः । महाप्रलयान्तरिते कथं वेदानां स्मरणमित्याशङ्कानिरासाय आदिविदुष इति हेतुगर्भितं विशेषणम् । अतीतकल्पानुष्ठितप्रकृष्टधर्मबलेन सर्गादावेव विज्ञानसम्पन्नः कपिलः किलाविर्बभूवेति स आदिविद्वानित्यर्थः । तत्र दृष्टान्तमाह—सुप्तेति । पूर्वं सुप्तस्य पश्चात् प्रबुद्धस्य=जागरितस्य इव=यथा पूर्वेद्युः=पूर्वस्मिन् दिने अवगतानाम्=बुद्धानां ज्ञातानां विषयाणाम् अपरेद्युः=अपरस्मिन् दिने स्मरणं तथेत्यर्थः । एतदुक्तं भवति—रात्रौ सुप्तस्य पूर्वदिवाकाले समधिगतानामर्थानां परदिवाकाले यथा स्मरणं, न तु रात्रौ सुप्तस्यापि विस्मरणं, तथा प्राक् सृष्टावधीतानां वेदानाम् अन्तरा प्रलयदशायां सुप्तवत् स्थितस्यापि उत्तरसृष्टौ स्मरणं संभवत्येवेति । कल्पान्तरानुभूतस्यापि भवति प्रकृष्टयोगजधर्मबलेन स्मरणमित्यत्र कैमुतिकन्यायसिद्धं प्रसिद्धं संवादमुपन्यस्यति—तथाचेति । आवट्यश्च जैगीषव्यश्च तयोः संवादे=मिथ उक्तिप्रत्युक्तिरूपे भाषणे, इति आवट्यस्य जैगीषव्येण सह संवादे इति वा विग्रहः । केन वचनेन उवाचेति जिज्ञासायां योगभाष्यस्थितं तद् वचनमेवाह—दशसु महाकल्पेष्विति । भगवतो जैगीषव्यस्य संस्कारसाक्षात्कारणाद् दशसु महासर्गेषु जन्मपरिणाम-

---

गर्भः स्वयम्भूरादिविद्वान् स एव कपिलो भूत्वाऽऽसुरय उपदिदेशेति भावः । एतेन "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "हिरण्यगर्भं पश्यत जायमानम्" "हिरण्यगर्भं जनयामास पूर्वम्" इत्यादिश्रुतिषु हिरण्यगर्भ एवादिविद्वानाम्नायते तत्कथं कपिल आदिविद्वानिति शङ्का निराकृता भवति । तन्त्र्यते=व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं=मोक्षशास्त्रम् । "अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्तकः" इति महाभारतं तु कल्पभेदेन नेयम् । कल्पभेदेनैव च कुत्रचित् कपिलो ब्रह्मपुत्र इति स्मर्यते । एतेन "पञ्चमे कपिलो नाम" इति भागवते पञ्चमावतारत्वोक्तेर्विष्णोरवतारः कपिल इति तेन विरोधोऽपि परिहृतो भवति, ईदृशवाक्यानां कल्पभेदेनैव नेयत्वादित्यलं बहुना ।

१ कापिलवाक्यस्य । २ स्वतः प्रमाणत्वायोगात् ।

क्रमम् अनुपश्यतो विवेकजं ज्ञानं प्रादुरभवत् । अथ भगवान् आवट्यः तनुंधर-स्तम् उवाच—"दशसु महासर्गेषु भव्यत्वाद् अनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग् गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकम् उपलब्धमिति ।" भगवन्तम् आवट्यं जैगीषव्य उवाच "दशसु महासर्गेषु भव्यत्वाद् अनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग् भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत् किंचिद् अनुभूतं, तत्सर्वं दुःखमेव प्रत्यवैमि ।" भगवान् आवट्य उवाच—"यद् इदम् आयुष्मतः प्रधानवशित्वम् अनुत्तमं च सन्तोषसुखम्, किम् इदमपि दुःखपक्षे निक्षिप्तमिति" । भगवान् जैगीषव्य उवाच—"विषयसुखापेक्षयैव इदम् अनुत्तमं सन्तोषसुखम् उक्तम्, कैवल्यापेक्षया तु दुःखमेव । बुद्धिसत्त्वस्यायं धर्मः—त्रिगुणः, त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति दुःखस्वरूपः, तृष्णादुःख-सन्तापाऽपगमात्तु प्रसन्नम् अबाधं सर्वानुकूलं सुखम् इदमुक्तमिति" इति हि तयोः पूर्णः संवादो योगभाष्ये ॥ (पा० ३ सू० १८) एतदुक्तं भवति—यदि योगीन्द्रस्य जैगीषव्यस्य बहुकल्पानुभूतविषयस्य स्मरणं सम्भवति, तदा किमु वक्तव्यं सर्वज्ञस्येश्वरस्य तथा स्मरणं भवतीति । तत्र मानुषाणां वर्षं देवानां रात्रिदिने भवतः । तयोरप्ययं विभागः—नराणामुदगयनं देवाना-महः, दक्षिणायनं तु रात्रिः । त्रिंशता रात्रिदिनैरेको दिव्यो मासो भवति, स च मानुषाणां त्रिंशद् (३०) वर्षात्मकः । द्वादशभिर्मासैरेको दिव्यो वर्षो भवति, स च मानुषाणां ३६० वर्षात्मको भवति । १२००० दिव्यवर्षा-णाम् एकं दिव्यं युगं भवति । सहस्रदिव्ययुगानाम् एकं ब्राह्मं दिनं भवति तावत्येव ब्राह्मी रात्री । किमुक्तम्? देवयुगानां सहस्रं ब्राह्मदिनं ज्ञातव्यम्, सहस्रमेव रात्रिः । तथाच मनुः—"दैविकानां युगानां तु सहस्रं परिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ॥" तत्रायं विवेकः—मानुषाणां ४,३२,००० वर्षैरेकं कलियुगं भवति, ततो द्विगुणम् अर्थात् ८,६४,००० वर्षै-र्द्वापरम्, कलियुगात् त्रिगुणम् अर्थात् १२,९६,००० वर्षैस्त्रेतायुगं भवति,

---

१ लिङ्गशरीरमात्रविहार्यपि योगबलेन परीक्षार्थं निर्माणकायं धृत्वेत्यर्थः । २ कुशलत्वात्, शोभनत्वात् रजस्तमोरूपमलरहितत्वात्, यतोरजस्तमोरूपमलरहितम् अत एव भवतो बुद्धिनिष्ठं सत्त्वं न तमोरजोभ्यामभिभूतमिति भावः । ३ संसारः सुखबहुलो वा दुःखबहुलो वेत्यर्थः । ४ विषयसुखस्य दुःखरूपत्वात् संसारो दुःखबहुल एव न सुखबहुल इत्यर्थः । ५ प्रकृतेः स्वाधीनीकरणम् । एतत्सामर्थ्येनैव योगी, ईश्वर उच्यते । यतः प्रधानवशित्वे सति यद् यद् वाञ्छति तत् तत्कर्तुं प्रभवति । ६ सन्तोषसुखमित्यनुषज्यते । ७ संतोषस्य कैवल्यापेक्षया दुःखरूपत्वं साधयति–बुद्धीति । अयं=संतोषः । योऽयं संतोषः स बुद्धिसत्त्वस्य धर्मः, यो यो बुद्धिधर्मः स सर्वः त्रिगुणात्मकप्रत्ययत्वात् हेयपक्षे पतित इत्यर्थः । रज्जुरिव बन्धकत्वेन तृष्णाख्यस्तन्तुर्दुःखरूपः प्रसिद्धस्तदपगमाच्च सन्तोषस्य सुखत्वमुक्तमिति भावः ॥

**आप्तग्रहणेन चाऽयुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति ।**

---

कलियुगात् चतुर्गुणं च अर्थात् १७,२८,००० वर्षाणां सत्ययुगं भवति । चतुर्णामेषां संकलनया अर्थात् ४३,२०,००० वर्षाणाम् एका चतुर्युगी भवति । दिव्यमानेन गणनया तु—चत्वारि वर्षसहस्राणि कृतयुगम्, त्रीणि वर्षसहस्राणि त्रेतायुगम्, द्वे वर्षसहस्रे द्वापरः, वर्षसहस्रं कलिः । एतदुक्तं भवति—१२०० दिव्यवर्षाणां कलिः, २४०० दिव्यवर्षाणां द्वापरः, ३६०० दिव्यवर्षाणां त्रेता, ४८०० दिव्यवर्षाणां च सत्ययुगं भवति । यथोक्तं विष्णुपुराणे—"दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् । चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥" संकलनया १२००० वर्षैकं दिव्यं युगं भवति । यदाह भगवान् मनुः—"यदेतत्परिसंख्यातमादावेव चतुर्युगम् । एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥" सहस्रचतुर्युगीनाम् एकं ब्रह्मणो दिनं भवति, सहस्रचतुर्युगीभिरेव तस्यैका रात्रिर्भवति । एतदुक्तं भवति—४३,२०,०००×१०००= ४,३२,००००००० वर्षैर्ब्राह्मं दिनं भवति, तावद्भिरेव वर्षैर्ब्राह्मरात्रिः । तदित्थं मानुषाणां ८,६४,००००००० वर्षैर्ब्रह्मणो रात्रिदिने भवतः । तत्र ब्रह्मणो दिनं कल्प इत्युच्यते, ब्राह्मी रात्रिस्तु प्रलय इति भाष्यते । ईदृशैस्त्रिंशता अहोरात्रैरेको ब्राह्मो मासो भवति, स च मानुषाणां २५,९२,०००,०००,०० वर्षात्मकः सम्पन्नो भवति । द्वादशभिर्मासैरेको ब्राह्मो वर्षो भवति, स च मानुषाणां ३१,१०,४०,००००००० वर्षात्मकः फलितो भवति । शतवर्षेषु पूर्णेषु सत्सु ब्रह्मा प्रयाणं करोति, यतः शतायुः स भवति । तस्य शतवर्षाश्च मानुषाणां ३१,१०,४०,००००००००० वर्षैः सम्पद्यन्ते । ब्रह्मणः प्रयाणसमये च सर्वे लोकाः सावयवा विनश्यन्ति, अयमेव च महाप्रलय इत्युच्यते ।" तदिदं शान्तिपर्वणि महाभारते (२३१,३१) प्रथमाध्याये मानवधर्मशास्त्रे च (१,७३) सुस्पष्टम् ॥ ❀ ॥

एवं च मन्वादिभिर्यथा वेदानधीत्य तदर्थं चावगत्य तत्र तत्र विप्रकीर्णवेदवाक्यान्यर्थतः पिण्डीकृत्य निर्मितानां धर्मशास्त्राणां वेदमूलकत्वेन प्रामाण्यम्, तथा कापिलस्मृतेरपि कल्पान्तरीयाधीतवेदं स्मृत्वा निर्मितत्वेन वेदमूलकत्वात् प्रामाण्यमव्याहतमेवेति भावः ॥ ❀ ॥

ननु यदि स्मृत्यादिपौरुषेयवाक्यार्थज्ञानस्यापि प्रामाण्यं तर्हि आप्तग्रहणेन किं व्यावर्तनीयमिति जिज्ञासायाम् आप्तश्रुतिरित्यत्राप्तपदस्य कृत्यमाह—**आप्तग्रहणेन चेति** । 'अयुक्ताः परिहृता भवन्ति' इत्यन्वयः । के तेऽयुक्ता इति जिज्ञासायां तान् दर्शयति—**शाक्येत्यादिना** । तत्र पञ्चविंशतिबौद्ध-

---

१ अत्रेदं बोध्यम्—आगच्छन्ति=बुद्धिमारोहन्त्यस्मादभ्युदयनिःश्रेयसोपाया इत्यागमः । स च श्रुतिस्मृतीतिहासपुराणादिरेव । बुद्धादिप्रणीतस्त्वागमाभासो न त्वागमः,

भेदानां मध्येऽन्यतमस्य शुद्धोदननृपतिसूनोः शाक्यसिंहस्य मतानुयायिनः सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः बौद्धसन्यासिनः शाक्यभिक्षव

सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वात् । न वृद्धा ईश्वरप्रणीतत्वेन वेदानां प्रामाण्यमातिष्ठन्ते येन केनचित् सुभगाभिक्षुकन्यायेन बुद्धवाक्यप्रामाण्यप्रसङ्गापादनेनोपालभ्येरन्, किन्तर्हि ? नायमबोधकोऽस्पष्टबोधको वितथबोधको वा येन प्रामाण्यपथं नाश्नुवीत, अपि तु मन्त्रायुर्वेदैकदेशसंवादविदितेतरसंवादो वेदः सर्वथा प्रमाणमेवेत्येवमातिष्ठन्ते, तत्कथङ्कारमुपालभ्येरन् । वृद्धैः परिगृहीतत्वात्प्रामाण्यमित्यपि केचित् । विप्रलम्भका एव वृद्धा इति चेत् । अत्राहुर्न्यायाचार्याः—"वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेत् । न, वृद्धानामपि प्रवृत्तेः । न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते, तेऽपि वृद्धतरैरित्येवमनादिरिति चेत् । न तर्हि विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात् । इदं प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत्, किमसौ सर्वलोकोत्तर एव यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलं परवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति । कथं चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः । केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः । न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीय इत्यन्यत्र विस्तरः । इदन्त्वत्रावधेयम्—इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्ति-हेतुत्वं, औषधसेवादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षतः सिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । एवं तर्हि भाविजन्मगतसुखादिकमपि अनुमानगम्यमिति चेत्, न । तद्विशेषस्यानवगमात् । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिभिरप्यवगन्तुं शक्नोति । तस्मादलौकिकोपायबोधकोवेद इति लक्षणस्य नाति-व्याप्तिः । अत एवोक्तम्—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥"

तत्प्रामाण्यं तु बोधकत्वात् स्वत एव सिद्धम् । पौरुषेयवाक्यं तु बोधकमपि सत् पुरुषगतभ्रान्तिमूलत्वसंभावनया तत्परिहाराय मूलप्रमाणमपेक्षते, न तु वेदः । तस्य नित्यत्वेन वक्तृदोषशङ्कानुदयात् । एतदेव जैमिनिना सूत्रितम्—"तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्" [ मी० १।१।५ ] इति ।

ननु वेदोऽपि कालिदासादिवाक्यवत् पौरुषेय एव ब्रह्मकार्यत्वश्रवणात्,

"ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत"

(ऋ० १०।९०।९) इति श्रुतेः । अत एव बादरायणः—"शास्त्रयोनित्वात्" (वे० १।१।३ ) इति सूत्रेण ब्रह्मणो वेदकारणत्वमवोचत् । मैवम्, श्रुतिस्मृतिभ्यां नित्यत्वावगमात् । "वाचा विरूपनित्यया" [ ऋ० ८।७५।६ ] इति श्रुतेः, "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति स्मृतेश्च । बादरायणोऽपि देवताधिकरणे सूत्रयामास—"अत एव च नित्यत्वम्" ( वे० १।३।२९ ) इति । तर्हि परस्परविरोध इति चेत्, न, नित्यत्वस्य व्यावहारिकत्वात् । सृष्टेरूर्ध्वं संहारात् पूर्वं व्यवहारकालः, तस्मिन्नुत्पत्तिविना-

अयुक्तत्वं चैतेषां विगानाद् विच्छिन्नमूलत्वात् प्रमाणविरु-

---

इत्युच्यन्ते। तेषां भिक्षुत्वनामपतने निदानं तु "कृतिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम्। सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः॥" इत्युक्ता वृत्तिरेव। त्रयीबाह्या नग्ना जैनभेदा निर्ग्रन्थका इति भाष्यन्ते, ग्रन्थेभ्यः=वेदादिसच्छास्त्रेभ्यो निष्क्रान्ता इति तद् व्युत्पत्तेः। "संसारमोचकादेश्च हिंसा पुण्यत्वसम्मता" इत्येवं श्लोकवार्तिकादावुक्ताः हिंसादिपरायणा "घटभङ्गे तद्-न्तर्वर्तिसलिलविलयवद् देहविनाशे तदन्तर्गतजीवविनाश एव मोक्षः" इत्येवं मन्यमानाश्चार्वाकविशेषाश्च संसारमोचका इति कथ्यन्त इति विवेकः। आदिशब्देन देहाद्यात्मवादिनां चार्वाकविशेषाणां समुच्चयः। आगमवदाभासन्ते इत्यागमाभासाः। तत्र सादृश्यं तु-अज्ञातज्ञापकत्वम्। कथमेतेषामागमा-भासानामयुक्तत्वमिति जिज्ञासायां—"विगानाच्छिन्नमूलत्वात् कैश्चिदेव परि-ग्रहात्" इति श्लोकवार्तिकोक्तं तत्र हेतुमाह—विगानादित्यादिना। वि=विरुद्धं गानं=शब्दनं तस्मादित्यर्थः। "कैश्चिदेव परिग्रहणं, विप्रलिप्सुना बुद्धे-नागमः प्रणीत इति विरुद्धस्मरणं च विगानम्" इति न्यायरत्नाकरकारः। तथा च—"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताःस्मृताः॥" (मनु० १२।९५) इत्यादि विगानदर्शनाद् बौद्धाद्यागमाभासा अयुक्ता एवेति भावः। बौद्धस्य चत्वारः शिष्या भवन्ति—सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकाः। तत्र "बाह्यवस्तुजातं प्रत्यक्ष-गोचर" इति सौत्रान्तिकः, "आन्तरमेव वस्तु सद् बहिस्त्वनुमेयम्" इति वैभाषिकः, "सर्वं विज्ञानमात्रम्" इति योगाचारः, "शून्यतैव तत्त्वम्" इति माध्यमिक इत्येवं परस्परविरुद्धवदनमपि विगानमत्र बोध्यम्॥ * ॥

ननु विगानमात्रेणायुक्तता चेत्, तर्हि जैमिनीयादिषड्दर्शनानामपि

---

शादर्शनात्। कालाकाशादयो यथा नित्या एवं वेदोऽपि व्यवहारकाले कालिदासादिवाक्य-वत् पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु कालाकाशादिवदेव ब्रह्मणः सकाशाद् वेदोत्पत्तिराम्नायते। अतो विषयभेदान्न परस्परविरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य वक्तृदोषाभावात् स्वतःसिद्धं प्रामाण्यं तदवस्थम्॥ (तै० सं० भाष्यभूमिका)। इति श्रीसायणाचार्यः। वेदानां पौरुषेयत्वापौरुषेयत्वे तु बहु विचारितं प्रागेव सारबोधिन्यां टिप्पण्यां चेत्युपरम्यते विस्तरभयात्॥ * ॥

१ कृत्तिः=मृगचर्मादिकम्। क्वचिद् वृत्तिरिति पाठः। शून्यवादेनैकं प्रस्थानं माध्यमि-कानाम्। क्षणिकविज्ञानमात्रवादेनापरं योगाचाराणाम्। ज्ञानाकारानुमेयक्षणिकबाह्यार्थ-वादेनापरं सौत्रान्तिकानाम्। प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरं वैभाषिकानाम्। एवं सौगतानां प्रस्थानचतुष्टयम्। तथा देहात्मवादेनैकं प्रस्थानं चार्वाकाणाम्। एवं देहातिरिक्तदेहपरिणामात्मवादेन द्वितीयं प्रस्थानं दिगम्बराणाम्। एवं मिलित्वा नास्तिकानां षट् प्रस्थानानि सन्ति। वेदबाह्यत्वात्तु तेषां म्लेच्छादि प्रस्थानवत् परम्परयापि पुरुषार्थानु-पयोगित्वादुपेक्षणीयत्वमेवेति मधुसूदनस्वामिनः।

द्वार्थाभिधानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद् बोद्धव्यम् ।

---

अयुक्तत्वं स्यात्, "ईश्वरासिद्धेः" "एतेन योगः प्रत्युक्तः" इत्यादिना तेष्वपि तत्र तत्र विगानस्य स्फुटमुपलब्धेरत आह—छिन्नमूलत्वादिति । वेदमूलकत्वाभावादित्यर्थः । न च सर्वज्ञसुगतप्रणीत आगम एव तत्र मूलमिति साम्प्रतम्, सर्वज्ञस्मरणस्यासम्भवन्मूलत्वात् । तथा चाहुर्धर्मलक्षणाधिकरणे भट्टपादाः—

"सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥
सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ १३६ ॥
रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।
देशनाऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥ इति ।

एतद्व्याख्यायां पार्थसारथिमिश्राः—

छिन्नमूलतां विवृणोति—सर्वज्ञ इति । तज्ज्ञानज्ञेयं यत्सर्वं तद्विषयज्ञानरहितैर्नरैः कथं सर्वज्ञो ज्ञायताम् अतो न सर्वज्ञे कस्यचित् किंचित्प्रमाणं संभवतीति निर्मूलैव स्मृतिरिति । यदि त्वन्योऽपि कश्चित् सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थं, ततस्तेनैव प्रकारेणान्यस्यान्यस्य कल्पनायां बहुसर्वज्ञत्वापत्तिरित्याह—कल्पनीयाश्चेति । एवं सर्वज्ञो न केनचित् प्रमातुं शक्यते इत्युक्तम् । एवं च सम्यङ्मूलत्वाऽज्ञानात् तदागमस्यापि रथ्यापुरुषवाक्यवन्न प्रामाण्यं सिध्यतीत्याह—सर्वज्ञ इति । इतश्च तदागमस्याऽप्रामाण्यमित्याह—रागादीति । लाभपूजाख्यातिरागनिमित्तं ह्यागमप्रणयनं स्वयूथ्यस्पर्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न संभवति, निर्व्यापारश्चायं नासावर्थप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति, कथम्? प्रत्यवेक्षणपर्यायस्य विकल्पस्यासंभवाद्, "अस्येदं साधनम् अनेन च शब्देनेदं प्रतिपादयितुं शक्यम्" इति यावन्न विकल्प्यते न तावद् वाक्यप्रणयनं संभवति, न चायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाखिलं जगदध्यक्षयतो बुद्धस्यास्ति, तस्मादन्येन केनचित्प्रणीतो देशनाधर्मोपदेश इत्यप्रामाण्यमिति ॥ ❀ ॥

एवं जैनाद्यागमानामपि छिन्नमूलत्वं ज्ञेयम् ॥ ❀ ॥

अयुक्तत्वे हेत्वन्तरमाह—प्रमाणेति । प्रत्यभिज्ञा[1]प्रमाणादिविरुद्धस्य क्षणि-

---

१ स्मरणानुभवात्मकं ज्ञानं हि प्रत्यभिज्ञा । यथा—'सोऽयम्' इत्यत्र तत्तांशे स्मरणम् इदमंशे चानुभवः । न चैतत् क्षणिकवादे कथमपि संजाघटीतीति भावः ।

## तु–शब्देनानुमानाद् व्यवच्छिनत्ति ।
## वाक्यार्थो हि प्रमेयो न तु तद्धर्मो वाक्यं येन तल्लिङ्गं भवेद् ।

---

कत्वाद्यर्थस्याभिधानाच्चेत्यर्थः । अयुक्तत्वं चैतेषां "समुदाय उभयहेतुकेऽपि तदप्राप्तिः" ( वे० २।२।१८ ) इत्यादिब्रह्मसूत्रभाष्यादिषु सुव्यक्तमिति, तत्रैव कणेहत्यालोचनीयम् । महाजनापरिगृहीतत्वाच्चायुक्तत्वं बौद्धाद्यागमाभासाना-मित्याशयेन विगानं विवृणोति—कैश्चिदेवेति । "गोमांसखादको यस्तु विरुद्धं बहुभाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥" इति बौधायननिरुक्त-म्लेच्छसमानैः, पुरुषेषु अपसदैः=नीचैः, अत एव पशुकल्पैरिति, एवंविधैः कैश्चिदेव परिग्रहात् अयुक्तत्वं बोद्धव्यमित्यर्थः । यैः पशुदेशीयैर्यैर्हेतुभिर्बौद्धा-द्यागमाः परिगृहीतास्ते तु कुसुमाञ्जलौ द्वितीयस्तबके तृतीयकारिकायामुदयना-चार्यैः परिदर्शिताः—"भूयस्तत्र कर्मलाघवमित्यलसाः, इतः पतितानाम-प्यनुप्रवेश इत्यनन्यगतिकाः, भक्ष्याद्यनियम इति रागिणः, स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः" इत्यादिना ग्रन्थसन्दर्भेणेति तत एवाधिकं निरीक्ष्यम् ॥ "द्विविधं सम्यग् ज्ञानं प्रत्यक्षमनुमानं च" इत्येवं वदतः शाक्यान्, अनुमान-निरूपणानन्तरम् "एतेन शाब्दं व्याख्यातम्" ( वै० ९।२।३ ) इत्येवं शब्द-मनुमानेऽन्तर्भावयतो वैशेषिकांश्च व्यक्तुमाह—'तु'शब्देनेति । "आप्तवच-नं तु" इति तुशब्देनेत्यर्थः । व्यवच्छिनत्ति=पृथक् करोति, "आगमप्रमाणम्" इति शेषः । कथम् अनुमानाद् व्यवच्छेद इति जिज्ञासायां तत्प्रकारमाह—वाक्यार्थ इत्यादिना । हिशब्दोऽवधारणार्थकः । "इदं वाक्यं संसृष्टार्थ-ज्ञापकम्, आप्तवाक्यत्वात्, वाक्यान्तरवत्" इत्येवं परस्परपदार्थसंसर्गरूपो वाक्यार्थ एव प्रमेयः=अनुमानेन मेयः, स चासम्भवी, वाक्यत्वस्य लिङ्गत्वा-सम्भवादित्यर्थः । कथं लिङ्गत्वासम्भवस्तत्राह—नत्विति । यथा प्रमेयस्य वह्नेर्धर्मो धूमोऽस्ति न तथा तद्धर्मः=प्रमेयवाक्यार्थस्य धर्मो वाक्यं येन तस्य वाक्यार्थस्य लिङ्गं स्यादित्यर्थः । एतच्च "पदानामेव पदार्थस्मरणावान्तरव्यापा-राणां वाक्यार्थप्रमां प्रति करणतया प्रमाणत्वात् तेषां चापक्षधर्मतया लिङ्गत्वा-नुपपत्तेः" इत्यादिना तात्पर्यटीकायां, "कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते" इत्यादिना श्लोकवार्तिके च व्यक्तमिति तत एवाधिकमालोकनीयम् ॥ ॐ ॥

---

१ तेषामयमाशयः—'गामानय' इत्यादिवाक्यश्रवणसमनन्तरं तावदन्वयप्रतीतिर-नुभूयते । वाक्ये आकाङ्क्षादिमत्त्वप्रतिसन्धानं तदर्थप्रतिपत्त्यनुकूलतयाऽवधृतम् । तथाच आकाङ्क्षादिमत्पदकदम्बकत्वप्रतिसन्धानस्यावश्यकतया तस्य च स्मारितार्थसंसर्गविशिष्टि-पूर्वकत्वनियमेनानुमानादेव तत्फलसिद्धौ किमिति शब्दस्य प्रमाणान्तरत्वाभ्युपगमः ? तथाहि—"एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमदाप्तोक्तपदत्वात्, गामभ्याजेति पदकदम्बवत्" इति ज्ञानावच्छेदकतया संसर्गसिद्धिरनुमानादेव भवति; इति पदपक्षकानुमानेन शब्दो न प्रमाणान्तरम् इति ॥

नच वाक्यं वाक्यार्थं बोधयत् संबन्धग्रहणमपेक्षते, अभिनवक-

---

**अयमत्र सरलार्थः**—'देवदत्तो गच्छति' इत्यादिवाक्यस्यार्थो देवदत्त-गमनादिः प्रमेयो न तत्र किंचिल्लिङ्गमस्ति येनैतज् ज्ञानं लैङ्गिकत्वेनानुमानं स्यादिति भावः। ननु वाक्यमेव तदर्थज्ञाने लिङ्गमित्यत आह—**न त्विति**। तद्धर्मः=वाक्यार्थगमनादीनां धर्मः। येन=धर्मत्वेन वह्नेर्धूम इव वाक्यार्थ-गमनादीनामपि वाक्यं लिङ्गं स्यादित्यर्थः॥

ननु धर्मधर्मिणोरेव लिङ्गलिङ्गिभावो भवतीति नास्ति नियमः, मेघोन्नत्या-दिना वृष्ट्यादेरनुमेयत्वदर्शनात्, तस्मात् "ययोरेव परस्परम् अव्यभिचरित-सहचाररूपसंबन्धग्रहणं तयोरेव लिङ्गलिङ्गिभावः" इत्यास्थीयते। तथाच यथा वह्निधूमयोरव्यभिचरितसहचाररूपसंबन्धग्रहणाल्लिङ्गलिङ्गिभावस्तथा वा-क्यवाक्यार्थयोरपि तादृक्संबन्ध[1]ग्रहणाल्लिङ्गलिङ्गिभावः कथं न स्यादित्या-शङ्कामपाकरोति—**न च वाक्यमिति**। यथा पर्वते वह्निं बोधयन् धूमः पूर्वं महानसादौ वह्निना सह स्वसंबन्धग्रहणमपेक्षते, तथा वाक्यं स्वार्थं बोधयत् पूर्वकालिकसंबन्धग्रहणं न चापेक्षत इत्यर्थः। संबन्धनियमं विनैव वाक्यस्य स्वार्थबोधकत्वमित्यर्थे हेतुमुपन्यस्यति—**अभिनवेत्यादिना**। यस्य वाक्यस्य पूर्वं स्वार्थेन सह संबन्धो न गृहीतस्तथाविधस्य अभिनवस्य=नूतनोच्चरित-वाक्यस्य, अतएव अदृष्टपूर्वस्य=पूर्वं दृष्ट इति दृष्टपूर्वः, भूतपूर्ववत्समासः, तथा न भवतीति अदृष्टपूर्वस्तस्य=पूर्वमश्रुतस्येत्यर्थः। अननुभूतचरवाक्यार्थबोधक-त्वात्=पूर्वमननुभूतनूतनवाक्यार्थबोधकत्वदर्शनादि[2]त्यर्थः॥ ॐ॥

**अत्रेयं सरला सरणिः**—ननु तद्धर्मत्वस्यैव तल्लिङ्गप्रयोजकत्वे मेघोन्नत्या वृष्ट्यनुमाने व्यभिचारः स्यात्। तस्यास्तद्धर्मत्वाभावेन तल्लिङ्गत्वाभावात्। किन्तु व्याप्यत्वमेव लिङ्गत्वे तन्त्रम्। व्याप्यत्वं च स्वाभाविकसंबन्धवत्त्वमित्युक्त-मेव। एवं च वाक्यस्याप्यर्थेन नित्यसंबद्धत्वाद् व्याप्यत्वेन लिङ्गत्वं संभवत्येव। तस्मात् महानसादौ धूमस्य वह्निसंबन्धत्वावधारणात् तेन लिङ्गेन यथा वह्न्य-नुमानं सर्वलोकसिद्धम्, तथा वाक्यस्यापि अर्थसंबद्धत्वावधारणात् तेन लिङ्गेनार्थानुमानं सुकरमेव। तथाहि—प्रयोजकवृद्धप्रयुक्तं "गामानय" इति वाक्यं श्रुत्वैव प्रयोज्यवृद्धेन गवानयने कृते अव्युत्पन्नस्तदालोक्य "तद् वाक्यं

---

१ अव्यभिचरितसहचाररूपसंबन्धग्रहणात्। २ 'गौरस्ति' 'गामानय' इत्याद्याकाङ्क्षा-दिमच्छब्देभ्यः स्वस्वशक्त्या पदार्थानां गवादीनामुपस्थित्यनन्तरं गवादावस्तित्वाद्यन्वयाव-गाही विलक्षणो बोधो (शब्दबोधाख्यो) भवति, तत्र न शब्दः प्रमाणं, "गौरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षादिमत्पदस्मारितत्वात्, घटवत्" इत्यनुमानादेव शाब्दबोधसंभवात्, शब्दस्य शाब्दबोधजनकत्वायोगादिति वैशेषिकाः, तत्र सम्यक्, व्याप्ति-ज्ञानं विनापि शाब्दबोधस्यानुभवसिद्धत्वात्, किमुक्तम्? प्रसिद्धार्थककाव्यादौ शब्दश्रवणान-न्तरं व्याप्तिज्ञानकल्पनसंभवेऽप्यपूर्वार्थककाव्यादौ तत्कल्पनासंभवादिति त्वत्र परः सारः।

विविरचितस्य वाक्यस्याऽदृष्टपूर्वस्याऽननुभूतचरवाक्यार्थबोधकत्वादिति।

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु, यानि प्रमाणान्तराण्युपमानादीनि प्रतिवादिभिरभ्युपेयन्ते तान्युक्तलक्षणे-

गवानयनसंबन्धवत्'' इत्यवधारयति। अनन्तरं च कदाचिदन्येन तथा प्रयुक्ते "इदं गामानयेति वाक्यं गवानयनार्थकम्, तद्वाक्यस्य गवानयनसंबन्धवत्त्वात्, प्रयोजकवृद्धप्रयोग इव" इत्यनुमानप्रक्रियया वाक्यार्थावगमः स्यादेव। तस्माद् वाक्यं न स्वतः स्वार्थं बोधयेत्, किन्तु संबन्धग्रहसापेक्षमेवेति वैशेषिकाशंकां परिहरति—न चेति। तथा च वाक्यस्य स्वार्थबोधकत्वं न संबन्धग्रहणाधीनं व्यभिचारादिति भावः।

व्यभिचारमेव दर्शयति—अदृष्टपूर्वेति। तथाच तद्वाक्यं यं वाक्यार्थं बोधयति, सोऽदृष्टपूर्वः=गवानयनादिवत् कदाचिदपि प्राङ् न दृष्टः प्रत्यक्षेण। अननुभूतचरः=प्रमाणान्तरेणापि प्रागननुभूतः। अभिनवकविविरचितत्वेन तद्वाक्यस्य प्रागविद्यमानत्वात् तदर्थेन सह तत्संबन्धग्रहस्य प्रागसंभवादिति भावः।

"अमुमर्थं शृणोमि, शाब्दयामि—शब्दादमुमर्थं प्रत्येमि" इति विलक्षणानुभवबलाद् आकाङ्क्षायोग्यतादिसामग्रीवैलक्षण्याच्च नैवागमस्यानुमानेन गतार्थतेत्यन्यत्र विस्तरः॥ ☸ ॥ ३ ॥ इति सारबोधिन्यां शब्दनिरूपणम् ॥ ☸ ॥

## अथोपमानादिप्रमाणान्तरनिरसनम्।

इदानीं "सर्वप्रमाणसिद्धत्वात्" इति कारिकाव्याख्यावसरे "विशेषलक्षणानन्तरं चैतदुपपादयिष्यामः" इति प्रतिज्ञातमुपपादयितुमुपक्रमते—एवमित्यादिना। उपमानादीनीति। आदिपदात् अर्थापत्त्यनुपलब्धिसम्भवैतिह्यानां ग्रहणम्। कथमन्तर्भाव इति जिज्ञासायां तत्प्रकारं प्रतिपादयति—तथाहीति। यथान्तर्भावस्तथा प्रदर्शयामीत्यर्थः।

तत्र ये किल नैयायिकाः "प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्" ( न्या० १।१।६ ) इति सूत्रमनुसरन्तः "कीदृशो गवय इति नागरिकेण पृष्टो वनेचरः प्रसिद्धेन गवा साधर्म्यादप्रसिद्धं गवयं येन वाक्येन बोधयति 'यथा गौस्तथा गवय" इति, तद् वाक्यम् उपमानम्" इत्येवमुपमानं वर्णयन्ति, तान् प्रति

१ आप्तोपदेशसामर्थ्याच्छब्दादर्थसंप्रत्ययः ( न्या० २।१।५२ ) इति गौतमसूत्रे, अननुभूतचरे स्मरणायोगात्' इत्यादिना कुसुमाञ्जलिग्रन्थे चेत्यर्थः 'शब्दात् प्रत्येमि' इति विलक्षणप्रतीतेर्व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादुत्पत्तेः, तत्करणतया शब्दस्यातिरिक्तं प्रामाण्यं सिध्यतीति नैयायिकसिद्धान्तः। २ प्रसिद्धस्य=पूर्वं प्रमितस्य गवादेः साधर्म्यात्=सादृश्यज्ञानात् साध्यस्य=संज्ञासंज्ञिसंबन्धस्य साधनं=ज्ञानम् उपमानप्रमाणम्।

ष्वेव प्रमाणेष्वन्तर्भवन्ति। तथाहि—उपमानं तावद् यथा गौस्तथा गवय इति वाक्यं, तज्जनिता धीरागम एव।

योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः, सोऽप्यनुमानमेव।

---

तावदाह—उपमानं तावदिति। 'यथा[1] गौस्तथा गवय' इति यद् वाक्यं तज्जन्यं यद् वाक्यार्थज्ञानं तदागमप्रमाणमेवेत्यर्थः। सांख्यसिद्धान्ते वाक्यजन्यं ज्ञानमेवागमप्रमाणं न तु वाक्यमात्रम्, चित्तवृत्तेरेव तत्र प्रमाणत्वादिति ध्येयम्। एवं चागमान्तर्भावान्नोपमानं प्रमाणान्तरमिति भावः। तथा चाहुः प्रशस्तपादाचार्याः—"आप्तेनाप्रसिद्धगवयस्य[2] गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव" इति॥ ❀॥

ये च तार्किकयूथ्याः—"समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः"[3]॥ ❀॥

इति न्यायवार्तिकमनुसरन्तः "गवयशब्दार्थमजानन् कश्चिन्नागरिकः कंचिद् वनेचरं "कीदृशो गवयपदवाच्यः" इति पृच्छति। ततस्तेन "गोसदृशो गवयपदवाच्यः" इत्युत्तरितः स कदाचिद् वनं गतो गोसदृशं पिण्डं पश्यन् नूनमयमसौ गवयपदाभिधेयो यः पुराऽऽरण्यकेन "गोसदृशो गवयः" इत्युपदिष्ट इति प्रतिपद्यते, सा उपमितिस्तत्करणमुपमानम्" इत्येवमुपमानकृत्यमुपवर्णयन्ति तान् शिथिलीकर्तुमाह—योऽप्ययमिति। योऽपि "गवयशब्दो गोसदृशस्य वाचकः" इत्ययं प्रत्ययः, सोऽपि "गवयपदं गोसदृशपिण्डवाचकं, लक्षणागुणवृत्त्योरसद्भावे सति वृद्धैस्तत्र प्रयुज्यमानत्वात्, गोत्वे प्रयुज्यमानगोपदवत्" इत्यनुमानप्रयोगसाध्यत्वादनुमानमेवेत्यर्थः।

तथाच संज्ञासंज्ञिसंबन्धज्ञानरूपोपमानफलस्यानुमानेनैव सिद्धत्वान्न तदर्थं पृथगुपमानं मानान्तरमुपेयमिति भावः।

उक्तानुमानप्रयोगसामग्रीमाह—यो हि शब्द इति। एतेन व्याप्तिस्वरूपोपदर्शनमुखेन "असति वृत्त्यन्तरे[4] (लक्षणादौ) वृद्धैस्तत्र प्रयुज्यमानत्वात्" इति हेतुस्वरूपं दर्शितं भवति। एवं हेतुमुपदर्श्योदाहरणमाह—यथा गोशब्दो गोत्वस्येति। उपनयमाह—प्रयुज्यते चैष गोशब्दो गोसदृश इति। निगमनमाह—इति तस्यैव वाचक इति। 'इति' शब्दः तस्मादित्यर्थकः। उपसंहरति—इति तज्ज्ञानमिति। इति=इत्येवं तज्ज्ञानं=संज्ञासंज्ञिसंब-

---

१ 'वाक्यम्' इत्यतः प्राक् 'यत्' इति पूरणीयम्। इति यद् वाक्यं तज्जनिता धीरित्यन्वयः। धीशब्देन गोसदृशस्य गवयपदवाच्यत्वप्रकारकं वृत्तिरूपं ज्ञानमुच्यते। आगमः=आप्तश्रुतिः। तदेतद् व्याचष्टे—यथेति। २ अज्ञातगवयस्य नागरिकस्य पुंस इत्यर्थः। ३ संज्ञासंज्ञिसंबन्धज्ञानमुपमानफलमिति हि न्यायवार्तिकार्थः। ४ गङ्गायां घोषः, सिंहो माणवक इत्यादौ यथायथं लक्षणया गुणवृत्त्या चावाच्येऽपि तीरादौ प्रयुज्यमानैर्गङ्गादिपदैर्व्यभिचारवारणाय—असति वृत्त्यन्तरे' इति हेतुविशेषणम्।

यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैष गवयशब्दो गोसदृशे, इति तस्यैव वाचक, इति तज्ज्ञानमनुमानमेव।

न्धज्ञानम् अनुमानम्=अनुमानफलम् अनुमितिरेवेत्यर्थः। तथाच "गवयशब्दो गोसदृशस्य पशोर्वाचकः, वृद्धैर्वनचरादिभिर्गोसदृशे प्रयुक्तत्वात्, यो यदर्थे प्रयुज्यते—सोऽसति वृत्त्यन्तरे तद्वाचकः, गोशब्दस्य गोवाचकत्ववत्, तस्माद् गवयशब्दो गोसदृशवाचकः" इति पञ्चावयवन्यायः प्रदर्शितो भवति। एतेन

संबन्धस्य[1] परिच्छेदः संज्ञायाः संज्ञिना सह।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः॥ (कुसु० ३।१०)

इति न्यायकुसुमाञ्जलावुदयनाचार्योक्तिरपि निराकृता वेदितव्या, अनुमानसाध्यत्वसम्भवेन 'प्रत्यक्षादेरसाध्यत्वात्' इत्येवं वक्तुमशक्यत्वात्॥ ॐ॥

पूर्वमीमांसकैरुपमानस्य प्रकारान्तरत्वमङ्गीक्रियते। तथाच कर्ममीमांसाभाष्यकारा आहुः—"उपमानमपि सादृश्यमसन्निकृष्टार्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य" इति। "यत् सादृश्यं दृश्यमानम् असन्निकृष्टार्थे बुद्धिम् उत्पादयति तत् उपमानम्=प्रमेयबुद्धिजनकमेव सादृश्यम् इन्द्रियप्रत्यक्षमुपमानम्, यथा—गवयदर्शनम्=सादृश्यविशिष्टगवयदर्शनं गोस्मरणस्य जनकम्" इत्येतद्भाष्यार्थं न्यायरत्नाकरकारः। तथाच "नगरानुभूतचरगोपिण्डस्य नरस्यारण्यं प्राप्तस्य तत्र साक्षाद् गवयमीक्षमाणस्य प्रत्यक्षदृष्टगवय[2]सादृश्यविशिष्टासन्निकृष्टगोपिण्डग्रहणरूपं यदनेन सदृशी मदीया गौरिति ज्ञानं तदुपमानम्" इति संसिध्यति॥ ॐ॥

इयमत्र सरला सरणिः—सादृश्यम्=पूर्वदृष्टार्थसादृश्यज्ञानम् उपमानम्। तच्च असन्निकृष्टे=पूर्वदृष्टे स्मर्यमाणे अर्थे बुद्धिम्=सादृश्यज्ञानम् उत्पादयतीति शाबरभाष्यार्थः। तथा च एकत्र सादृश्यज्ञानात् अपरत्र असन्निकृष्टे सादृश्यज्ञानम् उपमितिः। तत्र प्रथमसादृश्यज्ञानं करणं द्वितीयसादृश्यज्ञानं फलम्। ततश्च प्रथमसादृश्यज्ञानमेव व्यापारवत्करणत्वेन उपमानाख्यं प्रमाणम्। व्यापारस्तु सुसदृशवस्तुनः स्मरणम्। तथाहि—नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिः—"अयं पिण्डो गोसदृश इति"। तदनन्तरं च भवति निश्चयः—"अनेन सदृशी पूर्वदृष्टा गौरिति"।

तदेतस्मिन्मते द्वितीयसादृश्यज्ञानस्य असन्निकृष्टविषयतया प्रत्यक्षत्वासंभवात् अनुमितिशब्दत्वासंभवाच्च तत्करणस्य प्रथमसादृश्यज्ञानस्य प्रमाणान्तरत्वमवश्याभ्युपेयमिति हि मीमांसकाकूतम्॥ ॐ॥

---

१ संज्ञायाः=गवयादिसंज्ञायाः, संज्ञिना=गवयत्वादिविशिष्टेन सह संबन्धस्य=शक्तेः परिच्छेदः=निश्चयः उपमानस्य=मानान्तरस्य फलम्=उपमितिः, प्रत्यक्षादेरसाध्यत्वात्=इन्द्रियलिङ्गशब्दानामसामर्थ्यात्" इत्येतदर्थं श्रीहरिदासः। २ प्रत्यक्षेण दृष्टो यो गवयस्तत्सादृश्यविशिष्टतयाऽसन्निकृष्टस्य नगरगतगोपिण्डस्य यद्ग्रहणं तदुपमानमित्यर्थः।

यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं, तत्प्रत्यक्षमेव । अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम् ।

न ह्यन्यद् गवि सादृश्यमन्यच्च गवये । भूयोऽवयवसामान्य-

---

तदिदं मतं निराकुर्वाणो ग्रन्थकारो वदति—यत्तु गवयस्य—इत्यादि। गवयनिष्ठं गोसादृश्यज्ञानमुपमानम्, गोनिष्ठं च गवयसादृश्यज्ञानमुपमानफल-मिति हि मीमांसकाभिमतम् । तत्र यद् गवयनिष्ठं गोसादृश्यज्ञानं तत्प्रत्यक्ष-ज्ञानमेव न प्रमाणान्तरमित्यर्थः । द्वितीयसादृश्यज्ञानस्यापि प्रत्यक्षप्रमात्वमेव न प्रमान्तरत्वमिति यावत् । तत्र हेतुगर्भितं विशेषणमाह—चक्षुः सन्नि-कृष्टस्येति । यथा चक्षुःसन्निकृष्टायां गवि तन्निष्ठं गोत्वमध्यक्षीभवति तथा चक्षुः सन्निकृष्टे गवये तन्निष्ठं सादृश्यमपि प्रत्यक्षमेवेत्यर्थः । ननु प्रतियोगिनि गव्यदृष्टे कथं गवयगतं सादृश्यं प्रत्यक्षमिति चेदत्र भट्टपादाः—"सामान्यवच्च सादृश्यमेकैकत्र समाप्यते । प्रतियोगिन्यदृष्टेऽपि यस्मात् तदुपलभ्यते ॥" इति ।

सादृश्यं हि सामान्यवत् प्रत्येकव्यक्तिसमाप्तं न संयोगवदुभयत्र व्यासज्य वर्तते, तेन प्रतियोगिनो गोपिण्डस्यादर्शनेऽपि भवति गवयव्यक्तौ गोसदृशोऽय-मिति प्रत्यक्षप्रतीतिरिति भावः ॥ ❀ ॥

ननु चक्षुःसन्निकृष्टं गवयनिष्ठं गोप्रतियोगिकसादृश्यज्ञानं प्रत्यक्षमस्तु, तथापि कथमसन्निकृष्टस्यापि गोनिष्ठगवयसादृश्यस्य ज्ञानं प्रत्यक्षं भवेदित्या-शङ्कायां तस्यापि प्रत्यक्षत्वं साधयति—अत[2] एवेति । वक्ष्यमाणहेतोरेव—गवयनिष्ठगोसादृश्यस्य प्रत्यक्षत्वादेवेत्यर्थः । यथा गवयगतं सादृश्यमध्यक्षं तथा स्मृत्यारूढायां गवि गतं सादृश्यमपि प्रत्यक्षमेवेत्यर्थः । वक्ष्यमाणं हेतु-मेवाह—न[3]हीति । हि=यतो गवि अन्यादृशं सादृश्यं गवये चान्यादृशं सादृश्य-

---

१ "यथा गौर्गवयस्तथा" इत्यतिदेशवाक्यं श्रुत्वा वनं गतानां "अयं गोसदृशो गवयः" इति यज् ज्ञानम्, तत्रातिदेशवाक्यावगतं यद् गृह्यते, तद् तावन्नोपमानप्रमेयं, किन्त्वनव-गतं गवयस्वरूपे गोसादृश्यमिति जरन्नैयायिकमतमपाकरोति—यत्तु गवयस्येति । एवं प्रत्यक्षे गवये उपमानस्य प्रमेयाभावेन नैयायिकमतं दूषयित्वा "अयं गवयपिण्डो गोस-दृशः" इति ज्ञानानन्तरम् "अनेन सदृशी मदीया गौः" इति गोनिष्ठगवयसादृश्यनिश्चय उपमितिः । इयं च न प्रत्यक्षेण, गोपिण्डस्यासन्निकर्षत्वात् । नाप्यनुमानेन, गवयनिष्ठ-गोसादृश्यस्यातल्लिङ्गत्वात् । इत्यर्थपरम्—"उपमानमपि सादृश्यम्–असन्निकृष्टेऽर्थे बुद्धि-मुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य" इति भाष्यं ( मी० १।१।५ ) दूषयति—अत एवेति । २ यतश्चक्षुःसंनिकृष्टे गवये गोसादृश्यज्ञानं प्रत्यक्षम् अत इत्यर्थः । ३ ननु "गोसदृशो गवय" इत्यत्राऽवयववतः सादृश्यम् । तच्च गोऽवयवसजातीयावयवसंबन्धित्वरूपं गवये वक्तव्यम् । गवि चैतदवयवसजातीयावयवसंबन्धित्वम् । तच्च गवयसादृश्याद्भिन्नम् । तथा चैतस्य प्रत्यक्षत्वेऽपि गोसादृश्यस्य प्रत्यक्षत्वं न संभवतीत्याशंक्याह—न ह्यन्यदिति ।

योगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते। सामान्ययोगश्चैकः। स चेद् गवये प्रत्यक्षो गव्यपि तथा, इति

मिति नास्ति, अत उभयोरेकत्वेन तदपि प्रत्यक्षमेवेत्यर्थः। गवि गवये च सादृश्यमेकमेवेति सरलार्थः॥ ॐ॥

कथमुभयोरेकत्वमित्याकाङ्क्षायां तदुभयनिष्ठसादृश्यस्याभिन्नत्वप्रतिपादनाय सादृश्यलक्षणं ब्रूते—भूयं इति। गवयसकाशात् जात्यन्तरे=गोपदार्थे वर्तमानो यो भूयोऽवयवसामान्ययोगः=भूयसामवयवानां यानि सामान्यानि=खुरत्वलाङ्गूलत्वादीनि तेषां यो योगः=संबन्धः, तदेव जात्यन्तरे=गवये सादृश्यमुच्यते इत्यर्थः। भूयसाम्=बहूनाम् अवयवानां यत् सामान्यम्=ऐक्यम्; तस्य योगः=संबन्धः। तथाच एकस्मिन् जातिविशेषे य एकावयवसंबन्धः, अन्यस्मिन् जातिविशेषेऽपि स एव एकावयवसंबन्ध इत्यर्थः, सामान्ययोगः=अवयवैक्यसंबन्धः, इति वा व्याख्येयम्। एक इति। गोत्वादिवदेक इत्यर्थः। एतेन उभयनिष्ठसादृश्यमेकमेवेति दर्शितम्। एवं च एकत्र[२] तस्मिन् प्रत्यक्षीकृते अपरत्रापि तत् प्रत्यक्षीकृतं भवतीत्याह—स चेदिति। सः=भूयोऽ-

१ अत्रेदं व्याख्यान्तरमप्यूह्यम्—"भूयांसि यानि अवयवानां सामान्यानि=असाधारणधर्माः, तेषां योगः=संबन्धः जात्यन्तरवर्ती=प्रधानावयविरूपवस्त्वन्तरवर्ती जात्यन्तरे=पूर्वप्रधानभिन्नप्रधानावयविनि वस्त्वन्तरे सादृश्यमुच्यते। संप्रदायविद्भिरिति शेषः। इदं च प्रकृताभिप्रायेण। अन्यथा "सिंहसदृशो देवदत्तः" "श्येनसदृशो यागः" इत्यादावव्याप्तिः। तथा च "वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा समवेतैः सामान्यैर्येन प्रकारेण स्वस्य योगस्तेनैव प्रकारेण स्वभिन्ने तैर्योगः सादृश्यम्। तच्चैकमेवोभयत्रेत्यर्थः। न च "यानि धर्माख्यानि अवयवादिसामान्यानि तद्भूयस्त्वं वा सादृश्यम्" इत्येतावद् वक्तव्यम्, किं योगग्रहणेनेति वाच्यम्। सामान्यादेरवयवादिनिष्ठत्वे गवये सादृश्यप्रत्यायानुपपत्तेः। ननु "तद्भिन्ने तद्गतभूयोधर्मवत्त्वं" सादृश्यं वाच्यम्, न च धर्मस्य निष्प्रतियोगिकत्वात्सप्रतियोगिकसादृश्यरूपत्वं न संभवतीति वाच्यम्, तद्भिन्नवृत्तित्वरूपविशेषणस्य सप्रतियोगिकत्वेन तद्विशिष्टस्यापि सप्रतियोगिकत्वात्, इति चेत्। न, गवये गोत्वादिधर्माभावेनाव्याप्त्यापत्तेः। अत एव—"सामान्यान्येव भूयांसि गुणावयवकर्मणाम्। भिन्नप्रधानसामान्यं व्यक्तं सादृश्यमुच्यते॥" इत्यभियुक्तोक्तमपि संगच्छते। इदं तु—"यद्यपि गुणावयवकर्मणां भूयांसि सामान्यानि सन्ति; तथापि भिन्नप्रधानयोरवयविनोर्यद् व्यक्तं=सदृशबुद्धिजनकं तेषां सामान्यानां मध्ये सामान्यं, तदेव सादृश्यमुच्यते, न तु सदृशबुद्ध्यजनकम्" इत्येव व्याख्येयम्। न चैवमपि जन्मतः सादृश्यं—"अग्निर्वै ब्राह्मणः" इत्यत्र, द्रव्यतः—"समानालङ्कारधारिणोर्गवादिधनवतोः" इत्यादिसादृश्येऽव्याप्तिरिति वाच्यम्। गुणादेस्तदुपलक्षकत्वात्। न च मनुष्यच्चित्रादौ सादृश्यलक्षणाव्याप्तिः, मनुष्यावयवगतहस्तत्वादीनां चित्रावयवेऽसत्त्वादिति वाच्यम्। तत्रापि संस्थानपरिमाणवर्णसामान्यानां सत्त्वात्॥ २ ननु सादृश्यसामान्यसंबन्धरूपस्यैकत्वेऽपि गोसंनिकर्षाभावेन अगृहीते गवि गवयप्रतियोगिकसादृश्यप्रकारकगोविशेष्यकज्ञानासंभव

नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणान्तरमुपमानं भवेद्, इति न प्रमाणान्तरमुपमानम् ।

एवमर्थापत्तिरपि न प्रमाणान्तरम् ।

---

वयवसामान्ययोगः, तथा=प्रत्यक्षः । अयमर्थः—गोपदार्थे वर्तमानो भूयोऽवयवसामान्ययोगो गवये सादृश्यमुच्यते स च भूयोऽवयवसामान्ययोगो गोत्वादिवदेकः स चेत् गवये साक्षात्कृतः तर्हि गव्यपि साक्षात्कृत एवेति । तथा चोक्तं कुमारिलस्वामिपादैः—"सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् । भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥" इति । अस्यायमर्थः—गवयात् सकाशात् जात्यन्तरस्य=गोपदार्थस्य यो गवयगतभूयोऽवयवसामान्यैर्योगस्तत्सादृश्यम् । अतः सादृश्यस्य वस्तुत्वम् अपबाधितुम्=निराकर्तुम् अशक्यम्=न पार्यम् सादृश्यं नास्तीत्येवं निराकर्तुमशक्यमिति । भट्टपादास्तावत् द्रव्यादीन् चतुर एव पदार्थान् स्वीकुर्वन्तीति तन्मते सादृश्यं नातिरिक्तः पदार्थः किन्तु सामान्यपदार्थस्यैव रूपान्तरं तदिति गोत्वादिवदाश्रयग्रहणेनैव तस्य ग्रहणं भवतीति पूर्वं गृहीतमेव गवि सादृश्यं पुनः परामृश्यते । एतावांस्तु तत्र विशेषो यत्—पूर्वम् "अनेन सदृशी मदीया गौः" इत्येवं प्रतियोगिवैशिष्ट्यव्यतिरेकेण गोत्ववन्निर्विकल्परूपेण सादृश्यं गृहीतं भवति, ततो गवयरूपप्रतियोगिदर्शने तु सविकल्पकरूपेण तत् प्रत्यभिज्ञायते इति । एवं च तदितरत् नान्यत् किमप्यवशिष्टं भवति यदर्थम् उपमानं प्रमाणान्तरमभ्युपेयं स्यादित्याशयवानाह—इति नोपमानस्येति । इति=इत्येवं प्रत्यक्षसिद्धे सादृश्यज्ञाने, प्रमेयान्तरम्=प्रत्यक्षादिप्रमाणत्रयान्यतमप्रमाणप्रमेयातिरिक्तप्रमेयम् ॥

सामान्यपदार्थादतिरिक्तं सादृश्यमिति प्रभाकरनये तु गोगतसादृश्यज्ञानं स्मरणरूपं बोद्धव्यमिति तु हृदयम् ॥ ❀ ॥

तदेवम् उपमानस्य यथायथं प्रत्यक्षादिष्वन्तर्भावेण प्रमाणान्तरत्वं निराकृत्य सम्प्रत्यर्थापत्तेरपि प्रमाणान्तरत्वं निराकर्तुमुपक्रमते—एवमिति । तत्र स्वाभि-

---

इत्याशंक्याह—गव्यपीति । तथाच गोसन्निकर्षाभावेऽपि गोः स्मर्यमाणे गवि विशिष्टज्ञानं संभवतीत्यर्थः । यद्वा—सादृश्यस्यैकत्वं, प्रत्यक्षेण गवये गोसादृश्ये गृह्यमाणे गव्यपि गवयसादृश्यं समानवित्तिवेद्यतया गृहीतमेव, अन्यथैकत्र सादृश्यज्ञाने सत्यपि अपरत्र संशयापत्तेः । "मदीया गौरेतद्गवयसदृशी, एतन्निष्ठसादृश्यप्रतियोगित्वात्, यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा दर्पणस्थमुखावभासो मुखसदृशः" इत्यनुमानेनापि तत्संभवः । इदं न साक्षात्कृतं, नानुमितं, किन्तूपमितम् इत्यनुभवस्तु नास्त्येवेति तु ध्येयम् । (इति तत्त्वविभाकरे) ॥ ❀ ॥

१ सादृश्यस्य सामान्यपदार्थेऽन्तर्भावाङ्गीकारेण पदार्थान्तरत्वाभावेऽपि तस्य वस्तुत्वमभ्युपेयमिति भावः ।

**तथाहि–जीवतश्चैत्रस्य गृहाभावदर्शनेन वहिर्भावस्याऽदृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानाम् । साऽप्यनुमानमेव ।**

---

मतप्रमाणत्रितयान्तर्गतत्वप्रदर्शनाय पराभिमताया अर्थापत्तेः स्वरूपं शबरस्वामिप्रदर्शितं तावदाह—**जीवत** इत्यादिना । जीवतः=जीवित्वेन निश्चितस्य । गृहाभावबहिर्भावौ=गृहासत्त्वबहिःसत्त्वे । वृद्धानाम्=मीमांसकानाम् । **अयमर्थः**—'शतवर्षजीवी चैत्रः' इति दैवज्ञवाक्यात् संप्रतिपन्नजीवनस्य चैत्रस्य गृहासत्त्वदर्शनेनादृष्टस्य वहिर्भावस्य कल्पनारूपा याऽर्थापत्तिर्मीमांसाभाष्यकाराणामभिमता साप्यनुमानमेव न प्रमाणान्तरमिति ॥ ॐ ॥

**अयमाशयः**—"उपपाद्यज्ञानप्रभवम् उपपादकज्ञानम् अर्थापत्तिः । तत्र योऽर्थोऽन्येन केनचित् कल्पनीयेन विना नोपपद्यते सोऽर्थ उपपाद्यः, यस्य च कल्पनीयार्थस्याभावे सत्युपपाद्यं नोपपद्यते स कल्पनीयोऽर्थ उपपादक इत्युच्यते । यथा गृहासत्त्वरूपोऽर्थो बहिःसत्त्वरूपेण कल्पनीयार्थेन विना नोपपद्यत इति गृहासत्त्वरूपोऽर्थ उपपाद्य इत्युच्यते, एवं बहिस्सत्त्वरूपस्य कल्पनीयार्थस्याभावे सति गृहासत्त्वरूपम् उपपाद्यं नोपपद्यते इति वहिस्सत्त्वरूपोऽर्थ उपपादक इत्युच्यते । तत्र उपपाद्यज्ञानं करणतया अर्थापत्तिप्रमाणम्, उपपादकज्ञानं च फलतया अर्थापत्तिप्रमा । **एतदुक्तं भवति**—अर्थस्य=वहिस्सत्त्वस्य आपत्तिः=कल्पना यस्मादिति समासेन 'अर्थापत्ति' शब्द उपपाद्यज्ञानरूपकरणपरत्वेन प्रमाणवाची, अर्थस्यापत्तिरिति समासेन च उपपादकज्ञानरूपार्थापत्तिप्रमितिपर इति ॥

सा चार्थापत्तिर्द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । तद् यथाहुः शावरभाष्यकारः—"अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना" इति । तत्र दृष्टार्थापत्तेर्लक्षणं यथा श्लोकवार्तिके—

"प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥" इति ।

श्रुतार्थापत्तिरपि तत्रैव लक्षिता यथा—

"पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥" इति ॥ ॐ ॥

**अयमत्र ऋजुः पन्थाः**—प्रत्यक्षशब्दो यथा प्रमां प्रमाणं चेत्युभयं बोधयति, अर्थापत्तिशब्दोऽपि तथा प्रमाप्रमाणयोरुभयोरेव प्रत्यायकः । उपपादककल्पनाहेतुभूतोपपाद्यज्ञानम् अर्थापत्तिप्रमाणम् । उपपादकज्ञानम् अर्थापत्तिप्रमा । उपपादक—संपादकशब्दौ, उपपाद्य—संपाद्यशब्दौ च परस्परं पर्यायाः । एकार्थबोधकाः शब्दाः परस्परं पर्याया इत्युच्यन्ते । येन विना यन्नोपपद्यते तत् तस्योपपाद्यम् । यथा रात्रिभोजनं विना दिवाऽभुञ्जाने पुरुषे स्थूलता नोपपद्यत इति रात्रिभोजनस्य स्थूलता उपपाद्या । यस्य अभावेन यस्याभावः संपद्यते, तत् तस्योपपादकम् । यथा रात्रिभोजना-

भावेन दिवाऽभुञ्जाने स्थूलताया अभावः सम्पद्यते इति रात्रिभोजनं स्थूलताया उपपादकं भवति । नन्वेवंरीत्या व्यापकस्य उपपादकता व्याप्यस्य चोपपाद्यता सिद्धा भवति, उपपादकज्ञानहेतुरुपपाद्यज्ञानं चार्थापत्तिरित्यायाति, ततश्च "व्यापकज्ञानहेतुर्व्याप्यज्ञानम् अर्थापत्तिप्रमाणम्" इति स्वीकारे नेदमनुमानाद् भिद्यते, इति चेत् । अत्राहुः—स्थूलता रात्रिभोजनस्य व्याप्यम्, स्थूलतावांश्च देवदत्तः' इति ज्ञानद्वयानन्तरं यत्र रात्रिभोजनस्य ज्ञानं भवति तत्रानुमितिज्ञानं भवति, दिवाऽभुञ्जाने पुरुषे च रात्रिभोजनमन्तरा स्थूलता ऽनुपपन्नेति ज्ञानानन्तरं रात्रिभोजनस्य ज्ञानं भवतीति अर्थापत्तिप्रमा तत् । अत एव प्रथमे कल्पे रात्रिभोजनज्ञानोत्तरं "स्थौल्येन रात्रिभोजनमनुमिनोमि" इत्याकारकोऽनुव्यवसायो भवति, द्वितीये पक्षे तु रात्रिभोजनज्ञानानन्तरं "स्थूलतानुपपत्त्या रात्रिभोजनं कल्पयामि" इत्यनुव्यवसायो जायते । तदेवम् उपपाद्यस्य अनुपपत्तिज्ञानेन या उपपादकस्य कल्पना सा अर्थापत्तिप्रमा, उपपादककल्पनाहेतुरुपपाद्यानुपपत्तिज्ञानं च अर्थापत्तिप्रमाणमिति संसिद्धम् । अर्थः=उपपादकवस्तु तस्य आपत्तिः=कल्पना इति षष्ठीतत्पुरुषः । अर्थस्य आपत्तिर्यस्मात् इति बहुव्रीहिसमासे तु उपपाद्यानुपपत्तिज्ञानरूपं प्रमाणम् अर्थापत्तिशब्दार्थः । सा चार्थापत्तिर्द्विविधा—एका दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चापरा । यत्र दृष्टस्य उपपाद्यस्य अनुपपत्तिज्ञानेन उपपादकस्य कल्पना भवति, सा दृष्टार्थापत्तिः । यथा दिवाऽभुञ्जानस्य स्थौल्ये रात्रिभोजनज्ञानं दृष्टार्थापत्तिः, उपपाद्यस्य स्थौल्यस्य दृष्टचरत्वात् । यत्र च श्रुतस्य उपपाद्यस्य अनुपपत्तिज्ञानेन उपपादकस्य कल्पना जायते, सा श्रुतार्थापत्तिः । यथा—"गृहेऽसन् देवदत्तो जीवति" इति वाक्यं श्रुत्वा गृहतो बाह्यदेशे देवदत्तस्य सत्तां विना गृहेऽसतो देवदत्तस्य जीवनं नोपपद्यते इति गृहेऽसतो देवदत्तस्य जीवनानुपपत्त्या गृहात् बाह्यसत्ता कल्प्यते । तत्र गृहेऽसतो देवदत्तस्य जीवनं दृष्टं नास्ति किन्तु श्रुतं तदिति श्रुतार्थापत्तिरियम् । श्रुतस्य अर्थस्य अनुपपत्त्या या उपपादकस्य कल्पना सा श्रुतार्थापत्तिप्रमा, तस्या हेतुः श्रुतार्थानुपपत्तिज्ञानम् श्रुतार्थापत्तिप्रमाणम् । अत्र गृहेऽसतो देवदत्तस्य जीवनम् उपपाद्यम्, गृहाद् बाह्यसत्ता चोपपादिका, इति ॥ ९९ ॥

अयमत्र निष्कर्षः—"अर्थस्य=रात्रिभोजित्वरूपार्थस्य-शब्दादनुक्तस्यापि—आपत्तिः=कल्पना" इति विग्रहेण प्रमापरत्वमर्थापत्तिपदस्य । अनुमितिभिन्न-

१ रात्रिभोजनस्य स्थूलता उपपाद्या, रात्रिभोजनं स्थूलताया उपपादकमिति सारम् । २ यद्यपि पूर्वत्र श्लोकवार्तिके श्रुतार्थापत्तेरेवेदमुदाहरणमिति व्यक्तं तथापि वेदान्तपरिभाषादिरीतिमनुरुध्यैवमुक्तम्, प्रकरणानुरोधेनैकमेवोदाहरणं द्वयोरप्यर्थापत्त्योरुदाहरणं भवितुमर्हतीत्यविरोधात् । ३ अयमत्र संक्षेपः—"अर्थस्यापत्तिः=कल्पना यस्मात्, अर्थस्यापत्तिरर्थापत्तिः" इत्येवमर्थापत्तिशब्द उभयत्र प्रयुज्यते । तथाच उपपाद्यज्ञानजन्योपपादकज्ञानमर्थापत्तिः, तत्करणमर्थापत्ति-प्रमाणं, तच्चोपपाद्यज्ञानम् । तत्र यस्याभावे यस्या-

प्रमितिरिति यावत्। "अर्थस्य=रात्रिभोजनादेरापत्तिः=कल्पना यस्याः" इति विग्रहेण च पीनत्वाद्यनुपपत्तिज्ञानात्मककरणपरत्वम्। एवं च उपपाद्यज्ञानेन उपपादककल्पनम्। तत्रोपपाद्यज्ञानं करणम्। उपपादकज्ञानं फलम्। येन विना यत् अनुपपन्नं तत् तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्। पीनत्वमुपपाद्यम्, रात्रिभोजनमुपपादकम्। इत्थं च रात्रिभोजनादिविषयकप्रमितिरूपकल्पनात्मके फले, तत्करणे च पीनत्वाद्यनुपपत्तिज्ञानरूपे अर्थापत्तिशब्दो वर्तते"। (चि०) 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र "यद्विना यदनुपपन्नं तत् तदुपपादकम्" इति रात्रिभोजनमुपपादकम्, पीनत्वमुपपाद्यम्। उपपादकज्ञानं फलम्, उपपाद्यज्ञानं करणम्। फलकरणयोरर्थापत्तिशब्दो वर्तते। फले—"अर्थस्यापत्तिः कल्पना" इति व्युत्पत्तिः, करणे तु—"अर्थस्यापत्तिः कल्पना यस्याः" इति व्युत्पत्तिर्द्रष्टव्येति सारम्। दिवाऽभुञ्जानत्वे सति पीनत्वं रात्रिभोजनमन्तरेण नोपपद्यते। अतः पीनत्वान्यथाऽनुपपत्तिप्रसूताऽर्थापत्तिरेव रात्रिभोजने प्रमाणं प्रत्यक्षादिभ्यो भिन्नम्, रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात्। एवं यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतम्, जीविनो गृहासत्त्वं च प्रत्यक्षादवगतम्, तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यत इति हि मीमांसकानामाशयः[1] ॥ ॐ ॥

प्रकृतमनुसरामः—

ननु पूर्वोक्तश्लोकवार्तिकात् 'दृष्ट'शब्दस्य प्रमाणषट्कविज्ञातार्थपरत्वे सति शब्दप्रमाणावगतश्रुतस्यापि दृष्टान्तर्भावसंभवात् व्यर्थं दृष्टात् पृथक् श्रुतोपादानमिति चेत्। अत्राहुः—'दृष्ट'शब्दो यद्यपि प्रत्यक्षाद्यवगतयावत्प्रमितमात्रपरस्तथापि गोबलीवर्दन्यायेन दृष्टाद् भेदेन श्रुतोपादानात् आगमप्रमाणावगतश्रुतातिरिक्तप्रमाणपञ्चकप्रमितपरत्वं तस्य बोद्धव्यमिति। तथाच प्रमाणपञ्चकपूर्विका दृष्टार्थापत्तिः पञ्चविधा[2], आगम(शब्द)प्रमाणपूर्विका च श्रुतार्थापत्तिरेकविधेत्येवं षड्विधाऽर्थापत्तिरिति संसिध्यति। तत्रानुपलब्धिप्रमाणपूर्विका "जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" इत्येवंरूपा या दृष्टार्थापत्तिः शबरस्वामिनोदाहृता साऽनुमानमेवेति मूलाशयः। एतदुक्तं

---

नुपपत्तिस्तत् तत्रोपपादकं, येन विना यदनुपपन्नं तदुपपाद्यम्। जीवतश्चैत्रस्य गृहाभाव उपपाद्यः, बहिःसत्त्वं विनाऽनुपपाद्यमानत्वात्। तज्ज्ञानेनाऽदृष्टस्य सत्त्वस्योपपादकस्य कल्पनमर्थापत्तिः।

१ उपपाद्यज्ञानं प्रमाणम्, उपपादकज्ञानं प्रमेति सारम्। २ "प्रत्यक्षावगता दाहक्रिया दहनशक्तिमन्तरानुपपन्ना सती वह्नौ दहनशक्तिं कल्पयति, अनुमानावगतं चादित्यगमनं गमनशक्तियोग्यतां विनाऽनुपपन्नं सद् आदित्ये गमनशक्तियोग्यतां कल्पयति" एवमादीनि प्रत्यक्षादिपूर्विकाणामर्थापत्तीनामुदाहरणानि श्लोकवार्तिके दर्शितानीति तत्रैव कृणेद्दत्यालोचनीयानि।

**यदा खलु सन्नेकत्र नास्ति तदाऽन्यत्रास्ति, यदाऽव्यापक एकत्रास्ति तदाऽन्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः।**

भवति—ग्रामाद् बहिरेव देवदत्तेन कस्माच्चिदाप्तपुरुषात् "जीवन्नस्ति क्वचिच्चैत्रः" इति वाक्यं श्रुतं, देशविशेषश्च तस्य नावधारितः, आप्तवाक्यं च कदाचिद् मिथ्या भवितुं नार्हतीति अनिर्धारितदेशविशेषनिष्ठतया तत्सत्त्वं तेनावगम्यते, पुनश्च ग्रामं प्रविश्य गृहं चागत्य यदा गृहाभ्यन्तरे तमन्विष्यन् नावलोकयति स, किन्तु जीवतोऽपि तस्य तत्राभावमेव विपश्यति, तदा बहिरवस्थानमन्तरेणानुपपद्यमानगृहाभावज्ञानात् तदुपपादकबहिरवस्थानज्ञानं तस्य जायते तदेवं यदर्थापत्तिफलत्वेनाभिमतं बहिस्सत्त्वज्ञानं तदनुमानफलमेव न ततोऽतिरिच्यत इति।

अनुमानप्रयोगश्च "चैत्रो बहिरस्ति जीवनवत्त्वे सति गृहासत्त्वात्, अहमिव" इत्याकारोऽवसेयः। एतस्मिन्ननुमाने "यदा जीवतो गृहासत्त्वं तदा बहिस्सत्त्वम्" इत्यन्वयव्याप्तिं, "यदा तु बहिस्सत्त्वासत्त्वं तदा जीवतो गृहसत्त्वम्" इति व्यतिरेकव्याप्तिं च दर्शयितुं दृष्टान्ते व्याप्तिग्रहप्रकारमाचष्टे—**यदा खलु सन्नेकत्रेति**। सन्=विद्यमानः—जीवन् मच्छरीरो यदा एकत्र=गृहे नास्ति तदा अन्यत्र=बहिरस्तीत्यर्थः। एतेन "यदाहं नेह तदान्यत्र" इत्यन्वयव्याप्तिर्दर्शिता। मृते व्यभिचारवारणाय जीवन्नित्यर्थकं **सन्निति** प्रोक्तम् इति बोध्यम्॥

व्यतिरेकव्याप्तिमाह—**यदाऽव्यापक एकत्रेति**।

"नियम्यत्व[2]नियन्तृत्वे भावयोर्यादृशीमते।
विपरीते प्रतीयेते त एव तदभावयोः॥"
व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्।
एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते।
साध्याभावोऽन्य[2]था व्याप्यो व्यापकः साधनात्ययः॥"

---

१ "उपपाद्यस्य तद्भिनानुपपन्नत्वं च—तदभावव्यापकाभावप्रतियोगित्वम्, अन्यस्यासंभवात्; तज्ज्ञानं च व्यतिरेक्यनुमानमेव" इति नैयायिकघण्टाघोषसत्त्वेऽपि, "विद्यमानत्वे सति यत्र यन्नास्ति तदन्यत्र तदस्ति, यथा "गृहकोणेऽतिष्ठन्नहं गृहमध्ये तिष्ठामि" इत्याद्यन्वय्यनुमानमपि संभवतीत्याह—यदा खल्विति। गृहाभावेन बहिःसत्त्वकल्पनावद् बहिःसत्त्वेन गृहासत्त्वकल्पनापि संभवतीत्यभिप्रायेणाह—एकत्रास्तीति। इति व्याख्यान्तरमप्यूह्यम्। २ नियम्यत्वम्=व्याप्यत्वम्, नियन्तृत्वम्=व्यापकत्वम्। तथा च भावयोः=साध्यहेत्वोर्यादृग् व्याप्यव्यापकत्वं ततोविपरीतोऽभावयोर्व्याप्यव्यापकभाव इत्यर्थः। पूर्वोक्तमेव विशदयति—अन्वय इति। अन्वये=भावयोर्व्याप्यव्यापकभावे, साधनं व्याप्यं भवति, साध्यं=वह्न्यादिकं च व्यापकं भवति। अन्यथा=व्यतिरेके तु साध्याभावो व्याप्यो भवति, साधनात्ययः=हेत्वभावश्च व्यापको भवतीत्यर्थः।

**तथा च सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव।**

**नच चैत्रस्य क्वचित्सत्त्वेन गृहाभावः शक्योऽपह्नोतुम्, येनाऽसिद्धो गृहाभावो बहिर्भावे न हेतुः स्यात्।**

---

इत्युक्तेः—"अन्वये—"जीविगृहासत्त्वं व्याप्यं बहिस्सत्त्वं च व्यापकम्" व्यतिरेके तु—बहिरसत्त्वं व्याप्यं गृहसत्त्वं च व्यापकम्" इति सिद्धान्तबलादत्र यत्तदोर्विभिद्य संबन्धः कार्यः। **तथाच—**

यदा अन्यत्र=बहिर् नास्ति तदा एकत्र=गृहे अस्ति, इत्येवं योजनयाऽत्र व्यतिरेकव्याप्तिर्ज्ञेया। तथाविधव्याप्तिग्रहस्थानमाह—**स्वशरीर इति**। तथाच अव्यापकसन्निष्ठमेकत्रासत्त्वमन्यत्र सत्ताव्याप्यम्, अन्यत्र सत्त्वं चैकत्रासत्ताव्याप्यं स्वशरीरस्येवेति व्याप्तिज्ञानं सुलभमिति भावः। अव्यापकः=असर्वगतः प्रादेशिकः परिच्छिन्नपरिमाणवान् इति यावत्। अत्राव्यापकपदं विभुतया सर्वगतस्याकाशादेर्व्यावृत्त्यर्थम्। सर्वगताकाशादिरूपसन्निष्ठान्यत्र सत्ताया एकत्रासत्ताव्याप्यत्वाभावात्, गगनादिकं ह्येकत्र विद्यमानमपि नान्यत्राविद्यमानं भवतीति। एवं व्याप्तिं प्रदर्श्य हेतुस्वरूपं दर्शयन् बहिर्भावानुमितिमाह—**तथाच सत इति**। तथाच=अनन्तरोक्तेन प्रकारेण व्याप्तिग्रहे सिद्धे सति सतः=जीवतश्चैत्रस्य गृहाभावज्ञानरूपेण लिङ्गेन=जीवित्वे सति गृहासत्त्वादितिहेतुना बहिर्भावदर्शनम् अनुमानमेव=अनुमानसाध्यमेवेत्यर्थः अनुमितिरेवेति यावत्। गृहासत्त्वज्ञानस्यैव बहिस्सत्त्वज्ञानरूपानुमितिकरणत्वेनानुमानपदाभिधेयत्वाद् बहिर्भावदर्शनरूपाया अनुमितेरनुमानत्वासंभवात्। सांख्यमतानुसारं लिङ्गसमुत्था बौद्धप्रमैव वात्रानुमानम्। पूर्वोक्तानुमाने हेतोः पक्षधर्मतां[2] दर्शयितुं स्वरूपासिद्धिं[3] वारयति—**न चेति**। चैत्ररूपे पक्षे वर्तमानो यो गृहाभावरूपो हेतुः स चैत्रस्य क्वचित् सत्त्वेन=देशविशेषे विद्यमानत्वेन हेतुना अपह्नोतुम्=अपनेतुं–बाधितुं न शक्यो यतः=येन (गृहासत्त्वापनयनरूपेण कारणेन) असिद्धः=स्वरूपासिद्धः[4] सन् गृहाभावो=(गृहवृत्तिसत्त्वाभावः) बहिर्भावे हेतुर्न स्यात् स्वरूपासिद्धस्य हेत्वाभासत्वादित्यर्थः। सिद्ध एव गृहा-

---

१ 'अनुमानमानमेव' इत्यर्थमुपेक्ष्य किमिति 'अनुमानसाध्यम्' इत्यर्थावलम्बनं तत्राह—गृहेति। यथास्थितं समाधत्ते—लिङ्गेति। २ हेतोः पक्षे वर्तमानत्वं पक्षधर्मता यथा—'पर्वते धूमेन वह्नौ साध्ये वह्निव्याप्यधूमवान् पर्वतः' इत्यत्र धूमस्य पक्षधर्मता। ३ पक्षे हेत्वभावः स्वरूपासिद्धिः। यथा–'घटः पृथिवी पटत्वात्' इत्यत्र घटरूपपक्षे हेत्वभावः। ४ यो हेतुराश्रये नावगम्यते स स्वरूपासिद्धः। यथा–'सामान्यमनित्यं कृतकत्वात्' अत्र कृतकत्वं हेतुराश्रये–सामान्ये–नास्ति। यथा वा–"शब्दो गुणश्चाक्षुषत्वात्" अत्र चाक्षुषत्वं शब्दे–पक्षे–नास्ति, शब्दस्य श्रावणत्वात्, इति चाक्षुषत्वं स्वरूपासिद्धं भवति। एवं प्रकृतेऽपि योजनीयम्।

नच गृहाभावेन वा सत्त्वमपह्नूयते, येन सत्त्वमेवानुपपद्यमानमात्मानं न बहिरवस्थापयेत् ।

तथाहि—चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं विरुद्ध्यते, गृहसत्त्वं वा ? न तावद् यत्र क्वचन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन, भिन्नविषयत्वात् ।

---

भाव इति न हेतोः पक्षवृत्तित्वाभाव इति भावः । ततश्च सत्त्वासत्त्वयोर्विरुद्धतया सत्त्वेन निश्चितस्य कथमसत्त्वनिश्चयः संभवति, परस्परज्ञानं प्रति परस्परज्ञानस्य प्रतिवन्धकत्वादिति सतो देवदत्तस्य गृहे असत्त्वज्ञानस्यैवासम्भवात् गृहासत्त्वस्य स्वरूपासिद्धत्वं स्यादिति नाशङ्कनीयम्, परस्परं विरोधाभावादिति अनुपदमेव स्फुटीभविष्यति ।

साध्यासिद्धिं वारयति—न च गृहाभावेनेति । सत्त्वम्=बहिरस्तीति साध्यैकदेशः चैत्रसद्भावोऽपि न गृहाभावेन अपह्नूयते=प्रतिबध्यते येन=सत्त्वापनयनरूपेण कारणेन सत्त्वमेव=अनुपपन्नं सत् स्वात्मानं बहिर्देशे नावस्थापयितुं शक्नुयादित्यर्थः । बहिस्सत्त्वरूपसाध्यसम्भवान्न साध्याप्रसिद्धिरिति भावः ।

एतदुक्तं भवति—यथान्यत्र सत्त्वेन गृहासत्त्वं न विरुध्यते तथा गृहासत्त्वेनापि अन्यत्र सत्त्वं न विरुद्धमिति ।

क्वचित्सत्त्वेन गृहासत्त्वमपनेतुमशक्यं, गृहासत्त्वेन च क्वचित्सत्त्वमपनेतुमशक्यं, विरोधाभावादिति सरलार्थः । ननु सर्वलोकसिद्धं सत्त्वासत्त्वयोर्विरुद्धत्वं न वाङ्मात्रेणापनीयते, उच्यतां तावदविरोधे हेतुरिति जिज्ञासायां तयोर्विरोधाभावमेव स्पष्टयितुं द्वेधा विकल्पयति—तथा हि चैत्रस्येति । सत्त्वमात्रम्=यत्र क्वचन सत्त्वम् इत्यर्थः । तत्राद्यं विकल्पं निराकरोति—न तावदिति । गृहासत्त्वेन=गृहवृत्तिसत्त्वाभावेन सह यत्र क्वचन सत्त्वस्य=यत्र कुत्रापि सत्त्वस्य, गृहेतरवृत्तिसत्त्वस्यापीति यावत् विरोधो नास्तीत्यर्थः । अविरोधे हेतुमाह—भिन्नविषयत्वादिति । सत्त्वासत्त्वयोर्विभिन्नपदार्थसंबन्धित्वादित्यर्थः । असत्त्वस्य गृहात्मकप्रदेशो विषयः, सत्त्वस्य बाह्यदेशो विषय इत्येवं समानविषयत्वाभावान्न विरोध इति भावः ।

एतदुक्तं भवति—घटसत्त्वाभावस्य पटसत्त्वं प्रति विरोधितायाः केनाप्यनङ्गीकारात् अभावस्य प्रतियोगिनं प्रत्येव विरोधित्वस्य सर्वलोकसिद्धत्वाच्च गृहवृत्तिसत्त्वाभावो गृहवृत्तिसत्त्वमेव विरुध्यतां, न पुनर्गृहेतरवृत्तिसत्त्वमपि । एकस्यापि सत्त्वस्य गृहगृहेतरवृत्तित्वभेदेनान्योऽन्यभेदावगमात्तस्याप्रतियोगित्वात् । अत एव सत्यपि पीतघटे नीलघटो नास्तीति प्रतीतिव्यवहार उपपद्यत इति ॥ ❀ ॥

**"देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोधः" इति चेत्। न, प्रमाणविनिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात्।**

---

विरोधमापादयितुम् उभयोरेक[1]विषयत्वसाधनाय यतमानो मीमांसकोऽरेकते—**देशसामान्येनेनेति**। "जीवी चैत्रः क्वचिदस्ति" इति आप्त[2]वाक्यादाक्षिप्य[3]माणेन सत्त्वस्याश्रयीभूतेन देशसामान्येन तदन्तः[4]पातिनो गेहरूपदेशविशेषस्य आक्षेपः=अर्थाल्लाभोऽपि पाक्षिकः=पक्षे प्राप्त इति=अत उभयोः सत्त्वासत्त्वयोः समानविषयतयास्त्येवात्र विरोध इति शङ्कार्थः।

**एतदुक्तं भवति**—माभूद् गृहसत्त्वाभावेन यत्र क्वचन सत्त्वस्य विरोधो भिन्नविषयत्वात्, परन्तु "संश्चैत्रो गृहे नास्ति" इत्यत्र चैत्रस्य सत्त्वसामान्यज्ञानस्यावश्यकतया तदन्तर्वर्तिनो गृहसत्त्वस्यापि पक्षत उप[5]स्थितेर्गृहसत्त्वेन गृहासत्त्वं विरुध्यताम्, एकविषयतया प्रतियोग्यभावयोर्विरोधावश्यंभावादिति स्वरूपासिद्धत्वं हेतोर्दुष्परिहरमेवेति। **अन्ये तु**—देशसामान्येन=निखिलदेशत्वेन, गृहविशेषस्य=गृहरूपदेशविशेषस्य आक्षेपः=उपस्थितिः, गृहस्यापि निखिलदेशान्तर्गतत्वात्। अव्यापकस्य सतश्चैत्रस्य एकदा सर्वत्र सत्त्वासम्भवात् "चैत्रो वहिर्वा स्यात् गृहे वा स्यात्" इति पक्षत एव गृहाक्षेप इति पाक्षिक इत्युक्तम्। समानविषयतया=सत्त्वासत्त्वयोरेकगृहरूपदेशसंबन्धितया, विरोधः=प्रतीतेन गृहसत्त्वेन गृहासत्त्वविरोधः, तथाच गृहाभावस्य स्वरूपासिद्धतया न हेतुत्वसम्भव इति भाव इति व्याचक्षते।

एवं यथाकथंचित् विरोधापादनेऽपि नाक्षिप्तेन गृहसत्त्वेन प्रमितस्य गृहासत्त्वस्य प्रतिक्षेपोऽपि तु प्रमितगृहासत्त्वेनाप्रमितगृहसत्त्वस्यैवेत्याशयेन समाधत्ते—**न प्रमाणविनिश्चितस्येति**। प्रमाणविनिश्चितस्य=प्रत्यक्ष[6]प्रमाणेनावधारितस्य गृहेऽसत्त्वस्य गृहसत्त्वेन प्रतिक्षेपायोगात्=प्रतिरोधस्यायुक्तत्वादिति संबन्धः। गृहासत्त्वस्य प्रतिक्षेप्यत्वाभावे "प्रमाणविनिश्चितस्य" इति, गृहसत्त्वस्य प्रतिक्षेपकत्वाभावे च "पाक्षिकतया सांशयिकेन" इति, हेतुगर्भं विशेषणम्। पाक्षिकतया=संभावनामात्रेण पक्षे प्राप्ततया सांश[7]यिकेन=संशयमापन्नेन–संदिग्धेन–अनिश्चितेनेति यावत्। सामान्यतोऽवगतं गृहसत्त्वं विशेषतोऽवगतगृहासत्त्वेन बाध्यं न वेति संशयाक्रान्तेन गृहसत्त्वेनेत्यर्थः।

---

१ गृहासत्त्वक्वचित्सत्त्वयोः। २ आप्तः खलु साक्षात्कृतधर्मा यथार्थपदार्थोपदेष्टा पुरुष इत्याप्तलक्षणं वात्स्यायनभाष्ये। रागादिवशादपि नान्यथावादी यः स आप्तः, इति चरके पतञ्जलिः। ३ लभ्यमानेन। ४ देशसामान्यमध्यवर्तिनः। ५ सन्निति विशेषणाच्चैत्रस्य देशसामान्यसत्ताप्रतीतौ गृहसत्तापि प्रतीयते, सामान्यस्य विशेषव्यापकत्वादिति भावः। ६ इदं सांख्यमतेन। भाट्टवेदान्तिनोर्मते तु अनुपलब्धिप्रमाणेनेति विज्ञेयम्। ७ 'संशयमापन्नः' इति सूत्रेण ठञि "ठस्येकः" इतीकादेशे "तद्धितेष्वचामादेः" इत्यादिवृद्धौ "यस्येति च" इत्यकारलोपे च सांशयिक इति रूपनिष्पत्तिः।

नापि प्रमाणविनिश्चितो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं च व्यपनेतुमर्हतीति युक्तम् ।

---

प्रमिताप्रमितयोरेकत्र सन्निपाते प्रमितेनाप्रमितस्यैव प्रतिक्षेपो युक्तो नाप्रमितेन प्रमितस्येति भावः ।

ननु प्रमितं गेहासत्त्वं गृहसत्त्वं यथा प्रतिक्षिपति तथा सत्त्वमात्रमपि तत् प्रतिक्षिपेदित्याशङ्क्य निराचष्टे—नापीति । प्रत्यक्षप्रमाणेन निर्णीतो गृहाभावोऽस्य=चैत्रस्य संभावनामात्रेण पक्षे प्राप्तं गृहसत्त्वं प्रतिक्षिपन्=प्रतिरुन्धानः सन्—निराकुर्वन् सत्त्वं=सत्त्वमात्रमपि गृहसत्त्वमिव बहिस्सत्त्वमपीति यावत् प्रतिक्षेप्तुम्=प्रतिरोद्धुं—निराकर्तुम् अर्हति तथा गृहसत्त्वस्य सांशयिकत्वं च व्यपनेतुम्=दूरीकर्तुम् अर्हतीति न युक्तमित्यर्थः ।

अत्र बालरामस्वामिनः—

"ननु "गृहसत्त्वं प्रक्षिपन्" इत्येवं पूर्वं प्रमितेन गृहासत्त्वेन गृहसत्त्वस्य प्रतिक्षेपमङ्गीकृत्य पुनः कथं तद्विपरीतं "सांशयिकत्वं चापनेतुमर्हतीति न युक्तम्" इत्येवं गृहसत्त्वस्य सांशयिकतास्वीकरणम्, न हि यस्य बाधस्तस्य सांशयिकत्वं कुत्रचित् संप्रतिपन्नम् । किंच—गृहसत्त्वस्य सन्दिग्धत्वे "स्थाणुर्वा पुरुषो वा" इतीव "चैत्रस्य गृहसत्त्वं वा गृहासत्त्वं वा" इति संशयशरीरो वाच्यः, तथाच गृहसत्त्वमिव गृहासत्त्वमपि संशयविषयीभूतमापद्येत, तच्चासाम्प्रतम्, न हि यद्[1] यत्र विशेषतः प्रमितं तस्य तत्रैव विपरीतप्रमाणविषयत्वरूपः संशयः समुदेतुं प्रभवति, न खलु स्थाणुत्वनिर्णये सति "स्थाणुर्वा पुरुषो वा" इत्येवं संशयाना जनाः समुपलभ्यन्त इति चेत् । न, गृहसत्त्वस्य सांशयिकत्वास्वीकारेण त्वदुक्तशङ्काया एवानुत्थानात् ।

अयं भावः—नात्र सर्वस्यैव शङ्काग्रन्थस्य "न युक्तम्" इत्यनेन अयुक्तत्वाभिधानं, किन्तर्हि ? शङ्कैकांशस्येति ।

एतदुक्तं भवति—"सत्त्वमपि प्रतिक्षेप्तुमर्हति" इति, गृहसत्त्वस्य सांशयिकत्वं चापनेतुमर्हति" इति च यद् शङ्कायाम् अंशद्वयं, तत्र प्रथमांशस्यैव "न युक्तम्" इत्यनेन अयुक्तत्वाभिधानं, नांशान्तरस्य तेन गृहसत्त्वस्य सांशयिकत्वापनयनस्य स्वीकृतत्वेन तस्य[2] बाध एवात्राभिप्रेतो न सांशयिकतेति ।"

तथाच प्रमाणविनिश्चितो गृहाभावश्चैत्रस्य पाक्षिकं गृहसत्त्वं निराकुर्वन्

---

१ यद्=गृहासत्त्वं यत्र=चैत्रे प्रमितं तस्य=गृहासत्त्वस्य तत्र=चैत्रे विपरीतप्रमाणात्मकसंशयज्ञानविषयत्वं नोत्पत्तुं प्रभवतीत्यर्थः । २ तस्य=गृहसत्त्वस्य ।

गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिक्षिप्यते, न तु सत्त्वमात्रम्, तस्य तत्रौदासीन्यात्।

तस्माद् गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम्।

एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापादनमर्थापत्तेर्विषय इति निरस्तम्,

---

सत्त्वमात्रमपि निराकर्तुमर्हतीति न युक्तम्, किन्तु गृहसत्त्वस्य सांशयिकत्वमेव व्यपनेतुं [1]सोऽर्हतीति संबन्धः कार्यः।

एतदभिप्रायेणैव सहेतुकं गृहसत्त्वस्य बाधं सत्त्वमात्रस्य चाबाधमाह—गृहावच्छिन्नेनेति। गृहनिष्ठेन चैत्राभावेन गृहसत्त्वमेव प्रतिक्षिप्यते=निराक्रियते—बाध्यते, तत्र हेतुः—विरुद्धत्वात्=प्रमितेन गृहासत्त्वेन सहावस्थातुमशक्तत्वात्, सत्त्वमात्रं तु न प्रतिक्षिप्यते, कुतः? तत्र=सत्त्वमात्रनिरासे, तस्य=गृहासत्त्वस्य औदासीन्यात्=निर्व्यापारत्वात्, इत्यर्थः। विरोधाभावान्न सत्त्वमात्रस्य प्रतिक्षेप इति भावः।

एतदुक्तं भवति—"दौर्बल्यं बाध्यताप्रयोजकम्" इति न सामान्यतो नियमः, किन्तु विरोधे सत्येव दौर्बल्यं बाध्यताप्रयोजकम्, इत्येवास्ति सार्वत्रिको नियमः। अत एवोक्तं प्राक्—"विरोधे हि बलीयसा दुर्बलं बाध्यते" इति। विरोधश्च एकविषयप्रवृत्तयोरेव न तु भिन्नविषययोः। एवं च गृहासत्त्वगृहसत्त्वयोरेकविषयतया परस्परविरोधात् निश्चितत्वेन बलीयसा गृहासत्त्वेन पाक्षिकतया दुर्बलं गृहसत्त्वमेव बाध्यते, न पुनर्बहिस्सत्त्वमपि, तेन सह विरोधलेशाभावादिति।

एतेन "गृहासत्त्वेन सत्त्वमात्रं वा विरुध्यते, गृहसत्त्वं वा" इति पूर्वोदितकल्पद्वयेऽन्तिमकल्पोऽस्मदभिमत एवेति दर्शितम्।

फलितमाह—तस्मादिति। यतो गृहाभावः सिद्धस्तस्मात् सिद्धेन तेन लिङ्गेन सतः=जीवतश्चैत्रस्य बहिर्भावोऽनुमीयत इति युक्तमित्यर्थः। अनुमानप्रयोगश्च पूर्वत्रोक्त एव इति नेह पुनरुपन्यस्यते॥

ये तु—"जीवी चैत्रः क्वचिदस्ति" इत्येव सामान्येन स्थितिबोधकस्य आगमप्रमाणस्य योऽयं गृहासत्त्वावेदकेन प्रत्यक्षप्रमाणेन सह विरोधः, तत्परिहाराय "आगमस्य बहिर्देशविषयत्वकल्पनम् अर्थापत्तिकृत्यम्" इति मन्यन्ते, तान् प्रत्याह—एतेनेति। वक्ष्यमाणेन हेतुनेत्यर्थः। संभावनामात्रेण विरुद्धयोः=विरोधाक्रान्तयोः प्रत्यक्षागमप्रमाणयोर्या विषयव्यवस्था=आगमस्य बहिस्सत्त्वं

---

१ सः=गृहाभावः। २ यदि गृहाभावः सत्त्वमात्रं प्रतिक्षेप्तुं नार्हति तदा सत्त्वमात्रस्याबाध्यतया बलवत्त्वं बोधयन् दौर्बल्यबीजं सांशयिकत्वमप्यपनयतित्याह—सांशयिकत्वं वा अपनेतुमिति। इति केचित्।

अवच्छिन्नाऽनवच्छिन्नयोर्विरोधाभावात्।
उदाहरणान्तराणि चार्थापत्तेरेवमेवाऽनुमानेऽन्तर्भावणीयानि, तस्मान्नानुमानात्प्रमाणान्तरमर्थापत्तिरिति सिद्धम्।

---

विषयः प्रत्यक्षस्य च गृहासत्त्वं विषय इत्येवं व्यवस्था तया विरोधाभावसम्पादनम् अर्थापत्तेर्विषयः=फलमिति निरस्तम् इत्यर्थः।

अर्थापत्तिवादिनामयं भावः—चैत्रस्य गृहासत्त्वप्रमाणं प्रत्यक्षम्। सत्त्वप्रमाणं तु अनुमानं शब्दो वा। तत्रासत्त्वस्य प्रामाण्ये सत्त्वस्य प्रामाण्यं विरुध्येत, सत्त्वप्रामाण्ये च असत्त्वप्रामाण्यम्, इत्येकतरप्रमाणेनापि प्रमोत्पत्त्यसम्भवादर्थापत्तेः पृथक्प्रमाणत्वाभ्युपगम आवश्यकः। तेन च प्रमाणेन "असत्त्वस्य गृहविषयत्वं सत्त्वस्य च बहिर्विषयत्वम्" इत्येवं कल्पनया यः प्रमाणयोर्विरोधपरिहारः स एवार्थापत्तेः प्रमेयः प्रमेयान्तरविलक्षण इति। कथं तयोरविरोध इति जिज्ञासायाम् "एतेन" इत्यनेन सूचितं निरासे हेतुमाह—अवच्छिन्नेति। गृहावच्छिन्नम् असत्त्वं प्रत्यक्षं तदनवच्छिन्नं सत्त्वमात्रं च आगमिकम् इत्येवं तयोर्विरोधाभावादित्यर्थः। अवच्छिन्नत्वम्=विशिष्टत्वम्। यथा—"घटत्वावच्छिन्नो घटः" इत्यादौ घटस्य घटत्वावच्छिन्नत्वम्॥ ॐ॥

मीमांसकैः बृहद्दीपिकायां—"दिवाऽभुञ्जानस्य चैत्रस्य पीनत्वेनरात्रिभोजनकल्पनं, सर्पनकुलयोरेकस्य जयेनान्यस्य पराजयेन वोत्तरत्र जयपराजयकल्पनं, बीजेसत्यङ्कुरोत्पत्तेर्मूषकाऽऽघ्रातेऽङ्कुरानुत्पत्तेर्दर्शनात् तत्र कारणत्वाकारणत्वव्याघातपरिजिहीर्षया शक्तिकल्पनम्" इत्याद्युदाहरणान्तराण्युक्तानि; तान्यप्यनुमानेऽन्तर्भावणीयानीत्याह—उदाहरणान्तराणीति। "पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यादीनीत्यर्थः। एवमेव=प्रागुक्तयुक्तिजातेनेत्यर्थः। तथा च—"पीनोऽयं दिवा न भुङ्क्ते" इति वाक्यावगतेन पीनत्वेन यद् रात्रिभोजनकल्पनरूपं श्रुतार्थापत्तेः कृत्यं, तदपि "देवदत्तो नक्तंभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात्, व्यतिरेके[1] यः किल नक्तं न भुङ्क्ते स दिवाऽभुञ्जानः सन् पीनोऽपि न भवति, यथा नवरात्रोपवासी" इत्यनुमानसाध्यत्वान्नार्थापत्तेः फलमिति। एवमन्यान्यपि स्वयमन्तर्भावनीयानीति। अर्थापत्तेः प्रमाणान्तरत्वनिराकरणम् उपसंहरति—तस्मादिति॥ ॐ॥

ये किल मीमांसकभट्टपादा[2] वेदान्तिनश्च "यद्यत्र घटः स्यात् तर्ह्युपलभ्येत,

---

१ "यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वाभावस्तत्र तत्र रात्रिभोजनवत्त्वाभावः" इति व्यतिरेकव्याप्तिस्वरूपम्। "यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वं तत्र तत्र रात्रिभोजित्वम्" इत्यन्वयव्याप्तिस्तु नात्र वक्तुं शक्यते, योगिनि व्यभिचारात्। अतो व्यतिरेकानुमानमेवात्रोपन्यस्तमिति ध्येयम्।

२ कुमारिलस्वामिनः। षड्दर्शनसमुच्चये श्रीहरिभद्रसूरिः—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्ताऽवबोधार्थं तत्राभावप्रमाणता॥"

**एवमभावोऽपि प्रत्यक्षमेव।**

**नहि भूतलस्य परिणामविशेषात्कैवल्यलक्षणादन्यो घटाभावो नाम।**

---

यतो नोपलभ्यतेऽतो नास्ति" इत्येवं योग्यवस्तूपलम्भाभावजन्यम् "इह भूतले घटो न" इत्यर्थाभावज्ञानम् अनुपलब्धिप्रमाणकृत्यम्" इत्येवं मन्यन्ते, तेषां मतं निराकर्तुमुपक्रमते—**एवमभावोऽपीति**। यथा प्रभाकरादिसम्मता अर्थापत्तिर्न प्रमाणान्तरं तथा भट्टाद्यभिमताऽनुपलब्धिरपि न प्रमाणान्तरम् अपि तु प्रत्यक्षमेवेत्यर्थः। अभावोऽपि=अनुपलब्धिरपि, प्रत्यक्षं=प्रत्यक्षानतिरिक्तं प्रमाणम्। ननु 'प्रतिविषयाध्यवसायो दृष्टम्' इत्यत्र "अर्थसन्निकृष्टेन्द्रिय-संबन्धनिबन्धनो बुद्धितत्त्वस्य वृत्तिविशेषः प्रत्यक्षप्रमाणम्" इत्युक्तत्वादत्र चाभावेन सहेन्द्रियसन्निकर्षाभावात्कथं तस्य प्रत्यक्षप्रमाणगम्यत्वसंभव इत्याशङ्कां शमयति—**नहीति**। हि=यतो भूतलस्य परिणामविशेषादन्यः कश्चित् घटाभावरूपः पदार्थो नाम नास्त्यतः प्रत्यक्षमिति संबन्धः। तथाच भूतलग्रहणेनैव तद्ग्रहणान्न तदर्थं पृथक् सन्निकर्षापेक्षेति, भूतलेन परिणामिना सममिन्द्रिय-सन्निकर्षसत्त्वात् तत्परिणामविशेषोऽभावोऽपीन्द्रियसन्निकृष्ट एवेति भावः।

घटशरावादयो मृत्परिणामाः, कटककुण्डलादयश्च कनकपरिणामाः" इत्येवं कार्ये 'परिणाम'शब्दप्रयोगदर्शनात् "यस्य यत्कार्यं तस्य तत् परिणामः" इति सिध्यति, अभावस्तु नैव कार्यमिति कथं तस्य भूतलपरिणामत्वं भवेदिति

---

एतद्व्याख्यायां मणिभद्रसूरिः—

यत्र वस्तुरूपे=अभावादौ पदार्थे पूर्वोक्तं प्रमाणपञ्चकं न जायते, तत्र अभावप्रमाणता ज्ञेयेति संबन्धः। किमर्थमित्याह—वस्त्विति। वस्तुनः=अभावरूपस्य मुण्डभूतलादेः सत्ता=घटाद्यभावसद्भावः तस्य अवबोधः=प्रामाणिकपथावतारणं तदर्थं=तद्धेतोरित्यर्थः। ननु कथमभावस्य प्रामाण्यं, "प्रत्यक्षं तावद्=भूतलमेवेदं घटादि न भवति" इत्यन्वयव्यतिरेकद्वारेण वस्तुपरिच्छेदः, तदधिकं विषयम् अभावैकरूपं निराचष्ट, इति किं विषयमाश्रित्य अभावप्रामाण्यं स्यात्। मुण्डभूतले घटाभावमाश्रित्येति चेत्। मैवम्। घटाभावप्रतिबद्ध-भूतलग्रहणासिद्धेः। तदुक्तम्—

"न तावदिन्द्रियेणैषां नास्तीत्युत्पद्यते मतिः।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि॥
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥" इति।

नास्तिताज्ञानग्रहणावसरे प्रामाण्यमेवाभावस्य, केवलं भावांश इन्द्रियसंनिकर्षजत्वेन पञ्चप्रमाणागोचरसंचरिष्णुतामनुभवन्नाबालगोपालाङ्गनाप्रसिद्धं व्यवहारं प्रवर्तयति। अभावांशस्तु प्रमाणपञ्चकविषयबहिर्भूतत्वात् केवलभूतलग्रहणाद्युपयोगित्वात् अभावप्रमाण-व्यपदेशमश्नुत इति सिद्धमभावस्यापि युक्तियुक्ततया प्रामाण्यमिति।

शङ्काशमनाय "परिणामविशेषात्" इति विशेषपदम् । विशिष्यतेऽन्यस्मात् परिणामादिति विशेषः, तस्मादित्यर्थः । अन्यपरिणामापेक्षया विलक्षणोऽयं परिणाम इति सरलार्थः ।

वैशेष्यमेवाह—कैवल्यलक्षणादिति । कैवल्यं=केवलत्वं—भावान्तरासंसृष्टस्वरूपं सद्वितीयत्वरूपधर्मापेक्षया धर्मान्तरं—घटरहितत्वमिति यावत्, तदेव लक्षणं=स्वरूपं यस्य तत् कैवल्यलक्षणं तस्मादित्यर्थः ।

धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चेत्येवं परिणामत्रैविध्यस्य सम्प्रतिपन्नत्वात् कार्यमेव परिणाम इति नियमाभावात् कैवल्यलक्षणोऽवस्थाविशेषोऽपि भूतलस्य परिणाम एवेति भावः । घटसत्त्वदशायां भूतलस्य न केवलात्मकतया परिणाम आसीत्, घटापगमे तु केवलात्मकतया परिणाम इत्येवावस्थाविशेष इति सरलार्थः ।

अत्रेदं ध्येयम्—अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः" इति हि परिणामसामान्यलक्षणं योगभाष्ये । ततश्च यथा सुवर्णस्य कटकत्वधर्मनिवृत्तौ कुण्डलत्वधर्मोत्पत्तिर्भवतीति सुवर्णस्य कुण्डलत्वेन रूपेण परिणाम उच्यते, यथा वा क्षीरस्य क्षीरत्वानुकूल–तरलत्वादिधर्मनिवृत्तौ घनत्वादिधर्मस्य दधित्वानुकूलस्योत्पत्तिर्भवतीति दधि पयसः परिणाम उच्यते, एवमेव सद्वितीयत्वरूपपूर्वधर्मनिवृत्तौ यद् भूतलस्य कैवल्यरूपधर्मान्तरेणावस्थानं तदपि भूतलपरिणाम एवेति नाभावस्य परिणामविशेषत्वहानिरिति ।

एवं च घटाभावो नाम न पदार्थान्तरम् अपि तु भूतलस्य कैवल्यमेव । ततश्च केवलात्मकस्य भूतलस्येन्द्रियसन्निकर्षावश्यम्भावात् बुद्धिवृत्तेरपि केवलभूतलाकारत्वाच्च तद्गतकैवल्यस्य प्रत्यक्षप्रमाणगम्यत्वमेवेत्यत्र फलितम् ।

ननु सद्वितीयत्वरूपधर्मवतो भूतलस्य कथं तद्विरुद्धकैवल्यलक्षणधर्मव-

---

१ धर्मलक्षणावस्थाभेदेन त्रिविधो हि धर्मिमात्रस्य परिणामः । "सर्वे भावाः क्षणपरिणामिन ऋते चिच्छक्तेः" इत्यभ्युपगमात् । यस्तावदवस्थितस्य धर्मिणः पूर्वधर्माभिभवे धर्मान्तरप्रादुर्भावः स धर्मपरिणामः । प्रादुर्भूतस्य च धर्मस्यानागतादिलक्षणपरित्यागे वर्तमानादिलक्षणलाभो लक्षणपरिणामः । वर्तमानलक्षणानां च धर्माणां प्रतिक्षणमवस्थातारतम्यमवस्थापरिणामः । तत्र पृथिव्यादिभूतानां धर्मिणामवस्थितानामेव पूर्वपिण्डादिधर्माभिभवे घटादिगवादिरूपधर्मान्तराऽऽविर्भावः=धर्मपरिणामः । धर्माणां चातीतानागतवर्तमानलक्षणलाभः=लक्षणपरिणामः । वर्तमानलक्षणानां च घटादिधर्माणां नवत्वपुराणत्वे, गवादीनां च बाल्यकौमारयौवनवार्धक्यम्=अवस्थापरिणामः । एवं चक्षुरादीन्द्रियाणां तत्तदर्थानालोचनादिरूपपूर्वधर्माभिभवे तत्तदर्थालोचनादिरूपधर्मान्तरप्रादुर्भावः=धर्मपरिणामः । धर्माणां चातीतानागतवर्तमानलक्षणलाभः=लक्षणपरिणामः । वर्तमानलक्षणानां चालोचनादीनां स्फुटत्वास्फुटत्वादिः=अवस्थापरिणाम इति विवेकः ।

**प्रतिक्षणपरिणामिनो हि सर्वे एव भावा ऋते चितिशक्तेः, स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षानवरुद्धो विषयो यत्राऽभावाह्वयं प्रमाणान्तरमभ्युपेयेतेति ।**

---

त्वमित्याशङ्कामपनयति—**प्रतिक्षणेति** । सर्वस्य त्रिगुणात्मकत्वाच् "चलं च गुणवृत्तम्[1]" इति स्वीकारात् प्रतिक्षणम् अन्यथाऽन्यथाप्रथाशीलाः सर्वे पदार्था इत्यर्थः ।

कस्मिंश्चित् समये सद्वितीयस्वरूपावस्थया भूतलमवतिष्ठते, कदाजिच्च[3] कैवल्यरूपधर्मान्तरेण परिणमत इति समयभेदेन अवस्थाद्वयवत्त्वं भूतलस्य न विरुद्धमिति भावः ।

ननु सर्वस्य क्षणिकत्वे हि पुरुषस्यापि सर्वपदार्थान्तःपातात् क्षणिकत्वं स्यात्, ततश्च बौद्धमतसाम्यं स्यात्, तन्मा प्रसाङ्क्षीदित्याशयेनाह—**ऋते चिति शक्तेरिति** । चेतनात्पुरुषाद् विनेत्यर्थः । तथाच पुरुषव्यतिरिक्ताः प्रकृत्यादिस्थूलभूतपर्यन्ताः सर्वे पदार्थाः प्रति क्षणं परिणमन्ते, पुरुषस्तु परिणतिरहित एव सर्वदा तिष्ठतीति अपरिणामित्वेन कूटस्थनित्यायाश्चितिशक्तेरतिरिक्तस्य प्रतिक्षणपरिणामित्वाभ्युपगमान्न सर्वक्षणिकत्वाभिमानिबौद्धसाम्यप्रसङ्ग इति भावः ।

**किञ्च** बौद्धा यथा स्वरूपेणैव धर्मिनाशं स्वीकुर्वन्ति, न तथा सांख्यैरभ्युपेयते, परिणामवादित्वात्सांख्यानाम्, न च यथावस्थितस्य धर्मिणस्तत्तद्धर्मलक्षणपरिणामेऽपि कदाचिन्नाशः संभवति, कटकादिपु परिणामेपु[4] सत्स्वपि धर्मिणः कनकादेस्तेष्वन्वितत्वेन प्रतीतेः सर्वानुभवसिद्धत्वादिति न लेशतोऽपि बौद्धसाम्यप्रसक्तिरिति । नन्वस्त्वभावस्य प्रतियोग्यनुपरक्ततारूपकैवल्यात्मकभूतलपरिणामविशेषत्वं तथापि नैतावतानुपलब्धेः प्रमाणान्तरत्वं निरस्यतीति जिज्ञासमानं प्रत्याह—**स चेति** । सः=कैवल्यात्मकः परिणामविशेपश्च ऐन्द्रियकः=भूतलस्वरूपत्वेन इन्द्रियाश्रिताध्यवसायविषयः प्रत्यक्ष इति यावत्, इति=अतो नास्ति प्रत्यक्षानवरुद्धः=प्रत्यक्षागोचरोऽभावरूपो विषयो यत्र=यस्मिन् अभावरूपविषयज्ञानेऽनुपलब्धिनामकं प्रमाणान्तरमभ्युपेयं स्यादित्यर्थः ।

अनुपलब्धेरुपलम्भाभावरूपत्वादभावत्वेनाभिधानम् । अनुपलब्धिपदमपहाय अभावनामकत्वेनाभिधानेन अभावपदार्थस्यैवैतन्मते[5] अनङ्गीकारात् कथं तत्प्रमितयेऽनुपलब्धेः प्रमाणान्तरत्वसंभव इति सूचितम् ॥ ९ ॥

---

१ गुणानां स्वभावः । २ प्रतियोगिसत्त्वदशायाम् । ३ प्रतियोगिविरहकाले । यस्याभावः स तस्य प्रतियोगी । ४ तेषु=परिणामेषु । ५ तथा चाभियुक्ताः पठन्ति—"दृष्टस्तावदयं घटोऽत्र च पतन् दृष्टस्तथा मुद्गरो, दृष्टा खर्परसंहतिः परिमितोऽभावो न दृष्टः परः । तेनाभाव इति श्रुतिः क निहिता किं चात्र तत्कारणं, स्वाधीना कलशस्य केवलमियं दृष्टा कपालावली ॥"

अत्रेदमकाण्डताण्डवमपि मतान्तरीयज्ञानजनकत्वात्सुधीभिर्विलोकनीयम्—"अभावोऽधिकरणात्मकः" इति प्रभाकरमतेऽप्यभावस्याधिकरणात्मकतयेन्द्रियग्राह्यत्वान्न तदर्थम् अनुपलब्धेः प्रमाणत्वेनाश्रयणम् इति।

ननु परिणामवादे सांख्याभिमते परिणामपरिणामिनोरभेदाद् भवतु भूतलस्वरूपवद् अभावस्य प्रत्यक्षत्वम्, आरम्भवादे तु नैयायिकवैशेषिकाभिमतेऽभावस्य भूतलातिरिक्तत्वेन कथं तस्य प्रत्यक्षत्वमिति चेत्। अत्राहुः—आरम्भवादेऽभावस्याप्रत्यक्षत्वेऽपि अनुमाने तदन्तर्भावान्न प्रमाणान्तरत्वमिति।

तदिदम्—"शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः" (न्या. २।२।२) इत्यादिना गौतमीये "अभावोऽप्यनुमानमेव" (वै. ९।२।५) इत्यादिना प्रशस्तपादीये च स्पष्टमिति तत्रैव कणेहत्यालोचनीयम्।

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (न्या. १।१।४) इति सूत्रे वार्तिककारास्तु "समवाये चाभावे च विशेषणविशेष्यभावात्" इति वदन्तः "संयुक्तविशेषणताख्यसन्निकर्षेणाभावस्य प्रत्यक्षत्वम्" इति मन्यन्ते। 'घटाभाववद् भूतलम्' इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्।

एतदुक्तं भवति—"घटाभाववद् भूतलम्" इत्याकारक-ज्ञाननिष्ठभूतलविषयकत्वप्रयोजकम् अवश्यमेवेन्द्रियं वाच्यम्, अभावविषयकत्वमात्रप्रयोजिकाया अनुपलब्धेस्तादृशभूतलविषयकत्वाऽप्रयोजकत्वात्, एवं च भूतलज्ञानार्थमपेक्ष्यमाणेनाऽवश्यक्लृप्तकारणभावेनेन्द्रियेणैवाऽभावप्रत्यक्षजननसंभवात् अभावप्रत्यक्षकरणत्वेनातिरिक्तानुपलब्धिस्वीकारो निर्युक्तिक इत्यास्तां विस्तरः॥७॥

पौराणिकाः खलु संभवाख्यं प्रमाणान्तरमङ्गीकुर्वन्ति। तथाहि—

"अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणं संभवः" इति संभवलक्षणं न्यायभाष्ये (२।२।१) अयमर्थः—अविनाभाविनः=व्याप्यस्य पदार्थस्य सत्ताज्ञानात् अन्यस्य=व्यापकस्य सत्ताज्ञानं सत्ताग्राहकं वा यत् तत् संभवाख्यं प्रमाणमिति। यथा—यत्र सहस्रं भवति तत्र शतं भवत्येवेतिवत् यत्र द्रोणो भवति तत्राढकं भवत्येव, यत्र चाढकं भवति तत्र प्रस्थो भवत्येवेति व्याप्यानां द्रोणादीनां सत्ताज्ञानाद् यदाढकादीनां व्यापकानां सत्ताज्ञानं तत् संभवप्रमाणादेव—द्रोणपरिमाणे आढकपरिमाणस्य संभवात्, अधिकपरिमाणेऽल्पपरिमाणस्य[2] संभवश्च स्पष्ट एवेति। तदिदं सर्वं हृदि निधाय सम्भवस्वरू-

१ ऐतिह्यादीनां न प्रमाणत्वप्रतिषेधोऽपि तु प्रमाणान्तरत्वप्रतिषेधः—अर्थात् ऐतिह्यादीनां प्रमाणत्वं स्वीक्रियते, प्रमाणान्तरत्वं तु न स्वीक्रियते, कुतः? शब्दे ऐतिह्यान्तर्भावात् अनुमाने चार्थापत्त्यादीनामन्तर्भावादिति न्यायसूत्रार्थः। २ अल्पानां परिमाणानां संख्यानां च व्यापकत्वमधिकानां च व्याप्यत्वमित्यत्र विभावनीयम्।

सम्भवस्तु—यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः।

स चानुमानमेव। खारित्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयति।

---

पमाचष्टे—संभवस्त्विति। संभवति खार्यां द्रोणः, संभवति द्रोणे आढकम्, संभवति सहस्रे शतम्" इत्येवं खार्याख्ये महापरिमाणेऽल्पपरिमाणा द्रोणादयः, सहस्राख्यमहासंख्यायां च शताद्या अल्पसंख्या अन्तःसंभवन्तीत्येवंविधो योऽवगमः=अवबोधः स सम्भव इत्यर्थः। एतादृशात् संभवाख्यप्रमाणाद् यत् खारीज्ञानेन द्रोणादिज्ञानं तत् संभवप्रमाणफलं सम्भवप्रमितिरित्याख्यायते अत्र व्याप्तिर्नापेक्षितेति तेषामाशयः।

तत्र द्रोणचतुष्टयं खारी, चतुराढकश्च द्रोणः, चतुःप्रस्थं चाढकं, चत्वारः कुडवाश्च प्रस्थं, मुष्टिचतुष्टयं च कुडव इति ज्ञेयम्।

यत्रेदमुक्तम्—

"पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुष्प्रस्थं तथाढकम्॥
चतुराढको भवेद् द्रोणः खारी द्रोणचतुष्टयम्।
द्विद्रोणश्च भवेच्छूर्पः कुम्भोऽपि द्रोणविंशतिः॥" इति।

सोऽयं सम्भवो नानुमानादतिरिच्यते, अविनाभावबलेनार्थावबोधकत्वाद् न य[1]देवंविधं न तदेतादृग् यथा प्रत्यक्षम्" इति न्यायमाश्रित्य तमनुमानेऽन्तर्भावयति—स चेति। सः=संभवश्चानुमानमेव न प्रमाणान्तरमित्यर्थः।

तथा चाहुः प्रशस्तभाष्यकाराः—"संभवोऽप्यविना[2]भावित्वात् (व्याप्तिमूलकत्वात्) अनुमानमेव" इति। तत्प्रकारमेवोपपादयति—खारीत्वमिति। यथा वह्निना अविनाभूतो धूमो ज्ञातः सन् वह्निमनुमापयति, तथा द्रोणाद्य[3]विनाभूतं खारीत्वं=खारीप्रमाणं प्र[4]तीतं सत् द्रोणादिसत्त्वम् अवगमयतीत्यनुमानसमानधर्मत्वान्नानुमानादतिरिक्तं सम्भवाख्यं प्रमाणमित्यर्थः।

तथाच खारीप्रमाणं द्रोणादिपरिमाणाभाववदवृत्तीति भूयो दर्शनजन्यज्ञानमेव व्याप्तिज्ञानं तदेव धान्यादिखारीदर्शनवेलायां तत्र द्रोणादिपरिमाणसत्त्वप्रमामुत्पादयतीति व्याप्तिज्ञानजन्यज्ञानत्वेन तत्प्रमाया अनुमितित्वं तत्करणस्याप्यनुमानत्वमेवेति भावः।

---

१ यद्=अनुमानं न, न तद् अविनाभावबलेनार्थप्रतिपादकमित्यर्थः। यत्र यत्र खारीत्वं तत्र तत्र द्रोणादिसत्त्वमिति व्याप्यव्यापकभावोऽप्यत्रावसेयः। २ यत्र हि सहस्रं तत्रावश्यं शतं संभवतीत्यविनाभावस्य ग्रहणात्। तथा च—"सहस्रं स्वसमुदायिशतवत्, सहस्रत्वात्, पूर्वोपलब्धसहस्रवत्"। ३ द्रोणादिपरिमाणाभाववदवृत्ति। ४ लोकतः शास्त्रतश्च अविनाभूतत्वेनावगतम्।

यच्च—"अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रम् 'इति होचुर्वृद्धाः' इत्यैतिह्यम्, यथा 'इह वटे यक्षः प्रतिवसति' इति," न तत् प्रमाणम्, अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्।

---

तत्र "इयं खारी द्रोणवती, तद्‌घटितत्वात्, यद्येन घटितं तत्तेन तद्वत्, यथा यववान् घटः" इति प्रयोगः। एवं 'शतवान्' इत्युक्ते 'पञ्चाशद्वान्' इति ज्ञानं संभवति, तस्याप्यनुमानेनैव निर्वाहः, शतस्य पञ्चाशद् व्याप्यत्वात्। अत्रायं प्रयोगः—"शतं पञ्चाशद्वत्, तद्‌घटितत्वात्, इति। देवदत्तः पञ्चाशद्वान्, शतवत्त्वात्, यथाऽहम्, इति च। एवमन्यदप्यूह्यम्। यत्तु 'संभवति ब्राह्मणे विद्या,' 'संभवति क्षत्रिये शौर्यम्' इत्यादि, तत्प्रमाणमेव न भवति, अनिश्चायकत्वात्। ततश्च व्याप्तिसापेक्षः संभवोऽनुमान एवान्तर्भवति, तन्निरपेक्षस्तु प्रमाणमेव नेत्यत्र विभावनीयम्॥ ७॥

ऐतिहासिकैः पुनरैतिह्यस्य प्रमाणान्तरत्वमङ्गीक्रियते, तन्निरसितुं न्यायभाष्योक्तं तत्स्वरूपं तावदाह—यच्चेति। असौ उच्चारयिता एतद्‌गोचरप्रमावान् इत्येवं विशेषेण न निर्दिष्टः=निश्चितः प्रवक्ता यस्य तद् अनिर्दिष्टप्रवक्तृकम्, 'इह वटे यक्षः' इत्यस्य प्रथमः प्रवक्ता येन तत्र यक्षो दृष्टः स्यात् स निर्देष्टुं न शक्यते इत्यर्थः, एवम्भूतं प्रवादपारम्पर्यमात्रम्=प्रचुरजनरवस्य पौर्वापर्येणानुक्रममात्रं यद् "वृद्धा इति ह कथयन्ति" इत्येवंविधं वचनं तदैतिह्यमित्यर्थः। 'इति ह' इति निपातसमुदायः पुरावृत्ते, तस्य भाव ऐतिह्यम्" इत्युपस्कारकृतः शङ्करमिश्राः। यद्वा "पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम्" इत्यमराद् "इति ह" इति निपातसमुदायः पारम्पर्योपदेशार्थकः, तस्मात् "अनन्तावसथेतिह भेषजाञ्ञ्यः" (५।४।२३) इति स्वार्थे ञ्यप्रत्यये ऐतिह्यमिति साधनीयम्। परम्परैव पारम्पर्यं[1] पारम्पर्येणोपदेशः पारम्पर्योपदेशः, इति भरतः, परम्पराया आगतः पारम्पर्यं[2]ः स चासावुपदेशश्चेति पारम्पर्योपदेश इति भानुजिदीक्षितः, तत्र 'इति ह शब्दोऽव्ययम्' इति अमरग्रन्थार्थः। किमूचुर्वृद्धा इत्याकाङ्क्षां शमयितुं तदुदाहरति—यथेह वट इति। ऐतिह्यस्य कुत्रान्तर्भाव इत्याशङ्कायामाह—न तत्प्रमाणमिति। प्रमाणस्य सतः प्रमाणत्रयान्तर्भावविचारो युक्त ऐतिह्यन्तु प्रमाणमेव नास्तीति नात्र प्रमाणान्तर्भावविचारावसर इति भावः।

कुतो न प्रमाणमित्याशङ्कायाम्; ऐतिह्यस्याप्रमाणत्वे हेतुमाह—अनिर्दिष्टेति। अनिश्चितोच्चारयितृत्वेन सन्दिग्धत्वात् इत्यर्थः। तथाच तस्याप्तवाक्यत्वसंशयेन तज्जन्यज्ञानस्यापि संशयरूपतया प्रमाजनकत्वाभावेन न प्रमाणत्वमिति भावः। यदि त्वस्य प्रवादस्य प्रवक्ता आप्तविशेष इति निश्चयः स्यात्तदा स्यागमान्त-

---

१ स्वार्थे ष्यञः। २ तत आगत इत्यण्, चतुर्वर्णादित्वात् ष्यञ्। 'इतिह' इति निपातसमुदायः प्रवादवाची, इतिह—एव, ऐतिह्यं=प्रवादः 'स्वार्थेञ्यः' इति मल्लिनाथः।

आप्तवक्तृकत्वनिश्चये त्वागम एव, इत्युपपन्नम् "त्रिविधं प्रमाणम्" इति ॥ ५ ॥

---

गैतत्त्वमेवेत्याह—आप्तेति । सुदृढेन प्रमाणेनावधारितपदार्थैत्थंभाव आप्तः, स वक्ता=आद्योपदेष्टा यस्य पारम्पर्योपदेशस्य स आप्तवक्तृकः, तस्य भावस्तत्त्वं, तस्य निश्चये तु=पारम्पर्योपदेशस्याप्तोक्तत्वनिश्चयेत्वित्यर्थः, आगम एव=आप्तश्रुतित्वेनागमप्रमाणान्तर्भूतमेव तदैतिह्यमिति न तत् प्रमाणान्तरमित्यर्थः ।

तदुक्तं प्रशस्तपादैः—"ऐतिह्यमपि अवितथम्[1] आप्तोपदेश एव" इति । अत्र 'अवितथम्' इत्युक्त्या वितथमप्रमाणमेवेति बोधितम् । ततश्च तद्यद्याप्तोक्तं तदा शब्दान्तर्निवेशादनुमानम्, अनाप्तोक्तं चेत्तदा न प्रमाणमित्युभयथापि नास्य प्रमाणान्तरत्वकल्पनावश्यकीति भावः ॥ ॐ ॥

एवं चेष्टापि प्रमाणान्तरमिति तान्त्रिकाः । तथाहि—यं किल पुरुषाः परस्परं सम्भूय "अनया हस्तादिचेष्टया त्वयाऽयमर्थो बोद्धव्यः" इत्येवं नानाविधान् चेष्टासङ्केतान् कुर्वन्ति, नूनं तैस्तादृशचेष्टया तत्तदर्थोऽवबुध्यते, तत्र च तादृशविजातीयज्ञानस्य चेष्टां विहाय नान्यत् करणमस्तीति विजातीयज्ञानकरणत्वेन चेष्टापि पृथक् प्रमाणमिति ।

तत्रोच्यते—चेष्टा[2] हि द्विविधा—कृतसमया, अकृतसमया च । तत्र कृत[3]समया अभिप्रायस्थं शब्दं स्मारयति न तु संसर्गप्रमामपि जनयति लिपिवत् । स्मृत्यारूढः शब्द एव तत्र प्रमाणं शब्दस्य च लिङ्गत्वमुक्तं, न च शब्दस्मरणं चेष्टाया अवान्तरव्यापारः, चेष्टामन्तरेणापि शब्दादर्थप्रत्ययात्, व्यापारत्वे तु चेष्टानैयत्यापत्तेः । नन्वेवं कथमेडमूकस्य चेष्टाधीनो व्यवहारस्तस्य तत्र समयग्रहाभावादिति चेत्, न । तस्य चेष्टातः कथमर्थेऽपि संप्रत्यय इति चिन्तनीयत्वात् तस्यार्थेऽपि सङ्गतिग्रहाभावात् । व्यवहारस्तु तस्याविनाभावग्रहात् करितुरगयोरिव कशाङ्कुशाभिघातात् तत्तद्व्यवहारपाटवोपपत्तेः ।

---

१ अवितथम्=आप्तोक्तिमूलकत्वेन यथार्थभूतम् इत्यर्थः । ऐतिह्यमपि अवितथम्=यथार्थम् आप्तोदेश एव न प्रमाणान्तरम्, विपर्यये त्वप्रामाण्यमिति भावः । २ "प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव" इति प्रशस्तभाष्यम् । प्रसिद्धोऽभिनयः=चेष्टा कायिको व्यापारोऽर्थविशेषाविनाभूतो यस्यासौ तथोक्तस्तस्य चेष्टयाऽर्थविशेषे प्रतिपत्तिः । यथा–मुखाञ्जलिसंयोगाद् विशिष्टात् पिपासाप्रतिपत्तिः । तस्य तया पूर्वमविनाभावोपलब्धेः । तथा चायं पिपासान्वितो विशिष्टमुखाञ्जलिसंयोगवत्त्वात्, तदन्यैवंविधदेवदत्तवत् । एवमन्यापि चेष्टाऽनुमानेऽन्तर्भावनीयेति भाष्यार्थः । ३ कृतसमया हि लिप्यादिवत् अभिप्रेतं शब्दमेव स्मारयति, न किंचित्प्रमापयतीति लिपिरिव सापि न प्रमाणमित्यर्थः । एतदुक्तं भवति—अनया चेष्टया केवलं पदार्थाः स्मार्यन्ते, न तु तेषां संसर्गोऽपि बोध्यते, इति प्रमितिविरहान्न प्रमाणत्वमस्या इति ।

अकृतसमया तु या कृत्यान्वयिनी, सा प्रयोजकाभिप्रायं स्मारयन्ती प्रयोज्यं प्रवर्तयति, न तु कुत्रचित्प्रमां जनयति, यथा शङ्खध्वनौ त्वया गन्तव्यमिति श्रुत[1]शङ्खध्वनिः प्रतिष्ठते, तथा यदा मया तर्जन्यूर्ध्वीक्रियते तदा त्वयाऽसौ ताडनीय इति तदा ताडयति, न तु किञ्चित् प्रमिणोति । कृ[2]त्यन्वयिनी त्वकृतसमया यथा—दशानामङ्गुलीनामूर्ध्वकरणेन दशसंख्या मुद्राणां पुराणानां वा त्वया ज्ञातव्येति कारकप्रधाना, हस्ताकुञ्चनदर्शनात् त्वया समागन्तव्यमिति क्रियाप्रधाना, तथा चानया चेष्टया पदार्था एव स्वतन्त्राः परं[3] स्मार्यन्ते, न तु तेषां परस्परमन्वयोऽपि बोध्यते, तद्बोधककर्तृकर्मादिविभक्तिवत् प्रकृते चेष्टैकदेशानां नियतानामभावात् । तर्हि संसर्गबोधमन्तरेण चेष्टातः कथं प्रवृत्तिनिवृत्ती इति चेत्, संशयप्रतिभयोरन्यतरस्मादिति गृहाण । तस्मान्न चेष्टापि प्रमाणमिति ॥ ❀ ॥

प्रमाणप्रकरणमुपसंहरन् मूलं सङ्गतयति—इत्युपपन्नमिति । यतोऽन्यैः पृथक्प्रमाणत्वेनाभिमतानामुपमानादीनां प्रमाणत्रय एवान्तर्भावसंभवः इति= अतः "त्रिविधं प्रमाणमिष्टम्" इति यदाचार्यैरभिहितं तदेव युक्तमित्यर्थः ॥

अत्रेदं बोध्यम्—"प्रमाता, प्रमाणम्, प्रमेयम्, प्रमितिः" इति चतुर्ष्वेव पदार्थमात्रमन्तर्भवति नैभ्यो बहिर्भूतं किंचिदपि संभवति । यथा—लोके ये पदार्थाः सन्ति तेषु कश्चित् प्रमाता वा प्रमेयं वा प्रमाणं वा प्रमितिर्वा स्यात् नार्थान्तरम्, यथा "घटमहं जानामि" इत्यत्राहम्पदार्थः प्रमाता, घटश्च प्रमेयः, धात्वर्थः प्रमितिः, प्रमितिजनकं च प्रमाणं नान्यत् किमप्यत्राशिष्टमस्ति यस्योक्तचतुष्टयातिरिक्तत्वं स्यात्, एवमेव सर्वत्र पदार्थानां प्रमात्रादिचतुष्टयेऽन्तर्भावो विज्ञेयः । तत्र ईप्साजिहासाभ्यां प्रेरितो यः प्रवर्तते स प्रमाता[4], स येन प्रत्यक्षादिना पदार्थं यथार्थरूपेण विजानाति तत् प्रमाणम्, योऽर्थः प्रमाणेन ज्ञायते तत् प्रमेयम्, प्रमाणजन्यं यथार्थं पदार्थज्ञानं पौरुषेयो बोध एव प्रमितिः । तद् यथाहुर्न्यायभाष्यकाराः—

यस्येप्साजिहासायुक्तस्य प्रवृत्तिः स प्रमाता, स येनार्थं प्रमिणोति तत्प्रमाणम्, योऽर्थः प्रमीयते[5] तत् प्रमेयम्, यदर्थविज्ञानं सा प्रमितिः, चतसृषु चैवंविधा[6]स्वर्थतत्त्वं परिसमाप्यते" इति ॥

तत्र त्वेष सांख्यसिद्धान्तः—"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः । सा चैकैव, पुरुषास्तु परं भिद्यन्ते, ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः । ते च पङ्गवोऽपरिणामित्वात्, प्रकृतिस्त्वन्धा जडत्वात् । यदा विषय-

१ श्रुतः शङ्खध्वनिर्येन तथा भूतः, प्रतिष्ठते=गच्छति । २ कृत्यं=कार्यं ज्ञप्तिर्शानम् । ३ परं=केवलम् । ४ सांख्यसिद्धान्ते बुद्धिप्रतिबिम्बितश्चेतनः प्रमाश्रयत्वात्प्रमाता । बुद्धिवृत्त्युपहितशुद्धचेतनस्तु साक्ष्येव न प्रमातेति ध्येयम् । ५ प्रमाणेन ज्ञायते, ६ एवं विधासु=उक्तेषु प्रमात्रादिषु, अर्थतत्त्वम्=पदार्थमात्रम् परिसमाप्यते=अन्तर्भवति ।

एवं तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि । तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांशुलपादको हालि-

---

भोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात्परिणमते । तस्याश्चाद्यः परिणामो बुद्धिरन्तःकरणविशेषः । बुद्धिरेव महत्तत्त्वम् । सा च बुद्धिर्दर्पणवन्निर्मला, तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारो यः परिणतिभेदो घट पट इत्याद्याकारस्तज् ज्ञानं वृत्तिरिति चाख्यायते, स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहाद् 'अहं जानामि' इति योऽभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसन्निकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः । अत एव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्वे एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च, पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते बुद्धाविति ।

सोऽयमर्थो नान्तरेण प्रमाणं कथंचित्सेद्धुमर्हतीति प्रमाणनिरूपणम्, प्रमाणेनैव हि कश्चिदर्थः प्रमीयते नान्तरेण प्रमाणम् । प्रथमं प्रमाणेन पदार्थप्रमितिर्जायते, ततः प्रवृत्तिः, ततः फलोपलब्धिः' इत्येतस्य क्रमस्य सर्वजनीनत्वात् ।

तद् यथोक्तं न्यायभाष्ये—

"प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्" इति ।

इत्यलं बहुना पल्लवितेनाप्रासङ्गिकेनेति दिक् ॥

इति श्रीसारबोधिन्यां प्रमाणनिरूपणम् ॥ ५ ॥ ॐ ॥

## अथ प्रमाणविषयनिरूपणम् ।

निरूप्यैवं प्रमाणानि त्रिविधानि सविस्तरम् ।

यदर्थस्तु प्रयासोऽयं तत्प्रमेयं[1] निरूप्यते ॥ १ ॥

वृत्तवर्तिष्यमाणार्थयोः सङ्गतिं वदन् षष्ठकारिकामवतारयति—एवं तावदिति । तावदिति वाक्यालङ्कारे । व्यक्तम्=इन्द्रियगृहीतं पृथिव्यादि, अव्यक्तम्=अतीन्द्रियं प्रधानादि, ज्ञः=चेतनः पुरुषः, एतत्त्रिविधलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानीत्यर्थः । ननु त्रयाणां प्रमेयाणां मध्ये किं त्रिविधमेव प्रमेयं प्रकृतशास्त्रेण व्युत्पाद्यमस्ति, उताहो एष्वन्यतमं किंचिद् इत्यत्राह—तत्रेति । तत्र=त्रिविधप्रमेयमध्ये यद् व्यक्तं पृथिव्यादि तत् स्वरूपतः=घटपटोपललोष्टाद्यात्मकस्थूलरूपेण पांसुलपादकः=पांसुलौ[2]=धूलिधूसरितौ पादौ=चरणौ

---

१ साक्षादेवापवर्गोपयोगिज्ञानविषयत्वेन मोक्षार्थिभिः प्रकर्षेण मेयं प्रमेयम् । एतदुक्तं भवति—यद्विषयं मिथ्याज्ञानं संसारमातनोति यद्विषयं च तत्त्वज्ञानं तन्निवर्तयति तत्प्रमेयमिति । तच्च सांख्यसिद्धान्ते व्यक्ताव्यक्तज्ञरूपम् । परमार्थस्तु अव्यक्तं ज्ञश्चेति द्वयमेव प्रमेयमिति सारबोधिन्यामत्रैवाग्रिमकारिकायां व्यक्तम् ॥ २ धूलिवाचकात् पांशुशब्दात् 'सिध्मादिभ्यश्च' इति मत्वर्थे लच् ।

कोऽपि प्रत्यक्षतः प्रतिपद्यते, पूर्ववता चानुमानेन धूमादिदर्शनाद्वह्न्यादीनि चेति, तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रम्, इति दुरधिगमम् अनेन व्युत्पादनीयम् । तत्र यत्प्रमाणं यत्र शक्तम् तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति—

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ॥**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम् ॥ ६ ॥**

"सामान्यतस्तु" इति । 'तु'—शब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि। सामान्यतो दृष्टादनुमानाद्=अध्यवसायाद् अतीन्द्रियाणां=

---

यस्य स तादृशः हालिकोऽपि=हलवहनशीलो निरक्षरोऽपि नरः प्रत्यक्षतः=प्रत्यक्षेण प्रतिपद्यते=जानाति, एवं पूर्ववत्संज्ञकेन चानुमानेन व्यवहितानि वह्न्यादीन्यपि प्रतिपद्यते, यत एवम् इति=अतः तद्व्युत्पादनाय=एतादृग् व्यक्तपृथिव्यादिबोधनाय यद्येतच्छास्त्रं स्यात् तर्हि मन्दप्रयोजनम्=अल्पफलं निष्फलं वैतच्छास्त्रं भवेद् इति=अतः शास्त्रस्य सफलत्वाय दुरधिगमम्=दुरवबोधं प्राकृतनराविदितम् अव्यक्तादिकमेव अनेन=तन्त्रेण प्रतिपादनीयं न व्यक्तमित्यर्थः । लौकिकप्रमेयस्य लोकत एव सिद्धेर्न तदर्थं शास्त्रम् । तथाच—अव्यक्तं ज्ञश्चेति द्वयमेवैतत्प्रमेयमित्यत्र फलितम् । तत्र=व्यक्तस्याप्रतिपाद्यत्वेऽव्यक्तपुरुषयोश्च प्रतिपाद्यत्वे स्थिरे सति, अव्यक्तप्रधानादिमध्ये वा, यत्र=यस्मिन्नतीन्द्रिये यत् प्रमाणं शक्तं=समर्थं तत् प्रमाणम् उक्तप्रमाणेभ्यो निष्कृष्य=विभज्य दर्शयतीत्यर्थः ॥ ॐ ॥

सामान्यत इति । अतीन्द्रियाणां=प्रधानपुरुषादीनां प्रतीतिः=प्रतिपत्तिः—ज्ञानं सामान्यतोदृष्टादनुमानात् (उपलक्षणविधया) शेषवतोऽनुमानाच्च भवति । तस्मात्=सामान्यतोदृष्टानुमानात् चकारेण शेषवदनुमानाच्च यत् परोक्षम्=अतीन्द्रियम् असिद्धम्=अप्रतीतं भवेत् तत् आगमप्रमाणात्सिद्धं भवतीत्यर्थः ॥ ६ ॥

कारिकां व्याचक्षाणः 'सामान्यतस्तु' इति 'तु' शब्दस्य कृत्यं वक्ति—तु शब्द इति । 'सामान्यतस्तु' इति तुकार इत्यर्थः । अत्र 'तु शब्द' इत्युपलक्षणम् । 'सामान्यतो दृष्टात्' इत्यनुमानविशेषणोपादानं चेत्यपि

---

१ 'तद्वहति' इत्यधिकारे "हलसीराट्ठक्" इति ठक् । २ यतः शास्त्रसंस्काररहितोऽपि नरोव्यक्तं पृथिव्यादिकं जानात्यत इत्यर्थः । ३ मन्दम्=अल्पं प्रयोजनं=फलं यस्येति विग्रहमभिप्रेत्योक्तम्—अल्पफलमिति । मन्देषु=खलेषु प्राकृतेषु प्रयोजनं यस्येति विग्रहेण तु—निष्फलमिति ।

प्रधानपुरुषादीनां प्रतीतिः=प्रतिपत्तिः, ( चिच्छायापत्तिर्बुद्धेरध्यवसाय इत्यर्थः । )

---

बोध्यम् । तथाच—तु शब्दः प्रत्यक्षाद् विशिनष्टि, सामान्यतो दृष्टादिति विशेषणं च पूर्ववन्नामकादनुमानाद् विशिनष्टि=व्यवच्छिनत्ति—पृथक् करोति सामान्यतो[2] दृष्टानुमानमिति शेषः । प्रधानादीनां प्रतीतिर्न प्रत्यक्षात्, नापि पूर्ववदनुमानादपि तु सामान्यतो दृष्टादनुमानाद् भवतीत्येवं व्यवस्थापयतीति भावः । तथाच सांख्यसूत्रम्—"सामान्यतो दृष्टादु[3]भयसिद्धिः" ( १। १०३ ) इति ।

सांख्यमते बुद्धिवृत्तेरेव प्रमाणत्वात् अनुमानपदार्थं तथैव विवृणोति—अध्यवसायादिति । लिङ्गज्ञानजन्यबौद्धबोधात्मकादनुमानादित्यर्थः । व्याप्तिज्ञानादिजन्यो 'वह्निमानयम्' इत्याद्याकारो यो बुद्धेर्वृत्तिविशेषस्तद्रूपाध्यवसायस्यैवानुमानप्रमाणत्वादिति भावः । आदिशब्दात् महत्तत्त्वादीनां ग्रहणम् । प्रतीतिः=पौरुषेयबोधात्मकफलरूपानुमितिरित्यर्थः ।

ननु जडायाः बुद्धेः कथं ज्ञानरूपोऽध्यवसाय इत्यत्राह—चिच्छायापत्तिरिति । चित्सन्निधानेन या बुद्धेश्चित्—तादात्म्यापत्तिस्तद्बलादेव बुद्धेर्ज्ञानरूपो व्यापार इत्यर्थः ।

यथाच बौद्धबोधस्य प्रमाणत्वं पौरुषेयबोधस्य च प्रमात्वं तथा पञ्चमकारिकायां प्रत्यक्षलक्षणावसरे प्राक् प्रपञ्चितमेवेति नात्र किंचिद् वचनीयम् । अन्ये त्वेवं व्याचक्षते—ननु यद्यध्यवसायोऽनुमानं तदा का नाम तज्जन्या प्रतीतिरित्यत्राह—चितीति । बुद्धेरध्यवसाये चितेः=चिद्रूपस्य पुरुषस्य छायापत्तिः= प्रतिबिम्बसंबन्धः । तथाच 'वह्निमान्' इत्यादिरूपो बुद्धेरध्यवसायोऽनुमानं प्रमाणम् । तत्रैवाध्यवसाये चित्संबन्धोऽनुमितिरिति ॥ ❀ ॥

ननु "तन्मात्रेन्द्रियाणि अभिमानवद् द्रव्योपादानकानि, अभिमानकार्य द्रव्यत्वात्, यन्नैवं तन्नैवं यथा पुरुषः" इत्येवं शेषवदनुमानादपि केषांचिदतीन्द्रियाणां प्रतीतेः सत्त्वात्कथमभिहितं सामान्यतो दृष्टानुमानात्प्रतीतिरिति,

---

१ कोष्ठान्तर्गतः पाठः कथंचिद् योजितोऽपि न मानसं रञ्जयति, न हि 'प्रतीतिः' इत्यस्य विवरणमिदं भवितुमर्हति, प्रतीतिर्हि अनुमितिरूपत्वेन पौरुषेयेति तस्या बुद्ध्यध्यवसायत्वासंभवात्, किं तु सर्वत्र पुस्तकेषु पाठोऽयं दृश्यत इत्यस्माभिरपि कोष्ठकाभ्यन्तरेऽयं निहितः कथंचिन्नापितश्चेति बोध्यम् । २ किं व्यवच्छिनत्तीति जिज्ञासां शमयति—सामान्यतोदृष्टमिति । तथा च पूर्वकारिकया प्रत्यक्षमनुमानत्रयमाप्तवचनं चेति प्रमाणानि निरूपितानि, तेषु मध्ये अतीन्द्रियाणां प्रतीतौ प्रत्यक्षं दृष्टस्वलक्षणसामान्यरूपं वीतमनुमानं च न प्रमाणमिति तत्प्रमाणद्वयं व्यवच्छिद्य तद्भिन्नम् अदृष्टस्वलक्षणसामान्यरूपं वीतमनुमानमेव प्रमाणमिति 'तु' कारो बोधयतीति सरलार्थः । ३ उभयोः=प्रकृतिपुरुषयोः सिद्धिः सामान्यतो दृष्टादनुमानाद् भवतीत्यर्थः ।

उपलक्षणं चैतत् शेषवत इत्यपि द्रष्टव्यम् ।
तत्किं सर्वेष्वतीन्द्रियेषु सामान्यतो दृष्टमेव प्रवर्तते, तथा च

---

इत्याशङ्कायामाह—उपलक्षणं चैतदिति । एतत्=सामान्यतो दृष्टपदम् । शेषवतः=अवीतात् केवलव्यतिरेक्याख्यपरिशेषानुमानादपि केषांचिदतीन्द्रियाणां प्रतीतिरित्यपि द्रष्टव्यमित्यर्थः ।

अत्रायमतीन्द्रियानुमितिप्रयोगः प्रदर्श्यते—

"स्थूलद्रव्याणि सजातीयसूक्ष्मद्रव्योपादानकानि, यथा घटादिः । ततश्च "स्थूल[1]भूतानि तन्मात्रोपादानकानि, स्थूलत्वात्" इत्यनुमानात् तन्मात्राणामतीन्द्रियाणां सिद्धिः । तथा—"क्रिया सकरणिका, छिदादिवत् । तस्मात् "ज्ञानं करणवत्, क्रियात्वात्" इत्यतीन्द्रियसिद्धिः । तथा—यद्द्रव्यं यद्द्रव्यकार्यं तद्द्रव्यं तदुपादानकम्, मृत्कार्यघटादेर्मृदुपादानकत्ववत् । एवं च "तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि, अभिमानवद्द्रव्यकार्यत्वात्" इत्यहङ्कारसिद्धिः । अहङ्कारश्चाभिमानवृत्तिकम् अन्तःकरणं द्रव्यमेव । तन्मात्रादीनां तत्कार्यत्वं च "अहं बहु स्यां प्रजायेय" इति श्रुत्या आदिमसृष्टेरभिमानपूर्वकत्वाम्नानात्सिद्धम् ।

अहङ्कारतत्त्वं च निश्चयवृत्तिकबुद्धितत्त्वोपादानकं, बुद्धितत्त्वकार्यद्रव्यत्वात् । बुद्धितत्त्वं=महत्तत्त्वम् । अहङ्कारस्य तत्कार्यत्वं च "तदैक्षत बहु स्याम्" इति श्रुत्या अहङ्कारस्य बुद्धिपूर्वकत्वाम्नानात् सिद्धम् । दृश्यते च लोके कर्तव्यपदार्थे निश्चयपूर्वक एव "अहमेतत् करवाणि" इत्यभिमानो जायत इति । इत्थमहङ्कारेण बुद्धितत्त्वानुमानम् । तथा यत्कार्यं यद्धर्मकं तत् तद्धर्मकवस्तूपादानकम्, यथा नानावर्णः पटः । तथासति "बुद्धितत्त्वं सुखदुःखमोहधर्मक[2]द्रव्योपादानकं, सुखदुःखमोहधर्मककार्यत्वात्" इत्यनुमानेन प्रधानसिद्धिः । तथा 'ये ये संहतास्ते[3] परोपकारकाः, शय्यासनगृहादिवत्' । एवं च "प्रकृतिमहदादिकं परार्थम्[4], संहतत्वात्" इति पुरुषानुमानम् । तदिदं सर्वं १४।१५। १६।१७। इति कारिकासूत्तरत्र मूल एव स्फुटीभविष्यतीत्यास्तां विस्तरः ॥ ॐ ॥

आर्योत्तरार्धभागस्य सङ्गतिमाख्यातुं शङ्कते—तत्किमिति । 'तत्' इत्यव्ययं 'तर्हि' इत्यर्थकम् । समस्तातीन्द्रियसिद्धौ किं सामान्यतो दृष्टमेवानुमानं प्रमाणमित्यर्थः । ओमिति वदन्तं प्रत्याह—तथाचेति । तथाच=एवं सति यत्र=यस्मिन्नतीन्द्रिये तत्=सामान्यतो दृष्टानुमानं शेषवद् वा नास्ति=न प्रवर्तते

---

१ स्थूलत्वं च बाह्येन्द्रियग्राह्यगुणकत्वम् । २ यद्यपि प्रधानादीनां निमित्तकारणत्वाभ्युपगमे कार्येषु कारणधर्मप्राप्तिर्न घटते, तथापि परिणामवादिनां सर्वत्रोपादानकारणत्वस्यैव वर्णनीयतया कार्ये कारणधर्मप्राप्तिरावश्यकीति द्रष्टव्यम् । ३ संहतास्तु आरम्भकसंयोगवन्तः, अवयवकूटात्मका इति यावत् । ४ स्वेतरभोगापवर्गसाधनम् ।

यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्वदेवतादौ च तेषामभावः प्राप्तः, इत्यत आह—"तस्मादपि" इति ।

'तस्मादपि' इत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितम् ॥ ६ ॥

स्यादेतत्,—यथा गगनकुसुमकूर्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्तमानं तदभावमवगमयत्येवं प्रधानादिष्वपि, तत्कथं तेषां सामान्यतो दृष्टादिभ्यः सिद्धिरिति, अत आह—

---

तेषामभावः प्राप्तः स्यादित्यन्वयः । कुत्र तन्नास्तीत्याकाङ्क्षायां 'यत्र' इत्यस्य विवरणमाह—महदाद्यारम्भक्रम इति । "प्रकृतेर्महान् महतोऽहङ्कारः" इत्याद्याविर्भावक्रमे, स्वर्गादिपरलोके च, अपूर्वाख्यधर्माधर्मयोश्च, इन्द्रादिदेवतासु चेत्यर्थः । आदिना यागादीनां स्वर्गादिसाधनत्वे, क्षीरसमुद्रादौ चेति ज्ञेयम् । एषु हि नानुमानं प्रमाणमुपसर्पतीति अतीन्द्रियसिद्धौ प्रमाणान्तरानङ्गीकारेऽभावप्रसङ्ग इति भावः । न्यूनतां पूरयति—चकारेणेति । तस्मात्=सामान्यतो दृष्टानुमानात् चकारेण शेषवदनुमानाच्च यदतीन्द्रियमप्रतीतं भवेत् तदागमप्रमाणात्सिद्धं भवतीत्यर्थः । तथाच परोक्षेप्रत्यक्षानुमानयोरविषये श्रुतिरेव मानम् ।

तत्र च महदाद्युत्पत्तिक्रमे—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥

इति श्रुतिर्मानम् । स्वर्गादौ च "स्वर्गकामो यजेत" इत्यादिश्रुतिः प्रमाणमिति भावः ॥ ६ ॥ ॐ ॥

## अथ प्रत्यक्षप्रतिबन्धकनिरूपणम् ।

सप्तमकारिकामुत्थापयितुं शङ्कते—स्यादेतदित्यादिना । एतत्=वक्ष्यमाणं भवेदित्यर्थः । 'पूर्वोक्तं भवतु' इति तु नार्थः, पूर्वोक्तस्य भवने शङ्काया एवानुत्थितेः । तदभावम्=आकाशकुसुमाद्यभावम्, एवं प्रधानादिष्वप्यप्रवर्तमानं प्रत्यक्षं प्रधानाद्यभावमवगमयेदित्यर्थः । तत्कथं तेषामिति । तत्=तस्मात्, तेषाम्=प्रधानादीनाम् । तथाच असत्त्वेन निश्चिते वस्तुनि न प्रमाणावतारः संभवतीति भावः ॥ ॐ ॥

---

१ सामान्यतो दृष्टम् । २ अपूर्वम्=अदृष्टं—विहितनिषिद्धक्रियाजन्यं सूक्ष्मं कर्मेत्यर्थः । अपूर्वं विनाऽऽशु विनाशिनो यागस्य स्वर्गसाधनत्वासंभवात् ।

अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात्समानाभिहाराच्च ॥७॥

"अतिदूराद्" इति । 'अनुपलब्धिः' इति वक्ष्यमाणं (का० ८) सिंहावलोकनन्यायेनानुषञ्जनीयम् । यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते ।

सामीप्यादित्यत्राप्यतिरनुवर्तनीयः, यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते ।

---

अतिदूरादिति । भावपरो निर्देशः । अतिदूरत्वात्, (अति) सामीप्यात्, दोषवशादिन्द्रियाणां स्वस्वकार्याक्षमत्वम् इन्द्रियघातस्तस्मात्, मनसोऽनवस्थानात्—इन्द्रियसन्निकृष्टेष्वपि विषयेष्वप्रवर्तनात्–विषयान्तरे अवस्थानादिति यावत्, सौक्ष्म्यात्, व्यवधानात्, अभिभवात्, समानेन सजातीयेन वस्तुना अभिहारात्–मिश्रणात्, चकारेण अनुद्भवाच्च वस्तुन उपलब्धिर्न भवतीत्यर्थः ॥ ७ ॥ ॐ ॥

'अतिदूरत्वादिहेतुभ्यः' किं भवति ?" इत्याशङ्कायाम् आकाङ्क्षासमापकपदानुसन्धानेन वाक्यं पूरयति—अनुपलब्धिरितीति । वक्ष्यमाणम्=उत्तरार्यायां विद्यमानम् "अनुपलब्धिः" इति पदम् अत्र पूर्वार्यायामपि वाक्ययोजनापूरणाय अनुषञ्जनीयम्=संबन्धनीयमित्यर्थः ।

उत्तरवाक्यगतपदानां पूर्वत्रानुषङ्गे न्यायमाह—सिंहेति[2] । यथा हि वने व्रजन् सिंहो मध्ये मध्ये हिंसकभीत्या पृष्ठभागमपि विलोकयति, तथोत्तरवाक्यस्थपदानां पूर्ववाक्येष्वप्यनुसन्धानं संभवतीत्यर्थः । तद् यथोक्तमभियुक्तैः—

"सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च ।
गङ्गास्रोत इति ख्याता अधिकारास्त्रयो मताः ॥"

"अतिदूरादनुपलब्धिः" इत्यस्योदाहरणमाह—यथोत्पन्निति । सन्नपि=विद्यमानोऽपि पतत्री=पक्षी, वियति=आकाशे उत्पतन्=उड्डीयमानः अत्यूर्ध्वं गतः सन्नतिदूरतया हेतुना प्रत्यक्षेण नोपलभ्यत इत्यर्थः ॥ 'अतिदूरात्' इति भावप्रधानो निर्देश इत्याशयेनोक्तम् अतिदूरतयेति । हेतौ तृतीयेयम् । अयं च दूरत्वदोषः क्वचिदेव, तेन सूर्यादिमण्डलदर्शने न व्यभिचार इत्यवधेयम् ।

---

१ संबन्धग्रहणाधीनजन्म ह्यनुमानम् । यागादेः प्रत्यक्षत्वेऽपि स्वर्गादेरप्रत्यक्षत्वान्नैव विशेषतः संबन्धग्रहणमिति भावः । २ एकमेवास्यं पञ्चसु दिक्षु भ्रामयतीति तदीयस्वभावः । अत एव पञ्चास्य इत्युच्यते सिंहः ।

इन्द्रियघातः=अन्धत्वबधिरत्वादिः ।

"मनोऽनवस्थानात्", यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति ।

"सौक्ष्म्यात्", यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति ।

"व्यवधानात्", यथा कुड्यादिव्यवहितं राजदारादि न पश्यति ।

"अभिभवात्", यथाऽहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति ।

"समानाभिहारात्", यथा तोयदविमुक्तानुदबिन्दून् जलाशये न पश्यति ।

---

इन्द्रियघातपदं विवृणोति—अन्धत्वेति । अस्य च "तस्मादिन्द्रियघाताद् विद्यमानं रूपं न पश्यति शब्दं च न शृणोति" इत्यन्ते शेषो बोध्यः ।

मनोऽनवस्थानात्=इतरव्यासङ्गेनेन्द्रियसंयोगाभावात्, कामाद्युपहतमनाः= कामादिविकारेण उपहतं=दूषितं मनो यस्य स तथा, स्फीतः=प्रचण्डत्वेन विस्तृतो य आलोकः=सूर्यादिप्रकाशस्तदभ्यन्तरे वर्तमानमित्यर्थः । अर्थम्=विषयम् । तथाच श्रुतिः—"अन्यत्रमना अभूवं नाश्रौषम्, अन्यत्रमना अभूवं नादर्शम्" इति ।

सौक्ष्म्यात्=निरवयवद्रव्यत्वात् प्रणिहितमनाः=समाहितचित्तः—अनन्यमनाः 'परमाण्वादि' इत्यादिना द्व्यणुकपरिग्रहः । तयोरुद्भूत[1]रूपवत्त्वाभावेन प्रत्यक्षाविषयत्वस्य सर्ववादिसिद्धत्वात् । परमाणुस्वरूपं वात्स्यायनभाष्ये—

"यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्तते, यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे" (४।२।१६)। कुड्यादीति । कुड्यम्=भित्तिः । आदिना जवनिकादिः । सौरीभिः=सूर्यसंबन्धिनीभिः, भाभिः=किरणदीप्तिभिः अभिभूतं= तिरस्कृतं चन्द्रातिरिक्तमङ्गलादिमण्डलम् अश्विन्यादिनक्षत्रमण्डलं च न पश्यतीत्यर्थः ।

सजातीयपदार्थमिश्रणं समानाभिहारस्तस्मात् तोयदेन=मेघेन विमुक्तान् उदबिन्दून्=जलकणान् जलाशये=तडाकादौ विभिन्नतया न पश्यति । मेघविमुक्तजलबिन्दूनां जलाशयगतजलैर्मिश्रीभावात् न पृथगुपलब्धिरित्यर्थः ।

---

१ प्रत्यक्षत्वप्रयोजकोधर्मविशेष उद्भूतत्वम् । प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगान्यतमत्वं वा ।

चकारोऽनुक्तसमुच्चयार्थः । तेनानुद्भवोऽपि सङ्गृहीतः । तद् यथा—क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति ।

एतदुक्तं भवति—न प्रत्यक्षनिवृत्तिमात्राद् वस्त्वभावो भवति, अतिप्रसङ्गात् । तथा हि—गृहाद् विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्, नत्वेवम् । अपि तु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति । न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यता, इति न तन्निवृत्तिमात्रात् तदभावनिश्चयो युक्तः प्रामाणिकानामिति ॥ ७ ॥

---

न्यूनतां पूरयति—चकार इति । अनुद्भवः=अनागतावस्थया सूक्ष्मरूपेण स्वोपादानेऽवस्थानम् ॥ ॐ ॥

यच्च शङ्कितं गगनकुसुमादिवत् प्रधानादीनामभाव एव किं न स्यादिति, तत्समाधानार्थं वदति—एतदुक्तं भवतीति । प्रत्यक्षनिवृत्तिर्विषयस्यातिदूरत्वादिनानाकारणात् संभवतीति प्रत्यक्षाभावमात्राद् विषयाभावो न प्रत्येतव्य इत्यर्थः ।

ननु अनुपलब्धिरेवाभावप्रमितौ प्रमाणमस्माभिरङ्गीक्रियते तत्कथं प्रधानादेः प्रत्यक्षानुपलम्भादभावो न प्रत्येतव्य इत्यत आह—अतिप्रसङ्गादिति । अतिप्रसङ्गमेवाह—तथाहीति । न त्वेवम्=एवं=गृहाद्विनिर्गतो गृहजनाभावं निश्चिनोतीत्येवं न तु=न हि दृश्यते लोक इत्यर्थः । अभावनिश्चये रोदनताडनादिप्रसङ्गादित्यपि द्रष्टव्यम् । तर्हि कीदृक् प्रत्यक्षनिवृत्तेरभावविनिश्चय इत्यत्राह—अपि तु योग्यप्रत्यक्षनिवृत्तेरिति । सावयवत्वादिसामग्रीसमवधानेन प्रत्यक्षयोग्यं यद् वस्तु तत्र प्रत्यक्षनिवृत्तेः अयं=जनोऽभावं निश्चिनोति, यथा सावयवानां शृङ्गादीनां शशादौ, प्रधानादीनां च निरवयवत्वेन प्रत्यक्षयोग्यता नास्ति, इति=अतः केवलप्रत्यक्षनिवृत्तिमात्रात् तेषामभावनिश्चयः प्रामाणिकानां=प्रमाणैर्व्यवहरमाणानां न युक्त इत्यर्थः । एतदुक्तं भवति—योग्यप्रत्यक्षनिवृत्तेर्हि विषयस्याभावो विनिश्चितो भवति न केवलप्रत्यक्षाभावमात्रादिति हि सर्ववादिसम्मतः पन्थाः । तत्र विषयस्य प्रत्यक्षयोग्यत्वं च प्रत्यक्षप्रतिबन्धकराहित्यमेव वक्तव्यम् । तत्प्रतिबन्धकानि तु विषयगतानि अतिदूरत्व–अतिसामीप्य–उद्भूत–रूपवत्त्वाभाव–अतिसूक्ष्मत्व–सूर्यादिकिरणाभिभूतत्व–सजातीयवस्त्वन्तरमिश्रितत्व–अनुद्भूतत्वानि । तथेन्द्रियगतो दोषो मनःसंयोगाभावश्चेति । तानीमानि उपलब्धिप्रतिबन्धकत्वादनुपलब्धिकार-

---

१ एतेन अनुपलब्धेः प्रमाणान्तरत्वाङ्गीकारिणां मतेऽपि योग्यानुपलब्धेरेव प्रमाणत्वं न त्वनुपलब्धिमात्रस्येति दर्शितम् ।

कतमत्पुनरेतेषु कारणं प्रधानादीनामनुपलब्धौ, इत्यत आह—

**सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च ॥ ८ ॥**

'सौक्ष्म्याद्' इति। अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवति, इत्यत आह—"नाभावात्" इति। कुतः?

---

णानीत्युच्यन्ते। एवं च तथाविधप्रतिबन्धकाभावेऽपि देशकालविशेषे यदि विषयस्योपलब्धिर्न जायते तदा तत्र देशे तत्र काले वा विषयरूपसहकार्यभावः प्रत्येतव्यो भवति। अत एव तथाविधप्रतिबन्धकाभावेऽपि गगनादिदेशे कुसुमादिप्रत्यक्षस्याजायमानत्वात् गगनकूर्मशशादिदेशेषु कुसुमलोमविषाणादीनामभाव एव निश्चीयते। प्रतिबन्धकसद्भावेऽपि विषयाभावनिश्चयाभ्युपगमे दूरस्थादीनामभावनिश्चयापत्तेः। प्रधानादीनां तु प्रत्यक्षयोग्यताप्रत्यक्षप्रतिबन्धकराहित्यं नास्ति, अपि तु प्रत्यक्षप्रतिबन्धकधर्मवत्त्वमेवास्तीति न प्रत्यक्षनिवृत्तिमात्रात् तदभावविनिश्चयो युक्तः प्रमाणविदां प्रामाणिकानामिति ॥ ७ ॥ ॐ ॥

## अथ प्रधानाद्यनुमापककार्यनिरूपणम्।

आशङ्कापूर्वकम् अष्टमकारिकामवतारयति—कतमत् पुनरिति। एतेषु=पूर्वोक्तातिदूरत्वाद्यष्टकारणानां मध्ये, कतमत्=किं कारणमित्यर्थः। उपलब्धिप्रतिबन्धकत्वेनानुपलब्धिकारणतया पूर्वमभिहितेषु अतिदूरत्वादिषु मध्ये प्रधानादीनामनुपलब्धौ कतमत्कारणमिति प्रश्नाद्धेतोराहेति यावत् ॥ ॐ ॥

सौक्ष्म्यादिति। अतिसूक्ष्मत्वाद्धेतोः तेषां=प्रधानादीनाम् अनुपलब्धिः=अप्रत्यक्षम्, अर्थात् यथा परमाण्वादावयोग्यत्वात् प्रत्यक्षं न प्रवर्तते, तथा सूक्ष्मे प्रधानादावपि प्रत्यक्षाप्रवृत्तिः। ननु यथा मधुरादयः षडेव रसा उपलभ्यन्ते तदितरस्य तु कस्यचिद् रसविशेषस्याभावादेव नोपलब्धिस्तथा प्रधानादीनामप्यनुपलब्धिरभावादेव भवतु न सौक्ष्म्यादिति शङ्कां परिहरति—नाभावादिति। सप्तमरसवत् प्रधानादयः सन्त्येव नेति कृत्वा न तदभाव इत्यर्थः। कुतः? कार्यतः तस्य=प्रधानस्य उपलब्धेः=अनुमानात्, कारणाभावे कार्यासंभवात् कार्यलिङ्गकानुमानेन तत्सिद्धेरित्यर्थः। किं पुनस्तत्कार्यं येन प्रधानानुमानं भवति? तत्राह—तच्च कार्यं महदाद्यस्ति। तत्पुनः कार्यं केनचिद्धर्मेण प्रकृतिसरूपं केनचिच्च धर्मेण प्रकृतिविरूपं भवतीत्यर्थः ॥ ८ ॥

---

१ चार्वाकाणां युक्तोऽपि प्रत्यक्षाप्रवृत्त्याऽभावनिश्चयः प्रमाणकुशलानां तु स न युक्त इति सूचयितुं प्रामाणिकानामिति।

'कार्यतस्तदुपलब्धेः' । तत् इति प्रधानं परामृशति । पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति "सङ्घातपरार्थत्वात्" (का. १७) इति ।

दृढतरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्तमानमयोग्यत्वान्न प्रवर्तत इति कल्प्यते, सप्तमस्तु रसो न प्रमाणेनावधारित इति न तत्र प्रत्यक्षस्यायोग्यता शक्याऽध्यवसातुमित्यभिप्रायः ।

---

"सौक्ष्म्यात् तदनुपलब्धिः" इति मूलेन "निरवयवत्वरूपसूक्ष्मत्वात् तेषां प्रधानादीनाम् उपलब्धिर्न भवति" इत्यभिहितं, तत्र शङ्कते—अथाभावादेवेति । यथा षड्विधाम्लादिरसातिरिक्तः सप्तमो रसोऽभावादेव नोपलभ्यते न तु सौक्ष्म्यात् तथा प्रधानादीनामप्यभावादेवानुपलम्भः कुतो न भवेदित्यर्थः ।

कारिकांशमवतार्य समाधत्ते—नाभावादिति । न तु सप्तमरसवदभावादनुपलब्धिः, अपि तु सौक्ष्म्यादेवेत्यर्थः । तत्र हेतुं पृच्छति—कुत इति । समाधत्ते—कार्यतस्तदुपलब्धेरिति । महत्तत्त्वादिकार्यलिङ्गकानुमानेन प्रधानोपलब्धेरित्यर्थः ।

"तदुपलब्धेः" इति 'तत्' शब्देन नात्र प्रधानपुरुषयोरुभयोः परामर्शोऽपि तु प्रधानस्य, पुरुषस्याकारणत्वेन कार्यलिङ्गकानुमानेन तदुपलब्धेर्वक्तुमशक्यत्वादित्याशयेनाह—'तत्' इति प्रधानं परामृशतीति । एतदुक्तं भवति—प्रधानस्यैव कार्यलिङ्गकानुमितिसंभवः, पुरुषस्य तु कार्याभावान्न तल्लिङ्गकानुमितिसंभव इति तत्पदेनात्र प्रधानस्यैव परामर्शो भवति न पुरुषस्येति । तर्हि पुरुषोपलब्धौ किं मानमित्यत्राह—पुरुषोपलब्धौ त्विति । वक्ष्यति=कथयिष्यति मूलकार इति शेषः । केन ग्रन्थेन वक्ष्यतीति जिज्ञासाशमनाय वक्ष्यमाणप्रतीकमुद्धरति—संघातेति । इति सप्तदशकारिकया वक्ष्यति । संघातानां=सम्भूयकारिणां स्वार्थक्रियायामितरसापेक्षाणामिति यावत्, परार्थत्वात्=स्वेतरस्य भोगापवर्गफलकत्वात्, यथा च तैः पुरुषानुमानं भवति तथा दर्शितं षष्ठकारिकाव्याख्याने पुरस्तात्, अग्रे चाधिकं वक्ष्यते ।

यदुक्तम्—"प्रत्यक्षाप्रवृत्त्या सप्तमरसवदभाव एव किन्न स्यादिति" तद् विघटयति—दृढतरेत्यादिना । प्रबलतरानुमानादिप्रमाणेन निर्णीते हि प्रधानादौ यत् प्रत्यक्षं न प्रवर्तते, तत् प्रधानादीनां निरवयवत्वेन तत्र योग्यता-

---

१ तत्र="अभावान्नानुपलब्धिरपि तु सौक्ष्म्यात्" इत्यत्रेत्यर्थः । सूक्ष्मत्वं चात्र नाणुत्वं, प्रधानपुरुषयोर्व्यापकत्वात् । न च सौक्ष्म्यं अनुपलब्धौ न तन्त्रं, योगिप्रत्यक्षे व्यभिचारादिति वाच्यम्, योगजधर्मस्योत्तेजकत्वादिति । २ खण्डयति । दृष्टान्तस्य वैषम्यमाह—सप्तम इति ।

किं पुनस्तत्कार्यं यतः प्रधानानुमानम्, इत्यत आह—"महदादि तच्च कार्यम्" इति। एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते।

तस्य च कार्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह—"प्रकृतिसरूपं विरूपं च" इति। एते तूपरिष्टाद् विभजनीये इति ॥ ८ ॥

---

भावान्न प्रवर्तते, न त्वसत्त्वादिति कल्प्यते, सप्तमस्तु रसो न केनापि प्रमाणेन निश्चित इति=अतः तत्र=सप्तमे रसे प्रत्यक्षस्यायोग्यता अध्यवसातुं=निश्चेतुं न शक्येत्यर्थः। असत्त्वादेव सप्तमे रसे प्रत्यक्षं न प्रवर्तते न त्वयोग्यत्वादिति विशेष इति भावः।

एतदुक्तं भवति—अनुमानादिना दृढतरं निर्णीता हि प्रधानादयः परमाण्वादिवदतिसूक्ष्मत्वेन न प्रत्यक्षयोग्या इति तत्र प्रत्यक्षं न प्रवर्तते, इति युक्तम्, सप्तमस्य तु रसस्य न केनापि प्रमाणेन सद्भावो निर्णीत इति कथं तत्र प्रत्यक्षायोग्यत्वकल्पना। सति हि वस्तुनि तत्र प्रत्यक्षाप्रत्यक्षत्वयोग्यताविचारेण भूयते, नावस्तुनीति सत्सु प्रधानादिषु यत्प्रत्यक्षं न प्रवर्तते तद् योग्यताविरहादेव नासत्वात्, सप्तमस्तु रसो नास्त्येवेत्यसत्त्वादेव तत्र प्रत्यक्षाप्रवृत्तिर्नायोग्यत्वादिति।

यत्कार्यान्यथानुपपत्त्या प्रधानमङ्गीकृतं तत्पृच्छति—किं पुनरिति। एतच्च—महदादिकार्यं च, यथा गमकम्=येन प्रकारेण प्रधानानुमापकम् तथा उपरिष्टात्=(१४-१५-) इति कारिकाव्याख्यावसरे उपपादयिष्यते=साधयिष्यते मयेतिशेषः। विवेकः=प्रकृतिपुरुषयोरन्यताख्यातिः, तदुपयोगिनी=तदुपकारिणी। तत्ख्यातेरेव तत्त्वज्ञानरूपतयाऽपवर्गसाधनत्वादिति भावः। सारूप्यवैरूप्ये=केन धर्मेण तत्त्वानां परस्परं सादृश्यं, केन च धर्मेण परस्परवैलक्षण्यमित्येवं साधर्म्यवैधर्म्ये इत्यर्थः। तथाच केनचिद्धर्मेण कार्याणां प्रकृतिसारूप्यं, केनचिच्च धर्मेण प्रकृतिवैरूप्यं दृश्यते, पुरुषस्य तु ताभ्यां धर्माभ्यामसंस्पृष्टत्वात् पृथक्त्वेनावधारणं संभवतीति तयोर्विवेकज्ञानोपयोगित्वमिति भावः। एते=सारूप्यवैरूप्ये तु उपरिष्टात्="हेतुमदनित्यम्—" (१०-११) इत्यादिकारिकाद्वयव्याख्यानावसरे विभजनीये=विभागयोग्ये—विभज्य प्रतिपादनीये इति तत्रैव द्रष्टव्ये इत्यर्थः। तत्र हि प्रथमकारिकया प्रकृतितत्कार्ययोर्वैधर्म्यं, द्वितीयकारिकया तु तयोः साधर्म्यं प्रदर्श्य पुरुषस्य तद्वैपरीत्यं सिद्धान्तयितव्यम् ॥ ८ ॥ ॐ ॥

## अथ सत्कार्यवादनिरूपणम्।

सत्कार्यवादात्मिकामुत्तरकारिकापीठिकामारचयति—कार्यादिति। कार्य-

कार्यात् कारणमात्रं गम्यते। सन्ति चात्र वादिनां विप्रतिपत्तयः। तथाहि—केचिदाहुः 'असतः सज्जायते' इति, 'एकस्य सतो विवर्तः कार्यजातं न वस्तु सत्' इत्यपरे,

---

दर्शनबलाद् "अस्त्यस्य किंचित्कारणम्" इत्येवं कारणमात्रं गम्यते=प्रतीयते, न तु "इदमस्य कारणम्" इत्येवं विशेषस्य प्रतिपत्तिर्भवति, तथाच न प्रधानकारणत्वनिश्चय इति हृदयम्।

भवतु कारणमात्रज्ञानं तथाप्यन्यस्य कारणस्यानुपलब्धेः प्रधानकारणत्वनिश्चयेन परिशेषात् भाव्यम्, इत्यत्राह—सन्ति चेति। अत्र=कारणविषये च वादिनां=तत्तद्दार्शनिकानां बौद्धादीनां विप्रतिपत्तयः=विरुद्धाः प्रतिपत्तयो—विभिन्ना विभिन्ना मतयः सन्ति, तथाच न कारणविशेषावधारणं संभवतीति तत्त्वम्।

ता विरुद्धाः प्रतिपत्तीरेव दर्शयति—तथाहीति। विप्रतिपत्तीर्दर्शयामीत्यर्थः। 'तथाहि' इति निपातसमुदायो निदर्शने। तत्र "शून्यतैव जगतः परमार्थता" इति वदतां बौद्धानां मतमाह—असत इति। अभावाद् भावो जायत इत्यर्थः। विनष्टादेव बीजादङ्कुर उत्पद्यते, नष्टादेव दुग्धाद् दधि, विनष्टादेव च मृत्पिण्डाद् घट इत्येवम् अभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पत्तिदर्शनात्, "सर्वे कार्यरूपा भावा अभावकारणकाः, कार्यत्वाद्, बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्" इत्येवम् अनुमीयत इति तदाशयः। तथाच बौद्धमतानुवादि गौतमीयं पूर्वपक्षसूत्रम्—"अभा[२]वाद् भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" (४।१।१४) अव्यवहितपूर्ववर्तिनः कारणत्वमभीष्टम् अङ्कुरादिकार्याद्व्यवहितपूर्ववर्तित्वं च बीजाद्यभावस्यैव संभवति न बीजादेरित्यभावस्य सिद्धं कारणत्वं न तु भावस्येति तत्त्वम्। एतदुक्तं भवति—"एक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् तस्मादसतः सज्जायते" इति श्रुत्या प्रागुत्पत्तेः सर्ववस्त्वभाव एवासीत्, तस्मादेवाभावात् सृष्टिवेलायां सर्ववस्तूनामुत्पत्तिरिति स्पष्टं प्रतिपाद्यते, ततश्च लोकेऽपि यद् बीजादिभ्योऽङ्कुराद्युत्पत्तिर्दृश्यते तत्रापि बीजादिनाशादेवाङ्कुराद्युत्पत्तिरित्यवश्याभ्युपेयमिति हि सौगता[३]कूतम्॥ ❀॥

---

१ विप्रतिपत्तिर्नाम विपरीता प्रतिपत्तिः। तस्याश्च कारणं समानधर्मोपलब्धावनधिगतविशेषस्य तद्विपरीतधर्माध्यारोपः। न्या० वा०। २ अभावात्=कारणाभावात् भावस्य=कार्यस्योत्पत्तिर्भवति, यथा मृत्सलिलसंयोगाद् बीजे नष्टे सत्येवाङ्कुर उत्पद्यते, घटादिस्थलेऽपि मृत्पिण्डादेः स्वरूपविनाशो भवत्येवेति सिद्धमभावस्य कारणत्वम्। उक्ते हेतुमाह—नेति। द्वौ नञौ प्रकृतार्थं गमयतः, बीजमुपमृद्यैवाङ्कुरप्रादुर्भावादिति सूत्रार्थः। उपमृद्य=विनाश्य। ३ चेत् सतः सदुत्पद्येत तदा न कारणमुपमृद्य कार्यं प्रादुर्भवेत्। उपमृद्य च कारणं कार्यं प्रादुर्भवदुपलभ्यते यथा बीजादङ्कुरः। कारणोपमर्दश्चाभावो न जातु भावः। तस्मात् प्रतिपद्यते नूनमसतः सदुत्पद्यते न सतः सदिति निष्कृष्टोऽर्थः।

"ब्रह्मैवैकम् अनिर्वचनीयानाद्यविद्योपधानात् अनेकविधनामरूपप्रपञ्चात्मना विवर्तते रज्जुरिव सर्पमालाद्यात्मना, एकं मुखमिव चानेकमणि-कृपाण—दर्पणादिभेदात् अनेकविधप्रतिबिम्बात्मना" इति वदतां वेदान्तिनां मतमाह—**एकस्य सत इति।** एकस्य=अद्वितीयस्य सतः=त्रैकालिकबाधविधुरस्य ब्रह्मणः विवर्तः=शुक्तेरिव रजतम् अतात्त्विकान्यथाप्रथात्मकं कार्यजातं=दृश्यमात्रं न वस्तुसत्=परमार्थतः सदित्यर्थः।

विवर्तस्य परिणामस्य च विशेष उक्तोऽभियुक्तैः—

"यस्तात्त्विकोऽन्यथाभावः परिणाम उदीरितः।
अतात्त्विकोऽन्यथाभावो विवर्तः स उदीरितः॥" इति।

एवं च अतात्त्विकोऽन्यथाभावो विवर्तः, स च अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वम्। यथा परब्रह्मणि सर्वस्य जगतो विवर्तः। यद्वा—"पूर्वरूपापरित्यागेन असत्यनानाकारप्रतिभासो विवर्तः। यथा—शुक्तिकायां रजतस्य, रज्ज्वां वा सर्पस्य प्रतीतिः" इत्याथर्वभाष्ये सायणः।

एतदुक्तं भवति—कारणमेव कार्यस्वरूपेण भासते, इति कारणस्यैव सत्यत्वं, न तु कार्यस्य सत्यत्वम्। यथा—शुक्तौ "इदं रजतम्" इति ज्ञानानन्तरम् अधिष्ठानभूतशुक्तिज्ञाने[2] जाते बाधज्ञानेन पूर्वं ज्ञातं रजतं यथा निवर्तते, तद्वत् ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तत इति।

१ ननु परिणामविवर्तयोः को भेदः? अयम्। पूर्वरूपापरित्यागेन असत्यनानाकारप्रतिभासो विवर्तः। पूर्वरूपपरित्यागे सति नानाकारप्रतिभासः परिणामः। यथा क्षीरस्य दधिप्रतिभासः। (सायणः) २ अधिष्ठानम्=आरोपविशेष्यः। यथा शुक्ती रजतस्याधिष्ठानम्। ३ अयमत्र सरलोनिष्कर्षः—ब्रह्मरूपे वस्तुनि अज्ञानतत्कार्यरूपस्य अवस्तुनः कथनम् अध्यारोप इत्युच्यते। शुद्धे ब्रह्मणि कथं प्रपञ्चारोप इति चेदुच्यते। शुद्धं ब्रह्म, प्रकृतिः, तत्संबन्धः, ईश्वरः, जीवः, तद्भेदश्चेति षड् अनादयः[1]। प्रवाहरूपेण प्रपञ्चोऽप्यनादिः। तथाच अनादिशुद्धब्रह्मणि अनादिः कल्पिता[2] प्रकृतिरस्ति तस्याः ब्रह्मणासह अनादिः कल्पितस्तादात्म्यसंबन्धो वरीवर्ति। सा च प्रकृतिः—माया, अविद्या, तमःप्रधानप्रकृतिरित्येवं त्रिविधा। तत्र शुद्धसत्त्वगुणयुक्ता माया, मलिनसत्त्वगुणयुक्ता अविद्या, तमोगुणस्य मुख्यतया युक्ता तमःप्रधानप्रकृतिः। योऽयं मायायां ब्रह्मणः प्रतिबिम्बः स एव अधिष्ठान (ब्रह्म) माया[3] सहितो जगत्कर्ता 'सर्वज्ञ ईश्वर' इत्युच्यते, अविद्यायां च यो ब्रह्मणः प्रतिबिम्बः सोऽधिष्ठाना (कूटस्थ) विद्यासहितो भोक्ता "अल्पज्ञो जीव" इत्यभिधीयते। ईश्वरजीवावप्यनादी कल्पितौ। तत्र ईश्वरोपाधिर्माया एका आपेक्षिक-

1 उत्पत्तिरहितं वस्तु 'अनादि' इत्युच्यते, इमे स्वरूपतोऽनादय इत्यर्थः। 2 यत् परमार्थतो नास्ति परं स्वप्नपदार्थवत् भ्रान्त्या भासते 'कल्पितं' तदुच्यते। 3 अत्र मायाशब्देन 'माया' तमःप्रधानप्रकृतिश्चेत्युभे एवेश्वरस्योपाधी गृह्येते,।

एवं च—'एका कारणसत्तैव विविधकार्याकारेण भासिता भवति, सुवर्णं कुण्डलाकारेण भासते मृच्च घटाकारेणेत्यस्य प्रत्यक्षत्वात्। कुण्डलं यथा सुवर्णस्यैवाकारभेदो घटश्च मृत्तिकायास्तथा परिदृश्यमानं विश्वमपि सद् वस्तुन एव विविधाकारमात्रं वरीवर्ति। प्राक्सृष्टेः सन्मात्रमेवेदमासीत्, नातिरिक्तं किंचिदप्यासीत्, घटशरावादयो यथा परस्परं विभिन्ना अपि मृत्तिकातो नातिरिच्यन्ते, पिण्डस्य घटात् घटस्य च पिण्डात् भेदेऽपि मृत्तिकातो द्वयोरप्यभिन्नत्वात्, तथैव विविधसृष्टपदार्थाक्रान्तः संसारोऽपि सद् वस्तुतो नातिरिच्यते, अपि तु सद् वस्तुन एव रूपान्तरं संसारः, यत् सद् वस्तु तद् ब्रह्मैवास्तीत्यत्र फलितम्॥

"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति हि वेदान्तडिण्डिमः।

तत्र "वस्तुनि अवस्त्वारोपः अध्यारोपः। यथा—असर्पभूतायां रज्जौ सर्पारोपः, अरजतभूतायां शुक्तौ च रजतारोपः।

ननु कथम् अवस्तुनो निरात्मकस्यारोपः, क्वचिद्दृष्टपूर्वस्य सतः क्वचिद्

व्यापिका[1] चेतीश्वरोऽप्येको व्यापकश्च। मायोपाधिमादाय कुलालवत् जगतो निमित्तकारणमीश्वरः, तमःप्रधानप्रकृतिमादाय च मृत्तिकेव जगत उपादानकारणम्। जीवोपाधिरविद्या नाना परिच्छिन्नाचेति जीवोऽपि नाना परिच्छिन्नश्च। तयोरनादिः कल्पितो भेदः। सृष्टेः प्राक् जीवस्योपाधिस्तत्कर्मसहितैव मायाविलीना तिष्ठति। सा च माया सुषुप्तौ अविद्येव ब्रह्मतो भिन्ना न सिध्यति, अतः सृष्टितः पूर्वं सजातीयविजातीयस्वगतभेदरहितम् एकम् अद्वितीयं सच्चिदानन्दरूपं ब्रह्मैवासीत्। तस्य ब्रह्मणः सृष्ट्यारम्भे जीवस्य परिपक्वकर्मनिमित्तात् "एकोऽहं बहु स्याम्" इतीच्छा प्रादुरभूत्। तया ब्रह्मण उपाधौ मायायां क्षोभात् क्रमशः आकाशवायुतेजोजलपृथिवीति पञ्च महाभूतानि जज्ञिरे। तेषां पञ्चीकरणं नासीत्, तदा अपञ्चीकृतान्यासन्। तेभ्यः समष्टिव्यष्टिरूपा सूक्ष्मा सृष्टिरभवत्। तत ईश्वरेच्छया तेषां पञ्चीकरणमभूत् तदा तानि पञ्चीकृतानि समपद्यन्त, तेभ्यः समष्टिव्यष्टिरूपा स्थूला सृष्टिरजनि। तत्र समष्टिस्थूलसूक्ष्मकारणप्रपञ्चस्याभिमानी जीवदृष्ट्या ईश्वरः, व्यष्टिस्थूलसूक्ष्मकारणप्रपञ्चस्याभिमानी च जीवः। तत्र सर्वज्ञत्वादीश्वरो नित्यमुक्तः, जीवश्चाल्पज्ञत्वाद् बद्धः। इत्यनया रीत्या शुद्धे ब्रह्मणि प्रपञ्चस्यारोपः। सोऽयं रज्जौ सर्पवत्, साक्षिणि स्वप्नवत्, दर्पणे नगरप्रतिबिम्बवच्च मिथ्यैव। कया रीत्याऽस्य निवृत्तिरिति चेदत्राहुः—ब्रह्मज्ञानात् मायाऽविद्ये निवर्तेते, ततः कार्यसहिता प्रकृतिरपैति, ततः प्रकृतेर्ब्रह्मणश्च संबन्धस्त्रुट्यति, ततो जीवभावईश्वरभावश्चापगच्छतः, ततो जीवेश्वरभिदा निरस्यति, ततो बन्धनिवृत्तौ मोक्षः सिध्यति। इत्येवं रीत्या युगपदेव सर्वारोपनिवृत्तिलक्षणोऽपवादः संपद्यते। सर्पतज्ज्ञानबाधेन रज्जुरूपाधिष्ठानावशेषवत् प्रपञ्चतज्ज्ञानबाधेन येयं अधिष्ठानरूपस्य शुद्धब्रह्मणोऽवशिष्टिः सैवापवाद इति वेदान्तेषु विस्तरः।

1 यथा गृहं घटाद्यपेक्षया व्यापकं ग्रामापेक्षया च परिच्छिन्नमिति आपेक्षिकव्यापकमस्ति, एवं मायापि पृथिव्याद्यपेक्षया व्यापिका ब्रह्मापेक्षया च परिच्छिन्नेति 'आपेक्षिकव्यापिका' भवति। व्यापकमधिकदेशवृत्ति, परिच्छिन्नं चाल्पदेशवृत्ति॥

आरोपदर्शनात्। यथा—जपायां दृष्टस्य लौहित्यस्य स्फटिके आरोप इति चेत्। सत्यम्, तत्सिद्धयेऽनुभवमात्रम् अपेक्ष्यते न तु पूर्वमनुभूतस्य तात्त्विकत्वमपि, व्यतिरेकाभावात्। संदिग्धविपर्ययेष्वपि "अत्र स्थाणौ मे नरो वा राक्षसो वा" इति सन्देह आसीत्' अस्य रज्ज्वां "सर्पोऽयम्" इति विपर्यय आसीत्' इत्यादि संस्कारकार्यस्मृतिदर्शनात्।

न च सन्देहविपर्ययोरेवेयं स्मृतिर्न तदर्थयोरिति वाच्यम्, अर्थविरहिणोस्तयोः स्मृतिगोचरत्वायोगात्।

तस्मात् तुच्छेतरस्य पूर्वपूर्वभ्रमाभूतस्यापि उत्तरोत्तरारोपोपपत्तिः। भ्रमप्रवाहस्य च बीजाङ्कुरप्रवाहन्यायेन अनादितया अन्योन्याश्रयाऽनवस्थादि प्रसङ्गानवकाशात्।

**तथाच**—परमार्थवति सच्चिदानन्दब्रह्मणि वस्तुनि अवस्तुनः=अनिर्वचनीयस्य अज्ञानतत्कार्यादेरध्यारोपः। ब्रह्मतत्त्वसाक्षात्कारेण च अध्यारोपिता ज्ञानादेर्निवृत्तिः। यथा—शुक्तिकादिज्ञानेन रजतादिनिवृत्तिः। अत एव अज्ञानादीनां ज्ञाननिवर्त्यत्वाऽन्यथानुपपत्त्या अध्यारोपितत्त्वं कल्प्यते, इति आकरे स्थितमिति॥"

**अपवादो नाम** रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्तस्य अवस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमिति। एतदुक्तं भवति—

"अधिष्ठाने भ्रान्त्या प्रतीतस्य तदतिरेकेण अभावनिश्चयोऽपवाद इति। यथा स्थाण्वादौ भ्रान्त्या प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेण अभावनिश्चयः।

अयमेव[१] बाध इति विलापनमिति चोच्यते। स चायं बाधस्त्रिविधः—१ श्रौतो २ यौगिकः ३ प्रत्यक्षश्चेति। तत्र "अथात आदेशो नेति नेति" "नेह नानास्ति किञ्चन" इत्यादिश्रुतेः ब्रह्मातिरिक्ताभावनिश्चयः **श्रौतो** बाधः। कनकाद्यतिरेकेण कटकाद्यभावनिश्चयवत् निखिलकारणब्रह्मातिरेकेण निखिलप्रपञ्चाभावं निर्धार्य दृश्यमानस्य मिथ्यात्वनिर्धारणात् प्रपञ्चस्य ब्रह्ममात्रात्मकत्व निश्चयो **यौगिको** बाधः। "इयं रज्जुर्न सर्पः" इत्युपदेशसहकृतप्रत्यक्षेणेव तत्त्वमस्यादिवाक्यजनितेन "चिन्मात्रोऽहम्" इति प्रत्यक्षेण ब्रह्मात्मनिश्चयः प्रत्यक्षबाध इति विवेकः। इत्थम् ताभ्याम् अध्यारोपापवादाभ्यां निष्प्रपञ्चं=सच्चिदानन्दानन्ताद्वयब्रह्म प्रपञ्च्यते=विस्तार्यते इत्येतदर्थं इति तद् व्याख्यातारः॥"

"यद्यपि जन्मादिसर्वविक्रियाशून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते, **तथापि** तदैश्वर्येण तदीयशक्त्यात्मकेन अनिर्वाच्याज्ञानवैभवेन योगात् आकाशादिकार्यात्मना जन्मसंबन्धं प्राप्य जगतो निदानमिति व्यपदेशभाग् भवति, तथाच श्रुतिस्मृत्योः ब्रह्मणो जगत्कारणत्वं प्रसिद्धम्। **यद्यपि** चेदं ब्रह्म कूटस्थतया विभुतया च गतिवर्जितं समवतिष्ठति, **तथापि** यथोक्ताज्ञानमाहात्म्यात् गति-

१ अपवाद एव।

अन्ये तु 'सतोऽसज्जायते' इति, 'सतः सज्जायते' इति वृद्धाः।

तत्र पूर्वस्मिन् कल्पत्रये प्रधानं न सिध्यति, सुखदुःखमोह-भेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि जगत्कारणस्य प्रधानत्वं=सत्त्वरजस्तमःस्वभावत्वम्।

---

सत्त्वं प्रतिपद्यते, यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्तनानात्वमेकरसं, तथापि अनाद्यनिर्वाच्याविद्यावशात् अनेकमिव प्रतिभाति[१]" इति गौडपादभाष्यटीकाया-मानन्दगिरिरित्यलं बहुना प्रपञ्चेनेति विरम्यते विस्तरभयात्॥ ❀॥

कणादाक्षपादयोर्मतमाह—सतोऽसज् जायत इति। सतः=भावरूपा-त्परमाण्वादेः असत्=पूर्वमविद्यमानं द्व्यणुकादि जायत इत्यर्थः। पूर्वमसदेव तत्तद्घटादि कार्यं दण्डचक्रचीवरादिसामग्रीसमवहितात् मृदादिकारणाद् भिन्नं सदुत्पद्यत इति यावत्।

एतदुक्तं भवति—स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव; पश्चात् कारण-सामग्रीवशादुत्पद्यते, इति कार्यकारणयोरन्यत्वं, परमार्थतः सत्यत्वं चेति॥ ❀॥

कापिलमतमाह—सतः सज्जायत इति। सतः=भावरूपात् प्रधानादेः सत्=अनागतावस्थया कारणे विद्यमानमेव जायते=कारकव्यापारेणाभिव्यज्यत इति वृद्धाः=सांख्याचार्या इत्यर्थः। एतदुक्तं भवति—कारणमेव कार्यरूपेण परिणमत इति कार्यकारणयोरनन्यत्वं सत्यत्वं च। यथा—दुग्धं सदेव दधि-रूपेण परिणमत इति दधि कार्यान्तरं दुग्धाद् भिन्नं च न भवतीति॥ ❀॥

इत्थम् अभावकारणवादम्, विवर्तवादम्, आरम्भवादम्, परिणामवादं चेति वादचतुष्टयं प्रदर्श्य सांख्यातिरिक्तवादानां प्रधानकारणत्वासाधकत्वादनु-पादेयतां दर्शयितुमाह—तत्र पूर्वस्मिन् कल्पत्रय इति। तत्र=पूर्वोक्तेषु चतुर्षु पक्षेषु, कार्यज्ञानेन यादृशं[२] कारणं प्रधानं सिद्धं भवति तादृशं प्रधानम् आद्य-पक्षत्रये नैव सिध्यतीत्यर्थः। एतदुक्तं भवति—सुखाद्यात्मककार्यदर्शनेन कारणमपि सुखाद्यात्मकमेव सिद्धं भवति नत्वन्यादृशं तादृशं कारणं च प्रधान-मेवास्ति तच्चाद्यपक्षत्रये न निष्पद्यत इति। कीदृक् प्रधानं कार्यलिङ्गकानुमान-बलेन सिध्यति यदन्यमते न सिध्येदिति जिज्ञासायामाह—सुखदुःखमोह-भेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वमिति। सुखदुःखमोहरूपा ये भेदाः= विशेषास्ते विद्यन्ते यत्र तत् सुखदुःखमोहभेदवत्, एतादृशं स्वरूपं येषां ते सुखदुःखमोहभेदवत्स्वरूपाः, एवंविधा ये परिणामाः=पञ्च तन्मात्रादिरूप-शब्दाद्याः, त एवात्मा=स्वरूपं यस्य तत् सुखदुःखमोहभेदवत्स्वरूपपरिणाम-

---

१ केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते? विविधविषयधर्मग्राहितया येषां विकल-मीक्षणं तेषां दृष्ट्या ब्रह्मणोऽनेकत्वधीर्न तु तत्त्वतः, शान्तदृष्ट्या तु तस्मिन्नेकत्वमेवेति तत्त्वम्। २ यादृशं=सुखाद्यात्मकम्।

शब्दाद्यात्मकं तस्य भावस्तत्त्वम्। एवंविधं हि जगत्कारणस्य प्रधानत्वं कार्यदर्शनात् सिध्यति तच्चान्यमते नोपपद्यत इत्यर्थः।

प्र=प्रकर्षेण वैषम्यावस्थापरिहारेण धीयन्ते=निधीयन्ते—विद्यन्ते सत्त्वादिगुणा यस्मिन् तत् प्रधानं तस्य भावः प्रधानत्वमित्यभिप्रायेण "प्रधानत्वम्" इत्यस्य विवरणमाह—**सत्त्वरजस्तमःस्वभावत्वमिति**। सुखाद्यात्मकसत्त्वादिगुणस्वरूपत्वमित्यर्थः।

"शब्दाद्यात्मकं जगत्, सुखाद्यात्मककारणपूर्वकं, तदन्वितत्वात्, यत् यदन्वितं तत् तथा[1], यथा मृदन्वितं घटादिकं मृत्कारणकं, तथाचेदं[2], तस्मात् तथा" इत्याद्यनुमानेन अवगम्यमानं यत् सुखाद्यात्मकं त्रिगुणं प्रधानं कारणस्य कार्यात्मकत्वं च तदन्यमते न सिध्यतीति भावः।

**एतदुक्तं भवति**—यतः कार्यभूतानां शब्दादीनां कारणस्य परिणामस्वरूपत्वं मन्तव्यम्, घटादीनामिव मृत्पिण्डस्य, एवं तेषां शब्दादीनां सुखदुःखमोहरूपतया प्रसिद्धत्वेन कारणस्यापि अन्तर्लीनसुखदुःखमोहात्मकत्वमङ्गीकरणीयम्, पटस्य श्वेतरक्तनीलरूपत्वे तन्तूनामपि तथात्ववत्, अतः प्रधानस्यैव जगत्कारणत्वं सिध्यति, तस्यैवान्तर्लीनसुखाद्यात्मकत्वात्, तच्च वैनाशिकादिपक्षत्रये नैवसिद्धं भवतीति। "सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकम्" इति 'त्वत्' प्रत्ययरहितपाठे तु जगतो विशेषणमिदं भवति, तथाच सुखाद्यात्मकं यत् जगत् तत् स्वकारणस्य सत्त्वरजस्तमः स्वरूपत्वम् 'अवगमयति' इत्येवं व्याख्येयम्।

**अन्ये तु**—'सुखेत्यारभ्य जगत्कारणस्य' इत्येतत्पर्यन्तम् एकः पाठः, प्रधानत्वं सत्त्वेत्यादिरपरः। **तथाच** वैनाशिक-वैदान्तिक-वैशेषिक-पक्षेषु प्रधानं जगत् कारणमिति न सिध्यतीति प्रधानस्य जगत्कारणत्वसिद्ध्यर्थं प्राथमिकपक्षत्रयं नावलम्बनीयम्। प्रधानस्यैव जगत्कारणत्वं साधनीयमित्यत्र किं बीजमित्यत आह—**सुखदुःखेति**। हि=यतः जगत्कारणस्य सुखदुःखमोहविशेषवत्स्वरूपपरिणामशब्दाद्यात्मकत्वम् अतः प्रधानमेव जगत्कारणमित्यर्थः। ननु प्रधानस्य सुखदुःखमोहात्मकत्वं कथं निर्णीतं यद्दृष्ट्या सुखदुःखमोहात्मकस्य प्रपञ्चस्य कारणत्वमस्यानुमीयत इत्यत आह—**प्रधानत्वं सत्त्वेति**। सत्त्वरजस्तमःस्वरूपत्वं प्रधानत्वम् इत्येवं योजयन्ति॥ ॐ॥

---

१ तथा=तादृगन्वितकारणपूर्वकम्। २ तथाचेदम्=सुखाद्यन्वितं चेदं जगत्, तस्मात् तथा=सुखाद्यात्मककारणपूर्वकम्। अत्रायं निष्कर्षः—ये हि भावा येन रूपेण समन्वीयन्ते ते तदुपादानका उपलब्धाः, यथा घटकटकादयो मृत्सुवर्णान्वितास्तदुपादानकाः, तथा चेमे भावाः सुखदुःखमोहात्मनान्वीयमाना उपलभ्यन्ते तस्मात्तेऽपि सुखदुःखमोहात्मसामान्योपादानका भवितुमर्हन्ति, तादृशं च गुणत्रयात्मकत्वेन प्रधानमिति तदेव जगदुपादानं नान्यदिति। यथा च सर्वेषां भावानां सुखाद्यात्मकत्वं तथा "अनया स्त्रिया सर्वे भावा व्याख्याताः" इत्यग्रे (१३ का०) मूल एव व्यक्तमिति नात्र किञ्चिद् वचनीयम्।

यदि पुनरसतः सज् जायेत, असन्निरुपाख्यं कारणं सुखादिरूपशब्दाद्यात्मकं कथं स्यात्, सदसतोस्तादात्म्यानुपपत्तेः ।

अथैकस्य सतो विवर्तः शब्दादिप्रपञ्चः, तथापि सतः सञ्जायत इति न स्यात् ।

न चास्याद्वयस्य प्रपञ्चात्मकत्वम्, अपित्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव ।

---

तत्र बौद्धमते तावदेतादृक् प्रधानासिद्धिमाह—**यदि पुनरिति** । यदि "असतः सज् जायते" इति सौगतं मतं स्वीक्रियेत, तर्हि "असत् निरूपाख्यम्=अनिर्वचनीयम् अभावरूपं जगत्कारणम्" इत्यापद्येत, तथा चैवंविधं कारणं भावात्मकसुखादिरूपशब्दाद्यात्मकं कथं स्यात्, न कथमपि स्यादित्यर्थः । सुखादिरूपकार्यस्य यत् कारणं तस्य सुखादिरूपात्मकत्वमुचितं, कार्यस्य स्वसमानगुणकारणोपादानकत्वनियमात्, परन्तु असतः कारणत्वे नैव तथात्वं संभवतीति भावः । तत्र हेतुमाह—**सदसतोरिति** । भावाभावयोस्तादात्म्यस्यानुपपन्नत्वादित्यर्थः । कार्यभूताः सुखादिरूपशब्दादयः सत्पदार्थाः, कारणं त्वसत्, तत्कथं तयोस्तादात्म्यमिति भावः । तादात्म्यम्=अभेदः "कार्यं कारणान्न भिन्नम्" इत्यस्यामेव कारिकायां विस्तरेण साधयिष्यमाणत्वादिति ज्ञेयम् ॥ ८ ॥

यथा बौद्धमतेऽसता कारणेन सह न सत्कार्यस्य तादात्म्यम्, एवं वेदान्तिमतेऽपि सता कारणेन सह न भ्रममात्रशरीरस्यासतः कार्यस्य तादात्म्यमिति न तन्मतेऽपि प्रधानसिद्धिरित्याह—**अथैकस्येति** । तथापि=कारणस्य सद्रूपत्वेऽपि कार्यस्य खपुष्पायितत्वात् सतः सज् जायत इति न स्यात्, तथाच वेदान्तिमतेऽपि कार्यात्मकं कारणमिति नैव सिध्यति सदसतोस्तादात्म्यासंभवादित्यर्थः ।

ननु "तदनन्यत्वमारम्भणशब्दादिभ्यः" (वे० २।१।१४) इति सूत्रेण भगवता व्यासेन "तस्मात्=कारणात् अनन्यत्वम्=अन्यत्वाभावः—अभेदः कार्यस्य" इत्येवं प्रतिपादनात् कथं न वेदान्तिमते कार्यकारणयोस्तादात्म्यमित्यत्राह—**न चास्याद्वयस्येति** । अस्य अद्वयस्य ब्रह्मणः शब्दादिप्रपञ्चरूपेण परिणामित्वं न चाभ्युपेयते वेदान्तिभिरपि तु "अशब्दमस्पर्शम्—" (यजु० ४०।४) इत्यादि श्रुत्या शब्दादिप्रपञ्चशून्यस्य तस्य प्रपञ्चात्मकतया भ्रममात्रमिति मन्यत इत्यर्थः ।

"तदनन्यत्वम्" इति सूत्रांशेन नाभेद उच्यते किन्तु "तस्मात् कारणात्

---

१ उपाख्या=उपाख्यानम् 'इदम् एतादृक्' इति वर्णनं, ततो निष्क्रान्तं निरूपाख्यम्—अलक्षणत्वेन निःस्वभावत्वेन च इदन्तया वक्तुमशक्यमित्यर्थः । २ बहुव्रीहिरयम् । शरीरम्=आकारः—स्वरूपम् ।

येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म, तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्यात्मकं कारणम्, इति न तन्मते प्रधानसिद्धिः।

---

ब्रह्मणः परमार्थतोऽनन्यत्वम्=व्यतिरेकेण कार्यस्याभावः" इत्येवं कार्यस्यासत्त्वं प्रतिपाद्यते, "आरम्भणशब्दादिभ्यः" इति सूत्रांशसूचितायां "वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।४) इति श्रुतौ कारणीभूत—मृत्तिकाया एव सत्यत्वावधारणेन कार्यस्य घटादेर्मिथ्यात्वप्रतिपादनेन विवर्तवादाश्रयणादिति भावः॥ ॐ॥

वैशेषिकनैयायिकमतेऽपि प्रधानासिद्धिरित्याह—येषामपीति। कणम्=अन्नकणं भक्षयतीति कणभक्षः=कणादः—वैशेषिकदर्शनाचार्यः, अक्षं=चक्षुः चरणे यस्येति अक्षचरणः=न्यायाचार्यो गोतमः। तच्छिष्येण व्यासेन "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" (वे० २।१।१२) इति सूत्रेण शिष्टापरिग्रहोक्त्या अनादर्तव्यतया तन्मतं दूषितं, ततस्तदुपरि क्रुद्धेन गोतमेन तस्य चक्षुषा मुखदर्शनं न कार्यमिति संकल्पे कृते पश्चात् व्यासेन प्रसादने शिष्यवत्सलत्वात् योगमहात्म्येन चरणे चक्षुः प्रकाश्य व्यासो दृष्ट इत्यतोऽस्य अक्षचरणेति संज्ञा प्रसिद्धेत्यैतिह्यम्।

आदिना प्रशस्तपाद—वात्स्यायनादयो मुनयो ग्राह्याः। सतः=परमाण्वादेः असतः=उत्पत्तेः प्रागविद्यमानस्य। 'जन्म' इत्यनन्तरम् "इति मतम्" इति शेषः। "नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्" (न्या० ४।१।४८) उत्पादव्ययदर्शनात्" (न्या० ४।१।४९) "बुद्धिसिद्धं तु तदसत्" (न्या० ४।१।५०) इत्यादि सूत्रेषु तन्मतं द्रष्टव्यम्। तेषामपीति। मत इति शेषः। न कार्यात्मकं कारणमिति। उत्पत्तेः प्राक् कार्यस्याविद्यमानतया कथं कारणस्य कार्यात्मकत्वं स्यादिति भावः॥ ॐ॥

---

१ कार्यस्य मिथ्यात्वप्रतिपादने हेतुमाह—आरम्भणेत्यादिना। २ वाचया केवलमारभ्यते विकारजातं न तु तत्त्वतोऽस्ति, यतोनामधेयमात्रमेतद्, यथा 'राहोःशिर' इति विकल्पमात्रं, तथाचावस्तुतया विकारजातमनृतं, मृत्तिकेत्येव सत्यमिति श्रुतिपदार्थः। एवं च उपादानस्य पारमार्थिकसत्त्वं नामरूपवतो घटादेस्तु व्यावहारिकसत्त्वमात्रं न पारमार्थिकसत्त्वमित्युक्तं भवति। ३ उत्पद्यमानं कार्यमुत्पत्तेः प्राक् न असत्—असत उत्पत्तेरसंभवात् अन्यथा शशविषाणमप्युत्पद्येत, न च सत्—सतोऽप्युत्पत्तेरसंभवात् सत्त्वं हि विद्यमानत्वं विद्यमानस्य चोत्पत्तिरनुपपन्नेति स्पष्टमेव, नापि सदसत्=सत्त्वासत्त्वयोः परस्परं विरुद्धत्वात्—सामानाधिकरण्यासंभवात् इत्यर्थः। तत्र कार्यं प्रागुत्पत्तेरसदिति युक्तम्, कुतः? उत्पादः=उत्पत्तिः व्ययः नाशश्च कार्यस्य दृश्यते इति तस्यानित्यत्वं तेन चोत्पत्तेः प्रागसत्त्वं कार्यस्य सिद्धमित्याशयः। तत्=कार्यं प्रागुत्पत्तेरसदिति बुद्धिसिद्धम्=प्रमाणसिद्धमेव—असत्त्वाभावे तदुत्पादनार्थं यत्नो न स्यादिति न्यायसूत्राणामर्थः।

अतः प्रधानसिद्ध्यर्थं प्रथमं तावत् सत्कार्यं प्रतिजानीते—

**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥**

"असदकरणाद्" इति। सत्कार्यं—'कारणव्यापारात्प्रागपि' इति

---

तदित्थं वैनाशिकादिमते प्रधानासिद्धिं प्रदर्श्य सांख्यमते तत्साधयितुं तत्सिद्ध्युपयोगिनं सत्कार्यवादं साधयन्तीं कारिकामवतारयति—अत इति। यतः सत्कार्यवाद एव प्रधानं सेद्धुमर्हति नान्यवादेऽत इत्यर्थः। सत्कार्यवादे तु उत्पत्तेः प्रागपि कार्यस्य सत्त्वे साधिते कारणस्य प्रधानस्य तदात्मकत्वं सिध्यतीति हृदयम्। प्रतिजानीते=स्वीकरोति ॥ ॐ ॥

असदिति। कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यम्, कुतः? असदकरणात्=असतः कर्तुमशक्यत्वात् सदेव हि कर्तुं शक्यते नासदिति। पुनः कस्मात्? उपादानग्रहणात्=कारणैः सह कार्यस्य संबन्धात्—कार्येण संबद्धं हि कारणं कार्यस्य जनकं भवति नासंबद्धं, संबन्धश्च कार्यस्यासतो न संभवति, तस्मात् सदिति। पुनः कस्मात्? सर्वसंभवाभावात्=कस्यचिदुत्पत्तये किंचिदुपादीयते न तु सर्वस्योत्पत्तये सर्वमुपादीयते इति कार्यकारणत्वयोर्नियमः उत्पत्तेः प्राक् कार्यस्यासत्त्वपक्षे नोपपद्यते, घटोत्पादनार्थं मृत्तिका गृह्यते न तन्त्वादि, यद्युत्पत्तेः प्रागसदेव कार्यं स्यात् तदा कार्यासत्त्वस्य सर्वत्राविशेषात् तन्त्वादिभ्योऽपि घट उत्पद्येत न चोत्पद्यते तस्मान्नाऽसत्, सत्त्वपक्षे तु घटस्य मृत्तिकायां सत्त्वात् मृत्तिकातो घटोत्पत्तिः संभवति, असंबद्धस्य जन्यत्वे तु सर्वं कार्यजातं सर्वस्माद् भवेत्, न चैतदस्ति, तस्मात् सदिति। पुनः कस्मात्? शक्तस्य शक्यकरणात्=शक्तेन हि कार्यं क्रियते नाशक्तेन, यतः शक्तं कारणं शक्तिसंबद्धमेव शक्यं करोति नासंबद्धमिति शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थः। कारणे तदात्मना वर्तमाना कार्यस्याव्याकृतावस्थारूपाऽनागतावस्थैव कार्यनियामिका शक्तिः, तया संबद्धं कार्यं च शक्यमित्यनागतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्याऽसत्त्वमिति तत्त्वम्। पुनः कस्मात्? कारणभावात्=कार्यस्य कारणात्मकत्वात्—न हि कारणाद् भिन्नं कार्यं, कारणं च सदिति कथं तदभिन्नं कार्यमसद् भवेत् तस्मात् सदिति ॥ ॐ ॥ ९ ॥ ॐ ॥

ननु तार्किकमतेऽपि कारणव्यापारादनन्तरं कार्यं सदेवेति सिद्धसाधनमेतद्, इत्यत आह—कारणव्यापारात्प्रागपीति। अपिना कारणव्यापारोत्तरमपि

---

१ सांख्यदर्शने सूत्रमपीदृशाकारमेव तत्र—"कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, अन्यस्य दुर्वचत्वाद् लाघवाच्च, सा शक्तिः कार्यस्य अनागतावस्थैवेत्यतः शक्तस्य शक्यकार्यकरणान्नासत उत्पाद इत्यर्थ इति विज्ञानभिक्षवः। २ कारणस्य=जनकस्य व्यापाराद्=कार्योत्पत्त्यनुकूलव्यापारात् प्रागपीत्यर्थः। शेषः=पूरणीयमित्यर्थः।

**शेषः। तथाच न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम्।**

**यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते, तथापि न प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य।**

---

कार्यं सत्, तत्रोत्तरकाले कार्यसत्ताया न तार्किकवैमत्यमिति "कारणव्यापारात्प्रागपि कारणे कार्यं विद्यते" इत्यस्माभिः साधनीयमतो नैयायिकतनयैः= तनयवत् तदनुगामिभिरत्र सिद्धसाधनं न प्रदर्शनीयमित्यर्थः।

मम मतमेव साधु दुष्टानि चान्यमतानीति प्रतिपिपादयिपुरादौ बौद्धमतस्य दुष्टतामाह—**यद्यपीति**। निपातसमुदायोऽयं शङ्काद्योतकः। यदि बीजादिनाशोत्तरमङ्कुराद्युत्पत्तिस्तर्हि कथं न नाशस्य कारणत्वमित्यत्राह—**तथापि नेति**। कस्य तर्हि कारणत्वमित्यत्राह—**अपि त्विति**। बीजावयवा एव कुतश्चिन्निमित्तात्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते तस्माद् व्यूहान्तराच्चाङ्कुर उत्पद्यत इति बीजावयवस्यैव कारणत्वं नाभावस्येत्यर्थः। तथाच बीजादय एवाङ्कुराद्युपादानकारणानि। परन्तु तद्गतावयवसंस्थानविशेषस्य अन्यविधसंस्थानप्रतिबन्धकतया पूर्वसंस्थानप्रध्वंसात् प्रतिबन्धकाभावरूपसहकारिसमवधाने जाते बीजाद्यवयवा एवाङ्कुरादिकमुत्पादयन्तीति न बीजाद्यभाव उपादानकारणम्, किन्तु बीजादिसंस्थानविशेषाभावो निमित्तकारणमिति भावः।

तद् यथोक्तं दर्शनान्तरे—"न विनष्टेभ्योऽनिष्पत्तेः" (न्या० ४।१।१७) "क्रमनिर्देशादप्रतिषेधः" (न्या० ४।१।१८) इति।

एतदुक्तं भवति—विद्यमानानि खलु कारणानि कार्यमुत्पादयितुं शक्नुवन्ति न विनष्टानि। यदि विनष्टान्यपि तानि कार्यमुपजनयितुं शक्नुयुः तदा विनष्टाः पित्रादयोऽपि पुत्रमुपजनयितुमर्हेयुः, न च विनष्टास्ते किंचिदुपजनयन्तो दृश्यन्ते। न च कृषीवलाः अपि विनष्टानि बीजानि क्षेत्रे वप्तुमुपाददते। तत् कथमवगच्छेमहि विनष्टानि कारणानि कार्यमुत्पादयन्तीति। अपि च न वयं बीजोपमर्दं बीजविनाशं निर्दिशामः, किं तर्हि? बीजस्य पूर्वापरावस्थयोः पूर्वापरीभावम्। यं किल क्रमविदः क्रममाचक्षते। द्वे दले हि प्रत्येकस्मिन् बीजे भवतः। तयोर्यः सर्वतः संयोगः सा बीजस्य पूर्वावस्था, यश्च भूमिसलिलसंयोगाद्

---

१ कुतश्चिन्निमित्तात्=मृत्सलिलसंयोगात् प्रादुर्भूतक्रियाः=स्थूलीभवनक्रियायुक्ताः, पूर्वव्यूहम्=पूर्वाकृतिम् व्यूहान्तरम्=आकृत्यन्तरम् आपद्यन्ते=प्राप्नुवन्ति। व्यूहः=अवयवानां सन्निवेशविशेषः, इति न्यायभाष्यार्थः। २ बीजविनाशश्चेदङ्कुरोत्पादहेतुरथ विनष्टे बीजे तदवयवेषु परस्परविच्छिन्नेषु असति तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति, सति तु तेषां व्यूहे भवति, तस्माद्विनष्टेभ्योऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजविनाशः कारणमिति सूत्रार्थः। (ता० टी०)

अभावात्तु भावोत्पत्तौ तस्य सर्वत्र सुलभत्वात्सर्वत्र सर्वकार्योत्पादप्रसङ्गः,

मध्यभागतो विभागः सा तस्यापरावस्था । तयोश्च यः पूर्वापरीभावः स एव तदुपमर्दः । न च तन्निर्देशेन भावाद् भावोत्पत्तिर्दुष्यति । न च भूमिसलिलसंयोगात् पूर्वव्यूहं हित्वा व्यूहान्तरमापद्यमानं बीजमबीजं संपद्यते । न च भूमिं निर्भिद्य निःसृतमङ्कुरं संयुक्ताभ्यां बीजदलाभ्यामवनद्धं क्षेत्रकाः न पश्यन्ति । न च साक्षात् पश्यद्भिर्बीजाभावादङ्कुरोत्पत्तिरभ्युपगन्तुं पार्यते । समानश्चैष चर्चः सर्वेषु जनिमत्सु भावेषु । तस्माद् युक्ता भावाद्भावोत्पत्तिर्न जात्वभावादिति ॥ ७ ॥

अभावाद् भावोत्पत्तौ को दोष इति परेण पर्यनुयुक्ते बीजाद्यभावस्योपादानकारणत्वे दोषमाह—अभावात्त्विति । तस्य=अभावस्य । सर्वत्र सुलभत्वात्=मरुभूम्यादावपि सत्त्वात्, सर्वत्र=मरावपि शाल्यङ्कुरोत्पादः आकाशेऽपि घटोत्पादः प्रसज्येतेत्यर्थः । तथा चाहुः "नासतोऽदृष्टत्वात्" [ वे० २।२।२६ ] इति सूत्रभाष्ये भगवन्तः श्रीशङ्कराचार्याः—"यद्यभावाद् भाव उत्पद्येत, अभावत्वाविशेषात् कारणत्वविशेषाभ्युपगमोऽनर्थकः स्यात्, न हि बीजादीनामुपमृदितानां योऽभावस्तस्य च शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद् विशेषोऽस्ति[1], येन बीजादेवाङ्कुरो जायते क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान् स्यात्, निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्, न चैवं दृश्यते" इति ।

"यद् येनानन्वितं न तत् तस्य विकारः, यथा—घटशरावोदञ्चनादयो हेम्नानन्विता न हेमविकाराः, अनन्विताश्चैते विकारा अभावेन, तस्मान्नाभावविकाराः, भावविकारास्तु ते, भावस्य तेनान्वितत्वात्" इतीयं भामत्यां मिश्रैरुक्ता युक्तिरप्यत्रानुसन्धेया ।

एतदुक्तं भवति—तदेव किलाभ्युपगन्तव्यं भवति, यल्लोके क्वचिद् दृश्यते । न हि यल्लोके कुत्रापि न दृश्यते, तदभ्युपगन्तुं शक्यते । प्रतिज्ञामात्रं हि तदा तत् स्यात् । अभावाद् भावोत्पत्तिश्चेत् क्वचिद् दृश्येत, तदाऽवश्यमभ्युपगम्येत । न च लोके क्वचिदभावाद् भावोत्पत्तिर्दृश्यते । नापि तदुपपत्तिं पश्यामः । अभावाद् भावोत्पत्तौ हि यावन्तो भावास्तावन्तः सर्वेऽभावान्विताः प्रादुःष्युः । कार्ये कारणान्वयस्यावश्यकत्वात् न च कोऽपि भावोऽभावान्वितः प्रादुर्भवन्नुपलभ्यते । न हि कारणं भवति कार्यं च नान्वेतीति संगच्छते । तस्मादभावाद् भावोत्पत्तिरित्येतत् फल्गु, इति ।

"न ह्यनन्वयविनष्टयोः शालियवबीजयोः कश्चिद् विशेषोऽस्ति, येनैकस्मा-

१ नह्यभावो विशिष्यते, विशेषणयोगे सोऽपि भावः स्यान्न निरुपाख्य इत्यर्थः ।

इत्यादिन्यायवार्तिकतात्पर्यटीकायामभिहितमस्माभिः ।
प्रपञ्चप्रत्ययश्चासति बाधके न शक्यो मिथ्येति वदितुम्,

---

च्छाल्यङ्कुरो नान्यस्मात्" इत्यादिना तात्पर्यटीकायामपि (न्या० ४।१।१८) स्पष्टमेतद्, इत्याशयेनाह—इत्यादिन्यायेति । इत्यादि=एवंविधं दूषणजातमित्यर्थः। एतदुक्तं भवति—कारणविनाशो हि सर्वत्राविशिष्टः तत् कस्य हेतोः शालिबीजादेव शाल्यङ्कुरो जायते न यवबीजात् । न हि शालिबीजविनाशो यवबीजविनाशाद् विशिष्यते । न चेदृक् कार्यभेदः कारणे विशिष्टशक्त्यभ्युपगममन्तरा कथंचिद् युज्यते । विशिष्टा शक्तिश्च भावस्य कारणस्य धर्मो भवितुमर्हति नाभावस्य। सोपाख्यत्वप्रसङ्गात् । निरुपाख्यश्चायमभ्युपगम्यते। अपि च न विनष्टेभ्यः कारणेभ्यः कार्यमुत्पत्तुमर्हति। तदन्वयस्य तत्रावश्यकत्वात्। न च कारणे विनष्टे कार्ये तदन्वय उपपद्यते। न हि विनष्टास्तन्तवः पटमन्वेतुं पारयन्ति। न च कार्ये कारणान्वयो निह्नोतुं शक्यते । प्रामाणिकत्वात्। न हि प्रमाणनिर्वृतं कश्चित् प्रमाणविदो निह्नुवते । तस्माद् नाभावाद् भावोत्पत्तिर्युक्ता किन्तु भावादिति ॥ ७ ॥

तदेवं बौद्धमतं निरस्य संप्रति वेदान्तिमतं खण्डयति—प्रपञ्चप्रत्ययश्चेति । प्रत्यक्षादिप्रमाणसिद्धशब्दादिप्रपञ्चानुभवश्च मिथ्येति गदितुं न पार्य इत्यर्थः ।

ननु 'प्रतीयमानत्वात् प्रपञ्चस्य न मिथ्यात्वम्' इति भाषणं न चारु, प्रतीयमानस्यापि शुक्तिरजतादेर्मिथ्यात्वस्य सर्वसम्प्रतिपन्नत्वादित्याशङ्कां परिहरति—असति बाधक इति। दृढतरबाधकप्रमाणासन्निधाने सतीत्यर्थः । शुक्तिज्ञानानन्तरं 'नेदं रजतम्' इत्येवं बाधज्ञानं बोभोतीति उत्तरज्ञानरूपबाधकस्य वेविद्यमानत्वाद् युक्तं तत्र तत्प्रतीतेर्मिथ्यात्वत्वम्, अत्र तु नास्ति कश्चिद् बाधक इति कथङ्कारं मिथ्यात्वेन भवितुं शक्यमिति भावः। एतेन "जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात्" (सां० ६।५२) इति कापिलसूत्रं व्याख्यातम्। वाचारम्भणश्रुतिस्तु कार्यस्य कारणात्मकत्वमेव प्रतिपादयति न कार्यमिथ्यात्वम्, वाचा[1]=वाक्पूर्वकेण "अयं घटोऽनेन घटेनोदकमाहर" इत्यादिव्यवहारेण हेतुना[2], विकारः=पृथुबुध्नोदराकारत्वादिलक्षणः संस्थानविशेषः, तत्प्रयुक्तं च घट इति नामधेयम् आरम्भणम्[3]=आरभ्यते-आलभ्यते[4]-स्पृश्यत इत्यारम्भणम्=मृद्द्रव्येण स्पृश्यते—उदकाहरणादिव्यवहारसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तर-भाग् भवतीति यावत्, अतो घटाद्यपि मृत्तिका=मृद् द्रव्यम् इत्येव

---

१ वाचेति तृतीया 'अन्नेन वसति' इत्यादिवत्प्रयोजनार्थे, अजहल्लक्षणावृत्त्या वाक्पूर्वकव्यवहारश्च तदर्थः, अतो व्याचष्टे—वागिति। २ एतादृग् व्यवहारसिद्ध्यर्थम् । ३ 'कृत्यल्युटो बहुलम्' इति सूत्रेण बाहुलकात्कर्मणि ल्युट् । ४ रलयोरभेदादाह—आलभ्यत इति। "आलम्भः स्पर्शहिंसयोः' इति नैघण्टुकाः ।

सत्यम्=प्रमाणप्रतिपन्नं न तु घटादिकं द्रव्यान्तरम्'' इत्येवं तदर्थात् ॥ एतेन वाचारम्भणश्रुतिरेवात्र बाधिकेति निरस्तम् ॥ अपि च सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपेण विभ्रमो दृष्टः शुक्तिकादौ, न तु जातु शुक्तिरूपं जानन् 'रजतम्' इति विपर्यस्यति, न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः, सामान्यग्रहो वा भवतीति कथं निर्भागस्यैकस्य ब्रह्मणो विपरीतज्ञानगोचरत्वसंभव इति न युक्तिमदेतन्मतमिति तात्पर्यटीकायां मिश्राः । ननु विश्वं चेत् सद् भवेत्, न तन्निषेधः श्रूयेत । कल्पितं हि निषिध्यते, यथा—नायं पुरुषः स्थाणुरिति, न सत् । विश्वनिषेधस्तु श्रूयते—"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ( कठ० ४।१० ) "नेह नानास्ति किंचन" ( बृ० ४।४।१९ ) इति । तस्मात् कल्पितमेतद् विश्वमिति चेत् । न, ब्रह्मनानात्वनिषेधात् । ब्रह्मप्रकरणे खल्वेतद् वाक्यद्वयमभिधीयते । ब्रह्मणि चैहिकामुष्मिकस्थितिभेदात् स्थूलदर्शिभिर्नानात्वं प्रसक्तम् । न च तत्प्रतिषेधाभावे यथायथं ब्रह्मप्रतिपत्तिः सुकरेति तदेवानेन पौनःपुन्येन जन्ममरणप्रबन्धलक्षणं संसारं दर्शयता प्रतिषिध्यते । तदेतच्च कृत्स्नवाक्यपर्यालोचनया स्फुटमधिगम्यते । कृत्स्नं चैतद् वाक्यद्वयं काठके बृहदारण्यके चैवं पठ्यते—"[२]यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ( कठ० ४।१० ) "[३]मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" ( बृ० ४।४।१९ ) इति । न चैतस्माद् वाक्यद्वयाद् ब्रह्मणि विश्वनिषेधः प्रतिपद्यते । ब्रह्मनानात्वप्रतिषेधस्तु विस्पष्टः । तस्मान्न कल्पितं विश्वम् । अथ मन्यसे "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छा० ६।१।४ ) इति श्रुत्या वाचारम्भणशब्देन विकारस्यानृतत्वाभिधानात्तदात्मकं विश्वं कल्पितमिति । नैतन्मन्तव्यम् । अनित्यत्वप्रतिपादनात् । न खल्वनया श्रुत्या विकारस्यानृतत्वं प्रतिपाद्यते । अपि च! अनित्यत्वम् । सा हि "मृत्तिकेत्येव सत्यम्" इत्यन्तेऽभिदधाना कारणस्य नित्यत्वं विकारं च नामधेयावशेषत्वान्नामधेयमित्यभिदधती तस्यानित्यत्वं प्रतिपादयति । "वाचारम्भणम्" इति च नामधेयविशेषणम् । वाचयाऽऽरभ्यते= अभ्युद्यते, इति वाचारम्भणम् "कृत्यल्युटो बहुलम्" ( पा० ३।३।११३ )

---

१ मृत्तिकैव सत्यं न तु घटादिकम्' इति तु नार्थः, तथासति 'मृत्तिका सत्या' इत्येवं सामानाधिकरण्येनैव निर्देशौचित्यादिति भावः । २ यद्=ब्रह्म अस्मिन् लोके वर्तते तदेव अमुष्मिन् लोके वर्तते । यच्च अमुष्मिन् लोके वर्तते तदेवास्मिन् लोके वर्तते । यः पुरुषो लोकद्वयेऽभेदेन वर्तमानं ब्रह्म लोकभेदात् नानेव=भिन्नमिव पश्यति=जानाति स पुनः पुनर्म्रियते, न कदाचिन्मुच्यते । ३ तद् ब्रह्म अध्यात्मयोगयुक्तेन मनसैवानु=प्रत्यगात्मदर्शनानन्तरं, द्रष्टव्यं=दर्शनार्हं विद्यते, कदापि च नानेव न संपद्यते, यस्तु नानेव पश्यति स पुनः पुनर्मृत्युमनुभवति, न कर्हिचिन्मुक्तिमृच्छति, इति श्रुतिपदार्थः ।

इति कणभक्षाक्षचरणमतमवशिष्यते,

---

इति कर्मणि ल्युट्प्रत्ययः। "वाचा हि नामान्यभिवदति" (बृ० ३।२।३) इति श्रुतेर्वागारभ्यमिति तदर्थः। कार्यं तावत् कारणमपि गच्छत् सह रूपेणाकारेणापि गच्छति। तन्नामधेयं च न तदैव रूपवदप्येति, किन्तु पश्चादपि किंचित् कालं प्रतितिष्ठति। तदेवाभिप्रेत्योच्यते—"विकारो नामधेयम्" इति। नामधेयं च वाक्कार्यं प्रसिद्धम्। शब्दमयत्वात्। अतो युक्तं तस्य वाचारम्भणमिति विशेषणम्। न चैतावता विकारस्य कार्यस्यानृतत्वमभिहितं भवति, किन्त्वनित्यत्वम्। कारणेऽप्ययाच्च कारणात्मना सत्त्वं कारणस्य च नित्यत्वम्। एतच्च वयमप्यभ्युपगच्छामः। सत्कार्यवादिनामस्माकं विकारमात्रे विकारात्मनाऽनित्यत्वस्य सर्वदा सिद्धत्वात्। सह विज्ञानात्मभिः प्रकृतिस्तु न कस्यचिद् विकारः। अपि च! सर्वविकारकारणम्। सर्वविकारात्मकं च विश्वम्। अतो न तत्कल्पितम्। बाधकयुक्तेश्च। अस्ति तावद् बाधिका युक्तिः। यदि विश्वमिदं कल्पितं भवेत् तदा—"ईक्षतेर्नाशब्दम्" (वे० १।१।५) इति सूत्रे "तदैक्षत बहुस्यां प्रजायेय" (छा० ६।२।३) इत्यादिश्रुतौ चेश्वरस्येक्षणपूर्वकं तत्कर्तृत्वं च न प्रोच्येत। नहि कल्पितं किंचित् केनचित् क्वचिदीक्षणपूर्वकं विधीयते। विश्वमिदं च तथा विधीयते। तस्मान्न तत्कल्पितम्। अपि च! सत्। तथा चोक्तं दर्शनान्तरे—"जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात्" (सां० ६।५२) इति। वक्ष्यति च व्यतिरेकमुखेनाचार्योऽपि—"नाभाव उपलब्धेः" (वे० २।२।२८) "वैधर्म्याच्च न स्वप्नादिवत्" (वे० २।२।२९) इति। यच्चाधुनापि सत् तदग्रेऽपि सदिति किमु वक्तव्यम्। सतो भावस्य कदाप्यसद्भावासिद्धेः। कालत्रये सतश्च सहेतुकस्य तस्याधाराधेयभावेनैव ब्रह्मात्मकत्वाभिधानं युक्तमुत्पश्यामो न प्रकारान्तरेणेति सर्वमनवद्यम्," इति इत्यन्ये॥ ॐ॥

एतदुक्तं भवति—ब्रह्मणोऽतिरिक्तस्य सर्वस्य जगतो मिथ्यात्वाभ्युपगमे जगदन्तर्गतत्वेन वेदस्यापि मिथ्यात्वापत्तिः, तन्मिथ्यात्वे तत्प्रतिपादितब्रह्मणोऽपि मिथ्यात्वं स्यात्, तन्मिथ्यात्वे च वेदान्तमतेऽपि शून्यवादप्रसङ्गः, तस्मात्तन्मिथ्यात्वप्रतिपादकश्रुतीनां तदनित्यत्वबोधने तात्पर्यमन्वेष्टव्यम् इति तार्किकाः॥ ॐ॥

खण्डितं बौद्धमतं वेदान्तिमतं च संप्रति परिशिष्टं तार्किकमतं खण्डनीयमित्याह—इति कणभक्षेति। यतः सौगतवेदान्तिनोर्मतं प्रागुक्तरीत्या न समीचीनम् इति=अतः तन्निरासे वक्तव्यत्वाभावात् कणादादिमतमेव खण्डनीयत्वेन परिशिष्यत इत्यर्थः॥

तद्विशेषाभावाय तदपि खण्ड्यतामित्याकाङ्क्षायां मूलकारिकाकृतैव तन्मं-

---

१ कणादादिमतस्य।

तत्रेदं प्रतिज्ञातं—"सत् कार्यम्" इति।
तत्र हेतुमाह—"असदकरणाद्" इति।

तस्य सविस्तरं खण्ड्यमानत्वान्न तन्मया खण्ड्यत इत्याह—तत्रेदं प्रतिज्ञातमिति। तत्र[1]=तत्कणादादिमतनिरासार्थं, प्रतिज्ञातं=साध्यविशिष्टपक्षनिर्देशात्मकं प्रतिज्ञावाक्यम्[2]भिहितं मूलकृतेति शेषः। तन्मतावलम्बिनमुद्दिश्यैव 'सत्कार्यम्' इति प्रतिज्ञेति तात्पर्यम्।

अयमाशयः—अनुमानं स्वार्थपरार्थभेदेन द्विविधम्। स्वार्थं तावत् धूमादिज्ञानजन्यवह्निसत्त्वादिविषयकस्वीयान्तःकरणवृत्तिविशेषः। परार्थं तु परकीयवह्न्यादिसत्तासाधनम्। तच्च न्यायसाध्यम्। तथाहि—यस्य व्याप्तिज्ञानविरहात् धूमादिदर्शनेनापि वह्न्यादिसत्तासिद्धिर्न जाता, तस्य तत्सिद्धिः स्वतः सिद्धिमता पुरुषेण न्यायेनोत्पाद्यते। न्यायो नाम प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकवाक्यविशेषरूपः पञ्चावयवः। तत्र "वह्निमान्" इत्यादि वाक्यं प्रतिज्ञा। "धूमात्" इत्यादिहेतुः। "यो यो धूमवान् स स वह्निमान् यथा महानसम्" इत्यादि वाक्यमुदाहरणम्। "वह्निव्याप्यधूमवानयम्" इत्यादि वाक्यमुपनयः। "तस्माद् वह्निमानयम्" इत्यादि वाक्यं निगमनम्।

एवं च—"कारणव्यापारात्प्रागपि कार्यं सत्, असदकरणात्" इत्यादिवाक्येनाचार्येण न्याय आदृतः। तत्रेदं प्रष्टव्यं—कतमस्य परस्य सिद्ध्यर्थमयं प्रयत्नः क्रियते। न तावद् वैनाशिकानां सिद्ध्यर्थम्। तैः कार्योत्पत्तेः प्राक् कारणसत्ताया अनभ्युपगमात् कारणव्यापारात्प्रागपि कार्यसत्तासाधनाय तान् प्रति नायं न्यायो युज्यते। नापि विवर्तवादिनः प्रति। तैः कारणमभ्युपगच्छद्भिरपि सदात्मकस्य कारणस्य व्यापारो नाङ्गीक्रियते, निष्क्रियत्वात्तस्य। नाप्युत्पत्तेः परं कार्यसत्ताभ्युपगम्यते। तत्कथं "कारणव्यापारात् प्रागपि कार्यं सत्" इति प्रतिज्ञा घटते।

तस्मात् ये ये वैशेषिकादयो वादिनः कारणसत्तां, तद् व्यापारम्, उत्पत्तेः परं कार्यसत्तां चाङ्गीकुर्वन्ति न परं कारणव्यापारात् प्राक् कार्यसत्तां न जानन्ति, तेषामेव तत्सिद्धये सांख्याचार्येणायं न्यायोपदर्शनप्रयत्न आरभ्यत इति।

ननु न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत्राह—तत्र हेतुमाहेति। तत्र=उत्पत्तेः प्रागपि कार्यस्य सत्त्वे। तथा च "कार्यं सत् करणात्=क्रियमाणत्वात्, यन्न सत् तन्न क्रियमाणं यथा नीले पीतं नरविषाणं वा" इति प्रयोगोऽत्र फलति। अस्मिंश्च शेषवदनुमानप्रयोगे हेतूपयोगिव्यतिरेकव्याप्तिस्वरूपोपदर्शकत्वेन स्पष्टमेव 'असदकरणात्' इत्यस्य हेतुत्वमिति पक्षधर्मत्वाभावात्कथमस्य हेतुत्वमिति न चोद्यावसरः।

१ तत्रेति निमित्ते सप्तमी। अतो व्याचष्टे—तत्कणेति। २ साध्यवत्तया पक्षवचनं प्रतिज्ञा।

असच्चेत् कारणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं कर्तुं केनापि शक्यं, नहि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यते।

सदसत्त्वे घटस्य धर्माविति चेत्, तथाप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव, तथा च नाऽसत्त्वम्।

असंबद्धेनातदात्मना चासत्त्वेन कथमसन् घटः।

---

आशयं चैनमेव स्वमनसि निधाय व्यक्तिरेकव्याप्तिस्वरूपं विशदीकुर्वन् तदर्थमाचष्टे—असच्चेदिति। अस्य=असतः।

ननु "सन् घटः, असन् घटः" इति व्यवहारान्यथानुपपत्त्या पाकात् पूर्वापरयोः श्यामरक्तत्वे इव सदसत्त्वे विकारजातस्य धर्मौ, ते च स्वकारणाधीनलब्धजन्मतया कदाचिदेव भवतः, तथा च यथा घटे पाकात् पूर्वं श्यामता पाकानन्तरं च रक्तता तथोत्पत्तेः प्राग्घटस्याऽसत्त्वं धर्मः पश्चाच्च तस्य सत्त्वं धर्म इति तावद् वयं मन्यामहे न जातु नरविषाणवदसत्स्वभावं विकारजातमभ्युपगच्छामः, येन नरविषाणवन्नोत्पद्येतेत्येवमाक्षेपभाजो भवेमेति तार्किकसमाहितं निरस्यति—सदसत्त्वे इति। उत्पत्त्यनन्तरं सत्त्वम्, उत्पत्तेः प्राक् तु असत्त्वमिति व्यवस्थितविषयौ धर्मावित्यर्थः। परिहरति—तथापीति। असति धर्मिणीति। धर्मिणमन्तरा धर्मसद्भावानुपपत्त्या धर्मिसत्त्वं प्राप्तमिति भावः। यतो धर्मिसत्त्वं विना धर्मसत्त्वमनुपपन्नम् इति=अतः सत्त्वं तदवस्थम्=उत्पत्तेः प्रागपि कार्यस्य सत्त्वं स्थितम्, तथा च न भवदभिमतं कार्यस्यासत्त्वं सिद्धमित्यर्थः। एतदुक्तं भवति—यदि सदसत्त्वयोर्धर्मत्वं[1] स्वीक्रियेत, तर्हि धर्मिरूपं वस्तु दण्डायमानं सदातनमिति न कस्यचित् तद्[2] विकार इत्यापद्येत, अथासत्त्वसमये तन्नास्तीत्युच्येत तर्हि कस्य धर्मोऽसत्त्वमिति त्वया वक्तव्यम्, न ह्यविद्यमाने धर्मिणि तद्धर्मो विद्यमान इति कथं चिदुपपद्यते, धर्मिसत्त्वेऽभ्युपगते च धर्मसत्त्वं स्वत एवाभ्युपगतं भवतीति नैव प्रागुत्पत्तेः कार्यासत्त्वं जातु सिध्यति प्रत्युत कार्यसत्त्वमिति। तदेवाह—नासत्त्वमिति। उत्पत्तेः प्रागसत्त्वं न सिध्यति, अपि तु सत्त्वमित्यर्थः।

किं च—उत्पत्तेः प्राग् "घटोऽसन्" इत्यभिधानमपि त्वन्मते न संजाघटीतीत्याह—असंबद्धेनेति। धर्मिणा सह असंबद्धेन=संबन्धमलभमानेन असत्त्वेन=असत्त्वरूपधर्मेण असंबद्धम् असत्त्वरूपं धर्ममादायेत्यर्थः। कथमसन् घटः="असत्त्वरूपधर्माश्रयो घटः" इत्यभिधानं कथम्=न कथमपि तद् घटते धर्मिसंबद्धेन विद्यमानेन धर्मेणैव तदाश्रयत्वनियमादित्यर्थः। एतदुक्तं भवति—यथा "नीलं कमलम्" इत्यस्य "नीलगुणरूपधर्माश्रयः कमलम्" इत्यर्थेन बोभूयते, तथा "असन् घटः" इत्यस्यापि "असत्त्वरूपधर्माश्रयो घटः"

---

१ सदसत्त्वयोर्धर्मत्वाभ्युपगमेऽपि। २ तद्=धर्मिरूपं वस्तु।

**तस्मात्कारणव्यापारादूर्ध्वमिव ततः प्रागपि सदेव कार्यमिति। कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते,**

---

इत्येवार्थो वाच्यः, स च नोपपद्यते, कमलेन सह नीलस्येव असता घटेन सह असत्त्वरूपधर्मस्यासंबद्धत्वादिति। तार्किकमतेन 'असन् घट' इति व्यवहाराभावं प्रसाध्य सांख्यनयेनापि "असन् घटः" इति व्यवहाराभावं साधयति—अतदात्मना चेति। तथा अतदात्मना=अतत्स्वरूपेण–धर्मिस्वरूपतयाऽविद्यमानेन च असत्त्वेन कथम् असन् घट इत्यभिधानं—न कथमपीत्यर्थः। धर्म्यात्मना विद्यमानेन धर्मेणैव तदाश्रयत्वनियमादिति भावः। एतदुक्तं भवति—यथा "नीलं कमलम्" इत्यस्य "कमलस्वरूपं नीलम्" इत्यर्थस्तथा "असन् घटः" इत्यस्यापि "घटरूपम् असत्" इत्यर्थो वाच्यः, स चानुपपन्नः, कमलेन सह नीलस्येव असता घटेन सहासत्त्वरूपधर्मस्य संबन्धाभावात् इति। ततश्च धर्मिसंबद्धेन धर्म्यात्मना वा विद्यमानेन धर्मेणैव तदाश्रयत्वनियमान्नासंबद्धेनाऽतदात्मना वाऽसत्त्वेन धर्मेण तदाश्रयत्वसंभव इति तत्त्वम्।

तत्र "असंबद्धेनासत्त्वेन" इत्यभिधानं तार्किकमताभिप्रायम्, "अतदात्मना चासत्त्वेन" इति कथनं च सांख्यमताभिप्रायमिति विवेक्तव्यम्। तार्किकमते 'नीलं कमलम्' इत्यादौ गुणिरूपधर्मिणि समवायादिसंबन्धेन[1] नीलगुणरूपधर्मस्य संबद्धत्वमादाय आश्रयाश्रयिभावप्रतीतिरिति स्वीकारात्, सांख्यादिनये च धर्मधर्मिणोरभेदात् धर्मिस्वरूपमेव धर्म इति तदात्मतया तत्प्रतीतेरङ्गीकारात्[2]।

फलितमाह—तस्मादिति। ततः=कारणव्यापारात्। ननूत्पत्तेः प्रागपि कार्यं सदित्यभ्युपगम्यते चेत्, कृतं तर्हि कुलालादिव्यापारेण, न ह्यन्यत् किमप्यवशिष्टमस्ति यदर्थं कुलालादिव्यापारोऽर्थवान् भवेत्, न च घटादिस्वरूपसिद्ध्यर्थः कारकव्यापार इति साम्प्रतं, भवन्मते तस्य प्रागेव सिद्धत्वात्, करणं हि उत्पत्त्यनुकूलव्यापारः, नासौ सतो जातु संभवति, न हि विद्यमानस्योत्पत्तिः केनचित् क्वचिद् दृश्यते, ततश्च यथा प्राक् सिद्धत्वात् मृत्पिण्डादेः कारणस्य स्वरूपसिद्ध्यर्थं न कश्चिद् व्याप्रियते, तथैव प्राक्सिद्धत्वात् कार्यस्वरूपस्य तत्प्रसिद्धयेऽपि न कश्चिद् व्याप्रियेत, व्याप्रियते च, अतो मन्यामहे—अस्त्युत्पत्तेः प्रागभावः कार्यस्य येन कारकव्यापारो भवत्यर्थवानिति, इत्याशङ्क्य सत्कार्यवादेऽपि कारकव्यापारस्यार्थवत्तामाचष्टे—कारणाच्चास्येति। चः पुन-

---

१ कपालादाववयवे घटाद्यवयविनो यः संबन्धः, द्रव्येषु गुणकर्मणोर्यः संबन्धः, द्रव्ये गुणे कर्मणि च जातेर्यः संबन्धः, नित्यद्रव्ये विशेषस्य च यः संबन्धः, स संबन्धः समवाय इति तार्किकाः। २ आश्रयाश्रयिभावप्रतीतेः।

र्थः । अस्य सतः=कारणव्यापारात्प्रागपि व्यवहारायोग्यसूक्ष्मरूपेण सिद्धस्य कार्यस्य या व्यवहारयोग्यस्थूलरूपापादनरूपा अभिव्यक्तिः सा पुनः कारणात्= कुलालादिव्यापाराद् भवति, इत्येवम् अभिव्यक्तिरेव साध्यतयावशिष्यते नोत्पत्तिरित्यर्थः। ततश्च पृथुबुध्नोदरादिकार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्य नैव वैयर्थ्यमिति न तद्बलेनासत्कार्यवादसिद्धिरिति भावः।

अयमत्र सरलो मार्गः—यस्य वस्तुनोऽभिव्यक्तिर्भविष्यति सा तस्यानागतावस्था, यस्याभिव्यक्तिः पूर्वमासीत् सा तस्याऽतीता, यच्च वस्तु स्वव्यापारारूढम् अभिव्यक्तिमापन्नं भवद् वर्तते सा तस्य वर्तमानावस्थेति स्थितिः। तत्रोत्पत्तेः प्रागपि कार्यं चेत् सद्=विद्यमानं—भवेत् नासत्=नाविद्यमानं, तर्हि दण्डचक्रादिना किं साध्यत इति नैयायिकानामाक्षेपः । सांख्यास्तत्रैवं समादधति—दण्डादीनि यानि सन्ति कारणानि न जातु तानि किंचिद् अपूर्वम् असत् घटादिकार्यमुत्पादयन्ति, किं तु अव्यक्ता(सूक्ष्मा)वस्थया कारणे विद्यमानमेव घटादिकार्यं वर्तमानावस्थां नयन्ति—किमुक्तम्? कारणमेव पृथुबुध्नोदरादिकार्याकारेण कारणव्यापारा व्यवस्थापयन्ति। ननु वर्तमानावस्थेन मृत्पिण्डेन यथा घटस्याविर्भावो भवति, घटे उत्पन्नेऽतीतावस्थामापन्नात् मृत्पिण्डादपि तथैव पुनर्घटोत्पत्तिः किं न जायते, त्वन्मते घटस्य वर्तमानकालेऽपि अतीतावस्थस्य मृत्पिण्डस्य विद्यमानत्वात् इति चेत् । अत्र सांख्याः—वर्तमानावस्थापन्नं यत् कारणमस्ति तदेव कार्यस्य व्यक्ता(स्थूला)वस्थासम्पादने समर्थं भवति, नातीतावस्थमिति अतीतावस्थेन कारणेन कार्यस्याविर्भावो न भवतीति । तदेतत् प्रागवोचामैव ॥ ९ ॥ अन्ये तु वदन्ति—कार्यं चेदुत्पत्तेः प्रागत्यन्तमसद् भवेत् तदा कारणव्यापारेणापि नोत्पद्येत । न ह्यत्यन्तासच्छशशृङ्गादयः

१ व्यवहारः=उदकाहरणादिकार्यविशेषः । २ तद्बलेन=कारकव्यापारसद्भावबलेन। ३ सांख्यन्याययोः परस्परमविरोधाय व्याख्यान्तरमाह—अन्ये त्विति । अत्र युक्तायुक्तत्वे सुधीभिर्विचारणीये । "शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी" (यो० ३। १४) इति सूत्रे नारायणतीर्थास्त्वाहुः—"ननु वर्तमाने धर्मिणि कारणव्यापारात्पूर्वं धर्मादेरेव वर्तमानत्वे सत्कार्यवादबाधः स्यात् । कारणव्यापारेणासतः कार्यस्योत्पत्त्यङ्गीकारात् । न च कथंचिद् भिन्नत्वेऽपि शक्त्यात्मनाऽवस्थितस्याऽत एव भिन्नस्य कारणेनाऽभिव्यक्तिरेव क्रियते, नोत्पत्तिरितो न सत्कार्यबाधप्रसङ्ग इति वाच्यम्। अभिव्यक्तेरपि जन्यत्वे सत्कार्यवादबाधः स्यात्। नित्यत्वे सदैवाभिव्यक्तिः स्यात्। तस्याप्यभिव्यक्त्यपेक्षायामनवस्थापत्तेश्चेति चेत्। न, धर्मिनिष्ठसत्त्वगुणस्यैव धर्माद्यभिव्यक्तित्वेनाऽभिव्यक्तेर्नित्यत्वेऽपि तमसा प्रतिबन्धकत्वान्न व्यवहारोपयोगित्वम्। अभिव्यञ्जकसामग्र्योत्तेजकेन मणेरिव तमसः प्रतिबन्धाद् व्यवहारोपयोगित्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकाराद् सत्कार्यवादबाधायोगात्। तस्मात् सामग्र्या उत्पादकत्वपक्ष एव नैयायिकोक्तदोषावकाशो नोत्तेजकत्वपक्षेऽपि । अतस्तेषां दूषणप्रयासोऽन्येषां समाधानान्तरप्रयासश्च व्यर्थ एवेति संक्षेपः" इति ॥

**सतश्चाभिव्यक्तिरुपपन्ना, यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसः ।**

**असतः करणे तु न निदर्शनं किञ्चिदस्ति, न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद् दृष्टम् ।**

---

कारणव्यापारेण कथं चिदुत्पत्तुं पारयन्ते । सच्चेत् कृतं तत्र कारणव्यापारेण । न हि सति कार्ये कारणव्यापारस्य कृत्यं किंचिद् विद्यते । तस्य पूर्वमेव सत्त्वात् । अतः प्रागुत्पत्तेः कारणात्मना सद् भवदपि कार्यं कार्यात्मना भवत्यसदित्यभ्युपगम्यते । अनेनासद्वादो नापद्यते, कारणव्यापारोऽपि च सप्रयोजन उपपद्यते । तदेव हि लोके कारणव्यापारेण नोत्पद्यते यत् केनापि रूपेणोत्पत्तेः पूर्वं न वर्तते यथा सिकतासु तैलम् । न चैवमिदं कार्यमभ्युपेयते येनासद्वाद आपद्येत । तद्धि प्रागुत्पत्तेः कार्यरूपेणासद् भवदपि कारणरूपेण सदभ्युपेयते । तस्य च कारणव्यापारेणोत्पत्तिर्युज्यते नास्ति कश्चिद् विरोधः । कारणव्यापारो हि न किंचिदपूर्वं कुरुते । तत्र तत्सामर्थ्याभावात् । अन्यथा सिकतासु तैलमपि कुर्वीत । न च तत्कुर्वाणो लोक्यते । तर्हि किं तेन क्रियते? कारणरूपेण सद्भवत् कार्यं येन कार्येण रूपेण सन्न विद्यते तेन रूपेण तस्य सत्त्वमापाद्यते इति ॥ ❀ ॥

ननु कारणव्यापाराद् असत एव कार्यस्याभिव्यक्तिरस्त्वित्यत आह—सतश्चेति । पूर्वं सत एव वस्तुनोऽभिव्यक्तिर्युक्ता न त्वसत इत्यर्थः ।

तत्र दृष्टान्तयति—यथेति । तैलस्य, तण्डुलानाम्, पयसः, इति षष्ठ्यन्तानां पूर्वतोऽनुकृष्टेन "अभिव्यक्तिः" इति पदेनान्वयः । सौरभेयीषु-गोषु । सुरभेरपत्यानीति विग्रहे "स्त्रीभ्यो ढक्" इति ढक् । तिलादिषु प्राग्विद्यमानानामेव तैलादीनां पीडनादिना भवत्यभिव्यक्तिरिति सत एवाभिव्यक्तिर्भवति नासत इत्यर्थः ।

असतोऽभिव्यक्तौ तु नास्ति कश्चिद्दृष्टान्त इत्याह—असत इति । करणे=अभिव्यक्तौ, निदर्शनम्=दृष्टान्तः । तदेव विशदयति—न खल्विति । खलुशब्द एवार्थकः । तथा च-यद् वस्तु असत्, तद् अभिव्यज्यमानं भवन्मते च उत्पद्यमानं वा क्वचिदपि नैव दृष्टमित्यर्थः । असतो नाभिव्यक्तिर्नवोत्पत्तिरिति सरलार्थः । तथा च साङ्ख्यसूत्रम्—"नासदुत्पादो नृशृङ्गवत्" इति । तथा च यथा असतो नरविषाणस्य न कथंचिदुत्पत्तिर्भवितुमर्हति, तथा असतः कार्यस्यापि न शक्या कारकव्यापारेणोत्पत्तिः कर्तुमिति दुष्ट एव तार्किकाभिमतोऽसत्कार्यवाद इति भावः । तदेवम् "असत्करणात्" इति प्रथमो हेतुर्व्याख्यातः ॥ ❀ ॥

---

१ कारणे कार्यसत्त्वमुक्तं वासिष्ठे—"प्रसुप्तावस्थया चक्रपद्मशङ्खाः शिलोदरे । यथास्थिताश्चितेरन्तस्तथेयं जगदावली ॥" इति ।

इतश्च कारणव्यापारात्प्राक् सदेव कार्यम् 'उपादानग्रहणाद्'–उपादानानि=कारणानि तेषां ग्रहणं=कार्येण संबन्धः, उपादानैः कार्यस्य संबन्धादिति यावत्।

एतदुक्तं भवति–कार्येण संबद्धं कारणं कार्यस्य जनकं, संबन्धश्च कार्यस्याऽसतो न संभवति तस्मात् सदिति।

स्यादेतद्–असंबद्धमेव कारणैः कस्मात् कार्यं न जन्यते तथा

---

कारणव्यापारात्प्राक् कार्यस्य सत्त्वे हेत्वन्तरमुत्थापयति—इतश्चेति। वक्ष्यमाणहेतोरपीत्यर्थः।

फलितार्थमाह—उपादानैरिति। अनेन "कार्यम् उपादाने सत्, उपादानेन सह संबद्धत्वात्, यद् यत्र[1] न सत्, न तत् तेन संबद्धम्, यथा मृत्तिकया पटादिकम्" इत्यनुमानं दर्शयति। प्रोक्तानुमाने "उपादानसंबद्धत्वात्" इति हेतोरदुष्टत्वं विशदयितुमाह—एतदुक्तमिति। "कार्येण संबद्धमेव कारणं कार्यजनकम्" इत्युक्त्या "उत्पत्तेः प्राक् कार्यम् उपादानसंबद्धम्, तज्जन्यत्वात्, यच्च नोपादानसंबद्धम्, न तत्[2] तज्जन्यम्, यथा मृदः पटादिकम्" इत्यनुमानं दर्शितम्। तथा च 'मृदादयः स्वसंबद्धकार्यजनकाः, उपादानकारणत्वात्, व्यतिरेके शशशृङ्गवत्' इति फलति॥

अस्मिन्ननुमाने "तज्जन्यत्वात्" इति हेतुरस्तु, "उपादानसंबद्धम्" इति साध्यं मा भूदित्येवंविधे विपक्षे[3] बाधकाभावमाशङ्कते—स्यादेतदित्यादिना। तथा च–असंबद्धस्य जन्यत्वे च। उत्पत्स्यते—उत्पन्नं भविष्यति। तथा च प्रोक्तानुमाने विपक्षे[4] नास्ति बाधकं किंचिदिति भावः। विपक्षबाधकानुकूलतर्कप्रदर्शनपरं "सर्वसंभवाभावात्" इति हेतुपदं व्याचष्टे—असंबद्धस्य जन्यत्व इति। तथा चास्मन्मते "सर्वस्मात् सर्वकार्योत्पत्तिप्रसङ्गरूपोऽनुकूलतर्कोऽस्ति, "असंबद्धान्येव कारणानि कार्यं जनयन्ति" इति, भवन्मते च नास्त्यनुकूलतर्कः कश्चित्, सर्वस्मात् सर्वोत्पत्तिप्रसङ्गरूपस्य बाधकस्य तत्र सत्त्वात्, इति "तज्जन्यत्वात्" इति हेतुरस्तु, "उपादानसंबद्धम्" इति साध्यं मा भूत्, इत्येवं वक्तुं न शक्यत इति भावः।

घट[5]पटाद्यर्थिनो नराः प्रतिनियतानि मृत्तन्त्वादीनि कारणानि गृह्णन्तो लोके दृश्यन्ते, न हि घटार्थी तन्तून् गृह्णाति नापि पटार्थी मृदमुपादत्ते, तदेतन्नियतोपादानग्रहणम् असत्कार्यवादे नोपपद्यते, समा[6]ने हि सर्वत्र सर्वस्य कार्य-

---

१ यस्मिन्नुपादाने। २ तत् कार्यं कार्यासंबद्धोपादानेन जन्यं न भवतीत्यर्थः। ३ निश्चितसाध्याभाववान् विपक्षः। ४ "तज्जन्यत्वात् इति हेतुरस्तु" इत्येवमुक्तस्वरूपे। ५ उपादानं=समवायिकारणं, तस्य ग्रहणादित्यर्थं मनसि निधाय 'उपादानग्रहणात्', 'सर्वसंभवाभावात्' इत्यनयोरभिप्रायान्तरमाह—घटेति। ६ प्रतिनियतोपादानग्रहणान्यथानुपपत्त्या कार्यं सदित्यर्थः। अनुपपन्नत्वे हेतुः—समाने हीति। अयमत्र

चासदेवोत्पत्स्यतेऽत आह—"सर्वसम्भवाभावाद्" इति। असंबद्धस्य जन्यत्वे असंबद्धत्वाविशेषेण सर्वं कार्यजातं सर्वस्माद् भवेद्, न

स्यासत्त्वे "सर्वं सर्वस्मादुत्पद्येत, इति प्रतिनियतोपादानग्रहणं नोपपद्येत, तथा च प्रतिनियतोपादानग्रहणात् सर्वस्मात् सर्वोत्पत्त्यदर्शनाच्च नासत् कार्यम् इति निष्कर्षः ॥ ❀ ॥

निष्कर्षः—यस्य खलु कार्यस्य यत् कारणं नियतं यथा मृत्तिका घटस्य तन्तवश्च पटस्य, तत् सत्येव तस्मिन्नुपलभ्यते नासति। यदि कार्यं प्रागुत्पत्तेः कारणतोऽनन्यन्न भवेत् तदा न तस्मिन् सत्येवोपलभ्येत। न हि मृत्तिकातोऽन्यः पटस्तन्तुभ्योऽन्यो वा घटः सत्यामेव मृत्तिकायां सत्स्वेव वा तन्तुषु कर्हिचिदुपलभ्यते। अन्यत्वे चावश्यमुपलभ्येत। यथाऽस्ति मृत्तिकातोऽन्यो घटस्तथाऽस्ति पटोऽप्यन्यः। एवं तन्तुभ्यो यथाऽस्त्यन्यः पटस्तथाऽस्ति घटोऽप्यन्यः। उपलभ्यते च सर्वत्र मृत्तिकायां भवन्त्यां घटः, तन्तुषु भवत्सु च पटः। यद्भावे च यन्नियमेनोपलभ्यते तस्मादस्ति तस्यानन्यत्वं प्रागुत्पत्तेरिति निश्चयः। अन्वयव्यतिरेकौ हि उपलब्धिपथमारोहन्तौ कार्यस्य कारणान्यत्वानन्यत्वे तावदगमयतः। तौ च यथा मृद्घटयोस्तन्तुपटयोश्च दृष्टिपथमारोहतो न तथा मृत्पटयोस्तन्तुघटयोश्च प्राप्नुतः। किं कारणम्? प्रागुत्पत्तेर्मृदनन्यो घटस्तन्त्वनन्यश्च पटो वर्तते नातो विपरीतमिति विस्पष्टं तत्कारणमवगन्तुं शक्यते नास्त्यत्र कश्चित् संशयावकाशः॥ ❀॥

अपि च लोके खलु दध्यर्थिभिर्नियमेन क्षीरमेवोपादीयमानं दृश्यते घटार्थिभिश्च मृत्तिका। कार्यं चेत् प्रागुत्पत्तेः कारणानन्यन्न भवेत् तदा तत्तत्कार्यार्थिनां तत्तत्कारणोपादाननियमोऽयं न दृश्येत, किन्तु ततो विपरीतमप्यनुभूयेत। न च दध्यर्थिभिर्मृत्तिकोपादीयमाना क्वचिदनुभूयते घटार्थिभिश्च क्षीरम्। किमत्र कारणम्? इदमेव कारणं न ते प्रागुत्पत्तेर्मृत्तिकातोऽनन्यद् दधि पश्यन्ति नापि क्षीरादनन्यं घटं लोचयन्ति। यस्य तु प्रागुत्पत्तेरसत् कार्यं तस्य सर्वस्य सर्वत्रासत्त्वाविशेषेण कस्मात् क्षीरमेव दध्यर्थमुपादीयते न मृत्तिका, मृत्तिकैव घटार्थमुपादीयते न क्षीरमित्यस्यास्ति किंचित् सदुत्तरम्? असत्त्वाविशेषेऽपि तत्तत्कारणे तत्तत्कार्योत्पादहेतुरतिशयः कश्चिदभ्युपगम्यते इति चेदुत्तरं दीयेत? तदा सगर्वं वदामः—प्रकारान्तरेणासद्वादः परित्यज्यते परिगृह्यते च सद्वादः। कार्यस्य कारणेऽनन्यत्वेनावस्थानस्यैवातिशयपदार्थत्वात्। न ह्येतदसत्कार्यवादे कथंचिदुपपद्यते। किं चेदमपि चिन्तयितव्यं—यत्र यस्य सर्वथाऽभावोऽस्ति तत्र तत् कथमुत्पत्स्यते। न ह्यभावाद् भावः कदाचिदुत्पत्तुमर्हति। चेदुत्पद्येत तदा पीडनेन सिकतासु तैलमप्युत्पद्येत दण्डादिव्यापारेण च तन्तुषु घटोऽप्युपजायेत। न च तत्र तैलमुत्पद्यते घटो वा तत्रोपजायते। तदभावे च कथमसद्वादोऽयमनुमन्येत। यत् खलु कार्यं यस्मात् कारणादुपजायते तत् तदन्वितमेवोपजायते। असतश्चेत् सदुपजायेत तदा तदन्वितमेवोपजायेत। सदन्वितमेव च सर्वमुपजायमानमुपलभ्यते घटः सन् पटः सन्निति, नासदन्वितम्। न च यद् यदन्वितं नोत्पद्यते तस्य तत् कारणं संभावयितुमपि शक्यते किं पुनरभ्युपगन्तुम्। असतः सदुत्पत्तौ च न किंचिन्निदर्शनं लोक्यते येन तद्बलेनाप्यसद्वादः स्वीक्रियेत सद्वादश्च परित्यज्येत।

चैतदस्ति, तस्मान्नासंबद्धमसंबद्धेन जन्यतेऽपि तु संबद्धं संबद्धेन जन्यत इति। यथाहुः साङ्ख्यवृद्धाः–"असत्त्वे नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः। असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः" ॥ इति ॥

स्यादेतद्–असंबद्धमपि सत् तदेव करोति यत्र यत्कारणं शक्तं, शक्तिश्च कारणस्य कार्यदर्शनादवगम्यते, तेन नाव्यवस्थेत्यत आह–"शक्तस्य शक्यकरणाद्" इति।

सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्यात् शक्य एव वा,

---

स्वोक्तार्थे 'असतः संवन्धाभावे' वृद्धसम्मतिमाह—यथाहुरिति। असत्त्वे= कार्यस्य उत्पत्तेः प्रागविद्यमानत्वे सति, [तेषां कार्याणाम्] सत्त्वसङ्गिभिः= सत्त्वधर्माश्रयैः, कारणैः सह सम्बन्धो नास्ति=न स्यात्, सदसतोः सम्बन्धानुपपत्तेः। कारणैः असंबद्धस्य च कार्यस्य उत्पत्तिमिच्छतो मते व्यवस्थितिः= "मृद एव घटः कनकादेव कटकम्" "क्षीरादेव दधि" इत्येवंरूपा व्यवस्था न स्यात्, किं तु" "सर्वस्मात् सर्वोत्पत्तिः" इत्येवंरूपा अव्यवस्था एव भवेदित्यर्थः। तथा च साङ्ख्यसूत्रे—"उपादाननियमात्" सर्वत्र सर्वदा सर्वासंभवात्" इति ॥ ९ ॥

"कारणसंबद्धमेव कार्यं कार्यसंबद्धेन कारणेन जन्यते, न त्वसंबद्धमसंबद्धेन, "अन्यथा अव्यवस्था" इति प्रागुक्तमसहमानस्तार्किकः शङ्कते—स्यादेतदिति। कार्येण असंबद्धमपि सत् कारणं तदेव कार्यं करोति, यत्र=यस्मिन् कार्ये, यत् कारणं शक्तम्=शक्तियुक्तम्, न सर्वमित्यर्थः। तथा च "मृद एव घटः, कनकादेव कटकम्" इति व्यवस्था असत्कार्यवादेऽपि संघटते मृदादीनां घटाद्युत्पादन एव शक्तिमत्त्वादिति भावः।

ननु शक्तौ किं मानमत आह—शक्तिश्चेति। कारणनिष्ठा शक्तिश्च कार्यदर्शनात्="मृद एव घटः कनकादेव कटकम्" इति प्रतिनियतकार्योत्पत्त्यन्यथानुपपत्तिज्ञानात्, अवगम्यते=अनुमीयते इत्यर्थः। तथा चानुमानम्–"वह्नौ दाहानुकूला शक्तिरस्ति, दाहरूपकार्यजनकत्वात्, यन्नैवं तन्नैवम्" इति। तत्र कार्यनियामकः कश्चिदतिशयविशेषः, सामर्थ्यविशेषो वा शक्तिः। तेन=शक्तिमत एव कारणस्य कार्यजनकत्वाभ्युपगमेन, अव्यवस्था=सर्वस्मात् सर्वोत्पत्तिरूपा अव्यवस्थितिः।

"शक्तस्य शक्यकरणात्" इतिकारिकाभागमवतार्य तद्योजनेन तार्किकाशङ्कां विकल्प्य दूषयति—सा शक्तिरिति। शक्तकारणाश्रया=कार्यजनन-

---

१ "सूत्रे" इति द्विवचनान्तम्। २ "शक्तिश्च शक्तिमत्संवन्धरूपा संयोगवदुभयत्र, या शक्याभावे न संभवतीति शक्यभावोऽभ्युपेयः" इति न्यायकणिकाचार्याः।

सर्वत्र चेत्, तदवस्थैवाव्यवस्था, शक्ये चेद् कथमसति शक्ये तत्र इति वक्तव्यम्,

शक्तिभेद एव स तादृशो यतः किञ्चिदेव कार्यं जनयेन्न सर्वमिति चेद्, हन्त भोः स शक्तिविशेषः कार्यसंबद्धो वासंबद्धो वा,

---

शक्तिमति कारणे विद्यमाना, या शक्तिः, सा शक्तिः किं=सर्वत्र=सर्वकार्यविषया, सर्वकार्यनिरूपिता वा स्यात्, ["सर्वत्र" इति विषयार्था सप्तमी] आहोस्वित् शक्ये=यद् उत्पादयितुं शक्यं कार्यं तद्विषया, तन्निरूपितैव वा स्यात्। तत्राद्यपक्षं दूषयति—सर्वत्रेति। सा शक्तिः सर्वत्र चेत्, तर्हि "सर्वं सर्वस्मात् संभवेत् इत्येवंरूपा अव्यवस्था तदवस्थैव=सुस्थितैव भवेत्। कनके हि सर्वकार्यविषया तन्निरूपिता वा शक्तिरस्तीति ततो घटादीनामप्युत्पत्त्यापत्तिरिति" मृद एव घटः कनकादेव कटकम्" इति व्यवस्थानुपपत्तिरिति भावः। द्वितीयपक्षं दूषयति—शक्य इति। "शक्य एव सा शक्तिः" इति चेत्, तर्हि असति=अविद्यमाने शक्ये, तत्र=तद्विषया, तन्निरूपिता वा शक्तिः, इति कथं वक्तव्यं स्यात्, अपि तु न कथमपि वक्तुमर्हम्, असतः शक्यस्य विषयत्वाभावात्, निरूपकत्वासंभवाच्चेत्यर्थः। यदि हि सा शक्तिः शक्यकार्यविषया तन्निरूपिता वेति प्रोच्येत, तदेदं पृच्छामः,—कारणव्यापारात्प्राक् शक्यं तावत् कारणे नास्तीति शक्यकार्यविषया तन्निरूपिता वा शक्तिः कारणे कथं तिष्ठेत्? न हि विद्यमाने कारणेऽविद्यमानशक्यकार्यविषया तन्निरूपिता वा शक्तिः कथंचित् स्थातुमर्हति, सतोरेव विषयविषयिभावसंबन्धस्य निरूप्यनिरूपकभावसंबन्धस्य च संभवात्। कारणस्य विद्यमानत्वेन शक्यकार्यस्य चाविद्यमानत्वेन न तयोः कथमपि विषयविषयिभावो निरूप्यनिरूपकभावो वा घटते इति भावः।

"शक्तिरपि कार्यसंबद्धैव कार्यं जनयेन्नासंबद्धा" इति सिद्धान्तिनोऽभिप्रायमजानन् असत्कार्यवादी पुनरपि शङ्कते—शक्तिभेद इति। "सा शक्तिः सर्वत्र" इति वयं स्वीकुर्मः, सर्वस्मात् सर्वकार्योत्पत्तिस्तु न, तथाभूतः स शक्तिविशेष एव विद्यते, यस्मात् शक्तिभेदात् कारणं किंचिदेव कार्यं जनयति न सर्वम्, ततश्च "मृद एव घटस्तन्तुभ्य एव पटः" इति व्यवस्था असत्कार्यवादेऽपि घटते इति न दोष इति तार्किकाकूतम्।

सिद्धान्ती प्राह—हन्तेति। "हन्त" इत्यव्ययं हर्षार्थकम्। हर्षश्च स्वमतं स्थापयितुं तार्किकोऽशक्त इति सिद्धं नः समीहितमित्याकारोऽत्र वेद्यः। सः=

---

१ शक्तेः शक्यनिरूप्यत्वरूपविशेषो नाङ्गीक्रियते, येन शक्यसत्त्वं स्यात्, किन्तु स्वरूपविशेष एव स तादृशो येन यत्किंचिदेव कार्यं जनयतीति तत्त्वम्।

संबद्धत्वे नासता संबन्ध इति सत्कार्यम्, असंबद्धत्वे सैवाव्यवस्था, इति सुष्ठूक्तं—"शक्तस्य शक्यकरणाद्" इति ।

---

यतः कारणं किंचिदेव कार्यं जनयति स इत्यर्थः । तत्राद्यपक्षं दूषयति—संबद्धत्वे इति । कार्यसंबद्धः सः कारणनिष्ठः शक्तिभेद इति चेत्, नैतत् संभवति, अविद्यमानेन कार्येण सह विद्यमानकारणनिष्ठशक्तिविशेषसंबन्धस्य वक्तुमशक्यत्वात् । न हि विद्यमानकारणनिष्ठशक्तिभेदसंबन्धोऽविद्यमानकार्येण सह वक्तुं युज्यते, सदसतोः संबन्धानुपपत्तेरित्यर्थः ।

तथा च अनायत्या सत्कार्यवादसिद्धिरित्याह—इति सत्कार्यमिति । यतः असता कार्येण शक्तिभेदसंबन्धो न घटतेऽत इत्यर्थः । द्वितीयपक्षं दूषयति—असंबद्धत्वे इति । यदि स शक्तिभेदः कार्यासंबद्धस्तर्हि "सर्वं सर्वस्मात् संभवेत्" इति पूर्वोक्ता अव्यवस्था स्यादित्यर्थः । कारणे हि कार्योत्पादनरूपा शक्तिर्विद्यते, सा च शक्तिर्न केनचित् कार्येण संबद्धेति सामान्यतः कारणं कार्यं जनयेदिति भावः । उपसंहरति—इति सुष्ठूक्तमिति । यतः "शक्तं कारणं शक्तिसंबद्धमेव शक्यं करोति, नासंबद्धम्" इति=अतः, शोभनमुक्तं मूलकृता "शक्तस्य शक्यकरणात्" इतीत्यर्थः । तस्मात्कारणात्मना लीनं कार्यमेवाभिव्यक्तिनियामकतया शक्तिरित्येष्टव्यम् । ततः सत्कार्यसिद्धिरिति भावः । अत्रेदमनुमानम्—"कारणशक्तिर्विद्यमानविषया, विषयित्वात्, ज्ञानवत्" इति । कारणे तदात्मना वर्तमाना कार्यस्य अव्याकृतावस्थारूपा[1] अनागतावस्थैव कार्यनियामिका शक्तिः, तया संबद्धं कार्यं च शक्यम् इत्यनगतावस्थावत्त्वेन कारणे कार्यस्य सत्त्वान्न कार्यस्यासत्त्वमिति तत्त्वम् । तदाहुः शारीरिकभाष्ये भगवन्तः श्रीशङ्कराचार्याः—"शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्या[2]—असती वा कार्यं नियच्छेत्, असत्त्वाविशेषाद् अन्यत्वाविशेषाच्च । तस्मात् कारणस्यात्मभूता शक्तिः, शक्तेश्चात्मभूतं कार्यम्" इति । (वे० २।१।१८) ये तु—"यत्र कारणे यस्य प्रागभावस्तत्कारणं तस्य जनकम्" इत्येवं प्रागभाव एव भविष्यति कार्यनियामक इत्यसत्कार्यवादेऽपि न काचिद्धानिरिति वदन्ति, तदपि मन्दम्, अभावे विशेषाभावेन[3] तन्तौ घटादेरपि

---

१ अनभिव्यक्तावस्थारूपा । २ कार्यकारणाभ्यामन्या कार्यवदसती वा, शक्तिः, कार्यं न नियच्छेत् कार्यनियामिका न संभवेद्, अन्यत्वासत्त्वयोः शक्तावन्यत्र चाविशेषात्, यस्य कस्यचिदन्यस्य नरविषाणादेर्वा नियामकत्वप्रसङ्गात् । अतः कारणस्यात्मभूता=कारणादभिन्ना, शक्तिरुपेया, शक्तेश्च आत्मभूतम्—अभिन्नम्, कार्यमुपेयम् । कारणेऽव्यक्ततया स्थितं कार्यं कार्यस्य अनागतावस्थैव वा अभिव्यक्तिनियामकया शक्तिः, न ततोऽन्या काचित् शक्तिरिति यावदिति व्याख्यातारः । ३ यदि पुनरभावस्यापि विशेषः स्वीक्रियेत । उत्पलादीनामिव नीलत्वादिः, तर्हि विशेषवत्त्वादेव अभावस्य उत्पलादिवद् भावत्वं प्रसज्येत, तस्माद् अभावे नास्ति कश्चन विशेष इति भावः ।

इतश्च सत्कार्यमित्याह—"कारणभावाच्च"=कार्यस्य कारणात्मकत्वाद्, नहि कारणाद् भिन्नं कार्यं, कारणं च सद् इति कथं तदभिन्नं कार्यमसद्भवेत् ।

कार्यस्य कारणाभेदसाधनानि च प्रमाणानि—'न पटस्तन्तुभ्यो

प्रागभावापत्तेर्दोषतादवस्थ्यात् । न च पटप्रतियोगिकः पटनिरूपितो वा प्रागभावः पटोत्पत्तिनियामक इति विशेष इति वाच्यम्, असतः पटादेः प्रतियोगित्वनिरूपकत्वादिधर्मासंभवात्, सदसतोः संबन्धानुपपत्तेः । तन्त्वनुत्पाददशायां पटप्रागभावस्य वक्तुमशक्यत्वाच्च । न च तदानीं पटप्रागभावः काले वर्तते इति वक्तुं शक्यमिति वाच्यम्, अभावे क्रियाऽभावेन तन्तावागमनासंभवात् । किंच—उत्पत्तेः प्राक् कार्यस्यासत्त्वे "घट उत्पद्यते" इति कथनानुपपत्तिः स्यात्, उत्पत्तेः क्रियात्वेन—क्रियायाश्च सकर्तृकत्वनियमेन—कर्तुरसत्त्वे निराश्रयायाः क्रियाया असंभवात् । जनिकर्तुर्जनेः प्राक् सत्त्वस्यावश्यकत्वात् । अपि च—कार्यस्यासत्त्वे योगिनाम् अनागतादिज्ञानं न स्यात्, योगिनां ज्ञानस्य प्रत्यक्षात्मकत्वेन विद्यमानालम्बनविषयकत्वात्, कार्यस्यासत्त्वे च आलम्बनाभावेन निर्विषयत्वापत्तेरित्यन्यत्र विस्तरः "सदेव सोम्येदमग्र आसीत्" "तद्धीदं तर्ह्यव्याकृतमासीत्" इत्याद्याः श्रुतयोऽपि सत्कार्यवादमेव समर्थयन्ति । इति ता अप्यत्रानुसन्धेयाः ॥ ९ ॥

कार्यस्य सत्त्वे हेत्वन्तरमुत्थापयति—इतश्चेति । वक्ष्यमाणहेतोरपीत्यर्थः । असद्भवेदिति । अत्रेदमनुमानम्—"घटः सदा सन्, कारणाभिन्नत्वात्, कारणस्वरूपवत्" इति । ननु कार्यस्य कारणात्मकत्वे न किंचित् प्रमाणं न वा कांचिद् युक्तिं पश्याम इति तार्किकाऽऽशङ्कायां प्रमाणान्यभिधातुं प्रतिजानीते—कार्यस्य कारणाभेदेति । प्रागुत्पत्तेः कार्यस्य कारणानन्यत्वमुक्तम् । संप्रति तत्रोदाहरणं किंचिद् वक्तव्यम् । तदेव वक्तुकामस्तदभिधायकानि तान्याह—इति वा । "मया कथ्यन्ते" इति वाक्यशेषः । प्रमाणानि=प्रत्यक्षानुमानागमाः । इति केचित् कानि तानीति

१ क्रिया च नाम स्यादकर्तृका चेति विप्रतिपिद्धमिति भावः । २ अग्रे—सृष्टेः प्राक्, इदम्—दृश्यमानं जगत्, सदेव आसीत् नाऽसत् इत्यर्थः । ३ इदम्—स्पष्टनामरूपं यत् जगत्, तत् तर्हि—तदानीम्, सृष्टेः प्राग् इत्यर्थः, अव्याकृतम्—अनभिव्यक्तम्, आसीत्, "ह" इत्यवधारणार्थकः । ४ मृद्भावाद् घटभावस्तन्तुभावात् पटभावः प्रकृतिभावाच्च जगद्भाव इत्यर्थः । न चास्य भावादन्यो भवितुमर्हति । भवेदन्यथा सर्वस्मात् सर्वमन्यत्वाविशेषात् । भवति च नियमेन कारणादेव कार्यम् । तस्मादस्ति तस्य प्रागुत्पत्तेः कारणानन्यत्वमित्येवं केचिद् व्याचक्षते । ५ प्रत्यक्षं तु मृद् घटः, स्वर्णं कुण्डलम् इत्यादि । अनुमानं तु न पट इत्यादि । आगमास्तु "तद्धीदं तर्ह्यव्याकृतमासीत्, सदेव सोम्येदमग्र आसीत्, तम एवेदमग्र आसीत्," इत्याद्याः ।

भिद्यते तद्धर्मत्वाद्-इह यद् यतो भिद्यते तत् तस्य धर्मो न भवति यथा गौरश्वस्य-धर्मश्च पटस्तन्तूनां-तस्मान्नार्थान्तरम् ।

उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः-ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावो यथा घटपटयोः-उपादानोपादेयभावश्च तन्तुपटयोः-तस्मान्नार्थान्तरत्वमिति,

इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावाद्-अर्था-

---

जिज्ञासायां शेषानुमानरूपप्रमाणप्रयोगान् स्वरूपतो निर्दिशति—न पट इत्यादिना। प्रतिज्ञावाक्यमुक्त्वा सम्प्रति हेतुवाक्यमाह—तद्धर्मत्वादिति। तेषां=तन्तूनाम्, धर्मत्वात्=तदवस्थाविशेषात्मकत्वात्, स्वसत्त्वनियतसत्ताकत्वात् इत्यर्थः । तत्सत्त्वनियतसत्ताकत्वरूपहेतुमध्ये एव अन्वयव्याप्तेः प्रवेशात् व्यतिरेकव्याप्तिं दर्शयन् उदाहरणवाक्यमाह—इह यद् यत इति । तथा च—व्यापकस्य-तद्धर्मत्वाभावस्य पटे निवृत्त्या व्याप्यस्य भेदस्य निवृत्तेरभेदसिद्धिरिति भावः । पक्षे तद्धर्मत्वरूपहेतुसत्त्वप्रदर्शनाय उपनयवाक्यमाह—धर्मश्चेति । निगमनवाक्यमाह—तस्मान्नार्थान्तरमिति । अन्योऽर्थः-पदार्थः, अर्थान्तरम्, [मयूरव्यंसकादित्वात्समासे क्लीबता] तन्न, पटस्तन्तुभ्यो न भिन्नः पदार्थः किंतु अभिन्न एवेत्यर्थः । एवम् अग्रेऽपि न्या[1]याङ्गानि योज्यानि ।

प्रयोगान्तरमाह—उपादानेति । उपादीयते-कार्यजननाय गृह्यत इत्युपादानम्-कार्यस्य अनागतावस्थाश्रयीभूतं कारणम्, उपादेयम्=व्यवहारार्थिभिर्ग्रहीतुं योग्यं कार्यम्, इत्यर्थः ।

संयोगाप्राप्त्यभावादिति । संयोगश्च अप्राप्तिश्च तयोरभावात् । तत्र अप्राप्तयोः प्राप्तिः संयोगः, अप्राप्तिश्च विभागः । एवं च "संयोगानाश्रितत्वात् विभागानाश्रितत्वाच्च" इति द्वौ हेतू फलतः । संयोगाभावः विभागाभावश्च

---

१ न्यायो नाम प्रतिज्ञाद्यवयवसमुदायः । तत्र प्रथमं साध्याभिधानं विना "कुतः" इत्याकारकहेत्वाद्याकाङ्क्षाऽभावात् प्राथम्येन प्रतिज्ञाप्रयोगः । साध्यनिर्देशानन्तरं "कुतः" इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितमितिप्रतिज्ञानन्तरं हेतूपन्यासः । हेतावुक्ते "कथमस्य गमकत्वम्" इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनाय उदाहरणम् । उदाहरणानन्तरं भवतु व्याप्तिः, तथापि "व्याप्तं किं पक्षे वर्तते न वा" इत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनाय उपनयः उपनयानन्तरं निगमनम् ।

न्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः–अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः–न चेह संयोगाप्राप्ती, तस्मान्नार्थान्तरत्वमिति,

इतश्च पटस्तन्तुभ्यो न भिद्यते–गुरुत्वान्तरकार्याग्रहणाद्–इह

पृथक् पृथक् अभेदसाधक इति यावत्। यथा—"पटस्तन्तुभ्यो न भिद्यते, तत्संयोगानाश्रयत्वात्, यद् यतो भिद्यते तयोः संयोगो दृष्टः, यथा घटपटयोः"। अप्राप्तिर्वेति। विभागश्चेत्यर्थः। अत्र "दृष्टः" इति पुंलिङ्गपदं "दृष्टा" इत्येवं स्त्रीत्वेन विपरिणमय्य सम्बन्धनीयम्। "पटस्तन्तुभ्यो न भिद्यते, तद्विभागानाश्रितत्वात्, यद् यतो भिद्यते तयोर्विभागो दृष्टः, यथा हिमवद्विन्ध्ययोः" इत्यनुमानशरीरम्। नच तन्तुरूपादेरपि संयोगविभागादर्शनाद् रूपादेरपि तन्तुभ्यो न भेदो न स्यादिति गुणेषु व्यभिचार इति वाच्यम्, स्वमते धर्मधर्मिणोरभेदाङ्गीकारेण गुणेषु व्यभिचाराभावात्। संयोगाप्राप्ती "इत्यत्र" 'दृश्येते' इति शेषः। गुरुत्वान्तरकार्याग्रहणादिति। "गुरुत्वं जलभूम्योः[1] पतनकर्मकारणम्" इति लक्षणलक्षितः पदार्थनिष्ठधर्मविशेषो गुरुत्वम्, तन्तुनिष्ठगुरुत्वापेक्षया अन्यद् गुरुत्वं गुरुत्वान्तरम्, तस्य यत् कार्यम्=अधःपतनविशेषावनतिरूपम्, तस्य पटेऽग्रहणादित्यर्थः। अयं भावः—तुलादण्डकोणद्वयनिबद्धरज्ज्वालम्बनं यच्छिक्यद्वयमस्ति, तत्रैकत्र गुञ्जादि धृत्वा अपरत्र शिक्ये तोलनीयं वस्तु अवस्थाप्यते। तत्र यदि गुञ्जादिनिष्ठगुरुत्वेन समं [तुल्यम्] गुरुत्वं तोलनीये भवति, तदा तुलादण्डो न उन्नतो भवति नाप्यवनतः। यदा तु–गुञ्जाद्याश्रितगुरुत्वापेक्षया अधिकं गुरुत्वं तोलनीये भवति, तदा तदा[2]श्रितगुरुत्वकार्याऽवनतिविशेषेण अधिकः तुलादण्डोऽवनतो भवति। तथा च—यदि पटस्तन्तुभ्योभिन्नो भवेत्, तदा तन्तुगुरुत्वकार्यापेक्षया अधिकः पटाश्रितगुरुत्वकार्योऽवनतिविशेषो गृह्येत, तथा च न गृह्यते, किं तु तन्तुगुरुत्वेन यादृशोऽवनतिविशेषो जन्यते, तादृश एव पटाश्रितगुरुत्वेन अवनतिविशेषो जन्यते, तथा च—समानगुरुत्ववत्त्वान्न पटस्तन्तुभ्योभिन्न इति। नच पटे गुरुत्वान्तराभावे तस्य पतनं न स्यादिति वाच्यम्, तन्तुगुरुत्वेनैव तत्तादात्म्यापन्नपटस्य पतनसंभवात्।

ननु "गुरुत्वान्तराग्रहणात्" इति, "समानगुरुत्ववत्त्वात्" इति वा हेतोः संभवे, "गुरुत्वान्तरकार्याग्रहणात्" इति कार्यपर्यन्तानुधावनं व्यर्थमिति चेत्। अत्राहुः—"अप्रत्यक्षं पतनकर्मानुमेयम्" इत्युक्तेरतीन्द्रियत्वेन गुरुत्वस्य

१ "जलभूम्योः" इत्याश्रयकथनम्, शिष्टं लक्षणम्। इदं लक्षणं प्रशस्तपादभाष्यस्थमिति ज्ञेयम्। २ तदा परिच्छेद्यद्रव्यं ग्राह्यम्।

यद् यस्माद् भिन्नं तस्मात् तस्य गुरुत्वान्तरकार्यं गृह्यते यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्तस्माद् द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः—न च तथा तन्तुगुरुत्वकार्यात् पटगुरुत्वकार्यान्तरं दृश्यते—तस्मादभिन्नस्तन्तुभ्यः पट इति,

तान्येतान्यभेदसाधनान्यवीतानि,

एवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः

---

प्रत्यक्षेण ग्रहणासंभवात् पतनकर्मानुमेयं तत्, इत्याशयेन कार्यपर्यन्तानुधावनमिति।

तत्र व्यतिरेकिदृष्टान्तमाह—यथैकपलिकस्येति। अशीतिरक्तिकाया एकं तोलकम्, तोलकचतुष्टयं चैकं पलम्। तत्परिमितसुवर्णनिर्मितस्य स्वस्तिकाख्यभूषणविशेषस्येत्यर्थः। तथा चानुमानम्—

"पटस्तन्तुभ्यो न भिद्यते, गुरुत्वान्तरप्रयुक्तस्वाश्रिततुलादण्डाद्यवनतिविशेषग्रहणायोग्यत्वात्, गुरुत्वान्तरयुक्तस्वर्णादिवत्" इति। तुल्यगुरुत्वयुक्तपदार्थे व्यभिचारवारणाय—"ग्रहणायोग्यत्वात्" इत्युक्तम्। तस्य च पृथक् तुलादण्डारोपणेऽवनत्यन्तरस्य ग्रहणसंभवात्, तन्तुपटयोश्च न तथासंभव इति तथात्वम्। तन्तुगुरुत्वकार्यात्=तन्तुनिष्ठगुरुत्वजन्याऽवनतिविशेषाद्, अन्यद् अवनमनं पटे न गृह्यते=दृश्यत इत्यर्थः। "अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते" इति पञ्चमकारिकायां प्रतिज्ञातं तन्मयाऽनुष्ठितमिति स्मारयति—तान्येतानीति। अभेदसाधनानि=अभेदप्रमाकरणानि, अवीतानि=व्यतिरेकव्याप्तियुतानि इत्यर्थः। तान्येतानि=पूर्वोक्तानि चत्वारि। अत्रानुमानम्—कार्यमुत्पत्तेः प्रागपि सत्, कारणात्मकत्वात्, उभयमतसिद्धकारणवत्" इति॥ ९॥

ननु यदि तन्तुपटयोरैक्यमभ्युपगम्यते, तदा "इमे तन्तवः पटश्चायम्" इति संज्ञाभेदप्रतीत्यनुपपत्तिरत आह—एवमभेद इति। एवम्=पूर्वोक्तदिशेत्यर्थः। तेन तेन संस्थानभेदेन=आतानवितानरूपसंस्थानभेदेन, परिणताः=

---

१ पतनं नाम अधोदेशसंयोगानुकूलो व्यापारः। यथा—"वृक्षात्पर्णं पतति" इत्यादेः वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः। तत्र प्राथमिकव्यापारो गुरुत्वजन्यः, द्वितीयादिस्तु वेगजन्यः। अनुमानप्रयोगस्तु—"संयोगासमवधानकालीना क्रिया, गुणासमवायिकारणिका, क्रियात्वात्, संयोगजन्यक्रियावत्" इति। गुरुत्वस्य प्रत्यक्षता तु वक्तुमशक्या, तथासति अधःस्थितस्यापि द्रव्यस्य त्वगिन्द्रियेण गुरुत्वग्रहणप्रसङ्गात्। ऊर्ध्वस्थितस्यैव तद्गृह्यत इत्यपि न नियमः, अन्यत्राऽऽसञ्जितस्य वस्तुन ऊर्ध्वदेशस्थस्यापि गुरुत्वाग्रहणात्। २ स्त्रीकण्ठाभरणविशेषस्य। गुरुत्वकार्यो=गुरुत्वस्य कार्यम्।

पटो न तन्तुभ्योऽर्थान्तरं पटः,

स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च

---

अवस्थान्तरं प्रापिताः, तन्तव एव पटः=पट इति बुद्धिविषयाः व्यपदेशभाजश्च भवन्ति, इत्यर्थः । अवयविन्यासविशेषसंस्थानभेदेन युक्त एव संज्ञाभेद इति भावः । फलितमाह—न तन्तुभ्य इति । इति कारिकाव्याख्या ॥ ॐ ॥

सम्प्रति शङ्कासमाधानद्वारा सत्कार्यवादं परिपुष्टयितुं "पटस्तन्तुभ्यो भिद्यते, तत्रोत्पन्नत्वेन तत्र नष्टत्वेन च प्रतीयमानत्वात्, यो न भिद्यते स तत्रोत्पन्नो न भवति, यथा तन्तवः" एवं पटस्तन्तुभ्यो भिद्यते बुद्धिभेदात्, व्यपदेशभेदाच्च इत्यादिप्रयोगैः पूर्वोक्ताभेदसाधकावीतप्रयोगान् सत्प्रतिपक्षितान् वदतां तार्किकाणां मतं तावत् खण्डयति—स्वात्मनीति । स्वात्मनि=अभिन्ने वस्तुनि, क्रिया=उत्पत्तिरूपा जनिक्रिया, निरोधः=प्रध्वंसरूपो विनाशः, क्रिया च निरोधश्च क्रियानिरोधौ, बुद्धिः="इमे तन्तवः पटश्चायम्" इत्याकारकं ज्ञानम्, व्यपदेशः="तन्तुषु पटः" इति व्यवहारः, अर्थक्रिया=प्रयोजनोत्पादनम्, व्यवस्था=सामर्थ्यनियमः, व्यवस्था च सान्निध्यात् अर्थक्रियाव्यवस्था ग्राह्या, तथा च "अर्थक्रियाव्यवस्था" इति फलति, विभिन्नप्रयोजनकत्वनियम इति तदर्थः, तेषां भेदाः बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाः, क्रियानिरोधौ च बुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदाः इति द्वन्द्वः । द्वन्द्वान्ते श्रूयमाणत्वाद् भेदशब्दस्य प्रत्येकं सम्बन्धः, तथा च—बुद्धिभेदः, व्यपदेशभेदः, अर्थक्रियाभेदः, व्यवस्थाभेदः, इति फलति ।

यदि तन्तुपटयोरभेदः स्वीक्रियेत, तदा पटस्य तन्त्वात्मकत्वेन स्वस्मात् स्वस्योत्पत्तेरसंभवात् स्वस्मिन् स्वस्य प्रध्वंसासंभवाच्च "उत्पन्नः पटः प्रध्वस्तः पटः" इत्युत्पत्तिनिरोधबुद्धिर्न स्यात् । तथा च—दृश्यमानावुत्पत्तिध्वंसावभिन्नेऽनुपपन्नौ सन्तौ "पटस्तन्तुतो भिन्नः–तत उत्पन्नत्वेन तत्र नष्टत्वेन च दृश्यमानत्वात्, यो न भिन्नः, न स तत उत्पद्यते, यथा तन्तवः" इत्येवं तन्तुपटयोर्भेदं साधयतः ।

एवं बुद्धिभेदः पृथग् हेतुः, तथा च—"तन्तव इमे पटश्चायम्" इत्येवं ज्ञानवैलक्षण्यमपि तन्तुपटयोर्भेदसाधकम् ।

एवं व्यपदेशभेदः—कुण्डबदरयोरिव "तन्तुषु पटः" इत्याधाराधेयरूपव्यवहारभेदोऽपि भेदसाधकः ।

एवम्—अर्थक्रियाभेदः—"तन्तुभिः पटः सीव्यते, पटेन च देह आव्रियते" इति कटघटवत् प्रयोजनोत्पादनभेदोऽपि, भेदसाधकः ।

एवम्—अर्थक्रियाव्यवस्था—विभिन्नप्रयोजनजनकत्वनियमोऽपि भेदसाधकः । कार्यकारणयोर्यद्यभेदः स्यात्, तदा "मृत्पिण्डेनापि उदकमाह्रियेत,

नैकान्तिकं भेदं साधयितुमर्हन्ति, एकस्मिन्नपि तत्तद्विशेषाविर्भाव-तिरोभावाभ्यामेतेषामविरोधाद्,

यथा हि कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निस्सरन्ति चाविर्भवन्ति न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते

---

घटेनापि च भित्तिः संपाद्येत, तथा तन्तुभिरपि प्राव्रियेत, पटेनापि च पटः क्रियेत" इत्यव्यवस्थोपलभ्येत, सा च नोपलभ्यतेऽतो भेद इत्यर्थः।

इत्थं चात्र प्रयोगः—"पटस्तन्तुभ्यो भिद्यते, तत्कार्यत्वेन तत्र नष्टत्वेन वा प्रतीयमानत्वात्, "तन्तव इमे पटश्चायम्" इति बुद्धिभेदात्, "तन्तुषु पटः" इत्याधाराधेयभावरूपव्यपदेशभेदात्, "तन्तुभिः पटः सीव्यते, पटेन च देह आव्रियते" इत्यर्थक्रियाभेदात्, विभिन्नार्थसाधकत्वात्, प्रावरणादित्वात्, आवरणादि कार्यभेदवत्त्वाच्च" इति। ततश्च क्रियानिरोधादिहेतुभिः "न पटस्तन्तुभ्यो भिद्यते, तद्धर्मत्वात्" इत्यादिपूर्वोक्तहेतूनां सत्प्रतिपक्षितत्वान्न कार्य-कारणयोरभेदसिद्धिः, तथा चाहुर्न्यायवार्तिककाराः—"अर्थान्तरं पटात् तन्तवः, तद्धेतुत्वात्, तुर्यादिवत्" इति तुर्यादिपटकारणम् अर्थान्तरम् इति दृष्टम्, तथा च तन्तवः तस्माद् अर्थान्तरमिति, सामर्थ्यभेदात् विषागदवत्[2], भिन्नप्रत्ययविषयत्वाद् रूपस्पर्शवत्" इति। इति शङ्कितुस्तार्किकस्याकूतम्।

समाधत्ते—नैकान्तिकमिति। क्रियानिरोधबुद्धिव्यपदेशभेदादयो हेतवः कार्यकारणयोः ऐकान्तिकम्=वास्तवम् पारमार्थिकमिति यावत्, भेदं साधयितुं न अर्हन्ति=न योग्या भवन्तीत्यर्थः।

कुत इत्यत आह—एकस्मिन्नपीति। अभिन्नेऽपि वस्तुनि तत्तद्विशेषाऽऽवि-र्भावतिरोभावरूपोपाधिभेदेन औपाधिकं भेदमादाय एतेषाम्=क्रियानिरोध-बुद्धिव्यपदेशभेदादिहेतूनाम्, चरितार्थत्वेन[3] अविरोधात्=विरोधाभावादित्यर्थः। तथा च नैषां पारमार्थिकाभेदबाधने सामर्थ्यमिति न पूर्वोक्तहेतूनां सत्प्रति-पक्षितत्वमिति भावः।

एतदेव क्रमश उपपादयितुं प्रागुत्पत्तिप्रध्वंसबुद्धेरभेदेऽपि उपपन्नतामुपपाद-यति—यथा हीति। निविशमानानि=प्रविशन्ति सन्ति, निःसरन्ति च सन्ति,

---

१ अगदः=औषधम्। २ यस्य साध्याभावसाधकं हेत्वन्तरं स सत्प्रतिपक्षः। यथा—"शब्दो नित्यः, श्रावणत्वात्, शब्दत्ववत्", "शब्दोऽनित्यः, कार्यत्वात् पटवत्" इति। अत्रानुमानद्वये श्रावणत्वहेतुः सत्प्रतिपक्षः। एवं प्रकृतेऽपि पूर्वोक्तहेतूनां सत्प्रतिपक्षत्वं स्वयमूह्यम्। ३ तथा च क्रियानिरोधादिहेतूनां चरितार्थत्वेन न पटस्त-न्तुभ्यो भिद्यते तद्धर्मत्वात्" इत्यादि पूर्वोक्तहेतूनामचरितार्थत्वेन समबलत्वाभावान्न पूर्वोक्तहेतूनां सत्प्रतिपक्षितत्वम्, "तुल्यबलयोरेव सत्प्रतिपक्षत्वं नातुल्यबलयोः" इति नियमात्।

वा, एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निस्सरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते निविशमानाश्च तिरोभवन्तो विनश्यन्तीत्युच्यन्ते, न पुनरसतामुत्पादः सतां वा निरोधः,

यथाह भगवान् कृष्णद्वैपायनः—

"नासतो विद्यते भावो नाभावो विद्यते सतः" इति,

यथा कूर्मः स्वावयवेभ्यः संकोचविकाशिभ्यो न भिन्न एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः,

---

निपूर्वात् सृधातोः शतृप्रत्यये क्लीबे जसिरूपमिदम् । प्रध्वंसन्ते=तिरोभवन्ति, "कूर्मशरीरे" इति शेषः । निःसरन्तः=मृदादिभ्यो निस्सरन्तः सन्तः आविर्भावं प्राप्ताः घटादयः "उत्पाद्यन्ते" इत्युच्यन्ते, तथा मृदादिषु निविशमानाश्च सन्तः तिरोभवन्तः=अतीतावस्थायां प्राप्ताः, घटादयो "विनश्यन्ति" इत्युच्यन्त इत्यर्थः । न पुनरिति । असताम्=अविद्यमानानाम् घटादीनां कारणव्यापाराद् उत्पादः, सताम्=विद्यमानानां घटादीनां, निरोधः=प्रध्वंसः, इति च न संभवतीत्यर्थः ।

कुत इत्याकाङ्क्षायां तत्र भगवद्वाक्यं प्रमाणयति—नासत इति । असतः= नरविषाणादेरिव अविद्यमानस्यार्थस्य, भावः=सत्त्वम्, न विद्यते, सतः=विद्यमानस्य चार्थस्य, अभावः=असत्त्वं न संभवति, सदसतोरेकत्रसमावेशाभावादित्यर्थः ।

ननु घटादेरुत्पत्तिप्रध्वंसौ मा भूताम्, तथापि कथं मृद्घटयोरभेदोऽत आह—यथा कूर्म इति । एवम्=तथा, मृत्सुवर्णादिभ्यः=घटादेरतीतावस्थायां संकोचशालिभ्यः, वर्तमानतावस्थायां च विकाशशालिभ्यः-मृत्सुवर्णादिभ्यः, घटमुकुटादयोऽपि न भिन्ना इत्यर्थः ।

मृत्सुवर्णादयो यदा आविर्भावरूपविकाशशालिनः तदा "घटादय उत्पन्नाः" इति व्यवहारः, यदा च मृदादयः कार्यस्यातीतावस्थारूपसंकोचशालिनः तदा "घटादयः प्रध्वस्ताः" इति व्यवहारः, एवंच संस्थानभेदेन एकस्मिन्नपि क्रियानिरोधयोरुपपन्नत्वात् न तद्बलेन[1] घटादीनां मृदादिभ्यो भिन्नत्वमिति भावः ।

एवं बुद्धिभेदोऽपि न भेदसाधकः, पटस्यानागतावस्थावत्सु तन्तुषु "तन्तव इमे" इति प्रत्ययः, पटस्य वर्तमानतावस्थावत्सु च तेषु "पटोऽयम्" इति प्रत्यय इत्येकस्मिन्नपि विलक्षणबुद्धिबोध्यस्योपपन्नत्वात् इत्यपि बोध्यम् । एवं च "विभिन्नप्रत्ययविषयत्वात् तन्तुपटयोर्भेदः" इति न्यायवार्तिककारोक्ति-

---

१ उत्पत्तिप्रध्वंसदर्शनबलेनेत्यर्थः ।

एवं च—'इह तन्तुषु पट' इति व्यपदेशोऽपि यथा 'इह वने तिलका' इत्युपपन्नः,

न चार्थक्रियाभेदोऽपि भेदमापादयति, एकस्यापि नानार्थक्रियादर्शनाद्, यथैक एव वह्निर्दाहकः पाचकः प्रकाशकश्चेति,

नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः, तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनाद्, यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्वन्ति नतु शिबिकावहनं, मिलितास्तु शिबिकां वहन्ति, एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति ।

---

रपि निरस्ता । एतेन बुद्धिभेदोदाहरणस्य वाचस्पतिमिश्रेणाऽदानात् "क्रियानिरोधयोर्बुद्धिः क्रियानिरोधबुद्धिः" इत्येवं व्याचक्षाणा अपास्ता इति बोध्यम् । न्यायवार्तिकानुसारेण बुद्धिभेदस्य पार्थक्येनैव व्याख्येयत्वात् ।

व्यपदेशभेदोऽपि न भेदसाधक इत्याह—एवं चेति । चशब्दोऽवधारणार्थकः । तथा च–एवं च=एवमेव, इत्यर्थः । व्यपदेशोऽपि उपपन्न इत्यन्वयः । तत्र दृष्टान्तयति—यथेति । तिलकनामतरुसमुदायस्यैव वनत्वेन तिलकवनयोरभेदेऽपि यथाऽऽधाराधेयव्यवहारस्तथा तन्तुपटयोरभेदेऽपि आधाराधेयव्यवहारोपपत्तेर्व्यपदेशभेदस्य भेदासाधकत्वादित्यर्थः । एवमेव अनेकेषु तन्तुषु "एकोऽयं पटः" इति व्यवहारोऽपि एकप्रावरण [ आच्छादन ] लक्षणप्रयोजनावच्छेदाद् बोध्यः, यथा एकदेशकालावच्छिन्नेषु बहुष्वपि तरुषु "इदम् एकं वनम्" इति ।

अर्थक्रियाभेदोऽपि न भेदसाधक इत्याह—न चार्थक्रियेति । आपादयति= साधयति, व्यभिचारदर्शनादिति भावः । कुतो नेत्याकाङ्क्षायां तत्र हेतुप्रदर्शनाय व्यभिचारं दर्शयति—एकस्यापीति । तथा च "यत्र यत्र विभिन्नकार्यकारित्वं तत्र तत्र वस्तुभेदः" इति व्याप्तिर्न सार्वत्रिकी, वह्न्यादौ व्यभिचारादिति भावः ।

"तन्तुभिरेव सीवनं पटेन चैवाच्छादनम्" इति व्यवस्थापि न भेदसाधिकेत्याह—नापीति ।

तत्र विष्टयः=भृत्याः, वर्त्म=पन्था, मार्ग इति यावत्, शिबिका=दोलाख्यो विमानभेदः । एवम्=तथा, प्रावरणम्=आच्छादनम्, आविर्भूतपटभावाः= आविर्भूतः–आविर्भावं प्राप्तः, [ भू "प्राप्तावात्मनेपदी" इत्यतो निष्ठायां रूपमिदम् ] पटरूपो भावः=धर्मो येषु ते तथोक्ताः । प्रावरिष्यन्ति=आच्छादयिष्यन्ति–शरीरादिकम् इत्यर्थात् ।

स्यादेतद्, आविर्भावः पटस्य कारणव्यापारात्प्राक् सन्नसन् वा, असंश्चेत्, प्राप्तं तर्ह्यसदुत्पादनम्, अथ सन्, कृतं तर्हि कारणव्यापारेण, न हि सति कार्ये कारणव्यापारप्रयोजनं पश्यामः, आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः, तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः।

---

एवं भेदसाधकहेतुषु दूषितेषु साम्प्रतम् आविर्भावादेः सदसत्त्वे विकल्पेन दूषयितुं शङ्कते—स्यादेतदिति। आविर्भावः=उत्पत्तेः "प्राक् सदेव कार्यं कारणव्यापारेणाभिव्यज्यते दोहनेन दुग्धमिव" इति प्रागुक्ता अभिव्यक्तिः, । "कारणव्यापारात्" इत्यस्य उभयत्रान्वयः—तथा च-कारणव्यापाराद् यः पटस्य आविर्भावः स्वीक्रियते, स किं कारणव्यापारात् प्राक् सन्, किं वा असन्, इत्यर्थः। तत्र द्वितीयपक्षं दूषयति—प्राप्तं तर्हीति। यदि स आविर्भावः असन्, तर्हि यथा असन्नेव आविर्भावः कारणाद् जायते, तथा पटादिकार्यमपि असदेव कारणव्यापारादुत्पद्येत इति सत्कार्यवादभङ्ग इति तार्किकाशयः। प्रथमपक्षं दूषयति—कृतमिति। "कृतम्" इत्यव्ययमलमर्थकं "कारणव्यापारेण" इति तृतीयान्तेनान्वयि। तथा च—कारणव्यापारेण कृतम्-साध्यं नास्तीत्यर्थः। तत्र हेतुमाह—नहीति। हि=यतः, सति=विद्यमाने, कार्ये, कारणव्यापारप्रयोजनं न पश्यामः, अतस्तद्व्यापारेण कृतमित्यर्थः। कार्यस्य सर्वदोपलम्भप्रसङ्गश्चेत्यपि बोध्यम्।

ननु वयम् आविर्भावस्यापि प्रागनभिव्यक्तिमभ्युपगच्छाम इति तदाविर्भावाय कारणव्यापार आवश्यक इति न कारणव्यापारवैयर्थ्यमिति चेत्, तर्हि आविर्भावत्वाविशेषाद् "यदनभिव्यक्तं तदेवाविर्भवति" इति सिद्धान्ताच्च अनभिव्यक्तस्य आविर्भावस्य आविर्भावोऽपि प्रागनभिव्यक्त इति तस्यापि अन्य आविर्भावो वक्तव्यः, एवं तस्य तस्य अन्योऽन्य इति न क्वापि विश्रान्तिः स्यादित्याह—आविर्भावे चेति। न च बीजाङ्कुरवद् अनवस्थाया अदोषत्वमिति वाच्यम्, असत्कार्याभ्युपगमेन व्यवस्थायां सत्यां तद्दोषग्रस्तस्य सत्कार्यवादस्यैवास्वीकर्तुमुचितत्वादिति तार्किकाशयः।

शङ्कामुपसंहरति—तस्मादिति। क्रियन्ते=कारणव्यापारेण उत्पाद्यन्ते, न तन्तुभ्योऽसन् पटः कारणव्यापारेणोत्पाद्यत इत्यर्थः। "पटरूपेण व्यवह्रियन्ते" इत्यपि बोध्यम्। रिक्तम्=शून्यम् प्रमाणरहितमिति यावत्। तन्तुभ्योऽसन् पटः कारणव्यापारेण नोत्पाद्यते किं तु तन्तव एव आविर्भूतपटस्तेन क्रियन्ते इति यद् वचस्तत् प्रमाणविधुरमिति सरलार्थः।

यद्धि उभयवादिनोस्तुल्यदोषत्वं न तद् दूष्यम्, "यश्चोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥" इति न्याया-

अथासदुत्पद्यत इत्यत्रापि मते केयमसदुत्पत्तिः, सती, असती वा, सती चेत् कृतं तर्हि कारणैः, असती चेत्, तस्या अप्युत्पत्त्यन्तरमित्यनवस्था,

अथोत्पत्तिः पटान्नार्थान्तरम्—अपि तु पट एवासौ, तथापि यावदुक्तं भवति पट—इति तावदुक्तं भवति उत्पद्यते—इति,

ततश्च पट इत्युक्ते उत्पद्यते—इति न वाच्यं, पौनरुक्त्याद्, विनश्यति—इत्यपि न वाच्यम्, उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात्।

---

दित्याशयेन प्रतिबन्दिरूपदूषणदानाय प्राह सिद्धान्ती—अथेति। नैयायिकमतेऽपि इयमुत्पत्तिः किंस्वरूपेत्यर्थः। सदसत्त्वे विकल्प्य दूषयति—सती चेदिति। कृतम्=अलम्, साध्यं नास्तीत्यर्थः। तस्याः स्वत एव सिद्धत्वादिति भावः। द्वितीयपक्षं दूषयति—असती चेदिति।

उत्पत्तिर्नाम आद्यक्षणसम्बन्धः, स च स्वरूपसम्बन्धविशेषः, न तु संयोगमात्रः, गुणक्रियादेस्तदसंभवात्, तयोश्च उत्पत्तिव्यवहारस्य सर्वसिद्धत्वात्। प्रकृते स्वरूपसम्बन्धविशेषश्च अनुयोगिस्वरूप एव, अनुयोगी चात्र पटः, पटश्च कारणव्यापारात् प्राग् अनुत्पन्न इति तदनतिरेकिणी उत्पत्तिरपि अनुत्पन्ना, ततश्च अनुत्पन्नपटानतिरिक्तोत्पत्तिसिद्धये कारणव्यापारापेक्षा भविष्यतीत्याशयेन शङ्कते तार्किकः—अथेति। दूषयति सिद्धान्ती—तथापीति। एवं सतीत्यर्थः। उत्पत्तेः पटस्य अनर्थान्तरत्वाभ्युपगमे तयोः पर्यायत्वापत्तिः, ततश्च यमर्थं "पट" इति भाषते, स एवार्थं "उत्पद्यते" इत्यनेनापि भाष्येत, तथा च—"पटः" इत्युक्ते "उत्पद्यते" इति न वक्तुं योग्यम्, पर्याययोः सह प्रयोगाभावेन पौनरुक्त्यापत्तेरिति सरलार्थः। पटादिशब्देन पटत्वविशिष्टस्येव उत्पत्तिमतोऽप्युक्तत्वात् "उत्पद्यते" इति न प्रयोक्तव्यम्, तदुक्तार्थस्योक्तत्वात्, तदुक्तौ च पौनरुक्त्यात् "घटो घटः" इतिवत् न तत्र शाब्दबोध इति भावः।

पटादिशब्दस्य उत्पत्त्यर्थकत्वे दूषणान्तरमप्याह—विनश्यतीति। "पटो विनश्यति" इत्यपि न वाच्यम्—प्रयोक्तुं न शक्यम्, "अयोग्यत्वात्" इति शेषः। पटशब्देन पटत्वविशिष्टस्येव उत्पत्तिमतोऽप्यभिधानात् उत्पत्तिमति चैकदा विनाशप्रतियोगित्वासंभवेनाऽयोग्यत्वादित्यर्थः। अयोग्यत्वे हेतुमाह—उत्पत्तिविनाशयोरिति। एकत्र=एकस्मिन् धर्मिणि, युगपत्=एकदा, विरोधात्=सहानवस्थानात्।

**तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा स्वसत्तासमवायो वा, उभयथापि नोत्पद्यते, अथ च तदर्थानि कारणानि व्यापार्यन्ते, एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् ।**

---

अयं भावः—"पटः" इत्यनेन "उत्पद्यते" इति भाष्यते, "विनश्यति" इत्यनेन च "ध्वंसते" इति, ततश्च "पटो विनश्यति" इत्यस्य "वर्तमानकालिकोत्पत्त्याश्रयो यः, स वर्तमानकालिकध्वंसाश्रयः" इत्यर्थं आपद्येत, स च विरुद्धः, इति । "पटो विनंक्ष्यति" इत्येवं कालान्तरे भवितुमर्हतीति द्योतनाय—**युगपदिति** । विनश्यतीति वर्तमानताप्रतीतेर्न विभिन्नकालता तयोरिति भावः ।

एवम् उत्पत्तेः पटस्वरूपत्वासम्भवम् उक्त्वा सम्प्रति अन्यरूपतास्वीकारेऽपि उत्पत्तेरुत्पत्त्यसंभव एवेत्याह—**तस्मादिति** । यतः पूर्वोक्तासंभवः तस्मात्, स्वकारणसमवायः[1]=पटस्य स्वकारणेषु=तन्तुषु, यः समवायः=सम्बन्धविशेषः, सा पटोत्पत्तिः, इति, वा=अथवा, स्वसत्तासमवायः=स्वस्मिन्=पटरूपे कार्ये, यः सत्ताजातेः समवायः सा पटोत्पत्तिः, इति वा भवता वक्तव्यम्, उभयथापि=प्रकारद्वयेनापि, नोत्पद्यते=उत्पत्तिरितिशेषः । समवायसम्बन्धस्य नित्यत्वेन समवायरूपाया उत्पत्तेरपि नित्यत्वाद् उत्पत्तित उत्पत्तेरनुपपन्नत्वादिति भावः । कारणव्यापारापेक्षा तूभयत्रापि समेत्याह—**अथ चेति** । अथ च=यदि यथा तदर्थानि=उत्पत्तिप्रयोजनानि कारणानि भवन्मते कार्यार्थिभिर्जनैर्व्यापार्यन्ते=व्याप्रियमाणानि क्रियन्ते एवं=तथा तर्हि सत एव=प्राक् सिद्धस्यैव पटादेः आविर्भावाय मन्मते कारणापेक्षेत्युभयत्रापि समत्वम् उपपन्नं=सिद्धमित्यर्थः ।

---

१ स्वकारणेन समवायः स्वकारणे समवायो वा स्वोत्पत्तिरित्यर्थः । स्वसत्तया समवायः स्वस्मिन् सत्तासमवायो वा स्वोत्पत्तिरित्यर्थं इति वंशीधरः । अन्ये तु व्याचक्षते—स्वस्य=कार्यस्य कारणे=उपादाने समवायः=संबन्ध इत्यर्थः । तथा च मृदः पिण्डत्वाद्यवस्थायां घटस्य तत्र न संबन्ध इति न तदानीं घटोत्पत्तिव्यवहारः । घटाकारत्वावस्थायान्तु घटस्य मृदि संबन्धात् घटोत्पत्तिव्यवहारः सङ्गच्छत इति भावः । लाघवाल्लक्षणान्तरमाह—स्वसत्तेति । स्वस्मिन्=कार्ये घटादौ सत्ता=संबन्ध इत्यर्थः । घटादीनां कपालाद्युपादानकारणे संबन्धस्य घटादिद्रव्ये जातिसंबन्धस्य च समवायत्वाङ्गीकारात्समवाय इत्युक्तम् । एतल्लक्षण द्वितयेन समवायस्य उत्पत्तिरूपत्वाङ्गीकारात् तस्य च नित्यत्वादुत्पत्तेरुत्पत्त्यन्तरासम्भवेनानवस्थापत्तिः परिहृता । एवं लक्षणकरणेऽपि नास्ति निस्तार इति सिद्धान्ती आह—उभयथापीति । नोत्पद्यते=उत्पत्तिर्नोत्पद्यत इत्यर्थः । ननूत्पत्तेरप्युत्पत्तिरिष्टैवेत्यत आह—अथ चेति । एवं च यद्युत्पत्तिः समवायरूपतया नित्या भवदभिमता तर्हि तदनुकूलव्यापारवत्त्वं कारणस्य न घटते । परन्तु कारणव्यापारमन्तरेण कार्योत्पत्तेरसंभवात् सर्व एव लोकाः कार्योत्पत्तये कारणव्यापारमपेक्षन्ते । भवन्मते तदनुपपत्तिरिति भावः ।

भवन्मते यथा समवायस्वरूपत्वेन प्राक् सिद्धाया एवोत्पत्तेरभिव्यक्तये कारण-व्यापारः, तथा मन्मतेऽपि प्राक् सिद्धस्यैव कार्यस्याभिव्यक्तये कारणव्यापार इति नास्मन्मतेऽपि कारणव्यापारवैयर्थ्यशङ्केति भावः। उत्पत्तेः सिद्धस्वरूपत्वेऽपि सर्वजनानुभवसिद्धायाः कारणव्यापारापेक्षाया अनौचित्यस्य उभयमतेऽपि तुल्यत्वात् प्रतिबन्दिसमवधानमिति तत्त्वम्।

## ❀ अत्रेयं विचारणा—❀

ननु प्रतिबन्दिग्रहणेन भवतु तार्किकस्य पराजयः परं तु "आविर्भावस्य प्राक्सत्त्वे कृतं कारणव्यापारैः, असत्त्वे च सत्कार्यवादभङ्गः" इति तार्किकप्रदत्तस्य दोषस्य तु साङ्ख्यमतेऽनुद्धार एवेति चेत्। अत्राहुः—"तदेतत् त्रैलोक्यं व्यक्तेरपैति, कस्मात्? नित्यत्वप्रतिषेधात्। अपेतमप्यस्ति, विनाशप्रतिषेधात्। संसर्गाच्चास्य सौक्ष्म्यम्, सौक्ष्म्याच्चानुपलब्धिः," (३।१३) इति योगभाष्याद् "अनागतावस्थायां स्वरूपेण घटः सन् व्यक्तावस्थया चासन्, तथा उत्पत्त्यनन्तरं स्वरूपेण घटः सन् अनागतावस्थया चासन्, तथा मुद्गरपातादिना घटस्याऽदर्शनेऽतीतावस्थया सन् अन्यावस्थया चासन्" इत्येवं सर्वकार्याणाम् अवस्थातो विनाशित्वेन स्वरूपेण च नित्यत्वेन सदसत्त्वाभ्युपगमेन अवस्थानाम् उपजनाऽपायधर्मवत्त्वाभ्युपगमात् व्यक्तावस्थाख्याऽऽविर्भावरूपा अभिव्यक्तिरपि असती एवोत्पद्यत इत्यङ्गीकारे न काचिदापत्तिरिति"। न च असत्या एवाभिव्यक्तेरुत्पत्त्यङ्गीकारे सत्कार्यवादभङ्ग इति वाच्यम्, सूक्ष्मावस्थाया एव सांख्यमतेऽसत्तारूपत्वाभ्युपगमात्।

न चैवं सति कारणव्यापारेण या सूक्ष्माया अभिव्यक्तेरभिव्यक्तिः सापि पूर्वं सूक्ष्मा सत्येव अभिव्यज्यते, इत्युपेयम्, अन्यथा असत्कार्यवादप्रसङ्गात्, एवं तस्याः तस्या अभिव्यक्तेरन्याऽन्याऽभिव्यक्तिरवश्यंभाविनीत्यभिव्यक्तेरप्यभिव्यक्त्यङ्गीकारेणाऽनवस्थापत्तिरिति शङ्क्यम्, "सदेव सोम्येदमग्र आसीत्"

---

१ तदेतत् त्रैलोक्यम्=सर्वं कार्यकारणात्मकं वस्तु, व्यक्तेः=अर्थक्रियाकारिणो रूपात्, वर्तमानावस्थात इति यावत्, अपैति=अपगच्छति, कूटस्थनित्यत्वाभावेन वर्तमानताम् अपहाय अतीततां प्राप्नोतीति यावत्, कुतः? नित्यत्वप्रतिषेधात्—यदि हि घटो व्यक्तेर्नाऽपेयात् कपालशर्कराचूर्णादिषु अवस्थास्वपि "व्यक्तो घटः" इति पूर्ववदुपलब्ध्यर्थक्रिये कुर्यात्, तस्मादनित्यं त्रैलोक्यम्। अस्तु तर्हि अनित्यमेव उपलब्ध्यर्थक्रियारहितत्वेन गगनाऽरविन्दवद् अतितुच्छत्वादत आह—अपेतमिति। अपेतम्—अतीतमपि कारणरूपेणास्ति, कुतः? विनाशप्रतिषेधात्=अत्यन्तोच्छेदाभावात्, यत् तुच्छं न तत् कदाचिदपि उपलब्ध्यर्थक्रिये करोति यथा गगनारविन्दम्, करोति चैतत् त्रैलोक्यं कदाचिद् उपलब्ध्यर्थक्रिये इति। अपेतमप्यस्ति चेत् कार्यम्, कस्मात्पूर्ववन्नोपलभ्यतेऽत आह—संसर्गादिति। स्वकारणे लयात्, सौक्ष्म्यम्—दर्शनानर्हम् अतश्चानुपलब्धिरिति भाष्यार्थः।

## न च पटरूपेण कारणानां संबन्धः,

इत्यादिश्रुतिसिद्धसत्कार्यवादपरिपालनपराया अस्या अनवस्थाया बीजाङ्कुरवद् दोषानाधायकत्वात् । तथा च कापिलसूत्रम्—पारम्पर्यतोऽन्वेषणा वीजाङ्कुरवत्" इति । "पारम्पर्यतः=परम्परारूपेण, अभिव्यक्तेः स्वीकारः कर्तव्यः, बीजाङ्कुरवत् प्रामाणिकत्वात् । वीजाङ्कुराभ्यां चायमेव विशेषो यद् बीजाङ्कुरस्थले क्रमिकपरम्परयाऽनवस्था, अभिव्यक्तौ चैककालिकपरम्परयेति, प्रामाणिकत्वं तु तुल्यमेव" इति सूत्रार्थः, इति वेदान्तिमहादेवः ।

अथवा—वैशेषिकादयो यथा "किम् उत्पत्तिरुत्पद्यते न वा? उत्पद्यते चेद्, अस्या अप्युत्पत्तिरित्यनवस्था । नोत्पद्यते चेत्, किम् असत्त्वात् नित्यत्वाद्वा । यद्यसत्त्वात्, तर्हि न कदाचिदुत्पत्तिरिति सर्वदानुपलम्भप्रसङ्गः । अथ नित्यत्वान्नोत्पद्यते, तर्हि सर्वदा कार्योपलम्भप्रसङ्गः" इति शङ्कायाम् "उत्पत्तेः स्वयमेव उत्पत्तिरूपत्वात् नोत्पत्त्यन्तरकल्पनाऽवकाशः" इत्येवं समादधति, तथा वयमपि "अभिव्यक्तेः स्वयमेव अभिव्यक्तिरूपत्वात् नाभिव्यक्त्यन्तरकल्पनाऽवकाशः" इति समाधातुं शक्नुम इति नात्र काचिदापत्तिः । तथा च कापिलसूत्रम्—"उत्पत्तिवद्वाऽदोषः" इति । "यथा उत्पत्तेरुत्पत्त्यन्तरानङ्गीकारेण वैशेषिकादिमते नानवस्थादोषः, तथा अभिव्यक्तेरपि अभिव्यक्त्यन्तरानभ्युपगमेन नास्मन्मतेऽपि अनवस्थादोषः" इति सूत्रार्थः ।

साङ्ख्यचन्द्रिकाकारस्तु—"अभिव्यक्तेरपि जन्यत्वे सत्कार्यवादबाधः स्यात्, नित्यत्वे सदैवाभिव्यक्तिः स्यात्, तस्या अप्यभिव्यक्त्यपेक्षायाम् अनवस्थापत्तिः" इत्याशङ्क्य "व्यवहारोपयोगितत्तत्कार्याभिव्यक्तेः तत्तत्कार्यनिष्ठसत्त्वगुणरूपतया नित्यत्वेऽपि तमसा प्रतिबद्धत्वान्न व्यवहारोपयोगित्वम्, अभिव्यञ्जकसामग्र्या तु उत्तेजकेन मणेरिव तमसः प्रतिबन्धाद् व्यवहारक्षमत्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकारात् सत्कार्यवादबाधाभावात्" इति समादधौ । इति ॥ ❀ ॥

उत्पत्तेः कार्यस्य रूपेण सम्बन्धरूपतां शङ्कते—न चेति । पटरूपस्य तन्तुरूपजन्यत्वात् तेन सह कारणानां सम्बन्ध एव कार्यस्य उत्पत्तिः, तथा च—तस्य जन्यत्वात् कारणव्यापारापेक्षेति न समानं दूषणमिति तार्किकाकूतम् । यद्यपि स्वकारणसमवायरूपा उत्पत्तिः प्राक् सिद्धेति न कारणव्यापारापेक्षेति दोषोऽस्मन्मतेऽपि आपतति, तथापि न वयं तथा स्वीकुर्मो येन स दोष आपतेत् किं तु "पटरूपं यत् प्रागसिद्धं तेन सह कारणसम्बन्ध एव कार्यस्योत्पत्ति"रिति ब्रूमः, तथा च पटरूपस्य जननाय कारणव्यापारापेक्षा आवश्य-

१ कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम् । कार्यानुकूलधर्मविघटकत्वं वा । तथा च—कारणीभूतो योऽभावः—मण्यभावः, तस्य प्रतियोगी—मणिः, तस्यैव अग्निनिष्ठदाहरूपकार्यस्य प्रतिबन्धकत्वमिति भावः । प्रतिबन्धकस्य प्रतिबन्धकत्वमुत्तेजकत्वम् ।

**तद्रूपस्याक्रियात्वात्, क्रियासंवन्धित्वाच्च कारणानाम्, अन्यथा कारणत्वाभावात्, तस्मात्सत्कार्यमिति पुष्कलम् ॥ ९ ॥**

---

कीति न समानं दूषणमिति सरलाभिप्रायः। दूषयति सिद्धान्ती—तद्रूपस्येति। पटरूपस्येत्यर्थः। अक्रियत्वात्=रूपस्य गुणत्वेन क्रियारूपत्वाभावादित्यर्थः[1]।

ननु मा भूत् पटरूपं क्रियारूपम्, तथापि कथं न तेन सह कारणसम्बन्ध इत्यत्राह—क्रियासम्बन्धित्वादिति। च शब्दो हेतौ। तथा च—"कारणानि क्रियासम्बद्धानि–कारकत्वाद्, अन्यकारकवत्" इत्यर्थः। "कारकत्वमस्तु क्रियासम्बन्धित्वं मा भूत्" इत्येवंविधे विपक्षे बाधकमाह—अन्यथेति। कारणानां क्रियासम्बन्धित्वनियमानङ्गीकारे इत्यर्थः। कारणत्वाभावादिति। "क्रियाजनकत्वं कारकत्वम्" इति हि कारकलक्षणम्, करणकारकविशेषस्यैव च कारणताव्यवहारः, क्रियाजनकत्वाभावे तु कारकत्वाभावेन कारणत्वमेव भज्येतेत्यर्थः। रूपस्य भवन्मते गुणत्वेन क्रियारूपत्वाभावात्, उत्पत्तेश्च क्रियारूपतायाः सर्वैरिष्यमाणत्वात्, कारणानां च क्रियानुबन्धित्वेनैव कारकत्वाभ्युपगमात्, "तन्तुभ्यः पट उत्पद्यते" इत्यादिषु च तन्त्वादीनामुत्पत्तिकारकत्वप्रतीतेश्च, नोत्पत्तेः पटरूपसम्बन्धरूपतेति भावः।

उपसंहरति—तस्मादिति। यतः सत्कार्यवादे न कोऽपि दोषः तस्मात्=ततो हेतोः, "उत्पत्तेः प्राक् कार्यं सत्" इति मतं पुष्कलम्=प्रामाणिकत्वेन श्रेष्ठमित्यर्थः[2] ॥ ९ ॥

---

१ उत्पत्तेर्धात्वर्थरूपत्वेन क्रियात्वं, रूपस्य तु धात्वर्थत्वाभावादक्रियात्वमिति भावः।

२ अयमत्र परीक्षार्थिनां कृते परः सारः—यद् असत् तन्न क्रियते, यथा शशविषाणम्। कारकव्यापारात् पूर्वं कार्यम् असच्चेत् तर्हि न क्रियेत, क्रियते च। अतः सदेव पूर्वमपि। अपि च कार्यं कारणेन प्राक् संवद्धम् असंवद्धं वा। संवद्धं चेद् असतः संवन्धानुपपत्तेः प्रागपि सदेव कार्यम्। असंवद्धं चेत्? इदमेवास्य कारणम् इदमेवास्य कार्यम् इति नियमो न स्यात्, असत्ताऽसंवन्धयोरविशेषात्। यथाहुः—

"असत्त्वान्नास्ति संवन्धः कारकैः सत्त्वसङ्गिभिः।
असंवद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥"

किं च कारणाद् अभिन्नत्वात् कार्यस्य प्रागसत्त्वं नोपपद्यते। तथाहि—तन्तुभ्यः पटो न भिद्यते तत्कार्यत्वात्। यद् यतो भिद्यते न तत् तस्य कार्यम्। यथा गौरश्वस्य। तन्तुकार्यं पटः। तस्मात् तन्तोर्न भिद्यते। यद् यतो भिद्यते तस्य तेन सह संयोगः अप्राप्तिर्वा स्यात्। यथा कुण्डवदरयोर्मेरुविन्ध्ययोर्वा। न हि पटस्य तन्तुभिः सह तद् उभयम् अस्ति। तस्माद् न तन्तुभ्यो भिद्यते पट इत्यभेदसिद्धेः कार्यं प्रागपि सदेव इति सिद्धम्।

तदेवं प्रधानसाधनानुगुणं सत्कार्यमुपपाद्य यादृशं तत् प्रधानं साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये तावदाह—

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतंत्रं व्यक्तं विपरीतमव्यक्तम्॥ १०॥**

'हेतुमद्' इति। व्यक्तं—हेतुमद्=हेतुः कारणं तद्वत्। यस्य च यो हेतुस्तमुपरिष्टाद् वक्ष्यति।

अनित्यं=विनाशि तिरोभावीति यावत्।

---

## अथ व्यक्ताव्यक्तयोर्वैधर्म्यनिरूपणम्।

अष्टमकारिकायां "महदादिकार्यं प्रकृतिविरूपं सरूपं च" इत्युक्तम्, तदिदानीं साधर्म्यवैधर्म्ये निरूपयितुं दशमकारिकामवतारयति—तदेवमिति।

हेतुमदिति। अत्र "व्यक्तम्" इति लक्ष्यपदं विशेष्यम्, "हेतुमत्" इत्यादीनि च सप्तपदानि लक्षणपरत्वेन विशेषणानि। व्यक्तम्=प्रकृतिपुरुषातिरिक्तं महदादि पृथिव्यन्तं त्रयोविंशतितत्त्वम्, हेतुमत्, अनित्यम्, अव्यापि, सक्रियम्, अनेकम्, आश्रितम्, लिङ्गम्, सावयवम्, परतन्त्रं चास्ति। अव्यक्तम्=प्रधानम् प्रकृतिरिति यावत्, विपरीतम्=अहेतुमत्, इत्येवं वैधर्म्ययुतम् अस्ति, इत्यन्वयः॥ १०॥ ❀॥

कारिकां व्याचष्टे—व्यक्तमित्यादिना। तद्वदिति। तत्=कारणम्, विद्यते आविर्भावे यस्य तत् हेतुमत्—कदाचिद् आविर्भावशीलम्, इत्यर्थः। ननु के के व्यक्तस्य हेतव इति जिज्ञासायामाह—यस्य चेति। महदादेरित्यर्थः। तम्=हेतुम्। उपरिष्टादिति। "प्रकृतेर्महान्—" इति द्वाविंशतिकारिकायामित्यर्थः। वक्ष्यति—मूलकार इति शेषः। तथा च—"व्यक्तस्य प्रधानं हेतुरस्ति, अतो हेतुमद् व्यक्तं भूतपर्यन्तम्, हेतुमद् बुद्धितत्त्वं प्रधानेन, हेतुमान् अहङ्कारो बुद्ध्या, पञ्चतन्मात्राणि एकादशेन्द्रियाणि च हेतुमन्ति अहङ्कारेण, आकाशं शब्दतन्मात्रेण हेतुमत्, वायुः स्पर्शतन्मात्रेण हेतुमान्, तेजो रूपतन्मात्रेण हेतुमत्, आपो रसतन्मात्रेण हेतुमत्यः, पृथिवी गन्धतन्मात्रेण हेतुमती, एवं भूतपर्यन्तं व्यक्तं हेतुमत्, इति सिध्यति।

अनित्यपदं व्याचष्टे—विनाशीति। स्वकारणे सूक्ष्मतयाऽवस्थानं विनाशः, तथा च साङ्ख्यसूत्रम्—"नाशः कारणलयः" इति। सोऽस्त्यस्येति विनाशि—कदाचित् तिरोभावशीलमिति यावत्, तदेवाह—तिरोभावीति।

अव्यापि=सर्वं परिणामिनं न व्याप्नोति । कारणेन हि कार्यमाविष्टं न कार्येण कारणम्, न च बुद्ध्यादयः प्रधानं वेविषतीत्यव्यापकाः ।

सक्रियं=परिस्पन्दवत् । तथा हि बुद्ध्यादय उपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददत इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव ।

अनेकम्—प्रतिपुरुषं बुद्ध्यादीनां भेदात् । पृथिव्याद्यपि शरीरघटादिभेदेनानेकमेव ।

---

एतेन सत्कार्यवादे विनाशः कुत इति शङ्का निरस्ता । **अव्यापीति** । अव्यापकम्, असर्वगतमिति यावत्, तदेवाह—**सर्वमिति** । "अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः" सोऽस्यास्तीति तथोक्तम् । अव्यापित्वे हेतुमाह—**कारणेनेति** । हिर्हेतौ । ततश्च स्वस्वकार्यव्यापित्वेऽपि कारणस्य स्वस्वकारणाव्यापकत्वादव्यापितेत्यर्थः । आविष्टम्=व्याप्तम्, वेविषति=व्याप्नुवन्ति, जौहोत्यादिकस्य "विष्लृ व्याप्तौ" इति धातो रूपमिदम् । स्वस्वकार्यं व्याप्नुवदपि बुद्ध्यादिकं न प्रधानं व्याप्नोतीत्यव्यापकम् इत्यर्थः । **परिस्पन्दवदिति** । प्रवेशनिःसरणादिरूपा क्रिया परिस्पन्दः, तद्वत् इत्यर्थः । तदेवाह—**उपात्तमुपात्तमिति** । गृहीतं गृहीतमित्यर्थः । उपाददते=गृह्णन्ति । तत्र क्रिया द्विविधा, गमनादिरूपास्पन्दात्मिका आकुञ्चनप्रसारणादिसंवरणरूपा परिणामात्मिका च । तत्राद्या कार्यमात्रवर्तिनी द्वितीया मूलकारणवर्तिन्यपीति बोध्यम् ॥ **अनेकमिति** । सजातीयभेदवत् इत्यर्थः । तत्त्वं[1] चात्र स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणतत्त्वविभाजकोपाधिमत्त्वम्[2] । याति[3] चेदं महदादिषु, महदादिप्रतियोगिकान्योन्याभावेन सह महदन्तरादौ महत्त्वादेः सामानाधिकरण्यसत्त्वात् । प्रकृतौ तु न याति, प्रकृत्यन्योन्याभावस्य प्रकृतावसत्त्वात् । पुरुषे चानेकत्वमिष्टमेवेति न कोऽपि दोषः । [ इति साङ्ख्यचन्द्रिकाकाराः ] अनेकत्वे हेतुमाह—**प्रतिपुरुषमिति** । पुरुषं पुरुषं प्रतिबुद्ध्यादीनां भिन्नत्वादित्यर्थः । अन्यथा एकमत्यापत्त्या विरुद्धप्रवृत्तिनिवृत्त्यादिकं न स्यादिति भावः । ननु पृथिव्यादीनामेकैकत्वेन कथं तत्रानेकत्वमतआह—**पृथिव्याद्यपीति** । "पुरुषः कालत्रयेऽप्यस्ति प्रधानं च" इत्यादि प्रतीत्याऽऽश्रयत्वं

---

१ सजातीयभेदवत्त्वं च । २ स्वशब्देन महत्तत्त्वादिः, तस्याश्रयः—महदादिः, स प्रतियोगी यस्य तादृशो योऽन्योन्याभावः, तत्समानाधिकरणो यः तत्त्वविभाजकोपाधिः, तादृशोपाधिमत्त्वम्, इत्यर्थः । ३ इदं लक्षणं महदादौ समन्वेति, घटत इति यावत् ।

'आश्रितं'=स्वकारणमाश्रितं बुद्ध्यादि। कार्याणामभेदेऽपि कथञ्चिद् भेदविवक्षयाश्रयाश्रयिभावः, यथेह वने तिलका इत्युक्तः।

'लिङ्गम्'—प्रधानस्य। यथा चैते बुद्ध्यादयः प्रधानस्य लिङ्गं तथोपरिष्टाद् वक्ष्यति, प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्गं भवदपीति भावः।.

---

तत्रातिव्याप्तमित्यत आश्रितशब्दं विवृणोति—स्वकारणमिति। प्रधानाश्रिता बुद्धिः, बुद्धिमाश्रितोऽहङ्कारः, अहङ्काराश्रितानि एकादशेन्द्रियाणि पञ्चतन्मात्राणि च, पञ्चतन्मात्राश्रितानि पञ्च महाभूतानि, इत्येवं बुद्ध्यादि सर्वं व्यक्तं स्वस्वकारणमाश्रयत इत्यर्थः। ननु साङ्ख्यनये कार्यकारणयोरैक्यात् कथमाश्रयाश्रयिभावोऽत आह—कार्याणामिति। कार्यकारणयोरैक्येऽपि कारकव्यापारात्प्रागेकत्वबुद्धिरासीत्, पश्चाद् भेदबुद्ध्या "इदं कारणम् इदं कार्यम्" इति व्यवहारभेदमात्रमादाय आश्रयाश्रयिभाव इति भावः। तत्र दृष्टान्तं प्रागुक्तं स्मारयति—यथेति। तिलकनामकतरुसमुदायस्यैव वनत्वेन तिलकवनयोरभेदेऽपि यथाऽऽधाराधेयव्यवहारस्तथा प्रकृतेऽपीत्यर्थः। उक्त इति। "नवमकारिकाव्याख्यानप्रसङ्गे" इति शेषः।

लिङ्गमिति। लिङ्गयति=ज्ञापयतीति लिङ्गम्—अनुमापकमित्यर्थः। ननु प्रधानमप्यस्ति पुरुषस्यानुमापकमिति कथं लिङ्गत्वं व्यक्तमात्रस्य साधर्म्यं भवेदत आह—प्रधानस्येति। अध्याहृतमेतत्। ननु कथं व्यक्तं प्रधानस्यानुमापकमित्यत्राह—यथा चेति। उपरिष्टात्—"भेदानां परिमाणात्–" इत्यादिकारिकाद्वये इत्यर्थः। "प्रधानस्य लिङ्गम्" इति व्याख्याने तु न प्रधानेऽतिप्रसङ्गलेशोऽपीत्याशयेन तदभिप्रायमाविष्करोति—प्रधानं त्विति। पुरुषस्य लिङ्गं भवदपि प्रधानं न प्रधानस्य लिङ्गमिति न प्रधानेऽतिप्रसङ्ग इत्यर्थः। "लिङ्गम्—लययुक्तम्, लयकाले पञ्च महाभूतानि तन्मात्रेषु लीयन्ते, तानि एकादशेन्द्रियैः सह अहङ्कारे, स च बुद्धौ, सा च प्रधाने लयं यातीति" इति गौडपादाचार्याः।

---

१ कथंचिद् भेदविवक्षयेति। गुणजाति क्रियारूपवैधर्म्यविवक्षयेत्यर्थः। यथा स्थौल्यादिना तन्त्वादिभ्यः पटानाम्। क्वचिचाऽध्यवसायादिगुणात्मकत्वरूपेण कारणवैधर्म्येण महदादीनाम्, यथा वा पृथिवीत्वसामान्यात्मकत्वरूपेण तन्मात्रवैधर्म्येण पृथिव्यादीनाम्। यथा वा कर्मात्मकतावैधर्म्येण स्थिरावयवेभ्यश्चलावयविनः। न च पूर्वोक्ताभेदानुपपत्तिः। अत्यन्ताभेदे स्वस्याधारत्वासंभवेनाभेदसमानाधिकरणभेदस्यैव स्वीकारात्। जातिभेदकोदाहरणमाह—यथेह वन इति। वनं=वृक्षसमुदायः। तथा च वृक्षत्वेनाभेदेऽपि तिलकत्वेन भेद इत्यर्थः। इति वंशीधरः।

'सावयवम्'=अवयवनम्-अवयवः-मिथः संश्लेषः-मिश्रणं-संयोग इति यावद्, अप्राप्तिपूर्विका प्राप्तिः संयोगः, तेन सह वर्तत इति सावयवम्। तथाहि-पृथिव्यादयः परस्परं संयुज्यन्ते, एवमन्येऽपि, नतु प्रधानस्य बुद्ध्यादिभिः संयोगः, तादात्म्याद्, नापि सत्त्वरजस्तमसां परस्परं संयोगः, अप्राप्तेरभावात्।

'परतन्त्रम्'-बुद्ध्यादि, बुद्ध्या स्वकार्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्ष्यते, अन्यथा क्षीणा सती नालमहङ्कारं जनयितुमिति स्थितिः,

एवमहङ्कारादिभिरपि स्वकार्यजनने, इति सर्वं स्वकार्येषु प्रकृत्यापूरमपेक्षते-तेन परां प्रकृतिमपेक्षमाणं कारणमपि स्वकार्यजनने परतन्त्रं व्यक्तम्।

---

हेतुमदित्यनेन पौनरुक्त्यमाशङ्क्याह—अवयवनमिति। "यु मिश्रणे" इत्यतो ल्युटि रूपम्। सावयवमिति। संयोगयोगि, संयोगस्यानुयोगि प्रतियोगि चेत्यर्थः। तत्र यस्य संयोगः स प्रतियोगी, यत्र च येन सह वा संयोगः सोऽनुयोगीति विवेकः। संयोगलक्षणे "अप्राप्तिपूर्विका" इति पदस्य फलमाह—न तु प्रधानस्येति। कुतस्तत्राह—तादात्म्यादिति। तादात्म्यस्थले च नित्यप्राप्तिरेवास्ति न जात्वप्राप्तिपूर्विका प्राप्तिरिति न प्रधानं संयोगस्य प्रतियोगीति भावः। गुणत्रयसंयोगस्य अनुयोग्यपि प्रधानं नेत्याह—नापीति। अभावात्। विभुत्वेनेति शेषः।

परतन्त्रमिति। परायत्तमित्यर्थः। ननु बुद्ध्यादयः स्वस्वकार्यं प्रतिस्वातन्त्र्येण सन्ति कारणानीति कथं तेषां पारतन्त्र्यमत आह—बुद्ध्येति। महतेत्यर्थः। प्रकृत्यापूरः=प्रकृत्यनुप्रवेशलक्षणा प्रकृतेः सहायता, तत्र युक्तिमाह—अन्यथा=प्रकृतिसहायताया असत्त्वे, क्षीणा=अशक्ता, नालम्=न समर्था स्यादित्यर्थः। स्वकार्यजनन इति। अत्र "प्रकृत्यापूरोऽपेक्ष्यते" इति प्रागुक्तं सम्बध्यते। फलितमाह—इति सर्वमिति। इति=यतः, सर्वं व्यक्तं स्वकार्येषु जनयितव्येषु प्रकृत्यापूरमपेक्षते, उपसंहरति—तेन=हेतुना, कारणमपि व्यक्तं परां प्रकृतिम् अपेक्षमाणं सत् स्वकार्यजनने परतन्त्रमित्यन्वयः। एतद्-

---

१ यथा नैयायिकमते "उभाभ्यां परमाणुभ्यां द्व्यणुकं त्रिभिर्द्व्यणुकैस्त्र्यणुकम्" इत्यादिक्रमेण महापृथिव्याद्युत्पत्तिर्न तु त्रिभिर्द्व्यणुकैरेव, तथाऽत्रापि कारणप्रचयो (स्वस्वकारणीभूतावयवप्रचयो)ऽपेक्षित इत्यभिप्रायः। स्थितिः=स्वसिद्धान्तः। एवमन्त्यावयविघटादिपर्यन्तं ज्ञेयमित्याह—एवमिति।

'विपरीतमव्यक्तं' व्यक्तात् । अहेतुमद्, नित्यं, व्यापि, निष्क्रियम् । यद्यप्यव्यक्तस्यास्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति । एकम्, अनाश्रितम्, अलिङ्गम्, अनवयवं, स्वतन्त्रमव्यक्तम् ॥ १० ॥

तदनेन प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्यमुक्तं, सम्प्रति तयोस्साधर्म्यं पुरुषाच्च वैधर्म्यमाह–

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

---

वैधर्म्यं प्रकृतावाह—विपरीतमिति । कस्माद् विपरीतमिति जिज्ञासायामाह—व्यक्तादिति । अहेतुमदिति । अजम्, न कुतश्चिदाविर्भवतीति यावत्, कारणत्वविश्रान्तेस्तत्रैवाङ्गीकारादित्यर्थः । नित्यमिति । निरन्तरसत्त्वेन अतिरोभावि, अनुत्पत्तिधर्मकत्वादित्यर्थः । व्यापीति । परिणामजातव्यापकम्, सर्वगतत्वादित्यर्थः । निष्क्रियमिति । प्रवेशनिःसरणादिक्रियाशून्यम्, शान्तादिक्रियाशून्यत्वादित्यर्थः । एकमिति । सजातीयभेदविहीनम्, इत्यर्थः । अनाश्रितमिति । क्वापि कारणे न वृत्तिमत्, कारणशून्यत्वादित्यर्थः । अलिङ्गम्—कारणानुमापकम्, तेनास्य पुरुषानुमापकत्वेऽपि न हानिः । अनवयवम्=असंयोगि, स्वतन्त्रम्=परानपेक्षं सत् स्वकार्यजनने समर्थम् इत्यर्थः ।

अत्रेदं बोध्यम्—एकत्वं विहाय अन्येषाम् अहेतुमत्त्वादीनां सर्वेषां धर्माणां पुरुषे वर्तमानत्वेन यद्यपि पुरुषस्यापि अहेतुमत्त्वादयो धर्माः प्राप्नुवन्ति, तथापि "त्रिगुणत्वे सति अहेतुमत्, त्रिगुणत्वे सति नित्यम्" इत्येवं प्रत्येकं "त्रिगुणत्वे सति" इति विशेषणान्न पुरुषेऽतिप्रसङ्ग इति ॥ १० ॥

## अथ व्यक्ताव्यक्तयोः साधर्म्यनिरूपणम् ।

अष्टमकारिकायां "प्रकृतिसरूपम्" इत्युक्तम्, तदिदानीं निरूपयितुम् एकादशीं कारिकामवतारयति—तदनेनेति । तयोः=व्यक्ताव्यक्तयोः, मिथः साधर्म्यं पुरुषाच्च तयोर्वैधर्म्यमाहेत्यर्थः । त्रिगुणमिति । अत्र व्यक्तमिति प्रधानमिति च लक्ष्यपदे विशेष्ये, "त्रिगुणम्" इत्यादीनि च षट् पदानि लक्षणपरत्वेन विशेषणानि । तथा च व्यक्तं त्रिगुणम्, अविवेकि, विषयः, सामान्यम्, अचेतनम्, प्रसवधर्मि चास्ति, तथा प्रधानं त्रिगुणम्, अविवेकि, विषयः, सामान्यम्, अचेतनम्, प्रसवधर्मि चास्ति । चशब्दोऽप्यर्थकः, तथा च यद्यपि अहेतुमत्त्वादिकं व्यक्ताव्यक्ताभ्यां सह पुरुषस्य साधर्म्यं, तथापि अत्रैगुण्यादिना पुमान्=पुरुषः, तद्विपरीतः=ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीत इत्यन्वयः ॥ ११ ॥

---

१ अदृष्टादेरपेक्षणेऽपि स्वोपादानानपेक्षणादित्यर्थः ।

"त्रिगुणम्" इत्यादिना ।

त्रयो गुणाः=सुखदुःखमोहा अस्येति त्रिगुणम् ।

---

"त्रिगुणम्" इत्यत्र गुणशब्देन यदि सत्त्वरजस्तमांसि तत्त्वानि गृह्येरन्, तर्हि "त्रिगुणम्" इत्यस्य "सत्त्वादिगुणत्रयाधारभूतं व्यक्तमव्यक्तं च" इत्यर्थः स्यात्, स च न संभवति, व्यक्तस्य महदादेर्गुणत्रयाधारत्वेऽपि, अव्यक्तस्य गुणत्रयाधारत्वाभावेन तत्राव्याप्तेः, तथा च साङ्ख्यसूत्रम्—"सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" इति । "सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति, तेषां गुणानां प्रकृतिस्वरूपत्वात्" इति सूत्रार्थः । ततश्च प्रधानस्य गुणत्रयात्मकत्वेन न तत्र गुणत्रयनिरूपिताऽऽधारता संभवतीति पर्यालोच्य गुणपदार्थमाह—सुखदुःखमोहा इति । गुणशब्देन सुखादीनां ग्रहणे तु न प्रधानेऽव्याप्तिः, तस्यापि सत्त्वादिधर्मभूतसुखाद्याधारत्वसंभवादित्याशयः । यद्यपि साङ्ख्यशास्त्रे "सुखधर्मकं सत्त्वम्, दुःखधर्मकं रजः, मोहधर्मकं तमः" इत्येवं सुखादिधर्मकस्य सत्त्वादितत्त्वत्रयस्यैव पुरुषोपकरणत्वात्, पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च, गुणपदवाच्यत्वं न सुखादिकधर्मजातस्य, तथापि धर्मधर्मिणोरभेदमादाय सुखादयो धर्मा एवात्र गुणपदेनाभिप्रेता न सत्त्वादयो धर्मिणः, तथा सति प्रधानेऽव्याप्तिप्रसङ्गादिति निष्कर्षः ।

ननु यदि गुणपदेन सुखादीनां ग्रहणं सत्त्वादीनामग्रहणं च स्वीक्रियेत, तर्हि पञ्चतन्मात्राणां त्रिगुणत्वानुपपत्तिः, "तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" ॥ इति विष्णुपुराणीयवचनेन तेषां शान्तादिपदवाच्यसुखधर्मरहितत्वप्रतिपादनात्, इति चेत् । अत्राहुः—पञ्चतन्मात्राणि खलु सन्ति सुखादिमदहङ्कारपरिणामा इति "कारणगुणानुरूपत्वमेव कार्यस्य" इति नियमात् तेषामपि स्वकारणवत् सुखादिमत्त्वेन त्रिगुणत्वमव्याहतमेव, किं च तानि सन्ति सुखाद्याधारभूतपञ्चमहाभूतानां कारणानीति तेषामपि सुखाद्याधारत्वम् अवश्यंभावि, अन्यथा तत्कार्येषु स्थूलभूतेषु सुखादीनामाकस्मिकत्वापत्तिरिति त्रिगुणत्वं सर्वथा निष्प्रत्यूहमेवेति ।

न च पञ्चतन्मात्राणां सुखादिमत्त्वाभ्युपगमे प्रागुक्तविष्णुपुराणीयवचनेन विरोधापत्तिरिति शङ्क्यम्, तस्य "अस्मदाद्युपभोगार्हस्पष्टसुखादिधर्मकशब्दाद्याधारभूतानि यानि स्थूलभूतानि तेभ्यो विलक्षणानि=अस्मदुपभोगाऽयोग्याऽस्पष्टसुखादिमच्छब्दाद्याधारभूतानि सूक्ष्मभूतानि पञ्चतन्मात्राणि" इत्यर्थे तात्पर्यात् । यदि हि सर्वथैव शान्तत्वादिशून्यशब्दादिमत्त्वं तेषामभ्युपगम्येत, तर्हि "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥" इति भगवद्वचनेन विरोधापत्तिः स्यात्, न च "त्रयः सत्त्वादयो गुणा यस्मिंस्तत् त्रिगुणम्" इत्यर्थाभिप्रायेण भगवद्वच इति शङ्क्यम्, सत्त्वादिसत्त्वे तद्धर्माणां सुखादीनामवश्यम्भावनियमाद्

तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् ।

अविवेकि=यथा प्रधानं न स्वतो विविच्यते एवं महदादयोऽपि न प्रधानाद् विविच्यन्ते तदात्मकत्वात् ।

अथवा—सम्भूयकारितात्राविवेकः, न हि किञ्चिदेकं पर्याप्तं स्वकार्येऽपि तु सम्भूय, तत्र नैकस्मात्कस्यचित्केनचित्सम्भव इति ।

ये त्वाहुः—विज्ञानमेव हर्षविषादमोहशब्दाद्याकारं न पुनरितोऽन्यस्तद्धर्मेति, तान् प्रत्याह—

---

गुणशब्देन सत्त्वादीनां ग्रहणेऽपि सुखादिधर्मविरहत्वाभिधानस्यासङ्गतत्त्वात् । तस्मात् प्रागुक्तैव व्यवस्था ज्यायसीति ॥ ॐ ॥

"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" इत्यादिन्यायसूत्रानुसारिणां मतं निराकर्तुमाह—तदनेनेति । अनेन=सुखादीनाम् आत्मातिरिक्तव्यक्ताव्यक्तधर्मत्वकथनेन, यत् पराभिमतम्=तार्किकसम्मतम्, सुखादीनाम् आत्मगुणत्वम्, तत् पराकृतम्=निराकृतम्, खण्डितमिति यावत् । "असङ्गो ह्ययं पुरुषः" "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिविरोधान्न सुखादीनामात्मधर्मत्वमिति भावः ।

अविवेकीति । विवेकः पृथग्भवनम्, न यस्य विद्यते तद् अविवेकि, प्रधानाभिन्नमिति यावत्, तदेवाह—यथा प्रधानमिति । स्वतः=स्वस्मात् प्रधानात् इति यावत्, प्रधानं न विविच्यते=भिद्यते, स्वस्मिन् स्वस्य भेदासंभवादित्यर्थः । महदादीनां प्रधानाभिन्नत्वे हेतुमाह—तदात्मकत्वादिति । कार्यकारणयोरैक्येन महदादीनां प्रधानात्मकत्वादित्यर्थः । तदयमर्थः—व्यक्तम्=महदादि, अविवेकि=प्रकृत्यभिन्नम्, कार्यकारणयोरभेदात्, प्रधानम् अविवेकि=प्रधानाभिन्नम्, स्वस्मिन् स्वस्य भेदासंभवादिति ।

संभूयकारिता=मिथः संमिश्रणपुरःसरकार्यकरणशीलता, तत्र हेतुमाह—न हीति । हि=यतः, एकं किंचित् तत्त्वं स्वकार्ये=स्वकीयकार्यजनने, न पर्याप्तम्=समर्थम्, अपि तु संभूय=मिलित्वा, "स्वकार्ये पर्याप्तम्" इत्यनुषज्यते, अतो महदादेः संहत्यकारितेत्यर्थः । फलितमाह—तत्रेति । तत्र=एवं सति, केनचित् प्रकारेण न कस्यचिद् एकस्मात् संभवोऽस्तीत्यर्थः ।

विषय इति पदं व्याचिख्यासुस्तत्कृत्यं तावदाह—ये त्विति । योगाचारानुसारिणो विज्ञानवादिनो बौद्धा इत्यर्थः । हर्षेति । हर्षविषादमोहधर्मवान् शब्दादिराकारो यस्य तद् हर्षविषादमोहशब्दाद्याकारम्, तत्र हर्षः=सुखम्, विषादः=दुःखम्, मोहः प्रसिद्धः । विज्ञानमेव सुखादिधर्मकशब्दादिप्रपञ्चा-

---

१ आकारशब्दः प्रत्येकमभिसंबध्यते । हर्षाकारं विषादाकारं मोहाकारं शब्दाद्याकारं चेत्यर्थः ।

"विषय" इति। विषयः=ग्राह्यः-विज्ञानाद् बहिरिति यावत्। अत एव 'सामान्यं'=साधारणम्-अनेकैः पुरुषैर्गृहीतमित्यर्थः।

विज्ञानाकारत्वे त्वसाधारण्याद्विज्ञानानां वृत्तिरूपाणां तेऽप्यसाधारणाः स्युः (विज्ञानं यथा[1] परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः)

---

कारधारि न पुनः इतः=विज्ञानात्, अन्यः=भिन्नः बाह्यः शब्दादिप्रपञ्चः, तद्धर्मा[2]=सुखादिधर्मवानित्यर्थः[3]।

तान् प्रतीति[4]। "कुम्भस्तम्भाद्याकारम् आन्तरं विज्ञानमेव वस्तु सत्, न ततोऽन्यद् बाह्यं वस्तुजातं किमपि सत्" इति वदतो बौद्धान् प्रतीत्यर्थः। बहिरिति। भिन्नमित्यर्थः ग्राह्यत्वेन ग्राहकाद् विज्ञानाद् भिन्नः कुम्भादिरर्थ इति सरलार्थः। ग्राह्यग्राहकयोरेकाकारता न वक्तुं शक्या, कुम्भादीनां ग्राह्यत्वेन विज्ञानस्य च ग्राहकत्वेन प्रतीत्यातयोर्भेदस्य स्फुटं प्रतीयमानत्वात्, अन्यथा ग्राह्यग्राहकरूपनाम्नोरेव व्यवच्छेदापत्तेरिति भावः। तस्माद् ग्राह्यो घटादिरन्यः पदार्थो ग्राहकं विज्ञानं चान्यदिति तत्त्वम्।

अर्थस्य विज्ञानात्मकत्वेऽनुपपद्यमानं 'सामान्यम्' इति विशेषणान्तरमवतारयति—अत एवेति। यतो विज्ञानाद् भिन्नम् अत एव साधारणम्=पुरुषभेदेऽपि अभिन्नत्वेन सर्वपुरुषसाधारणमित्यर्थः। तदेवाह—अनेकैरिति। बहुविज्ञानालम्बनीभूतमित्यर्थः।

एकस्यैवार्थस्य अनेकपुरुषग्राह्यत्वेन भवति सर्वपुरुषसाधारणता, सा विज्ञानवादे नोपपद्येतेति भावः।

कुतो नोपपद्येतेत्यत्राह—विज्ञानाकारत्वेत्विति। घटाद्यर्थानां विज्ञानस्वरूपत्वे तु, ते=अर्थाः, अपि असाधारणाः=प्रतिपुरुषं भिन्नाः, स्युर्न सर्वपुरुषसाधारणा इत्यन्वयः। कथमसाधारणाः स्युरित्यतस्तत्र हेतुमाह—असाधारण्यादिति। बुद्धिवृत्तिरूपाणां विज्ञानानां प्रतिपुरुषं भिन्नत्वादित्यर्थः।

तदेव स्पष्टयति—विज्ञानं यथेति। यथा चैत्रस्य विज्ञानं परेण मैत्रेण न गृह्यते, परबुद्धेः-अन्यदीयविज्ञानस्य, अपरं प्रति प्रत्यक्षत्वायोगात्, तथा विज्ञानादभिन्नोऽर्थोऽप्यन्येन नैव गृह्येतेत्यर्थः। यदि हि घटाद्यर्थानां विज्ञानाकारत्वं स्यात्, तदा तेषामनेकैर्गृहीतत्वं न स्यादित्यत्र फलितम्।

---

१ कोष्ठकान्तर्गतः पाठो न सार्वत्रिकः। २ सः=हर्षादिः धर्मः=स्वभावो यस्य स तद्धर्मा=हर्षादिस्वरूप इति यावत्। ३ विज्ञानवादिनस्तावदातिष्ठन्ते-क्षणिकविज्ञानमेवैकं परमार्थभूतमनादिवासनावशात् तत्तद्बाह्यार्थाकारेण निर्भासते नास्ति तद्व्यतिरिक्तः कश्चित् परमार्थभूतो बाह्योऽर्थ इति, इति भावः। ४ तान् प्रति=तान् लक्ष्मीकृत्य। ५ पुरुषान्तरेणाग्राह्याः।

तथा च नर्तकीभ्रूलताभङ्ग एकस्मिन् बहूनां प्रतिसन्धानं युक्तम्, अन्यथा तन्न स्यादिति भावः।

ननु मा भूदेकस्यार्थस्यानेकैर्ग्रहणमित्याशङ्क्य अनेकैर्ग्रहणमन्तराऽघटमानं प्रतिसन्धानं तत्र साधकमाह—तथा चेति। तथा च=अर्थस्यानेकगृहीतत्वेन सर्वपुरुषसाधारण्येऽभ्युपगम्यमाने च, एकस्मिन् नर्तक्याः=नर्तनशीलाऽबलायाः, भ्रूलताभङ्गे=विलसितकटाक्षविक्षेपरूपे अभिनयविशेषे, बहूनाम्=अनेकेषाम् द्रष्टॄणाम्, यद् युगपत्, प्रतिसन्धानम्=दृष्टस्य पुनरनुसन्धानरूपं स्मरणकल्पं ज्ञानान्तरं प्रतिसन्धानम्, तद् युक्तं भवतीत्यर्थः।

विपक्षे प्रतिसन्धानानुपपत्तिरेव बाधिकेत्याह—अन्यथेति। अन्यथा=विज्ञानवद् असाधारण्ये तु, तत्=प्रतिसन्धानम्, युक्तं न स्यादित्यर्थः।

अयं भावः—कस्यांचिद् राजसभायां नर्तक्या अभिनये कृते सति तद्द्रष्टारो भरतमतपरिचिताश्चैत्रादयः परस्परमित्थं वार्तालापं कुर्वन्ति—"अयि मैत्र! दृष्टस्त्वया नर्तक्या भ्रूभङ्गः?" मैत्र आह—"आं दृष्टश्चैत्र! अपूर्वोऽयमभिनयः"। ततोऽपर आह—दृष्टो मयाप्यसौ "कुशलेयं भरतमतेऽबला" इति। इत्येवं परस्परप्रतिसन्धानेन भवति ह्येकस्यैव भ्रूभङ्गरूपार्थस्य युगपदनेकपुरुषग्राह्यत्वेन सर्वपुरुषसाधारणता, यदि त्वर्थो विज्ञानाकारो भवेत् तदा अनेकैर्युगपद्गृहीतत्वरूपं सर्वपुरुषसाधारण्यं तस्य नोपपद्येत, "यस्य विज्ञानस्याऽऽकारः सोऽर्थस्तेनैव स गृह्यते न सर्वैः" इति प्रतिसन्धानबलेन अन्यदीयविज्ञानाकारस्यार्थस्य अन्येन ग्रहीतुमशक्यत्वात्, न हि चैत्रीयस्वप्नज्ञानविलसितोऽर्थो मैत्रेण ज्ञायते, तस्मात् वस्तुनः साधारण्योपपत्तये विज्ञानातिरिक्तो विषय इत्यकामेनाप्यवश्याभ्युपेयमिति।

## अथ विज्ञानवादः।

विज्ञानमेवैकः पदार्थो नास्ति[2] कश्चिदन्यः पदार्थोऽस्ति, तत्तद्वस्तुस्वरूपभूता बुद्धिः स्वरूपं स्वयमेव प्रकाशयति, प्रकाशवत्, प्रकाशो हि स्वरूपं स्वयमेव

१ विज्ञानाकारत्वेनार्थस्यासाधारणत्वे। २ विज्ञानाभावकाले न पदार्थानां प्रतीतिः पदार्थाभावकालेऽपि स्वप्नादौ विज्ञानं वर्तत इति विज्ञानमेवैकं तत्त्वं नान्यत् तदतिरिक्तं किंचिदस्ति, तदतिरिक्तं यत् बाह्यपदार्थजातं प्रतीयते तदलीकमेव सर्वं स्वप्नादिविषयवत्। किमुक्तम्? बाह्याः किल जडपदार्थाः स्वप्रकाशताविरहात् स्वप्रकाशार्थं विज्ञानमपेक्षन्ते, इति विज्ञानकाल एव तेषां प्रतीतिर्भवति न तु तदभावकाले, तथा च मृत्तिकासत्त्वकाले घटसद्भावात् तदसत्त्वकाले च तदभावात् मृत्तिकातो यथा न तत्त्वान्तरं घटस्तथैव विज्ञानसत्त्वासत्त्वाधीनसत्ताऽसत्ताकत्वाद् बाह्यपदार्थानामपि न विज्ञानतो तत्त्वान्तरत्वम्। किंच स्वप्ने यथा बाह्यपदार्थानामभावेऽपि विज्ञानमेव नानापदार्थाकारेण भाति जागरितेऽपि तथा विज्ञानमेव तथाकारेण प्रतीयते न जातु बाह्यविषया इत्येव युक्तं मन्तुमिति।

प्रकाशयति नान्यापेक्षां करोति। यदुक्तम्—"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते"॥ इति।

अतो नास्ति कश्चित् बुद्धेः प्रकाशको नापि किञ्चिद् बुद्धिप्रकाश्यमस्ति वस्तु, किं तु सर्वं विज्ञानरूपमेवास्ति। ग्राह्यविषयस्य ग्राहकबुद्धेश्चेति द्वयोरनुमानेनाप्यभेदः सिद्धोऽस्ति, तथाहि—"यद् वस्तु यतो ज्ञाप्यम्, न तत् ततो भिद्यते, ज्ञानज्ञाप्यचक्षुरादीन्द्रियवत्" इति। ज्ञानेन चक्षुरादीन्द्रियाणि ज्ञायन्तेऽतो न तानि ज्ञानतो भिन्नानि, ज्ञानरूपेन्द्रियैश्च नीलादयो ज्ञायन्तेऽतस्तेऽपि न ज्ञानतो भिन्ना भवितुमर्हन्ति, भेदे स्वीकृते हि न विज्ञानेन सह घटादेरर्थस्य सम्बन्धो घटते, अस्मन्मते सम्बन्धनियमकारणस्य तादात्म्यस्य सति भेदेऽसंभवात्। न च ग्राह्यग्राहकग्रहणानां [ज्ञेयज्ञापकज्ञानानाम्] भेदस्य परस्परं स्पष्टतया कथं तेषामभेदो भवितुमर्हतीति शङ्क्यम्, द्विचन्द्रप्रतीतिवत् तादृशभेदस्य भ्रमरूपत्वात्। तथाहि—यथा स्वप्नस्थानं विज्ञानं विनैव बाह्येन अर्थेन ग्राह्यग्राहकाकारं भवति, यथा वा—जागरितस्थानं मायामरीच्युदकशुक्तिरजतादिविज्ञानं बाह्यानालम्बनं भवति, तथा अन्यदपि जागरितस्थानं कुम्भस्तम्भादि विज्ञानं न बाह्यालम्बनमिति ज्ञातुमुचितम्, विज्ञानत्वाविशेषात्, ततश्च ग्राह्यग्राहकादीनां या भेदप्रतीतिः सा भ्रमरूपैवेति सुस्पष्टं सिध्यति। न च सर्वस्य विज्ञानमात्रत्वे एकस्मिन् विज्ञाने "नीलमिदं पीतमिदम्" इति वैचित्र्यप्रतीतिर्न स्यादिति शङ्क्यम्, स्वप्नादिषु विनैव बाह्यार्थं वासनानिमित्तकज्ञानवैचित्र्यवत् जागरितेऽपि वासनावैचित्र्यादेव विज्ञानवैचित्र्यस्य सूपपन्नत्वात्। किं बहुना, ययोर्हि परस्परमस्ति नियतसहोपलम्भनम्, न जातु तयोः परस्परं भेदोऽस्ति, यथा न एकस्माच्चन्द्रमसो द्वितीयस्य चन्द्रमसो भेदोऽस्ति, तथा अर्थस्यापि विद्यते ज्ञानेन नियतसहोपलम्भ इति न तस्मात् तस्य भेदो भवितुमर्हति। तथा चानुमानम्—"ज्ञेयं ज्ञानादभिन्नम्, ज्ञानोपलम्भक्षणनियतोपलम्भग्राह्यत्वात्, ज्ञानवत्" इति। तथा चोक्तम्—"सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये"॥ इति। तस्मात् सर्वं वस्तु विज्ञानात्मकमिति यत् तत् युक्तियुक्तमेवेति सिद्धम्॥ ॐ॥

१ एकेन केनचित् पदार्थेन सहैव यदेकस्मिन् काले एव कस्यचित् पदार्थस्य सहभानं स सहोपलम्भनियम इत्युच्यते। यथा द्वितीयचन्द्रज्ञानं वस्तुतः एकचन्द्रज्ञानकाल एव भवतीति द्वितीयचन्द्रो भिन्नो न मन्यते, तथैव ज्ञानकाल एव विषयभानात् विषयोऽपि नैव ज्ञानाद् भिन्नः। तथाच-नीलस्य=नीलविषयस्य तद्धियः=नीलज्ञानस्य च सहोपलम्भनियमात् ज्ञानस्य विषयेण सहाभेद इत्यर्थः। यत् खलु येन सह नियमेनोपलभ्यते तत् ततो न व्यतिरिच्यते। यथैकेन चन्द्रमसा द्वितीयश्चन्द्रः। बाह्यार्थोऽपि नियमेन विज्ञानेन सहैवोपलभ्यते न तद्व्यतिरेकेण कदाचित्। नियमेन सहोपलम्भात्तु प्रतिपद्यते नास्ति विज्ञानाद् बाह्यार्थस्य व्यतिरेक इति।

# अथ विज्ञानवादखण्डनम् ।

घटपटादिज्ञानस्याकारो बुद्धावेव नान्यत्रेति हि सौगतमतम्, तत्र वदामः—यान् पदार्थान् प्रत्यक्षत इन्द्रियाणि विषयीकुर्वन्ति ते न सन्तीति कथनं केवलं तस्याऽविकृतबुद्धित्वसूचकमेव, प्रत्यक्षसिद्धस्यार्थस्याऽपलपितुमशक्यत्वात्, तस्मात् "सन्ति बाह्याः पदार्था यान् विज्ञानं विषयीकरोति, ते च विज्ञानतो भिन्ना" इत्येव स्वीकर्तुमुचितम्। सर्वः खलु प्रत्येता घटमहं प्रत्येमि पटमहं प्रत्येमीति घटपटादीन् बाह्यार्थान् विज्ञानतो व्यतिरेकेण प्रत्येति। किंच घटज्ञानं पटज्ञानमिति बाह्यार्थेन घटपटादिना विज्ञानं सर्वत्र विशेष्यते। विशेषणविशेष्यभावश्च भेदनिबन्धः प्रवर्तते नाभेदनिबन्धन इति प्रत्यक्षम्। न चैवं प्रत्यक्षे भेदावगमे भवति शक्योपपादः कदाचिद् बाह्यार्थाभावः॥ तस्माद् विज्ञानतो व्यतिरेकेण नास्ति कश्चिद् बाह्योऽर्थ इत्येतदनुपपन्नम्। प्रमाणेनोपलब्धेः॥ ॐ॥

विज्ञानवादेऽपि पूर्वपूर्वविज्ञानस्यानुभवं नोत्तरं विज्ञानं स्मर्तुं प्रभवति, भिन्नाधारत्वात्। यदि स्मरणार्थं वासनायाः संक्रम इति विभाव्यते, तदेदं पृच्छामः—किं सा वासना पूर्वविज्ञानत उत्तरविज्ञाने गमनं करोति, आहोस्वित् उत्तरविज्ञाने सजातीया द्वितीया काचित् वासना प्रादुर्भवतीति। तत्राद्यः पक्षस्तु न संभवति, न हि वासनायाः पादौ वर्तेते, येन सा एकस्मात् स्थानात् द्वितीयस्मिन् स्थाने गन्तुं प्रभवेत्। उत्तरविज्ञाने पूर्वविज्ञानीयवासनाया उत्पत्तिरिति द्वितीयपक्षोऽपि न संभवति, विज्ञानं हि भवन्मते क्षणिकमिति उत्तरविज्ञानं प्रादुर्भूय विनष्टमित्याधाराभावात् क्व वासना उत्पद्येत, नहि विनाऽऽधारं कुत्रापि किंचिदप्युत्पद्यमानं दृष्टचरं नाम, अतो वासनाया अभावात् उत्तरविज्ञानस्मरणं सर्वथाऽसंभवि। तस्मात् तत् स्मरणार्थं विज्ञानातिरिक्त आत्मपदार्थोऽवश्याभ्युपेयः। न च स्वप्नमायामरीच्युदकरज्जुसर्पगन्धर्वनगरा- [शून्ये नगरस्य प्रतीतिः] दिषु यथा विषयो नास्ति, किं तु ज्ञानमेव ग्राह्यग्राहकरूपेण प्रतीयते, तथा जागरितेऽपि ज्ञानमेव ग्राह्यग्राहकरूपेण भासते, न जातु ज्ञानात् पृथग् ज्ञानस्य कश्चिद् विषयोऽस्तीति शङ्क्यम्, स्वप्नादिस्थाने यो विषयो भासते तस्योत्तरकाले बाधो दृश्यते, जागरिते च यो विषयोऽवभासते न तस्योत्तरकाले बाध इत्येवमत्र दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यात्। तस्मात् विज्ञानात् पृथक् विज्ञानस्य विषयः पदार्थोऽस्तीति सुस्पष्टं सिध्यति। तथा चानुमानम्—"कुम्भादिकं विज्ञानाद् भिन्नम्, ग्राह्यत्वात्, प्रदीपात् तत्प्रकाश्यपटादिवत्" इति।

१ यथा हि स्वाप्नप्रभृतिपदार्था अभ्युपगम्यन्ते न तथा जागरितपदार्था अभ्युपगन्तुं शक्यन्ते। यतः स्वाप्नप्रभृतिपदार्थाः प्रतीतिकालमात्रनिर्भासास्तत ऊर्ध्वं बलाद् बाध्यन्ते न जातुक्षणमप्यवस्थातुं पारयन्ते। जागरितपदार्थाश्चेतो बहुविपरीताः प्रतीत्यनन्तरं विबाधिषिता अपि न बाध्यन्ते यथापूर्वं चाप्रलयादवभासन्ते। सार्वजनीनं खल्वेतत् उपलब्धा

न च यद् येन नियतसहोपलम्भनं तत्ततो न भिद्यते, यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः, नियतसहोपलम्भश्चार्थो ज्ञानेनेति न ततः स भिद्यते इति शङ्क्यम्, सहोपलम्भशब्दस्य "ज्ञानार्थयोः साहित्येन उपलम्भः सहोपलम्भः" इत्यर्थाभ्युपगमे साहित्यस्य अभेदविरुद्धभेदव्याप्तत्वेन अभेदे तदनुपपत्त्या हेतोरेव विरुद्धत्वात्। यदि तु "एकोपलम्भनियमः सहोपलम्भः" इति विभाव्यते, तदपि भ्रान्तस्यान्तविलसितमेव, "सह"शब्दस्य एकत्ववाचकत्वाभावात्। अथ यदि "निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः। अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥" इत्यभियुक्तोक्त्या "सह"शब्दस्य एकत्ववाचकत्वं भविष्यतीति विभाव्यते, तदेदं पृच्छामः—"किम् एकत्वेन उपलम्भः, आहोस्विद् एक उपलम्भो ज्ञानार्थयोः" इति। तत्राद्यपक्षस्तु न संभवति, विषयस्य बाह्यतया ज्ञानस्य च आन्तरतया एकत्वेन उपलम्भासंभवात्। द्वितीयपक्षोऽपि न संभवति—एकोपलम्भनियमस्य उपायोपेयभावहेतुकत्वेन अभेदासाधकत्वात्, इति दिक्। तस्माद्विज्ञानाद् भिन्न एव

---

सर्वः स्वप्नप्रबुद्धो जागरिते स्वाप्नार्थोपलिप्साकुलचेतस्कोऽपि न तानुपलभते, जागरितार्थांश्च प्रतिदिवसमनुपलिप्समानोऽप्युपलालभ्यते। तत्र चेदमेव कारणं वरीवर्ति यत् स्वाप्नपदार्थानां जागरिते बाधः प्रजायते जागरितपदार्थानां च कस्यामप्यवस्थायां बाधो नोपजायत इति। किं न पश्यसि? सुप्तप्रबुद्धो निखिलो जनः स्वाप्नपदार्थबाधमाचष्टे न जागरितपदार्थबाधं जागरितो नापि सुप्तः। यथा चैते स्वाप्नपदार्थास्तथा मायापदार्था अपि द्रष्टव्याः। तेऽपि त्वरितं जायन्ते बाध्यन्ते चेति नास्ति कश्चिद्विशेषः। न चैवं बाधाबाधलक्षणे वैधर्म्ये विद्यमाने सर्वेऽमी जागरितपदार्थाः स्वाप्नादिपदार्थकल्पाः कर्हिचित् परिकल्पयितुं शक्यन्ते। अन्यथा विज्ञानस्यापि तत्कल्पत्वकल्पनाप्रसङ्गात्। तस्माद् विज्ञानमेव स्वप्नादिवद् बाह्यार्थाकारेण निर्भासत इति वार्तम् इति निष्कर्षः।

१ साहित्यं हि नियमेन तयोरेवोपपद्यते ये द्वे परस्परं स्वरूपतो व्यतिरिच्येते यथाऽश्विनौ। द्वित्वेन व्याप्तः खलु सहभावः। न च स एकत्वे सति वक्तुमपि शक्यते किं पुनरुपपादयितुम्। बाह्यार्थविज्ञाने चापि परस्परं चेत् स्वरूपतो न व्यतिरिच्येयातां तदा तत्सहभावोऽपि नोपपद्येत दूरेण हि तदुपलम्भः। व्यतिरेके चोपायोपेयभावनिबन्धनस्तत्सहभावः सुखेनोपपत्तुमर्हति नास्ति कश्चिद्दोषः। तथा च नियमेन तदुपलम्भोऽपि युज्यत इति तत्त्वम्। तत्र सहकारिकारणं साधनं वा उपायः, उपायेन साधनीयः पदार्थश्च उपेय इति विवेकः। प्रकृते—विषयः उपेयः ज्ञानं चोपायः। तथाच ज्ञानविषययोरुपायोपेयभावहेतुक एव सहोपलम्भो नाभेदहेतुक इति फलितम्। तदाह—एकोपलम्भनियमस्येति। एतदुक्तं भवति—यथा "सर्वं चाक्षुषम् आलोकानुविद्धं नियमेन मनुजैरुपलभ्यते अर्थात् चक्षुर्विषयं घटादिगतं रूपं प्रकाशेन संगतमेव दृश्यते, आलोककाले एव नियमेन भावात्, परं न तावता घटादिकं आलोकात्मकं भवति अपि तु आलोकोपायत्वान्नियमः, आलोक उपायः घटादिरूपज्ञानमुपेयम्, एवमिहापि ज्ञानार्थयोरुपायोपेयभावहेतुकः सहोपलम्भनियमो नाऽभेदहेतुक इति भावः।

अचेतनं—सर्वे एव प्रधानबुद्ध्यादयोऽचेतना न तु वैनाशिकवच्चैतन्यं बुद्धेरित्यर्थः।

प्रसवधर्मि—प्रसवरूपो धर्मो यः सोऽस्यास्तीति प्रसवधर्मि। प्रसवधर्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्मस्य नित्ययोगमाख्यातुम्।

सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यत इत्यर्थः।

---

बाह्यो विषय इति सुसाधु सिध्यति। तेन एकस्मिन्नेव योषिद्रूपे वस्तुनि रक्तस्य[1] तत्कान्तस्य सुखज्ञानं द्विष्टस्य[2] सपत्नीजनादेर्दुःखज्ञानं विमूढस्य[3] कामुकस्य च विषादज्ञानमित्येवं ज्ञाननानात्वप्रतीतिरुपपद्यते। यदि तु वस्तु विज्ञानात्मकं भवेत्, तर्हि विज्ञानस्य असाधारण्याद् अनेकविज्ञानालम्बनम् एकं साधारणं वस्तु न संभवेत्, अतः वस्तुनः साधारण्योपपत्तये विज्ञानातिरिक्तं तदभ्युपेयम्॥ ७॥

तदयमर्थः—व्यक्तं सामान्यम्, मूल्यदासीवत् सर्वसाधारणत्वात्, प्रधानमपि सामान्यम्, सर्वसाधारणत्वात् इति।

अचेतनमिति। व्यक्तं तथा प्रधानम् अचेतनम्=स्वप्रकाशचेतनाद् भिन्नम्, अनवभासकत्त्वात्, इत्यर्थः। वैनाशिकवदिति। बौद्धवदित्यर्थः। जडप्रकृतिकार्यत्वाद् बुद्धेरिति भावः।

प्रसवधर्मीति। प्रसवः=अन्याविर्भावहेतुत्वरूपः परिणामः, स चासौ धर्मश्चेति प्रसवधर्मः सोऽस्यास्तीति प्रसवधर्मीति विग्रहः, तदाह—प्रसवरूपो धर्म इति। कर्मधारयान्मत्वर्थीयेनिप्रत्यये "प्रसवधर्मि" इति रूपमिति भावः। ननु "प्रसवो धर्मो यस्य" इत्येवं बहुव्रीहिणैव प्रसवधर्मवत्त्वलाभे मत्वर्थीयनिर्देशो व्यर्थोऽत आह—नित्ययोगमिति। प्रसवधर्मस्य प्रकृत्यादिधर्मिणा सह नित्यसम्बन्धं कथयितुं मत्वर्थीय इनि प्रत्यय इत्यर्थः। "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इत्युक्तेर्नित्ययोग इनि प्रत्यय इति भावः।

व्यक्तादिषु प्रसवधर्मस्य नित्ययोगतां विशदयति—सरूपविरूपेति[4]। तत्र त्रिगुणत्वेन महदादयः प्रधानस्य सरूपपरिणामाः, हेतुमत्त्वादिना च विरूपपरि-

---

१ स्वस्त्रीविषयकरागयुक्तस्य। २ स्त्रियाद्वेषकारिणः। ३ स्त्रिया अलाभेन मोहयुक्तस्य अन्यकामिपुरुषस्य। ४ सरूपं=सुखदुःखमोहाकारता, विरूपं=महत्तत्त्वाद्याकारता ताभ्याम्, क्षणमप्यपरिणम्य गुणा न तिष्ठन्तीत्यर्थः। न चैवं धर्मिणः क्षणिकत्वापत्तिः, अभिव्यक्तितिरोभावावस्थाविशेषस्यैव क्षणिकत्वाङ्गीकारात्। (वंशीधरः) प्रलयदशायां सजातीयपरिणामेन सर्गदशायान्तु विजातीयपरिणामेन क्षणमपि न वियुज्यत इति तात्पर्यम् इति श्रीकृष्णनाथः।

व्यक्तवृत्तमव्यक्तेऽतिदिशति "तथा प्रधानम्" इति। यथा व्यक्तं तथाऽव्यक्तमित्यर्थः।

ताभ्यां वैधर्म्यं पुरुषस्याह—"तद्विपरीतः पुमान्" इति।

स्यादेतद्—अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य, एवमनेकत्वं व्यक्तसाधर्म्यं, तत्कथमुच्यते "तद्विपरीतः पुमान्" इति अत आह—"तथाच" इति। चकारोऽप्यर्थः।

यद्यप्यहेतुमत्त्वादिकं साधर्म्यं, तथाप्यत्रैगुण्यादि वैपरीत्यमस्यास्त्येवेत्यर्थः।

---

णामा इति ध्येयम्। सरूपविरूपौ च तौ परिणामौ च सरूपविरूपपरिणामौ ताभ्यामिति विग्रहः। तदयमर्थः—व्यक्तं प्रसवधर्मि—बुद्धेरहङ्कारस्य ततः पञ्चतन्मात्राणामेकादशेन्द्रियाणां च पञ्चतन्मात्रेभ्यश्च पञ्चमहाभूतानामुत्पत्तेः। प्रधानं प्रसवधर्मि—ततो बुद्धेरुत्पत्तेः, इति।

व्यक्तवृत्तमिति। व्यक्तेषु=महदादिषु, वृत्तम्=स्थितम्, यत् त्रिगुणत्वादि, महदादिसाधर्म्यमिति यावत्। अव्यक्ते=प्रधाने। तथाच यो योऽर्थः स स तत्र तत्रोक्तः। ताभ्याम्=व्यक्ताव्यक्ताभ्याम्। पुमान्=पुरुषः, तद्विपरीतः=ताभ्यांव्यक्ताव्यक्ताभ्यां विलक्षणः, अत्रिगुणः–निर्गुणत्वात्, विवेकी=असंहतः, अविषयः=निर्विषयत्वात्, असाधारणः=प्रतिसंघातं भिन्नः, निःसामान्यत्वात्, चेतनः, अप्रसवधर्मी चेत्यर्थः। चितिशक्तेरपरिणामित्वादिति भावः।

अहेतुमत्त्वनित्यत्वादीति। आदिना व्यापकत्वनिष्क्रियत्वैकत्वानाश्रितत्वालिङ्गत्वनिरवयवत्वस्वतन्त्रत्वानां समुच्चयः। यथा प्रधानम् अहेत्वादिमत् तथा पुरुषोऽपि अहेत्वादिमानित्यर्थः। अनेकत्वमिति। यथा बुद्ध्यादयोऽनेके तथा पुरुषा अपि, इत्यर्थः। तथा च अहेतुमत्त्वादिना पुरुषस्य प्रधानेन सह साधर्म्यात्, अनेकत्वेन च तस्य व्यक्तेन सह साधर्म्यसत्त्वात् "तद्विपरीतः पुमान्" इत्युक्तिरसङ्गतेत्यर्थः।

चकारोऽप्यर्थ इति। "तथा च" इत्यत्र "च" शब्दोऽ"पि" शब्दार्थकः, निपातानामनेकार्थत्वात्, एवं च "तथा च" इत्यस्य "तथापि" इत्यर्थः संपद्यते। तदाह—यद्यपीत्यादिना। अस्य=पुरुषस्य। अस्त्येवेति। एवं च "तद्विपरीतः" इत्युक्तिर्नासङ्गतेत्यर्थः। नह्यत्र पुरुषस्य व्यक्ताव्यक्तगतयावद्धर्मेण

---

१ पुमान् व्यक्ताव्यक्तविपरीतः, तथा च=तद्वदपि व्यक्ताव्यक्तसमानधर्मापीत्यक्षरार्थः। तथा चेत्यस्य तत्सदृशोऽपीत्यर्थ इति तु सारम्। एवं च–अहेतुमत्त्वानेकत्वादिसाधर्म्याविरोधिनोऽपि त्रैगुण्यविरोधितदभावस्य सत्त्वेन तद्विपरीतत्वमपि संभवतीत्यभिप्रायः।

त्रिगुणमित्युक्तं, तत्र के ते त्रयो गुणाः किञ्च तल्लक्षणमित्यत आह—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥

"प्रीत्यप्रीतिविषादात्मका" इति ।

---

वैपरीत्यं येन "तद्विपरीतः" इत्युक्तिरसङ्गता भवेत्, किंतु "त्रिगुणमविवेकि—" इति कारिकोक्तत्रैगुण्यादिधर्मेण वैपरीत्यं विवक्षितं तच्च पुरुषस्यास्त्येवेति न "तद्विपरीतः" इत्युक्तिरसङ्गतेति भावः ॥ ११ ॥

## अथ गुणत्रयनिरूपणम् ।

प्रीत्यप्रीतिविषादेति । गुणाः=सत्त्वरजस्तमांसि, प्रीत्यप्रीतिविषादात्मकाः=यथासंख्यं सुखदुःखमोहस्वभावाः, आत्मशब्दोऽत्र स्वभाववाची । एतच्चोपलक्षणमात्रम्—तेन प्रीतिशब्देन आर्जवमार्दवलज्जासन्तोषश्रद्धाक्षमानुकम्पाविवेकादीनाम्, अप्रीतिशब्देन प्रद्वेषद्रोहमत्सरनिन्दापराभवमानमदलोभादीनाम्, विषादशब्देन च विप्रलम्भभयनास्तिक्यकौटिल्यकार्पण्याज्ञानादीनां ग्रहणमत्रोह्यम् । अत एव "प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम्" इति साङ्ख्यसूत्रे "विषादाद्यैः" इति "आद्य"शब्दोपादानम् । यत्रैतदुपलभ्यते तत्र तादृग् गुणः प्रत्येतव्य इति भावः । लक्षणमुक्त्वा प्रयोजनमाह—प्रकाशेति । प्रकाशः=बुद्धिवृत्त्यादिरूप आलोकः, प्रवृत्तिः=यत्नः, चालनं वा, नियमः=प्रकाशक्रियाभ्यां शून्यत्वम्, तयोः प्रतिबन्ध इति यावत्, अर्थः=प्रयोजनं येषां ते तादृशाः । प्रयोजनमुक्त्वा क्रियामाह—अन्योन्येति । अत्र अन्योन्यपदं वृत्तिपदं च चतुर्ष्वप्यन्वेति । तथा च—अन्योन्याभिभववृत्तयः=परस्परतिरस्कारक्रियावन्तः, अन्योन्याश्रयवृत्तयः=परस्परम् आश्रयक्रियावन्तः, अन्योन्यजननवृत्तयः=सर्वस्य त्रिगुणात्मकत्वेन परस्परं मिलित्वा सर्वे सर्वजनका इत्यर्थः, अन्योन्यमिथुनवृत्तयः=स्त्रीपुरुषवद् अन्योन्यसंयोगैकशीलाः, इत्यर्थः ॥ १२ ॥ ॐ ॥

पराभिमतं "कर्मभिन्नत्वे सति द्रव्योपादानकत्वम्" नेह गुणत्वम्, तेषां चलादिमत्त्वेन पराभिमतद्रव्यत्वेन गुणत्वाभावादिति गुणशब्दस्य अर्थान्तरपर-

---

१ तथाचाहुः पञ्चशिखाचार्याः—"सत्त्वं नाम-प्रसादलाघवानभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम्, एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्, एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकम्" इति । २ यदाहुर्योगभाष्यकाराः—"एते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति" (यो० भा० २।१५) इति ।

गुणा इति परार्थाः, 'सत्त्वं लघु प्रकाशकम्' इत्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते । तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम् ।

एतदुक्तं भवति—प्रीतिः=सुखं, प्रीत्यात्मकः सत्त्वगुणः,

अप्रीतिः=दुःखम्—अप्रीत्यात्मको रजोगुणः, विषादः=मोहः—विषादात्मकस्तमोगुण इति ।

---

तामाह—परार्था इति । परोपकरणानीत्यर्थः । भवति च सत्त्वादीनां पुरुषार्थं भोगसाधनजनकत्वेन परार्थत्वम् । यथा—राज्ञः सर्वार्थनिर्वाहकाणां मन्त्रिप्रभृतीनां भवति गुणशब्देन व्यवहारः, तथा पुरुषरूपराज्ञो भोगापवर्गरूपार्थसाधकानां सत्त्वादीनामपि भवति गुणशब्देन व्यपदेश इति भावः ।

सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च, गुणत्वे तु न संयोगविभागवत्त्वं घटते, गुणे गुणानङ्गीकारात्, नापि चलादिधर्मवत्ता संभवति द्रव्यस्यैव धर्माश्रयत्वात्, तस्मात् सत्त्वादीनि द्रव्याण्येव न जातु गुणा इति सुस्पष्टं सिध्यति । तेषु गुणशब्दप्रयोगस्तु पुरुषोपकरणत्वात्, पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च भाक्त इति तत्त्वम् ।

ननु के ते गुणा ये परार्था इति जिज्ञासायामाह—सत्त्वं लघुप्रकाशकमिति । नन्वग्रिमकारिकायां निर्देक्ष्यमाणस्य गुणत्रयस्य कथमत्रान्वयोऽत आह—तदनागतेति । तत्=उत्तरकारिकायां निर्देक्ष्यमाणं गुणत्रयम्, अनागतावेक्षणेन="भाविनोऽपि बुद्ध्या समाकृष्याऽनुसन्धानं भवति" इति न्यायेन, इह समाकृष्य प्रीत्यादीनाम्="प्रीत्यात्मकः" इत्यादीनां लक्षणानां यथासंख्यं लक्ष्यं वेदितव्यमित्यर्थः । अत्रैव प्रकारान्तरमाह—तन्त्रयुक्त्या वेति । तन्त्रम्=प्रकृतशास्त्रम्, तस्य या युक्तिः—"सत्त्वादय एवात्र गुणास्ते च यथाक्रमं प्रीत्यादिधर्मकर्मकाः" इत्याकारकसङ्केतात्मिका युक्तिः, तया वा सत्त्वादीनामत्रानुसन्धानं यथासंख्यं च प्रीत्यादिभिः सम्बन्ध इत्यर्थः ।

"प्रीत्यप्रीतिविषादात्मकाः" इत्यत्र आत्मशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकं प्रीत्यादिभिस्त्रिभिरेव सम्बन्ध इत्याशयं मनसि निधाय यथासंख्यान्वयं विशदयति—प्रीतिः सुखमित्यादिना । प्रीत्यात्मक इति । प्रीतिः आत्मा=

---

१ परोपकारका इत्यर्थः । ये परस्योपकारे वर्तन्ते ते गुणाः । अत एव प्रधानयागोपकारकाण्यङ्गानि गुणत्वेन व्यवह्रियन्ते । सत्त्वादयोऽपि प्रधानोपकारकत्वेन परार्थाः । प्रधानन्तु सत्त्वादिसमष्टिरूपं सत्त्वादिकं त्वेकैकव्यष्टिरूपम् । तस्य प्रधानोपकारकत्वं तु समष्टिरूपस्य प्रधानस्य फलजननसमर्थीकरणम् । व्यष्टीनां परिणामलक्षणव्यापारमन्तरेण तत्समष्टिरूपस्य प्रधानस्य जगत्सर्गरूपफलजननसामर्थ्याभावादिति श्रीकृष्णनाथः ।

ये तु मन्यन्ते—'न' प्रीतिर्दुःखाभावादतिरिच्यते, एवं दुःखमपि न प्रीत्यभावादन्यद् इति, तान् प्रति आत्मग्रहणम्।

नेतरेतराभावाः सुखादयोऽपि तु भावाः, आत्मशब्दस्य भाववचनत्वात्। प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः। एवमन्यदपि व्याख्येयम्।

भावरूपता चैषामनुभवसिद्धा। परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः।

---

स्वभावो धर्म इति यावत्, यस्य स तथा, प्रीतिधर्मक इत्यर्थः। आत्मशब्दोऽत्र स्वभाववचनः[1], "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥" इति धरणिकोशात्। एवम् "अप्रीत्यात्मकः" इत्याद्यपि व्याख्येयम्। कारिकास्थस्य "विषादात्मकाः" इत्यत्र आत्मशब्दस्य स्वरसव्याख्यानेन इतरमतं निराकर्तुमुपन्यस्यति—ये तु मन्यन्त इति। आत्मशब्देन तन्मतनिरास इत्याह—तान् प्रत्यात्मग्रहणमिति। तन्मतनिरासाय आत्मशब्दोपादानम् इत्यर्थः। भारवाहकस्य भारापगमे "सुखी संवृत्तोऽहम्" इति, ज्वराद्यपगमे लौकिका व्याचक्षाणा भवन्ति—"सुखिनः संवृत्ताः स्मः" इति च प्रत्ययस्य दुःखाभावविषयत्वेन उपगमात् "दुःखाभाव एव सुखम्" एवं सुखाभाव एव दुःखम्, न तु पृथक् पृथक् पदार्थौ स्त इति वदतां मतनिरासाय आत्मशब्दोपादानमिति सरलार्थः।

आत्मशब्देन यथा तन्मतनिरासस्तथाऽऽह—नेतरेतराभावा इति। सुखादयः परस्परम् तस्य तस्य अभावरूपा न, अपि तु भावाः=सद्रूपा इत्यर्थः, सुखं पृथक् पदार्थोऽस्ति दुःखं च पृथगिति यावत्। इतरेतराभावे हेतुमाह—आत्मशब्दस्येति। भाववचनत्वात्=स्वरूपवाचकत्वात्, इतरेतराभावरूपत्वे तु "दुःखाभावरूपं सत्त्वम्" इत्यादिवक्तव्यं स्यात् "सुखरूपं सत्त्वम्" इत्यादेश्चासङ्गतिः स्यात्, इत्यर्थः। एषाम्=सुखादीनाम्। भारापगमादौ तु दुःखाभावे सुखत्वमुपचर्यते, न तु तदभावः प्रतिपाद्यत इति न दोषः। अनुभवसिद्धत्वाऽस्वीकारे दोषः—परस्पराभावेति। "सति दुःखज्ञाने तदभावात्मकप्रीतिज्ञानं प्रीतौ च ज्ञातायां तदभावात्मकदुःखज्ञानम्" इत्येवम् अन्योन्याश्रयापत्तेरित्यर्थः। एवं च "प्रीत्यप्रीतिविषादात्मकाः" इत्यत्र आत्मशब्दः

---

१ स्वभावः स्वरूपमित्यनर्थान्तरम्। तथाच 'सत्त्वं प्रीत्यात्मकम्' इत्युक्ते 'प्रीतिः सत्त्वस्य स्वरूपम्' इत्यवगम्यते। प्रीतिश्चेद् दुःखाभावरूपा तदा अभावस्यावस्तुतया वस्तुनः सत्त्वस्य स्वरूपत्वानुपपत्तिः। न ह्यवस्तु वस्तुस्वरूपं भवति। प्रीतेर्भावरूपत्वे तु सत्त्वस्य स्वरूपता घटत एव, द्वयोरेव वस्तुत्वात्, अतो न सुखाभावो दुःखं नापि दुःखाभावः सुखं किन्तु सुखादयः पृथक् पृथगेव पदार्था इति सरलोऽर्थः।

स्वरूपमेषामुक्त्वा प्रयोजनमाह—"प्रकाशप्रवृत्तिनियमार्था" इति, अत्रापि यथासङ्ख्यमेव।

रजःप्रवर्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्तयेद् यदि तमसा गुरुणा न नियम्येत, तमोनियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो-नियमार्थम्।

प्रयोजनमुक्त्वा क्रियामाह—"अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च" इति।

---

स्वरूपपर्याय इति अत्र फलितम्। न च आत्मशब्दस्य स्वरूपवाचकत्वे "प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यवैधर्म्यम्" इति साङ्ख्यसूत्रे प्रीत्यादीनां गुणधर्मत्ववचनं विरुध्येतेति शङ्क्यम्, मनसः संकल्पात्मकतावद् धर्मधर्मिणोरभेदमादाय सुखाद्यात्मकतायाः संभवात्। आत्मशब्दस्य स्वभाववाचकत्वे स्वीकृते तु नास्ति कश्चिद्दोष इति ध्येयम्। अन्योन्याश्रयस्य दूषकताबीजमाह—एकस्येति। दुःखपदार्थापरिचये सुखपदार्थज्ञानं न स्यात्, तज्ज्ञानाभावाच्च न दुःखपदार्थज्ञानमित्युभयमेव न सिध्यतीति ज्ञेयज्ञानासंभव एव दूषकताबीजमिति तात्पर्यम्।

अत्रापीति। "प्रकाशप्रवृत्तिनियमार्थाः" इत्यत्रापीत्यर्थः। यथासंख्यमेवेति। प्रकाशार्थं सत्त्वम्, प्रवृत्त्यर्थं रजः, नियमार्थं तमः, इत्येवं यथासंख्यं संबन्ध इत्यर्थः। अत्र अर्थशब्दः प्रयोजनवचनः, प्रयोजनं चात्र तद्योग्यता, तेन प्रलयदशायां प्रकाशादिकार्याभावेऽपि न प्रयोजनयोग्यताविरह इत्यवसेयम्।

ननु प्रकाशप्रवृत्तिभ्यामेव भविष्यति निखिलार्थनिष्पत्तिः इति किं नियमनेन तमः कृत्येनेत्याशङ्कामपाकर्तुं तमःकृत्यमाह—रजःप्रवर्तकत्वादिति। रज इति कर्तृ सत्त्वम् इति च कर्मपदम्। तथा च—यदि गुरुणा तमसा न नियम्येत=स्वकार्यात् प्रवृत्तेर्न प्रच्याव्येत, तर्हि प्रवर्तकस्वभावत्वात् रजोगुणः सर्वदैव सर्वत्र लघुरूपं सत्त्वगुणं प्रवर्तयेत, तमोनियतम्=तमसाप्रतिबद्धं तु, रजः=रजोगुणः क्वचिदेव प्रवर्तयति सत्त्वगुणमित्यतो भवति नियमार्थं तम इत्यर्थः।

---

१ सत्त्वादिक्रमेणेत्यर्थः। तेन सत्त्वं प्रकाशप्रयोजनकम्। रजःप्रवृत्तिप्रयोजकम्। तमश्च नियमप्रयोजनकमिति सिध्यति। तदेवाह—प्रकाशार्थमिति। प्रकाश प्रयोजनकमित्यर्थः। एव मग्रेऽपि। एतेन रजसः प्रवर्तकत्वं तदधीनं च सत्त्वस्य प्रकाशफलकत्वं तमसश्च नियमार्थत्वमिति स्फोरितम्। २ प्रयोजनयोग्यता। ३ स्वं रजः, तस्य कार्यमाह—प्रवृत्तेरिति।

वृत्तिः=क्रिया, सा च प्रत्येकमभिसंबध्यते। अन्योन्याभिभव-वृत्तयः=एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते।

तथाहि—सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते, एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति।

'अन्योन्याश्रयवृत्तयः'=यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते, तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः।

तथाहि—सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति।

---

सा चेति। वृत्तिरित्यर्थः। उपलक्षणमिदम् अन्योन्यपदस्यापि। तस्यापि प्रत्येकं सम्बन्धस्येष्टत्वात्। एषामिति। एषाम्=त्रयाणां गुणानां मध्ये अन्यतमेन=एकेन केनचिद् गुणेन, अर्थवशाद् उद्भूतेन=धर्माधर्मनिमित्तकसुखादि-रूपप्रयोजनबलात् स्वकार्यजननोन्मुखेन, अन्यत्=गुणान्तरम्, अभिभूयते=तिरस्क्रियते इत्यर्थः।

केन प्रकारेण गुणान्तरेण गुणान्तरस्याभिभव इति जिज्ञासायां तत्प्रकारं प्रदर्शयितुमाह—तथाहीति। सत्त्वं कर्तृपदम्, अभिभूय=तिरस्कृत्य, आत्मनः=स्वसम्बन्धिनीं सुखादिरूपां शान्तां वृत्तिं प्रतिलभते=अधिगच्छति—प्राप्नोति, सुखादिरूपेण परिणमते इति फलितार्थः। "घोराम्" इत्यत्र "मूढाम्" इत्यत्र चापि "आत्मनो वृत्तिं प्रतिलभते" इत्यस्य सम्बन्धोऽवसेयः। ननु "अन्योन्याश्रयवृत्तयः" इत्यनुपपन्नम्, कुण्डवदरयोरिव गुणानां परस्परमाधाराधेयभावासंभवादित्याशङ्क्य परिहरति—यद्यपीति। आश्रयार्थः=आधारत्वेन मुख्य आश्रयशब्दार्थः, न घटते=न संभवति, तथापि सहकारित्वरूपो गौण आश्रयार्थोऽत्राश्रयितव्य इत्यर्थः।

तदेव स्पष्टीकरोति—तथाहीति। सत्त्वम्=सत्त्वगुणः, प्रवृत्तिनियमौ=रजस्तमसोः कार्यभूतौ, आश्रित्य=सहकारित्वेन परिगृह्य, प्रकाशेन=स्वकार्यभूतेन, रजस्तमसोः=रजस्तमसी, उपकरोति=तयोः साहाय्यं विधत्ते, ["कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव" इति शाब्दिकसंकेतात् "मातुः स्मरति" इतिवत् "रजस्तमसोः" इति कर्मणि षष्ठी, एवम् "इतरयोः" इत्यत्रापि कर्मणि षष्ठी बोध्या] एवं रजोगुणः सत्त्वतमःकार्यभूतौ प्रकाशनियमौ, आश्रित्य=सहकारित्वेन आदाय, प्रवृत्त्या—स्वकार्यभूतया, इतरयोः=सत्त्वतमसोः, "उपकरोति", इति सम्बध्यते, एवं तमोगुणः सत्त्वरजःकार्यभूते प्रकाशप्रवृत्ती आश्रित्य नियमेन=स्वकार्यभूतेन नियमनेन, इतरयोः=सत्त्वरजसोः, "उप-

अन्योन्यजननवृत्तयः=अन्यतमोऽन्यतममपेक्ष्य जनयति, जननञ्च परिणामः, स च गुणानां सदृशरूपः, अत एव न हेतुमत्त्वं, तत्त्वान्तरस्य हेतोरभावाद्, नाप्यनित्यत्वं, तत्त्वान्तरे लयाभावाद्।

---

करोति" इत्यनुषङ्गः। सत्त्वं हि नास्ति स्वयं प्रवर्तकमिति रजोधर्मप्रवृत्तिमादाय प्रकाशं विधत्ते, रजोऽपि नास्ति स्वयं प्रकाशरूपमिति सत्त्वधर्मप्रकाशमाश्रित्य-करोति प्रवृत्तिम्, तमोऽपि स्वयमप्रवर्तकतया रजोधर्मं प्रवृत्तिमाश्रित्य नियमनं करोतीति सिध्यति गुणानां परस्परं गौण आश्रयशब्दार्थं इति तत्त्वम्। एतच्च "सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्यं प्रत्यवसीदन्ती रजसोपष्टभ्येते" इत्यादिनोत्तरकारिकाव्याख्याने व्यक्तीभविष्यति।

अन्यतम इति। त्रयाणां गुणानां मध्ये एकः कश्चिद् गुणः, अन्यतमम्=गुणान्तरम्–अपेक्ष्य=आश्रित्य, जनयति=उत्पादयति, "जनयति" इत्यत्र जननं नापूर्वोत्पादनम्, तथा सति असत्कार्यवादप्रसङ्गात्, किं तु तत्तद्रूपेण परिणमनमेव जननमित्याह—परिणाम इति। ननु "कोऽसौ परिणामो यत्राऽन्योन्यमाश्रित्य गुणा हेतवो भवन्ति" इति जिज्ञासायामाह—स चेति। गुणानां साम्यावस्थारूपः प्रधानाख्यः स परिणाम इत्यर्थः। एतच्च "प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च सदृशपरिणामानि" इत्यादिनाऽग्रे व्यक्तीभविष्यति। ननु "अन्योन्याश्रयवृत्तयः" इति "अन्यतमोगुणोऽन्यतमगुणमाश्रित्य प्रवर्तते" इति प्रतिपादयति, "अन्योन्यजननवृत्तयः" इत्यनेनापि "अन्यतमो गुणोऽन्यतममपेक्ष्य परिणमते" इति प्रतिपाद्यते, इति पूर्वोक्तादस्मिन् विशेषाभावात् पौनरुक्त्यमिति चेत्। अत्राहुः—"अन्योन्याश्रयवृत्तयः" इत्यनेन "विसदृशे परिणामेऽन्यतमो गुणोऽन्यतममाश्रयते" इति प्रतिपाद्यते, "अन्योन्यजननवृत्तयः" इति तु "सदृशे परिणामेऽन्यतमो गुणोऽन्यतमं गुणमपेक्षते" इति प्रतिपादयतीति न पौनरुक्त्यमिति।

ननु यदि प्रधानं गुणानां सदृशरूपं परिणामो भवेत्, तदा तत् हेतुमत् स्यात्, तथाच "हेतुमदनित्यम्–" इति कारिकया यद् व्यक्तस्य साधर्म्यमुक्तं तत् प्रधानेऽप्यतिप्रसक्तं व्यक्तस्येव प्रधानस्यापि गुणत्रयकार्यत्वादित्याशङ्कां निराकर्तुमाह—अत एवेति। प्रधानस्य गुणानां सदृशरूपपरिणामत्वादेवेत्यर्थः। हेतुमत्त्वम्–प्रधानस्य हेतुमत्त्वं नेत्यर्थः। ननु सदृशपरिणामत्वे कुतो न हेतुमत्त्वेत्यतस्तत्र हेतुमाह—तत्त्वान्तरस्येति। विजातीयतत्त्वस्येत्यर्थः। यत्र हि तत्त्वान्तरं तत्त्वान्तरेणोत्पाद्यते, तत्र हि विसदृशपरिणामरूपं तत्त्वान्तरं हेतुमदिति भाष्यते, अत्र तु न तथा, किं तु गुणा एव प्रधानमिति प्रधानस्य तत्त्वा-

---

१ सर्वस्य त्रिगुणात्मकत्वेन परस्परं मिलित्वा सर्वे सर्वजनका इति परमार्थः। इतरेतरसाहाय्येन महदाद्युत्पादका इति फलितम्। २ असाधारणे प्रकाशादिरूपे कार्ये इत्यर्थः।

'अन्योन्यमिथुनवृत्तयः'=अन्योन्यसहचराः—अविनाभाववर्तिन इति यावत् । 'चः' समुच्चये ।

भवति चात्रागमः—

न्तरत्वाभावान्न हेतुमत्त्वमिति भावः । ननु सर्गकाले भवति गुणानां क्षोभ इति तत्र साम्यावस्थाया नाशेन प्रधानस्यानित्यत्वं भवेदत आह—**नापीति** । प्रधानस्यानित्यत्वमपि नेत्यर्थः । कुत इत्यत आह—**तत्त्वान्तर इति** । प्रधानस्य हि तस्मिन् काले गुणत्रये एव भवति लयः, गुणत्रयं च न साम्यावस्थातोऽतिरिक्तमवस्थावत् तत्त्वमिति न तत्र लयेन तत्त्वान्तरलयव्यपदेश इति भावः ।

अन्योन्यमिथुनवृत्तय इत्यस्य स्त्रीपुरुषवत् मिथुनीभूता इत्यर्थमभिप्रेत्य व्याचष्टे—**अन्योन्यसहचरा इति** । सहचरशब्दार्थं ब्रूते—**अविनाभाववर्तिन इति** । अन्योन्याभिभवादीनां धर्माणां गुणेषु "कदाचिदन्योन्याभिभावकत्वं, कदाचिच्चान्योन्याश्रयत्वं, कदाचिच्चान्योन्यमिथुनत्वम्" इत्येवं पाक्षिकत्वं न, किं तु तेषां गुणेषु समुच्चय एवेति सूचनाय "मिथुनवृत्तयश्च" इति "च" शब्द इत्याह—**"चः" समुच्चय इति** । तत्र देवीभागवतवचनं प्रमाणयति—**भवति चेति** । अत्र=च-शब्दस्य समुच्चयत्वे, आगमः=शास्त्रम् ।

१ तथाच—यत्रैकपदार्थः परिणामेनापरपदार्थरूपेणोत्पद्यते तत्रैव उत्पद्यमानस्य हेतुमत्त्वम् । कार्यकारणभावस्य विभिन्नपदार्थनिष्ठत्वात् । यत्र तु स्वपरिणामेन स्वमेव भवति तत्र द्वयोरेव समानरूपतया न कार्यकारणभाव इति सरलोऽर्थः । २ एवं हि तत्रोक्तम्—"अन्योऽन्याभिभवाच्चैते विरुध्यन्ति परस्परम् । तथाऽन्योन्याश्रयाः सर्वे न तिष्ठन्ति निराश्रयाः ॥ सत्त्वं न केवलं क्वापि न रजो न तमस्तथा । मिलिताश्च सदा सर्वे तेनान्योन्याश्रयाः स्मृताः ॥ सत्त्वं समुत्कटं जातं प्रवृद्धं शास्त्रदर्शनात् । वैराग्यं तत्फलं जातं तामसार्थेषु नारद ॥ प्रसह्याभिभवत्येव तद्रजस्तमसी उभे । रजः समुत्कटं जातं प्रवृत्तं लोभयोगतः ॥ तत्तथाभिभवत्येव तमःसत्त्वे तथा उभे । तमस्तथोत्कटं भूत्वा प्रवृद्धं मोहयोगतः ॥ तत् सत्त्वरजसी चोभे संगम्याभिभवत्यपि । विस्तरं कथयाम्यद्य यथाभिभवतीति वै ॥ यदा सत्त्वं प्रवृद्धं वै मतिर्धर्मे स्थिता तदा । न चिन्तयति वाह्यार्थं रजस्तमःसमुद्भवम् ॥ अर्थं सत्त्वसमुद्भूतं गृह्णाति च न चान्यथा । अनायासकृतं चार्थं धर्मं यशं च वाञ्छति ॥ सात्त्विकेष्वेव भोगेषु कामं वै कुरुते तदा । राजसेषु न मोक्षार्थी तामसेषु पुनः कुतः ॥ एवं जित्वा रजः पूर्वं ततश्च तमसो जयः । सत्त्वं च केवलं पुत्र ! तदा भवति निर्मलम् ॥ यदा रजः प्रवृद्धं वै त्यक्त्वा धर्मान् सनातनान् । अन्यथा कुरुते धर्मांञ्छ्रद्धां प्राप्य तु राजसीम् ॥ राजसादर्थसंवृद्धिस्तथा भोगस्तु राजसः । सत्त्वं विनिर्गतं तेन तमसश्चापि निग्रहः ॥ यदा तमो विवृद्धं स्यादुत्कटं संबभूव ह । तदा वेदे न विश्वासो धर्मशास्त्रे तथैव च ॥ श्रद्धां च तामसीं प्राप्य करोति च धनालयम् । द्रोहं सर्वत्र कुरुते न शान्तिमधिगच्छति ॥ जित्वा सत्त्वं रजश्चैव क्रोधनो दुर्मतिः शठः । वर्तते कामचारेण भावेषु विततेषु च ॥ एकं सत्त्वं न भवति रजश्चैकं

सा० कौ० २४

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः ।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ।
तमसश्चापि मिथुने ते सत्त्वरजसी उभे ।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते ।
नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते इति" ॥ १२ ॥

---

अन्योन्यमिथुना इति । सर्वे=निखिलाः सत्त्वादयो गुणाः, अन्योन्यमिथुनाः=परस्परसहचराः, अत एव सर्वे-गुणाः, सर्वत्र गामिनः=अन्योन्यं संमिलिताः । तदेव विशदीकरोति—रजसो मिथुनमिति । सत्त्वम्=सत्त्वगुणः, रजसः=रजोगुणस्य, मिथुनम्=सहचारि, रजः सत्त्वस्य मिथुनम्, ते उभे सत्त्वरजसी तमसः=तमोगुणस्य मिथुने=सचारिणी, उभयोः=द्वयोः सत्त्वरजसोः तमः=तमोगुणः, मिथुनम्=सहचारि, उच्यते=कथ्यते, एषाम्=सत्त्वादिगुणानाम्, आदिः="जायते-अस्ति-वर्द्धते-विपरिणमते-अपक्षीयते-विनश्यति" इति निरुक्तकारोक्तषड्भावविकारेषु प्रथम उत्पत्तिरूपो विकारः, न उपलभ्यते=न ज्ञायते, नास्तीति यावत्, "गुणास्तु न प्रत्यस्तमयन्ते नोपजायन्ते" इत्येवं तदुत्पत्तेर्निषिद्धत्वादित्यर्थः । तथा एषां सम्प्रयोगः="के इमे परस्परं संयुक्ता जाताः" इत्येवं संयोगः, नोपलभ्यते=नास्ति, गुणानामनादितया तत्संयोगस्याप्यनादित्वादित्यर्थः । एवम्-वियोगः="अयमस्माद् वियुक्तो जातः" इत्येवं पृथग्भावोऽपि, नोपलभ्यते—सर्वदैवाऽन्योन्यं संयुक्तत्वादित्यर्थः ।

ननु यदि गुणानां संयोगवियोगौ न स्वीक्रियेते, तदा "एते गुणाः संयोगविभागधर्माणः" इत्येवं गुणानां संयोगविभागौ वदता योगभाष्यकारेण सह विरोधापत्तिरिति चेत् । अत्राहुः—"अविवेकिना पुरुषेण सह गुणाः संयुज्यन्ते विवेकी च तैर्वियुज्यते" "इत्येवं गुणाः पुरुषैः सह संयोगविभागवन्तः" इत्येव भाष्यार्थः, न तु "गुणा अन्योन्यं संयोगविभागवन्तः" इत्यर्थः, इति न तेन विरोध इति ॥ १२ ॥

---

तमस्तथा । सहैवाश्रित्य वर्तन्ते गुणा मिथुनधर्मिणः ॥ रजो विना न सत्त्वं स्याद्रजः सत्त्वं विना क्वचित् । तमो विना न चैवैते वर्तन्ते पुरुषर्षभ ॥ तमस्ताभ्यां विहीनं तु केवलं न कदाचन । सर्वे मिथुनधर्माणो गुणाः कार्यान्तरेषु वै ॥ अन्योन्यसंश्रिताः सर्वे तिष्ठन्ति न वियोजिताः । अन्योन्यजनकाश्चैव यतः प्रसवधर्मिणः ॥ सत्त्वं कदाचिच्च रजस्तमसी जनयत्युत । कदाचित्तु रजः सत्त्वतमसी जनयत्यपि ॥ कदाचित्तु तमः सत्त्वरजसी जनयत्युभे । जनयन्त्येवमन्योन्यं मृत्पिण्डश्च घटं यथा ॥ बुद्धिस्थास्ते गुणाः कामान् बोधयन्ति परस्परम् । देवदत्तविष्णुमित्रयज्ञदत्तादयो यथा ॥ यथा स्त्री पुरुषश्चैव मिथुनौ च परस्परम् । तथा गुणाः समायान्ति युग्मभावं परस्परम् ॥ रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः । उभे ते सत्त्वरजसी तमसो मिथुने विदुः ॥" इति ॥

प्रकाशप्रवृत्तिनियमार्था इत्युक्तम्, तत्र के ते इत्थंभूताः कुतश्चेत्यत आह—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥

"सत्त्वं लघु" इत्यादि। सत्त्वमेव लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः,

---

के त इति । ते=गुणाः, के=किंनामानः, यद्वा-किंस्वरूपास्ते इत्यर्थः । कुतश्च=कस्मात् प्रयोजनाच्च, ते इत्थंभूताः=अन्योन्याभिभवादिशीलाः ।

सत्त्वमिति । सत्त्वमेव लघु=लघुत्ववत्, प्रकाशकम्=इन्द्रियार्थसन्निकर्षे सति अर्थावभासकम्, कपिलादिभिः इष्टम् । तथाच—"लघुत्वं प्रकाशकत्वं च सत्त्वस्य लक्षणम्" । रज एव उपष्टम्भकम्=संश्लेषजनकम्, चलम्=सक्रियं च, तथाच—"प्रेरकत्वं सक्रियत्वं च रजसोलक्षणम्" । तम एव गुरु=गुरुत्ववत्, वरणकम्=आवरकम्, आच्छादकम् । तथाच—"गुरुत्वं तत्तदिन्द्रियव्यापारनिवृत्तिद्वारा तत्तत्कार्यप्रतिबन्धकत्वं च तमोलक्षणम्[1] । परस्परं विरोधे सत्यपि प्रदीपवत्—यथा तैलवर्तिदीपानां परस्परं विरोधेऽपि तैलवर्तिभ्यां सह दीपः प्रकाशं जनयति, तथा गुणानामपि अर्थतः=पुरुषार्थतः, जीवाऽदृष्टवशादिति यावत्, वृत्तिः=अन्योन्यानुवर्तनम्, भवति" इत्यन्वयः । दीपोपरि तैलपतनेन दीपनाशात् तैलमपि दीपविरोधि, एवं वर्तिरपि स्वल्पकेन दीपनाशिकेति दीपविरोधिनी, इति ज्ञेयम् ॥ १३ ॥ ॐ ॥

"इष्टम्" इत्यत्र कर्तृपदानुक्तत्वादाह—साङ्ख्याचार्यैरिति । कपिलादिभि-[2]

---

१ "लक्षणानि पुनस्तेषां शृणु पुत्र! ब्रवीम्यहम् । लघु प्रकाशकं सत्त्वं निर्मलं विशदं सदा । यदाङ्गानि लघून्येव नेत्रादीनीन्द्रियाणि च । निर्मलं च तथा चेतो गृह्णाति विषयान्न तान् ॥ तदा सत्त्वं शरीरे वै मन्तव्यं च समुत्कटम् । जृम्भां स्तम्भं च तन्द्रां च चलं चैव रजः पुनः ॥ यदा तदुत्कटं जातं देहे यस्य च कस्यचित् । कलिं मृगयते कर्तुं गन्तुं ग्रामान्तरं तथा ॥ चलच्चित्तश्च सोऽत्यर्थं विवादे चोद्यतस्तथा । गुरुमावरणं कामं तमो भवति तद्यदा ॥ तदाङ्गानि गुरूण्याशु प्रभवन्त्यावृतानि च । इन्द्रियाणि मनः शून्यं निद्रां नैवाभिवाञ्छति ॥ गुणानां लक्षणान्येवं विज्ञेयानीह नारद ।" इत्येवं गुणलक्षणानि देवीभागवते । २ तथा च सूत्रम्—"लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्" ( सां० १।१२८ ) इति । अयमर्थः—लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं, वैधर्म्यं च रजस्तमोभ्याम्, एवं चलत्वादिधर्मेण रजोव्यक्तीनां, गुरुत्वादिधर्मेण च तमोव्यक्तीनां साधर्म्यमिति । अत्र च पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वादिव्यक्तीनाम् एकजातीयतया एकत्वम्, गुणान्तरसंसर्गवैचित्र्येण च "उत्कटं सत्त्वं, मध्यमं सत्त्वं, निकृष्टं सत्त्वम्" इत्यादिरूपेण च सत्त्वादिव्यक्तीनां नानात्वं च ज्ञेयम् । सत्त्वादीनां प्रत्येकम् अनेकव्यक्तिकत्वं सिद्धवत्कृत्वैव अत्र लघुत्वादीनां साधर्म्यकथनम्, अन्यथा एकव्यक्तिकत्वे समानानां धर्मरूपस्य साधर्म्यस्याभिधानमनुपपन्नमेव स्यादिति विशेषो बोध्यः । सूत्रे लघ्वादीति भावप्रधानो निर्देशो द्रष्टव्यः । आदिना पंचशिखाचार्यस्य परिग्रहः । तद्वचनं तु "सत्त्वं नाम प्रसादलाघव—" इत्यादिकं प्राक् टिप्पण्यामुदाहृतमिति नात्रोपन्यस्यते ।

तत्र कार्योद्गमने हेतुर्धर्मो लाघवं, गौरवप्रतिद्वन्द्वि यतोऽग्ने-रूर्ध्वज्वलनं भवति, तदेव लाघवं कस्यचित् तिर्यग्गमने हेतु-

रित्यर्थः। लघुत्वलक्षणमाह—तत्रेति। तत्र=लघुत्वप्रकाशयोर्मध्ये, कार्यस्य=वस्तुनः, उद्गमने=ऊर्ध्वगमने, यत् कारणं तल्लाघवमित्यर्थः। ननु गुरुत्वाभावेनैव वस्तुन ऊर्ध्वगमनं सेत्स्यति किमिति गुरुत्वाभावादन्यद् गुणान्तरं लघुत्वमाश्रीयते, अत एव कणादादिभिश्चतुर्विंशतिगुणेषु गुरुत्वाभावरूपं स्वीकृत्य लघुत्वं न परिगणितमित्याशङ्कामपाकर्तुमाह—गौरवप्रतिद्वन्द्वीति। गुरुत्वविरोधीत्यर्थः। यथा खल्वाद्यपतनहेतुत्वेन भवति गुरुत्वस्यानुमानम्, तथोर्ध्वगमनहेतुत्वेन लघुत्वमप्यनुमीयते, यथा च गुरुत्वमतिरिक्तः पदार्थस्तथा लघुत्वमपि, न्यायसाम्यात्, गुरुत्वाभावस्तु नोर्ध्वगमनस्य हेतुर्भवितुमर्हति—अक्लृप्ताभावकारणत्वकल्पनापेक्षया क्लृप्तभावकारणत्वकल्पनाया एवौचित्यादिति भावः।

यथा गुरुत्वमतीन्द्रियं तथा लघुत्वमप्यतीन्द्रियमेवेत्यभिप्रायेण लघुत्वाश्रयं दर्शयन्नुदाहरति—यतोऽग्नेरिति। यतः=यस्माद् धर्माद्, अग्नेः ऊर्ध्वज्वलनं[2] भवति, तादृशो यो गौरवप्रतिद्वन्द्वी कार्योद्गमने हेतुर्धर्मस्तल्लाघवमिति वर्तुलार्थः।

ननु यथोर्ध्वगमनहेतुत्वेन लघुत्वं गुणान्तरं स्वीक्रियते, तथा तिर्यग्गमनहेतुत्वेन लघुत्वादन्यत् किंचिद् गुणान्तरमपि स्वीकर्तव्यं स्यात्, इतरथा वायुगततिर्यग्गमनस्य निर्हेतुकत्वापत्तेरत आह—तदेव लाघवमिति। ननु यदि लघुत्वस्यैव तिर्यग् गमनस्यापि हेतुत्वं स्वीक्रियेत, तर्हि लघुत्वलक्षणाननुगमः स्यात्, यतः "उद्गमनकारणं लाघवम्" इत्युक्ते वायुगततिर्यग्गमनकारणे लाघवे लक्षणागमनात् "तिर्यग्गमनकारणं लाघवम्" इत्युक्ते च अग्न्युद्गमनकारणे लाघवे लक्षणासङ्गतेरिति चेत्। मैवम्, "गौरवप्रतिद्वन्द्वि" इत्यनेन "गुरुत्वजन्याऽधोगमनविभिन्नगमनहेतुत्वं लघुत्वम्" इति लघुत्वलक्षणस्य विवक्षितत्वेन लक्षणाननुगमनरूपदोषस्य वक्तुमशक्यत्वात्।

इत्थं सत्त्वातिरिक्तवह्न्यादौ लघुत्वं प्रदर्श्य सम्प्रति सत्त्ववृत्तिलघुत्वस्वरूपं प्रदर्शयति—एवमिति। यथा वह्न्यादेरूर्ध्वगमने हेतुर्धर्मविशेषो लाघवम्, एवम्=तथा, करणानाम्=इन्द्रियाणाम्, याः वृत्तयः=स्वस्वविषयग्रहणाय सन्निकर्षरूपव्यापारविशेषाः, तासां पटुत्वे=झटिति स्वविषयग्रहणौन्मुख्यरूपनैपुण्ये, हेतुभूतो यो धर्मस्तल्लाघवम्, तच्च सत्त्वधर्म इति सत्त्वं लघु इत्यर्थः। सात्त्विकाभिमानकार्येषु करणेषु विषयग्रहणरूपं पटुत्वं विश्वजनीनमिति तेष्वपि

१ गौरवप्रतिद्वन्द्वि=गौरवविरोधि यल्लाघवं=लघुत्वं तद्रूपो धर्मः कार्योद्गमने हेतुरिति वान्वयः। २ ऊर्ध्वज्वलनं=ज्वालयोर्ध्वगामित्वम् इत्यर्थः। तत्र सत्त्वाधिक्यादिति भावः।

र्भवति, तथा वायोः, एवं करणानां वृत्तिपटुत्वे हेतुर्लाघवं, गुरुत्वे हि मन्दानि स्युः, इति सत्त्वस्य प्रकाशकत्वमुक्तम्।

सत्त्वतमसी स्वयमक्रियतया स्वस्वकार्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते—अवसादात्प्रच्याव्य स्वकार्ये उत्साहप्रयत्नं कार्येते, तदिदमुक्तम् "उपष्टम्भकं रज" इति।

कस्माद् इत्यत उक्तं—"चलम्" इति। तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम्।

रजस्तु चलतया परितस्त्रैगुण्यं चालयद्गुरुणाऽऽवृण्वता च तमसा

---

सत्त्वधर्मो लघुत्वमनुमीयत इति भावः। सत्त्वगुणो हि न साक्षाद् व्यवहारगोचर इत्यभिप्रेत्य सात्त्विकानि करणान्येव लघुत्वाश्रयत्वेनोदाहृतवान् ग्रन्थकारो न साक्षात् सत्त्वमिति ध्येयम्। तथा चात्रेदमनुमानं फलति—"करणानि लघूनि, पाटववत्त्वात्, यानि न लघूनि न तानि पाटववन्ति, यथा तिमिरोपहतानि नयनादीनि यथा वा तमसाऽऽवृतानि घटादीनि, तथा चेमानि तस्मात्तथा" इति। पूर्वोक्तानुमाने प्रदर्शितां[1] व्यतिरेकव्याप्तिमेव प्रदर्शयति—गुरुत्वे हीति। हि=यतः, लघुत्वविरोधिनि गुरुत्वे सति, तानि करणानि मन्दानि=स्वविषयप्रकाशनाऽसमर्थानि, स्युरतोविषयप्रकाशनरूपपटुत्वदर्शनेन तत्र[2] लघुत्वमस्तीत्यनुमीयतामित्यर्थः। लघुत्वादेव च सत्त्वं प्रकाशकमिति कथ्यत इत्याह—इति सत्त्वस्येति। इति=अतः, लघुत्वादित्यर्थः। "उपष्टम्भकम्" इति व्याचक्षाणो रजःस्वभावमाह—सत्त्वतमसी इति। "सत्त्वतमसी" इति कर्मकारके। स्वयम् अक्रियतया=स्वरूपतोऽप्रवृत्तिशीलतया, स्वस्वकार्यप्रवृत्तिं प्रति=प्रकाशादिरूपस्वस्वकार्ये स्वकीयप्रवृत्तिजननाय, अवसीदन्ती=शिथिलीभूते, अशक्ते[3] इति यावत्, सत्त्वतमसी, रजसा=रजोगुणेन उपष्टभ्येते=स्वकार्यजनने प्रवर्त्येते, तदिदम्=तस्मादिदमुक्तम् उपष्टम्भकं रज इति, इत्यन्वयः। उपष्टभ्नाति=उत्तेजयति—वृद्धं यष्टिरिवोत्थापयति—प्रोत्साहयति स्वकार्ये प्रवर्तयति, इत्युपष्टम्भकम्," इत्यभिप्रायेण "उपष्टभ्येते" इत्यस्य विवरणमाह—अवसादादिति। अवसादात्=शैथिल्यात्, प्रच्याव्य=अधः प्रपात्य, शैथिल्यं निरस्येत्यर्थः। पृच्छति—कस्मादिति। कस्मात्पुनः कारणाद् रज एवंविधमिति प्रश्नार्थः। चलमिति। यतो रजः चलम्=सक्रियत्वेन प्रवृत्तिशीलम्, अत उपष्टम्भकम् इत्युत्तरार्थः।

तमसः स्वभावमाचक्षाणो "गुरुवरणकमेव तमः" इति व्याचष्टे—रजस्त्विति। रजँ[4] इति कर्मकारकम्। तथाच—यतः चलतया=प्रवृत्तिशीलतया,

---

१ 'यानि न लघूनि' इत्युक्तरीत्या। २ करणेषु। ३ सत्त्वतमसोः प्रवृत्तिफलकत्वाभावादिति भावः। ४ तच्च प्रथमान्तम्, कर्मणि उक्तत्वात्, कर्तुरनुक्तत्वाच्च 'तमसा' इति कर्तरि तृतीया। यथोक्तम्—"प्रयोगे कर्मवाच्यस्य तृतीया कर्तृकारके। प्रथमान्तं भवेत्कर्म कर्माधीनं क्रियापदम्॥"

तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति ततस्ततो व्यावर्त्य तमो नियामकमुक्तम्—

गुरुवरणकमेव तम इति।

एवकारः प्रत्येकं भिन्नक्रमः संबध्यते—सत्त्वमेव, रज एव, तम एव, इति।

ननु परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वंसन्ते

---

परितः=सर्वतः, त्रैगुण्यम्=त्रिगुणात्मकम् इन्द्रियादिकम्, चालयत्=स्वकार्ये प्रवर्तयत्, रजः—तमसा=तमोगुणेन, क्वचिदेव कार्ये न सर्वत्र प्रवर्त्यते=प्रवृत्तिक्षमं विधीयते, इति=अतः, ततस्ततः=तस्मात्तस्मात्कार्यात्, व्यावर्त्य=रजःप्रवृत्तिं रोधयित्वा, वर्तमानं तमो नियामकमित्युच्यते, तदिदमुक्तं—गुरुवरणकमेव तम इति, इत्यन्वयः। तमसो नियमनकर्तृत्वे हेतुगर्भितं विशेषणम्—गुरुणेति। लघुत्वविरोधि स्थितिहेतुभूतो धर्मो गुरुत्वम्, तद्वतेत्यर्थः। गुरुत्वादेव च—आवृण्वता, अस्यैव विवरणम्—तत्र तत्र प्रतिवन्धकेनेति। यत्र यत्र कार्यजननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिबन्धकेन। भिन्नक्रम इति। "गुरुवरणकमेव" इति "एवकारो" भिन्नक्रम इत्यर्थः। यस्य यत्र पाठस्तत्रान्वयमकृत्वा ततोऽन्यत्रान्वयो भिन्नक्रमः। भिन्नक्रमसेव तस्य दर्शयति—सत्त्वमेवेति। "सत्त्वमेव लघुत्वात् प्रकाशकम्, रज एव च चलत्वात् उपष्टम्भकम्, तम एव च गुरुत्वाद् वरणकम्" इत्येवं भिन्नक्रम एवकार इति सरलार्थः।

ननु पूर्वोक्तदिशा गुणानां परस्परं विभिन्नधर्मकतया "अन्योन्याश्रयवृत्तयः" इत्यादिना मिलितानामेकक्रियाकर्तृत्वाभिधानमनुपपन्नम्, परस्परं विरुद्धानां शत्रूणामिव एकार्थकरणासंभवादिति शङ्कते—नन्विति। परस्परं ध्वंसन्ते= अन्योऽन्यम् अभिहता नश्यन्तीत्यर्थः। तत्र दृष्टान्तयति—सुन्दोपसुन्दवदिति। सुन्दोपसुन्दनामानौ द्वावसुरौ सोदरावास्तां तौ चाराधितादीश्वरात् स्वस्वेतरसकाशाद् वधाभावरूपं वरमलभेताम्। अथ चैकां कांचिदवलां

---

१ तथा च यथा सहजचञ्चलतया सर्वतश्चालयन्नश्वो रथादिचलनस्य रथिप्रयोजनत्वाभावदशायां गुरुणा आक्रामता सारथिना प्रग्रहसंयमन अश्वप्रवृत्तिं प्रतिबध्नता सता रथादिकमवस्थाप्यते। रथादिगते रथिप्रयोजनत्वदशायामेव तु प्रग्रहसंयमकृतां तां प्रतिबन्धकतां विहायाश्वः प्रेर्यते इत्यश्वस्य स्वारसिकप्रवृत्त्युन्मुखत्वनिवर्तनेन सारथिर्नियन्तेत्युच्यते। तथा प्रवृत्तिशीलोऽपि रजोगुणः प्रवृत्तेः पुरुषप्रयोजनत्वाऽभाववेलायां वृण्वता तमसा प्रवृत्तिप्रतिबन्धकीभवता रजोऽवस्थाप्यते। तत्प्रवृत्तेः पुरुषप्रयोजनत्वसमये पुनः स्वीयं प्रतिबन्धकभावं परित्यज्य प्रवृत्तये प्रेर्यते इति स्वारसिकप्रवृत्त्युन्मुखत्वनिराकरणेन तमो नियामकमित्युक्तमिति वर्तुलोऽर्थः। (आवरणवारिणी)

इत्येव युक्तं प्रागेव तेषामेकक्रियाकर्तृताया इत्यत आह—"प्रदीपवच्चार्थतो वृत्तिः" इति।

दृष्टमेतद्, यथा वर्तितैले अनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्यं कुरुतः, यथा वा

---

कामयमानाभ्यामन्योन्यं प्रवर्तिते रणेऽन्योन्याभिहतौ तौ नष्टावभूताम् इति पौराणिकी गाथाऽत्रानुसन्धेया। ताभ्यां तुल्यं परस्परनाश इति भावः। तेषाम्—सत्त्वादीनाम्, एकक्रियायाः कर्तृतायाः—स्वस्वव्यापारद्वारा एकस्याः क्रियायाः कार्यस्य कर्तृतायाः करणात् प्रागेव=पुरत एव, सुन्दोपसुन्दवत् गुणाः परस्परं ध्वंसन्ते इत्येव युक्तमित्यन्वयः। तत्र हेतुः—**परस्परविरोधशीला** इति। विरुद्धानां परस्परं मेलनमेव तावत् न संभवति, मिलित्वा एकार्थसम्पादनं तु कुतस्त्यमिति भावः।

एवमाशङ्क्य समाधत्ते—**प्रदीपवदिति**। **दृष्टमेतत्**—एतत्=विरुद्धानामपि क्वचिन्मिलित्वा एकार्थानुष्ठानम्, दृष्टमित्यर्थः। क्व दृष्टमित्यत आह—**यथेति**। वर्तिः=कार्पासादिनिर्मिता दशा, तैलं च सार्षपादि, ते एते यद्यपि अनलस्य=तत्कार्यस्य प्रकाशनलक्षणस्य, विरोधिनी=तदकर्तृत्वाद् अननुकूले, यद्वा—वह्निदाह्यत्वाद् अनलो विरोधी ययोस्ते अनलविरोधिनी इत्यर्थः, अथ च=तथापि, अनलेन सह मिलिते एकां प्रकाशरूपां क्रियां कुरुतः, इत्यर्थः। एवं तयोर्विरोधसत्त्वेऽपि प्रकाशनरूपकार्ये तयोस्तत्सहकारित्वमेवेति यावत्। **तथा च**—वस्तुनश्चैष स्वभावो यत्, क्वचिद् असामर्थ्येऽपि सहायान्तरसहकारेण कार्यसामर्थ्यम्, यथा—वर्तितैले प्रकाशनाऽसमर्थे अपि अनलसहकारेण प्रकाशके इति। यथोक्तं देवीभागवते—"प्रदीपश्च यथा कार्यं प्रकरोत्यर्थदर्शनम्। वर्तिस्तैलं यथार्चिश्च विरुद्धाश्च परस्परम्॥ विरुद्धं हि तथा तैलमग्निना सह सङ्गतम्। तैलं वर्तिविरोध्येव पावकोऽपि परस्परम्॥ एकत्रस्थाः पदार्थानां प्रकुर्वन्ति प्रदर्शनम्।" इति॥ ❀॥

वर्तितैलयोरुभयोरपि वह्निदाह्यत्वेन तद्विरोधित्वेऽपि वर्तितैलयोः प्रत्येकं वर्तेस्तैलं प्रति, तैलस्य वा वर्तिं प्रति, विरोधित्वाभावात्—नैतदुदाहरणं सर्वांशे समानमित्यनुदाहरणत्वमाशङ्क्य सर्वांशे परस्परविरोधि दृष्टान्तान्तरमाह—**यथा वेति**। वातादीनां च परस्परविरुद्धकार्यकारित्वादस्ति परस्परविरोधित्वम्,

---

१ सा काऽबला यदर्थं तौ विनष्टाविति विशेषजिज्ञासायामुच्यते—"सुन्दोपसुन्दाख्यौ सहोदरौ दैत्यौ तिलोत्तमाख्यस्त्वैश्वर्यार्थं परस्परं विरोध्य नष्टौ" इति क्वचिदुपलभ्यते। सुन्दोपसुन्दनामानावसुरौ सोदर्यौ परस्परं स्थिरप्रेमाणौ गौरीहरणलालसौ युवयोर्मध्ये योऽधिकबलः स्यात् तमहं वरिष्य इति गौर्याऽभिहितौ परस्परं युध्यमानौ कालधर्ममुपागतौ" इत्यन्यत्र दृश्यते। वस्तुतस्तु तयोर्दुर्दान्तयोर्हननायोपायान्तरमपश्यतेश्वरेण निर्मिता सा मायामय्येवाबलाऽऽसीदिति बोध्यम्।

**वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्य-कारिण एवं सत्त्वरजस्तमांसि मिथो विरुद्धान्यप्यनुवर्त्स्यन्ति च स्वकार्यं करिष्यन्ति च ।**

---

तच्च वैद्यके प्रसिद्धम् । शरीरस्य=मानवस्थूलदेहस्य, धारणम्=स्थापनं पोषणं च, तद्रूपं यत् कार्यं तत्कारिणः=देहस्थापकाः देहपोषकाश्चेत्यर्थः । एवम्=तथेत्यर्थः । अनुवर्त्स्यन्ति—इतरकार्यजननेषु आनुगुण्यं सहकारितां करिष्यन्ति । तदाऽऽनुगुण्यकरणेन स्वकार्यम्=स्वस्वकार्यम्, करिष्यन्ति च । उभयप्राधान्यद्योतनाय चकारद्वयम् । यथा परस्परविरोधिनोऽपि वातादयः शरीरस्य पोषणं स्थापनं च कुर्वन्ति, एवम्-सत्त्वादीन्यपि अन्योन्यानुगुण्येन वर्तिष्यन्ते स्वस्वकार्यं करिष्यन्ति चेति सरलार्थः[१] ।

---

१ यथा सत्त्वादीनि त्रीणि, एवं तैलादीनि वातादीनि चापि त्रीण्येवेति उदाहरणे त्रित्वसंख्यासाम्यमादृतं तदनादरणे तु धर्माधर्मावप्युदाहरणीयौ—यथा विरुद्धावपि धर्माधर्मौ "पुण्येन पुण्यलोकं नयति, 'पापेन पापम्' "उभाभ्यामेव मनुष्यलोकम्" इति श्रुत्युक्तरीत्या मिलित्वैव नरशरीरमारभेते तथा सत्त्वादयोऽपीति । वस्तुतस्तु—"रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्तन्ते" ( यो० भा० २।१८ ) इति योगभाष्योक्तन्यायात् तुल्यबलानामेव विरोधो नातुल्यबलानामित्यङ्गीकारान्नात्र विरोधप्रसङ्ग इति विभावयन्तु सुधियः । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याख्यानि—अष्टौ बुद्धे रूपाणि, वृत्तयश्च—सुखदुःखमोहरूपाः परिणामविशेषाः, तेषामतिशयाः=उत्कर्षा एव विरुध्यन्ते, यदा धर्म उत्कृष्टत्वेन उदारो भवति तदाऽधर्मो नोत्कृष्यते, यदा च सुखोत्कर्षो भवति तदा च न दुःखमुत्कृष्टं भवतीत्येवं परस्परं प्रतिबध्यन्ते, सामान्यानि='अपकृष्टानि दुर्बलानि तु उत्कृष्टैः सहवर्तन्ते' इति हि भाष्यार्थः । अयं भावः—दिव्यशरीरे सुखाद्यात्मके वा प्रत्यये जननीये सत्त्वं गुणः प्रधानं रजस्तमसी चाङ्गे, एवं नरकलेवरे दुःखाद्यात्मके वा प्रत्यये जनयितव्ये प्रधानं रजः—अङ्गे च सत्त्वतमसी, एवं तिर्यङ्निकाये मोहाद्यात्मके वा प्रत्यये जनयितव्ये प्रधानं तमः अङ्गे च सत्त्वरजसी, इत्येवं रीत्या गुणप्रधानभावेन मिलित्वा एकार्थकरणान्नात्र काचिदापत्तिरिति । तदयमत्र परः सारः—तथा प्रख्याप्रवृत्तिस्थितिशीलाः गुणाः विरुद्धस्वभावा अपि परस्परानुग्रहतन्त्रीभूत्वा तैलवर्त्यग्नय इव दीपं पुरुषार्थप्रयुक्तत्वेन प्रत्येकं शान्तघोरमूढात्मकं कार्यमारभन्ते । तत्र चैकस्य प्राधान्ये द्वयोर्गुणभावात् प्रधानमात्रव्यपदेशेन सात्त्विकं राजसं तामसमिति त्रिगुणं सदपि कार्यमेकेन गुणेन व्यपदिश्यते । अत एवोद्भूतसत्त्वगुणकार्यत्वे सत्यपि अनुद्भूतरजस्तमःकार्यत्वात् सुखप्रत्ययोऽपि तत्र त्रिगुणात्मक एव । यतो वृत्त्यतिशया एव परस्परं विरुध्यन्ते; सामान्यानि त्वतिशयैः सह प्रवर्तन्ते इति । तथा च—सुखात्मकत्ववद् दुःखात्मकत्वं मोहात्मकत्वमपि तस्य सुखप्रत्ययस्य सुध्रुवम् । एवं दुःखमोहमयत्वे सत्यपि चलं च गुणवृत्तमिति द्रागित्येव विरोधिना प्रत्ययान्तरेण अभिभवसंभवादस्थिरं च विषयजं सर्वं सुखमिति गुणवृत्तिविरोधाच्च स्वरूपतोऽपि विषयसुखस्य दुःखत्वमिति पातञ्जलाः ।

अर्थतः=पुरुषार्थत इति यावत् । यथा वक्ष्यति—'पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्' इति ( का० ३१ )।

अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि

---

"कुत इत्थंभूताः" इति प्रागुक्तप्रश्नस्योत्तरमाह—अर्थत इति । पुरुषसम्बन्धिभोगापवर्गसाधनरूपप्रयोजनवशेन गुणानां संभूय प्रवृत्तिरित्यर्थः । "पुरुषार्थतः" इति व्याख्याने मूलकारसम्मतिमाह—यथा वक्ष्यतीति । एकत्रिंशकारिकायाम् ।

ननु "त्रिगुणमविवेकि" इत्यादिना सर्वस्य त्रिगुणात्मकत्वप्रतिपादनात् "सर्व एव भावाः सुखदुःखमोहात्मकाः" इत्यागच्छति, तच्च[1] न संभवति, "यद्[2] वस्तु यदा यस्य सुखात्मकम्, तदेव वस्तु तदैव तस्य दुःखात्मकं मोहात्मकं च" इत्यस्य प्रत्यक्षतोऽदर्शनात्, यदि हि सर्वेषामेव भावानां सुखदुःखमोहात्मकत्वं भवेत्, तर्हि सर्वेषां सामान्येनैव सर्वेषु भावेषु सुखदुःखमोहात्मकं विज्ञानं स्यात्, अनुकूल एव स्रक्चन्दनादौ सुखात्मकं, प्रतिकूल एव च दन्दशूकवृश्चिककण्टकादौ दुःखात्मकं इत्येवम् उपलभ्यमानं प्रतिवस्तु व्यवस्थितं विज्ञानं च न स्यात्, दृश्यते चैवं तस्मान्न सर्वेषां भावानां सुखदुःखमोहात्मकत्वं भवितुमर्हति । तदाहुर्भामत्यां वाचस्पतिमिश्राः—"यदि पुनरेत एव सुखादिस्वभावा भवेयुः, ततः स्वरूपत्वाद् हेमन्तेऽपि चन्दनः सुखः स्यात्, न हि चन्दनः कदाचिद् अचन्दनः । तथा निदाघेऽपि कुङ्कुमपङ्कः सुखो भवेत्, नह्यसौ कदाचित् अकुङ्कुमपङ्क इति, एवं कण्टकः क्रमेलकस्य[3] सुख इति मनुष्यादीनामपि प्राणभृतां सुखः स्यात्, नह्यसौ कांश्चित्प्रत्येव कण्टक इति, तस्माद् असुखादिस्वभावा अपि चन्दनकुङ्कुमादयो जातिकालावस्थाद्यपेक्षया सुखदुःखादिहेतवो न तु स्वयं सुखादिस्वभावा इति रमणीयम्" इति, इत्याशङ्कायां समाधत्ते—अत्र चेति । गुणस्वभावनिरूपणप्रस्तावे चेत्यर्थः । "इदं[4] ध्येयम्" इति शेषः । परस्परविरोधिनो ये सुखदुःखमोहास्ते सर्वत्र सामान्येन विद्यमाना अपि नाऽकस्मात् प्रादुर्भवन्ति, येन सर्वान् प्रत्यविशेषेण तेषामागमनं प्रसज्येत, किं तु स्वस्वप्रादुर्भावे निमित्तानि कल्पयन्ति=अपेक्षन्ते, इत्यन्वयः । निमित्तान्यपि न यानि कानिचित्, किं तु—स्वस्वानुरूपाणि=स्वस्वोद्भवानुकूलानि, सुखदुःखमोहात्मकान्येव कल्पयन्ति, इत्यर्थः । तत्र सुखं स्वप्रादुर्भावे धर्मापेक्षं

---

१ सुखदुःखमोहात्मकत्वेन भावानां त्रैरूप्यम् । २ यत्=चन्दनादिकम् यदा=निदाघकालादौ । ३ क्रमेलकः=उष्ट्रः । ४ अन्ये तु व्याचक्षते—परिदृश्यमानपदार्थेषु प्रतीताः सुखदुःखमोहाः स्वस्वानुरूपाणि=सुखदुःखमोहात्मकानि निमित्तानि=कारणानि कल्पयन्ति=अनुमापयन्तीत्यर्थः । तथाच–कार्यभूतपरिदृश्यमानपदार्थानां सुखदुःखमोहात्मकत्वमुपलभ्यते । तच्च कारणस्य सुखदुःखमोहात्मकत्वमन्तरेणानुपपन्नम् । कार्यकारणयोरभेदात् कार्यस्य कारणानुरूपधर्मवत्त्वाद्वा । एवं च कार्यगतसुखदुःखमोहात्मकत्वं कारणस्यापि

**सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति, तेषां च परस्परमभिभाव्याभिभावकभावान्नानात्वम् ।**

सुखात्मकं सत्त्वरूपं निमित्तमपेक्षते, दुःखं च स्वप्रादुर्भावे अधर्मापेक्षं दुःखात्मकं रजोनिमित्तमपेक्षते, मोहश्च स्वोद्भवे अधर्मापेक्षं मोहात्मकं तमोनिमित्तमपेक्षते, इति विवेकः ।

जातिकालादयोऽपि निमित्तसहकारिणो ज्ञेयाः । तेन जातिरूपनिमित्तसहकारिणोऽभावान्न मनुष्यादीनां कण्टकः सुखः, निदाघकालरूपसहकारिणोऽभावाच्च न हेमन्ते चन्दनं सुखात्मकमित्यादिकं यथायथं स्वयमूह्यम् ।

ननु धर्मादिनिमित्तविशेषाणामपि सर्वत्राऽविशिष्टतया व्यवस्थानुपपत्तिस्तदवस्थैवेत्यत आह—**तेषां चेति** । तेषां च=धर्मादिनिमित्तानां च, नाऽविशिष्टत्वं किं तु नानात्वमित्यर्थः । नानात्वे हेतुः—**परस्परमभिभाव्येति** । तत्र "यद् उत्कृष्टं सद् इतरनिरोधकं भवति, तत् निमित्तम् अभिभावकमित्युच्यते, यच्च निःकृष्टत्वेन स्वकार्यजननाऽसमर्थं भवति, तन्निमित्तम् अभिभाव्यमिति भाष्यते । तथा च—सर्वस्य प्रतिक्षणपरिणामित्वाद् यदा यस्य चित्ते धर्मः फलोन्मुखः सन् उत्कृष्टो भवति, तदा तस्य चित्ते, तच्चित्तसन्निहितवस्तुनि च सत्त्वम् उत्कटं भूत्वा रजोगुणं तमोगुणं च तिरस्कृत्य तं प्रति सुखात्मकं प्रत्ययं जनयति, यदा च अधर्म उत्कृष्टो भवति, तदा रजस्तमसी उत्कटे भूत्वा दुःखमोहात्मकप्रत्ययौ जनयतः, इत्थं धर्मादयो निमित्ताः सन्ति कादाचित्का इति न सर्वेषां सर्वत्र सर्वदाऽविशिष्टज्ञानत्वप्रसङ्ग इति भावः ।

---

तथात्वमनुमापयतीति भावः । अत्र प्रयोगश्चेत्थम्—विवादास्पदानि बाह्यानि सुखदुःखमोहात्मकसामान्यपूर्वकाणि, सुखाद्यात्मकतयाऽन्वीयमानत्वात् प्रमीयमाणत्वाद्वा, यद् यदात्मकत्वेन अन्वीयमानं प्रमीयमाणं वा तत् तदुपादानकं भवति, यथा मृदात्मकत्वेन अन्वीयमानं प्रमीयमाणं वा घटादि मृदुपादानकं दृष्टम् । यदीदं तदुपादानकं न स्यात्तर्हि तदात्मनाऽन्वीमानं न स्यादित्याद्यनुकूलतर्को विपक्षे बाधकः ।

१ ननु कार्याणां सुखदुःखमोहात्मकत्वं पृथक् पृथगुपलभ्यते । यथा स्रक्चन्दनादीनां सुखात्मकत्वं, विषादीनां दुःखात्मकत्वं, सुरादीनां च मोहात्मकत्वमिति । कारणस्य तु प्रधानस्य तथात्वं मिलितमङ्गीक्रियते । गुणानां परस्परसहचारित्वेन गुणधर्माणामपि सहचारित्वावश्यंभावात् । एवं च कार्यधर्मानुरूपेषु कारणधर्मेष्वनुनीयमानेषु कारणधर्माणां मिलितत्वानुपपत्तिः । अथोच्यते–कार्यगत–तद्धर्माणामपि मिलितत्वमिति तर्हि सुखदुःखमोहात्मकत्वं युगपत्प्रत्येकवस्तुनिष्ठमेव स्यात् । तत्पुनः प्रत्यक्षविरुद्धम् । न खलु स्रक्चन्दनादिकं युगपदेव पुरुषं सुखयति दुःखयति मोहयति च । परस्परविरोधादित्यतः सुखदुःखमोहात्मकत्वं युगपत्प्रत्येकवस्तुनिष्ठमेव, परन्तु यदवच्छेदे सुखादीनामेकमपरद्वयमभिभूयोद्गच्छति तदवच्छेदे तद्रूपत्वं मन्तव्यम् । तेषां परस्परमभिभाव्याभिभावकत्वादित्यवच्छेदभेदेन पृथक् पृथक् प्रतीतेर्न परमार्थिकमिलितत्वव्याघात इत्याह—तेषां चेति । नानात्वं=पृथक् प्रतीयमानत्वमिति । इति व्याख्यान्तरमप्यूह्यम् ।

तद् यथा—एकैव स्त्री रूपयौवनकुलसम्पन्ना स्वामिनं सुखाकरोति, तत्कस्य हेतोः, स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्, सैव स्त्री सपत्नीर्दुःखाकरोति।

यद्वा "सुखदुःखमोहाः"—इत्यादिग्रन्थस्यायमर्थः—"चित्ते विद्यमाना ये सुखदुःखमोहास्ते नाकस्मात् प्रादुर्भवन्ति, किं तु सुखाद्यात्मकानि निमित्तान्यपेक्ष्यैव प्रादुर्भवन्ति, ततश्च "सुखाद्यात्मका विषया एव धर्मादिसापेक्षास्तन्निमित्तभूताः" इति कल्प्यन्ते, अन्तरेण विषयगतविशेषं विषयसन्निधिमात्रेण सुखाद्यात्मकचित्तवृत्तेः प्रादुर्भावानङ्गीकारात्, अन्यथा अव्यवस्थापत्तेः। तस्मात् चित्तगतसुखादिनियामकत्वेन कल्प्यमानो विषयगतविशेषः सुखाद्यात्मक एव कल्प्यते, कार्यानुरूपस्यैव कारणस्यौचित्यादिति। तथा च साङ्ख्यमते सर्वस्य वस्तुजातस्य त्रिगुणात्मकत्वात् प्रतिक्षणपरिणामशीलत्वाच्च कदाचिदेव धर्मादिनिमित्तवशाद् भवति चित्तेन वस्तुनः सम्बन्ध इति न सर्वदा सर्वात्मकेण ज्ञानेन भवितुं शक्यम्, तथा धर्मादिनिमित्तानुरूपं सुखाद्यात्मकप्रत्ययं प्रति सुखाद्यात्मकत्वेनैव वस्तु हेतुर्भवति, इति सिद्धं वस्तुनः सुखादिरूपत्वमिति भावः।

इदानीमुदाहरणद्वारा भावानां सुखाद्यात्मकत्वं स्पष्टयति—तद् यथेति। यथैकमपि वस्तु सुखादिभेदभिन्नविज्ञानहेतुत्वेन सुखदुःखमोहात्मकं प्रतीयते तथा तत् प्रदर्श्यत इत्यर्थः। सुखाकरोति=अनुकूलतया सुखिनं करोति। "सुखप्रियादानुलोम्ये" इति डाच्। पृच्छति—तत्कस्य हेतोरिति। यत् स्त्रियाः स्वामिनं प्रति सुखजनकत्वम्, तत्कस्मात्कारणादिति प्रश्नार्थः। उत्तरयति—

१ तद् यथोक्तं श्रीदेवीभागवते—"सत्त्वं तु केवलं नैव कुत्रापि परिलक्ष्यते। मिश्रीभावात्तु तेषां वै मिश्रत्वं प्रतिभाति वै॥ यथा काचिद् वरा नारी सर्वभूषणभूषिता। हावभावयुता कामं भर्तुः प्रीतिकरी भवेत्॥ मातापित्रोस्तथा सैव बन्धुवर्गस्य प्रीतिदा। दुःखं मोहं सपत्नीषु जनयत्यपि सैव हि॥ एवं सत्त्वेन तेनैव स्त्रीत्वमापादितेन च। रजसस्तमसश्चैव जनिता वृत्तिरन्यथा॥ रजसा स्त्रीकृतेनैव तमसा च तथा पुनः। अन्योन्यस्य समायोगादन्यथा प्रतिभाति वै॥ अवस्थानात्स्वभावेषु न वै जात्यन्तराणि च। लक्ष्यन्ते विपरीतानि योगान्नारद! कुत्रचित्॥ यथा रूपवती नारी यौवनेन विभूषिता। लज्जामाधुर्यसंयुक्ता च तथा विनयसंयुता॥ कामशास्त्रविधिज्ञा च धर्मशास्त्रेऽपि संमता। भर्तुः प्रीतिकरी भूत्वा सपत्नीनां च दुःखदा॥ मोहदुःखस्वभावस्था सत्त्वस्येत्युच्यते जनैः। तथा सत्त्वं विकुर्वाणमन्यभावं विभाति वै॥ चौरैरुपद्रुतानां हि साधूनां सुखदा भवेत्। दुःखा मूढा च दस्यूनां सैव सेना तथा गुणाः॥ विपरीतप्रतीतिं वै जनयन्ति स्वभावतः। यथा च दुर्दिनं जातं महामेघघनावृतम्॥ विद्युत्स्तनितसंयुक्तं तिमिरेणावगुण्ठितम्। सिञ्चद् भूमिं प्रवर्षद् वै तमोरूपमुदाहृतम्॥ यदेतत्कर्षकाणां वै तदेवातीव दुर्दिनम्। बीजोपस्करयुक्तानां सुखदं प्रभवत्युत॥ अप्रच्छन्नगृहाणां च दुर्भगानां विशेषतः। तृणकाष्ठगृहीतानां दुःखदं गृहमेधिनाम्॥ प्रोषितभर्तृकाणां वै मोहदं प्रवदन्त्यपि। स्वभावस्था गुणाः सर्वे विपरीता विभान्ति वै॥" इति।

तत् कस्य हेतोः, ताः प्रति तस्या दुःखरूपसमुद्भवात्, एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति, तत् कस्य हेतोः, तं प्रति तस्या मोहरूपसमुद्भवात्, अनया च स्त्रिया सर्वे भावा व्याख्याताः।

---

स्वामिनं प्रतीति। स्वामिचित्तोद्भूतधर्मरूपनिमित्तवशात् कान्तं प्रति कान्तायाः सुखात्मकसत्त्वगुणात्मकत्वेन प्रादुर्भावादित्यर्थः। दुःखाकरोति=प्रतिकूलतया दुःखिनीः करोति। "दुःखात्प्रातिलोम्ये" इत्यनेन करोति प्रयोगे डाचि रूपमिदम्। पृच्छति—तत्कस्य हेतोरिति। उत्तरयति—ताः प्रतीति। सपत्नीचित्तोद्भूताऽधर्मरूपनिमित्तवशात् सपत्नीः प्रति तस्याः=स्त्रियो दुःखात्मकरजोगुणात्मकत्वेन प्रादुर्भावादित्यर्थः।

तामविन्दमानम्=चैत्रभार्याम् अलभमानम्, पुरुषान्तरम्=चैत्रादन्यं कामुकं मैत्रम्, मोहयति="पुण्यवतो बत चैत्रस्य स्त्रीरत्नमिदं, न तु मम मैत्रस्य मन्दभाग्यस्य" इत्येवं विषादयति। पृच्छति—तत्कस्येति। उत्तरमाह—तम्प्रतीति। चैत्रादन्यमैत्रचित्तोद्भूताऽधर्मरूपनिमित्तवशात् पुरुषान्तरं प्रति तस्या मोहात्मकतमोगुणात्मकत्वेन प्रादुर्भावादित्यर्थः।

उक्तन्यायम् अन्यत्राप्यतिदिशति—अनया चेति। भावाः=पदार्थाः। एतत्कान्तोदाहरणेन अन्येषामपि भावानां सुखाद्यात्मकत्वं व्याख्यातं वेदितव्यम्, तद् यथा—मेघा वृष्ट्या कृषीवलान् सुखयन्ति, पान्थान् दुःखयन्ति विरहिणश्च मोहयन्ति, एवम्—न्यायतत्परो भूपतिः शिष्टान् सुखयति, दुष्टांश्च दुःखाकरोति मोहयति चेति। तथा चानुमानम्—"कार्यं सुखदुःखमोहात्मकम्, सुखदुःखमोहजनकत्वात्, स्त्रीवत्" इति। ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति, "अहं सुखी-दुःखी मूढः" इत्येवानुभवात्, तत्कथं कान्तादिर्विषयो दृष्टान्त इति चेत्। अत्राहुः—सुखाद्यात्मकबुद्धिकार्यतया, "स्रक् सुखं चन्दनं सुखम्" इत्याद्यनुभवेन च, विषयाणामपि सुखादिधर्मकत्वसिद्धेः। किं च—यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते, तस्यैव सुखाद्युपादानत्वं कल्प्यते, तस्य निमित्तत्वं परिकल्प्य अन्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवात्। अपिच—अन्योन्यसंवादेन, प्रत्यभिज्ञया च विषयेषु सर्वपुरुष-

---

१ तद् यथोक्तं योगभाष्ये—"धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्मापेक्षं तत एव दुःखज्ञानम्, अविद्यापेक्षं तत एव मूढज्ञानम्" (यो० भा० ४।१५) इति। वस्तुमात्रस्य त्रिगुणात्मकत्वाच्चलत्वाच्च तत्तन्निमित्तानुसारमेकस्मिन्नपि वस्तुनि नानाविधः प्रत्ययः संभवतीत्येतद्भाष्यार्थः। अर्थात् रजोगुणसहितः सत्त्वगुणो यः स धर्मसापेक्षः सन् पत्युः सुखज्ञानस्य जनको भवति, रजोगुणसहितो यस्तमोगुणः सोऽधर्मसापेक्षः सन् सपत्न्या दुःखज्ञानस्य जनकः, यश्च केवलं तमोगुणः सोऽज्ञानसापेक्षः सन् कामिनो मोहज्ञानस्य जनकः समुपजायते, इति रीत्या एकमेव वस्तु नानाज्ञानजनकं सम्पद्यते।

तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वं, यद् दुःखहेतुस्तद् दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तम इति।

सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः, सहदर्शनात्, तस्मात्सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुण-

---

साधारणस्थिरसुखसिद्धिः। तत्तत्सुखग्रहणाय अस्मन्नये वृत्तिनियमादिककल्पनागौरवं च फलमुखत्वान्न दोषावहम्। विषयेऽपि सुखादिकं च मार्कण्डेयपुराणे उक्तम्—"तत्सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र" इति। "अहं सुखी" इत्यादिप्रत्ययास्तु "अहं धनी" इत्यादिप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्धविषयकाः, तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति। "यत्तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते, तदेव बुद्धिधर्म आत्मसुखमुच्यते" इति यद्यपि वैशेषिकाद्यास्तार्किका अन्यथाऽप्यनुमिमते, तथापि स्मृत्याद्युपोद्बलितत्वात् सांख्यप्रक्रियैव साध्वीति मन्तव्यम्। एवं च—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इत्यत्र मननं साङ्ख्यरीत्यैव॥ नन्वेवमपि अखिलजडेभ्यः पुरुषविवेक एव हेतुः, तत्किमर्थं जडानामन्योन्यविवेकः सांख्यशास्त्रे प्रदर्शित इति चेत्। अत्राहुः—प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्ध्यर्थं तद्विवेकस्याप्यपेक्षिततत्त्वादिति॥ ॐ॥

नन्वेकस्य कामिनीरूपस्यार्थस्य विभिन्नज्ञानहेतुता न घटते, अविलक्षणात् कारणात् कार्यभेदस्य वक्तुमशक्यत्वादित्याशङ्क्य पूर्वोक्तं निमित्तनानात्वं स्मारयति—तत्रेत्यादिना। तत्र=एतस्मिन्नुदाहरणे, यत् स्वामिचित्तवृत्तिसुखात्मकप्रत्ययं प्रति निमित्तं तद् धर्मापेक्षं स्त्रीशरीरगतं सुखात्मकं सत्त्वम्, यच्च सपत्नीचित्तवृत्तिदुःखात्मकप्रत्ययं प्रति निमित्तं तद् अधर्मापेक्षं कान्ताकायगतं दुःखात्मकं रजः, यच्च चैत्रादन्यमैत्रचित्तवृत्तिमोहात्मकप्रत्ययं प्रति निमित्तं सोऽधर्मापेक्षः कान्ताकलेवरगतो मोह इति विवेकः[1]। यथा विरुद्धाः सुखादयो युगपदेकत्र प्रादुर्भावे धर्मादिनिमित्तनानात्वस्यापेक्षां कुर्वन्ति, न तथा प्रकाशादय इत्याह—सुखप्रकाशेति[2]। तत्र हेतुमाह—सहदर्शनादिति। यथा

---

१ धर्मरूपनिमित्तापेक्षं रक्तकान्तस्य स्वस्त्रीविषयकं सुखज्ञानं, अधर्मरूपनिमित्तापेक्षया द्विष्टसपत्न्यास्तद्विषयकं दुःखज्ञानम्, अज्ञानरूपनिमित्ताच्च विमूढकामिनस्तद्विषयकं मोहज्ञानमितित्ययं क्रमोऽत्र वोध्य इति सरलोऽर्थः। २ अत्रायं संशयः संभवति—यथा कार्यगतसुखदुःखमोहानामेकैकस्य कारणघटकसत्त्वरजस्तमसामेकैकं निमित्तमित्यनुमेयं, तथा कार्यगतसुखप्रकाशलाघवैरपि किं निमित्तभेदा अनुमेयाः? किं वा सत्त्वमेव निमित्तमनुमेयमिति? तमेतं संशयमपाकरोति—सुखप्रकाशलाघवानामिति। अविरोधे हेतुमाह—सहदर्शनादिति। कार्येषु यदा सुखरूपोद्गमस्तदैव प्रकाशरूपत्वं तदैव च लघुत्वमिति त्रयाणां

**वृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते, एवं दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, एवं मोहगुरुत्वावरणैः इति सिद्धं त्रैगुण्यमिति ॥ १३ ॥**

---

"सुखदुःखमोहाः परस्परं विभिन्नाः, परस्परपरिहारेण ज्ञायमानत्वात्, घटादिवत्" इत्यनुमानेन सुखादीनां परस्परं भेदोऽस्ति न तथा प्रकाशादीनाम्, परस्परपरिहारेणाऽननुभूयमानत्वात्, अतः सहोपलम्भादेतेषामविरोध इति भावः। फलितमाह—**तस्मादिति**। यतः प्रकाशादीनामविरोधोऽत इत्यर्थः। उन्नीयन्ते=कल्प्यन्ते, अपेक्ष्यन्त इति यावत्। **अयमत्र सरलार्थः**—"यतः सहदर्शनात्—एकत्र सहवर्तनदर्शनात्, सुखप्रकाशलाघवानां युगपत्—एककालावच्छेदेन, एकस्मिन्—एकत्र, उद्भवे–प्रादुर्भवे, अविरोधः–न विरोधः, तस्मात्–ततो हेतोः, विरोधिभिः सुखदुःखमोहैरिव अविरोधिभिः, एकैकगुणवृत्तिभिः–सत्त्वगुणवृत्तिभिः–सुखप्रकाशलाघवैः, रजोगुणवृत्तिभिः–दुःखोपष्टम्भकत्वप्रवर्तकत्वैः, तमोगुणवृत्तिभिः मोहगुरुत्वावरणैः, निमित्तभेदा न उन्नीयन्ते=अपेक्ष्यन्ते, किं तु सात्त्विकैः सुखादिभिर्धर्मापेक्षं केवलं सत्त्वमपेक्ष्यते, राजसैश्च दुःखादिभिः केवलम् अधर्मापेक्षं रजोऽपेक्ष्यते, तामसैश्च मोहादिभिः केवलम् अविद्यापेक्षं तमोऽपेक्ष्यते, इति। "न निमित्तभेदा उन्नीयन्ते" इत्यस्य दुःखोपष्टम्भकत्वप्रवर्तकत्वैः" इत्यत्र "मोहगुरुत्वावरणैः" इत्यत्र चानुषङ्गो बोध्यः। उपसंहरति—**इति सिद्धमिति**। अतो भावानां सर्वेषां त्रिगुणात्मकत्वं निष्पन्नमित्यर्थः ॥ १३ ॥

---

यौगपदिकत्वस्य प्रत्यक्षसिद्धत्वादित्यर्थः। विरोधिभिः प्रत्येकपुरुषावच्छेदेन युगपदेकत्रानवस्थितैः अत एव एकैकगुणवृत्तिभिःसत्त्वाद्यंशनिष्ठैः कार्यगतसुखदुःखमोहैर्यथा निमित्तभेदाः=भिन्नभिन्ननिमित्तानि उन्नीयन्ते=अनुमीयन्ते तथा कार्यगतसुखप्रकाशलाघवैर्निमित्तभेदा न उन्नीयन्ते किन्तु सत्त्वमेव निमित्तमनुमेयमिति व्यतिरेकेन दृष्टान्तः। तथा च कार्येषु सुखदुःखमोहानां परस्परविरोधदर्शनात् कारणस्य प्रधानस्य तदात्मकत्वानुमाने क्रियमाणे कारणेऽपि तेषां धर्माणां परस्परविरोधापत्तिरतः कारणघटकगुणत्रयस्य सुखदुःखमोहात्मकत्वमनुमेयम्। सुखप्रकाशलाघवानान्तु कार्येषु यौगपद्यदर्शनात् एकस्य सत्त्वस्यैव कारणस्य तदात्मकत्वानुमाने विरोधाभावात् तेषां न निमित्तभेदानुमापकत्वमिति भावः। यथा कार्यगतैः सुखप्रकाशलाघवैः कारणस्यैकस्य सत्त्वस्यैव तदात्मकत्वमनुमेयं तथा कार्यगतैर्दुःखोपष्टम्भकत्वप्रवर्तकत्वैः कारणस्यैकस्य रजस एव तदात्मकत्वमनुमेयम्। तथा कार्यगतैर्मोहगुरुत्वावरणैश्च कारणस्यैकस्य तमस एव तदात्मकत्वमनुमातव्यं न निमित्तभेदा अनुमेया इत्याह—एवमित्यादिना। (आवरणवारिणी) "विमताः सुखप्रकाशलाघवा न भिन्ननिमित्तकाः, अविरोधित्वात्, यन्नैवं यथा सुखदुःखमोहाः, न च तथेमे तस्मान्न तथा" इत्यादिप्रयोगाश्चात्रोन्नेयाः।

१ अत्रायं निष्कर्षः—पृथिव्यादीनि पञ्च भूतानि पञ्चतन्मात्रस्वरूपाणि, पञ्चतन्मात्राणि

स्यादेतद्, अनुभूयमानेषु पृथिव्यादिष्वनुभवसिद्धा भवन्त्वविवेकित्वादयः, ये पुनः सत्त्वादयो नानुभवपथमधिरोहन्ति तेषां कुतस्त्यमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्मित्वं च इत्यत आह—

**अविवेक्यादेस्सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।**
**कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥**

"अविवेक्यादेस्सिद्धिः" इति ।

---

## अथ अविवेकित्वादिसिद्धिः ।

सर्वेषां भावानां त्रैगुण्यं प्रसाध्य सम्प्रति तेन[1] हेतुना प्रधानादीनामविवेकित्वादिधर्मवत्त्वं साधयितुं कारिकामवतारयति—**स्यादेतदित्यादिना** । अनुभूयमानेषु=प्रत्यक्षतो दृग्गोचरेषु, पृथिव्यादिषु, अनुभवसिद्धाः=प्रत्यक्षगोचराः, अविवेकित्वादयः="त्रिगुणमविवेकि—" इति कारिकोक्ताः संहत्यकारित्वादयो धर्मविशेषाः, सन्तु=भवन्तु नाम, परं तु ये पुनः सत्त्वादयः अनुभवपथम्=अनुभवमार्गम्, न अधिरोहन्ति=न गच्छन्ति, न प्रत्यक्षतो दृश्यन्त इति यावत्, तेषाम्=सत्त्वादीनाम्, अविवेकित्वं विषयत्वं सामान्यत्वम् अचेतनत्वं प्रसवधर्मित्वं च कुतस्त्यम्=कस्मात्प्रमाणादवगतमित्यर्थः । **सत्त्वादय** इत्यत्र सत्त्वशब्देन सत्त्वादिगुणत्रयसाम्यावस्थारूपस्य प्रधानस्य ग्रहणं बोध्यम्, आदिशब्देन च महदादयः समुच्चीयन्ते ।

**अविवेक्यादेरिति** । त्रैगुण्यात् हेतोः, प्रधानादीनाम् अविवेक्यादेः=अविवेकित्वादिधर्मस्य, आदिना विषयत्वादेः परिग्रहः । सिद्धिः, कुतस्तत्राह—**तद्विपर्ययाभावात्**=तस्य=अविवेकित्वादेः, विपर्ययः=अभावो यत्र स तद्विपर्ययः=आत्मा, तत्र त्रैगुण्याभावात्, इत्यर्थः । **तथा चानुमानम्**—"प्रधानमहदभिमानादीनि अविवेकित्वादिधर्मवन्ति, त्रिगुणत्वात्, यद् यत् त्रिगुणात्मकं तत्तदविवेकित्वादिधर्मवत्, यथेदमनुभूयमानं व्यक्तम्, यन्न अविवेकि, तन्न त्रिगुणम्, यथा आत्मतत्त्वम्" इति । प्रधानसत्त्वे मानमाह—**कार्यस्य**—महदादेः=कारणगुणात्मकत्वात्=सुखदुःखमोहरूपत्वात्, अव्यक्तमपि=प्रधान-

---

एकादशेन्द्रियाऽहङ्कारस्वरूपाणि, अहङ्कारः महत्तत्त्वस्वरूपः, महत्तत्त्वं प्रधानस्वरूपम्, प्रधानं च गुणत्रयस्वरूपमित्येवं रीत्या साक्षात्परम्परया वा निखिलोऽपि प्रपञ्चो गुणस्वरूप एवेति । तदाहुर्वार्षगण्याचार्याः—"गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥" अस्यार्थः—गुणानां यत् परमं वास्तवं रूपं प्रधानमस्ति तदतीन्द्रियत्वाद् इन्द्रियगोचरतां नाऽऽयाति, यश्चायं नानाविधः प्रपञ्चो दृष्टिपथमवतरति स सर्वोऽपि इन्द्रजालवत् तुच्छः—अर्थात् परमार्थतः सर्वोऽप्ययं प्रपञ्चः गुणत्रयात्मकप्रधानस्वरूप एव न ततोऽतिरिच्यते, इति ।

१ तेन=त्रैगुण्येन ।

अविवेकित्वमविवेकि, यथा—"द्व्येकयोर्द्विवचनैकवचने" इत्यत्र द्वित्वैकत्वयोरिति अन्यथा द्व्येकेष्विति स्यादिति,

कुतः पुनरविवेकित्वादेस्सिद्धिः, इत्यत आह—"त्रैगुण्याद्"

यद्यत्सुखदुःखमोहात्मकं तत्तदविवेकित्वादियोगि यथेदमनुभूयमानं व्यक्तम्, इति स्फुटत्वादन्वयोनोक्तः, व्यतिरेकमाह "तद्विपर्ययाभावाद्"=अविवेक्यादिविपर्यये पुरुषे त्रैगुण्याभावाद्,

अथवा—व्यक्ताव्यक्ते पक्षीकृत्यान्वयाभावेनावीत एव हेतुः त्रैगुण्याद् इति वक्तव्यः।

---

मपि, सिद्धं भवतीत्यर्थः। तथा चानुमानम्—"सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या, कार्यत्वे सति सुखदुःखमोहात्मकत्वात्, कान्तादिवत्" इति ॥ १४ ॥ ॐ ॥

"अविवेकि" इति पदं व्याचष्टे—अविवेकित्वमिति। कारिकायाम् "अविवेकि" इति पदं भावप्रधाननिर्देशेन अविवेकित्वपरमिति भावः। तत्र दृष्टान्तत्वेन पाणिनीयसूत्रमाह—द्व्येकयोरिति। ननु पाणिनीयसूत्रेऽपि द्व्येकशब्दयोर्द्वित्वविशिष्टैकत्वविशिष्टपरतैवास्तां किं भावप्रधाननिर्देशत्वाभ्युपगमेनेत्याशङ्कां परिहरन्नाह—अन्यथेति। द्व्येकशब्दयोर्द्वित्वैकत्वपरत्वानङ्गीकारे इत्यर्थः। द्व्येकेष्वितीति। द्विशब्देन द्वित्वविशिष्टयोर्बोधनेन, एकशब्देन च एकत्वविशिष्टैकस्य बोधनेन तयोर्द्वन्द्वे द्व्येकशब्दस्य बहुसंख्याकत्वेन बहुवचनापत्तेरवश्यं भावात्, इत्यर्थः। तथा च सूत्रे द्विवचननिर्देश एव द्वित्वैकत्वपरत्वे लिङ्गमिति भावः। "प्रधानादीनि अविवेकित्वादिधर्मवन्ति, त्रिगुणत्वात्" इति प्रागुक्तानुमानप्रयोगेऽन्वयव्याप्तिं प्रदर्शयितुमाह—यद् यत्सुखेति। अविवेकित्वादियोगि=अविवेकित्वादिधर्मवदित्यर्थः। उदाहरणं दर्शयति—यथेदमिति। व्यक्तम्=घटादिकं स्थूलं वस्तु, इति=इत्येवम्, स्फुटत्वात्=अन्वयव्याप्तेः स्पष्टत्वात्, अभावज्ञानानपेक्षितत्वेन झटित्युपस्थितेरिति यावत्, अन्वयः= "त्रैगुण्यसत्त्वे अविवेक्यादिसत्त्वम्" इत्येवंरूपोऽन्वय सहचारः, नोक्तः=कारिकाकारेण मुखतो नाभिहितः, तथापि स्वयमूह्य इत्यर्थः। व्यतिरेकम्="यन्नाविवेकि, तन्न त्रिगुणम्, यथाऽऽत्मतत्त्वम्," इत्यात्मकं व्यतिरेकसहचारमाहेत्यर्थः। अविवेक्यादिविपर्यये=अविवेकित्वादिधर्माभाववति, पुरुषे= आत्मनीत्यर्थः।

ननु त्रैगुण्यस्याधुनाप्यसिद्धेः कुतस्तरां तदन्वयेन अविवेकित्वादिसिद्धिरित्याशङ्क्य व्यतिरेकव्याप्त्यैव व्यक्ताव्यक्तयोः सिद्धिरित्याह—अथवेति।

---

१ यत्र धर्मिवाचकः शब्दो धर्मपरत्वेन वक्तुरभिप्रेतस्तत्र 'भावप्रधाननिर्देशः' इति व्यवहारः।

स्यादेतद्–अव्यक्तसिद्धौ सत्यां तस्याविवेकित्वादयो धर्माः सिद्ध्यन्ति अव्यक्तमेव त्वद्यापि न सिध्यति, तत्कथमविवेकित्वादिसिद्धिरत आह–"कारणगुणात्मकत्वाद्" इति ।

अयमभिसन्धिः–कार्यं हि कारणगुणात्मकं दृष्टं यथा तन्त्वादिगुणात्मकं पटादिकं, तथा महदादिलक्षणेनापि कार्येण सुखदुःखमोहरूपेण स्वकारणगतसुखदुःखमोहात्मना भवितव्यं, तथा च तत्कारणं सुखदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥१४॥

---

अवीतः=व्यतिरेकव्याप्तियुक्तः, व्यतिरेकसहचारवानिति यावत् । अयमाशयः—यदा स्थूलेषु भावेषु अविवेकित्वत्रिगुणत्वे सिद्धवत्कृत्वा अतीन्द्रियं प्रधानादिकमेव पक्षीक्रियते, तदा "त्रैगुण्यात्" इति हेतुरन्वय्यपि संभवति, यदा तु सकलमेव व्यक्ताव्यक्तरूपं तत्त्वं पक्षीक्रियते, तदा पक्षातिरिक्तान्वयसहचारोदाहरणस्थलाभावेन "त्रैगुण्यात्" इति हेतुर्व्यतिरेक्येव नत्वन्वयीति । तथा च—"व्यक्तमव्यक्तं च नाविवेकित्वादिमद्भिन्नम्, त्रैगुण्याभावे अभावात्, पुरुषवत्" इत्यनुमानम् । तस्य=अव्यक्तस्य । अभिसन्धिरिति । आशय इत्यर्थः । गूढोऽभिप्राय इति यावत् । स्वकारणगतेति । स्वकारणगतसुखदुःखमोहरूपधर्मपूर्वकेण कार्यगतसुखादिना भवितव्यमित्यर्थः । अत्रत्यमनुमानस्वरूपं तु "सुखदुःखमोहधर्मका महदादयः सुखदुःखमोहधर्मककारणजन्याः, कार्यत्वे सति सुखदुःखमोहात्मकत्वात्, कान्तादिवत्" इत्यनुपदमुक्तमेव । तादृशं कारणं च प्रधानमेवेत्यव्यक्तं सिध्यति ॥

इदमत्रोपदिष्टं भवति—कार्ये त एव गुणाः प्रादुर्भवन्ति ये तत्कारणे समवयन्ति । येषां च कारणे न समवायः, न च तत्पूर्वकाः कार्यगुणाः कथंचिदाविर्भवन्ति । नवा कदाचिदिदमित्थं विपर्येति—कारणे वर्तमानाः गुणाः कार्ये न प्रादुःष्युः, ततो विलक्षणा वा तत्र प्रादुर्भवेयुः । अतः कार्यं दृष्ट्वा निःशङ्कमनुमातुं शक्यते—येऽमी कार्यगुणा अनुभूयन्ते, नूनं तत्सजातीयास्तत्कारणे विद्यन्ते, ये चात्र कार्ये नोपलभ्यन्ते, न च ते तत्रापि वर्तन्त इति ॥ १४ ॥

---

१ तथा च पटनिर्माणवेलायां तन्तूनां सितत्वादिरूपमदृष्टवताऽपि पुरुषेण तत्कार्यपटादिगतशुभ्रत्वादिदर्शनेन यथा तत्कारणभूतैस्तन्तुभिरपि शुभ्रादिभिर्भवितव्यमित्यनुमीयते । कार्यस्य कारणगतगुणगुणकत्वनियमात् । तथा अव्यक्तादिसिद्धिमताऽपि तत्कार्यमहदादिगतसुखदुःखमोहात्मत्वनिश्चयादेव तत्कारणेनापि केनचित् सुखदुःखमोहात्मकेन भवितव्यं, कारणगतधर्माणामपि कार्यसंबन्धनियमादितिरीत्याऽव्यक्तं साधयितव्यमितिसरलोऽर्थः । प्रयोगश्चात्र भवति—"महदादि सुखदुःखमोहवद्द्रव्योपादानकं, कार्यत्वे सति तद्विशेषगुणवत्त्वात्" इति ।

स्यादेतद्, व्यक्ताद् व्यक्तमुत्पद्यत इति कणभक्षाक्षचरणतनयाः, परमाणवो हि व्यक्तास्तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं कार्यं व्यक्तमारभ्यते, पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः, तस्माद् व्यक्ताद् व्यक्तस्य तद्गुणानां चोत्पत्तेः कृतमदृष्टचरेणाव्यक्तेन, इत्यत आह—

## अथाव्यक्तसिद्धिनिरूपणम् ।

व्यक्तेभ्यः परमाणुभ्यो जगदुत्पत्स्यत इत्यव्यक्ते प्रमाणाभाव इति शङ्कया कारिकामवतारयति—स्यादेतदित्यादिना । कणभक्षाक्षचरणतनयाः=कणादगोतममतानुयायिनः, "अभ्युपगच्छन्ति" इति शेषः । कीदृशाद् व्यक्तात् कीदृशस्य व्यक्तस्योत्पत्तिरित्यत्राह—परमाणवो हीति । अदृष्टचरेण=पूर्वं न दृष्टमिति अदृष्टचरम्, "भूतपूर्वे चरट्" इति चरट्, तेन अप्रमाणिकेन रूपादिविहीनेन, अव्यक्तेन=प्रधानेन, कृतम्=अलम्, न किमपि कृत्यमित्यर्थः । कृतमिति निषेधार्थकमव्ययम् । अत्रेदं तत्त्वम्—प्रथमं तावत् प्राणिनां[1] भोग[2]भूतये परमेश्वरस्य सिसृक्षा जायते, ततो लब्धवृत्तिका[3]ऽदृष्टविशिष्टाऽऽत्मसंयोगाद् दोधूयमानेषु पवनपरमाणुषु प्रथमतः कर्मोत्पत्तिः, ततो द्वयोः पवनपरमाण्वोः संयोगः, ततो द्व्यणुकोत्पत्तिः, ततस्त्रिषु द्व्यणुकेषु कर्मोत्पत्तिः, ततस्तेषां संयोगः, ततस्त्र्यणुकोत्पत्तिः, एवं चतुरणुकाद्युत्पत्तिक्रमेण महावायुरुत्पद्य विहायसि[4] दोधूयमान[5]स्तिष्ठति । ततस्तस्मिन् वायौ जलपरमाणुभ्यो द्व्यणुकादिक्रमेण महाजलराशिरुत्पन्नः पोप्लूयमान[6]स्तिष्ठति । ततस्तस्मिन् महोदधौ पृथिवीपरमाणुतो द्व्यणुकादिक्रमेण महापृथिवी–उत्पद्य संहता[7]ऽवतिष्ठते । ततस्तस्मिन्नेव जले तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्नो महांस्तेजोराशिर्देदीप्यमान[8]स्तिष्ठति । एवं[9] समुत्पन्नेषु चतुर्षु महाभूतेषु परमेश्वरस्याभिध्यानमात्रात्[10] तैजसोभ्योऽणुभ्यः पार्थिवादिपरमाणुसहितेभ्यो महदण्डमारभ्यते । तस्मिंश्चतुर्वदनकमलं सकललोकपितामहं ब्रह्माणं सकलभुवनसहितम् उत्पाद्य प्रजा[11]सर्गे नियुङ्क्ते[12] । स च महेश्वरेण नियुक्तो ब्रह्मा अतिशयज्ञानवैराग्यैश्वर्य-

१ संसारिणाम् । २ सुखदुःखान्यतरस्य निष्पत्त्यर्थम् । ३ आत्मगतानि अथ च लब्धवृत्तीनि अदृष्टानि तत्सापेक्षेभ्यः तत्संयोगेभ्य इति फलितार्थः । ४ आकाशादौ । ५ अत्यर्थं कम्पमानः । मूर्तान्तरानुत्पत्त्या तदुपगमस्याप्रतिहतत्वादिति भावः । ६ अत्यर्थं प्लवनशीलः । पवनाभिभूतस्य पयसः प्लवनातिशये बाधकाभावादिति भावः । ७ घनीभूता—कठिना । ८ अत्यर्थं प्रकाशमानः । ९ वायुजलतेजःक्रमेण । १० इच्छामात्रात् न तु व्यापारान्तरादित्यर्थः । तैजसेभ्य इति समवायिकथनम्, पार्थिवेत्युपष्टम्भकथनम्, तथासत्येव तैजसाण्डस्य हिरण्मयत्वसंभवात् । ११ प्रजासृष्टिनिमित्तम् । १२ 'प्रजाः संसृज' इत्याज्ञापयति । महेश्वर इत्यर्थाद् गम्यते ।

**भेदानां परिमाणात्, समन्वयात्, शक्तितः प्रवृत्तेश्च ।**
**कारणकार्यविभागादविभागाद् वैश्वरूपस्य ॥ १५ ॥**
**कारणमस्त्यव्यक्तं, प्रवर्तते त्रिगुणतः, समुदयाच्च ।**
**परिणामतः सलिलवत्, प्रतिप्रतिगुणाश्रयविशेषात् १६**

"भेदानां परिमाणाद्" इत्यादि ।

---

संपन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन् मानसान् मनून्-देवर्षिपितृगणान्-मुखबाहूरुपादतश्चतुरो वर्णान्-अन्यानि चोच्चावचानि भूतानि सृष्ट्वा, आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति" । इति हि कणादादीनां प्रक्रिया । एतदुक्तं भवति—सूक्ष्मात् खलु स्थूलस्योत्पत्तिर्दृश्यते, यथा तन्तुभ्यः पटस्य तन्तूनां चांशुभ्यः, एवमपकर्षक्रमेणापकर्षक्रमेण अपकर्षकाष्ठामापन्नं कारणद्रव्यम् अतिसूक्ष्मम् अनवयवम् अवतिष्ठते, तच्च परमाणुरूपम् । तत्र प्रथमं तावद् अदृष्टवत् क्षेत्रज्ञसंयोगात् परमाणौ कर्म जायते, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते, द्व्यणुकानि च त्रीणि संभूय त्र्यणुकमुत्पादयन्ति । ततश्चतुरणुकादिक्रमेण स्थूलाः पृथिव्यादयः समुत्पद्यन्ते । यथा सूक्ष्मद्रव्याणि स्थूलद्रव्याण्यारभन्त एवं कारणसमवायिनश्च गुणाः कार्ये समानजातीयं गुणान्तरमारभन्त इति तेषां प्रक्रियेति । एवं च परिदृश्यमानरूपादिगुणवत्कार्यबलेन रूपादिमद् व्यक्तं परमाणुद्रव्यमेव कारणमुपेयं न तु रूपादिविहीनमव्यक्तमिति भावः । "यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्तते । यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे" इति वात्स्यायनभाष्यकाराः ।

"जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥"

इति वाक्यपदीये ॥

**भेदानां परिमाणादिति** । भेदानाम्=महदादिकार्याणाम्, अव्यक्तम्=प्रधानम्, कारणम् अस्ति, कुतः? कारणकार्यविभागात्=उत्पत्तिकाले सत एव कार्यस्य कारणसकाशादाविर्भावात्, तथा वैश्वरूप्यस्य=विश्वरूपमेव वैश्वरूप्यम् "चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्" इति वार्तिकेन चतुर्वर्णादित्वात् स्वार्थिकः ष्यञ्, तस्य विश्वरूपस्य कृत्स्नस्य कार्यस्य, संहारकाले कारणे अविभागात्=तिरोभावात्, तथा चानुमानम्—"महदादिकं कार्यं स्वीयसूक्ष्मावस्थापूर्वकं भवितुमर्हति, आविर्भावतिरोभाववत्त्वात्, कूर्माङ्गवत्" इति । हेत्वन्तरमाह—**शक्तितः प्रवृत्तेश्च**—कारणशक्तितः कार्यप्रवृत्तेः, तथा चानुमानम्—

---

१ प्राणिनां यानि कर्माणि तेषां विविधं पाकं फलोपधानकालम् । २ आशयः=पूर्वजन्मसंस्कारस्तत्सदृशैः वासनानुरूपैः । ३ एतदुपलक्षणम्—अधर्माज्ञानावैराग्यानैश्वर्यैरित्यपि द्रष्टव्यम् । ४ प्रकृतोपयुक्तं प्रक्रियांशं ग्रहीतुमाह—एतदुक्तमिति ।

भेदानां विशेषानां महदादीनां भूम्यन्तानां कार्याणां कारणं 'मूलकारणम् अस्त्यव्यक्तं', कुतः 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' कारणे सत्कार्यमिति स्थितं, तथाच यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते 'इदं कूर्मशरीरमेतान्यस्या-

---

"बुद्ध्यादिकं शक्तिरूपसूक्ष्मावस्थापूर्वकं भवितुमर्हति, कार्यत्वात्, घटवत्" इति। हेत्वन्तरमाह—**परिमाणात्**=परिमितत्वाद् अव्यापित्वादिति यावत्, तथा चानुमानम्—"विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वात्, घटादिवत्" इति । हेत्वन्तरमाह—**समन्वयात्**=सुखाद्यात्मसामान्यान्वितत्वात्, तथा चानुमानम्—"विवादाध्यासिता भेदा अव्यक्तकारणवन्तः, समन्वयात्, घटादिवत्" इति ॥ ❀ ॥

## अथाव्यक्तप्रवृत्तिप्रकारः ।

अव्यक्तं प्रसाध्य तत्प्रवृत्तिमाह—**त्रिगुणतः**=सत्त्वादिगुणत्रयात्, प्रवर्तते=प्रवृत्तं भवति, तथा समुदयात्=परस्परसंमिश्रणात्, प्रवर्तते, तथाच प्रधानस्य द्विधा प्रवृत्तिर्भवति—सृष्टिकालीना प्रलयकालीना च । तत्र सृष्टिकाले प्रकृतेस्त्रयोगुणा मिलित्वा प्रवर्तन्ते, ते च तस्मिन् समये केचन गुणभूताः केचिच्च प्रधानभूता भवन्ति, अन्तरेण गौणमुख्यभावम् अनेकपदार्थानां मिलित्वा प्रवृत्तेरसंभवात्, प्रलयकाले च प्रधानस्य त्रयोगुणाः परस्परतः पृथग्भूत्वा स्वातन्त्र्येण स्वस्वस्वरूपत एव प्रवृत्ता भवन्ति । एकस्मादव्यक्ताद् विचित्रविचित्रकार्याणामुत्पत्तिमाह—**प्रतिप्रतिगुणाश्रयविशेषात्**—एकैकगुणस्य भिन्नभिन्नमात्राणां संमेलनाद् एकस्मादेव प्रधानान्नानाकार्योत्पत्तिरित्यर्थः । तत्र दृष्टान्तमाह—**परिणामतः सलिलवदिति** । यथा सलिलमेकमपि नारिकेलजम्बीरादिपरिणामभेदात् मधुरतिक्तादिभावं प्रतिपद्यते, तद्वत् प्रधानमपि सहकारिभेदादेव विषममिति भावः ॥ १५-१६ ॥ ❀ ॥

भिद्यन्ते=परस्परं व्यावृत्ताः प्रतीयन्त इति भेदाः=कार्याणि महदादीनि, तेषां "कारणमस्त्यव्यक्तम्" इत्यग्रिमकारिकाऽऽद्यपादेन सम्बन्ध इत्यभिप्रायेण व्याचष्टे—**भेदानामिति** । तत्र "कारणमस्त्यव्यक्तम्" इत्याकारकप्रतिज्ञायां कारिकाकृता "परिमाणात्" इत्यादयः पञ्च हेतव उपन्यस्ताः, वाचस्पतिमिश्रस्तु तत्र पाठक्रमं परित्यज्य आकाङ्क्षाक्रमेण तान् व्याचिख्यासुर्हेतुद्वयप्रयोगं तावत्प्रदर्शयति—**कारणकार्यविभागाद्, अविभागाद् वैश्वरूप्यस्येति** । तत्र "कारणकार्यविभागात्" इति प्रथमं हेतुं विवृणोति—**कारणे सत्कार्यमिति** । स्थितम्=नवमकारिकाविवरणे सिद्धान्तितमित्यर्थः । सन्त्येव=विद्यमानान्येव, निःसरन्ति सन्ति विभज्यन्ते=आविर्भूय विभक्तत्वेन प्रतीयन्ते, "निःसरन्ति" इति शत्रन्तस्य प्रथमाबहुवचने रूपम्, न तु लटिझौ रूपम्, "निविशमानानि" इति शानच्प्रत्ययान्तपाठानुरोधात् । तां प्रतीतिमेव प्रदर्शयति—**इदं कूर्म-**

ङ्गानि' इति, एवं निविशमानानि तस्मिन्नव्यक्तीभवन्ति, एवं कारणान्मृत्पिण्डाद् हेमपिण्डाद् वा कार्याणि घटमुकुटादीनि सन्त्येवाविर्भवन्ति विभज्यन्ते, सन्त्येव च पृथिव्यादीनि कारणात् तन्मात्रादाविर्भवन्ति विभज्यन्ते, सन्त्येव च तन्मात्राण्यहङ्कारात्कारणात्, सन्नेवाहङ्कारः कारणान्महतः, सन्नेव च महान् परमाव्यक्तात् । सोऽयं कारणात्परमाव्यक्तात्साक्षात्पारम्पर्येणान्वितस्य विश्वस्य कार्यस्य विभागः ।

प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमुकुटादयो विशन्तो-

---

शरीरमेतान्यस्याङ्गानीति । इदं कूर्मशरीरम्, एतानि कूर्मस्याङ्गानि" इत्येवं रूपेण विभक्ततया प्रतीयन्त इत्यर्थः । निविशमानानि=प्रविशन्ति सन्ति, तस्मिन्=कूर्मशरीरे, अव्यक्तीभवन्ति=स्वीयसूक्ष्मावस्थावसानं लभन्ते, "कूर्मस्याङ्गानि" इति संबध्यते । दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकानि प्रदर्शयति—एवं कारणान्मृत्पिण्डादित्यादिना । हेम=सुवर्णम् । तत्र मृत्पिण्डकार्याणि घटादीनि हेमपिण्डकार्याणि च मुकुटादीनि इति विवेकः । सन्त्येव=स्वकारणे मृत्पिण्डादौ विद्यमानान्येव, आविर्भवन्ति सन्ति, आविर्भवन्तीति शत्रन्तं बहुवचनम् । एवमग्रेऽपि । अहङ्कारात्कारणादिति । "आविर्भवन्ति विभज्यन्ते" इत्यनुवर्तते । सन्नेव=स्वकारणे महत्तत्वे विद्यमान एव, अहङ्कारः कारणान्महतः=बुद्धितत्त्वात्, अत्र "आविर्भवन् विभज्यते" इत्येवं लिङ्गवचनविपरिणामेन "आविर्भवन्ति विभज्यन्ते" इति प्रागुक्तस्य संबन्धो ज्ञेयः । एवमेव "सन्नेव च महान्—"इत्यत्रापि । उपसंहरति—सोऽयमिति । प्रागुपदर्शित इत्यर्थः । इदं "विभागः" इत्यनेनान्वेति । परमाव्यक्तात्=मूलप्रकृतेरित्यर्थः । तत्र महत्तत्त्वं कार्यं परमाव्यक्तेन सह साक्षादन्वितम्, घटादीनि च कार्याणि परम्परयाऽन्वितानीति विवेकः । अन्वितस्य=युक्तस्य, विश्वस्य=कृत्स्नस्य । तथा च—कारणे सतः कार्यस्यैव कूर्माङ्गानामिव निःसरणरूपपृथग्भावादिरूपविभागात् महदादिकार्यस्य तादृशतादृशावस्थाहेतुरव्यक्तमेवेति भावः ।

"कारणकार्यविभागात्" इति प्रथमं हेतुं व्याख्याय सम्प्रति "वैश्वरूप्यस्याविभागात्" इति द्वितीयं हेतुं व्याख्यातुमुपक्रमते—प्रतिसर्गे त्वित्यादिना । प्रतिसर्गे=संहारकाले तु, मृत्पिण्डं सुवर्णपिण्डं वा विशन्तो घटमुकुटादयः अव्यक्तीभवन्ति=मृत्सुवर्णाद्यात्मना अवस्थाय अनभिव्यक्ता भवन्तीत्यर्थः । "पूर्वं व्यक्ताः सन्त एव पश्चादव्यक्ता भवन्ति" इत्यर्थे "अभूततद्भावे च्विः" इत्यनेन च्विप्रत्यये कृते "अव्यक्ती भवन्ति" इति रूपम् ।

ननु "घटादयोऽव्यक्तीभवन्ति" इत्यनेन मृदाद्यात्मना घटादीनाम्, "तन्मात्राण्यव्यक्तयन्ति, अहङ्कारमव्यक्तयन्ति, महान्तमव्यक्तयन्ति" इत्यादिना

ऽव्यक्तीभवन्ति, तत्कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति, एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्राण्यव्यक्तयन्ति, एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति, एवमहङ्कारो महान्तमाविशन् महान्तमव्यक्तयति, महान् प्रकृतिं स्वकारणमाविशन् प्रकृतिमव्यक्तयति, प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव, सोऽयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्यस्य, 'स्वार्थिकः ष्यञ्' । तस्मात् कारणे

---

वक्ष्यमाणग्रन्थेन तन्मात्रादीनां च यद् अव्यक्तत्वं प्रतिपाद्यते, तन्न समीचीनम्[1], शब्दादिविहीनस्यैकस्य प्रधानस्यैवाऽव्यक्तपदाभिधेयत्वादित्याशङ्क्य प्रधानातिरिक्तानामापेक्षिकमव्यक्तत्वं व्युत्पादयति—तत्कारणरूपमेवेति । यतः संहारे स्वस्वकारणे तिरोभूतं सत् कार्यम् अनभिव्यक्तं भवति, अतः तादृगनभिव्यक्तं कार्यम् अपेक्ष्यैव तत्तत्कारणम् "अव्यक्तम्" इति प्रोच्यते, न तु प्रधानवत् मुख्यमव्यक्तत्वमादायेत्यर्थः । अयं भावः—प्रधानातिरिक्तस्य सर्वस्याऽवान्तरकारणजातस्य व्यक्तत्वेऽपि तत्तत्कार्यीयसूक्ष्माऽवस्थाऽऽख्याऽनभिव्यक्ततारूपधर्मसंबन्धात् सर्वस्यापि कारणरूपस्याऽव्यक्तत्वमिहोपचर्यत इति । कार्यकारणयोरभेदात् कार्यस्य अनभिव्यक्तत्वमेव कारणस्याऽव्यक्तत्वमिति निष्कर्षः ।

स्वापेक्षयेति । स्वकीयाऽनभिव्यक्ततावस्थापेक्षया तन्मात्राणि, अव्यक्तयन्ति=अव्यक्तानि कुर्वन्तीत्यर्थः । स्वकीयाऽनभिव्यक्तताऽवस्थायोजने तन्मात्राणाम् अव्यक्तत्वं सम्पादयन्तीति सरलार्थः । एवम् "अहङ्कारमव्यक्तयन्ति" इत्यादावपि व्याख्येयम् । "तत्करोति तदाचष्टे" इति णिचि कृते "अव्यक्तयन्ति" इति रूपम् ।

क्वचित्=कारणे, निवेशः=प्रवेशः, तस्या एव मूलकारणत्वादित्यर्थः । इति=अतो हेतोः, सा=प्रकृतिः । सर्वकार्याणामव्यक्तमेवेति । सर्वेषां कार्याणाम् अतीताऽनागताऽवस्थाया युक्तत्वेन अव्यक्तमेव, न तु महदादिवत् कदाचिदव्यक्तं कदाचिच्च व्यक्तम्, मुख्यमव्यक्तमिति यावत्, इत्यर्थः ।

उपसंहरति—सोऽयमिति । संहारकाले भवति सर्वकार्याणां कारणेनैकीभावरूपो लयः, तादृशकारणं विना च तेषां भिन्नानामेकीभावरूपो लय एव न स्यादित्यव्यक्तं कारणमस्तीति भावः । स्वार्थिक इति । स्वस्याः=प्रकृतेः, अर्थे भवः स्वार्थिकः । अध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्यायशब्दयोः पाठेन "स्वशब्दादेश्चेद् एतयोरेव" इति नियमार्थकेन ऐजागमो नेति बोध्यम् । विश्वरूपमेव वैश्वरूप्यमित्यर्थे 'चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्" इति वार्तिकेन स्वार्थिकः ष्यञ् प्रत्यय इत्यर्थः । "कारणकार्यविभागात्, वैश्व-

---

१ घटादीनामव्यक्तत्वं तन्मात्रादीनां चाव्यक्तत्वं न युक्तमित्यर्थः ।

कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्ति। इतश्चाव्यक्तमस्ति, इत्याह—"शक्तितः प्रवृत्तेश्च"। कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम्, अशक्तात्कारणात्कार्यस्यानुत्पत्तेः, शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या, न हि सत्कार्यपक्षे कार्यस्याव्यक्तताया अन्यस्यां शक्तौ प्रमाणमस्ति,

अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमनागतावस्थं न सिकतास्विति।

---

रूप्यस्याऽविभागात्" इति हेतुद्वयेन यत् सर्वेषां कार्याणाम् अव्यक्तपूर्वकत्वम्, अव्यक्तान्तत्वं च प्रसाधितम्, तत्साम्प्रतं निगमयति—तस्मादिति। अयमत्र निष्कर्षः—"यदाविर्भवति तत्सूक्ष्मावस्थापूर्वकमेव भवति, यच्च तिरोभवति तत्सूक्ष्मावस्थान्तमेव भवति, यथा कूर्माङ्गानि" इति व्याप्तिबलेन "महदादिकं कार्यं सर्गकाले स्वीयसूक्ष्मावस्थापूर्वकम्, संहारकाले च स्वीयसूक्ष्मावस्थान्तं भवितुमर्हति, आविर्भावतिरोभाववत्त्वात्, कूर्माङ्गवत्" इत्यनुमानेन यदाऽऽदावन्ते च सूक्ष्मावस्थाश्रयतया सिध्यति तदेवाऽस्माकं प्रधानमिति सिद्धा "कारणमस्त्यव्यक्तम्" इति प्रतिज्ञेति। "तद्धेदं तर्ह्यव्याकृतमासीत्—" अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना"। इत्यादय आगमा अपि अतर्कानुकूलत्वेन अनुसन्धेयाः॥ १५॥

इतश्च=वक्ष्यमाणहेतोरपीत्यर्थः। "शक्तितः प्रवृत्तेः" इति हेतुं व्याचष्टे—कारणशक्तित इति। कारणगतशक्तितः कार्यं प्रवर्तते=जायते, इति सिद्धम् इत्यर्थः। तत्र हेतुमाह—अशक्तादिति। शक्तिशून्यात् कारणात् कार्यस्योत्पत्तेरसंभवादित्यर्थः। नन्वस्तु शक्तियुक्तादेव कारणात् कार्यस्योत्पत्तिस्तथापि कथं कार्याणामव्यक्तकारणकत्वमत आह—शक्तिश्चेति। कार्यस्याऽनागताऽवस्थाऽऽख्याऽव्यक्ततायाः अन्या काचिच्छक्तिर्नाम नास्तीत्यर्थः। तत्र हेतुः—नहीति। हि=यतः। यथाऽनागतावस्थातोऽतिरिक्ता न काचिच्छक्तिः प्रामाणिकी, तथाऽऽवेदितं "शक्तस्य शक्यकरणात्" इति कारिकांशविवरणे, इति नेह विस्तार्यते। "तिलेष्वेव तैलोत्पादनशक्तिर्न वालुकासु" इत्येवं कार्योत्पत्तिनियामकत्वेन कल्प्यमाना शक्तिरपि तत्तत्कार्यीयाऽनागतावस्थैवेत्यभिप्रायेणाह—अयमेवेति। अस्य "भेदः" इत्यनेनान्वयः। तैलोपादानानाम्=तैलोत्पत्तिकारणानाम्, तिलानां सिकताभ्यः=वालुकाभ्यः, अयमेव भेदः=विशेष इत्यन्वयः। अयं कस्तत्राह—यदिति। एतेष्वेव=तिलेष्वेव। अयमाशयः—"महदादिकं शक्तिरूपसूक्ष्मावस्थापूर्वकं भवितुमर्हति, कार्यत्वात्, घटादिवत्" इत्यनुमानेन महदादेः शक्तिपूर्वकत्वं सिद्धं सत् निराश्रयशक्त्ययोगात् तस्याः शक्तेराश्रयभूतम् अव्यक्तमादाय पर्यवस्यतीति॥

स्यादेतत्, शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यतः कृतं ततः परेणाव्यक्तेन, इत्यत आह—"परिमाणाद्" इति।

परिमितत्वाद्—अव्यापित्वादिति यावत्। विवादाध्यासिनो महदादिभेदा अव्यक्तकारणवन्तः, परिमितत्वाद्, घटादिवत्।

---

ननु यद्यपि "शक्तितः प्रवृत्तेः, कारणकार्यविभागात्" इति हेतुद्वयेन कार्याणामव्यक्तपूर्वकत्वं साधितम्, "अविभागाद्वैश्वरूप्यस्य" इति हेतुना च अव्यक्तान्तत्वं प्रसाधितम्, तथापि नैतावता प्रधानकारणकत्वनिश्चयः, महान्तमेवाव्यक्तमादाय तत्पूर्वकत्वसिद्ध्या अर्थान्तरतापातसंभवादिति शङ्कते—स्यादेतदिति। बुद्धेरपि परिच्छिन्नत्वेन कार्यत्वान्न महतः परमाव्यक्तत्वम्, अपि तु तत्कारणत्वेन अनुमितस्य प्रधानस्यैव तत्त्वमिति समाधत्ते—परिमाणादिति। परिमितिः—परिमाणम्, भावे ल्युट्, इत्याशयेन परिमाणशब्दं व्याचष्टे—परिमितत्वादिति। परिच्छिन्नत्वादित्यर्थः। नन्वत्र किं परिमितत्वम्? यदि "देशपरिच्छिन्नत्वं परिमितत्वम्" इत्युच्यते, तदा "महदादिकम् अव्यक्तकारणकम्, परिमितत्वात्, घटादिवत्" इति प्रयोगे महदादिरूपपक्षैकदेशे नभसि परिमितत्वरूपहेतोरवर्तनाद् भागासिद्धत्वापातः, यदि तु "कालपरिच्छिन्नत्वं परिमितत्वम्" इति विभाव्यते, तदा "अन्तःकरणं त्रिविधम्—" इति (३३) कारिकाविवरणे पञ्चविंशतितत्त्वातिरिक्तकालानभ्युपगमस्य वक्ष्यमाणत्वेन स्वरूपासिद्धिः स्यात्, हेतोः स्वरूपानिष्पत्त्या पक्षे हेतोरेवाभावात्; अथ यदि "संख्येयतारूपं वस्तुपरिच्छिन्नत्वात्मकं परिमितत्वम्" इति स्वीक्रियते, तदा सत्त्वादीनां व्यक्तित्रयात्मकत्वेन परस्परं भिन्नत्वेन परिमितत्वापत्त्या व्यभिचारः स्यात्, गुणानामेव अव्यक्तत्वेन तत्र "अव्यक्तकारणकत्व"रूपस्य साध्यस्य असत्त्वात् साध्याभाववति गुणत्रये "परिमितत्व"-हेतोर्वृत्तित्वेन परिमितत्वाऽव्यक्तकारणकत्वयोर्व्याप्यव्यापकभावस्य वक्तुमशक्यत्वात्, इत्येतामाशङ्कां मनसि निधाय "परिमितत्वात्" इत्यस्यार्थमाह—अव्यापित्वादिति। सर्वं परिणामिनं न व्याप्नोतीति अव्यापि, तस्य भावः अव्यापित्वम्, तस्मादित्यर्थः। एवं च नभसः "नहि कार्यं कारणं व्याप्नोत्यपि तु कारणं कार्यम्" इति न्यायेन स्वकारणशब्दतन्मात्राद्यव्यापित्वेन न हेतोर्भागासिद्धत्वम्, निखिलपरिणाम्यनुवृत्तत्वरूपव्यापित्वाभावात्। नापि व्यभिचारः, "अन्योन्यमिथुनाः सर्वे" इत्यादिना प्राग् गुणानां परस्परं व्याप्तेरभ्युप-

---

१ अभिमताऽसिद्धिरर्थान्तरता। २ परमाव्यक्तत्वम्। ३ नभसः सर्वदेशगतत्वेन तत्रैतादृशपरिमितत्वासत्त्वादिति भावः। पक्षैकदेशावृत्तिर्हेतुर्भागासिद्धः, अयमपि स्वरूपासिद्ध एवान्तर्भवतीति तार्किकाः। ४ आदिना अहङ्कारमहदव्यक्तानामुपग्रहः। ५ गुणानां परस्परं व्याप्तिश्च योगभाष्यकारैरप्युक्ता—"एते गुणा इतरेतराश्रयेण उपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति" इति ग्रन्थेन (यो० २।१५)।

घटादयो हि परिमिति मृदाद्यव्यक्तकारणका दृष्टा उक्तमेतद् यथा कार्यस्याव्यक्तावस्था कारणमेवेति यन्महतः कारणं तत्परमाव्यक्तं ततः परतराऽव्यक्तकल्पनायां प्रमाणाभावात् ।

---

गमेन तेषां व्यापित्वाङ्गीकारात् । एतेन यथा सत्त्वादिभिर्निखिलं कार्यमाविष्टं न तथा सत्त्वरजस्तमांसि परस्परं व्याप्नुवन्ति, मिथः कार्यकारणभावाभावादिति गुणेषु व्यभिचारो दुर्वार इति शङ्का निरस्ता । ननु "प्रतिसर्गावस्थायां सत्त्वं सत्त्वरूपतया रजो रजोरूपतया वर्तते" इत्यनुपदमेव वक्ष्यमाणत्वेन प्रलये गुणानां परस्परव्याप्तेरभावाद् अव्यापकता तदवस्थैवेति चेत्। अत्राहुः—यथा व्याप्त्या-विद्यमानयोरेव घर्महिमयोर्हेमन्तग्रीष्मयोरभिभवः, ग्रीष्महेमन्तयोश्च तयोरुद्भवः सर्वैः स्वीक्रियते, तथा व्यापकानामेव सतां तेषां प्रलयेऽभिभवः सृष्टौ तूद्भवः स्वीक्रियते, सत्कार्यवादित्वात् सांख्यानामिति प्रलयेऽपि गुणानां परस्परं व्याप्तेरभ्युपगमेन तेषामव्यापिताया वक्तुमशक्यत्वादिति । अन्ये तु निखिलपरिणाम्यनुवृत्तियोग्यतावत्त्वैव प्रकृते व्यापिता गृह्यते, तथाच योग्यताया नित्यत्वात् प्रलयेऽनुवृत्त्यभावेऽपि नाव्यापिता गुणानामिति वदन्ति ॥

दृष्टान्ते साध्यसमन्वयं दर्शयति—घटादयो हीति । ननु मृदादेः कथमव्यक्तत्वमत आह—उक्तमिति । "तत्कारणरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवति" इति ग्रन्थेन कार्यस्यानागतावस्थाख्यानभिव्यक्ततामपेक्ष्य तत्तत्कारणरूपमव्यक्तमित्युच्यत इत्यनुपदमेव प्रागुक्तम्, इति न दृष्टान्ते साध्यवैकल्यमित्यर्थः ।

फलितमाह—यन्महत इति । यथाऽहङ्कारादिकारणत्वेन महदादिरूपमव्यक्तं सिध्यति, तथा महत्तत्त्वकारणत्वेनापि किंचिदव्यक्तं सिद्धम्, तथाच—यन्महत्कारणत्वेन सिद्धं तदेव नः परमाव्यक्तं प्रधानमित्याशयः। एवं च महतोऽव्यापित्वान्न तस्य परमाव्यक्तत्वमिति न तत्राव्यक्तत्वविश्रान्तिरिति "कृतं महतः परेणाव्यक्तेन" इति यत् पूर्वं शङ्कितं तन्निर्दलितमिति निष्कर्षः ।

ननु "प्रधानमपि यत्किंचिदव्यक्तकारणकं भवितुमर्हति, अव्यक्तत्वात्, महदादिवत्" इत्यनुमानेन अन्यत् परतरम् अव्यक्तं कुतो न कल्प्यत इत्याशङ्क्य समाधत्ते—ततः परतरेति । ततः=परमाव्यक्तात् प्रधानादित्यर्थः । "प्रधानमपि यत्किंचिदव्यक्तकारणकम्–" इति प्रागुक्तमनुमानं हि न प्रमाणतां भजति, यत्राव्यक्तकारणकत्वं महदादौ तत्राव्यापित्वं, यत्र चाव्यक्तत्वं प्रधाने न तत्रा-

---

१ एतेन "प्रलये व्याप्तिस्वीकारे सर्गारम्भे गुणानां गुणप्रधानभावेनावस्थानरूपा वैषम्यावस्था, प्रलये तु परस्परानाश्रितरूपेणावस्थानरूपा साम्यावस्था" इति विशेषः कथं सिध्येदिति शङ्कनमपि निरस्तं वेदितव्यम्, अभिभवानभिभवकृतस्य विशेषस्य तत्र तत्र सत्त्वादिति नैव प्रलयेऽपि गुणानामव्याप्तिरूपः संकोचः ।

इतश्च—विवादाध्यासिता भेदा अव्यक्तकारणवन्तः—समन्वयात् । भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते, यानि च यद्रूपसमनुगतानि तानि तत्स्वभावाऽव्यक्तकारणकानि यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणकाः, इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम् ।

---

व्यापित्वम्" इत्येवं साध्यव्यापकत्वे सति साधनाव्यापकत्वेन अव्यापित्वरूपोपाधिग्रस्तत्वादिति भावः ।

नन्वनुमानस्य सामान्यविषयकत्वेन विशेषबोधने सामर्थ्याभावात् प्रागुक्तानुमानेन सिध्यत्तत् यत्किंचिदव्यक्तरूपं कारणं ब्रह्मैव सिध्येदिति कथं प्रधानकारणत्वनिश्चय इत्याशङ्कानिराकरणाय हेत्वन्तरमवतारयति—इतश्चेति । वक्ष्यमाणहेतोरपीत्यर्थः । भेदाः=महदादिविकाराः, अव्यक्तकारणवन्तः=सुखदुःखमोहात्मकसामान्याव्यक्तवस्तुप्रकृतिका इत्यर्थः । वक्ष्यमाणहेतुमेवाह—समन्वयादिति । तदर्थमाह[1]—भिन्नानामिति । अध्यवसायादिलक्षणतत्तदसाधारणधर्मवत्त्वेन मिथोभिन्नानां बुद्ध्यादीनां या सुखाद्यात्मसाधारणधर्मवत्त्वेन एकरूपता स समन्वय इत्यर्थः । तथा च सुखाद्यात्मकसामान्यान्वितत्वादिति तदर्थः फलति । एतदेव प्रदर्शयन् हेतोः पक्षधर्मतामाह—सुखदुःखेति । अत्र "यद् येनान्वितं तत्तदुपादानकम्" इति सामान्यव्याप्तिरेव भवति, न जातु "यत्सुखाद्यन्वितं तत्सुखाद्यन्वितवस्तूपादानकम्" इति विशेषव्याप्तिः, घटादिरूपे दृष्टान्ते तस्या असंभवादित्याशयेन सामान्यमुखां[2] व्याप्तिं दर्शयति—यानि चेति । यानि च घटादीनि यत्स्पर्शादिमन्मृत्सामान्यरूपसमन्वितानि, तानि तत्स्पर्शादिस्वभावमृदात्मसामान्याव्यक्तोपादानकानीत्यर्थः । एतदभिप्रेत्यैवोदाहरणं दर्शयति—यथा मृद्धेमेति । निगमनमाह—इति कारणमिति । इति=इत्येवम् उक्तहेतोर्वा इत्यर्थः । भेदानाम्=महदादिकार्याणामित्यर्थः । अनेन चानुमानेन यत्सुखाद्यात्मकाव्यक्तं कारणं सिध्यति, तत् तादृग् [ सुखाद्यात्मकं ] गुणत्रयवत् प्रधानमेव, न ब्रह्म, तस्य निर्गुणत्वेन त्रिगुणत्वाभावादिति न ब्रह्मणोऽर्थान्तरतेत्यपि बोध्यम् ॥

स्यादेतद्, यद्धि प्रवृत्तिशीलं तदेव भवति कारणम्, यच्च न तथा तत् कारणमपि न भवति, यथा पुरुषः, इति कारणत्वोपपत्तये प्रधानस्य प्रवृत्तिमत्त्वं

---

१ समन्वयपदार्थम्(:) २ 'सामान्यमुखी व्याप्तिः, फलमुखी चानवस्था' इत्यादयः प्रयोगा असाधव एव, अप्राणिस्थत्वेन स्वाङ्गत्वाभावात् ङीषोऽप्रवृत्तेरिति बोध्यम् ।

अव्यक्तं साधयित्वास्य प्रवृत्तिप्रकारमाह—"प्रवर्तते त्रिगुणत"

वक्तव्यम्, तथा च केन प्रकारेण तस्य प्रवृत्तिः, किं स्थितिसंस्कारेण प्रवृत्तिरुत वा गतिसंस्कारेण? । तत्र नाद्यः, सर्वदैव स्थितिमत्त्वेन विकाराजननात् "प्रधीयते=जन्यते विकारजातमनेन" इति व्युत्पत्तिनिमित्तकव्यपदेशालाभेन प्रधानत्वस्यैवानुपपत्तेः। न द्वितीयः, सर्वदैव कार्यजनने व्यापृतत्वान्न कदाचित् कार्यं संहरेदिति विकाराणां सदातनत्वापत्तेः, "प्रधीयते=निधीयते—लीयते विकारजातं यस्मिन्" इति प्रधानपदव्युत्पत्तिनिमित्तकस्य प्रधानव्यपदेशस्योच्छेदापत्तेश्च । इत्याकाङ्क्षायां प्रधानप्रवृत्तेरनैकान्तिकत्वं व्यवस्थापयितुं प्रवृत्तं कारिकांशमवतारयति—अस्य प्रवृत्तिप्रकारमाह—प्रवर्तते त्रिगुणत इति।

द्विविधा हि प्रधानस्य प्रवृत्तिः,—प्रलयकालिकी सर्गकालिकी च, तत्र "सत्त्व-

१ अन्योन्यमसंमिलितानां गुणानां यः कार्यजननाननुगुणः साम्यपरिणामपरम्परावाही परिणामः स स्थितिसंस्कारः। विलक्षणतत्तत्कार्यजननोन्मुखो यो गुणानां वैषम्यपरिणतिपरम्परावाही परिणामः स गतिसंस्कारः। २ सर्वविकारजनकत्वरूपं यन्मूलकारणस्य प्रधानत्वं तन्न संभवेदित्यर्थः। ३ तथाचाहुः पञ्चशिखाचार्याः—"प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्यात्" इति। ४ "स्थितिसंस्कारेणैव प्रधानस्य प्रवृत्तिर्न गत्या, गतिसंस्कारेणैव वा प्रवृत्तिर्न स्थित्या" इति पक्षयोः अन्यतरपक्षावधारणरूपनियमाभावमित्यर्थः। "कदाचित् स्थित्या कदाचिच्च गत्या भवति प्रधानस्य प्रवृत्तिः" इत्येवमनियमं बोधयितुमिति यावत्। ५ तथा च कापिलसूत्रम्—"साम्यवैषम्याभ्यां कार्यद्वयम्" (६।४२) इति। सर्गप्रलयरूपं यत्कार्यद्वयं तद् गुणानां साम्यवैषम्याभ्यां भवति, साम्यावस्थातः प्रलयः, वैषम्यावस्थातश्च सर्ग इत्येतत्सूत्रार्थः। पञ्चशिखाचार्या अप्याहुः—"उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा" इति। अस्य चायमर्थः—उभयथा=स्थित्या

1 प्रलयकालीना कार्यारम्भरहिता गुणानां साम्यावस्था या सा स्थितिः, सृष्टिकालीना या गुणानां कार्यारम्भरूपाऽवस्था सा च गतिः। प्रधानं (प्रकृतिः) चेत् स्थित्यवस्थाशालि तदा कदापि तत उत्पत्तिर्न स्यात्, अथ गत्यवस्थाशालि तदा सर्वदैवोत्पत्त्या कदापि प्रलयो न स्यात्, इति वादिशङ्कावारणाय—"प्रधानं स्थित्यैव वर्तमानम्"—इत्यादिपञ्चशिखग्रन्थः। प्रधानं स्थित्या वर्तमानं चेन्मन्येत तर्हि कार्यस्य न करणात् अप्रधानं स्यात्, यत्र सूक्ष्मरूपेण स्थितं सत् पुनरुत्पद्यते तस्यैव प्रधानत्वात्, अथ गत्या वर्तमानं चेत् तदङ्गीक्रियेत तदापि विकारस्य नित्यत्वात् अप्रधानं स्यात्, पदार्थलयाधारस्यैव प्रधानशब्दवाच्यत्वात्। अत उत्पत्ति(सृष्टि)काले गत्या प्रलयकाले च स्थित्येति द्विधैव प्रधानस्य प्रवृत्तिरभ्युपेयते, एवं हि प्रधानस्य प्रधानेति नाम्नः संगतिर्भवति दोषश्च न कश्चनापतीति तस्य व्यक्तोऽर्थः।

इति, प्रतिसर्गावस्थायां सत्त्वं रजस्तमश्च सदृशपरिणामानि भवन्ति, परिणामस्वभावा हि गुणा नाऽपरिणम्य क्षणमप्यवतिष्ठन्ते, तस्मात्सत्त्वं सत्त्वरूपतया, रजो रजोरूपतया, तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते, तदिदमुक्तं—"त्रिगुणत" इति।

प्रवृत्त्यन्तरमाह—"समुदयाच्च" इति। समेत्योदयः समुदयः—स-

---

रजस्तमसाम् अन्योन्यगुणप्रधानभावानपेक्षा साम्येन स्वरूपमात्रेण अवस्थानरूपा सदृशपरिणामपरम्परावाहिनी प्रथमा", सत्त्वरजस्तमसां परस्पराङ्गाङ्गित्वप्रयुक्ता साम्यावस्थानात्प्रच्युतिरूपा विसदृशपरिणतिपरम्परावाहिनी च द्वितीया। तत्र प्रथमां प्रलयकालिकीं प्रवृत्तिं व्याख्यातुं "त्रिगुणतः" इति व्याचष्टे—प्रतिसर्गावस्थायामिति। प्रलयावस्थायां सत्त्वादीनि गुणानि सदृशपरिणामानि भवन्ति, न तु सर्गारम्भ इव विलक्षणतत्तन्महदहङ्कारादिरूपेण परिणामशीलानीत्यर्थः। एतत्स्पष्टयति—सत्त्वं सत्त्वरूपतयेत्यादिना। लघुत्वादिरूपस्वानुरूपपरिणामेनैव प्रलये सत्त्वं प्रवर्तते, न तु केनचिदन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमते, एवं रजोऽपि उपष्टम्भकत्वादिरूपस्वानुरूपपरिणामेनैव तत्र प्रवर्तते,—एवं तमोऽपि गुरुत्वादिरूपस्वानुरूपपरिणामेनैव तत्र प्रवर्तते, न केनचिदन्येन गुणेन सह संयुज्य विलक्षणतत्तत्कार्यरूपेण परिणमत इत्यर्थः।

किमस्य परिणामस्य प्रयोजनमत आह—परिणामस्वभावा हीति। हि=यतः, परिणामस्वभावाः, अतः अपरिणमय्य=परिणामम् अप्राप्य, परिणतिशीलताम् अपहायेति यावत्, क्षणमपि गुणा न अवतिष्ठन्ते, इत्यर्थः। न हि स्वभावः प्रयोजनमपेक्षत इति भावः।

तदेतदाद्या प्रवृत्तिः कुतस्तत्राह—त्रिगुणत इति। परस्पराऽमिलितगुणत्रयादित्यर्थः। ततश्च "त्रिगुणतः" इत्यनेन प्रलयकालिकी प्रधानप्रवृत्तिरुक्तेति ध्येयम्।

सम्प्रति सर्गकालिकीं प्रधानप्रवृत्तिमभिधातुं प्रवृत्तं कारिकांशमवतारयति—प्रवृत्त्यन्तरमिति। सर्गकालिकीं प्रवृत्तिमित्यर्थः। समुदायशब्दं व्याचष्टे—

---

गत्या च अस्य=प्रधानस्य प्रवृत्तिरङ्गीक्रियते अनया रीत्यैव प्रधानं प्रधानव्यवहारमवाप्नोति अन्यथा=एकतरपक्षस्वीकारे तु नादः प्रधानव्यवहारं लब्धुं शक्नुयादिति। प्रधीयते=जन्यते विकारजातमनेनेति, प्रधीयते=लीयते विकारजातं यस्मिन्निति च तद्व्युत्पत्तेः। तत्र 'त्रिगुणत' इत्यनेनाद्या, प्रवृत्तिरुक्ता, 'समुदयाच्च' इत्यनेन च द्वितीयेति विवेकः।

१ स्वार्थिकणिजन्ताद्यपि रूपमपरिणमय्येति, अतो व्याचष्टे—परिणाममप्राप्येति। 'परिणम्य' इति तु साधीयान् पाठः।

मवायः, समुदयश्च गुणानां न गुणप्रधानभावमन्तरेण संभवति, न च गुणप्रधानभावो वैषम्यं विना, न च वैषम्यमुपमर्द्योपमर्दकभावाद् ऋते, इति महदादिभावेन प्रवृत्तिर्द्वितीया ।

स्यादेतत्, कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिः, इत्यत

---

समेत्योदय इति । समेत्य=परस्परं मिलित्वा, उदयः=आविर्भावः, इत्यर्थः । समुदयशब्दस्य पर्यायमाह—समवाय इति । परस्परसंमिश्रणमित्यर्थः । नैयायिकाभिमतः सम्बन्धविशेषस्तु नात्र समवायशब्देनाभिप्रेतः, तस्य साङ्ख्यैरस्वीकृतत्वात् । तथा च सांख्यसूत्रम्—"न समवायोऽस्ति प्रमाणाभावात्" (५।९९) इति । समवायनिराकरणप्रकारस्तु (२।२।१३) इत्येतत्सूत्रभाष्य एव द्रष्टव्यो विस्तरभिया नेह तन्यते ।

समुदयश्चेति । गुणानां समवायश्च, अन्तरेण=विना न संभवति, परस्परविरुद्धानां समबलानां च गुणानां समवायो न संभवतीति गुणप्रधानभावेन समवायो वाच्य इत्यर्थः । नचेति । गुणप्रधानभावश्च[1] वैषम्यम्=तारतम्यम्, न्यूनाधिक्यं विना न संभवतीति वैषम्यमपि अवश्यं स्वीकर्तव्यमित्यर्थः । न चेति । वैषम्यमपि, उपमर्द्योपमर्दकभावात्=अभिभाव्याऽभिभावकभावात्, ऋते=विना, न संभवति इति अभिभाव्याभिभावकभावोऽपि अवश्यमभ्युपेय इत्यर्थः । तथा च अदृष्टवशात्[2] पूर्वं गुणेषु क्षोभो जायते, "गुणक्षोभे जायमाने महान् प्रादुर्बभूव ह" इत्युक्तेः । ततश्च कश्चिद् गुण उद्भूतः सन् अभिभावको भवति, कश्चिच्च अनुद्भूतः सन् अभिभाव्यो भवति, ततश्च साम्यावस्थानात् प्रच्युतिरूपं वैषम्यमुपजायते, ततश्च परस्परं गुणप्रधानभावेन मिलित्वा महदादिरूपेण परिणामो भवति, इत्येवंविधा या प्रवृत्तिः सा द्वितीयेति सरलार्थः ॥

ननु गुणप्रधानभावमापन्नानां गुणानां "सत्त्वप्रधानमेकं रूपं, रजः प्रधानं चापरं, तमः प्रधानं चेतरत्" इत्येवमनेकरूपत्वेऽपि "रजस्तम उपसर्जनं[3] सत्त्वं, सत्त्वतम उपसर्जनं रजः, सत्त्वरजउपसर्जनं तमः" इत्येवमेकरूपाणां गुणानामनेकरूपा प्रवृत्तिर्भवितुं नार्हतीति शङ्कते—कथमेकरूपाणामिति । यद्वा—"स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः । पशवश्च मृगाश्चैव जघन्या तामसी गतिः" ॥ इति (४२) श्लोकत आरभ्य "ब्रह्माविश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः" इत्यन्तैः श्लोकैर्मनुना द्वादशाध्याये "ब्रह्मा मरीच्यादयश्च प्रजापतय उत्तमाः सात्त्विकाः, पितरः साध्याश्च देवाद्याश्च मध्यमाः सात्त्विकाः, नक्षत्राणि दैत्या विप्राद्याश्च अधमाः सात्त्विकाः, एवं गन्धर्वगुह्यकयक्षादय उत्तमा राजसाः, क्षत्रियादयश्च मध्यमा

---

१ एकेन अन्यस्य अभिभवे तु अभिभूतस्य गुणत्वम् अभिभावकस्य च प्राधान्यमिति गुणप्रधानभाव उपपन्नो भवतीति भावः । २ सृज्यमानप्राणिकर्मवशादित्यर्थः । ३ गौणः ।

आह—'परिणामतः सलिलवद्" इति। यथा हि वारिदविमुक्तमुदकमेकरसमपि, तत्तद्भूविकारानासाद्य नारिकेलतालतालीविल्वचिरबिल्वतिन्दुकाऽऽमलकप्राचीनामलककपित्थादिफलरसतया परिणमद् मधुराम्ललवणतिक्तकषायकटुतया विकल्प्यत एवमेकैकगुणसमुद्भवात् प्रधानगुणानाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्तयन्ति, तदिदमुक्तं—"प्रतिप्रतिगुणाश्रयविशेषाद्" एकैकगुणाश्रयेण यो विशेषस्तस्मादित्यर्थः॥ १५॥ १६॥

---

राजसाः, नटमल्लादयश्च अधमा राजसाः, एवं राक्षसपिशाचादय उत्तमाः तामसाः, हस्तितुरङ्गसिंहादयो मध्यमास्तामसाः, कीटसर्पमत्स्यस्थावरादयश्च अधमास्तामसाः" इत्येवम् एकैकस्मात् तत्तद्गुणप्रधानारूपाद् अनेकरूपः परिणामः उक्तः, तथा च एकस्मात् सत्त्वप्रधानादिरूपात् कथमनेकविधः परिणाम इति शङ्कितुराशयः।

परिणामतः सलिलवदिति व्याचष्टे—यथा हीत्यादिना। वारिदविमुक्तम्=मेघमुक्तम्, उदकम्=जलम्, एकरसमपि=मधुररसमपि, तत्तद्भूविकारान्=तान् तान् पृथिवीविकारान् पार्थिवपरिणामान् तत्तन्नारिकेलादिफलानीति यावत्, आसाद्य=प्राप्य, इत्यर्थः। तदेवाह—नारिकेलेत्यादिना। नारिकेलः=नालिकेरः, "नारियल" इतिख्यातः, तालः=वृक्षभेदः, ताली=जटौषधिः, "तालः करतलेऽङ्गुष्ठमध्यमाभ्यां च संमिते। गीतकालक्रियामाने करस्फाले द्रुमान्तरे। वाद्यभाण्डे च कांस्यस्य त्सरौ ताली जटौषधौ। क्लीबं तु हरिताले स्यात्"। इति मेदिनी। बिल्वः=बिल्ववृक्षः, चिरबिल्वः= करञ्जवृक्षः, तिन्दुकः=स्फूर्जकः, "तेंदु" इति ख्यातः, आमलकः=धात्रीद्रुमः, "आंवला" इति ख्यातः, प्राचीनामलकम्=वारिबदरम्, पानीयाऽऽमलकं वा, कपित्थः="कैथ" इति ख्यातस्तरुभेदः, विकल्प्यते=विभिन्नत्वेन अनुभूयते, प्राणिभिरित्यर्थः।

दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति। तथेत्यर्थः। यद्यपि सत्त्वप्रधानं गुणरूपम् एकमेवास्ति, तथापि अप्रधान (अमुख्य) तत्तद्गुणतारतम्येन प्रधानरूपस्यानेकरूपस्य अनेकरूपतापत्त्या परिणामभेदनिष्पत्तिरित्याशयं हृद्यारूढं विधाय ब्रूते—एकैकगुणेति। एकैकगुणस्याऽऽविर्भावादित्यर्थः।

"प्रतिप्रतिगुण" इति वीप्साया अर्थमाह—एकैकगुणाश्रयेणेति। "पूर्वं तत्तद्गुणप्रधानत्वेन रूपत्रयम्, पुनश्चैकैकस्य तमोलेशोपरक्तरजउपसर्जनसत्त्वप्रधान-रजोलेशसंवलित (संमिश्रित) तमउपसर्जनसत्त्वप्रधानत्वादिरूपेण अनेकरूपत्वम्" इत्येवम् एकैकगुणाश्रयेण यो विशेषः=अनेकत्वम्, तस्मात्, परिणामतः=अनेकरूपेण परिणामाद् अनेकरूपा प्रवृत्तिः संभवतीत्यर्थः॥ १५॥ १६॥

---

१ सलिलस्येव परिणामादित्यर्थः। सलिलस्य परिणामभेदमुपपादयति—यथेति। (आ० वा०)।

ये तु तौष्टिका अव्यक्तं वा महान्तं वाहङ्कारं वेन्द्रियाणि वा भूतानि वात्मानमभिमन्यमानास्तानेवोपासते, तान् प्रत्याह—

**सङ्घातपरार्थत्वाद्, त्रिगुणादिविपर्ययादधिष्ठानात् ।**
**पुरुषोऽस्ति भोक्तृभावात्, कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥**

"सङ्घातपरार्थत्वाद्" इत्यादि ।

## अथ पुरुषसिद्धिनिरूपणम् ।

किंफला प्रधानप्रवृत्तिः, न च पुरुषार्था, तत्र मानाभावादिति प्राप्ते, पुरुषे प्रमाणप्रदर्शनपरां कारिकामवतारयति—**ये त्विति** । प्रकृत्यादिषु लयमात्रेणैव कृतकृत्यतारूपा तृप्तिस्तुष्टिः, सैवं प्रयोजनं येषां ते **तौष्टिकाः**, "बाह्या विषयोपरमात् पञ्च" इति ५० कारिकायां वक्ष्यमाणायाः पञ्च बाह्यास्तुष्टयस्तद्वन्त इत्यर्थः । ये खलु प्रकृतिमहदहङ्कारतन्मात्रभूतेन्द्रियाणाम् अन्यतमम् आत्मत्वेन अभिमन्यमानाः, तदुपासनया तदुपासनवासितमानसाः सन्तः पिण्डपातानन्तरं तेष्वेवाव्यक्तादिषु लयमेष्यन्ति, यांश्चाधिकृत्य—"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं, सहस्रं त्वाभिमानिकाः ॥ बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः । निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते" ॥ इति वायुपुराणे पठ्यते, ते योगिविशेषाः तौष्टिका इत्युच्यन्ते, तदेवाह—**अव्यक्तं वेत्यादिना** ।

**सङ्घातपरार्थत्वादिति** । पञ्चम्यन्तानां पञ्चानां हेतूनां "पुरुषोऽस्ति" इत्यनेनान्वयः । संघातानाम्=सम्भूयकारिणाम्, स्वार्थक्रियायामितरसापेक्षाणामिति यावत्, परार्थत्वात्=स्वेतरस्य भोगापवर्गफलकत्वात्, पुरुषोऽस्ति । हेत्वन्तरमाह—**त्रिगुणादीति** । त्रिगुणादेर्विपर्ययः=अभावो यत्रासौ त्रिगुणादिविपर्ययः, तस्माद्-अत्रिगुणादिमत्त्वादिति यावत्, पुरुषोऽस्ति । "त्रिगुणादि" इति आदिशब्देन अविवेकित्वादिकं पूर्वोक्तं ग्राह्यम् । हेत्वन्तरमाह—**अधिष्ठानादिति** । अधिष्ठातृत्वादित्यर्थः, पुरुषोऽस्ति । हेत्वन्तरमाह—**भोक्तृभावादिति** । साक्षित्वादित्यर्थः, पुरुषोऽस्ति । हेत्वन्तरमाह—**कैवल्यार्थप्रवृत्तेश्चेति** । मुक्तिकृते शिष्टानां प्रवृत्तिदर्शनाच्चेत्यर्थः, पुरुषोऽस्ति, इत्यन्वयः ॥१७॥

---

१ तुष्टिशब्दात् 'प्रयोजनम्' (पा० ५।१।१०९) इति सूत्रेण ठञि तौष्टिक इति साधुरित्यभिप्रायेण विगृह्णाति—**सैव प्रयोजनमिति** । २ यद्यपि तत्र नव तुष्टय उक्तानामाध्यात्मिकीनां चतसृणां नात्र ग्रहणम्, तासामात्मानात्मविवेकपूर्वकत्वादेषां-चेन्द्रियादिचिन्तकानामात्मानात्मविवेकराहित्यादत उक्तम्—बाह्या इति । ३ संघाताश्च ते परार्थाश्चेति संघातपरार्थाः । संघाता इति हेतुगर्भविशेषणम् । यतः संघाता अतः परार्थास्तत्त्वादित्यर्थः । अव्यक्तादीनामिति शेषः । तथाच अव्यक्तादयः संघातत्वेन यतः परोपकारकाः अतस्तदुपकार्यः कश्चित्परोऽस्तीति तद्व्यतिरिक्तः पर एवात्मा इत्याचार्याभिप्रायः ।

पुरुषोऽस्ति अव्यक्तादेर्व्यतिरिक्तः, कुतः, सङ्घातपरार्थत्वाद्, अव्यक्तमहदहङ्कारादयः परार्थाः,

सङ्घातत्वाच्छयनासनाभ्यङ्गादिवत्, सुखदुःखमोहात्मकतया अव्यक्तादयः सर्वे सङ्घाताः।

स्यादेतत्, शयनासनादयः सङ्घाताः संहतशरीरार्थाः दृष्टाः न त्वात्मानमव्यक्ताद्यतिरिक्तं प्रति परार्थाः, तस्मात् सङ्घातान्तरमेव परं गमयेयुर्न त्वसंहतमात्मानम्, इत्यत आह "त्रिगुणादिविपर्ययाद्" इति।

---

सङ्घातपरार्थत्वादिति कारिकया साधनीयमंशं दर्शयति—पुरुषोऽस्तीति। यद्यपि अहंप्रत्ययविषयतयाऽऽत्माऽसिद्ध एवेति न पृथक् तत्साधनमावश्यकम्, तथापि अहंप्रत्यये तद्विषयस्य देहाद्यतिरिक्तत्वानवगाहनात् तस्य देहाद्यतिरिक्तत्वसाधनाय अयमारम्भ इत्याशयेन पुरुषं विशिनष्टि—अव्यक्तादेर्व्यतिरिक्त इति। भिन्न इत्यर्थः। "सङ्घातपरार्थत्वात्" इत्याद्यहेतुना विवक्षितमनुमानप्रयोगं दर्शयति—अव्यक्तेति। परार्थाः=अव्यक्ताद्यतिरिक्तचेतनार्था इत्यर्थः। तत्र हेतुः—सङ्घातत्वादिति। संहन्यन्ते=मिश्रीभवन्ति अनेके विशेषा यस्मिन् स सङ्घातः, सङ्घातस्य भावः सङ्घातत्वं तस्मात् सङ्घातत्वात्, अनेकात्मकत्वादिति यावत्। दृष्टान्तमाह—शयनेति। ननु भवतु तूलिकोपधानप्रच्छादनवसनादिना शयनादीनामनेकात्मकत्वम्, अव्यक्तादेस्तु अनेकात्मकत्वविरहात् कथं सङ्घातत्वम्? इति जिज्ञासायां प्रकृत्यादेः सङ्घातत्वं प्रदर्शयन् हेतोः पक्षधर्मतां प्रदर्शयति—सुखदुःखमोहात्मकतयेति। सङ्घाताः=संहननवन्तः, संहननं चात्र–अनेकैर्विशेषैः संमिश्रणम्। तथा च—"प्रधानादयः परोपभोगजनकाः, सुखदुःखमोहात्मकत्वात्" इत्यनुमानं फलितम्। सङ्घातः=पृथिव्यन्तसमूहः, तस्य शय्यादिवत् परार्थत्वात्=परप्रयोजनार्थत्वात्, प्रयोजनं च=सुखदुःखान्यतरसाक्षात्काररूपो भोगः, तस्य च [भोगस्य] जडे बाधात् चेतनस्तद्वान् पुरुषोऽस्ति, युक्तिप्रमाणादिति भावः" इति सांख्यचन्द्रिकाकारः॥

"शयनासनादिवत्" इति दृष्टान्तबलेन संघातान्तरस्यैव परस्यानुमानमुचितं नतु असंहतपुरुषस्येतिशङ्कते—शयनासनादय इति। संहतशरीरार्थाः=संमिश्रितशरीरप्रयोजनाः, दृष्टाः "लोके" इति शेषः। अव्यक्ताद्यतिरिक्तम्=प्रधानादिभिन्नम्, गमयेयुः=अनुमापयेयुः, एवकारव्यवच्छेद्यं दर्शयति—नत्विति। तामिमां शङ्कां परिहर्तुं द्वितीयं हेतुमवतारयति—त्रिगुणादिविपर्ययादिति।

---

१ संघातपदमधिकरणघञन्तमित्यनेन स्फोरितम्। २ शयनं=खट्वादि, आसनं=पीठादि। एतेषां नानावयवघटितत्वेन संहतत्वं प्रसिद्धमेव। अव्यक्तादीनां तु सत्त्वरजस्तमोघटितत्वात्तत्त्वमिति समुदायार्थः।

अयमभिप्रायः—सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात् तेनापि सङ्घातान्तरार्थेन भवितव्यम्, एवं तेन तेनेत्यनवस्था स्याद्, न च व्यवस्थायां सत्यामनवस्था युक्ता, कल्पनागौरवप्रसङ्गात् । न च प्रमाणवत्त्वेन कल्पनागौरवमपि मृष्यत इति युक्तं, संहतत्वस्य पारार्थ्यमात्रेणान्वयात् । दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमानमि-

---

तथा च—"आत्मा—असंहतः, अत्रिगुणादिमत्त्वात्, यन्न असंहतम्, तन्न अत्रिगुणादिमत्, यथा महदादिकम्" इत्यनुमानमत्र फलति, तदेव स्पष्टयितुमाह—अयमभिप्राय इति ।

तस्यापि=संघातान्तरस्यापि, तेनापि=सङ्घातान्तरेणापि, सङ्घातान्तरार्थेन=अन्यसंघातप्रयोजनवता ।

ननु यदि गत्यन्तरं न संभवेत्, तदा बीजाङ्कुरवद् अनवस्थापि नास्ति दोषावहेत्यत आह—न चेति । "संघातत्वात्" इति हेतुर्हि पारार्थ्यमात्रं प्रसाध्य उपक्षीणतामुपगत इति न तस्य संघातान्तरार्थत्वसाधने विशेषतो व्यापार इति असंहतपरार्थसिद्धिरूपाया व्यवस्थायाः संभवेन अनवस्थाकल्पनमसाम्प्रतमिति भावः ।

अनवस्थाया अयुक्तत्वे हेतुमाह—कल्पनेति । पारार्थ्यमात्रसाधनापेक्षया संहतपारार्थ्यसाधनस्य गौरवप्रस्तत्वादित्यर्थः । प्रामाणिकं कल्पनागौरवमपि न दोषावहमिति शङ्कते—न चेति । दृष्टान्ते सङ्घातत्वस्य सङ्घातान्तरार्थत्वेन व्याप्तत्वदर्शनात् प्रामाणिकं संहतपारार्थ्यकल्पनमिति शङ्कितुराशयः । समाधत्ते—संहतत्वस्येति । "यद् यद् संहतं तत् तत् परार्थम्, यथा शयनासनादि" इति व्याप्तिः, न तु "संहतपरार्थम्" इति, संहतत्वविशेषणस्य व्यर्थत्वात् । तथा च दृष्टान्ते संहतार्थत्वस्य दृष्टत्वेऽपि दार्ष्टान्तिकेऽसंहतार्थत्वसिद्धेर्न काचित् क्षतिः । अत्र पुरुषे संहतत्वस्याभावेन तदर्थत्वस्य साधयितुमशक्यत्वादिति भावः ।

ननु यदि सङ्घातान्तरार्थत्वं विहाय परार्थत्वमात्रस्य साध्यत्वं स्वीक्रियेत, तदा दृष्टान्तदृष्टसङ्घातान्तरार्थत्वरूपधर्मस्यालाभेन दृष्टान्ते साध्यवैकल्यसत्त्वात् पूर्वोक्तमनुमानमेव न स्यात्, दृष्टान्तदृष्टसर्वधर्मानुरोधे सत्येवानुमानाभ्युपगमादित्याशङ्क्यसमाधत्ते—दृष्टान्तदृष्टेति । दृष्टान्तदृष्टसर्वधर्माणां पक्षेऽसंभवादिति भावः । नहि धूमेन वह्निसाधने दृष्टान्तदृष्टस्य महानसत्वादेरपि पर्वते संभव

---

१ तथाच संहतत्वं परोपकारकत्वव्याप्यमेव न तु संहतपरोपकारकत्वव्याप्यमिति व्याप्तिकल्पनेति भावः । २ तथाच "पर्वतो वह्निमान् धूमवत्त्वात्, महानसवत्" इत्यत्रापि दृष्टान्ते वह्निधूमयोर्महानसरूपैकाधिकरणवर्तित्वदृष्ट्या पर्वतरूपैकाधिकरणवर्तित्वानुमानमपि न स्यादिति भावः । एवं च दृष्टान्तदृष्टधर्मानुरोधोऽनवस्थाङ्गीकारे न प्रमाणम् । सर्वानुमानोच्छेदस्य तथा सति प्रसङ्गादिति सिद्धम् ।

च्छतः सर्वानुमानोच्छेदप्रसङ्ग इत्युपपादितं न्यायवार्तिकतात्पर्य-टीकायामस्माभिः, तस्मादनवस्थाभियास्यासंहतत्वमिच्छताऽत्रिगुणत्वमविवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसवधर्मित्वं चाभ्युपेयं, त्रिगुणादयो हि धर्माः संहतत्वेन व्याप्ताः तत्संहतत्व-मस्मिन् परे व्यावर्तमानं त्रैगुण्यादि व्यावर्तयति, ब्राह्मणत्वमिव व्यावर्तमानं कठत्वादिकं, तस्मादाचार्येण 'त्रिगुणादिविपर्ययाद्' इति वदताऽसंहतः परो विवक्षितः, स चात्मेति सिद्धम् ।

---

इति । न्यायवार्तिकतात्पर्यटीकायामिति । तत्र हि—"पारमेश्वरं ज्ञानं नित्यम्" इति प्रकृत्य—"न च शरीरादिसहभावेन ज्ञानस्य तत्र तत्रोपलब्धेः शरीरादीनां ज्ञानं व्याप्यमिति युक्तम्, स्वाभाविकसंबन्धशालिता हि व्याप्यता, सा चोपाधिविरहे भवति, अस्ति च शरीरादिसहभावे ज्ञानस्योपाधिः कार्यत्वं कार्यज्ञानं स्वकारणं शरीरादि नातिवर्तते, नित्यन्तु तदतिवर्तमानमपि साहित्यो-पलम्भं न विरुणद्धि । तस्माद् यथा "अनित्यः शब्दः, उत्पत्तिमत्त्वात्, घटवत्" इति प्रयुक्ते कश्चित् साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् प्रत्यवतिष्ठेत—"यदि घट-साधर्म्याद् उत्पत्तिमत्त्वाद् अनित्यः शब्दः, हन्त तस्मादेव रूपादिमता तेन भाव्यम्, न चेदयं घटसाधर्म्येण रूपादिमान्, एवमनित्योऽपि मा भूत्," एवं च प्रत्यवतिष्ठमानः उत्कर्षसमजातिवादी पराजीयते, एवम्-एवंवाद्युत्कर्षसमजा-तिवादितया पराजेतव्यः—साधर्म्यमात्रेण अप्रयोजकेन प्रत्यवस्थानात्, तस्य च सर्वानुमानेषु सुलभतया सर्वानुमानोच्छेदापादकत्वात्" (न्या० ४।१।२१) इत्याद्युक्तम् । एवं स्थिते "त्रिगुणादिविपर्ययात्" इति हेतुं संगमयितुं निर्गलित-मर्थमाह—तस्मादिति । यतः परस्य असंहतत्वानङ्गीकारेऽनवस्थारूपो दोषो गले पतितत्वेन दुर्वारस्ततो हेतोरित्यर्थः । अस्य=अव्यक्ताद्युपकार्यस्य आत्मनः, इच्छता=कामयमानेन पुंसा, अभ्युपेयम्=स्वीकर्तव्यम् । ननु असंहतत्वं काम-यमानोऽकामितम् अत्रिगुणत्वादिकं किमित्युपेयादत आह—त्रिगुणत्वादय इति । "ये ये त्रिगुणत्वादिमन्तः, ते ते संहताः, यथा महदादयः" इत्येवं त्रिगुणत्वादयः संहतत्वेन व्याप्ता दृष्टा इत्यर्थः ।

ततः किम्? तत्राह—तत्संहतत्वमिति । तत्=व्यापकमसंहतत्वम्, अस्मिन्="परार्थाः" इति साध्यैकदेशभूतपरशब्दार्थे आत्मनि, व्यावर्तमानम्=निवर्तमानं सत् स्वव्याप्यभूतं त्रिगुणत्वादिकं निवर्तयति, व्यापकासत्त्वे व्याप्या-सत्त्वस्य नियतत्वादित्यर्थः । तत्र दृष्टान्तमाह—ब्राह्मणत्वमिवेति । यजुर्वेदीय-कठशाखाध्ययनकर्तृब्राह्मणनिष्ठो धर्मविशेषः कठत्वम्, "कठो मुनौ तदाख्यात-वेदाध्येतृज्ञयोः स्वरे" इति मेदिनी । इव=यथा क्षत्रियादौ ब्राह्मणत्वं निवर्त-

---

१ संहतत्वेन व्याप्ताः=संहतत्वाभाववदवर्तिनः ।

इतश्च परः पुरुषोऽस्ति—"अधिष्ठानात्"=त्रिगुणात्मकानामधिष्ठीयमानत्वात् ।

यद् यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टं यथा रथादि यन्त्रादिभिः, सुखदुःखमोहात्मकं चेदं बुद्ध्यादि, तस्मादेतदपि परेणाधिष्ठातव्यं, स च परस्त्रैगुण्यादन्य आत्मेति ।

---

मानं सत् तद् व्याप्यं कठत्वं निवर्तयति, तद्वदित्यर्थः । तथा च—"आत्मा असंहतः, अत्रिगुणादिमत्त्वात्" इति प्रागुक्तमनुमानं फलतीत्यभिप्रायेणोपसंहरति—तस्मादिति । आचार्येण=ईश्वरकृष्णेन । स च=परः ॥ ॐ ॥

"अधिष्ठानात्" इति तृतीयं हेतुं व्याचष्टे—त्रिगुणात्मकानामिति । त्रिगुणात्मकानाम्=सुखाद्यात्मकानां महदादीनाम्, अधिष्ठीयमानत्वात्=अपरेण केनचित्प्रेर्यमाणत्वात् । तथा च "महदादिकं केनचित् परेण चेतनेन अधिष्ठीयमानं भवितुमर्हति, सुखाद्यात्मकत्वात्, संहतत्वाद्वा" इत्यनुमानप्रयोगोऽत्र आदर्शि । अत्र प्रयोगे व्याप्तिं दर्शयति—यद् यदिति । उदाहरणं दर्शयति—यथा रथादीति । यन्ता=सारथिः, उपनयं प्रदर्शयति—सुखदुःखेति । निगमयति—तस्मादिति । ननु महदादीनामधिष्ठाता भवन् कश्चिन्महदादिष्वेवान्यतमोऽधिष्ठाता भवतु किं परेणाऽऽत्मनोऽभ्युपगमेनेत्याशङ्कां निराकरोति—त्रैगुण्यादन्य इति । महदादिष्वेव तु कश्चिदधिष्ठाता न भवितुमर्हति, स्वस्य स्वाधिष्ठानायोगादिति भावः । ननु यो हि व्यापारवान् स एव भवत्यधिष्ठाता यथा सारथ्यादिः, आत्मा तु न व्यापारवान् निर्गुणत्वेन निष्क्रियत्वादिति कथं तस्याधिष्ठातृत्वं भवितुमर्हतीति चेत् । मैवम्, अयस्कान्तमणेरिव निर्व्यापारस्यापि सन्निधिमात्रेण अधिष्ठातृत्वोपपत्तेर्व्यापारवत एवाधिष्ठातृत्वमिति नियमस्याश्रयितुमशक्यत्वात् । तथा च कापिलसूत्रम्—"तत्सन्निधानादधिष्ठातृत्वं मणिवत्" (११९६) इति । उक्तं च—"निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते । सत्तामात्रेण देवेन तथैवायं जगज्जनिः ॥ अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् । निरिच्छित्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः" ॥ ॐ ॥

---

१ आत्मनोऽन्यस्य असंहतत्वाभावादिति भावः । २ अचलतोऽपि नृपतिवद्वा सत्तामात्रेण प्रयोजकत्वमिति द्रष्टव्यम् । यदाहुः पञ्चमसूत्र आत्मवादे श्रीकुमारिलभट्टपादाः—"न च सर्वत्र तुल्यत्वं स्यात्प्रयोजककर्मणाम् । चलनेन ह्यसिं योद्धा प्रयुङ्क्ते छेदनं प्रति ॥ सेनापतिस्तु वाचैव भृत्यानां विनियोजकः । राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन ॥ तस्मादचलतोऽपि स्याच्चलने कर्तृताऽऽत्मनः ।" इति । तथा चात्मनोऽधिष्ठातृत्वं सर्वथा युक्तियुक्तमिति "प्रवृत्ते रचनायाश्चानुपपत्तेर्नाचेतनं चेतनाधिष्ठानविहीनं प्रधानं कारणम्" इत्येवं विधाः परेषामाक्षेपा निराकृता भवन्ति । वस्तुवस्तु—"पुरुषाधिष्ठितं प्रधानं प्रवर्तते" इति षष्टितन्त्रे वार्षगण्याचार्यैरुक्तत्वेन तादृशाक्षेपः संभवत्येव नेति सुधीभिरूहनीयमित्यन्यत्र विस्तरः ।

इतश्चास्ति पुरुषः 'भोक्तृभावाद्' । भोक्तृभावेन भोग्ये सुखदुःखे उपलक्षयति, भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते, तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदप्यन्येन भवितव्यं, न चानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयः, तेषां सुखदुःखात्मकत्वेन स्वात्मनि वृत्तिविरोधात्, तस्माद् योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयो वा, स चात्मेति ।

अन्ये त्वाहुः—भोग्याः=दृश्या बुद्ध्यादयः, न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषां, तस्मादस्ति द्रष्टा दृश्यबुध्याद्यतिरिक्तः स चात्मेति, भोक्तृभावाद्=द्रष्टृभावाद्, दृश्यत्वेन द्रष्टुरनुमानादित्यर्थः ।

दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम् ।

---

भोक्तृभावात्=भोक्तृत्वादित्यर्थः । "भोक्तृभावात्" इति हेतुना विवक्षितमर्थमाह—भोक्तृभावेनेति । उपलक्षयति=उपलक्षणविधया बोधयति । उपलक्षणत्वाभ्युपगमे यल्लब्धं तत्प्रदर्शयति—भोग्येहीति । नन्वस्तु सुखदुःखयोः प्रत्यात्ममनुभवः, तावतापि किमिति जिज्ञासायामाह—तेनानयोरिति । ततश्च—"सुखाद्यात्मकं बुद्ध्यादिकं; स्वातिरिक्तेन केनचिद् भोक्त्राऽनुभवनीयम्, भोग्यत्वात्, ओदनादिवत्" इत्यनुमानं अत्र फलति । ननु बुद्ध्यादीनामेव भोक्तृत्वमस्तु किं तदतिरिक्ताभ्युपगमेनेत्यत आह—न चेति । नहीत्यर्थः । कुतस्तत्राह—तेषामिति । बुद्ध्यादीनामित्यर्थः । स्वात्मनिवृत्तिविरोधादिति । स्वस्मिन् स्वव्यापारासंभवादित्यर्थः । न हि खड्गधारा आत्मानं छिनत्ति, नापि वह्निरात्मानं दहतीति भावः । अत्रेदं तत्त्वम्—एकस्य कर्मकर्तृभावविरोधेन स्वस्य स्वेन भोग्यत्वासंभवान्न बुद्ध्यादीनां भोक्तृत्वं भवितुमर्हतीति ॥

"असङ्गो ह्ययं पुरुषः" इत्यादिश्रुत्या आत्मनोऽसङ्गत्वं प्रतिपाद्यते, असङ्गश्च न जातु भोक्ता भवितुमर्हतीति नेयं व्याख्या समीचीनेति वदतां व्याख्यानं दर्शयति—अन्ये त्विति । तस्मादस्ति द्रष्टेति । ननु कथमस्यार्थस्य लब्धिरत आह—भोक्तृभावात्=द्रष्टृभावादिति । अनुमानात्="बुद्ध्यादयो द्रष्टृपूर्वका भवितुमर्हन्ति, दृश्यत्वात्, घटादिवत्" इत्येवंविधात् । पक्षधर्मतां दर्शयति—दृश्यत्वं चेति । अनुमितम्=बुद्ध्यादयो दृश्याः, सुखदुःखाद्यात्मकत्वात्, पृथिव्यादिवत्" इत्यनुमानशरीरम् ॥ अत्रेदं बोध्यम्—द्वितीयव्याख्यायामपि असङ्गस्यात्मनः परमार्थतो दर्शनकर्तृत्वं न संभवतीति बुद्ध्युपाधिकमेव तस्य द्रष्टृत्वं वक्तव्यम्, ततश्च द्रष्टृत्ववद् भोक्तृत्वमपि बुद्ध्युपाधिकं तस्य संभवतीति प्रथमा

इतश्चास्ति पुरुष इत्याह—"कैवल्यार्थं प्रवृत्तेश्च"। शास्त्राणां महर्षीणां च दिव्यलोचनानाम्। कैवल्यं चात्यन्तिकदुःखत्रयप्रशमलक्षणं न बुद्ध्यादीनां संभवति, ते हि दुःखाद्यात्मकाः कथं हि स्वभावाद्, वियोजयितुं शक्यन्ते, तदतिरिक्तस्य त्वतदात्मनस्ततो

व्याख्यापि समीचीनैवेति॥ "कैवल्यार्थं प्रवृत्तेः" इत्युक्तम्, तत्र "केषां प्रवृत्तेः" इत्युदेति जिज्ञासा, तां षष्ठ्यन्तद्वयमध्याहृत्य शमयति—शास्त्राणामिति। ननु प्रवृत्तिः=प्रयत्नः स चाचेतनानां शास्त्राणां नैव भवितुमर्हतीति तदंशे प्रवृत्तिपदस्य कैवल्यबुद्धिजनकतया प्रवर्तकत्वपरतैव वाच्या, अतो मुख्यार्थपरत्वानुरोधेन संबन्ध्यन्तरमप्याह—महर्षीणां चेति। वयं खलु नेत्रद्वारा बाह्यमेव सन्निहितं द्रष्टुं प्रभवाम इति लौकिकलोचनाः, महर्षयस्तु संयमप्रभावाद् व्यवहितं सूक्ष्ममपि द्रष्टुं प्रभवन्तीति ते दिव्यलोचनाः[1]। ननु सन्तु बुद्ध्यादय एव कैवल्यभाजः इति किमात्मनोऽभ्युपगमेनेत्यत आह—कैवल्यं चेति। कुतो न संभवतीत्यत आह—ते हीति। हि=यतः, ते=बुद्ध्यादयः[2]। इत्थं बुद्ध्यादीनां कैवल्यलक्षणमुखेन कैवल्यवैकल्यमुक्त्वा सम्प्रति आत्मनि तत्संभवमाह—तदतिरिक्तस्येति। बुद्ध्यादिभिन्नस्येत्यर्थः। आत्मनो बुद्ध्यादिभिन्नत्वे हेतुगर्भितं विशेषणमाह—अतदात्मन इति। सुखदुःखमोहानात्मकस्येत्यर्थः। ततः=दुःखादेः, शक्यः=शक्तिविषयः, सम्पादः=सम्पादनं यस्य तादृशः, सम्पादयितुं शक्य इति यावत्। आत्मा तु दुःखादिभ्यो वियोजयितुं शक्यते, अदुःखाद्यात्मकत्वादिति सरलार्थः। आगमानाम्=शास्त्राणाम्, महाधियाम्=विशिष्टमतिशालिनां नराणां महर्षीणां चेत्यर्थः। आत्यन्तिको हि दुःखत्रया-

१ ये किल विषयविमोहितधियः सामान्याः इन्द्रियवशंगताः नैव ते परमार्थतः किमपि वस्तुतत्त्वमवगन्तुं समर्थाः। तेषाममीषां विषये कालाध्वविप्रकृष्टवस्तुनस्तु वार्तैव का सन्निहितानां प्रत्यक्षाणामप्यर्थानां याथार्थ्यतो ज्ञाने तेषां बुद्धिः स्खलति। ये पुनर्बाह्यविषयेभ्यः प्रत्यावर्त्य चेत आत्मनि तत्परा भवन्ति नैव तेषामविदितं किमपि त्रिलोक्यां भवितुमर्हति। स्थिरप्रज्ञानां निष्ठावतां मुनीनां सर्वमार्गप्रवर्तिनी खलु बुद्धिर्ध्यानमयदृष्टिपातेन कालाध्वनोर्विप्रकर्षं दूरीकृत्य विषयमात्रेऽप्यप्रतिहतैव सदा स्फुरति। यथाह—उत्तररामचरिते श्रीभवभूतिः—"साक्षात्कृतब्रह्माणो महर्षयस्तेषामृतम्भराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद् व्याहन्यन्त इत्यनभिशङ्कनीयानि" इति। योगसूत्रेषु भगवान् पतञ्जलिरपि—"बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" (यो० ३।४३) "सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च" (यो० ३।४९) "प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्" (यो० ३।२५) ततः प्रातिभश्रावणवेदनाऽऽदर्शास्वादवार्ता जायन्ते" (यो० ३।३६) इति। तस्मात् अस्माकं लोचनानि बाह्यमेव सन्निहितमालोचयन्तीति लौकिकलोचना वयम्, महर्षीणां तु लोचनानि संयमप्रभावात् व्यवहितं सूक्ष्ममप्यालोचयन्तीति ते दिव्यलोचना उच्यन्त इति यत् सुस्थिरं तदिति तत्त्वम्॥ २ स्वभावात्=दुःखात्मकानां दुःखात्मकत्वधर्मात्।

वियोगः शक्यसम्पादः, तस्मात्कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चास्ति बुद्ध्यादिव्यतिरिक्त आत्मेति सिद्धम् ॥ १७ ॥

तदेवं पुरुषास्तित्वं प्रतिपाद्य स किं सर्वशरीरेष्वेकः किमनेकः प्रतिक्षेत्रमिति संशये तस्य प्रतिक्षेत्रमनेकत्वमुपपादयति—

**जन्ममरणकरणानां प्रतिनियमाद्, अयुगपत्प्रवृत्तेश्च ।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥**

"जन्ममरणकरणानाम्" इत्यादिना ।

पुरुषबहुत्वं सिद्धं, कस्माद्? जन्ममरणकरणानां प्रतिनियमात्=। निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभिः

---

भावः कैवल्यम्, तच्च पुरुषस्य स्वाभाविकादेवाऽत्रैगुण्यात् सुखदुःखमोहरहितत्वात् सिद्धमिति पिण्डितोऽर्थः[1] ॥ १७ ॥

"एक एव आत्मा" इति वेदान्तिनः । तथा चोक्तम्—"नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥" इति । तन्मतं दूषयितुं पीठिकामारचयति—तदेवमिति । प्रतिक्षेत्रम्=प्रतिशरीरमित्यर्थः । तस्य=पुरुषस्य, अनेकत्वम्=बहुत्वम् ॥

## अथ पुरुषबहुत्वसिद्धिनिरूपणम् ।

जन्ममरणेति । पुरुषबहुत्वं सिद्धमेव नासिद्धम्, कस्मात्? जन्ममरणकरणानाम्=उत्पत्तिनिधनेन्द्रियाणाम्, प्रतिनियमात्=प्रत्येकमेव दर्शनात्, व्यवस्थात इति यावत् । हेत्वन्तरमाह—अयुगपत्प्रवृत्तेश्चेति । प्रवृत्तिभेदादित्यर्थः । हेत्वन्तरमाह—त्रैगुण्यविपर्ययाच्चेति । त्रैगुण्येन सात्त्विकराजसतामसभेदेन पुरुषस्य भेदादित्यर्थः । इत्यन्वयः ॥ १८ ॥ ❀ ॥

आत्मनो नित्यतया तस्य जननाद्यसम्भव इत्याशङ्कायां जन्मपदार्थमाह—निकायेति । निकायः[2]=देवमनुष्यतिर्यगादीनामनौत्तराधर्येणाऽवस्थितः संघातः,

---

१ अविवेकवशादन्तःकरणवर्तिनो दुःखस्यात्मीयत्वमभिमन्यमानस्य सति तत्त्वज्ञाने अन्तःकरणात् विविक्तीकरणेन दुःखित्वाभिमाननिरासादात्मनो दुःखाद्विमोचनं शक्यसमुत्पाद्मिति भावः । २ 'संघे चानौत्तराधर्ये' इति घञि चस्य कादेशे च निकायपदनिष्पत्तिः । न च सूत्रे संघपदेन प्राणिनां समूहस्यैव ग्रहणम् न समूहमात्रस्य, अत एव ब्राह्मणनिकाय इतिवत् प्रमाणनिकाय इति प्रयोगो न भवति किन्तु प्रमाणनिचय इत्येव प्रयोगो जायते, देहादीनामपि प्राणित्वाभावात् तत्र निकाय इति प्रयोगानुपपत्तिरिति वाच्यम्, प्राणिसंबन्धित्वेन प्राणिसमूहं संभाव्य प्रकृते निकायपदप्रयोगात् । औत्तराधर्ये तु 'शूकरनिचयः' इति न घञ् । शूकरशावका हि स्तनपानार्थं उत्तराधरभावेन शेरत इति तत्रौत्तराधर्यस्य वेविद्यमानत्वात् ।

पुरुषस्याभिसंबन्धो जन्म, न तु पुरुषस्य परिणामः, तस्यापरिणामित्वात्, तेषामेव च देहादीनामुपात्तानां परित्यागो मरणं, न

तद्विशिष्टाभिरित्यर्थः। वेदना=सुखाद्यनुभवः, स्फूर्त्याख्या चेतना वा, तथा च आत्मनो नित्यत्वेऽपि देहेन्द्रियादिसम्बन्धरूपं जननमक्षतमित्यभिप्रायः। आत्मनो विभुतया मृतावस्थायामपि देहादिभिः सम्बन्धसत्त्वात् तद्वारणाय—निकायविशिष्टाभिरित्युक्तम्। प्रतिक्षणमेव देहेन्द्रियादिभिः सम्बन्धस्य जायमानत्वात् तद्वारणाय—अपूर्वाभिरित्युक्तम्, स्वसजातीयनिकायानुत्तराभिरित्यर्थः। परिणामो=विकारभेदो न जन्मेत्यन्वयः, तत्र हेतुः—अपरिणामित्वादिति। सति हि तस्य परिणामित्वे तद्रूपजन्मवत्त्वं स्यात्, स एव तस्य नास्तीत्याशयः। एतेन "देवदत्तो जातः" इति व्यवहारदर्शनात् मुख्यमेव घटादेरिव आत्मनो जन्म, न जायमानदेहादिसम्बन्धरूपं भाक्तम्," इति शङ्का निरस्ता, अपरिणामित्वेन घटादेरिव मुख्यस्योत्पत्तिरूपस्य परिणामस्य आत्मनि वक्तुमशक्यत्वादिति बोध्यम्। उपात्तानाम्=गृहीतानाम्। तथाच—"उपात्तानां जातिविशिष्टदेहेन्द्रियमनोऽहङ्कारबुद्धिवेदनानां परित्यागो मरणम्" इति लक्षणाऽऽकारः। मरणं तु यद्यपि "मृङ् प्राणत्यागे" इति स्मरणात् प्राणोपलक्षितदेहादीनां त्यागरूपं मुख्यमेवात्मनि संभवति, तथापि घटादेरिव विनाशरूपं मरणमत्र मा कश्चिद् ग्रहीदित्यभिप्रायेणाह—नत्विति। तत्र हेतुमाह—तस्येति। आत्मनः, कूटस्थनित्यत्वात्—निर्विकारत्वादित्यर्थः। कूटो निश्चलस्तिष्ठतीति कूटस्थः, यद्वा—कूटम्=अयोधनः, तद्वत् तिष्ठतीति कूटस्थः, संसर्गिनाशेऽपि स्वयमनष्ट इत्यर्थः। "न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः, अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥" इत्याद्याः श्रुतय आत्मनः जन्मादिपरिणामशून्यत्वेन कूटस्थनित्यत्वमामनन्तीति नैव तस्य मुख्यौ जन्मनिधनौ संभवतः इति भावः। न च देवदत्तो जातो देवदत्तो मृतः" इति व्यवहारान्यथानुपपत्त्या आत्मनो जन्मनिधनाववश्यमभ्युपेयाविति भ्रमितव्यम्, "शरीरादिना संयुज्यमानत्वमेवात्मनो जायमानत्वम्, शरीरादुत्क्रमणमेव चात्मनो म्रियमाणत्वम्" इत्यभ्युपगमेनापि तस्य व्यवहारस्योपपत्तेः, तथा च श्रुतिः—"स वा अयं पुरुषः जायमानः शरीरमभिसंपद्यमानः, स उत्क्रामन् म्रियमाणः"—इति। तथा च "देवदत्तो जातः" इत्यादि व्यवहारो भाक्त एव न जातु मुख्य इति तत्त्वम्। ततश्च स्थावरजङ्गमशरीरविषयो

१ देवदत्तादिनामधेयं तावज्जीवात्मनो न शरीरस्य तन्नाम्ने शरीराय श्राद्धादिकरणानुपपत्तेः। तन्मृतो देवदत्तो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वः पक्षः, मुख्यत्वे शास्त्रोक्तामुष्मिकस्वर्गादिफलसंबन्धानुपपत्तेः। शास्त्रविरोधाल्लौकिकव्यपदेशो भाक्तो व्याख्येयः। भक्तिश्च शरीरस्योत्पादविनाशौ ततस्तत्संयोग इति। जातकर्मादि च गर्भबीजसमुद्भवजीवपापप्रक्षयार्थं, नतु जीवजन्मजपापक्षयार्थम्। अत एव स्मरन्ति—"एवमेनः शमं याति बीजगर्भसमुद्भवम्" इति तस्मान्न शरीरोत्पत्तिविनाशाभ्यां जीवजन्मविनाशाविति सिद्धम्" इति भामत्यां मिश्राः।

त्वात्मनो विनाशः, तस्य कूटस्थनित्यत्वात्, करणानि=बुद्ध्या-

जन्ममरणव्यपदेशो मुख्यः, आत्मनि तु औपाधिकजन्मादिविषयत्वेन गौणः, उपाधिजन्मनाशे सत्येव आत्मनि जन्मनाशव्यवहारस्य भावित्वादित्यत्र फलितम्, तथा च ब्रह्मसूत्रम्—"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" (वे० २।३।१६) इति। चराचरव्यपाश्रयः=स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ, स्थावरजङ्गमानि हि भूतानि जायन्ते म्रियन्ते च, अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते। तद्भावभावित्वात्=शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः, नासतोः" इत्येतदर्थः (शा० भा०)। बुद्ध्यादीनीति। बुद्धिः=महत्तत्त्वम्, अहङ्कारः, मनः, श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि, वागादीनि पञ्चकर्मेन्द्रियाणि, चेति

१ स्थावरजङ्गमशरीरविषयो जन्ममरणव्यपदेशो मुख्यः, आत्मनि तु भाक्तः=औपाधिकजन्मादिविषयत्वेन गौणः, उपाधिजन्मनाशे सत्येवात्मनि जन्मनाशव्यवहारस्य भावित्वादित्यर्थः। अत्रायं सरलो निष्कर्षः—लोके हि "देवदत्तो जातो यज्ञदत्तो मृतः" इति व्यपदिश्यते। सोऽयं लौकिको जन्ममरणव्यपदेशो जीवात्मनि मुख्यो भवेदाहोस्विद् भाक्त इति सन्दिह्यते। तत्र मुख्य इति पूर्वः पक्षः, भाक्त इति सिद्धान्तः। तत्र पूर्वपक्षिणोऽयमाशयः—जीवात्मनो जन्ममरणे तावत्प्रत्यक्षमुपलभ्येते—देवदत्तो जातो यज्ञदत्तो मृत इति। चेदिमे तत्रामुख्ये व्यपदिश्येयातां तदा न जातु प्रत्यक्षमुपलभ्येयाताम्। न च यद् यत्र मुख्यं न व्यपदिश्यते तद् तत्र प्रत्यक्षं कर्हिचिदुपलभ्यते। न हि माणवको दहति प्रकाशयति चेति कश्चिद् केनचिदवलोक्यते। प्रत्यक्षोपलम्भस्य च माहात्म्यं प्रत्यक्षं न प्रमाणान्तरेण केनचिदभिभवितुं शक्यते। किंच—जाते मृते देवदत्तादौ खलु जातकर्मादिसंस्कारो विधीयते—"प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते। मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्" ॥ (मनु० २।२९) इति। न च जीवात्मनः परमार्थतो जन्ममरणाभावे तन्निमित्ताः संस्काराः कदाचिद् विधातुं शक्यन्ते। पुंशब्दोपादानाच्च नूनमेते जीवात्मन एवोपदिश्यन्ते न शरीरस्येति स्फुटं विज्ञायते। अपिच लोकसिद्धे खल्वेते जन्ममरणे जीवात्मनः श्रुत्याऽपि संवाद्येते—"स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन् म्रियमाणः" (बृ० ४।३।८) इति। न च तत्संवादोऽयं तत्र तद्व्यपदेशस्यामुख्यत्वे कथंचित् संगच्छते यथा प्रत्यक्षोपलम्भः। तत्सांगत्यं चावश्यकम्। तस्माद् प्रतिपद्यते—तत्र तद्व्यपदेशो मुख्यो न भाक्त इति। तत्र सिद्धान्तिनोच्यते—यथा ह्युदकविशेषप्रवाहे खलु गङ्गादिव्यपदेशो मुख्यः प्रवर्तते तत्संबन्धिनि तीरे च भाक्तस्तथा जन्ममरणव्यपदेशोऽपि चराचरशरीरे मुख्यः प्रवर्तते तत्संबन्धिनि जीवात्मनि च भाक्त इति निश्चेतव्यम्, शरीरसंबन्धे सति हि जीवात्मनि जन्ममरणव्यपदेशो बोभूयते नासति। न हि शरीरसंबन्धादन्यत्र जीवात्मा जातो वा मृतो वा केनचित् क्वचिद् व्यपदिश्यते। शरीरसंबन्धश्च जीवात्मनः प्रामाणिक इति शरीरे मुख्यः सन् तद्व्यपदेशः तत्संबन्धिनि तस्मिन् भाक्त उपपद्यते। जातकर्मादिसंस्काराश्च शरीरजन्माद्यपेक्षया विधाने

दीनि त्रयोदश, तेषां जन्ममरणकरणानां प्रतिनियमः=व्यवस्था, सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते, तदा खल्वेकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन्, सर्व एवान्धादयः, विचित्ते चैकस्मिन् सर्वे

---

त्रयोदश। व्यवस्था=वैयधिकरण्येन अवस्थानम्, इयम्=व्यवस्था। एकस्मिन् पुरुष इति। "अङ्गीकृते सति" इति शेषः। अनुपपत्तिमेव स्पष्टीकरोति—तदेति। आत्मन एकत्वे, पुरुषबहुत्वासत्वे वा सति इत्यर्थः। तथा च आत्मैक्ये जन्मादिव्यवस्था नोपपद्यत इति सैव तस्य भेदमवगमयतीति भावः। अर्थापत्तिमभ्युपगच्छतां वेदान्तिनां मतेनेदम्। साङ्ख्यमते तु "जन्मादिव्यवस्था वस्तुभेदनिबन्धना, व्यवस्थात्वात्, संमतवत्" इत्यनुमानं स्वान्ते रक्षित्वा तत्रानुमाने "तदा खलु—" इति ग्रन्थेन "व्यवस्थात्वमस्तु वस्तुभेदनिबन्धनत्वं च मा भूत्" इत्याकारकस्य विपक्षस्य बाधकस्तर्क उच्यते इति ज्ञेयम्। सिद्धान्तेऽर्थापत्तेरनङ्गीकारेण तया व्यवस्थाया आपादयितुमशक्यत्वात्।

इत्थमात्मैक्ये जन्मादिव्यवस्थाया अनुपपत्तिमुक्त्वा सम्प्रति करणव्यवस्थाया अनुपपत्तिं प्रदर्शयति—अन्धादौ चेति। अन्धत्वम्=दर्शनशक्तिविहीनत्वम् आदिना बाधिर्यादीनामुपग्रहः। तच्चेन्द्रियगतमपि तदाश्रयसंहतदेहाभिमानिनि पुरुषे उपचर्यते। विचित्ते=सुपुप्ते योगयुक्ते वा इत्यर्थः। तथा चैकस्मिन् सुपुप्ते योगयुक्ते वा सर्वे एव सुपुप्ता योगिनो वा स्युरित्यापत्तिरिति

---

बीजगर्भसमुद्भवपापक्षयः प्रयोजनमुपपद्यते। स्मर्यते च स एव तत्प्रयोजनम्—"गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः। बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥" (मनु० २।२७) इति। "स वा अयं पुरुषो जायमानः" इत्यादिका श्रुतिस्तु शरीरसंबन्धासंबन्धनिमित्ते जन्ममरणे जीवात्मनो दर्शयति न स्वरूपतः। तस्मादेष लौकिको जन्ममरणव्यपदेशः शरीरव्यपाश्रयो मुख्यो जीवात्माश्रयश्च तदुपाधिको भाक्त इति निश्चयः। श्रूयते च—"जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" (छा० ६।११।३) स्मृतिश्च—"अजः शरीरग्रहणात् स जात इति कीर्त्यते" (या० आ० ६९) यद्यपि अजस्तथापि शरीरग्रहणमात्रेण जात इत्युच्यते, अवस्थान्तरयोगितयोत्पत्तेः, गृहस्थो जात इतिवत् (मिताक्षरा) स्थूलदेहसंबन्ध एव पुरुषस्य जन्म, तत्संबन्धपरित्यागश्चैव तस्य मरणमिति निष्कृष्टोऽर्थः।

१ अन्धत्वादिकम्,। २ इन्द्रियधर्मोऽपि, ३ करणाश्रयेत्यर्थः। ४ आरोप्यते। तथा च एकस्यैव पुरुषस्य सर्वशरीरवर्तित्वाङ्गीकारे यस्य कस्यचिच्छरीरस्य दुष्टेन्द्रियविशिष्टत्वे अतथाभूतशरीरवर्तिनोऽपि पुरुषस्याभिन्नतया अन्धादिपदव्यपदेश्यतावश्यकी, दुष्टेन्द्रियविशिष्टशरीरवर्तित्वधर्मसद्भावादिति भावः। ५ विगतम्—उपरतं वृत्तिरहितम्, चित्तं यस्य स विचित्तस्तस्मिन् इति विग्रहं मत्वा व्याचष्टे—सुपुप्त इति।

एव विचित्ताः स्युरित्यव्यवस्था स्यात्, प्रतिक्षेत्रं तु पुरुषभेदे भवति व्यवस्था ।

न चैकस्यापि पुरुषस्य देहोपाधानभेदाद् व्यवस्था इति युक्तं, पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गाद्, न हि पाणौ वृक्णे, जाते वा स्तनादौ महत्यवयवे युवतिर्मृता, जाता वा भवतीति । इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह "अयुगपत्प्रवृत्तेश्च" ।

---

भावः । उपलक्षणमिदम्—"य एतद् विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवोपयन्ति" इति श्रुताया बन्धमोक्षे व्यवस्थाया अनुपपत्तिरपि बोद्धव्या ॥

स्वमते व्यवस्थाया उपपत्तिं दर्शयति—प्रतिक्षेत्रमिति । प्रतिदेहमित्यर्थः । तथा च यावन्तोदेहास्तावन्त एव तदभिमानिनः पुरुषाः कल्प्यन्त इति नाव्यवस्थेति भावः । ननु अन्धत्वादीनाम् इन्द्रियधर्मतया जन्ममरणादीनां च देहधर्मतया इन्द्रियदेहादीनां च परस्परं भेदात् पुरुषस्यैक्येऽपि उपाधिभेदेन घटाकाशादिभेदवद् देहाद्युपाधिभेदैर्भवेदेव जन्मादिव्यवस्थेति किं गौरवग्रस्तेन पारमार्थिकेन भेदेन, तदाहुः—"यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते । न सर्वे सम्प्रयुज्यन्ते तथा जीवाः सुखादिभिः ॥" इति वेदान्तिमतमाशङ्क्य निराचष्टे—न चैकस्यापीति । उपाधानम्=उपाधिः ।

अयुक्तत्वे हेतुमाह—पाणिस्तनादीति । पाणिः=हस्तः, स्तनः=कुचः । अयं भावः—यदि हि देहस्योपाधित्वेन जन्मादिव्यवस्थापकत्वमभ्युपगम्येत, तदा विनिगमनाविरहेण[1] देहवद् हस्तस्तनादीनां देहावयवानामपि उपाधित्वेन भेदकत्वं स्यात्, तथा च देहावयवानाम् उद्भवविरोधाभ्यामपि पुरुषस्य जन्ममरणादिव्यवहारः स्यादिति । नन्वस्तु हस्ताद्युपाधिभेदेनापि जन्मादिव्यवस्था का हानिरित्याशङ्क्य व्यवहारविरोधेन परिहरति—नहीति । पाणौ=हस्ते, वृक्णे=छिन्ने, "भवति" इति क्रियया स्वगोचरो[2] व्यवहार उपलक्ष्यते, स्वविषयकं ज्ञानं वा । तथा च—"हस्ते पतिते युवतिर्मृता इति, स्तनादौ च जाते युवतिर्जाता इति च न केनापि व्यवह्रियते नापि ज्ञायते" इत्यर्थः फलति । युवतिः=युवत्त्वाश्रितसंघातवती नारी । अयं भावः—यद्यपि स्तनादौ जाते शैशवं विहाय तारुण्यं प्राप्तः सङ्घातः, तथापि तदवच्छेदेन तदधिष्ठात्र्या युवत्या न जातत्वव्यवहारः, "सैवेयम् अबला" इति प्रत्यभिज्ञानात् । त्वन्मते तु देहोपाधिजन्मना तदवच्छेदेन आत्मनि जातत्वव्यवहारवत् देहावयवहस्तादिजन्मनापि आत्मनि जातत्वव्यवहारः स्यात्, उपाधित्वाविशेषात्, स च बाधित इति नौपाधिकभेदकल्पनया निस्तार इति । ननु देहावयवानामुपाधित्वं नाङ्गी-

---

१ "देहस्यैव उपाधित्वम्, न अवयवानाम्" इत्यत्र नियामकाभावेनेत्यर्थः । अन्यतरपक्षपातिनी युक्तिर्विनिगमना । २ भवनविषयकः ।

प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथापि पुरुष उपचर्यते, तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत, ततश्च सर्वाण्येव शरीराणि युगपच्चालयेद्, नानात्वे तु नायं दोष इति ॥

इतश्च पुरुषभेद इत्याह—'त्रैगुण्यविपर्ययाच्चैव'। एवकारो भिन्न-

क्रियते, अतिप्रसङ्गापादकत्वात्, किंतु देहस्यैवोपाधित्वमभ्युपगच्छामः, तदुक्तम्—"आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप" इति, इति चेद् एवमपि निस्तारो भवितुं नार्हति, एकस्मिन् घटे भग्ने तद्घटमुक्तस्यापि आकाशप्रदेशस्य घटान्तरेण पुनर्योगात् घटाकाशत्वापत्तिरिव एकोपाधिना विमुक्तस्यापि आत्मनः पुनरुपाध्यन्तरेण सम्बन्धात् बद्धत्वव्यवहारापत्त्या बद्धमुक्तव्यवस्थानुपपत्तेस्तादवस्थ्यात् ॥

अन्ये तु उपाधीनामेव परस्परं भेदः, न तु तदुपहितस्य भेदो युक्तियुक्तः, विशिष्टस्यानतिरेकात्। न हि "छत्रादिमान् चैत्रः" केवलचैत्राद् भिद्यते। अत एव सूत्रकृता "उपाधिर्भिद्यते न तु तद्वान्" (सां० १।१५१) इत्यनेन विशिष्टस्यानतिरेकपक्ष एवाभ्युपगत इत्याहुः ॥ स्यादेतत्—ननु यदि पुरुषनानात्वमभ्युपगम्येत, तदा आत्मैक्यप्रतिपादनपराणाम् "एको देवः सर्वभूतेषु गूढः—" इत्यादिश्रुतीनां का गतिरिति चेत् । अत्राहुः—"एकत्वश्रुतीनाम् "अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः" इति बद्धमुक्तजीवभेद प्रतिपादकश्रुतिविरोधात्, जन्ममरणादिव्यवस्थादर्शनरूपप्रत्यक्षप्रमाणविरोधाच्च, आत्मनां व्यापकत्वेन सर्वे एव आत्मानः सर्वत्र सन्निहिता इति विभिन्नदेशत्वाभावेन विभागाप्रतीतेः, गौणत्वेन एकत्वव्यवहारेणापि उपपत्तेः" इति । विज्ञानभिक्षवस्तु आत्मैकत्वप्रतिपादनश्रुतीनाम् अवैधर्म्यलक्षणाभेदप्रतिपादनपरत्वमित्याहुः । साङ्ख्यसूत्रकृतस्तु "नाद्वैतश्रुतिविरोधो जातिपरत्वात्" इति सूत्रेण चित्सामान्यम् आदाय एकरूपत्वे तादृशश्रुतीनां तात्पर्यमित्येवं वर्णयामासुः, इति दिक् ॥ ® ॥

"शरीराणि प्रतिशरीरं विभिन्नपुरुषाधिष्ठेयानि, अयुगपत्प्रवृत्तिमत्त्वात्, रथादिवत्" इत्याशयेन प्रवृत्तं हेत्वन्तरमवतारयति—इतश्चेति । इतोऽपीत्यर्थः । प्रतिक्षेत्रम्—प्रतिशरीरम् । व्याचष्टे—प्रवृत्तिश्चेति । तत्र चलनात्मकः प्रवृत्तिरूपो व्यापारो देहधर्मः, चालनात्मकः प्रवर्तनारूपः प्रयत्नश्च चेतनधर्मः । तथाच—"प्रवृत्तेरयौगपद्यदर्शनेन प्रवर्तनारूपप्रयत्नस्य अनैक्यम्, प्रयत्नायौगपद्येन च तदाश्रयचेतनभेदः" इत्यर्थोऽत्राभिप्रेतः । तत्र प्रयत्नरूपः परिणा-

१ यत्र अव्यवस्था प्रसज्यते तत्र तद्वारणाय उपाधिरूपं किंचिन्निमित्तमनुसर्तव्यम्, न तूपाधिरस्तीति कृत्वा अव्यवस्थापादनं युक्तमिति भावः ।

क्रमः सिद्धम् इत्यस्यानन्तरं द्रष्टव्यः, सिद्धमेव नासिद्धं त्रयो गुणास्त्रैगुण्यं तस्य विपर्ययः=अन्यथात्वं–केचित् खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्द्ध्वस्रोतसः, केचिद् रजोबहुलाः यथा मनुष्याः, केचित्तमोबहुला यथा तिर्यग्योनयः, सोऽयमीदृशस्त्रैगु-

---

मोऽस्ति बुद्धेर्धर्मो न जात्वपरिणामिन आत्मनो धर्म इति कथम् अन्यधर्मायौगपद्येन आत्मभेदस्यानुमानं भवितुमर्हतीति शङ्कमानं प्रत्याह—यद्यपीति। अन्तःकरणेति। तथा च देहभेदे अन्तःकरणभेदात् कथमेकस्मिन्नन्तःकरणे प्रयत्ने जाते देहान्तरान्तःकरण प्रयत्नसंभव इति भावः। उपचर्यते=उपचारेण व्यवह्रियते[1] इत्यर्थः। तत्र "कुतश्चित् निमित्ताद् अतस्मिन् तद्व्यवहार उपचारः। यदाहुर्वात्स्यायनभाष्यकाराः—"सहचरणादिनिमित्तेन अतद्भावे तदभिधानम् उपचारः" इति। प्रकृते उपचारनिमित्तश्च स्वस्वाभिभावसम्बन्धरूपोऽवसेयः। तथाच यथा विजयः पराजयो वा योद्धृपु वर्तमानः स्वामिनि राज्ञि व्यपदिश्यते, तथा बुद्धौ वर्तमानापि प्रवृत्तिः पुरुष उपचर्यत इति पिण्डितोऽर्थः। तथाच जले कम्पमाने यथा तत्प्रतिविम्बितस्य चन्द्रमसः कम्पनं प्रतीयते, तथा बुद्धौ प्रयतमानायामपि तत्प्रतिविम्बितत्वेन चेतन एव प्रयत्नं कुर्वाण इवानुभूयते इति निष्कर्षः॥

आत्मैक्येऽयुगपत्प्रवृत्त्यभावं दर्शयन् "अयुगपत्प्रवृत्तिमत्त्वमस्तु, पुरुषबहुत्वं च मा भूत्" इत्येवंविधे विपक्षे बाधकमाह—तथा चेति। आत्मैकत्वे चेत्यर्थः। तस्मिन्=आत्मनि, एकत्र शरीरे=एकशरीरावच्छेदेन, प्रयतमाने=प्रयत्नं कुर्वाणे सति, सर्वत्र=सर्वदेहावच्छेदेन, प्रयतेत=प्रयत्नं कुर्वीत, आत्मा इति शेषः। कुतस्तत्र हेतुमाह—स एव सर्वशरीरेष्वेक इतीति। इति=हेतोः।

एकस्य सर्वदेहावच्छेद्यत्वे दोषमाह—ततश्चेति। चालयेत्=प्रवर्तयेत्॥

सिद्धमेवेति। "पुरुषबहुत्वम्" इति शेषः। यद्वा—एतैर्हेतुभिः पुरुषबहुत्वमेव सिद्धं भवति, नात्मैक्यम्, इत्यर्थो बोध्यः। अन्यथात्वमिति। सात्त्विकादिभेदेन उत्तममध्यमाधमभावरूपं प्राणिवैचित्र्यमित्यर्थः। तदेवाह—केचिदिति। सत्त्वनिकायाः=प्राणिसंघाः, ऊर्ध्वस्रोतसः[2]=जितेन्द्रियाः रेतःसेकशून्या देवादयः। तिर्यग्योनयः=पशुपक्ष्यादयः। सोऽयमिति। यदि एकः

---

१ अविवेकिनामात्मान्तःकरणयोर्भेदग्रहाभावात् अन्तःकरणधर्मरूपा प्रवृत्तिः पुरुषे आरोप्यत इति तात्पर्यम्। २ तथा च ऊर्ध्वस्रोतसामन्तःकरणेषु त्रैकालिकवृत्तान्तवृत्तौ भूतायां तत्पुरुषस्य साक्षित्वे मानवादिदेहेष्वपि तस्यैव विद्यमानतया तस्यापि त्रैकालिकवृत्तान्तसाक्षित्वात् सर्वेषामेव प्राणिनां त्रिकालज्ञत्वापत्त्या तेषु तेषु तत्तद्गुणबाहुल्यमनर्थकमिति तात्पर्यम्।

ण्यविपर्ययः=अन्यथाभावः तेषु सत्त्वनिकायेषु न भवेद् यद्येकः पुरुषः स्याद्, भेदे त्वयमदोष इति ॥ १८ ॥

---

पुरुषः स्यात्, तर्हि तेषु तेषु सत्त्वनिकायेषु=प्राणिसमूहेषु, अन्यथाभावः= वैलक्षण्यम्, न भवेत्, इत्यन्वयः । आत्मन एकत्वे नानाविधप्राणभृत्प्रपञ्चो न भवेत्, किं त्वेकविध एव स्यादिति भावः । भेदे त्विति । पुरुषबहुत्वे तु इत्यर्थः । अयम्=उत्तममध्यमाधमभावः, अदोषः=दोषशून्यः, सङ्गत इति यावत् ॥ १८ ॥

---

१ तथाच—"अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुराः" इति देवादिभेदप्रतिपादकश्रुतेः, "देवदानवगन्धर्वा यक्षराक्षसकिन्नराः" इत्यादि पुराणवचनस्य चासङ्गतिरिति भावः । सत्त्वबहुलाः=सत्त्वगुणातिशयवन्तः । २ वेदान्तवादिनस्तु—अनेकपुरुषाङ्गीकारेऽपि एकस्य पुरुषस्यापूर्वदेहादिसंबन्धे जायमानेऽन्येषामपि विभुत्वात् तत्संबन्धावश्यकत्वेऽव्यवस्था तदवस्थैव । एवं कणादानामपि । यदैकेनात्मना मनः संयुज्यते तदाऽऽत्मान्तरैरपि नान्तरीयसंयोगसंभवे हेत्वविशेषादेकात्मनः सुखदुःखयोगे सर्वेषां सुखादियोगापत्तेः । न चादृष्टनिमित्तो नियमः । सर्वात्मसन्निहितैर्हेतुभिर्मनोवाक्कायैर्निर्वर्तितस्यादृष्टस्यास्यैवात्मन इदमदृष्टं नान्यस्येति नियम हेत्वभावात् । यत्तु—"इदं फलं प्राप्नवानि, इदं परिहराणि, इत्थं प्रयते, इत्थं करवाणि" इत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्त्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति । तदपि न । तेषामपि सर्वात्मसन्निधौ जायमानानां नियमहेत्वभावात् । एतेन स्वभुक्तवृत्तिवासनावत्त्वरूपस्वत्वमेव नियामकं तच्चानादीति परास्तम् । सर्वात्मसन्निधौ जायमाने सुखादावर्थोपरक्तवृत्तिमति आत्मनि प्रतिबिम्बितत्वरूपभुक्तत्वस्य नियमहेत्वभावात । अप्रामाणिकान्धपरम्पराकल्पनाऽसंभवाच्च । यदपि "अयमेतस्माद्भिन्नो विरुद्धधर्माश्रयत्वात्" इति । तदपि न । विरुद्धत्वासिद्धेः । तथाहि—प्रयत्नादीनां विरुद्धत्वं स्वसमानकालीनस्वाभावतद्व्याप्यसहानवस्थितत्वरूपं वाच्यम् । तच्च न संभवति । स्वचरणलग्नकण्टकोद्धरणप्रयोजकव्यापारवत्स्वपाण्यवच्छेदेन वर्तमानस्य प्रयत्नस्यान्यावच्छेदेनोक्तस्वभावेन सहावस्थितत्वात् । एतादृशविरोधस्य चाधिकरणभेदग्राहकप्रमाणासिद्ध्या संभवाच्च । "चैत्रो जातो न मैत्रः" इत्यादि—व्यवस्था न स्यात् इत्याशंका तु देहात्मवादिनां भ्रान्तानामेव, चैत्रादिशब्दानां शरीरविशेषपरत्वात् । एतेन "अन्धादौ चैकस्मिन् सर्वे एवान्धादयो विच्छित्ते चैकस्मिन् सर्वे विच्छित्ताः स्युः, एकत्र शरीरे प्रयत्ने स एव सर्वशरीरेष्वेक इति सर्वः प्रयतेत, ततश्च सर्वाणि युगपच्चालयेत्, त्रैगुण्यविपर्ययस्तेषु तेषु सत्त्वनिकायेषु न भवेत्" इति परास्तम् । "चक्षुष्मद्गोलकद्वयशून्यत्वं अन्धत्वं, चक्षुष्मद्गोलकद्वयशून्यत्वे सति चक्षुष्मत्वं काणत्वं, यथासंस्थानशून्यकर्णशष्कुलीकत्वं बधिरत्वं, पादविकारवत्त्वं खंजत्वम्" इत्यन्धत्वादयो धर्मा आन्तराश्च प्रयत्नादयो धर्मा यद्यच्छरीरावच्छेदेन संभवन्ति तत्तच्छरीरावच्छेदेनैवोपलम्भप्रवृत्त्यादिसंभवात् । न चैवमप्यसच्छरीरावच्छेदेन जायमाने सुखादौ "अहं सुखी" इत्याद्यनु-

एवं पुरुषबहुत्वं प्रसाध्य विवेकज्ञानोपयोगितया तस्य धर्मानाह—

**तस्माच्च विपर्यासात्, सिद्धं साक्षित्वमस्य पुरुषस्य ।**
**कैवल्यं माध्यस्थ्यं, द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥**

"तस्माच्च विपर्यासाद्" इति ।

'तस्माच्च' इति च-शब्दः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति ।

---

## अथ साक्षित्वादिसिद्धिनिरूपणम् ।

तस्माच्चेति । तस्मात्=त्रिगुणादेः विपर्यासात्=विपरीतात्, अत्रिगुणत्वादेर्हेतोः अस्य पुरुषस्य=आत्मनः, साक्षित्वम्, कैवल्यम्=आत्यन्तिकदुःखशून्यत्वम्, माध्यस्थ्यम्=उपकारापकारशक्तिरहितत्वम्, द्रष्टृत्वम्=स्वप्रकृतिशीलज्ञातृत्वम्, प्रकृतिर्मम संसारं कारयति न त्वहं संसारवान् किं तु पुष्करपलाशवन्निर्लिप्त इति धीमत्त्वम्, अकर्तृभावः=अकर्तृत्वं च सिद्धम्, इत्यन्वयः ॥ १९ ॥ ७ ॥

धर्मान्तराणि=तस्माच्चेति कारिकोपनिबद्धानि साक्षित्वप्रभृतीनि । "अस्मात्"

---

भवात् इतरशरीरावच्छेदेन जायमानेऽपि सुखादौ "अहं सुखी" इत्याद्यनुभवप्रसङ्ग इति वाच्यम् । शिर आदिगते जन्मान्तरीयशरीरगते वा सुखादौ पादाद्यवच्छिन्नस्य वा एतद्देहावच्छिन्नस्य वा उपाधिभेदादभिमानाभावोपपत्तेः । न च बालादिशरीरभेदेऽप्यनुसंधानदर्शनान्न तत्प्रयोजकमिति वाच्यम्, तत्रापि शरीरप्रत्यभिज्ञादर्शनात् । न च सा भ्रम इति वाच्यम्, प्रमात्वे बाधकाभावात् । तदारम्भकराज्यादिप्रापकादृष्टे सति तन्नाशायोगात् । क्लृप्ततत्कारणशुक्रशोणिताद्यभावेन तदारम्भानुपपत्तेश्च । अन्यथा पित्रादिव्यवहारस्य गौणत्वापत्तेः । न च जातिस्मृतिमतः शरीरभेदेऽपि स्मरणं दृश्यत इति वाच्यम्, अदृष्टविशेषस्यैव तत्र नियामकत्वान्नत्वात्मैक्यस्य । योगिनामात्मान्तरेऽपि तद्दर्शनात् । आत्मैक्यस्य तत्प्रयोजकत्वे तव मते योगीतरोऽपि किं न स्मरेत् । तस्मात्सर्वात्मतैव सर्वथा साध्वीति प्राहुरित्यन्यत्र विस्तरः[1] ।

१ तथा चायं कारिकावाक्यार्थः—तस्मात्="त्रिगुणमविवेकि" इत्यादिकारिकोक्तात् त्रिगुणादेर्विपर्यासात्=वैपरीत्यात् त्रैगुण्यादिधर्मरहितत्वादिति यावत् । 'च' कारात् पुरुषबहुत्वाच्च पुरुषस्य साक्षित्वादिकं सिद्धमिति ।

---

1 नैमित्तिकमेव बहुत्वं नैसर्गिकमेव चैकत्वमित्यात्मनो जीवब्रह्मभावाभ्यां द्वैविध्यं वेदादि प्रसिद्धं सांख्यवेदान्तयोरुभयत्रैव सुविचार्योपदर्शितमास्ते, तथापि सांख्ये नैसर्गिकात्म-वादोऽस्तीति प्रवादः नैमित्तिकमेव बहुत्वमाश्रित्य प्रवृत्तं भवेत्, अन्यथा ऋषीणां भ्रान्तत्वप्रसङ्गादिति मात्सर्यमुत्सार्य विचार्यमार्यैः ।

विपर्यासादस्माद्-इत्युक्ते त्रैगुण्यविपर्ययाद्-इत्यनन्तरोक्तं संबध्येत, अतस्तन्निरासाय तस्माद्-इत्युक्तम्, अनन्तरोक्तं हि सन्निधानादिदमो विषयो, विप्रकृष्टं च तद इति विप्रकृष्टं 'त्रिगुणमविवेकि' इत्यादि संबध्यते, तस्मात्=त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वं च ।

---

इत्यनुक्त्वा "तस्मात्" इत्युक्तवतः कारिकाकर्तुस्तात्पर्यमाह—विपर्यासादस्मादिति । इत्युक्ते="तस्माच्च विपर्यासात्" इत्यस्य स्थाने "विपर्यासादस्मात्" इति कथिते सतीत्यर्थः । अनन्तरोक्तम्=जन्ममरणेति प्रागुक्ताष्टादशकारिकोक्तम् इत्यर्थः । तन्निरासाय=अनन्तरोक्तस्य "त्रैगुण्यविपर्ययात्" इत्यस्य असम्बन्धाय, बुद्धिस्थव्यवहिताभिमतपरामर्शाय च "तस्मात्" इत्युक्तमित्यर्थः । ननु "अस्मात्" इत्युक्तेऽनन्तरोक्तस्य सम्बन्धः स्यात् "तस्मात्" इत्युक्तौ तु व्यवहितस्यापि सम्बन्ध इति कथमवगम्यते? तत्राह—अनन्तरोक्तं हीति । सन्निधानात्-सन्निकृष्टत्वरूपार्थबलात्, इदमः=इदं शब्दस्य, विषयः=प्रतिपाद्यम्, विप्रकृष्टम्-व्यवहितं च, तदः=तच्छब्दस्य, विषयः प्रतिपाद्यम् । यदुक्तम्—"इदमस्तु सन्निकृष्टे समीपतरवर्तिन्येतदोरूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥" इति । ततश्च कारिकायाम् इदंशब्दोपादाने "त्रैगुण्यविपर्ययात्" इति समीपस्थं सम्बध्येत, इदंशब्दस्य सन्निकृष्टपरामर्शकत्वात्, तच्छब्दोपादाने तु "त्रिगुणमविवेकि-" इति दूरस्थकारिकोक्तं (११) विप्रकृष्टं त्रिगुणत्वादि परामृश्यते, तच्छब्दस्य परोक्षपरामर्शकत्वादिति कारिकायां तच्छब्द एवोपात्तो नेदंशब्द इति पिण्डितोऽर्थः । अयमत्र निष्कर्षः—यद्यत्र कारिकायां "विपर्यासादस्मात्" इत्येवम् इदंशब्द उपादीयेत, तेन च समनन्तरोक्तं "त्रैगुण्यविपर्ययात्" इति परामृश्येत, तदा "त्रैगुण्यरूपविपर्ययरूपाद् विपर्यासात्" इत्येवमन्वये त्रिगुणत्वविपरीतेन अत्रिगुणत्वहेतुना केवलं सुखादिशून्यतारूपकैवल्यधर्मवत्त्वमेव पुरुषस्य लभ्येत, न साक्षित्वादिधर्मवत्त्वम्, तत्साधकचेतनत्वादेर्हेतोरलाभात्, "त्रैगुण्यविपर्ययात्सकाशाद् यो विपर्यासस्तस्मात्" इत्येवमन्वये तु विपरीतमेवापद्येत, अत उपात्तनिखिलधर्माणाम् "अनेन हेतुना साक्षित्वम् अनेन च हेतुना अकर्तृत्वम्" इत्यादिरूपेण सहेतुकत्वलाभाय कारिकायां "तस्मात्" इति तच्छब्द एवोपात्तो नेदं शब्दः, इति । तस्मिंश्चोपात्ते तेन व्यवहितस्य "त्रिगुणमविवेकि-" इत्यादेः परामर्शात् "तस्मात्=त्रिगुणादेः, विपर्यासात्=विपरीताद् अत्रिगुणत्वादेर्हेतोः पुरुषस्य साक्षित्वादिकं सिद्धम्" इत्यर्थः साधु सम्पद्यते, तदेवाह—तस्मात्-त्रिगुणादेरिति । त्रिगुणत्वादेः सकाशादित्यर्थः । किंविधो विपर्यास इत्यत्राह—स पुरुषस्यात्रिगुणत्वमित्यादि । सः=विपर्यासः । अप्रसव-

तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते, चेतनो हि द्रष्टा भवति नाचेतनः, साक्षी च दर्शितविषयो भवति, यस्मै प्रदर्श्यते विषयः स साक्षी, यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवाद-विषयं साक्षिणे दर्शयत एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी, न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी, अत एव द्रष्टापि भवति ।

---

धर्मित्वं चेति । तस्माद् विपर्यासात् पुरुषस्य साक्षित्वादिकं सिद्धमित्यर्थः । यस्माद् विपर्यासाद् यत् सिद्धम्, तद् विभज्य दर्शयति—तत्रेति । यतः पुरुषः चेतनः, अविषयी चेति अतः स साक्षी द्रष्टा चेत्यर्थः । कुतस्तत्राह—चेतन इति । दर्शितो विषयो यस्मात् स दर्शितविषयः, तदेवाह—यस्मा इति । तदेव दृष्टान्तेन विशदयति—यथेति । लोके=जगति, अर्थिप्रत्यर्थिनौ=वादि-प्रतिवादिनौ, अर्थ्यते इति अर्थः=साध्यः, सोऽस्यास्तीति अर्थी । तत्प्रतिपक्षः प्रत्यर्थी=प्रतिवादी । साक्षिणे=वृत्तज्ञाय । प्रकृतिः=बुद्धिरूपेण परिणताप्रकृति-रपि, स्वचरितम्=स्वोपगृहीतं विषयजातम्, स्वस्मिन् प्रतिबिम्बिताय स्वस्वा-मिने पुरुषाय समर्पयतीत्यर्थः । घटादाविव अचेतने महदादौ साक्षित्वादेरभाव-माह—न चाचेतन इति । अचेतनः=महदादिः । भवति साक्षीति । बुद्धे-रिति शेषः । तथैव पुरुषस्य अव्यवहितसम्बन्धात्[2], इति बोध्यम् । तत्र "बोद्धृ-त्वेसति अकर्तृत्वं साक्षित्वम्" । कथं तर्हि अन्येषां भानम् तत्राह—अत एवेति । साक्षित्वादेवेत्यर्थः । साक्षित्वादेवान्येषां द्रष्टाऽपि भवतीत्यर्थः । इन्द्रियप्रणालिकया बुद्धौ तत्तदाकारेण परिणतायां पुरुषेण दृश्यायां सत्यां तदा-रूढाः पदार्था अपि दृश्या भवन्तीति तेषां द्रष्टा पुरुष इति भावः । बुद्धेः साक्षात्प्रकाशकः पुरुषोऽन्येषां तु बुद्धिवृत्तिव्यवधानेन प्रकाशक इति तत्त्वम् । यदुक्तम्—"द्रष्टा[3] दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" इति, "द्रष्टा बुद्धेः प्रतिसंवेदी[4] पुरुषः" इति चेति ॥

---

१ यथा कश्चिदिदं क्षेत्रादि मदीयमिति कथयति अन्योऽपि तद्विरोधेन मदीयमिति । अर्थशब्दस्याभिधेयत्वपरत्वनिरासद्वारा प्रयोजनपरत्वमाह—अर्थ्यत इति । २ तथाच कापिलसूत्रम्—"साक्षात्संबन्धात्साक्षित्वम्" ( सां० १।१६१ ) इति । "जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥" ( सां० प्र० भा० ) ३ शुद्धोऽपि=अपरिणाम्यपि दृशिमात्रः=चिन्मात्रः—ज्ञानस्वरूपः पुरुषः प्रत्य-यानुपश्यः=बुद्धिवृत्तिमनुपश्यन् सन् द्रष्टा भवतीति योगसूत्रार्थः । ४ संवेदिन्या बुद्धेः प्रति-रूपः अर्थाकारायां बुद्धौ सत्यां तत्प्रतिबिम्बितत्वेन तदनुकारीति योगभाष्यार्थः । एतदुक्तं भवति—ज्ञानाधारत्वं द्रष्टृत्वम्, ज्ञातृत्वमिति यावत्, यो हि दृशिमात्रो नासौ ज्ञानाधारो भवितुमर्हति सत्यम्, बुद्धिवृत्त्यविशिष्टवृत्तित्वेनारोपितं निखिल दृश्यद्रष्टृत्वं तस्याक्षतमेवेति । अनुकारी=तदाकारधारी ।

अत्रैगुण्याच्चास्य कैवल्यम्, आत्यन्तिको दुःखत्रयाभावः कैवल्यं, तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्=सुखदुःखमोहरहितत्वात् सिद्धम्, अत एवात्रैगुण्यान्माध्यस्थ्यम्, सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो न भवति, तदुभयरहितस्तु 'मध्यस्थ' इति, 'उदासीन' इति चाख्यायते।

विवेकित्वाद्, अप्रसवधर्मित्वाच्चाकर्तेति सिद्धम्॥ १९॥

स्यादेतत्, प्रमाणेन कर्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन्

तच्च=कैवल्यं च, तस्य=पुरुषस्य, स्वाभाविकादेव=तात्त्विकादेव, एतच्च "तस्मान्न बध्यते" (६२) इति कारिकायां स्फुटीभविष्यति॥ मध्यस्थः स एव भवति यः कस्यचित्पक्षं न भजते तस्य भावो माध्यस्थ्यम्=ताटस्थ्येन वर्तमानत्वम्, सुखादिशून्यत्वेन रागद्वेषराहित्यमिति यावत्। एतदेव विपर्ययप्रदर्शनेन द्रढयति—सुखीति। तृप्यन्=तृप्तिमनुभवन्, सुखे रागं कुर्वन् इत्यर्थः, द्विषन्=निन्दन्, तदुभयरहितः=रागद्वेषरहित इत्यर्थः। उदासीन इति। यद्यपि "विवदमानयोरुभयोरपि पक्षपाती हितैषी वा मध्यस्थः" "विवदमानयोरुभयोरप्युपेक्षक उदासीनः" इत्येवं तयोर्भेद उपलभ्यते, तथापि रागद्वेषराहित्यमात्रं साम्यमादाय ग्रन्थकृता तयोरभेद उपदर्शित इति ध्येयम्। आख्यायते=परिभाष्यते=कथ्यते।

विवेकित्वात्=महदादिवत् सम्भूयकारित्वाभावात्, अप्रसवधर्मित्वात्=अपरिणामित्वेन अजनकत्वात्, अकर्ता पुरुष इति सिद्धमित्यर्थः। कर्ता हि स्वाभीष्टोत्पादाय प्रयतमानोऽविवेकी प्रसवधर्मी च भवति, तस्य विविक्तत्वात् न कर्तृत्वमित्यर्थः। तच्च कर्तृत्वं बुद्ध्याश्रयमपि पुरुषे उपचर्यते॥ १९॥

## अथ प्रधानपुरुषसंयोगसिद्धिनिरूपणम्।

"जानाम्यहं करोमीदमहम्" इति प्रत्यये द्रष्टृत्वस्य कर्तृत्वस्य च भवत्येकाधिकरणत्वेन प्रतीतिरिति "द्रष्टृत्वमकर्तृभावश्च" इत्यनेन यद् आत्मनो द्रष्टृत्वे सति अकर्तृत्वमुक्तं तदसमीचीनमिति शङ्कते—स्यादेतदित्यादिना। अव-

१ "सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु। साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥" (गी० ६।९) इत्यादौ यथेति भावः। वादिप्रतिवादिनोः समो मध्यस्थः, सर्वत्रोपेक्षावानुदासीन इति शङ्करानन्दः। २ "श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः। तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल॥" (भा० १०।७८।१७) इत्यादावुदासीनेऽपि मध्यस्थपदप्रयोगदर्शनादिति भावः। ३ यदि संभूयकारित्वं पुरुषस्य नास्ति, तदा, कर्तृत्वमपि नास्ति, एकस्मात् पदार्थात् कस्यापि कार्यस्यासंभवादिति भावः। ४ परिणामं विना कार्योत्पत्तेरसंभवान्नास्य कर्तृत्वमिति भावः।

करोमि इति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं, तदेतस्मिन्मते नावकल्पते—चेतनस्याकर्तृत्वात् कर्तुश्चाचैतन्याद्, इत्यत आह—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥ २० ॥

"तस्मात्तत्संयोगाद्" इत्यादि।

यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे स्तः तस्माद् भ्रान्तिरियमित्यर्थः।

---

गम्य=बुद्ध्वा, विदित्वा, अनेन ज्ञानं दर्शितम्। चिकीर्षन्=कर्तुमिच्छन्, अनेन इच्छा दर्शिता, करोमि=विदधामि, अनेन कृतिरुक्ता, "चेतनोऽहम्" इत्यनेन च तेषामाश्रय उक्तः। तथा च "ज्ञानेच्छाकृतीनामेकाधिकरणत्वमनुभवसिद्धम्" इत्यत्राऽऽयातम्। सामानाधिकरण्यम्=एकाधिकरणवृत्तित्वम्। नन्वस्तु कृतिचैतन्ययोरेकाधिकरणत्वम्, ततः किम्? तत्राह—तदिति। तत्=एकाधिकरणत्वम्, अस्मिन् मते=' बुद्ध्यादिकं कर्तृ, चेतनश्च पुरुषोऽकर्ता" इति मते, न अवकल्पते=युज्यते। कुतस्तत्र हेतुमाह—चेतनस्येति। पुरुषस्य अकर्तृत्वात्, कर्तुः=बुद्ध्यादेश्च अचेतनत्वात्, इति॥

तस्मादिति। यतः चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्मात् "चेतनोऽहं करोमि" इति सामानाधिकरण्यप्रतीतिर्भ्रान्तिरेव, भ्रान्तिबीजम्—तत्संयोगादिति। अयमर्थः— लिङ्गम्=बुद्ध्यादिकम् अचेतनमपि, तत्संयोगात्=चेतनसन्निधानात्, चेतनावत्=चेतनमिव भवति, अतो "जानामि" इति प्रत्यय उपपन्नः। तथा गुणकर्तृत्वेऽपि=बुद्ध्यादिरूपेण परिणतानां गुणानां कृतिमत्त्वेऽपि, तथा=बुद्ध्युपरागात्-तत्प्रतिबिम्बितत्वात्, उदासीनोऽपि, पुरुषः कर्ता इव भवति, तेन "करोमि" इति प्रत्यय उपपन्न इति॥ २०॥

कारिकायां "तस्मात्" इति तच्छब्द एवोपात्तो न यच्छब्द इति तदपेक्षितं पूरयति—यत इति। भिन्नाधिकरणे "चैतन्यम्=प्रकाशकत्वम्, तच्च आत्मधर्मः, कर्तृत्वम्=कृतिमत्त्वम् तच्च बुद्धिधर्मः" इत्येवं भिन्नाधिकरणे=विभिन्नाश्रये, युक्तितः="त्रिगुणत्वात् परिणामित्वाद् बुद्धेः कर्तृत्वम्, निर्गुणत्वाद् अपरिणामित्वात् पुरुषस्य अकर्तृत्वम्-द्रष्टृत्वादिकं च" इत्यादि पूर्वोक्तयुक्तितः, सिद्धे=साधिते, तस्माद् इयम्=सामानाधिकरण्यप्रतीतिः, भ्रान्तिः=अविवेककृता अस्मितानाम्नी भ्रान्तिरेवेत्यर्थः। अस्मितालक्षणं यथा—"दृग्दर्शन-

---

१ तथा च "यस्माच्चैतन्यकर्तृत्वे भिन्नाधिकरणे तस्मादचेतन=चैतन्यरहितं लिङ्गं=सूक्ष्मशरीरं तत्संयोगात्=चेतनपुरुषसन्निधानात् चेतनावदिव भवति" इत्यर्थपर्यवसाने "चेतनावदिव" इति 'इव' शब्दप्रयोगात् "चेतनोऽहं चिकीर्षन् करोमि" इति चैतन्यकर्तृत्वयोः सामानाधिकरण्यप्रतीतेर्भ्रान्तित्वमेवेत्याचार्याशयः।

भ्रान्तिवीजं तत्संयोगः=तत्सन्निधानम् ।

लिङ्गं=महदादिसूक्ष्मपर्यन्तं वक्ष्यति, अतिरोहितार्थमन्यत् ॥ २० ॥

'तत्संयोगाद्' इत्युक्तं, न च भिन्नयोः संयोगोऽपेक्षां विना,

---

शक्त्योरेकात्मतेवास्मिता" (यो० २।६) इति । अस्यार्थः—दृक्शक्तिः=पुरुषः, दर्शनशक्तिः=बुद्धिः, तयोर्द्रष्टृदृश्ययोः अविद्यापादिता या एकरूपता इवे, सा अस्मिता, इति । यद्यपि "जानामि" इति प्रत्ययस्य आत्माधिकरणत्वम्, "करोमि" इति प्रत्ययस्य च बुद्ध्यधिकरणत्वं युक्तम्, तथापि धर्मिणोः (बुद्धिपुरुषयोः) विवेकाग्रहात् तद्धर्मयोः (कृतिचैतन्ययोः) साङ्कर्यात् कृतिचैतन्ययोः सामानाधिकरण्यं[2] भातीति तत्त्वम् ॥

किंनिमित्ता पुनरियं भ्रान्तिरित्यत्राह—भ्रान्तिवीजं तत्संयोग इति । ननु "असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतेः चेतनस्य असङ्गत्वात् कथं तत्संयोग इत्यभिप्रेत्य संयोगपदं[3] व्याचष्टे—तत्सन्निधानमिति । तथा च कापिलसूत्रम्—"उपरागात्कर्तृत्वं चित्सन्निधानात्" (सां० १।१६४) इति । अस्यार्थः—पुरुषस्य यत्कर्तृत्वं तद् बुद्ध्युपरागात्, बुद्धेश्च या चित्ता सा

---

१ बुद्धिपुरुषयोरेकात्मता न पारमार्थिकी, किं त्वाविद्यकीति द्योतयितुमिवशब्दः । एतस्यामेवास्मितायां सत्यां पुरुषोऽहमस्मि सुखी दुःखी कर्ता भोक्तेत्यभिमन्यते । विवेकख्यात्या च भिद्यमानायां तस्यां मुक्तिपदमश्नुते । तत्र केवले अनात्मन्यात्मारोपः=अविद्या, तन्निबन्धनः सुखदुःखादिविशिष्टे तस्मिन् तदारोपः अस्मितेति विशेष इति विवरणकारः । २ यथाऽग्न्ययसोः परस्परं संयोगविशेषाद् भवति परस्परधर्मारोपस्तथा बुद्धिपुरुषयोरपि सोऽर्हति भवितुमिति भावः । ३ संयोगलक्षणं यथा—"स्वस्वामिशक्त्योः स्वरूपोपलब्धिः संयोगः" (यो० २।२३) इति । द्रष्ट्रर्थं हि दृश्यं, ततो दृश्यजनितोपकारं भोगापवर्गलक्षणं भजमानः पुरुषः स्वामी, स्वं च दृश्यं, तयोर्बुद्ध्यापादितो विविक्तस्य द्रष्टुः स्वामिनः स्वरूपस्योपलब्धिरपवर्गः । शब्दाद्याकारेण परिणतायाः सुखदुःखवत्याः बुद्धिप्रकृतेः स्वरूपस्याविवेकाद् द्रष्टृकर्मतयोपलब्धिर्भोगः । तद्धेतुभूतो यः स्वस्वामिशक्त्योर्बुद्धिपुरुषयोः स्वस्वामिभावलक्षणो वा, भोग्यभोक्तृभावलक्षणो वा, दृश्यद्रष्टृभावलक्षणो वा संबन्धः, स संयोग इति भावः । यश्चायं भोगापवर्गहेतुः प्रकृतिपुरुषसंयोगः, स च न घटपटयोरिव संयोगविशेषः, किं तु योग्यतालक्षणः । भवति दृश्यनिष्ठा जडत्वविषयत्वलक्षणा भोग्यत्वयोग्यता, द्रष्टृनिष्ठा च चेतनत्वलक्षणा भोक्तृत्वयोग्यता । सोऽयं योग्यतालक्षणः संयोगोऽनादि विपर्ययज्ञानवासनाप्रभवतया अनादिः सन्नपि नानन्तः, किं तु मध्ये निमित्तापायादपायशीलः । निमित्तापायश्च सम्यग् दर्शनादेव, नोपायान्तराद् । यतः सम्यग् दर्शनमेव विपर्ययदर्शनप्रतिद्वन्द्वीति द्रष्टव्यमिति पातञ्जलाः ।

**न चेयमुपकार्योपकारकभावं विना, इत्यपेक्षाहेतुमुपकारमाह—**

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ २१॥**

**"पुरुषस्य दर्शनार्थम्" इत्यादि।**

---

पुरुषसान्निध्यादिति। अतिरोहितार्थम्[1]=स्पष्टार्थम्, "इति न व्याख्यायते" इति शेषः॥ २०॥

भिन्नयोः=आत्मा चेतनः, प्रधानं च अचेतनम् इत्येवंभेदविशिष्टयोः पुम्प्रकृत्योः, अपेक्षाम्=मिथ आकाङ्क्षाम्, परस्परानुरागो वा अपेक्षा ताम्, इयम्=अपेक्षा, उपकार्यः=उपकारयोग्यः, उपकारकः=उपकारकर्ता, उपकार्योपकारकभावेनैव भवत्यपेक्षा नान्यथेत्यर्थः। तत्र उपकार्यः=पुमान् उपकारिका=प्रकृतिः, गुणवती भार्येवेति विवेकः। इति=यत एवम् अत इत्यर्थः। इतिर्हेतौ। **अपेक्षाहेतुमुपकारमाहेति।** यद्यपि "तस्य[2] हेतुरविद्या" (यो० २।२४) इति पातञ्जलसूत्रेण अनादिविपर्ययज्ञानवासनाया एव संयोगहेतुत्वमुक्तम्, **तथापि**—अवान्तरं संयोगप्रयोजकं परस्परोपकारमाहेत्यर्थः॥

**पुरुषस्येति।** उभयोः=पुरुषस्य प्रधानस्य च, यः संयोगः=मेलनम्, स दर्शनार्थं कैवल्यार्थं चेत्यन्वयः। तत्र प्रधानेन स्वदर्शनार्थम्=सुखाद्यात्मकस्वस्वरूपानुभवरूपभोगार्थं पुरुषोऽपेक्ष्यते, पुरुषेण च स्वकैवल्यार्थम्=कैवल्यकारणविवेकज्ञानरूपप्रकृतिपरिणामार्थं प्रधानमपेक्ष्यते। तत्र दृष्टान्तः—**पङ्ग्वन्धवदिति।** यथा—एकः पङ्गुः एकश्चान्ध एतौ द्वावपि गच्छन्तौ महता सामर्थ्येन अटव्यां सार्थस्य स्तेनकृताद् उपप्लवात् स्वबन्धुपरित्यक्तौ दैवाद् इतश्चेतश्च चेरतुः, स्वगत्या च तौ संयोगम् उपयातौ, पुनस्तयोः स्ववचसोर्विश्वस्तत्वेन संयोगो गमनार्थं दर्शनार्थं च भवति, अन्धेन पङ्गुः स्कन्धमारोपितः, एवं शरीरारूढपङ्गुदर्शितेन मार्गेण अन्धो याति, पङ्गुश्च अन्धस्कन्धारूढः, एवं पुरुषे दर्शनशक्तिरस्ति पङ्गुवत् न क्रिया, प्रधाने क्रियाशक्तिरस्ति अन्धवत् न दर्शनशक्तिः। **तथा च** यथा गतिशक्तिविहीनेन पङ्गुना

---

१ तिरोहितः=अव्यक्तः अर्थो यस्य तत् तिरोहितार्थं न तिरोहितार्थमतिरोहितार्थं=व्यक्तार्थमिति यावत्। तथापि वाक्यार्थः स्पष्टमभिधीयते—यथा पुरुषलिङ्गयोरविवेकग्रहात् अचेतनमपि लिङ्गं पुरुषसन्निधानात् तद्धर्मेण चेतनत्वेनारोप्यते तथा=तद्वत् गुणस्य=लिङ्गस्य कर्तृत्वेऽपि तद्धर्मेण कर्तृत्वेन उदासीनः पुरुषश्च कर्तेव भवति=कर्तृत्वेनारोप्यत इति। तथा च वह्निना जाज्वल्यमाने अयःपिण्डे वह्निलोहयोरविवेकग्रहात् यथा वह्निधर्मेण दाहकत्वेन "अयो दहति" इत्यारोप्यते, अयोधर्मेण च गोलत्वादिना वह्निरारोप्यते तद्वदिति भावः। (आ० वा०) "जडाहं तस्य सान्निध्यात्प्रभवामि सचेतना। अयस्कान्तस्य सांनिध्यादयसश्चेतना यथा॥" इति देवीभागवते। २ तस्य=बुद्धिपुरुषसंयोगस्य।

'प्रधानस्य' इति कर्मणि षष्ठी, प्रधानस्य सर्वकारणस्य यद् दर्शनं पुरुषेण तदर्थम्, तदनेन भोग्यता प्रधानस्य दर्शिता, ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न संभवतीति युक्ताऽस्य भोक्त्रपेक्षा।

पुरुषस्यापेक्षां दर्शयति—'पुरुषस्य कैवल्यार्थम्' । तथाहि—प्रधा-

---

अभीष्टदेशप्राप्तये गतिशक्तिमान् अन्धोऽपेक्ष्यते, दर्शनशक्तिहीनेन चान्धेन मार्ग-प्रदर्शनार्थं दर्शनशक्तिमान् पङ्गुरपेक्ष्यते तथेति दृष्टान्तार्थः । अत्र पङ्गूपमो निष्क्रियः पुरुषः, अन्धोपमं चाचेतनं प्रधानमिति बोध्यम् । यथा वा अनयोः पङ्ग्वन्धयोः कृतार्थयोर्विभागो भविष्यतीप्सितस्थानप्राप्तयोः, एवं प्रधानमपि पुरुषस्य मोक्षं कृत्वा निवर्तते, पुरुषोऽपि प्रधानं दृष्ट्वा कैवल्यं गच्छति, तयोः कृतार्थयोर्विभागो भविष्यति । तत्कृतः सर्गः=महदादिलक्षणः सर्गः संयोग-जन्य एवेत्यर्थः । अत एव प्रलये न सर्गः, तयोस्तादृशसंयोगाभावादिति भावः ॥ २१ ॥ ✿ ॥

प्रागुक्तमेवार्थम् अन्वयाख्यानेन प्रदर्शयितुमाह—प्रधानस्येति कर्मणि षष्ठीति । "उभयप्राप्तौ कर्मणि" इति पाणिनिसूत्रेण "प्रधानस्य" इति कर्मणि षष्ठीविभक्तिरित्यर्थः । किं क्रियापेक्षयेदं कर्म, इत्याकाङ्क्षायां व्यवहिता-मपि दर्शनक्रियां योग्यतया संबध्नाति—प्रधानस्य यद् दर्शनमिति ।

यत्र कर्तृकर्मणी विद्येते तत्रैव भवति षष्ठ्याः प्रवृत्तिरिति कर्तृपदस्याध्याहारं कुर्वाणः "केन दर्शनम्" इत्याकाङ्क्षितं पूरयति—पुरुषेणेति । तदर्थम्= स्वानुभवार्थं प्रधानेन पुरुषोऽपेक्ष्यते इत्यर्थः । तदेवाह—तदनेनेति । तेन अनेन—पुरुषकर्तृकदर्शनकर्मविषयत्वकथनेनेत्यर्थः । अस्य=प्रधानस्य, भोक्त्र-पेक्षा=भोक्तुरपेक्षेति विग्रहः । युक्ता=उचिता । अयं भावः—सुखदुःखानु-भवो हि भोगः, न हि सुखाद्यात्मकं प्रधानं स्वम् अनुभवितुं प्रभवति, स्वात्मनि क्रियाविरोधात् जडत्वाच्चेति युक्ता प्रधानस्य स्वानुभवार्थं चेतनापेक्षा, "चिदवसानो भोगः" ( सां० १।१०४ ) इति सूत्रकृता भोगस्य चेतनाश्रय-त्वस्य प्रतिपादनादिति । चिति=पुरुषे, अवसानम्=पर्यवसानं निष्ठा यस्य तादृशो भोगो भवतीति सूत्रार्थात् ।

"व्यवहितमपि "पुरुषस्य" इति पदं "कैवल्यार्थम्" इत्यत्रान्वेति" इत्या-ख्यातुं पुरुषस्य अपेक्षामुत्थापयति—पुरुषस्यापेक्षामिति । प्रकृतेरिति शेषः । तथा च "पुरुषेण किमर्थं प्रधानमपेक्ष्यते" इत्याकाङ्क्षायां पुरुषस्य प्रधाना-

---

१ प्रधानं तावत् सुखदुःखमोहात्मकं, सुखदुःखयोश्चानुभवमन्तरेण प्रधानस्य तदात्म-कत्वं व्यर्थम्, अतः पुरुषकर्तृकतदनुभवमपेक्षते प्रधानम् । सुखदुःखानुभवश्च भोगपदार्थः । तत्र तदनुभविता भोक्ता, सुखदुःखे तु अनुभवविषयतया भोग्ये । तथा च सुखदुःखयोर्भोगत्वे सिद्धे सुतरां तदात्मकस्य प्रधानस्य भोग्यत्वं सिध्यतीति पिण्डितोऽर्थः ।

नेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते, तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनं, न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते,

अनादित्वाच्च संयोगपरम्परायाः भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यत इति युक्तम्।

ननु भवत्वनयोः संयोगो, महदादिसर्गस्तु कुतस्त्य इत्यत आह—"तत्कृतः सर्गः"। संयोगो हि न महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह—

---

पेक्षां दर्शयतीत्यर्थः। प्रधानेन संभिन्नः=प्रधानात् स्वस्य पार्थक्यमजानानः। तद्गतम्=प्रधानगतम्, प्रार्थयते=वाञ्छति, तच्च=कैवल्यं च, सत्त्वपुरुषान्यताख्यातिनिबन्धनम्=सत्त्वम्=प्रधानम्, पुरुषः=चेतनः, तथा च प्रकृत्यवधिकपुरुषान्यताप्रकारकज्ञाननिदानमित्यर्थः। प्रधानमन्तरेण=प्रधानं विना, बुद्धिरूपेण परिणतस्य प्रधानस्यैव हि परिणामो विवेकज्ञानम् इति न प्रधानं विना तत्संभवतीति भावः। अयमत्र निष्कर्षः—इष्टविषयेच्छया इष्टसाधनाय प्रवर्तमानो दृष्टः, पुरुषश्च आत्मनि अनुभूयमानं दुःखत्रयं जिहासुः तत्परिहारसाधनम् अर्थयते, दुःखत्रयाभिघातश्च प्रकृतिपुरुषविवेकाधीन इति प्रकृतिं विना कथङ्कारं पुरुषः तद्भेदम् आत्मनि प्रतीयात् इति दुःखत्रयाभिघातार्थम् अपेक्षणीयज्ञानसाधनत्वेन पुरुषस्य प्रकृत्यपेक्षेति॥

ननु यदि पुरुषो भोगाय संयुक्तः, तर्हि किमर्थं पुनः कैवल्याय संयुज्यते? तत्राह—अनादित्वादिति। अविच्छिन्नत्वादित्यर्थः। अनयोः=प्रकृतिपुरुषयोः, संयोगः=संसर्गः, तत्कृतः=द्रष्टृदृश्यसंयोगकृतः, सर्गः=भोगापवर्गद्वारभूतो महदादिसंसारः, तथा च पातञ्जलसूत्रम्—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" (यो० २।१७) इति। अस्यार्थः—द्रष्टा=पुरुषः, दृश्या=बुद्धिः, तयोः संयोगः=संसर्गः, हेयहेतुः=संसारकारणम्, इति॥ २१॥

## अथ सर्गक्रमनिरूपणम्।

प्रकृतिपुरुषसंयोगस्य महदादीनां निमित्तत्वेऽपि उपादानमन्तरेण कार्योत्पत्तेरसम्भवात् पुरुषस्य चापरिणामित्वात् तात्त्विकसङ्गरहितत्वाच्च न कार्योपादानत्वम् अतोऽव्यक्तमेव महदादेरुपादानमिति मनसि निधायाऽऽह—

---

१ जडायाः परिणामिन्याः प्रकृतेः सकाशाद् भिन्नोऽहं चेतनोऽपरिणामीत्याकारकज्ञानमेव निदानं=मुख्यं कारणं यस्य तादृशमित्यर्थः।

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥**

"प्रकृतेर्महान्" इत्यादिना ।

प्रकृतिः=अव्यक्तं, महदहङ्कारौ वक्ष्यमाणलक्षणौ, एकादशेन्द्रियाणि वक्ष्यमाणानि, तन्मात्राणि च पञ्च, सोऽयं षोडशसङ्ख्यापरिमितो गणः षोडशकः, तस्मादपि षोडशकाद् अपकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतानि आकाशादीनि ।

तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद् रूपत-

---

प्रकृतेरिति । प्रकृतेः=प्रधानात्, महान्=महत्तत्त्वम् बुद्धितत्त्वमिति यावत्, "जायते" इत्यग्रेऽध्याहर्तव्येन अन्वयः । ततः=महत्तत्त्वात्, अहङ्कारः="अहम्" इत्यभिमानव्यापारलक्षण उत्पद्यते, तस्मात्=अहङ्कारात्, षोडशको गणः= एकादशेन्द्रियाणि पञ्चतन्मात्राणीति षोडशको गणो जायते । तस्मादपि षोडशकाद् गणात् निष्कृष्टेभ्यः षोडशकमध्यात् पृथक् कृतेभ्य इति यावत्, पञ्चभ्यः=पञ्चतन्मात्रेभ्यः, पञ्चभूतानि=पञ्चमहाभूतानि आकाशादीनि जायन्ते इति योजना । साङ्ख्यचन्द्रिकाकारस्तु "षोडशकात्" इति "ल्यब्लोपे पञ्चमी" इत्याश्रित्य षोडशकं प्राप्य स्थितेभ्यः पञ्चभ्यः तन्मात्रेभ्यः पञ्चमहाभूतानि जायन्ते" इत्येवं व्याचचक्षे ॥ २२ ॥ ॐ ॥

प्रकृतिपदं व्याचष्टे—अव्यक्तमिति । सर्वकारणं प्रधानमित्यर्थः । "षोडशकात्" इति पदव्याख्यानाय तदवान्तरसङ्ख्यामाह—एकादशेति । पञ्चकर्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणि उभयात्मकं मन इत्येवम् एकादशेन्द्रियाणि, तन्मात्राणि=शब्दादिगुणकानि आकाशादीनि सूक्ष्मद्रव्याणि पञ्चेत्यर्थः । "षोडशपरिमाणमस्य" इत्यर्थे "सङ्ख्याया अतिशदन्तायाः कन्" इति प्रस्तावे "तदस्य परिमाणम्" इति कन् प्रत्यये "षोडशकः" इति रूपमित्यभिप्रेत्य षोडशकपदस्यार्थमाह—षोडशसङ्ख्येति । सोऽयं षोडशकः तस्मात्=अहङ्कारात् जायते इति योजना । "षोडशकात् इत्यस्य पञ्चभ्यः" इत्यनेन सह सामानाधिकरण्येन अन्वयो न संभवति, "षोडशकात्" इत्यस्यैकवचनान्तत्वात् "पञ्चभ्यः" इत्यस्य च बहुवचनान्तत्वात्, समानविभक्तिकयोरेव च सामानाधिकरण्यनियमादिति अपेक्षितं पदमध्याहरति—अपकृष्टेभ्य इति । षोडशकमध्यात् पृथक् कृतेभ्य इत्यर्थः ॥

कारिकायां "पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्ते" इति सामान्यत उक्तम्, तत्र "कस्मात् तन्मात्रात् किंगुणकस्य कस्य भूतस्य उत्पत्तिः" इति विशेषजिज्ञासायां "यस्मात् तन्मात्रात् यद्गुणकस्य यस्य भूतस्योत्पत्तिर्भवति तं प्रकारं प्रदर्शयितुमाह—तत्रेति । अत्र शब्दतन्मात्रात्=शब्दगुणकात् सूक्ष्मादा-

न्मात्रात् तेजः शब्दस्पर्शरूपगुणं, शब्दस्पर्शरूपतन्मात्रसहिताद् रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद् गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इत्यर्थः ॥ २२ ॥

---

काशात् शब्दगुणकं स्थूलमाकाशं जायते, शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात्=शब्दस्पर्शगुणकास्सूक्ष्माद् वायोः शब्दस्पर्शगुणकः स्थूलो वायुर्जायते, इत्यादिरर्थो ज्ञेयः, "एकद्वित्रिचतुष्पञ्चलक्षणाः शब्दादयः" (यो० २।१९) इति योगभाष्येण "सूक्ष्माकाशाख्यशब्दतन्मात्रं शब्दमात्रधर्मकं, सूक्ष्मवाय्वाख्यस्पर्शतन्मात्रं च शब्दस्पर्शधर्मकं, सूक्ष्मतेजोऽभिधेयरूपतन्मात्रं च शब्दस्पर्शरूपधर्मकं, सूक्ष्मजलाख्यरसतन्मात्रं च शब्दस्पर्शरूपरसधर्मकं, सूक्ष्मपृथिव्याख्यगन्धतन्मात्रं च शब्दस्पर्शरूपरसगन्धधर्मकम्, इति बोधनात् ॥ २२ ॥

---

१ लक्ष्यतेऽनेनेति लक्षणम्=धर्मः, । तन्मात्राणां द्रव्यत्वलाभाय—लक्षणपदम् । तथा च उत्तरोत्तरतन्मात्रेषु पूर्वपूर्वतन्मात्राणां हेतुत्वात् शब्दतन्मात्रं शब्दमात्रधर्मकम्, तत्कार्यतया स्पर्शतन्मात्रं शब्दस्पर्शोभयधर्मकम्, एवं क्रमेण एकैकधर्मवृद्धिरित्यर्थः, इति योगवार्तिककाराः । २ तथा चाहुस्तत्त्ववैशारद्यां मिश्रा एव—"विशिष्टं ह्यपरं परेणेति गन्ध आत्मना पञ्च-लक्षणः, रस आत्मना चतुर्लक्षणः, रूपमात्मना त्रिलक्षणं, स्पर्श आत्मना द्विलक्षणः, शब्दः शब्दलक्षण एवेति ।" अत्र यतः अपरं=गन्धतन्मात्रादि, परेण=रसतन्मात्रादिना विशिष्टं=युक्तम् इति=अतः आत्मना सह गन्धतन्मात्रं पञ्चलक्षणमित्यर्थः । अयमत्र निष्कर्षः—स्थूलसूक्ष्मभेदेन भूतानि द्विविधानि । तत्र स्थूलानि=वियत्पवनतेजोऽम्बुभुवः, सूक्ष्माणि=शब्दस्पर्शरूपरसगन्धतन्मात्राख्यानि तामसाऽहङ्कारोपादानकानि परस्परमतिविजातीयानि परस्परमहेतुकानि, तेषां विपरिणामाः स्थूलाः । तत्र शब्दतन्मात्राख्यस्य परिणाम आकाशः, स्पर्शतन्मात्राख्यस्य वायुः, रूपतन्मात्राख्यस्य तेजः, रसतन्मात्राख्यस्य जलं, गन्धतन्मात्राख्यस्य पृथिवी । तन्मात्राख्याश्च स्थूलानां सूक्ष्मांशाः । स्वांशेभ्यः स्वस्योत्पत्तेः संभवात् । अतो नाकाशस्य वायुः, वायोस्तेजः, तेजसो जलं, जलस्य पृथिवी परिणामः । जातिसांकर्यप्रसङ्गतो विजातीयानां विजातीयपरिणामत्वायोगात् । ननु तर्हि "आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी" इत्याद्यनेकश्रुतिस्मृतिविरोध इति चेत् । न । तासां तेषामधिष्ठानकारणत्वाभिप्रायकत्वात् । अधिष्ठानकारणं च—यत्राऽविभक्तं येनोपष्टम्भं च सदुपादानकारणं च कार्याकारेण परिणमते तत् । यथा सर्गादौ जलाऽविभक्ताः पृथिवीसूक्ष्मांशास्तन्मात्राख्या जलेनैवोपष्टम्भात् पृथिव्याकारेण विपरिणमन्ते । तदत्यन्तो जलं महापृथिव्या अधिष्ठानकारणम् । एवमाकाशादयो वाय्वादीनाम् । आत्मा च सर्वेषाम् । "यस्य यत् कारणं प्रोक्तं तस्य साक्षान्महेश्वरः । अधिष्ठानतया स्थित्वा सदैवोपकरोति हि ॥" इति स्मृतेः । उपष्टम्भकत्वं च परमेश्वरस्य साक्षित्वेनैव । न च "यतो वा इमानि भूतानि

अव्यक्तं सामान्यतो लक्षितं "तद्विपरीतम्" इत्यनेन, विशेषतश्च "सत्त्वं लघु प्रकाशकम्" इत्यादिना, व्यक्तमपि सामान्यतो लक्षितं "हेतुमद्" इत्यादिना, सम्प्रति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति–

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद् रूपं तामसमस्माद् विपर्यस्तम् ॥२३॥

"अध्यवसाय" इति।

---

## अथ महत्तत्त्वलक्षणनिरूपणम्।

अव्यक्तम्=प्रधानम्, सामान्यतः=व्यक्तविपरीतत्वेन, विशेषतः=तदन्तर्गतसत्त्वादिधर्मप्रदर्शनेन। अव्यक्तं "तद्विपरीतम्" इत्यनेन सामान्यतः "सत्त्वं लघु प्रकाशकम्" इत्यादिना च विशेषतो लक्षितम् इति योजना। व्यक्तविशेषम्=व्यक्तम्—महदादिमहाभूतपर्यन्तम्, तद्विशेषम्=तदन्तर्गतप्रथमपदार्थम्, बुद्धिम्=महान्तम् महत्तत्त्वमित्यर्थः॥

अध्यवसाय इति। अध्यवसायः="मयेदं कर्तव्यम्" इत्याकारनिश्चयः, बुद्धिः=बुद्धेर्लक्षणम्। बुद्धिधर्मानाह—धर्मः—ज्ञानम्, विरागः=चतुर्विधं वैराग्यम्, ऐश्वर्यम्=अष्टविधमैश्वर्यम्, एतद्रूपम्=धर्मादिरूपम्, सात्त्विकम् अस्ति। सात्त्विकधर्मानुक्त्वा तामसानाह—एतद्विपर्यस्तम्=धर्मादिविपरीतम् अधर्माज्ञानावैराग्यानैश्वर्यरूपम्, तामसमस्ति। पुरुषमात्र एव यदा कस्मिंश्चित्कर्मणि प्रवृत्तो भवति तदा अन्तःकरणे तिस्रो वृत्तयः (क्रियाः) भवन्ति, यथा प्राक् आलोचनम्, (वस्तुनो ज्ञानम्) ततः "अहम् अत्राधिकारी अस्मि" इत्यभिमानः, ततः "मयेदं कर्तव्यम्" इत्यध्यवसायो (निश्चय-

---

जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" इत्युपादानत्वबोधकश्रुतिविरोध इति वाच्यम्। तस्या अपि कार्याविभागाधारत्वरूपोपादानत्वपरत्वात्। अविभागश्च दुग्धजलयोरिव सम्मिश्रणाख्यः संबन्धविशेषः। तथा च यत्र कार्यस्य साक्षादविभागस्तत्परिणामि कार्यम्। यथा—तन्तवः पटस्य। यत्र तु कार्यस्य कारणाविभागेनाविभागस्तदधिष्ठानकारणम्। यथा—जलं पृथिव्या इति। ननु तर्हि तार्किकमतादविशेप इति चेत्। का नो हानिः। तार्किकेण सह जात्या दोषाभावात्। संभवति कथंचिदप्येकवाक्यत्वे सर्वथा विरोधादेरस्याज्ञतामात्रत्वात्। तन्मते सूक्ष्मांशाः स्थूलानारम्भकाः। अवयवावयविनोश्च भेद एव। संबन्धश्च समवायः। एतन्मते तु सूक्ष्मांशाः स्थूलपरिणामिनः। तादात्म्यं च संबन्ध इति मतविरोधस्य स्फुटत्वाच्च। अपि च तार्किकैः पृथिवीं प्रति जलस्य निमित्तकारणत्वमिति परिभाष्यते। अस्माभिस्तु समवाय्यसमवायिभ्यामुदासीननिमित्तकारणेभ्यश्च विलक्षणतया चतुर्थमाधारकारणमित्युच्यते। अवयवाऽविभागस्य निमित्तकारणेष्वदर्शनादित्यन्यत्र विस्तरः, इति नारायणतीर्थस्वामिनः।

"अध्यवसायो बुद्धिः" क्रियाक्रियावतोरभेदविवक्षया, सर्वो व्यवहर्ता आलोच्य मत्त्वाहमत्राधिकृत इत्यभिमत्य कर्तव्यमेतन्मयेत्यध्यवस्यति, ततश्च प्रवर्तते इति लोकप्रसिद्धम्, तत्र योऽयं कर्तव्यमिति विनिश्चयश्चितिसन्निधानादापन्नचैतन्याया बुद्धेः, सोऽध्य-

---

ज्ञानम्) भवति। एपु तृतीयावृत्तिर्यत्र ज्ञानं भवति सैव बुद्धिः। तत्र बुद्धौ धर्मज्ञानवैराग्यैश्वर्येति चत्वारः सात्त्विका धर्माः, अधर्माज्ञानावैराग्यानैश्वर्येति चत्वारः तामसा धर्माश्च तिष्ठन्तीति सरलो वर्तुलार्थः॥ २३॥ ❀॥

ननु "अध्यवसायो बुद्धिः" इति लक्षणवाक्यमसङ्गतम्, अध्यवसायस्य बुद्धेः क्रियारूपतया सामानाधिकरण्येन अभेदान्वयस्यासंभवात्, न हि "गन्धः पृथिवी" इति केनचिदुच्यते, अपि तु "गन्धवती पृथिवी" इत्येव प्रयुज्यते, तस्मादत्रापि "अध्यवसायवती बुद्धिः" इत्येव लक्षणं कर्तुमुचितम्, अध्यवसायस्य धर्मरूपतया बुद्धेश्च धर्मिरूपतया "अध्यवसायो बुद्धिः" इत्येवं सामानाधिकरण्येन अभेदान्वयस्य वक्तुमशक्यत्वात्, तत्राह—क्रियाक्रियावतोरिति॥ व्यापारव्यापारिणोरित्यर्थः। धर्मधर्मिणोरिति यावत्॥ इन्द्रियान्तरव्यापारेभ्यो विविच्य बुद्धेर्व्यापारं निरूपयितुं प्रवृत्तौ तावद् व्यापाराणां क्रममाह—सर्वो व्यवहर्तेति। हानोपादानादिव्यवहारकर्ता अखिलो नरः पूर्वम् आलोच्य=ज्ञानेन्द्रियव्यापारैर्वस्तु गोचरीकृत्य, पुनश्च मत्वा—"इदमेवं नैवं वा" इति मनसा गुणदोषौ विचार्य, पुनः "शक्तोऽहं खल्वेतन्निष्पादने" इत्येवम् अभिमत्य=अहङ्कारव्यापारगोचरीकृत्य, "कर्तव्यमिदम्" इति अध्यवस्यति=निश्चिनोति, ततश्च=एवम् आलोचनमननाभिमानावधारणादनन्तरं च, प्रवर्तते=करोति॥

तत्र बुद्धेः को व्यापार इति जिज्ञासायां तद्व्यापारं दर्शयितुमाह—तत्रेति। आलोचनमननाभिमानावधारणेपु इत्यर्थः। योऽयं "कर्तव्यम्" इति बुद्धेर्विनिश्चयः सोऽध्यवसायो बुद्धेरसाधारणो व्यापारः" इति योजना॥

नन्वचेतनाया बुद्धेः कथं लोकवन्निश्चयः संभवतीत्यत आह—चितिसन्निधानादिति। चितेः=चैतन्यस्वरूपस्य पुरुषस्य, सन्निधानात्=तत्र संबन्धादित्यर्थः। चिन्मात्रस्य पुरुषस्य बुद्धिरूपान्तःकरणवर्तित्वादिति भावः। आपन्नचैतन्याया इति। आपन्नं प्राप्तं चैतन्यं यया तस्या इति विग्रहः। आपन्नम्

---

१ क्रिया=परिणामात्मिका, अध्यवसायः=विषयमधिकृत्य अवसायः=निश्चयः। तद्वान् महत्तत्त्वाख्यो धर्मी। तयोरभेदविवक्षया अध्यवसायो बुद्धिरितीत्यर्थः। २ ज्ञानेच्छाकृतीनामात्मधर्मत्वं व्यावर्तयितुं बुद्धिधर्ममध्यवसायमनुभवारूढं करोति—सर्व इति। "आलोच्य" इतीन्द्रियस्य व्यापार उक्तः। 'मत्वा' इति मनसः, "अहम्" इत्यहंकारस्य, "अध्यवस्यति" इति बुद्धेः। "प्रवर्तते"=कृतियोग्येष्टसाधनयागादौ इत्यनुभवसिद्धमित्यर्थः। इति व्याख्यान्तरमप्यूह्यम्॥

वसायो बुद्धेरसाधारणो व्यापारः, तदभेदा बुद्धिः, स च बुद्धेर्ल-क्षणं—समानासमानजातीयव्यवच्छेदकत्वात् ।

तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्याधर्मान् सात्त्विकतामसानाह—'धर्मो ज्ञानं विराग ऐश्वर्यं सात्त्विकमेतद्रूपं, तामसमस्माद्विपर्यस्तम्' इति ।

धर्मोऽभ्युदयनिःश्रेयसहेतुः, तत्र यागदानाद्यनुष्ठानजनितो धर्मोऽभ्युदयहेतुः, अष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुः, गुण-

---

आरोपितं चैतन्यं यस्यां तस्या इति वा विग्रहः । यथा एकत्रोपस्थितयोः स्फटिकजपाकुसुमयोः स्फटिकं जपाकुसुमलौहित्यम् आपद्यते, तथा चित्सन्निधानाद् बुद्धिरपि चैतन्यम् आपन्नेति भावः । असाधारणः=तत्त्वान्तरासंबन्धी, इत्यर्थः । स्ववृत्तित्वे सति स्वेतरावृत्तित्वमसाधारणत्वम्" इति तल्लक्षणात् ॥

ननु यदि बुद्धेर्व्यापारोऽध्यवसायस्तदा "अध्यवसायो बुद्धिः" इत्येवं कथं सामानाधिकरण्यमित्यत आह—तदभेदेति । तस्मात्=अध्यवसायरूपाद् व्यापारात्, अभेदो यस्याः सा तदभेदा=क्रियाक्रियावतोरभेदविवक्षया तदभिन्नत्वेन विवक्षिता इत्यर्थः । धर्मधर्मिणोस्तादात्म्यात् ॥ स च=अध्यवसायश्च, निश्चयाख्यव्यापार इति यावत् । समानजातीयेभ्यः=मनआदीन्द्रियान्तरेभ्यः, असमानजातीयेभ्यश्च=रूपतन्मात्रादिभ्यः, व्यवच्छेदकत्वात्=बुद्धेर्व्यावर्तकत्वात्, भवति लक्षणं बुद्धेरित्यर्थः । यद्वा—अनियतविषयत्वेन सर्वविषयत्वेन वा समानजातीयौ मनोऽहङ्कारौ, नियतैकैकविषयत्वेन असमानजातीयाः चक्षुरादयः, तेभ्यो व्यवच्छेदकत्वादित्यर्थः । तत्र लक्षणम्=असाधारणो धर्मः ॥ ❀ ॥

## अथ बुद्धिधर्मनिरूपणम् ।

तस्याः=बुद्धेः, धर्मान्=तदाश्रितपदार्थान् । सात्त्विकतामसानिति । यद्यपि सात्त्विकतामसवद् राजसधर्मा अपि वक्तुमुचिताः, तथापि स्वातन्त्र्येण राजसधर्माभावात् सत्त्वतमसोः स्वयम् अक्रियतया उभयक्रियोत्पादनाय रजस आवश्यकत्वात् "उभयविधा अपि धर्मा राजसाः" इति वक्तुं शक्यते इति राजसानां पृथगनुत्कीर्तनम् इति ध्येयम् ॥

धर्मं लक्षयति—अभ्युदयेति । तत्र स्वाराज्यसाम्राज्याद्यैश्वर्यविशेषोऽभ्युदयः । निश्चितं श्रेयः—कल्याणं च निःश्रेयसम्, कैवल्यम् । तथाच कणभक्षसूत्रम्—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" (वै० १।१।२) इति ॥ एकस्य तदुभयहेतुत्वासंभवात् व्यवस्थामाह—तत्रेति । "यागदानादि—" इत्यादिपदेन कर्मकाण्डवेदविहितकर्ममात्रलाभः । तत्र देवतोद्देश्येन हविःप्रक्षे-

---

१ असाधारणधर्मो हि लक्षणम् । लक्ष्यमात्रवृत्तिरसाधारणः ।

पात्मको व्यापारो यागः। स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनं च दानम्। जनितश्चेति। यमनियमादिजनितोऽशुक्लाकृष्णाख्यो धर्मविशेषश्चेत्यर्थः। अयमत्र निष्कर्षः—कर्म तावच्चतुर्विधम्—कृष्ण-शुक्लकृष्ण-शुक्ला-ऽशुक्लाकृष्णेतिभेदात्। तत्र हिंसामिथ्याभाषणादि कृष्णंकर्म, पापरूपकर्माशयद्वारा दुःखरूपफलजनकत्वात् कृष्णत्वम्, तादृशं कर्मविचारहीनदुष्टजनानां भवति। बाह्यसाधनसाध्यं यागादि शुक्लकृष्णकर्म, क्षुद्रजीवानां वधेन ब्राह्मणेभ्यो भोजनदक्षिणादानादिना च मिश्रितपुण्यपापरूपकर्माशयद्वारा मिश्रितसुखदुःखरूपफलदातृत्वात् शुक्लकृष्णत्वम्, तादृशं कर्म यागादिकर्मासक्तजनानां भवति। सकामजनैः फलकामनया क्रियमाणं तपोजपध्यानादिकं शुक्लकर्म, सत्यसंभाषणेन्द्रियनिग्रहरूपे तपसि जपध्यानादिकर्मसु च बाह्यसाधनानामपेक्षा नास्तीति तत्र हिंसाया अभावेन शुक्लत्वम्, तादृशं कर्म निर्दोषदीर्घविचारशालिजनानां भवति। यमनियमाद्यनुष्ठानम्—अशुक्लाकृष्णकर्म, तच्च योगिनां भवति। मेघसमाधिरूपं योगानुष्ठानं निष्कामत्वात् शुक्लकर्मरूपं नास्ति, तच्च योगानुष्ठानं चित्तमात्रसाध्यत्वेन बाह्यसाधनसाध्यत्वाभावात् कृष्णकर्मरूपमपि नास्तीति योगानुष्ठानम् अशुक्लाकृष्णकर्म, तज्जनितो धर्मोऽपि अशुक्लाकृष्ण इति॥ तत्र "यमनियमा[३]सनप्राणायामप्रत्याहारधारणाध्यानस-

१ काम्यं कर्म विहितत्वाच्छुक्लम्, निषिद्धं कृष्णम्, मिश्रं शुक्लकृष्णम्, इति परः सारः। २ निष्कामनयाऽनुष्ठीयमानानां तु यागादीनामपि अन्तःकरणशुद्धिद्वारा मोक्षहेतुत्वमेवेति शास्त्ररहस्यम्। गीतं च गीतासु भगवता—"अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥" ३ आसनप्राणायामप्रत्याहारधारणाध्यानसमाधयो यमनियमाश्चेत्यष्टौ योगाङ्गानीत्यर्थः। तत्र यमनियमाऽऽसनप्राणायामप्रत्याहारेति पञ्च बहिरङ्गानि। धारणाध्यानसमाधयोऽन्तरङ्गाणि। इन्द्रियनिरोधः=प्रत्याहारः। एकत्र देशे चित्तस्य नियुक्तिर्धारणा। चित्तवृत्तेः सजातीयप्रवाहो ध्यानम्। ध्यानं परिपक्वं सत् यदा ध्येयाकारेण परिणमति, तदा विद्यमानापि चित्तवृत्तिरसतीव भाति, साऽवस्था समाधिः। आरम्भे सबीजः समाधिर्भवति ततो निर्बीजावस्थाप्राप्तौ पुरुषस्य स्वरूपेऽवस्थानं भवति॥ ※॥

अत्रेयं सरला योगविवेचना—यौगिकक्रियाभिरन्तःकरणवृत्तयः क्रमशः शान्तिमुपगच्छन्त्यो यदा पूर्णरूपेण शान्ताः संपद्यन्ते, साऽवस्थैव 'योगयुक्तावस्था' कीर्त्यते शास्त्रकृद्भिः, योगोऽपि तदवस्थावाच्य एवाभिधीयते। योगयुक्तावस्थायां द्रष्टा (परमात्मा) नैजे यथार्थरूपे प्रत्यक्षेणोपलभ्यते, तद्भिन्नावस्थायां चान्तर्हितः स भवति। चित्तवृत्तिचाञ्चल्याद् योऽयं सर्वव्यापकस्य तस्य परमात्मनः स्वान्तःकरणस्थपरमात्मनश्च स्वरूपसाक्षात्काराभावः स एव 'वियोग'शब्दवाच्यो भवति। यैः साधनैः परमात्मनो दूरीभूतोऽनाथो जीवात्मा भूयस्तद्युक्तो भवति तानीमानि साधनान्येव वस्तुतो योगपदाभिधेयानि। उपासनाप्येकविधो योग एव। या क्रिया किल जीवात्मानं परमात्मनः समीपे विराजमानं करोति सा क्रियैव उपासनेत्युच्यते, उप=समीपे आस्ते=विराजते

माधयोऽष्टावङ्गानि" इति पतंजलिः ॥ ज्ञानं लक्षयति—सत्त्वेति । गुणोऽत्र बुद्धितत्त्वम्, अन्यता=तत्प्रतियोगिको भेदः । बुद्धिपुरुषयोर्विभिन्नतया निश्चय

अनयेति तद् व्युत्पत्तेः । स च योगः (१) मन्त्रयोगः (२) हठयोगः (३) लययोगः (४) राजयोगश्चेति चतुर्धा । तत्र (१) परिदृश्यमानसंसारस्य नामरूपातिरिक्तं न किंचिदङ्ग गोचरीभवतीति नामरूपात्मकः संसारः । एतस्मिन्नेव नामरूपात्मके जगति संसक्तो जीवोऽयं बद्धभावमुपयाति—बद्धो जायते । चित्तवृत्तयोऽपि नामरूपे अवलम्ब्यैव चञ्चलं चित्तं कुर्वन्ति । तासां चित्तवृत्तीनां निरोधार्थं मन्त्रजपस्वरूपा याः क्रियाः शास्त्रकृद्भिरुपदिष्टास्ताः क्रिया एव "मन्त्रयोगः" इत्युच्यन्ते । (२) स्थूलशरीरस्य प्रभावः समानरूपेण सूक्ष्मशरीरे निपतति, अतः स्थूलशरीरमिदं सूक्ष्मशरीरस्यैव परिणामविशेषः । तत्र स्थूलशरीरमवलम्ब्य सूक्ष्मशरीरे तत्प्रभावं निपात्य चित्तवृत्तिनिरोधजनिका यावत्यः क्रियाः सन्ति, ता अमूः 'हठयोग' पदवाच्या भवन्ति । (३) लययोगस्य तु विभिन्नैव विचित्रा रीतिः, सा चेत्थमवसेया—व्यष्टिशरीररूपं पिण्डं, समष्टिसृष्टिरूपं ब्रह्माण्डं चैतद् द्वयं समष्टिव्यष्टिसंबन्धादेकमेव, तद्द्वयमेकं बुद्ध्वा तत्र व्यापको यः प्रधानपुरुषः प्रकृतिशक्तिश्च तस्य स्वशरीरस्थपुरुषे लयविधानस्य या शैली, तद्विधायकानि च यानि साधनानि, स एव "लययोगः" इति कथ्यते । (४) मनसः क्रिया मनुष्यं बध्नन्ति बुद्धेः क्रियाश्च तन्मुक्तौ साहाय्यमाचरन्ति, अत एव "जीवोऽज्ञानाद् बध्यते विद्यया तु प्रमुच्यते" इति शास्त्रकृत आमनन्ति । बुद्धिक्रियारूपसाधन(विचार)द्वारा चित्तवृत्तीनां निरोधस्य या रीतिः, सा "राजयोगः" इत्यभिलप्यते ॥ ॐ ॥ तत्र यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीत्यष्टौ योगसाधनस्याङ्गानि भवन्ति । अत्र पूर्वाणि चत्वारि बहिरङ्गाणि, उत्तराणि चत्वारि चान्तरङ्गाणि साधनानि सन्ति । तत्र जीवस्य बहिरिन्द्रियेभ्यो बहिरिन्द्रियविषयेभ्यश्च वीतरागत्वसंपादका येऽभ्यासास्तेऽमी यथाक्रमं यमा नियमाश्चोच्यन्ते । एताभ्यामेव यमनियमाभ्यामुपासनासाधनं योगसाधनस्य विधायकं भवति । तृतीयाङ्गेन (आसनेन) पार्थिवशरीरमिदं योगसाधनस्योपयुक्तं संपाद्यते । "चाञ्चल्याद् बन्धनं स्थैर्यान्मोक्षः" इति मीमांसकानां सिद्धान्तः । अतः शरीरस्य स्थैर्ययुक्तत्वजनिका या क्रिया, तद् "आसनम्" कथ्यते । तदनन्तरं प्राणस्य धैर्ययुक्तत्वसंपादिका या शैली, सा "प्राणायामः" इत्यभिधीयते । एतस्मिन् सिद्धे साधकोऽन्तरङ्गसाधनस्याधिकारी संपद्यते । पञ्चमाङ्गे (प्रत्याहारे) सिद्धे सति साधकः स्वीयां बाह्यदृष्टिं बहिर्जगतः प्रच्याव्य कूर्मोऽङ्गानीवान्तर्जगति तां नयति । उन्नतः साधको बाह्यविषयात् स्वीयां प्रवृत्तिमान्तरराज्ये समाकृष्य बाह्यजगतोऽन्तर्जगति प्रविष्टो जायते । तदेवमान्तरं जगत् प्राप्य सूक्ष्माऽऽन्तरराज्यस्य यत्कमपि विभागमवलम्ब्य स्थिरीभवनं, सा 'धारणा' इति गीयते । अनेन षष्ठाङ्गेन (धारणया) साधकोऽन्तर्द्रष्टुः परमात्मनः सगुणस्य निर्गुणस्य वा स्वरूपस्य ध्यानकरणसामर्थ्यमधिगच्छति । ईदृश्यामवस्थायां ध्याता, ध्यानम्, ध्येयश्चेति त्रिपुट्यतिरिक्तं नान्यत् किंचिद् भासितं भवति । इदमेव च योगस्य सप्तमम् अङ्गम् । उपर्युक्तसप्तमाङ्गस्य सिद्धावस्थायां पूर्वोक्तत्रिपुट्या अपि विलोपो विजायते साधकश्च ध्यानलग्नो ध्येये लयं गच्छति, इयमेव द्वैतभावविहीना वृत्तिनिरोधस्य

पुरुषान्यताख्यातिर्ज्ञानं, विरागः=वैराग्यं–रागाभावः।

तस्य यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा, इति चतस्रः संज्ञाः।

रागादयः कषायाश्चित्तवर्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु

---

इत्यर्थः। वैराग्यं लक्षयति—रागाभाव इति। 'आसक्तिलक्षणो रागः' (वाक्या० भा० ४।१।३) पुनः पुनर्विषयानुरञ्जनेच्छारागः (प्रशस्तभा०) ततश्च—"दोषदर्शनाद् विषयत्यागेच्छा वैराग्यम्" (प्रशस्तभा०) "भोगानभिषङ्गो वैराग्यम्" (न्या० वा०) ऐहिक-पारत्रिक-विषयादौ दोषदर्शनान्निरभिलाषस्य "ममैते विषया वश्याः, नाहमेतेषां वश्यः" इति विमर्शो वैराग्यम् इति योगशास्त्रज्ञाः। तद्विभजते—तस्येति। वैराग्यस्येत्यर्थः। चतस्रः संज्ञा इति। एताः संज्ञाः प्राचीनसांख्याचार्यसम्मताः। ततश्च वैराग्यस्य चातुर्विध्यं सिध्यति। तत्र यतमानसंज्ञां लक्षयति—रागादयः कषाया इति। कषायाः=मलाः। माञ्जिष्ठादिकषायवत् चित्तरञ्जकत्वेन रागादीनां कषायत्वमुपचर्यते। यथा माञ्जिष्ठादिकषायेण मुद्रिते पटे मञ्जिष्ठाद्यपगमेऽपि कलहंसाद्यङ्काः स्थाप्यन्ते, तथा विषयाभिलाषादिभिरपि चित्ते सकृदुत्पद्य विनष्टैरपि तत्तद्विषयाकारा वासनापरनामानः संस्कारा आधीयन्ते इति कषायतुल्यत्वात् रागादीनां कषायशब्दाभिधेयतेति दृश्यम्। तत्र रागो विषयाभिलाषः। आदिपदेन विषयसौन्दर्यज्ञानादयः। चित्तवर्तिनः=चित्तगताः, ये रागादयः कषायाः=मलाः, तैः=रागादिभिः, यथास्वम्=स्वेषु[1] स्वेषु विषयेषु इन्द्रियाणि प्रवर्त्यन्ते=स्वस्वविषयदर्शनयोग्यानि क्रियन्ते, यस्मिन् विषये यद् इन्द्रियं योग्यं तत्र तद् इन्द्रियं प्रवर्त्यते यथा रूपे चक्षुरित्यादि, दोषाणां प्रवर्तनाकारित्वादिति भावः। तथा च अक्षपादसूत्रम्—"प्रवर्तनालक्षणा दोषाः" (न्या० १।१।१८) इति।

---

चरमावस्था 'समाधिः' अभिलप्यते। अयमेव च योगस्याष्टमोऽङ्गम्। साधको यदा एकस्यानन्तरं द्वितीयस्य तदनन्तरं तृतीयस्य सोपानस्येति रीत्या यथाक्रमं अतिक्रमणं विदधत् अष्टमं सोपानं सविकल्पकसमाधिरूपं प्राप्नोति, ततः पुनर्निर्विकल्पकसमाधिमधिगत्य स्वस्वरूपप्राप्तौ प्रभुर्जायते। प्राप्तनिर्विकल्पकसमाधिश्च सर्वं कर्म कुर्वाणोऽपि न किंचित्करोति, तदा स स्वस्वरूपस्थितो भवेत्, व्युत्थानदशां प्राप्तः कर्मणि प्रवृत्तो वा भवेत् सर्वासु दशासु निर्विकल्पकस्थितिशालित्वात् अद्वैतभावे स्थिरो भवति। इयमेव "जीवन्मुक्तिः" उच्यते। स चायं योगः षड्भिरुपायैः सिद्धो भवति। ते चोपाया अभियुक्तैरित्थं प्रदर्शिताः—"उत्साहात्साहसाद् धैर्यात् तत्त्वज्ञानाच्च निश्चयात्। जनसङ्गपरित्यागात् षड्भिर्योगः प्रसिध्यति॥" इत्यास्तां विस्तरः॥

१ 'यथास्वम्' इति वीप्सायामव्ययीभावः। अतो व्याचष्टे—स्वेषु स्वेष्विति। स्वकीयस्वकीयविषयेष्वित्यर्थः।

प्रवर्त्त्यन्ते तन्माऽत्र प्रवर्तिषत विषयेष्विन्द्रियाणीति तत्परिपाचनायारम्भः प्रयत्नो यतमानसंज्ञा ।

"प्रवर्तना=प्रवृत्तिहेतुत्वमेव लक्षणं येषां ते दोषाः-रागादयः" इति न्यायसूत्रार्थः । तत्=यथा स्यात् तथा, अत्र-विषयेषु, इन्द्रियाणि मा प्रवर्तिषत=प्रवृत्तानि मा कारिषत, रागादिकषायैः रागादयः इन्द्रियाणि मा प्रवर्तयन्तु इति यावत्, इति=इत्यालोच्य, तत्परिपाचनाय=रागादिमलक्षालनाय, यः मैत्र्यादिभावनानुष्ठानरूपो यत्नः सा यतमानसंज्ञेत्यर्थः ॥

अयमत्र निष्कर्षः—रागः, द्वेषः, ईर्ष्या, परापकारचिकीर्षा, असूया, अमर्षश्चेति राजसतामसरूपाः षड्धर्माः चित्तं विक्षिप्य कलुषयन्ति, अत इमे षट् चित्तमला इत्यभिभाष्यन्ते । एषां षण्णां चित्तमलानां सद्भावे, चित्ते षट्प्रकारकं कालुष्यमुत्पद्यते । यथा—रागकालुष्यम्, द्वेषकालुष्यम्, ईर्ष्याकालुष्यम्, परापकारचिकीर्षाकालुष्यम्, असूयाकालुष्यम्, अमर्षकालुष्यं चेति ॥ तत्र "स्नेहपूर्वकम् अनुभूतात् सुखादनन्तरं यः "इदं सुखं मां सर्वदैव प्राप्नुयात्" इत्याकारको राजसवृत्तिविशेषः, तद् रागकालुष्यम् । दुःखभोगानन्तरं दुःखप्रदविषयेषु अनिष्टचिन्तनपूर्वकं यः "इमे दुःखप्रदा नश्येयुर्मां च दुःखं नाधिगच्छेत्" इत्याकारकः तामसवृत्तिविशेषः, तद् द्वेषकालुष्यम् । अन्यपुरुषस्य गुणाधिक्यं सम्पदाधिक्यं वा विलोक्य यश्चेतसि क्षोभः [ एकविधो ज्वलनप्रादुर्भावः ] तद् ईर्ष्याकालुष्यम् । अन्यस्य कस्यचित् अपकारकरणेच्छा परापकारचिकीर्षाकालुष्यम् । कस्यचित् श्लाघनीयगुणेषु दोषारोपणम्

१ ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति । दोषाणां सर्वप्रसिद्धत्वेऽपि हेयत्वेन दोषा न ज्ञाता इति हेतोर्दोषा लक्षिताः । दोषाणां हेयत्वं च प्रवर्तकत्वाद् विज्ञेयम् । अत एव रक्तादयः कर्मप्रधाना भवन्ति । यथोक्तं न्यायभाष्ये—"रक्तो[1] हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते, तथा द्विष्टस्तथा[2] मूढः" इति । दोषैः प्रयुक्तः—"शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसंबद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति, सेयं पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा—शरीरेण दानं परित्राणं परिचरणं चेति, वाचा सत्यं हितं प्रियं स्वाध्यायं चेति, मनसा दयामस्पृहां श्रद्धां चेति सेयं धर्माय" इति च । पुण्यपापानुसारेणैव जात्यायुर्भोगा भवन्ति । तथा च योगसूत्रम्—"सति मूले तद्विपाको जात्यायुर्भोगाः" इति । एतदुक्तं भवति—कर्मणा हि संसारानुवृत्तिर्भवति अपवर्गप्राप्तिश्च न भवतीति तादृशकर्मकारणत्वाद् दोषा हेया इति हेयत्वज्ञापनार्थं प्रवर्तनालक्षणत्वमुक्तमिति ।

1 रागविशिष्टः । 2 द्वेषविशिष्टः, 'तथा' 'तत्कर्म कुरुते' इत्यादिपूर्वोक्तमत्रापि सर्वमुच्चारणीयमित्यर्थः । मूढः=मोहविशिष्टः । तदेवं-राग-द्वेष-मोहा दोषाः प्रवृत्तिकारित्वात् ॥

असूयाकालुष्यम्। कुत्सितवचनश्रवणपूर्वकं स्वापमानादनन्तरं तदसोढ्वा येयं प्रतीकारचेष्टा तद् अमर्षकालुष्यम्। तत्र सुखसंभोगापन्नैः सुखिभिः सह मित्रताकरणेन रागम् ईर्ष्याकालुष्यं च निवर्तयेत्। तथाहि—यदा कंचित् सुखिनं पश्येत् तदा तेन सह मैत्रीं विधाय, इदमेव मन्येत, यत्—"इमानि सर्वाणि सुखानि यदि मम मित्रस्य सन्ति तदा ममैव सन्ती"ति। तदा यथा स्वराज्याभावेऽपि पुत्रस्य राज्यलाभं स्वं ज्ञात्वा तत्र राज्ये रागो निवर्तते, तथा मित्रसुखमपि स्वसुखं मत्वा नूनं तत्र रागो निवर्तिष्यते। एवं यदा परकीयं सुखं स्वसुखमेव ज्ञास्यति तदा तदैश्वर्यं दृष्ट्वा चित्ते क्षोभाभावेन ईर्ष्यापि नूनं निवृत्ता स्यात्॥

सुखसंभोगापन्नेषु सर्वप्राणिषु "साध्वेतन्मम मित्राणां सुखित्वम्" इति मैत्रीं भावयेत्, तया च रागः ईर्ष्याकालुष्यं च निवर्तेते॥

एवं दुःखितेषु पुरुषेषु कृपाकरणेन द्वेषस्य परापकारचिकीर्षाकालुष्यस्य च निवृत्तिं सम्पादयेत्। तथाहि—यदा कंचिद् दुःखिनं पश्येत् तदा स्वचित्ते "अहो! अस्य वराकस्य महाकष्टं विद्यते, यतो यदा अस्मासु कदाचिद् दुःखम् आपतति, तदास्माभिरुपभुज्यते महादुःखम् इति वयमेव जानीमः" इति विचारं कृत्वा तस्य दुःखदूरकरणे चेष्टां कुर्वीत, एवं तु न मन्येत, यद् "अस्य सुखेन दुःखेन वा किमस्ति नः प्रयोजनम्" इति। यदा एवंप्रकारा करुणामयी भावना चेतसि उत्पद्येत तदा आत्मवत् सर्वेषां सुखित्ववाञ्छया वैरिणोऽभावात् द्वेषः परापकारचिकीर्षा च नूनं निवर्तेत। दुःखितेषु "कथं नु नामैषां दुःख-निवृत्तिः स्यात्" इति करुणां भावयेत्, तया च द्वेषः परापकारचिकीर्षा च निवर्तेत इति॥

एवं यदा पुण्यात्मानं पश्येत् तदा स्वचित्ते "अहो भाग्यम्! अस्य माता-पित्रोः, याभ्याम् एतादृशस्य भाग्यशालिनः कुलप्रदीपस्य सत्पुरुषस्य उत्पत्तिर-भूत्, धन्यश्चायं यः तनुमनोधनैः पुण्यकार्येषु प्रवृत्तोऽस्ति" इति विचारं विधाय आनन्दमधिगच्छेत्। यदा एतादृशी मुदिता भावना चित्ते प्रादुः-ष्यात्, तदा असूयाकालुष्यं नूनं निवृत्तं स्यात्॥ पुण्यवत्सु पुण्यानुमोदनेन मुदितां (हर्षम्) भावयेत्। तया च असूयाकालुष्यं निवर्तेत इति॥

एवं यदा पापिनं पश्येत् तदा स्वचित्ते "अयं कुत्सितं वचनं वा कथयेत्, अपमानं वास्माकं कुर्यात्, अस्य कुटिलतया प्रतीकारेण वा किमस्माकं प्रयो-जनम्, यदिच्छेत् तत्करोतु, स्वकर्तव्यस्य स्वयमेव फलं भोक्ष्यते" इति विचार्य तत्र उपेक्षां भावयेत्। अनया च अमर्षकालुष्यं निवर्तेते॥

इत्थं मैत्री-करुणा-मुदितोपेक्षेति चतसृणां भावनानामनुष्ठानेन रागादि-दोषाणां प्रवर्तना शक्तिर्नश्यति, चित्तं च वर्षर्तोरनन्तरं जलवत् नूनं नैर्मल्य-मुपयाति। मैत्र्यादयस्तु पतञ्जलिना सूत्रिताः। 'मैत्रीकरुणामुदितोपेक्षाणां

सुख[1]दुःखपुण्यपुण्याविषयाणां भावनातः चित्तप्रसादनम्" (यो० १।३३) इति॥ अत्रायं निष्कर्षः—चित्तं हि रागद्वेषपुण्यपापैः कलुषीक्रियते। रागद्वेषौ च पतञ्जलिरसूत्रयत्—"सुखानुशयी रागः, दुःखानुशयी द्वेषः" इति। स्वेनानुभूयमानं सुखमनुशेते कश्चिद् वृत्तिविशेषः सुखजातीयं मे सर्वं भूयादिति। तच्च दृष्टादृष्टसामग्र्यभावान्न सम्पादयितुं शक्यम्। अतः स रागश्चित्तं कलुषीकरोति। यदा सुखिष्वयं मैत्रीं भावयेत्—"सर्वेऽप्येते सुखिनो मदीया" इति, तदा तत्सुखं स्वकीयमेव सम्पन्नमिति भावयतस्तत्र रागो निवर्तते। यथा स्वस्य राज्याभावेऽपि पुत्रादिराज्यमेव स्वकीयं राज्यं तद्वत्। निवृत्ते रागे वर्षास्वतीतासु शरत्सरिदिव चित्तं प्रसीदति। तथा दुःखमनुशेते कश्चित्प्रत्ययः, 'ईदृशं सर्वं दुःखं मे मा भूदिति। तच्च रोगशत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम्। न च सर्वे दुःखहेतवो हन्तुं शक्यन्ते। अतः स द्वेषः सदा हृदयं दहति। यदा स्वस्येव परेषां प्रतिकूलं दुःखं मा भूदित्यनेन प्रकारेण करुणां दुःखिषु प्राणिषु भावयेत्तदा वैर्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति। अत एव स्मर्यते—"प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा। आत्मौपम्येन भूतानां दयां कुर्वन्ति साधवः"॥ इति। तत्प्रकारं च महान्तो दर्शयन्ति—"सर्वेऽत्र सुखिनः सन्तु, सन्तु सर्वे निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाप्नुयात्॥ इति। श्रीमद्भागवतेऽपि—"स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया। मनश्च भव्यं भजतामधोक्षजे आविश्यतां नो मतिरप्यहैतुकी॥" इति। तथा हि प्राणिनः स्वभावत एव पुण्यं नानुतिष्ठन्ति, पापं त्वनुतिष्ठन्ति। तदाहुः—"पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः। न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः॥" इति। ते च पुण्यपापे पश्चात्तापं जनयतः। स च तापः श्रुत्याऽनूद्यते—"किमहꣳसाधु नाकारवम्। किमहं पापमकरवम्" इति। यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत् तदा तद्वासनया स्वयमेवाप्रमत्तः पुण्येषु प्रवर्तते। तथा पापिषूपेक्षां भावयन् स्वयमपि पापान्निवर्तते। अतः पश्चात्तापस्याभावेन चित्तं प्रसीदति। सुखिषु मैत्रीं भावयतो न केवलं रागनिवृत्तिः किन्त्वसूये-

१ अत्र सूत्रे सुखादिशब्दाः मत्वर्थीयाऽर्शआद्यजन्तत्वात् सुखादिमत्पराः द्रष्टव्याः। ईर्ष्यादिकालुष्येण कलुषीकृतं हि चित्तं न स्थितिपदं लभते, तेन तन्निवृत्त्यर्थं सुखसम्भोगापन्नेषु सर्वप्राणिषु "साध्वेतन्मम मित्राणां सुखित्वम्" इति मैत्रीं, दुःखितेषु च "कथं नु नामैषां दुःखनिवृत्तिः स्यात्" इति करुणां, पुण्यवत्सु च पुण्यानुमोदनेन मुदिताम्, अपुण्यवत्सु चोपेक्षां भावयेदिति सूत्रार्थः। तत्र मैत्रीभावनया चित्तस्येर्ष्याकालुष्यं, करुणाभावनया परापकारचिकीर्षाकालुष्यं, मुदिताभावनयाऽसूयाकालुष्यम्, उपेक्षाभावनया चामर्षकालुष्यं निवर्तते। तन्निवृत्तौ च प्रसन्नं चित्तमाशु स्वध्येये स्थितिपदं लभते इति भावनाचतुष्टयं विधेयं कल्याणेप्सुभिरिति भावः। भावना चात्रोत्पादनं, समाधिप्रतिबन्धकरागद्वेषादिमलापसारणं च प्रसादनम्" इति वार्तिककृतः॥

परिपाचने चानुष्ठीयमाने केचित्कषायाः पक्काः, पक्ष्यन्ते च केचित्, तत्रैवं पूर्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा ।

इन्द्रियप्रवर्तनासमर्थतया पक्कानामौत्सुक्यमात्रेण मनसि व्यव-

---

र्ष्यादयोऽपि निवर्तन्ते । गुणेषु दोषाविष्करणमसूया, परगुणानामसहनमीर्ष्या । यदा मैत्रीवशात् परसुखं स्वकीयमेव संपद्यते, तदा परगुणेषु कथमसूयादिकं संभवेत् । एवं दोषान्तरनिवृत्तिरपि यथायोग्यमनुमेया । दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्तते, तदा दुःखित्वप्रतियोगिकस्व-सुखित्वप्रयुक्तो दर्पोऽपि निवर्तते । स च दर्प आसुरसंपदि अहङ्कारप्रस्तावे श्रीगीतासु भगवता निरूपितः—"ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी । आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥" इत्यादि । ततश्च "चित्तवर्तिनो रागद्वेषादिमला एव इन्द्रियाणि विषयेषु प्रवर्तयन्ति, सोऽयं रागादिमलः इन्द्रियाणि विषयेषु मा प्रवर्तयेत्" इति विचारेण यद् रागादिमल-निवृत्त्यर्थं मैत्र्यादिभावनानुष्ठानं तद् वैराग्यं यतमानसंज्ञया व्यवह्रियत इति सिध्यतीति ॥

द्वितीयां संज्ञामाह—परिपाचन इति । रागादिमलप्रक्षालनाय मैत्र्यादि-भावनायाम् अनुष्ठीयमानायां सत्यां केचिन्मलाः पक्काः=उपशान्ता भवन्ति, केचिच्च पक्ष्यन्ते=निवर्तिष्यन्ते, तत्रैवं सति "एते उपशमिता एते च उपशम-यितव्याः" इति चिकित्सकवद् यद्विवेचनम्, विवेचनोत्तरं च अवशिष्टानाम् उपशमाय यत्नानुष्ठानं तद् व्यतिरेकवैराग्यम् इत्यर्थः । पक्ष्यमाणेभ्यः= उपशमयितव्येभ्यः, व्यतिरेकेण=भेदेन । मैत्र्यादिभावनानुष्ठानेन यश्चिकि-त्सकवत् पक्कापक्कमलानां व्यतिरेकनिश्चयः [ इयन्तश्चित्तमला निवृत्ताः इयन्तो निवृत्ता भविष्यन्ति, इयन्तश्च निवर्तमानाः सन्ति, इत्थं निवृत्तविद्यमानमलानां यत् पृथक् रूपेण ज्ञानम्, ज्ञानोत्तरं च अवशिष्टानां निवृत्तये यत्नानुष्ठानं ] तद् व्यतिरेकसंज्ञकं वैराग्यमिति सरलार्थः ॥ पक्कानां भेदावधारणमिति परः सारः ॥

तृतीयां संज्ञां लक्षयति—इन्द्रियेति । पक्कानाम्=तनूकृतानां रागादीनाम्, बाह्यविषयेषु इन्द्रियाणां प्रवर्तने असमर्थतया यद् उत्कण्ठामात्रेण—तृष्णा-रूपेण, मनसि अवस्थानं तद् एकेन्द्रियवैराग्यमित्यर्थः । यदा निवृत्ता मला इन्द्रियाणां विषयेषु प्रवर्तनेऽसमर्थाः सन्तः केवलं चित्तमात्रे एवावस्थिताः किंचित् किंचिद् विषयेषु उत्कण्ठिताः तिष्ठन्ति, तदा सा वैराग्यस्य तृतीयावस्था एकेन्द्रियसंज्ञापदवाच्येति यावत् ॥

---

१ एकस्मिन् प्रधाने मनसि वर्तमानत्वादेकेन्द्रियसंज्ञेति परः सारः ।

स्थानमेकेन्द्रियसंज्ञा। औत्सुक्यमात्रस्यापि निवृत्तिः उपस्थितेष्वपि दृष्टानुश्रविकविषयेषु या संज्ञात्रयात्पराचीना सा वशीकारसंज्ञा, यामत्रभवान् पतञ्जलिर्वर्णयाञ्चकार—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति। सोऽयं बुद्धिधर्मो विराग इति।

---

चतुर्थीं संज्ञां लक्षयति—औत्सुक्यमात्रस्यापीति। दृष्टाः=स्रक्चन्दनस्त्रियोऽन्नपानादयो विषयाः, आनुश्रविकाः=वेदादधिगताः स्वर्गादयो विषयाः, तेषु दृष्टानुश्रविकविषयेषु उपस्थितेष्वपि=इन्द्रियादिसन्निकृष्टेष्वपि, या औत्सुक्यमात्रस्यापि=तृष्णाया अपि, निवृत्तिः=तेषूपेक्षाबुद्धिः, सा संज्ञात्रयात्=यतमानव्यतिरेकैकेन्द्रियेति संज्ञात्रयात्, पराचीना=पश्चाद् भाविनी, वशीकारसंज्ञेत्यर्थः। यदा विवेकबलेन निखिलदिव्यादिव्यविषयेषूपेक्षाबुद्ध्या सा उत्कण्ठापि निवर्तते तदा सा वैराग्यस्य तुरीयावस्था वशीकारसंज्ञापदवाच्येति फलितम्। अत्रेदं हृदयम्—यद्यपि योगदर्शने वशीकारसंज्ञानामकमेकमेव वैराग्यमुपदिष्टम्, यतमानादयः तिस्रः संज्ञाश्च नोपदिष्टाः, तथापि तिस्रः संज्ञाः विना वशीकारसंज्ञाया एव अनुपपत्तिः, तिसृणामुत्पत्त्यनन्तरमेव वशीकारसंज्ञावैराग्यस्योदयात्, ततश्च वशीकारसंज्ञकवैराग्यस्य कथनेनैव पूर्वभाविनां त्रयाणां वैराग्याणां सत्ता सूच्यत इति यतमानादिसंज्ञात्रयवर्णनं युक्तियुक्तमेवेति ध्वनयता मिश्रेण "पराचीना" इति विशेषणमुपन्यस्तमिति॥

चतुर्थ्यां संज्ञायां प्रमाणमाह—यामिति। वशीकारसंज्ञामित्यर्थः। अत्रभवान्=पूज्यः, इत्यर्थः। "अत्रभवान्" इति समुदायस्य पूजार्थकत्वात्[1]। दृष्टाः—स्रक्चन्दनस्त्रियोऽन्नपानादयो लौकिका विषयाः, आनुश्रविकाः= स्वर्गादयोऽलौकिका विषयाः, तेषु वितृष्णस्य=परिणामित्वविरसत्वदुःखरूपत्वादिदोषदर्शनात् विगतगर्द्धस्य योगमारुरुक्षोरधिकारिपुरुषस्य, या तत्तद्विषयसम्प्रयोगे सति हेयोपादेयशून्या चित्तस्थितिः=संप्रयुक्तेषु दिव्यादिव्यविषयेषु उपेक्षाबुद्धिरिति यावत्, सा वशीकारसंज्ञा वैराग्यम् इति योगसूत्रार्थः[2]॥

---

१ अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ। "तत्र भवानत्रभवानिति शब्दो वृद्धैः प्रयुज्यते पूज्ये" इति हलायुधः। २ यद्यपि यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञाभेदाच्चतस्रः संज्ञा वैराग्यस्य, तथाप्यन्तरा यतमानव्यतिरेकैकेन्द्रियसंज्ञाः, वशीकारसंज्ञालाभाभावेन तत्संपत्त्यैव तत्संपत्तिमनुसन्दधताऽऽचार्येण न ताः पृथक् लक्षिता इति ध्येयम्।

तत्र बहिर्विषयेन्द्रियप्रवृत्तिहेतुरागादिमलपरिपाकार्थं मैत्र्यादिभावनारम्भो यतमानसंज्ञा प्रथमा, तदारम्भे सति केचन मलाः पक्वाः, केचित्पक्ष्यन्ते, तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकावधारणं व्यतिरेकसंज्ञा द्वितीया, इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण चेतसि व्यवस्थानमेकेन्द्रियसंज्ञा तृतीया, औत्सुक्यमात्रस्यापि निवृत्तिः=उपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिरिति यावत्, वशीकारसंज्ञा तुरीया, इति सारम्॥

ऐश्वर्यमपि बुद्धिधर्मः, यतोऽणिमादिप्रादुर्भावः। तत्राणिमा=अणुभावः, यतः शिलामपि प्रविशति, लघिमा=लघुभावः, यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति, महिमा=महतो भावः, यतो महान् संभवति, प्राप्तिः=अङ्गुल्यग्रेण स्पृशति चन्द्रमसम्, प्राकाम्यम्=इच्छानभिघातः, यतो भूमावुन्मज्जति, निमज्जति च, यथोदके, वशित्वं=भूतभौतिकं वशीभवत्यवश्यम्, ईशित्वम्=भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे, यत्र कामावसायित्वं=सत्यसङ्कल्पता, यथास्य सङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति,

---

यत इति। यस्माद् धर्मादित्यर्थः। "अणिमादि" इत्यादिशब्दग्राह्याणि ऐश्वर्याणि संकलयन् तानि व्याचष्टे—तत्रेत्यादिना। अणोर्भावः अणिमा अणुशब्दात् इमनिच्, इत्याशयेन व्याचष्टे—अणुभाव इति। गुरुतरशरीरोऽपि परमाणुवत् अणुर्भवतीत्यर्थः। सकलवस्तूनां सूक्ष्मसूक्ष्मांशैर्विभागः क्रियते, तत्र यस्य सूक्ष्मस्य भूयो न कथंचिद् विभागः सः अणुः। तस्य फलमाह—यतः=अणुभावात्, अणिमसिद्धिप्राह्या इत्यर्थः। लघोर्भावो लघिमा, इमनिच्, तद् व्याचष्टे—लघुभाव इति। मुञ्जेषीकातूलवदित्यर्थः। सूर्यमरीचीन्=सूर्यरश्मीन्, आलम्ब्य=आश्रित्य। महान्=तनुपरिमाणोऽपि नगनागनगरादिप्रमाणो भवतीत्यर्थः। प्राप्तिरिति। सर्वेषां भावानां सन्निधानं प्राप्तिः, सर्वदूरस्थपदार्थानां समीपकरणशक्तिरिति यावत्, अत एव भूम्यां स्थितोऽपि द्विलक्षयोजनान्तरितं चन्द्रमसं स्पृशति। प्रकामस्य=यथेप्सितस्य भावः प्राकाम्यम्, ष्यञ्, इति व्याचष्टे—इच्छानभिघात इति। नास्य योगिनः स्वरूपं काठिन्यादिभिर्भूम्यादिधर्मैरभिहन्यत इत्यर्थः। अत एव जलमिव भूमिम् उद्भिद्य उत्तिष्ठति, जले इव च भूमौ निमज्जति=प्रविशतीति। वशित्वम्=भूतानि=तन्मात्राणि महाभूतानि च, भौतिकानि=स्थावरजङ्गमदेहानि अस्येच्छामनुवर्तन्ते इत्यर्थः। अवश्यम्=अन्येषाम् अवश्यमपि भूतभौतिकम् अस्य वशीभवतीत्यर्थः। ईशिनः=प्रभोर्भाव ईशित्वमिति व्याचष्टे—भूतेति। तत्र भूतानि-पृथिव्यादीनि, भौतिकानि-गोघटादीनि। प्रभवव्यूहव्ययानाम्—प्रभवः-उत्पादः, व्यूहः-यथावद् अवस्थापनम्, व्ययः-नाशः, तेषाम् ईष्टे—तन्मात्रादिद्वारा तेषां भूतानाम् उत्पादादौ समर्थो भवतीत्यर्थः, तान् करोतीति यावत्। कर्मणि षष्ठी। भूतभौतिकपदार्थानामुत्पादनेऽवस्थापने विनाशे च सामर्थ्यम् ईशित्वमिति सरलार्थः।

कामान्=मयैतत्कर्तव्यं मयैतद्भवितव्यं वेत्यादिसंकल्पान्, अवसातुम्=निश्चेतुम्, सत्यान् कर्तुमिति यावत्, शीलं येषां तत्त्वमिति व्युत्पत्त्या यत्र कामावसायित्वशब्दः तान्त्रिक्या परिभाषया सत्यसंकल्पत्वार्थक इत्याह—सत्यसंकल्पतेति। ततश्च यद् यदर्थतया संकल्पयति, तत् तस्मै प्रयोजनाय

अन्येषां मनुष्याणां निश्चेतव्यमनुविधीयन्ते, योगिनस्तु निश्चेतव्याः पदार्था निश्चयम्, इति चत्वारः सात्त्विका बुद्धिधर्माः ।

तामसास्तु तद्विपरीता बुद्धिधर्माः=अधर्माज्ञानावैराग्यानैश्वर्याभिधानाश्चत्वार इत्यर्थः ॥ २३ ॥

---

कल्पते, विषमपि अमृतकार्ये संकल्प्य भोजयन् जीवयतीत्यर्थः । भूतेषु=क्षित्यादिषु पदार्थेषु वा । ननु कथं पदार्थस्वभाववैपरीत्यम्? तत्राह—अन्येषामिति । अयोगिनां निश्चयाः=ज्ञानानि, निश्चेतव्यम्=ज्ञेयं पदार्थम्, अनुविधीयन्ते=अनुसृतानि भवन्ति, यादृशं ज्ञेयं तादृगेव ज्ञानम्, तादृगेव तेन कार्यमिति यावत्, योगिनस्तु निश्चेतव्याः=ज्ञेयाः पदार्थाः, निश्चयमनुविधीयन्ते=ज्ञानानुसारिणो भवन्ति, यथा ज्ञातुं कर्तुं वा इच्छन्ति, तथैव ज्ञेयं भवतीत्यर्थः ॥ इदमत्र बोध्यम्—यद्यपि प्राप्ताष्टसिद्धिर्योगी कर्तुमकर्तुमन्यथा वा कर्तुं शक्तः, तथापि तेन पदार्थशक्तय एव विपर्यस्यन्ते, न पदार्था इति ॥

धर्मज्ञानवैराग्यैश्वर्येति चत्वारः सात्त्विकाः धर्मा बुद्धेरुक्ताः सम्प्रति तामसान् बुद्धिधर्मानाह—तामसास्त्विवति । तद्विपरीताः=धर्मादिविपरीताः । तानेवाह—अधर्मेत्यादिना । एतेन सात्त्विकतामसेतरबुद्धिधर्मा इच्छाद्वेषप्रयत्नादयो राजसा इति दर्शितम् । सात्त्विकानाम् उपादेयतया, तामसानां च परिहेयतया विवेकज्ञानोपयोगित्वेन उभयविधानामेव उपादानं कृतम् । तत्र अधर्मो ब्रह्मवधादिजन्यो नरकादिदुःखहेतुः, अज्ञानं च अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मत्वरूपं विपर्ययज्ञानम्, अवैराग्यं च विषयभोगतृष्णा, अनैश्वर्यं च प्रतिहतेच्छत्वम् इत्यर्थः ॥ २३ ॥

---

१ यथाह रामचरिते भवभूतिः—

"लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥"

अस्य चायमर्थः—लोके यद् यद् वस्तु प्रसिद्धमस्ति प्राकृतसत्यवादिनस्तत् तदेव वदन्ति न तु तेषां वाक्यतो वस्त्वन्तरमुत्पद्यते, किं तु ब्रह्मर्षयो यद् यद् वदन्ति तत्तदेव असदपि उत्पद्यत इति ।

ऋषीणामपि साधुत्वमस्ति तद्व्यावृत्तये 'लौकिकानाम्' इत्युक्तम् । आद्यऋषयस्तु अलौकिकाः । लौकिका असाधवस्तु यद् वस्तु नास्ति तदपि वदन्ति, अतस्तेषां वाक्यानामर्थानुसारित्वमपि नास्ति मिथ्यावादित्वादिति तद्व्यावृत्तये—'साधूनाम्' इत्युक्तम् ।

२ अत्रेयं परीक्षार्थिनां कृते सरला सरणिः—अणिमा=महानपि भवत्यणुः । यतः शिलामपि प्रविशति । लघिमा=महानपि लघुर्भूत्वेषीकातूलवदाऽऽकाशे विहरति । महिमा=अल्पोऽपि नागनगनगरपरिमाणो भवति । प्राप्तिः=सर्वे भावाः सन्निहिता भवन्ति योगिनः । तद्यथा—भूमिष्ठ एवाऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम् । प्राकाम्यम्=इच्छानभिघातः—

अहङ्कारस्य लक्षणमाह—"अभिमानोऽहङ्कार" इति,

**अभिमानोऽहङ्कारः, तस्माद् द्विविधः प्रवर्तते सर्गः।**
**एकादशकश्च गणः, तन्मात्रपञ्चकश्चैव ॥ २४ ॥**

अभिमानोऽहङ्कारः=यत् खल्वालोचितं मतं च तत्राहमधिकृतः—शक्तः खल्वहमत्र—मदर्था एवामी विषयाः—मत्तो नान्योऽत्राधिकृतः कश्चिदस्ति अतोऽहमस्मि इति योऽभिमानः सोऽसाधारणव्यापारोऽहङ्कारः, तमुपजीव्य हि बुद्धिरध्यवस्यति—'कर्तव्यमेतन्मया' इति।

---

## अथाऽहङ्कारकार्यनिरूपणम्।

"प्रकृतेर्महान्" इत्यत्रोद्दिष्टेषु महत्तत्त्वादिषु महत्तत्त्वं लक्षयित्वाऽहंकारं लक्षयति—अभिमान इति। अभिमानः="अहमस्मि" इति ज्ञानम्, अहङ्कार इत्युच्यते। तस्मात्=अहङ्कारात्, एकादशको गणः=एकादशसंख्यापरिमितो गणः—एकादशेन्द्रियाणीति यावत्, च=पुनः तन्मात्रपञ्चकः=पञ्चतन्मात्राणीति द्विविध एव=द्विप्रकार एव, सर्गः=सृष्टिः, प्रवर्तते=उत्पद्यते ॥ २४ ॥

यदिति। यत्=वस्तु, कृत्यं वा, आलोचितम्=बाह्येन्द्रियैरीक्षितम्, इन्द्रियेण वस्तुसामान्येन गृहीतमिति यावत्, मतं च—मनसा विशेषरूपेण कल्पितं च, तत्र=तस्मिन् कृत्ये, अहमधिकृतः, अस्यैव विवरणं "शक्त" इत्यादिकम्। मदर्थाः=मदुपकारकाः। अतोऽहमस्मि=अत्राहमधिकृतोऽस्मीत्यर्थः। इति=इत्याकारः, योऽभिमानः=ज्ञानभेदः, अभिमानः=अहङ्कारस्य वृत्तिविशेषः। असाधारणेति। "अहङ्कारस्य" इति शेषः। अत्रापि क्रियाक्रियावतोरभेद-

---

नाऽस्य रूपं भूतस्वरूपैर्मूर्त्यादिभिरभिहन्यते। भूमावुन्मज्जति निमज्जति च यथोदके। उन्मज्जति=जलमिव भूमिमुद्भिद्योत्तिष्ठति, निमज्जति=जले इव भूमौ प्रविशति। वशित्वम्=भूतभौतिकेषु वशीभवति अवश्यश्चान्येषाम्। भूतानि=पृथिव्यादीनि भौतिकानि=गोघटादीनि तेषु वशी=स्वतन्त्रो भवति। तेषान्तु अवश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात् तत्कार्यवशीकारः, तेन यानि यथाऽवस्थापयति तानि तथाऽवतिष्ठन्त इत्यर्थः। ईशित्वं भूतभौतिकानां प्रभवव्यूहव्ययानामीष्टे। भूतभौतिकानां विजितप्रकृतिः सन् यः प्रभवः=उत्पादः, यश्च व्यूहः=यथावदवस्थापनं, यश्च व्ययो=विनाशस्तेषामीष्टे। यत्र कामावसायित्वं=सत्यसंकल्पता। विजितगुणाऽर्थतत्त्वो हि योगी यद् यदर्थतया संकल्पयति तत् तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्ये संकल्प्य भोजयन् जीवयतीति। ननु यथा शक्तिविपर्यासं करोत्येवं पदार्थविपर्यासमपि कस्मान्न करोति,—इति चेदुच्यते—न खल्वेते यत्रकामावसायिनस्तत्र भगवतः परमेश्वरस्याऽऽज्ञामुत्क्रमितुमुत्सहन्ते। शक्तयस्तु पदार्थानां जातिदेशकालाऽवस्थाभेदेनाऽनियतस्वभावा इति युज्यते तासु तदिच्छाऽनुविधानमिति, एतान्यष्टावैश्वर्याणि। (यो० ३।४५)

तस्य कार्यभेदमाह—"तस्माद् द्विविधः प्रवर्तते—सर्गः"। प्रकारद्वयमाह—"एकादशकश्च गणः"=इन्द्रियाह्वः, "तन्मात्रपञ्चकश्चैव" द्विविध एव सर्गोऽहङ्कारान्न त्वन्य इत्येवकारेणावधारयति ॥ २४ ॥

स्यादेतद्—अहङ्कारादेकरूपात्कारणात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवतः, इत्यत आह—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः, स तामसस्तैजसादुभयम् ॥ २५ ॥

"सात्त्विक" इत्यादि ।

प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्त्विको वैकृतात्=सात्त्विकादहङ्कारात्प्रवर्तते, भूतादेस्तु=अहङ्कारात्तामसात्तु तन्मात्रो गणः प्रवर्तते, कस्मात् ? यतः स तामसः ।

---

विवक्षा द्रष्टव्या, अन्यथा अभिमानस्य अहङ्कार—व्यापारतया सामानाधिकरण्यानुपपत्तेः । तम्=अहङ्कारम्, उपजीव्य=आश्रित्य, अध्यवस्यति=निश्चिनोति । तस्य=अहङ्कारस्य । प्रकारद्वयम्=कार्यद्वैविध्यम् । इन्द्रियाह्वः=इन्द्रियनामा । "तन्मात्रपञ्चकश्चैव" इत्येवकारस्य भिन्नक्रमयोजनया व्याचष्टे—द्विविध एवेति । एवकारेण="एव" इति शब्देन, अवधारयति=निश्चाययति ॥ २४ ॥

एकस्याः सामग्र्या एकमेव कार्यं दृष्टं नानेकमिति शङ्कते—स्यादेतदिति । जडप्रकाशकाविति । तत्र जडो गणः=पञ्चतन्मात्रकः, प्रकाशकश्च गणः=एकादशक इन्द्रियाख्यः । तत्र जडत्वम् अवभास्यत्वम्, प्रकाशकत्वम् अवभासकत्वम् । विलक्षणौ=असमानजातीयौ । अत्रापि सामग्रीभेदोऽस्तीत्याह—सात्त्विक इति । वैकृतादहङ्कारात्=सात्त्विकादहङ्कारात्, एकादशकः=इन्द्रियगणः, प्रवर्तते=उत्पद्यते, यत इन्द्रियगणः सात्त्विकः । भूतादेरहङ्कारात्=तामसादहङ्कारात्, तन्मात्रः प्रवर्तते, यतः तन्मात्रपञ्चकः तामसः, तैजसादहङ्कारात्=राजसादहङ्कारात्, उभयम्=गणद्वयम्, एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति यावत्, प्रवर्तते ॥ २५ ॥ ❀ ॥

"सत्त्वं लघु प्रकाशकम्" इत्युक्तेः प्रकाशलघुत्वाश्रयत्वाद् इन्द्रियगणः सात्त्विक इत्याह—प्रकाशलाघवाभ्यामिति ॥ अनेन सात्त्विकत्वे उपपत्तिरुक्ता । कारणस्य अहङ्कारस्य सात्त्विकत्वं विना कार्यस्य इन्द्रियगणस्य सात्त्विकत्वं न संभवतीति कारणस्यापि तदानीं सात्त्विकत्वं स्यादिति दर्शयति—वैकृतादिति । यदा अहङ्कारे रजस्तमसी अभिभूय सत्त्वं समुद्भवति, तदवस्थस्य अहङ्कारस्य प्राचीनैः वैकृतसंज्ञा कृता । इन्द्रियसर्गात्प्रागेव अहङ्कारस्य तदवस्थतया, इन्द्रियसर्गस्य च प्राथमिकत्वेन प्राथमिकविकृतिप्राप्तत्वयोगात् । अतो व्याचष्टे—सात्त्विकादिति । रजस्तमोऽभिभवेन सत्त्वसमुद्रेकविशिष्टादित्यर्थः ।

एतदुक्तं भवति—यद्यप्येकोऽहङ्कारस्तथापि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्यं करोतीति ।

ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्यं जन्यते तदा कृतमकिञ्चित्करेण रजसा, इत्यत आह—"तैजसादुभयं" । तैजसाद्=राजसाद्=उभयं गणद्वयं भवति ।

यद्यपि रजसो न कार्यान्तरमस्ति तथापि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वस्वकार्यं कुरुतः, रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्यं कुरुत इति, तदुभयस्मिन्नपि कार्ये सत्त्व-

---

तथाच प्रकृततन्त्रपरिभाषया "वैकृत" इति सात्त्विकाहङ्कारस्य संज्ञेति ज्ञेयम् ॥ भूतादेरिति । भूतसर्गप्रागवस्थापन्नादित्यर्थः । तदवस्थायां हि सत्त्वरजसी अभिभूय तमः समुद्भवतीति प्राचीनैः तदवस्थस्य अहङ्कारस्य भूतादिसंज्ञा कृता, इत्यतो व्याचष्टे—तामसादिति । तथा च प्रकृततन्त्रपरिभाषया "भूतादिः" इति तामसाहङ्कारस्य संज्ञेति ज्ञेयम् । तन्मात्रो गण इति । तन्मात्राणि सन्त्यस्मिन् गण इति तन्मात्रो गणः । "अर्शआदिभ्योऽच्" इत्यच् । ननु तन्मात्रगणसर्गात् प्राक् अहङ्कारस्य तामसत्वं कुतोऽनुमेयमिति पृच्छति—कस्मादिति । सः=तन्मात्रगणः । तामसः=तमोगुणप्रचुरः, तस्य गुरुत्वादप्रकाशकत्वाच्चेति भावः । फलितमाह—एतदुक्तमिति । उद्भवः=गुणान्तराभिभवेन उद्गमः, अभिभवः=गुणान्तरेण तिरोहितत्वम्, ताभ्यामित्यर्थः । भिन्नं कार्यमिति । त्रिगुणात्मकोऽपि अहङ्कारः तमोऽभिभवेन सत्त्वसमुद्भवाद् इन्द्रियगणं जनयति, तमसा तिरोहितसत्त्वस्तु तन्मात्रगणमिति भावः ॥

कृतम्=अलम्, अकिंचित्करेण=निष्फलेन । तैजसादिति । अत्र तेजःशब्देन चालकत्वेन उत्तेजकं रज उच्यते, अतो व्याचष्टे—राजसादिति । अनभिभूतरजस्कादित्यर्थः । यदा रजोगुणः सत्त्वतमसी अभिभूय समुद्भवति तदाहङ्कारस्य "तैजस" इति संज्ञा प्राचीनैः कृता । तथा च प्रकृततन्त्रपरिभाषया राजसाहङ्कारस्य "तैजस" इति संज्ञेति ज्ञेयम् । तर्हि स्वतन्त्रकार्याभावात् कृतं रजसेत्याशङ्क्याह—यद्यपीति । स्वयमक्रिये=आत्मना क्रियोत्पादनासमर्थे, यतोऽतः समर्थे=स्वस्वकार्यजननशक्ते अपीत्यर्थः । नेति । परिचालकरजोरूपसहकारिविरहादिति भावः । परिचालकरजोरूपसहकारिसमवधाने तु स्वस्वकार्यं कुरुत इत्याह—रजस्त्विति । ते=सत्त्वतमसी कर्मभूते । यथा दण्डादिकं घटजननशक्तमपि स्वयमक्रियत्वान्न कार्यं जनयति, परिचालककुलालरूपसहकारिसमवधाने तु कार्यं जनयतीति दण्डादेर्व्यापारोत्पादनद्वारेण कार्यं प्रतिकुलालस्य सहकारिकारणत्वं तद्वदिति भावः । इति=यतः, तत्=तस्मात्, उभयस्मिन्=

तमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति ॥ २५ ॥

सात्त्विकमेकादशमाख्यातुं बाह्येन्द्रियदशकं तावदाह—

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ॥ २६ ॥

"बुद्धीन्द्रियाणि" इत्यादिना ।

---

इन्द्रियन्मात्ररूपे इत्यर्थः ॥ नव्यर्थमिति । यथा नैयायिकमते मनुष्यशरीरं पार्थिवमपि आकाशादिभिरुपष्टभ्यते यथा वा सुवर्णं तैजसमपि पृथिव्योपष्टभ्यते एवं रजस उपष्टम्भकत्वमिति न व्यर्थतेति भावः ॥ ⊛ ॥

अहङ्कारे त्रयोगुणास्तिष्ठन्ति—सत्त्वं रजस्तम इति । तत्र यदा सत्त्वगुणेन रजस्तमसोरभिभवो जायते तदा अहङ्कारस्य वैकृतसंज्ञा भवति, ततः (वैकृताहङ्कारात्) सत्त्वगुणसाहाय्येन एकादशेन्द्रियाणि उत्पद्यन्ते । [तत्रापि उत्कटसत्त्वप्रधानादहङ्कारान्मनो जायते, मध्यमसत्त्वप्रधानाच्च ज्ञानेन्द्रियाणि, निकृष्टसत्त्वयुक्ताच्चाहङ्कारात् कर्मेन्द्रियाणि जायन्ते इति बोध्यम्] अत एव इन्द्रियाणि सात्त्विकानि कथ्यन्ते । यदा च तमोगुणेन सत्त्वरजसोः तिरस्कारो भवति, तदा अहङ्कारस्य भूतादिसंज्ञा भवति, तमोगुणाधिक्याच्च तामस इत्यपि संज्ञा भवति, ततः [भूतादेः तामसात्] तत्समानस्वभाववन्ति शब्दादिपञ्चतन्मात्राणि उत्पद्यन्ते । एवं यदा रजोगुणेन सत्त्वतमसोरभिभवो जायते तदा अहङ्कारस्य तैजससंज्ञा भवति, ततः (तैजसाहङ्कारात्) एकादशेन्द्रियाणि पञ्चतन्मात्राणि चेति उभयमुत्पद्यते । यतो यदा वैकृतोऽहङ्कारो विकृतो भूत्वा एकादशेन्द्रियाणि उत्पादयितुं वाञ्छति, तदा स निष्क्रियत्वात् स्वकार्यं कर्तुं न प्रभवति, अतः सः क्रियास्वभावस्य तैजसाहङ्कारस्य साहाय्यं गृह्णाति, तथा तामसाहङ्कारोऽपि निष्क्रियत्वात् तन्मात्ररूपं स्वकार्यं नोत्पादयितुं प्रभवतीति सोऽपि तैजसाहङ्कारस्य साहाय्यं गृह्णाति । इत्थं वैकृतभूतादीत्यहङ्कारद्वयेन सह तयोः कार्ये सहायकत्वात् तैजसोऽङ्कारो द्विविधकार्यस्य कारणं भवतीति सरलो निखिलार्थः ॥ २५ ॥

एकादशमिति । एकादशानां पूरणम् एकादशम् "तस्य पूरणे डट्" इति डट् । मन इत्यर्थः । तावत्—प्रथमम् ॥

बुद्धीन्द्रियाणीति । चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि पञ्च बुद्धीन्द्रियाणि=बुद्धिः—रूपादिज्ञानम्, तत्साधनानि इन्द्रियाणि बुद्धीन्द्रियाणि=ज्ञानेन्द्रियाणीत्यर्थः । शाकपार्थिवादित्वात्साधनपदलोपः । वाक्पाणिपादपायूपस्थाः पञ्च कर्मेन्द्रियाणि=कर्मसाधनानि इन्द्रियाणि, इति सांख्याचार्या आहुः=वदन्ति ॥ २६ ॥ ⊛ ॥

सात्त्विकाहङ्कारोपादानकत्वमिन्द्रियत्वम्, तच्च द्विविधं—बुद्धीन्द्रियं कर्मेन्द्रियं च, उभयमप्येतद् इन्द्रस्य=आत्मनश्चिह्नत्वादिन्द्रियमुच्यते, तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि।

तत्र रूपग्रहणलिङ्गं चक्षुः, शब्दग्रहणलिङ्गं श्रोत्रं, गन्धग्रहणलिङ्गं घ्राणं, रसग्रहणलिङ्गं रसनं, स्पर्शग्रहणलिङ्गं त्वक्। वागादीनां कार्यं वक्ष्यति ॥ २६ ॥

---

इन्द्रियसामान्यलक्षणमाह—सात्त्विकेति। सात्त्विकोऽहङ्कार उपादानं यस्य तत्तथा तस्य भावस्तत्त्वम्। सात्त्विकाहङ्कारादेव तदुत्पत्तेर्लक्षणसमन्वयः। तच्च=इन्द्रियं च। बुद्धीन्द्रियम्=बुद्धिः—रूपादिविषयम् आलोचनम्, तत्करणमिन्द्रियं बुद्धीन्द्रियम्=ज्ञानेन्द्रियमित्यर्थः। शाकपार्थिवादित्वान्मध्यमपदलोपः। एवं च—"सात्त्विकाहङ्कारकार्यत्वे सति रूपादिविषयालोचनकरणत्वं ज्ञानेन्द्रियत्वम्" इति फलितम्। आलोकेऽतिव्याप्तिवारणाय—सत्यन्तम्। एवं कर्म=वदनादिव्यापारः, तत्करणमिन्द्रियं कर्मेन्द्रियम्। तथाच—"सात्त्विकाहङ्कारकार्यत्वे सति वदनादिव्यापारकरणत्वं कर्मेन्द्रियत्वम्" इत्यत्र फलितम् ॥ ❀ ॥

उभयविधानामिन्द्रियशब्दार्थत्वे कारणमाख्यातुम् इन्द्रियपदव्युत्पत्तिमाह—उभयमपीत्यादिना। "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादि श्रुताविन्द्रशब्दस्य आत्मवाचित्वप्रतीतेराह—आत्मन इति। चिह्नत्वात्=लिङ्गत्वात्[1], ज्ञापकत्वादिति यावत्। तथा च—इन्द्रियाणां करणत्वात्, करणानां च कर्तारमन्तरेण असंभवात् आत्मविषयकानुमितिसाधनत्वेन लिङ्गत्वमिति भावः[2]। उच्यते इति। "इन्द्रियमिन्द्रलिङ्गम्" इत्यादिसूत्रेण पाणिनिना व्युत्पादितत्वादिति भावः॥

"एतेषां सर्वेषाम् इन्द्रियसंज्ञा कुतः? इत्याशङ्क्य "इंपदेनविषयाः, तान् प्रति द्रवन्तीति व्युत्पत्त्या" इन्द्रियत्वम्" इति साङ्ख्यचन्द्रिकाकारः॥ सनिमित्ताश्चक्षुरादिसंज्ञाः प्राह—तत्र रूपेति। रूपग्रहणलिङ्गम्—रूपोपलब्धिकरणमित्यर्थः। एवमग्रेऽपि शब्दोपलब्धिकरणम् इत्यादिरित्या व्याख्येयम्। तथाच "रूपं चष्टे—पश्यत्यनेनेति चक्षुः, शब्दं शृणोत्यनेनेति श्रोत्रम्, गन्धं जिघ्रत्यनेनेति घ्राणम्, रसयत्यनेनेति रसनम्" इत्यादिव्युत्पत्तिरत्र सूचिता। यद्वा—"रूपग्रहणं करणजन्यम्, क्रियात्वात्, छिदिक्रियावत्" इत्येवं रूपग्रहणमेव लिङ्गम्=अनुमापकं यस्य तद् रूपग्रहणलिङ्गम्=रूपज्ञानानु-

---

१ "करणव्यापारः कर्तृपरतन्त्रः, व्यापारत्वात्, कुठारव्यापारवत्" इत्येवं करणेन कर्तुरनुमानादिन्द्रियाणामात्मलिङ्गत्वम्। २ इन्द्रः=आत्मा स लिङ्ग्यते=अनुमीयते येन तद् इन्द्रियम्, अनुमानं तु स कर्ता, आत्मास्ति यस्येदं चक्षुरादिकरण (साधन) मस्ति, यतः साधनं कर्तारं विना न भवति, इति परमसरलार्थः।

एकादशमिन्द्रियमाह—

**उभयात्मकमत्र मनः, संकल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

"उभयात्मकम्" इति ।

एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं=बुद्धीन्द्रियं कर्मे-

---

मेयम् इत्यादिरर्थोऽत्र बोध्यः । तथा च चक्षुरादीन्द्रियसद्भावे मानमुक्तं भवति । त्वगिति । स्पर्शनमिन्द्रियमित्यर्थः । तस्य च त्वक्स्थानत्वादुपचारेण त्वगित्यभिख्येति बोध्यम् ॥ वक्ष्यतीति । "अष्टाविंशकारिकायाम्" इति शेषः ॥ २६ ॥ ॐ ॥

## अथ मनोनिरूपणम् ।

एकादशमिति । एकादशानां पूरणं मन इति यावत् ॥ उभयात्मकमिति । अत्र=एकादशेन्द्रियमध्ये, मनः उभयात्मकम्=ज्ञानेन्द्रियं कर्मेन्द्रियं च, यतः तन्मनः संकल्पकम् ज्ञानकर्मेतिद्विविधेन्द्रियप्रवृत्तिकल्पकम्, ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च प्रवृत्तिं कल्पयति, तथा साधर्म्यात्=सात्त्विकादहङ्कारादुत्पत्तिरूपसमानधर्मभावात्, अन्येन्द्रियवत् मनोऽपि सात्त्विकादहङ्कारादुत्पद्यते इति समानधर्मत्वात्, इन्द्रियं चास्तीति । यतो मन उभयविधेन्द्रियाणां प्रवृत्तिसम्पादकं, साधर्म्यादिन्द्रियं च तस्मात् मन उभयात्मकमिति योजना । एकाहङ्कारात् नानेन्द्रियाणामुत्पत्तिं व्युत्पादयति—गुणेति । अत्र गुणपरिणामशब्देन अदृष्टं गृह्यते । तथा च धर्माधर्मरूपो यो गुणपरिणामः, तस्य विशेषात्=वैचित्र्यात्, अहङ्कारस्य तत्कार्याणामिन्द्रियाणां च, नानात्वम्=अनेकत्वम्, इत्यर्थः । धर्माधर्मसहकृत[2]गुणविमर्दवैचित्र्याद् अहङ्कारवैचित्र्यात् [3]परिणामवैचित्र्यमिति तत्त्वम् । तत्र दृष्टान्तयति—बाह्येति अत्र चशब्द उपमा[4]र्थकः, तथा च बाह्यभेदा इवेत्यर्थः । इन्द्रियापेक्षया बाह्या ये शब्दतन्मात्रादिरूपा ग्राह्याः ते यथा तामसादहङ्कारादनेकविधा जायन्ते, तथा सात्त्विकादहङ्कारादनेकविधानीन्द्रियाणीति सरलार्थः ॥ २७ ॥ ॐ ॥

"उभयात्मकं मनः"—इति कारिकास्थम् "अत्र" इति पदं व्याचष्टे—एकादशस्विति । "अत्र" इति निर्धारणे सप्तमी, तदेव द्योतयन्नाह—मध्य इति । अत्र "एकादशानामिन्द्रियाणां मध्ये" इति पाठः कर्तुमुचितः, मध्यशब्दयोगे षष्ठ्या एव प्राप्तेरिति शाब्दिकाः ॥

---

१ त्वक् चक्षुषी द्रव्यस्यापि ग्राहके, अन्यानि तु गुणमात्रस्य ग्राहकाणीत्यपि द्रष्टव्यम् । "द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव, अन्यानि घ्राणरसनश्रवणानि तु गुणादिग्राहकाणि" इति तार्किकसिद्धान्तात् । २ गुणानां सत्त्वादीनां विमर्दः=एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वा अभिभव इत्यर्थः । ३ परिणामेति । इन्द्रियरूपकार्येत्यर्थः । ४ इवार्थे ।

न्द्रियं च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः ।

तदसाधारणेन रूपेण लक्षयति–"संकल्पकं मन" इति । सङ्कल्पेन रूपेण मनो लक्ष्यते, आलोचितमिन्द्रियेण वस्तु 'इदम्' इति सम्मुग्धम् 'इदमेवं नैवम्' इति सम्यक् कल्पयति=विशेषणविशेष्यभावेन विवेचयतीति यावत् ।

---

मनस उभयात्मकत्वे हेतुमाह—चक्षुरादीनामिति । "अन्यत्रमना अभूवं नादर्शम्, अन्यत्र मना अभूवं नाश्रौषम्" इत्यादिश्रुतेर्मनोव्यापारमन्तरेण इन्द्रियाणां स्वस्वव्यापारेऽक्षमत्वाद् उभयविधव्यापारवत्त्वेन मन उभयेन्द्रियरूपमित्यर्थः । मनोधिष्ठितानाम्=मनःसंबद्धानाम् । तथा च—सहकारिभावेन मनस उभयविधेन्द्रियकार्यसम्पादकत्वाद् उभयात्मकत्वमिति भावः । न च इन्द्रियजन्यज्ञाने सहकारितामात्रेण मनस इन्द्रियत्वे आलोकस्यापि इन्द्रियत्वप्रसङ्गः, तस्यापीन्द्रियज्ञाने सहकारित्वात्, नह्यालोकाभावे इन्द्रियाणि स्वविषयान् ग्रहीतुं प्रभवन्तीति शङ्क्यम्, "सात्त्विकाहङ्कारकार्यत्वे सति ज्ञानकर्मोभयकरणत्वेन मनस उभयेन्द्रियत्वम्" इत्यर्थस्यात्र विवक्षितत्वेन आलोकस्य तथात्वाभावात् ॥

तदिति । मन इत्यर्थः । असाधारणेन=करणान्तरव्यावृत्तेन, रूपेण=धर्मेण, लक्षयति=प्रतिपादयति । संकल्पेन रूपेण=संकल्परूपेण असाधारणेन व्यापारेण, मनो लक्ष्यते=इतरस्माद् व्यावृत्तरूपेण प्रतीयते इत्यर्थः ।

तदेव विशदयति—आलोचितमिति । इन्द्रियेण=चक्षुरादिव्यापारेण, "वस्तु इदम्" इति आलोचितम्=वस्तुसामान्येन गृहीतम्, अत एव सम्मुग्धम्=वस्तुविशेषत्वेन अगृहीतम्, विशेषणविशेष्यभावरहितम् । इति=हेतोरिदम्, एवम्=वस्तुविशेषरूपम्, न एवम्=न वस्तुसामान्यम्, इति=एवम्प्रकारेण, सम्यक् कल्पयतीति संकल्पकमित्यर्थः । सम्यक् कल्पयतीत्यस्यार्थमाह—विशेषणेति । "नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते" इति न्यायाद् "अत्रेदं विशेषणम् अत इदमेव विशेष्यम्" इति विवेचयति=धर्मधर्मिणौ पृथक् करोतीत्यर्थः, विशिष्टप्रत्यक्षजनकमिति यावत् ॥ पूर्वं चक्षुरादिव्यापारेण गोचरीकृतं वस्तु "इदं किंचिद् वस्तु" इत्येवं सम्मुग्धम्=अनुवृत्तव्यावृत्तरूपेण [ अनुवृत्तरूपम्–घटत्वादिकं सामान्यम्, व्यावृत्तरूपं च घटादिविशेषात्मकम्, तेन ] अविविक्तमेव [ अपृथक्कृतमेव ] भाति [ प्रतीयते ] ।

---

१ तन्मात्रवृत्तिरसाधारणः । लक्ष्यमात्रवृत्तित्वे सति तदितरावृत्तित्वं तन्मात्रवृत्तित्वम् ।

२ सामान्यविशेषरूपेणेति व्यक्तोऽर्थः ।

यदाहुः-"सम्मुग्धं वस्तुमात्रं हि प्राग्गृह्णात्यविकल्पितम्।
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः" ॥

तथा हि-"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। बाल-

---

पुनश्च इदमेवम्[1]=एतादृग्रूपेण [घटत्वादिरूपेण] युक्तमिदम्, न एवम्=एतादृग्रूपेण [पटत्वादिरूपेण] च नेदं युक्तम्, इति=एवम्, सम्यक् कल्पयति=विशेषणविशेष्यभावेन=अनुवृत्तव्यावृत्तरूपेण, विवेचयति=विविच्य प्रत्येति मनः अतः संकल्पकमित्युच्यत इति यावत्। अयमाशयः—सन्निकृष्टं वस्तु इन्द्रियेण वस्तुसामान्यत्वेनैव गृह्यते, न तु वस्तुविशेषत्वेन। अतस्तद् गृहीतं सम्मुग्धमुच्यते, सम्यग्ज्ञानाविषयत्वात्। मनस्तु "इन्द्रियगृहीतेऽस्मिन् पिण्डे सास्नादिकं विद्यते इति तद्विशिष्टोऽयं पिण्डो गौरेव नान्यः" इत्येवं प्रकारेण सम्मुग्धभावेनेन्द्रियगृहीतं पिण्डं विशेषणविशेष्ययोः पृथक्कारेण गृह्णातीति भवति मनः संकल्पकमिति। अत्रायं सरलार्थः—संकल्पोऽस्ति मनसोऽसाधारणो धर्मः। समीचीना विशेषा वा कल्पना च संकल्प इत्युच्यते। अर्थात् प्रथमम् अन्येन्द्रियैः सामान्यरूपेण "इदं किंचिद् वस्तु विद्यते" इति ज्ञानं जायते, पुनश्च तस्मिन् "इयमत्र जातिः, अयं गुणः, इयं क्रिया" इत्यादिरूपेण विशेषेण कल्पना भवति, इयमेव विशेषकल्पना संकल्प इति भाष्यते। तादृशी कल्पना चास्ति मनस आयत्तेति भवति मनः संकल्पकमिति ॥ ꣳ ॥

प्रागालोचनात्मकं निर्विकल्पकं [विशेषणविशेष्यानवगाहि] ज्ञानं जायते, पश्चाच्च मनसा सविकल्पकम् [विशेषणविशेष्यावगाहि] इत्यत्र पूर्वाचार्याणां संवादमाह—यदाहुरिति। प्राक्=मनोव्यापारात्पुरा चक्षुःसन्निपातानन्तरम्, अविकल्पितम्=सामान्यविशेषरूपेण अनाकलितम्, विशेषेण अज्ञातमिति यावत्, अत एव सम्मुग्धम्=अनुवृत्तव्यावृत्तरूपेण अविविक्तम्, अत एव च वस्तुमात्रम्=वस्तुसामान्यम्, गृह्णन्ति=वस्तुसामान्यत्वेन जानन्ति प्रतिपत्तारः, पुनश्च—मनीषिणः=मनोव्यापारवन्तः सन्तः, सामान्यविशेषाभ्याम्[2]="वस्तुत्वं सामान्यं गोत्वादिकं तु विशेषः" इत्यनुवृत्तव्यावृत्तरूपाभ्याम्, तत्=वस्तु, कल्पयन्ति=विविच्य अवगच्छन्ति इत्यर्थः ॥ विशिष्टप्रत्यक्षं मनस असाधारणकार्यमिति अत्र तत्त्वम् ॥

एतदेव स्पष्टयितुं कौमारिलश्लोकवार्तिके पठति—अस्ति हीति ॥ मुग्धवस्तुजम्=वस्तुसामान्यविषयकम्, अत एव निर्विकल्पकम्=विशेषणविशेष्ययोः संबन्धानवगाहि, आलोचनज्ञानम्=इन्द्रियसन्निकर्षजन्यज्ञानम्, प्रथमम्=प्राक्,

---

१ इदम्=घटादि, एवम्=घटत्वाद्याश्रयम्, नैवम्=न पटत्वाद्याश्रयम् इति व्यक्तोऽर्थः।
२ सामान्यम्=घटत्वादि, विशेषः=घटादिः ॥

मूका(ढा)दिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तु-
धर्मैर्जात्यादिभिर्यया । बुद्ध्याऽवसीयते सापि (हि) प्रत्यक्षत्वेन
सम्मता" ॥ इति ।

---

अस्ति=भवति । तज् ज्ञानाकारं दृष्टान्तेन अवबोधयति—बालेति । यथा—गवादेश्चक्षुः सन्निकृष्टत्वे बालस्य वस्तुसामान्यत्वेनैव आलोचनं भवति न तु गोत्वादिना, "इदं वस्तु गोपदवाच्यम्" इत्यादिसंस्कारानुदयात् । यथा वा मूकस्यापि वस्तुसामान्यत्वेन आलोचनं भवति तथेत्यर्थः । तथा हि—मूकत्वस्य बधिरत्वव्याप्यतया मूकस्य "गामानय" इत्यादिव्यवहारप्रयोजकवाक्यानाम् "इदं वस्तु गोपदवाच्यम्" इत्याद्याप्तोपदेशस्य वर्णपरिचयस्य चासंभवेन नयनेन्द्रियसन्निकृष्टवस्तूनां वस्तुसामान्यत्वेनैव ज्ञानं न तु वस्तुविशेषत्वेन । "बालमूकादि"—इति आदिशब्देन अन्यमनस्कपुरुषपरिग्रहः ॥ ❀ ॥

अन्ये तु—प्रथमम्=सविकल्पकप्रत्ययात्पुरा, यद् वस्तुमात्रगोचरं बालमूकादिज्ञानसमानं निर्विकल्पकं ज्ञानमस्ति तत् प्रतीतिसिद्धम् आलोचनाख्यं ज्ञानम् अभ्युपेयम्, निर्विकल्पकज्ञानाभावे सविकल्पकज्ञानानुत्पत्तेरित्यर्थः । तथा चाहुर्न्यायकन्दलीकाराः—"यदि हि वस्तुस्वभावस्य निर्विकल्पेन ग्रहणं नेष्यते, तदा तद्वाचकशब्दस्य स्मृत्यभावात् सविकल्पकमपि न स्यात्" इति ।

यद्यपि श्लोकवार्तिके "मुग्धवस्तुजम्" इति पाठ उपलभ्यते, तथापि न्यायरत्नाकरानुरोधेन "शुद्धवस्तुजम्" इत्येवात्र पाठः साधीयान् । "शुद्धवस्तुजम्" इत्यनेन च न सामान्यगोचरम् आलोचनमित्युच्यते, किंतु सामान्यविशेषकल्पनाहीनं तज् ज्ञानम् इति प्रतिपाद्यते, "न[1] विशेषो न सामान्यं तदानीमनुभूयते । तयोराधारभूता तु व्यक्तिरेवावसीयते ॥" इत्युत्तरवार्तिके तथा प्रतिपादनात् । इत्येवं व्याचक्षते ॥ ❀ ॥

ननु यदि आलोचनज्ञानम् अविविक्तगोचरं तर्हि केन विविच्य ग्रहणमित्यत्राह—ततः परमिति । ततः परम्=निर्विकल्पज्ञानादुत्तरम्, जात्यादिभिः=जातिगुणक्रियाभिः, वस्तुधर्मैः=तद्वस्तुगतविशेषधर्मैः, यया बुद्ध्या=बुद्धेरध्यवसायाख्यव्यापारेण, अवसीयते="अमुकोऽयम्" इति निश्चीयते, सा=बुद्धिव्यापाररूपा वृत्तिः, प्रत्यक्षत्वेन=प्रत्यक्षप्रमाणत्वेन, सम्मतेत्यर्थः ॥ ❀ ॥

अन्ये तु निर्विकल्पज्ञानादुत्तरं यया बुद्ध्या[2] नीलत्वघटत्वादिभिर्धर्मैर्विविच्य गृह्यते वस्तु, सापि बुद्धिः प्रत्यक्षैवेत्यर्थः । यत् प्रथमं[3] केवलेन इन्द्रियेण निर्वि-

---

१ विशेषः=व्यवच्छेदः, व्यावृत्तिरितियावत्, सामान्यम्=समानत्वम्, अनुवृत्तिरितियावत्, अनुवृत्तिव्यावृत्ती न निर्विकल्पके प्रकाशेते, तयोस्तु आधारभूतम् अनुवृत्तं व्यावृत्तं च यज्जातिव्यक्त्याद्यनेकाकारं वस्तु तत्तदाकारयुक्तं सम्मुग्धं सर्वमवसीयते, तत् "शुद्धवस्तु" इत्युच्यते । व्यक्तिः—इति, वस्तु इत्यर्थः । इति न्यायरत्नाकरकारः ॥ ❀ ॥

२ बुद्ध्या=मनसा । ३ 'सापि प्रत्यक्षत्वेन' इत्यपिशब्दस्यार्थं वक्ति—यत्प्रथममिति ।

कल्पकं ज्ञानं जनितं तदेव प्रत्यक्षमिति न किंतु यच्चानन्तरम् इन्द्रियसहायेन मनसा सविकल्पकं ज्ञानं जनितं तदपि प्रत्यक्षमिति भावः ॥ इति व्याचक्षते ॥ ❀ ॥

नं[1]नु "बाह्येन्द्रियतन्त्रमेव मनो बाह्यं गोचरयति," इति हि सर्वेषां शास्त्रकृतां समयः, चक्षुरादिनैरपेक्ष्येणैव मनसो बहिर्वृत्तिस्वीकारे हि अन्धादयोऽपि रूपादीन् आ[2]लोचयेयुरिति अन्धवधिराद्यभावप्रसङ्गः स्यात् । ततश्च यदीन्द्रियेण विशेषो नालोच्येत तदा मनसाऽपि तस्य अनुव्यवसायो न स्यात्, ज्ञानोत्तरज्ञानस्यैव अनुव्यवसायपदार्थत्वेन इन्द्रियेणाज्ञातस्य विशेषस्य मनसा अनुव्यवसायासंभवात्, तथा च अनुव्यवसायस्य विशिष्टविषयत्वार्थम्—इन्द्रियाणां सामान्यविशेषविषयत्वमवश्याभ्युपेयम्, इन्द्रियाणां सामान्यविशेषविषयत्वेऽङ्गीकृते तु अन्येन्द्रियज्ञातविशेषस्यैव मनसा ज्ञानाद् उपपद्यत एवानुव्यवसायो ज्ञानोत्तरं ज्ञानस्य सद्भावात्, इन्द्रियाणां तथात्वेऽनभ्युपगमे तु न स उपपद्यते । तथा चाहुर्योगभाष्यकाराः—"न च तै[3]त्सामान्यमात्रग्रहणाकारम्, कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेत (यो० ३।४७) इति । इति चेत् । अत्राहुः—नह्यत्र "आलोचनं ज्ञानं सामान्यमेव विषयीकरोति मनस्तु विशिष्टमनुव्यवस्यति" इति नियमोऽस्ति येन भवदुक्तोऽनुव्यवसायोऽनुपपन्नः स्यात्, किंतु "इन्द्रियजम् आलोचनम् अविविक्तौ सामान्यविशेषौ गोचरयति, मनस्तु विविक्तौ तौ गृह्णाति" इत्येव नियमोऽङ्गीक्रियते, ततश्च न अनुव्यवसायानुपपत्तिः नापि योगभाष्यविरोधः । युक्तं चैतत्, "निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः । ग्रहणं लक्षणाख्येयं ज्ञात्राशुद्धं तु गृह्यते" ॥ इ[4]त्यादिना श्लोकवार्तिके तथैव प्रतिपादनात् ।

---

१ आलोचनज्ञानं सामान्यविषयं न विशिष्टविषयमिति बुद्ध्या शङ्कते—नन्विति । २ पश्येयुः । ३ तत=इन्द्रियम्, सामान्यमात्रस्य ग्रहणमेव आकारः=स्वभावो यस्यैवंविधं नेत्यर्थः । सामान्यं नाम अनुगतो धर्मः, यं तार्किका जातिरिति वदन्ति । विशेषो नाम धर्मी । तत्र "सामान्यमिन्द्रियग्राह्यं विशेषश्च मनोग्राह्यः" इति बौद्धमतं खण्डयितुं भाष्यमिदं प्रवृत्तम् । इन्द्रियाणां किल वृत्तिर्न केवलं सामान्यमात्रविषया, किं तु सामान्यविशेषोभयविषयैव सेष्यते, यदि हि इन्द्रियाणां वृत्तिर्विशेषविषयिका नाङ्गीक्रियते, तर्हि इन्द्रियैरगृहीतः स विशेषो मनसा कथं निश्चितो भवेत्, यतः बाह्येन्द्रियाधीनं सदेव मनः बाह्यविषयेषु अनुव्यवसायवद् भवति न स्वतन्त्रम्, अतः सामान्यविशेषरूपा विषयाकारैव इन्द्रियाणां वृत्तिरिति सरलार्थः । ४ द्व्यात्मकस्य=सामान्यविशेषात्मकस्येत्यर्थः । सामान्यावभासोऽपि प्रतीतिसिद्ध एव, न हि निर्विकल्पकेनाऽगृहीतस्य सविकल्पकेनापि ग्रहणं संभवति, न वा अगृहीते सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञानं संभवति । तस्मात् सामान्यं विशेषश्च निर्विकल्पकेऽपि प्रकाशत एव । ननु "न विशेषो न सामान्यं तदानीमनुभूयते" इत्युक्तम्, कथं तयोर्ग्रहणमुच्यते, अत आह—लक्षणाख्येयमिति । नहीदानीमपि अनुवृत्तिव्यावृत्त्योर्ग्रहणमुच्यते, या त्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या=गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते—"सामान्यविशेषात्मकं तद् वस्तु,"

सोयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति ।

---

न्यायकन्दलीकारा अप्याहुः—"[1]तच्च न सामान्यमात्रं गृह्णाति, भेदस्यापि प्रतिभासनात्, नापि स्वलक्षणमात्रम्[2]—सामान्याकारस्यापि संवेदनात्, व्यक्त्यन्तरदर्शने प्रतिसन्धानाच्च । किंतु—सामान्यं विशेषं चोभयमपि गृह्णाति । परम् "इदं सामान्यम्, अयं विशेषः" इति विविच्य न प्रत्येति, वस्त्वन्तरानुसन्धानविरहात्, । पिण्डान्तरानुवृत्तिग्रहणाद्धि सामान्यं विविच्यते, व्यावृत्तिग्रहणाद् "विशेषोऽयम्" इति विवेकः । निर्विकल्पकदशायां च पिण्डान्तरानुसन्धानाभावात्सामान्यविशेषयोरनुवृत्तिव्यावृत्तिधर्मौ न गृह्येते, तयोरग्रहणान्न विविच्यग्रहणम्[3] ॥" इति ॥

एतेन वाचस्पतिमिश्रानुद्दिश्य "कश्चित्तु निर्विकल्पकं ज्ञानमेव आलोचनम् इन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यम्, इत्याह । तन्न, योगभाष्ये व्यासदेवैः विशिष्टज्ञानस्यापि ऐन्द्रियकत्वस्य व्यवस्थापितत्वात् ॥" इति वदन्तो विज्ञानभिक्षवः प्रत्युक्ताः । वाचस्पतीयग्रन्थस्य तात्पर्यानवधारणात् इति ध्येयम् ॥ ❀ ॥

इत्थं संकल्पं व्याख्याय सम्प्रति लक्षणसमन्वयं वक्ति—सोऽयमिति ॥ अयम्=यः, मनसः संकल्पलक्षणो व्यापारः, स समानजातीयात्=बुद्ध्यादेः, असमानजातीयाच्च चक्षुरादेः सकाशात्, मनो व्यवच्छिन्दन्=व्यावर्तयन् सन्, मनो लक्षयति=व्यावृत्तरूपेण प्रत्याययती (बोधयती)ति भवति संकल्पो मनसः लक्षणमित्यर्थः । तथा च—"संकल्पलक्षणव्यापारवत्त्वं मनस्त्वम्" इति मनोलक्षणमिति भावः ॥

---

इति । ज्ञात्रा पुनः शुद्धमेव=अनुवृत्तिव्यावृत्तिरहितं गृह्यते, न त्वसाधारणत्वेन, परेभ्यो व्यक्त्यन्तरेभ्यो व्यावृत्तेरकल्पनात्, तथा व्यक्त्यन्तरानुवृत्तेरकल्पनान्न सामान्यमपि गृह्यते । अतो न विरोधः," इत्येतदर्थः ॥ इति पार्थसारथिमिश्राः । अनेन च आलोचनस्य अविविक्तविषयत्वमुक्तम्, उत्तरज्ञानस्य च विविक्तविषयत्वं "ततः परं पुनर्वस्तु–" इत्यनेनाभिहितम् । तदेवाह—इत्यादिनेति ॥

१ निर्विकल्पकज्ञानं च । २ व्यक्तिमात्रं विशेषः । ३ नामजात्यादियोजनारहितं निष्प्रकारकं विशेषणमात्रज्ञानं वस्तुस्वरूपमात्रग्रहणस्वभावं निर्विकल्पकमिति नैयायिकाः । यथा—"किंचिदिदम्" इति । अथवा—दूरात् "अस्ति किंचित्" इति । ज्ञातृज्ञेयादिविभागशून्यं ब्रह्मात्मैक्यविषयमखण्डाकारकं विशेष्यविशेषणसंबन्धरहितं ज्ञानं तदिति वेदान्तिनः । अलौकिक आलोचनात्मको ज्ञानविशेषस्तदिति तु सांख्याः । ४ सर्वविषयत्वेन सजातीयं बुद्धितत्त्वमभिमानतत्वं, प्रतिनियतविषयत्वेनासमानजातीयं चक्षुरादिकमिति भावः ।

स्यादेतद्—असाधारणव्यापारयोगिनौ यथा महदहङ्कारौ नेन्द्रियम् एवं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हति, इत्यत आह—"इन्द्रियं च" इति। कुतः? "साधर्म्याद्"—इन्द्रियान्तरैः, सात्त्विकाहङ्कारोपादानत्वं च साधर्म्यं, न त्विन्द्रलिङ्गत्वम्, महदहङ्कारयोरप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्, तस्माद् व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं न तु प्रवृत्तिनिमित्तम्।

---

शङ्कते—स्यादेतदिति। यथा असाधारणव्यापारयोगिनौ महदहङ्कारौ इन्द्रियं न, एवम्=तथा असाधारणव्यापारयोगि मनोऽपि इन्द्रियं भवितुं नार्हतीति योजना। ननु इयं शंका न युक्ता, असाधारणव्यापारयोगित्वस्य इन्द्रियत्वव्याघातकत्वाभावात्, अन्यथा चक्षुरादीनामपि इन्द्रियत्वानुपपत्तिप्रसङ्गात्, इति चेत्। अत्राहुः—"यदि असाधारणव्यापारवतो मनस इन्द्रियत्वम्, तदा असाधारणव्यापारयोगिनोर्महदहङ्कारयोरपि कथं न इन्द्रियत्वम्" इत्यभिप्रायेण शङ्केयमिति॥ अन्ये तु यथा "प्रतिनियतविषयाणामेव चक्षुरादीनामिन्द्रियत्वं, न सर्वविषयत्वेन अनियतविषययोर्महदहङ्कारयोरिन्द्रियत्वम्, तथा मनसोऽपि सर्वविषयत्वेन नेन्द्रियत्वं भवितुमर्हति" इत्याशयेनेयमाशङ्का नेयेत्याहुः॥

साधर्म्यम्=समानधर्मकत्वम्, तत्र "केन साधर्म्येण" इति जिज्ञासायां सापेक्षितमध्याहरति—इन्द्रियान्तरैरिति। "किं तत् साधर्म्यम्" इति जिज्ञासायां साधर्म्यमुपदर्शयति—सात्त्विकाहङ्कारेति। एतदेवात्र साधर्म्यं ग्राह्यं न पुनःपूर्वोक्तम् इन्द्रलिङ्गत्वरूपमित्यर्थः। "सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्" इत्युक्तेरिति भावः। तत्र हेतुमाह—महदहङ्कारयोरिति। तथा च—इन्द्रियत्वं सात्त्विकाहङ्कारोपादानकत्वं न तु इन्द्रलिङ्गत्वम्, तथात्वे महदहङ्कारयोरतिव्याप्तिः स्यादिति भावः॥

कथं तर्हि पूर्वम् "आत्मनश्चिह्नत्वादुभयमिन्द्रियम्" इत्युक्तम्, तत्राह—तस्मादिति। यत इन्द्रलिङ्गत्वं महदहङ्कारयोरतिप्रसक्तम्, तस्मात् इन्द्रलिङ्गत्वं व्युत्पत्तिमात्रम्=गच्छतीति गौरितिवत् प्रकृतिप्रत्ययार्थान्वाख्यानमात्रम्, न तु प्रवृत्तिनिमित्तम्=इन्द्रियपदस्य चक्षुरादौ प्रवृत्तेर्निमित्तं न, महदहङ्कारयोरतिव्याप्तेरित्यर्थः। तत्र प्रवृत्तिनिमित्तम्=शक्यतावच्छेदकम्।

अयमाशयः—यथा अनतिप्रसक्तमेव [अतिव्याप्तिशून्यम्] सास्नादिमत्त्वं पशुविशेषे गोपदस्य प्रवृत्तेर्निमित्तमाश्रीयते, न तु व्युत्पत्तिमात्रलभ्यं गमनकर्तृत्वं पुरुषादावतिप्रसक्तत्वात्[1], तथा अनतिप्रसक्तं सात्त्विकाहङ्कारोपादानत्व-

---

१ पुरुषस्यापि गमनकर्तृत्वेन तत्रापि गोपदप्रवृत्त्यापत्तेरित्यर्थः।

अथ कथं सात्त्विकादहङ्कारादेकस्मादेकादशेन्द्रियाणि, इत्यत आह—"गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च" इति । शब्दा-

मेवात्र इन्द्रियपदस्य चक्षुरादौ प्रवृत्तेर्निमित्तमाश्रीयते न तु व्युत्पत्तिमात्र-लभ्यम् इन्द्रलिङ्गत्वम् महदहङ्कारयोरतिप्रसक्तत्वात्, तथा च न महदहङ्कार-योरिन्द्रियत्वप्रसङ्ग इति भावः ॥ इन्द्रियपदं न पाचकादिवद् यौगिकम्, किं तु पङ्कजादिवद् योगरूढम्, तेन "सात्त्विकाहङ्कारोपादानत्वे सति इन्द्रलिङ्ग-त्वम् इन्द्रियत्वम्" इत्यत्र फलितमिति ध्येयम् ॥

तथा चाहुर्दर्पणकाराः—"अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्[1], अन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात् । "गमेर्डोः" इति गमेर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयन-कालेऽपि प्रयोगात्" ॥ इति ॥

ननु कुशलगवादिशब्दानां व्याकरणात् कुशग्राहिगन्त्रादिरूपयोगार्थग्रहण-संभवे कोषात् दक्षसास्नादिमत्प्राण्यादिरूपार्थस्य मुख्यार्थतया ग्रहणे किं विनिगमकम्, ? कोषव्याकरणयोरुभयोरेव शक्तिग्राहकतायां समानप्रामाण्या-ङ्गीकारादिति चेत् । अत्रोच्यते—प्रकृतिप्रत्ययोभयप्रतीतिसापेक्षतया योगा-र्थप्रतीतौ गौरवम्, विलम्बश्च, किं तु तदुभयप्रतीतिनिरपेक्षतया समुदायेन युगपदेकार्थप्रत्यायकत्वात् रूढ्यर्थप्रतीतौ लाघवम्, अविलम्बश्चेति रूढ्यर्थ-संभवे योगार्थमपहाय रूढ्यर्थ एव मुख्यार्थतया अङ्गीक्रियते । तदेतामेव युक्तिमाश्रित्य भट्टपादैरुक्तम्—

"लब्धात्मिका सती रूढिर्भवेद् योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः ॥" इति ॥

पाचकशब्दादौ तु तादृशरूढेरभावात् व्याकरणानुसारेण पचनकर्त्रादिरूपो योगार्थ एव मुख्यार्थतया अङ्गीक्रियते इति सर्वमवदातम् ॥ इति ॥ ॐ ॥

कारणवैलक्षण्याभावे न कार्यवैलक्षण्यम् इति अविलक्षणादहङ्कारात् कथं विलक्षणानीन्द्रियाणीत्याशङ्कया परार्धमवतारयति—अथेति[2] । "धर्माधर्मरूपो यो गुणपरिणामः, तस्य विशेषात्=वैचित्र्यात्[3], अहङ्कारस्य तत्कार्याणां चेन्द्रियाणां नानात्वम्=अनेकत्वम्" इति मूलार्थं मनसि निधाय व्याचष्टे—शब्देति ।

१ व्युत्पत्तिलभ्यार्थे प्रकारतया भासमानं व्युत्पत्तिनिमित्तम् । यथा कुशलशब्दे कुश-ग्रादित्वम् । शक्तिज्ञाने प्रकारतया भासमानं प्रवृत्तिनिमित्तम् । यथा गोशब्दे गोत्वम् इति व्यक्तोऽर्थः । २ एकस्मात्कथमनेककार्याणीत्याक्षेपः । यथैकोऽग्निर्दहति पचति प्रकाशयति, यथा वा—दीर्घशष्कुलीभक्षणादौ मनसः पंचसु विषयेषु वृत्तिपंचकं, यथा वा—समूहालम्बनज्ञाने चक्षुषोऽनेकसंयोगित्वं, तद्वदेकस्याप्यहंकारस्य नानाकार्यकारितेति समाधानम् । बाह्यभेदाः=अग्न्यादयः, इति केचित् । ३ धर्माधर्मसहकृतगुणविमर्द-वैचित्र्यादहङ्कारवैचित्र्यात् परिणामवैचित्र्यम् इति तु परमार्थः ।

द्युपभोगप्रवर्तकादृष्टसहकारिभेदात्कार्यभेदः, अदृष्टभेदोऽपि गुणपरिणाम एव ।

'बाह्यभेदाश्च' इति दृष्टान्तार्थम् । यथा बाह्यभेदास्तथैतदपीत्यर्थः ॥ २७ ॥

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामप्यसाधारणीर्वृत्तीराह—

**रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥**

"रूपादिषु" इति ।

---

जीवानां शब्दाद्युपभोगस्य प्रवर्तकम्=जनकम्, यद् अदृष्टरूपं सहकारिकारणं तद्भेदादित्यर्थः । तथा च सात्त्विकाहङ्कारस्य साधारणकारणत्वेऽपि सहकारिकारणस्य अदृष्टविशेषस्य असाधारणत्वात् तत्तददृष्टविशेषसहकृतादहङ्कारात् कार्यभेदोऽवश्याभ्युपेतव्य इति भावः ।

पुरुषोपभोगार्था गुणानां प्रवृत्तिरिति हि स्थितिः, उपभोगश्च पुरुषस्य शब्दादिविषयानुभवरूपो न स्वाभाविकः, किंतु अदृष्टसहकारेण इन्द्रियाद्युपस्थापित शब्दादिद्वारा, तत्र नैकेनेन्द्रियेण निखिलं शब्दादिकम् उपस्थापयितुं शक्यते, इत्यनायत्या इन्द्रियनानात्वमभ्युपगन्तव्यम्, तत्स्वीकारे च कारणवैलक्षण्यं विना कार्यवैलक्षण्यासंभवात् अहङ्कारस्य नानात्वमर्थादायातमिति तत्त्वम् ॥

ननु कारिकायां गुणपरिणामविशेषान्नानात्वमुक्तम्, तत्कथं भवता सहकारिधर्माधर्मभेदाद् भेदः प्रोच्यते? तत्राह—अदृष्टभेदोऽपीति । अत्र "गुणपरिणाम"शब्देन अदृष्टमेव गृह्यते इत्यर्थः । अदृष्टभेदः=अदृष्टविशेषः ॥ ननु आकाङ्क्षितत्वाद् इन्द्रियभेदोपादानं न्याय्यम्, न तु अनाकाङ्क्षितत्वाद् बाह्यभेदोपादानमित्यत आह—बाह्यभेदाश्चेतीति । एतेन च शब्द उपमार्थ इति सूचितम् । तदेवाह—यथेति । तथाच यथा एकस्मात् तामसाहङ्कारात् बाह्यानां शब्दस्पर्शरूपरसगन्धानां भेदाः संभवन्ति, तद्वदान्तराणामपीति भावः ॥ इन्द्रियापेक्षया बाह्या ये शब्दतन्मात्रादयस्ते यथा तामसादहङ्कारादनेकविधा जायन्ते तथा सात्त्विकादहङ्कारादपि नानेन्द्रियाणीति सरलार्थः ॥ २७ ॥

रूपादिष्विति[1] । रूपादिविषयेषु सन्निहितेषु सत्सु, यद् रूपादिविषयाकारपरिणामरूपम् आलोचनमात्रम्, तत् पञ्चानाम्=ज्ञानेन्द्रियाणाम्, वृत्तिः=व्यापारः,—धर्म इति यावत्, इष्यते । मात्रशब्देन सामान्यविशेषविवेचनवैधुर्यं तस्य बोध्यते । पञ्चानाम्=कर्मेन्द्रियाणां च, वचनादयो वृत्तयो व्यापारा इष्यन्ते, इति वचनविपरिणामेनान्वयः ॥ २८ ॥ ॐ ॥

---

१ अत्र बहुषु पुस्तकेषु "शब्देषु" इत्येव पाठ उपलभ्यते, तथापि स न युक्तः, चक्षुरादिक्रमेणैव पूर्वमिन्द्रियाणामुक्तेः 'रूपादिषु' इति पाठस्यैव युक्तत्वादिति बोध्यम् ।

बुद्धीन्द्रियाणां सम्मुग्धवस्तुमात्रदर्शनमालोचनमुक्तम् । 'वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां'=कर्मेन्द्रियाणाम्, कण्ठताल्वादिस्थानमिन्द्रियं वाक्, तस्या वृत्तिः वचनम् । स्पष्टमन्यत् ॥२८॥

अन्तःकरणत्रयस्य वृत्तिमाह—

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥

"स्वालक्षण्यम्" इति ।

---

## अथेन्द्रियाणां वृत्तेर्निरूपणम् ।

आदिमपञ्चानामिति व्याचष्टे—बुद्धीन्द्रियाणामिति । ज्ञानेन्द्रियाणामित्यर्थः । आलोचनशब्दं व्याचष्टे—सम्मुग्धेति । सामान्यवस्तुमात्रज्ञानमित्यर्थः । तत्कथमवसेयमिति जिज्ञासायामाह—उक्तमिति । "अस्ति ह्यालोचनं ज्ञानम्—" इत्यादिना पूर्वं निरूपितमित्यर्थः ॥ अन्तिमपञ्चानामिति व्याचष्टे—कर्मेन्द्रियाणामिति । अत्र "वृत्तयः" इत्येवं विपरिणामं कृत्वा योजना कार्या ॥

अन्येन्द्रियाणाम् अधिष्ठानस्य नयनगोलकादेर्हस्तादेर्वा, स्पष्टत्वात् तत्कथनम् उपेक्ष्य वागिन्द्रियाधिष्ठानं तावदाह—कण्ठेति । कण्ठताल्वादीनि स्थानानि यस्य इन्द्रियस्य तत् कण्ठताल्वादिस्थानम् इन्द्रियं वाक् । आदिपदात् "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ "इत्युक्तेषु वर्णस्थानेषु कण्ठतालिवतरस्थानपरिग्रहः ॥ तस्या इति । वाच इत्यर्थः । वृत्तिः=व्यापारः, वचनम्=शब्दतोऽर्थप्रतिपादनं वचनम्, भाषणमित्यर्थः ॥

एवं रीत्या अन्यदपि व्याख्येयमित्याह—स्पष्टमन्यदिति । तथा च—आदानम्=ग्रहणम्, हस्तयोर्वृत्तिः । विहरणम्=गमनम्, उत्तरदेशसंयोगजनकक्रियेति यावत्, पादयोर्वृत्तिः । उत्सर्गः=मलत्यागः, पायोर्वृत्तिः । आनन्दः=मूत्रत्यागो रमणं च उपस्थस्य[1] वृत्तिरिति ज्ञेयम् ॥ २८ ॥

अवसरसङ्गत्याऽन्तःकरणस्य वृत्तिमाह—अन्तःकरणत्रयस्येति । महदहङ्कारमनोरूपस्येत्यर्थः ॥

स्वालक्षण्यमिति । त्रयस्य=अन्तःकरणत्रयस्य, बुद्ध्यहङ्कारमनसामित्यर्थः, स्वालक्षण्यम्=स्वकीयानि स्वकीयानि लक्षणान्येव, [ स्वलक्षणान्येव स्वालक्षण्यम्, स्वार्थे ष्यञ् ] वृत्तिः=व्यापारः क्रियेति यावत् । अध्यवसायो बुद्धेर्लक्षणमस्ति, इति स एव तस्या वृत्तिरस्ति, अभिमानोऽहङ्कारस्य लक्षणमस्ति, स एव तस्य व्यापारः, एवं संकल्पो मनसो लक्षणमस्ति, इति संकल्प एव मनसो

---

१ यद्यपि आनन्दो बुद्धिगतत्वात् उपस्थव्यापारो न भवितुमर्हति, तथापि आनन्दपदेन आनन्दहेतुस्त्रीपुंलिङ्गस्पर्शविशेष एवोक्तवृत्तिफलमिति ज्ञेयम् ।

"स्वालक्षण्यं वृत्तिस्त्रयस्य"=स्वम्=असाधारणं लक्षणं येषां तानि स्वलक्षणानि–महदहङ्कारमनांसि, तेषां भावः स्वालक्षण्यं, तच्च स्वानि स्वानि लक्षणान्येव, तद् यथा–महतोऽध्यवसायः, अहङ्कारस्याभिमानः, सङ्कल्पो मनसः वृत्तिः=व्यापारः।

वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह–"सैषा भवत्यसामान्या"=असाधारणी। "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च"=सामान्या चासौ करणवृत्तिश्चेति, त्रयाणामपि करणानां

---

वृत्तिरिति सरलार्थः। सा एषा=स्वालक्षण्यरूपा वृत्तिः, असामान्या=असाधारणी, तत्तत्करणमात्रसंबन्धिनी भिन्नभिन्नेति यावत्। प्राणाद्याः पञ्च वायवः सामान्यकरणवृत्तिः=सामान्या चासौ करणवृत्तिश्चेति सामान्यकरणवृत्तिः=अन्तःकरणत्रयस्य साधारणी वृत्तिरित्यर्थः॥ २९॥ ॐ॥

## अथाऽन्तःकरणत्रयस्य द्विविधवृत्तिनिरूपणम्।

आर्यां व्याचष्टे—स्वमिति। स्वम्=स्वकीयम्, स्वमात्रगामीत्यर्थः। तदेवाह—असाधारणमिति। लक्षणम्=धर्मः। पूर्वोक्तम् अध्यवसायादिरूपमित्यर्थः। तच्च=स्वालक्षण्यं च, स्वानि लक्षणान्येव=स्वकीयानि स्वकीयानि लक्षणान्येवेत्यर्थः। स्वलक्षणवत्त्वस्य स्वलक्षणरूपत्वादिति भावः। तथा च—येन येन असाधारणधर्मेण यल्लक्षितं तस्य तल्लक्षणमेव व्यापाररूपा वृत्तिरिति तात्पर्यम्। तदेवाह—तद् यथेति। महतः=बुद्धितत्त्वस्य। अध्यवसाय इति। "अध्यवसायो बुद्धिः" इति बुद्धिलक्षणोक्तेरिति भावः। "अध्यवसायो महतो वृत्तिः, अभिमानश्चाहङ्कारस्य वृत्तिः" इत्येवं "वृत्तिः" इत्यस्य सर्वत्र संबन्धः। अभिमान इति। "अभिमानोऽहङ्कारः" इत्यहङ्कारलक्षणोक्तेरिति भावः। संकल्प इति। "मनः संकल्पकमिन्द्रियं च" इत्यनेन संकल्पकत्वेन मनोलक्षणाभिधानादिति भावः॥

वृत्तिद्वैविध्यमिति। साधारणमन्तःकरणवृत्तित्वेन, असाधारणमध्यवसायाभिमानसंकल्पादिना ताभ्यामित्यर्थः। साधारणत्वेन असाधारणत्वेन च वृत्तेर्द्वैविध्यमाहेत्यर्थः। वृत्तिर्द्विविधा साधारणी असाधारणी चेत्याहेति यावत्। सैषा=स्वालक्षण्यरूपा वृत्तिः। असामान्येति व्याचष्टे—असाधारणीति। तत्तत्करणसंबन्धिनी इत्यर्थः॥ सामान्यामाह—सामान्येति। व्याचष्टे—सामान्या चासाविति। तथा च प्राणादिरूपा वृत्तिरन्तःकरणत्रयस्येति साधारणीति भावः। करणवृत्तिश्चेतीति। इति सामान्यकरणवृत्तिरित्यर्थः।

---

१ ननु "शोकमोहौ मनसः क्षुत्पिपासे प्राणस्य" इति स्मृत्यन्तरात् प्राणो नामान्तरस्तस्य कुत्र प्रवेशस्तत्राह—सामान्यकरणवृत्तिरिति।

पञ्च वायवो जीवनं वृत्तिः, तद्भावे भावात् तदभावे चाभावात् ।

तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः, अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः, समानो हृन्नाभिसर्वसन्धिवृत्तिः, उदानो हृत्कण्ठतालुमूर्धभ्रूमध्यवृत्तिः, व्यानस्त्वग्वृत्तिः, इति पञ्च वायवः ॥ २९ ॥

---

केषामसौ सामान्या वृत्तिः प्राणादिरूपा ? तत्राह—त्रयाणामपीति । करणानाम्=अन्तःकरणानां महदहङ्कारमनसाम् । वायवः[1]=वायुतुल्यसंचारवत्त्वेन वायुवद् आभासमानाः, प्राणादयः पञ्च, त्रयाणामपि करणानां सामान्या वृत्तिः, सा चैषा जीवनमित्युच्यते, इत्यन्वयः ।

यथा पञ्जरचालनरूपो व्यापारः संहतानां ( मिलितानाम् )कपोतानां साधारणो व्यापारः, तथा शरीरधारणरूपो यो जीवनाख्यः प्राणनादिव्यापारः, स मिलितानाम् अन्तःकरणानां साधारणो व्यापारः, इति समस्तार्थः । यथा अनेके पक्षिणः संभूय [ मिलित्वा ] व्यापारिणो भूत्वा एकं पञ्जरं चालयन्ति तथा संभूय व्यापारवन्ति अनेकानि अन्तःकरणानि एकं शरीरं धारयन्तीति भावः ॥

जीवनवृत्तेः अन्तःकरणधर्मत्वे अन्वयव्यतिरेकौ दर्शयति—तद्भावे भावादिति । अन्तःकरणसद्भावे जीवच्छरीरे प्राणनादिव्यापारसद्भावदर्शनात्, अन्तःकरणासत्त्वे च पाषाणे प्राणनादिव्यापारादर्शनादित्यर्थः ।

जीवनवृत्तेः स्थानभेदेन पञ्चविधत्वमाह—तत्रेति । तेषु प्राणादिषु मध्ये इत्यर्थः । कृकाटिका=घाटा, ग्रीवायामुन्नतभागः । यौवनोद्भेदसमये गले उपलभ्यमाना "घंटी" इति प्रसिद्धा । कृकम्=कण्ठम्, अटति=व्याप्नोति, इत्यर्थे "कर्मण्यण्" इत्यणि "टिड्ढा—" इति ङीपि, स्वार्थे के "केऽणः" इति ह्रस्वे "अजाद्यतः—" इति टापि "प्रत्ययस्थात्—" इतीत्त्वे च "कृकाटिका" इति साधुः ॥ 'व्यानः सर्वशरीरगः' इति तु न संभवति, तस्य सर्वशरीरगतत्वे स्थानभेदेन तस्यैव संज्ञान्तरापत्तेरिति बोध्यम् ॥ तत्र न केवलं स्थानभेदादेव जीवनवृत्तेः पञ्चविधत्वम्, किंतु व्यापार[2]भेदादपि जीवनस्य पञ्चविधत्वं बोध्यम् । तथाहि—"प्राणनात्=अन्नाशनादिना शरीरधारणात् प्राणः, मलमूत्रादेः अपनयनात्=अधोनयनात्, अपानः, समम्=अनुरूपं नाडीषु रसानां नयनात् समानः, रसादीनाम् ऊर्ध्वनयनात् उदानः, बलवत्कर्महेतुत्वाच्च व्यानः[3]" इति ॥ २९ ॥

---

१ प्राणादिरूपाः पञ्च वायुवत्संचारात् वायवो न तु प्रसिद्धवायव इति व्यक्तोऽर्थः ।
२ व्यापारः=क्रिया । ३ अत्रेदं पण्डितैर्द्देश्यम्—प्रकृतेस्तावन्महत्तत्त्वमुपजायते । तस्य च द्वे शक्ती ज्ञानं क्रिया च । तदंशत्वादन्तःकरणस्य बुद्धेरपि द्वे शक्ती ज्ञानं क्रियां

चतुर्विधकरणस्यासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह—

## अथ वृत्तीनां यौगपद्यायौगपद्यनिरूपणम् ।

चतुर्विधकरणस्येति । बाह्यकरणसहितान्तःकरणत्रयस्येत्यर्थः । इन्द्रियसहितं मनः, केवलं मनः अहङ्कारः, बुद्धिः, इत्येवं करणचतुष्टयस्येति यावत् । असाधारणीषु वृत्तिषु=संकल्पाभिमानाध्यवसायादिरूपव्यापारेषु, क्रमाक्रमौ= क्रमः=पौर्वापर्यम्, अक्रमः=यौगपद्यम्, सप्रकारौ=पौर्वापर्यप्रकारेण यौगपद्यप्रकारेण च सहेत्यर्थः ॥ ॐ ॥

पूर्वं खलु बाह्येन्द्रियैश्चक्षुरादिभिः "इदं किंचिदस्ति" इति सामान्यज्ञानं जायते, मनसा "अयं घटः, इदं वस्त्रम्" इत्येवं विशेषज्ञानं भवति, अहङ्कारेण "अनेन वस्तुना संबन्धं कर्तुं शक्नोमि, अर्थात् एतद् वस्तु उत्थापयितुं शक्नोमि, स्प्रष्टुं प्रभवामि, ग्रहीतुं शक्नोमि" इत्येवम् अभिमानो जायते, बुद्ध्या च

---

च । तदेतज् ज्ञानशक्त्या यथा बुद्धिर्मनश्चित्तमित्याख्यायते तथा क्रियाशक्त्या मुख्यः प्राण इति समाख्यायते । ज्ञानव्यापाराविष्टं किलान्तःकरणं मनो बुद्धिरिति व्यवह्रियते क्रियाव्यापाराविष्टं च मुख्यः प्राण इति व्यपदिश्यते । व्यापारश्च व्यापारिणः सकाशात् कयाचिद् व्यपेक्षया भिन्नोऽपि वस्तुतो न भिद्यते । अत एव क्रियाशक्तिप्रधानस्यान्तःकरणस्य व्यापारविशेषो मुख्यः प्राण इति दर्शनकृतो मन्यन्ते । यत्तु छान्दोग्योपनिषदि—"न वै वाचो न चक्षुंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति" [ छा० ५।१।१५ ] इति मनसोऽपि वाक् चक्षुरादिवत् प्राणं प्रति गुणभावः समाम्नायते, तज् ज्ञानशक्त्यपेक्षया क्रियाशक्तेः प्राधान्यमवलम्ब्य समाम्नायत इति द्रष्टव्यम् । सोऽयं मुख्यः प्राणो जीवनं नाम प्रयत्नविशेषः शरीरोपगृहीतवायुक्रियाभेदहेतुतया वायुवत् संचरणशीलत्वाच्च वायुरित्यपि संकीर्त्यते । यथोक्तमत्रैव—"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" इति । अत्र सामान्यकरणवृत्तिः=समस्तकरणव्यापार इति प्रौढिवादाभिप्रायम् । अन्तःकरणव्यापार इति तत्त्वम् । ज्ञानशक्तिप्रधानं खल्वन्तःकरणं यथा कार्यभेदाद् मनोबुद्धिश्चित्तमहङ्कार इति चतुर्धा विभज्यते, तथा क्रियाशक्तिप्रधानमन्तःकरणं कार्यभेदाद् हृदयादिस्थानभेदाच्च प्राणोऽपानः समान उदानो व्यान इति पञ्चधा प्रविभज्यते । तत्र प्राणनक्रियाहेतुरानासिकाग्रादा च हृदयादवस्थितः प्राणः, मूत्रपुरीषगर्भादीनामपनयनहेतुरा नाभेरा च पादतलादवस्थितोऽपानः, अशितपीतपरिणामभेदस्य रसस्य तत्र तत्र शरीरस्थानेषु सम्यङ् नयनहेतुरा हृदयादा च नाभेरवस्थितः समानः, ऊर्ध्वनयनहेतुरानासिकाग्रादा च शिरसोऽवस्थित उदानः, शरीरशोथहेतुः सर्वशरीरव्यापी व्यान इति विवेकः । अत्र प्राग्वृत्तिरुच्छ्वासादिकर्मा प्राणः, अवाग्वृत्तिर्निःश्वासादिकर्माऽपानः, तदुभयसन्धौ वर्तमानो वीर्यवत्कर्महेतुर्व्यानः, ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुरुदानः, समं सर्वेष्वङ्गेषु योऽन्नरसं नयति स समान इति शङ्कराचार्याणां मतम् । कूर्मादिप्रभेदाश्चाप्राधान्यान्नाभिधीयन्त इति नास्ति नामोनं किञ्चिदिति ॥ ॐ ॥

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः॥ ३०॥

"युगपच्चतुष्टयस्य" इति।

"दृष्टे" यथा–यदा सन्तमसाऽन्धकारे विद्युत्सम्पातमात्राद् व्याघ्रमभिमुखमतिसन्निहितं पश्यति, तदा खल्वस्यालोचनसङ्कल्पाभिमानाध्यवसाया 'युगपद्' एव प्रादुर्भवन्ति, यतस्तत उत्प्लुत्य तत्स्थानादेकपदेऽपसरति।

---

"मयैतत्कर्तव्यम्" इत्येवम् अध्यवसायज्ञानं जायते, तदेवं "ज्ञानस्य चतस्रः अवस्था भवन्ति" इत्युक्तम्। परं तेषां ज्ञानानां क्रमाक्रमविषये न कश्चित् निर्णयः कृतः, तदर्थमेवेयं कारिकास्ति—युगपदिति। दृष्टे=प्रत्यक्षस्थले, चतुष्टयस्य[1]=चक्षुरादिबहिरिन्द्रियान्यतमसहितस्य, तस्य=अन्तःकरणत्रयस्य, युगपत्=अक्रमेण, क्रमशः=क्रमेण च, वृत्तिः=व्यापारः, निर्दिष्टा=साङ्ख्याचार्यैरभिहिता। सामान्याश्रवणात् "वृत्तिः" इत्येकवचनम्। प्रत्यक्षस्थले बहिरिन्द्रियान्यतमसहकारमन्तरेण केवलान्तःकरणत्रयस्य वृत्तेरसंभवात् "चतुष्टयस्य" इत्युक्तम्। अदृष्टे=अप्रत्यक्षे अनुमानादिस्थले, त्रयस्य=अन्तःकरणत्रितयमात्रस्य, तथा=तद्वत् युगपत् क्रमशश्चेत्यर्थः, तत्पूर्विका=प्रत्यक्षपूर्विका, अनुमानादीनां प्रत्यक्षमूलकत्वादिति भावः, वृत्तिर्भवति। अनुमित्यादिविषये बहिरिन्द्रियसहकारानपेक्षणात् "त्रयस्य" इत्युक्तम्, इति व्यक्तोऽर्थः॥ ३०॥ ❀॥

दृष्टे=चक्षुरादिगोचरे पदार्थे तु, चतुष्टयस्य=करणस्य, वृत्तिः, कदाचित् युगपत्=अक्रमेण जायते, कदाचिच्च क्रमशो जायते, इत्येवं क्रमाक्रमवती वृत्तिः "क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः" (सां० २।३२) इति सूत्रेण कपिलाचार्यैः, निर्दिष्टा=उक्ता" इत्यर्थं मनसि निधाय यौगपद्योदाहरणं तावदाह—दृष्टे यथेति। सन्तमसान्धकारे=सर्वतो व्यापिनिविडान्धकारे, विद्युत्=सौदामिनी, तस्याः संपातमात्रात्,—अभिमुखम्=सम्मुखम्, अतिसन्निहितम्=अतिनिकटवर्तिनम्, अस्य—व्याघ्रस्य, आलोचनेति। आलोचनम्=चक्षुरिन्द्रियेण वस्तुसामान्यत्वेन ग्रहणम्, चक्षुरिन्द्रियवृत्तिरियम्। संकल्पः="अयं तावद् व्याघ्र एव नान्यः" इति विवेचनम्, मनोवृत्तिरियम्। अभिमानः="मदभिमुख एवायं वर्तते जिघत्सुः" इति निश्चयः, स चाहङ्कारवृत्तिः। अध्यवसायः="झटिति परिहरणीयोऽयम्" इति प्रतिपत्तिः, सा च बुद्धेर्वृत्तिः। एताः चतस्रो वृत्तयो युगपदेव=एककालावच्छेदेनैव भवन्तीत्यर्थः। यतस्ततः=यत्र कुत्रापि, अपसरतीत्यन्वयः। उत्प्लुत्य=मण्डूकवद् ऊर्ध्वप्लवनम् अनुष्ठाय, एकपदे=तत् क्षणमेव, झटित्येवेति यावत्। अपसरति=पलायते, स्थानान्तरमेति॥ ❀॥

अत्र वृत्तीनां यौगपद्यप्रतिपादनेन बाह्येन्द्रियवृत्तीनामपि युगपद्भवनस्य

---

१ बाह्येन्द्रियमनोऽहङ्कारमहत्तत्त्वस्येति व्यक्तोऽर्थः।

"क्रमशश्च"—यदा मन्दालोके प्रथमं तावद् वस्तुमात्रं सम्मुग्धमालोचयति, अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोयमिति निश्चिनोति, अथ च 'मां प्रत्येति' इत्यभिमन्यते, अथाध्यवस्यति—'अपसरामीतः स्थानाद्' इति।

---

अर्थात्कथितत्वात् दीर्घशष्कुलीभक्षणादावक्रमेण जायमानं ज्ञानपञ्चकमपि अत्रोदाहरणतयोन्नेयम्॥ ॐ॥

ननु मनस एकत्वादणुरूपत्वाच्च युगपद् विभिन्नस्थानानाम् इन्द्रियाणाम् अधिष्ठातृत्वं न संभवतीति दीर्घशष्कुलीभक्षणादौ युगपत् पञ्चज्ञानोत्पत्तिर्न युक्तियुक्ता, तस्मात् यथा आशु[2] संचारात् संभ्रमतः अलातस्य[3] विद्यमानोऽपि क्रमो न लक्ष्यते, तथा ज्ञानानामपि आशु संचारात् विद्यमानोऽपि क्रमो न गृह्यते इति दीर्घशष्कुलीभक्षणादौ युगपत्प्रत्ययो भ्रम एवेति मन्तव्यम्, तथा चाक्षपादसूत्रम्—"अलातचक्रदर्शनवत् तदुपलब्धिराशु संचारात्" इति (न्या० ३।२।६१)। इति चेत्। न, सांख्यमते मनसो मध्यमपरिमाणवत्त्वेन युगपदनेकेन्द्रियाधिष्ठातृत्वसंभवात्, अननुभूयमानक्रमकल्पनाया अप्रामाणिकत्वात्। तथाच "ज्ञानायौगपद्यादेकं मनः" (३।२।५६)॥ यथोक्तहेतुत्वाच्चाणु" (न्या० ३।२।५९) इति सूत्राभ्यामुदितो[4] न्यायसिद्धान्तो न सांख्यसम्मत इति तत्त्वम्[5]॥ ॐ॥

दृष्टे यौगपद्योदाहरणमुक्त्वा तत्रैव[6] क्रमोदाहरणं वक्तुमाह—क्रमशश्चेति। अत्रापि "दृष्टे यथा" इतिवत् "क्रमशश्च यथा" इत्येवं यथा शब्दमध्याहृत्य व्याख्येयम्। मन्दालोके=अल्पालोके, सम्मुग्धम्=इन्द्रियजन्यम्, सामान्यम्, आलोचयति=पश्यति, 'किंचिदिदम्' इति जानाति इति यावत्। अयं नेत्ररूपबाह्येन्द्रियव्यापारः। अथ=आलोचनानन्तरम् प्रणिहितमनाः=न्यस्तमनाः, कर्णान्तम्=उपकर्णं[7] यथा स्यात्तथा, आकृष्टम्=आतानितम्, कर्णान्ताकृष्टम्, सशरशिञ्जितम्=आरोपितबाणम् अव्यक्तशब्दवच्च, इति सशरशिञ्जितम्, कर्णान्ताकृष्टं च सशरशिञ्जितं च मण्डलीकृतम्=मण्डलाकारेण नमितं च कोदण्डम्=धनुर्येन स कर्णान्ताकृष्टसशरशिञ्जितमण्डलीकृतकोदण्डः, प्रचण्डतरः=अतिभीषणः, पाटच्चरः=चौरः, निश्चिनोति=मनसा कल्पयति, स्थाण्वादिभ्यो विवेचयतीति यावत्। इदं विशेषज्ञानं मनसो व्यापारः। अहङ्कारवृत्तिमाह—अथ चेति। एति=आगच्छति। बुद्धिवृत्तिं दर्शयति—अथेति। अध्यवस्यति=

---

१ मनोधिष्ठितानामेव बाह्येन्द्रियाणां स्वस्वव्यापारे क्षमत्वमिति पूर्वमुक्तेरिति भावः। २ आशु–शीघ्रम्। ३ अलातम्—अर्धदग्धकाष्ठम्। ४ उदितः—कथितः। ५ "यद्यपि वृत्तीनाम् एकदा असंभवात् तत्रापि क्रम एव, तथापि उत्पलशतपत्रव्यतिभेदवत् अवभासनात् अक्रम इत्युक्तम्" इत्यनिरुद्धः। ६ दृष्टे एव। ७ कर्णनिकटे।

परोक्षे त्वन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह—"अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः"। अन्तःकरणत्रयस्य युगपत्क्रमेण च वृत्तिर्दृष्टपूर्विकेति, अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्तन्ते नान्यथा, यथा दृष्टे "तथाऽदृष्टेऽपि" इति योजना ॥ ३० ॥

स्यादेतत्—चतुर्णां त्रयाणां वा तावत् तन्मात्राधीनाः, तेषां

---

निश्चिनोति, अध्यवस्यतीत्यस्यार्थमाह—अपसरामि=इति। पलाये, स्थानान्तरं गच्छामि, इतः=अस्मात् ॥

परोक्षे=अनुमानादिस्थले, बाह्येन्द्रियवर्जम्=बाह्येन्द्रियाणि वर्जयित्वा इत्यर्थः। "द्वितीयायां च" इति णमुल्। अप्रत्यक्षज्ञाने बाह्येन्द्रियवृत्तेरसंभवादिति भावः। अन्तःकरणत्रयस्य=मनोऽहङ्कारबुद्धिरूपस्य, वृत्तिः=व्यापारः, इत्यन्वयः।

अदृष्टे=इत्यस्य अनुमेये वह्न्यादौ, शाब्दे च स्वर्गापूर्वदेवतादौ, स्मरणीये च पित्रादौ, इत्यर्थः। "तत्पूर्विका" इत्यस्यार्थमाह—दृष्टपूर्विकेति। प्रत्यक्षपूर्विकेत्यर्थः। दृष्टपूर्वकत्वं साधयति—अनुमानेत्यादिना। दर्शनपूर्वा इति। अनुमेये व्याप्तिज्ञानाय प्रत्यक्षापेक्षा, शाब्दे च शक्तिग्रहाय प्रत्यक्षापेक्षा, स्मरणीये संस्काराय अनुभवापेक्षा, इत्यनुमानादयो दर्शनपूर्वाः।

"तथाप्यदृष्टे" इत्यत्रत्योऽपि शब्दो भिन्नक्रम इत्याशयेनाह—तथाऽदृष्टेऽपीति ॥ तत्र अनुमितौ वृत्तियौगपद्यम्—उन्नतपयोधरदर्शनात् नारीत्वानुमितौ, आगमे—"गौरयम्" इत्याप्तोपदेशजन्यज्ञाने, स्मृतौ च अभ्यस्तमन्त्रोच्चारणवेलायाम् उत्तरोत्तरवर्णस्मरणे प्रतिपत्तव्यम्। क्रमशस्तु—धूमवत्त्वेन पर्वतस्य वह्निमत्त्वानुमितौ। तत्र हि—प्रथमं धूमवत्त्वेन संकल्पनम्, अनन्तरं—"वह्निमत्त्वं विना धूमवत्त्वं मया कदापि नोपलब्धम्" इत्यभिमन्यते, ततो वह्निमत्त्वेन अध्यवसायः। आगमेऽपि—"पितृपितामहप्रपितामहेभ्यो दद्यात्" इत्यादि वाक्ये पित्रादिपदार्थावगमः, अनन्तरं—"निरुपपदपित्रादिपदम् उपस्थितपुरुषीयपित्रादिपरमेव बहुधाऽवगतवानस्मि" इत्यभिमन्यते, ततो "दाता स्वपित्रादिभ्य एव दद्यात्" इत्यध्यवस्यति। स्मृतौ तु—त्रिश्चतुर्वा श्रुतस्य श्लोकस्य प्रथमचरणस्मरणे जातेऽपि द्वितीयादिचरणस्य झटित्यनुपस्थितौ विलम्बेन संस्काराद् बोधे सति मनसा तस्य विवेचनम्, अनन्तरम्—"एतदेव मया श्रुतं गुरुमुखात्" इत्यभिमत्य "एतदेव" इत्यध्यवसायेन समग्रमुच्चारयति इति द्रष्टव्यम् ॥ एवमन्यत्राप्यूह्यम् ॥ ३० ॥

स्यादेतदिति। एतत्=युगपत् क्रमशश्च वृत्तिमत्त्वम्। चतुर्णाम्=बाह्येन्द्रियसहकृतमनआदिकानाम्। प्रत्यक्षयोग्यविषयाभिप्रायमेतत्। त्रयाणामिति। परोक्षविषयाभिप्रायमेतदिति द्रष्टव्यम्। तन्मात्राधीनाः=इतरनिमित्तनैरपेक्ष्येण बुद्ध्यादिकरणमात्राधीनाः। न केवलं बुद्ध्याद्यधीना भवितुमर्हन्तीति यावत्। तत्र अन्योऽपि हेतुरस्तीति भावः। केवलबुद्ध्यादेरेव वृत्तिहेतुत्वे दोषमाह—

सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गाद्, आकस्मिकत्वे तु वृत्ति-सङ्करप्रसङ्गो नियमहेतोरभावाद् इत्यत आह—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्॥ ३१॥

"स्वां स्वाम्" इति।

करणानि इति शेषः। यथा हि वहवः पुरुषाः शाक्तीक-याष्टीक-धानुष्ककार्पाणिकाः कृतसङ्केताः परावस्कन्दनाय प्रवृत्ताः,

---

तेषामिति। करणानामित्यर्थः। सदातनत्वेनेति। अनादिसंसारप्रवाहेषु तेषां जीववृत्तित्वादिति भावः। सदोत्पादेति। कारणसत्त्वे कार्यावश्यम्भावादिति भावः। ननु "विषयसन्निधानादेर्वृत्त्युत्पादे निमित्तत्वसत्त्वान्नवृत्तीनां सदोत्पादप्रसङ्गः" इति चेत्, एवमपि नियामकस्य कस्यचिदभावाद् आकस्मिकत्वप्रसङ्गो दुर्वारः, भवत्वाकस्मिकत्वं कात्र क्षतिरिति चेत्, तत्राह—आकस्मिकत्वे त्विति। निर्हेतुकवृत्त्युद्भवेऽङ्गीकृते त्वित्यर्थः। करणवृत्त्युद्भवस्य अनैमित्तिकत्वे त्विति यावत्। वृत्तिसङ्करप्रसङ्गः=एकेन्द्रियवृत्तिसमये अपरेन्द्रियवृत्तिप्रसङ्गः "कदाचिच्चक्षुरेव शब्दग्रहणाय व्याप्रियेत, कदाचिच्च श्रोत्रमेवरूपे व्याप्रियेत, कदाचिच्च मन एव निश्चिनुयात्, कदाचिच्च बुद्धिरेव सङ्कल्पयेत्" इत्येवं वृत्तीनां परस्परव्यतिकरप्रसङ्गः स्यादित्यर्थः। तत्र हेतुमाह—नियमहेतोरिति। "इयं त्वदीयावृत्तिरेतद्गोचरा" इति नियमप्रदर्शकस्य कस्यचिद् हेतोरभावादित्यर्थः॥

## अथ करणानां परप्रेर्यत्वाभावनिरूपणम्।

यद्यपीन्द्रियप्रवृत्तेः क्रमाक्रमौ बुद्धौ, परमेषां कः प्रेरक इति नावगतं तदर्थमेवेयं कारिकास्ति—स्वां स्वामिति। करणानि परस्पराकूतहेतुकाम्=परस्परस्य आकूतम्=स्वकार्यकरणोन्मुखत्वम्, हेतुर्यस्याः तादृशीम्, स्वां स्वाम्=स्वकीयां स्वकीयाम्, वृत्तिम्=क्रियाम्, प्रतिपद्यन्ते=प्राप्नुवन्ति। एषां प्रवृत्तौ पुरुषार्थ एव हेतुः=कारणम्, केनचित्=अधिष्ठात्रा, करणम्=बुद्ध्यादि, न कार्यते=व्यापार्यते॥ यथा अनेके चौराः परस्परं संकेतं कृत्वा चौर्यस्थाने परस्परस्य संकेतेन स्वाः स्वाः क्रियाः यथा क्रमतः कुर्वन्ति, तथैव सर्वेन्द्रियाण्यपि स्वस्वक्रियासु प्रवृत्तानि भवन्ति, एषां प्रवृत्तौ पुरुषस्यादृष्टमेव कारणमस्ति। सुतराम् इन्द्रियाणि केनचित् चेतनेन अधिष्ठात्रा परिचालितानि न भवन्तीति व्यक्तोऽर्थः॥३१॥

कारिकागतेन "करणम्" इत्यनेन निर्वाहो न भवितुमर्हति, "प्रतिपद्यन्ते" इति बहुवचनान्तक्रियापदेन सह योगायोगादित्याशयवान् आह—करणानीति शेष इति। शेषः=अध्याहरणीयः।

"करणानि परस्पराभिप्रायनिमित्ताम् आत्मीयाम् आत्मीयामेव वृत्तिं प्राप्नु-

---

१ निर्हेतुकवृत्त्युद्भवप्रसङ्ग इत्यर्थः।

तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्तते, प्रवर्तमानस्तु शाक्तीकः शक्तिमेवादत्ते न तु यष्ट्यादिकम्, एवं याष्टीकोऽपि यष्टिमेव न शक्त्यादिकं, तथान्यतमस्य करणस्याऽऽकूतात्=स्वकार्यकरणाभिमुख्याद् अन्यतमं करणं प्रवर्तते, तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्करप्रसङ्ग इत्युक्तं–"स्वां स्वां प्रतिपद्यन्त" इति।

स्यादेतद्–याष्टिकादयश्चेतनत्वात्परस्पराकूतमवगम्य प्रवर्तन्त इति युक्तं, करणानि त्वचेतनानि, तस्मान्नैवं प्रवर्तितुमुत्सहन्ते, तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यम्, इत्यत आह–"पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्" इति।

---

वन्ति न परकीयाम्" इत्यर्थं दृष्टान्तेन स्पष्टयति—यथाहीत्यादिना। शक्तिः प्रहरणमस्यासौ शाक्तीकः, "शक्तियष्ट्योरीकक्" इतीकक्। "सेल" इति भाषाप्रसिद्धोऽस्त्रविशेषः शक्तिः। एवं यष्टिः प्रहरणमस्येति याष्टीकः। पूर्ववदीकक्। धनुः प्रहरणमस्येति धानुष्कः, "तदस्य" इत्यधिकृत्य "प्रहरणम्" इति ठक्, "इसुसुक्तान्तात्कः" इति ठस्य कः। तत्र धनुः=शरासनम्। कृपाणः=खड्गः प्रहरणमस्येति कार्पाणिकः पूर्ववत् ठक्, "ठस्येकः" इति ठस्य इक्। शक्तिपाणयः यष्टिपाणयः धनुष्पाणयः कृपाणपाणयश्चेति यावत्। कृतसङ्केताः—सर्वैरस्माभिः परोऽयं शत्रुर्घातनीय इति "आक्रमणसमये त्वयेदं प्रहरणं ग्रहणीयम्" इत्येवं पूर्वमेव कृतनियमाः सन्तः। परावस्कन्दनाय=रिपोराक्रमणाय, शत्रुदमनायेति यावत्। तत्र=तेषु मध्ये, अन्यतमस्य=एकस्य कस्यचित्, आकूतम्=अभिप्रायम्, अवगम्य=बुद्ध्वा, अन्यतमः=एकः कश्चित्। आदत्ते=गृह्णाति। यष्ट्यादिकमिति। "आदत्ते" इत्यनुषङ्गः। एवं "यष्टिमेव" इत्यादावपि॥

दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—तथाऽन्यतमस्येति॥ करणस्य=बुद्ध्यादेः।

आकूतम् अभिप्रायः; तच्च करणग्रामे बाधितम्, आकूतस्येच्छाविशेषत्वेन चेतनधर्मत्वात् करणग्रामस्य चाचेतनत्वादतः आकूतपदेन कार्यकरणोन्मुखत्वं लक्ष्यते, इत्याशयेन व्याचष्टे—स्वकार्यकरणाभिमुख्यादिति॥

फलितमाह—तत्प्रवृत्तेश्चेति। एवं तत्प्रवृत्तेः,–करणप्रवृत्तेः हेतुमत्त्वात्=परस्पराकूतनिमित्तकत्वान्न वृत्तिसङ्करप्रसङ्गावसर इत्यर्थः। इति=एतदेव॥

तस्मान्नैवमिति। तस्मात्=अचेतनत्वात्, एवम्=शाक्तीकादिवत्, प्रवर्ति-

---

१ 'नदीकूलं पिपतिषति' इत्यत्र यथा नदीकूलस्याचेतनत्वेनेच्छाया बाधात् तया (इच्छया) पतनोन्मुखत्वं लक्ष्यते, तथाऽत्रापि कार्यकरणोन्मुखत्वं लक्षणीयमिति भावः।

भोगापवर्गलक्षणः पुरुषार्थ एवानागतावस्थः प्रवर्तयति करणानि, कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा ।

एतच्च "वत्सविवृद्धिनिमित्तम्" इत्यत्रोपपादयिष्यते ॥ ३१ ॥

"न केनचित्कार्यते करणम्" इत्युक्तं, तत्र करणं विभजते—

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधाऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

"करणं त्रयोदशविधम्" इति ।

---

तुम्, न उत्सहन्ते=उद्युक्ता भवन्ति । तेन=स्वयं प्रवर्तितुमक्षमत्वेन, "एषाम्=करणानाम्, अधिष्ठात्रा=प्रयोजकेन केनचिद् भवितव्यम्" इत्यन्वयः । कीदृशेन अधिष्ठात्रा भवितव्यम्? इत्यत्राह—करणानां स्वरूपेति । "ईदृक् करणानां स्वरूपम्, एवंविधं चैषां सामर्थ्यम्, अत्र चैषाम् उपयोगः" इत्येवं सप्रकारकरणज्ञात्रा इत्यर्थः । यद्यप्यस्त्येव पुरुषोऽधिष्ठाताऽभिज्ञः, तथापि असङ्गत्वान्निर्विकारत्वान्न तस्य प्रेरकत्वसंभवः । ईश्वरस्तु नास्त्येवेत्याशयः ॥

भोगेति । तत्र अपवृज्यते=कैवलीभवत्यनेनेति अपवर्गः=सत्त्वपुरुषान्यताज्ञानम् । ननु भोगापवर्गयोः करणव्यापारसाध्यत्वेन पूर्ववर्तित्वासंभवात् कथं हेतुत्वमित्यत आह—अनागतावस्थ इति । निष्पादनीयत्वेन स्थितः इत्यर्थः । सत्कार्यवादसिद्धान्ते भाविनावपि भोगापवर्गावव्यपदेश्यतया गुणेषु तिष्ठतः, इति प्रकृतिगतावनागतौ, तावेव प्रवर्तकौ, तावदेव हि गुणाः प्रवर्तन्ते न यावद् भोगं वाऽपवर्गं वा जनयन्ति, निवर्तितभोगापवर्गास्तु समाप्ताधिकाराः सन्तो निवर्तन्ते इति हि सांख्यसिद्धान्तः ॥

कृतम्=अलम्, अत्र=करणानां प्रेरणे, पुरुषार्थातिरिक्तेन केनचित् कर्त्रा, किमपि साध्यं नास्तीति व्यर्थमेव तदाश्रयणमित्यर्थः ॥

एतच्चेति । "न केनचित्=ईश्वरेण जीवेन वा, कार्यते=प्रवर्त्यते करणम्" इत्येतदित्यर्थः । वत्सविवृद्धीति । "सप्तपञ्चाशत्तम (५७) कारिकायाम्" इति शेषः ॥ ३१ ॥

## अथ करणानां विभागनिरूपणम् ।

सङ्गतिमाह—न केनचिदिति ।

करणभेदानाह—करणं त्रयोदशविधमिति । करणं त्रयोदशविधम्=त्रयोदशप्रकारम्, एकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति भेदात् । एषां व्यापारानाह—तत्=त्रयोदशविधं करणम्, आहरणधारणप्रकाशकरम् । तत्र आहरणं वागादिकर्मेन्द्रियाणां कर्म, धारणं बुद्ध्यहङ्कारमनसां व्यापारः, स्ववृत्तिप्राणादि-

---

१ उत्पत्तेः प्राक् सूक्ष्मावस्थया कारणे सन्नेव भावोऽनागतावस्थावान् अव्यपदेश्य इत्याख्यायते' इत्युक्तमेव प्राक् ।

इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं, कारकविशेषः=करणं, न च व्यापारावेशं विना कारकत्वम्, इति व्यापारावेशमाह—"तदाहरणधारणप्रकाशकरं" यथायथं तत्र कर्मेन्द्रियाणि वागादीनि आहरन्ति=यथास्वमुपाददते—स्वव्यापारेण व्याप्नुवन्तीति यावद्, बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या—प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि च प्रकाशयन्ति।

---

पञ्चद्वारा देहधारणात्, प्रकाशो ज्ञानेन्द्रियाणां व्यापारः। एषां विषयानाह—तस्य=त्रयोदशविधस्य करणस्य, आहार्यं धार्यं प्रकाश्यं च दशधा=दशप्रकारम्, कार्यम्=विषयोऽस्ति॥ तत्र कर्मेन्द्रियाणां दशविध आहार्यविषयो यथा—

(१) दिव्यं वचनम्, (२) अदिव्यं वचनम्, (३) दिव्यमादानम्, (४) अदिव्यमादानम्, (५) दिव्यो विहारः, (६) अदिव्यो विहारः, (७) दिव्य उत्सर्गः, (८) अदिव्य उत्सर्गः, (९) दिव्य आनन्दः, (१०) अदिव्य आनन्दः॥ इति।

बुद्ध्यहङ्कारमनसां अन्तःकरणानां दशविधो धार्यविषयो यथा—(१) दिव्यः प्राणः, (२) अदिव्यः प्राणः, (३) दिव्यः अपानः, (४) अदिव्यः अपानः, (५) दिव्यः समानः, (६) अदिव्यः समानः, (७) दिव्य उदानः, (८) अदिव्य उदानः, (९) दिव्यो व्यानः, (१०) अदिव्यो व्यानः॥ इति।

ज्ञानेन्द्रियाणां दशविधः प्रकाश्यविषयो यथा—(१) दिव्यः शब्दः, (२) अदिव्यः शब्दः, (३) दिव्यः स्पर्शः, (४) अदिव्यः स्पर्शः, (५) दिव्यं रूपम्, (६) अदिव्यं रूपम्, (७) दिव्यो रसः, (८) अदिव्यो रसः, (९) दिव्यो गन्धः, (१०) अदिव्यो गन्धः॥ इति॥ ३२॥ ❀॥

## अथ करणव्यापारनिरूपणम्।

करणानां त्रयोदशत्वं प्रतिपादयति—इन्द्रियाण्येकादशेत्यादि॥ "तदाहरण" इत्यादिकारिकांशमवतारयितुमाह—कारकविशेष इति। कर्त्रादिषट्कारकमध्ये साधकतमरूप इत्यर्थः। तथा च पाणिनिसूत्रम्—"साधकतमं करणम्" इति। व्यापारावेशम्=व्यापारयोगम्, क्रियासम्बन्धमिति यावत्, व्यापाराश्रयस्यैव कारकत्वादित्यर्थः।

सर्वेषां करणानां त्रिविधक्रियाकरत्वासंभवादाह—यथायथमिति। यथास्वमीयमित्यर्थः। "यथास्वे यथायथम्" इति पाणिनिसूत्रेण साधु। तथाच न प्रत्येकमेवाहरणादिकरं किंतु यस्य यत्क्रियाकरणयोग्यत्वं तत् करणं तत्क्रियाकरमिति कर्मेन्द्रियाणि आहरन्ति, मनआदीनि धारयन्ति, चक्षुरादीनि प्रकाशयन्तीति सिध्यति। तदेवाह—तत्रेत्यादिना॥ तेषु करणेषु मध्य इत्यर्थः।

"आहरणकरत्वं कर्मेन्द्रियाणाम्" इति प्रतिपाद्य "धारणकरत्वं बुद्ध्यादी-

आहरणधारणादिक्रियाणां सकर्मतया किं कर्म, कतिविधं च, इत्यत आह—"कार्यं च तस्य" इति। तस्य=त्रयोदशविधस्य करणस्य "दशधाऽऽहार्यं धार्यं प्रकाश्यं च" कार्यम्। आहार्यं=व्याप्यं, कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः, ते च दिव्यादिव्यतया दशेत्याहार्यं दशधा। एवं धार्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं, शब्दादीनां पञ्चानां समूहः पृथिवीति, ते च पञ्च

नाम्"—इत्याह—बुद्ध्यहङ्कारेति। धारयन्तीति। शरीरमिति शेषः। "प्रकाशकत्वं बुद्धीन्द्रियाणाम्" इत्याह—बुद्धीति॥ सकर्मकतया=किमाहरन्ति किं धारयन्ति किं प्रकाशयन्त्याकाङ्क्षोदयादिति भावः। तस्येति। तस्य=त्रयोदशविधस्य करणस्य, कार्यम् आहरणादि क्रियाव्याप्यं यद् आहार्यं धार्यं प्रकाश्यं च, तत् प्रत्येकं दशधा=दशप्रकारमित्यर्थः। कार्यम्=कर्म, । व्याप्यम्=वागादिव्यापारेण आप्यं कर्म इत्यर्थः। तदेवाह—कर्मेन्द्रियाणामिति। व्याप्याः=क्रियया विशेषेण प्राप्या इत्यर्थः। ते च=वचनादयः। दिव्याः=अलौकिकाः, अदिव्याः=लौकिकाः, तत्र देवादीनां भोग्या दिव्याः, अस्मदादीनां चादिव्याः॥

"आहार्यं वचनादि" इति प्रतिपाद्य धार्यं किमित्यत्राह—एवमिति॥ अन्तःकरणत्रयस्य=बुद्ध्यहङ्कारमनोरूपस्य। शरीरमिति। प्राणाद्यभावे शरीरनाशावश्यंभावादिति भावः। धार्यस्य शरीरस्य दशविधत्वं साधयितुमाह—तच्चेति। शरीरं चेत्यर्थः। पार्थिवादीति। आदिपदात् जलीयतैजसवायवीयशरीरपरिग्रहः। तत्र पार्थिवं मनुष्याणाम्, वरुणवह्निवायुलोकनिवासिनां च यथाक्रमं जलीयादिशरीरमिति बोध्यम्। पाञ्चभौतिकमिति। पञ्चभूतानां विकारभूतमित्यर्थः। ननु पञ्चभूतविकारत्वे कथं पार्थिवादित्वव्यपदेश इति चेत्। तत्तत्प्राधान्येनेति गृहाण। तत्र मानुषे शरीरे पृथिव्याः प्राधान्यम्, इतरेषां च भूतानाम् उपष्टम्भकत्वमात्रम्, एवम् इतरत्रापि तत्तत्प्राधान्यं ज्ञेयम्। तत्र पृथिवीसत्त्वादेव शब्दादिसत्त्वात् शब्दादीनां च लौकिकालौकिकत्वेन द्वैविध्यात् धार्यस्य शरीरस्यापि दशविधत्वमित्युपपादयितुमाह—शब्दादीनामिति। शब्दादितन्मात्राणामित्यर्थः। इति=हेतोः, ते च=शब्दादयः, इति=हेतोः, धार्यम्=शरीरमपीत्यर्थः। "शब्दादि पञ्चतन्मात्राणां समूहरूपः परिणामः स्थूला पृथिवी" इति "पञ्चभ्यः पञ्चभूतानि" इत्यनेन पूर्वमभिहितम्, ते च शब्दादयः पञ्च, दिव्यादिव्यतया दश, इति तद्वती

१ तथा चाक्षचरणसूत्रम्—पार्थिवं तद्विशेषगुणोपलब्धेः (न्या० ३।१।२८) व्याससूत्रमपि—वैशेष्यात्तु तद्वादस्तद्वादः (वे० २।४।२२) इति। यत्र यस्य प्राधान्यं तत्र तन्नाम्नैव नामव्यवहार इति तत्त्वम्। "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायादिति। २ शरीरे।

दिव्यादिव्यतया दशेति धार्यमपि दशधा, एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥ ३२ ॥

त्रयोदशविधे करणेऽवान्तरविभागं करोति—

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

"अन्तःकरणम्" इति।

"अन्तःकरणं त्रिविधं"=बुद्धिरहङ्कारो मन इति, शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यं करणं "त्रयस्य"=अन्तःकरणस्य "विषयाख्यं"=विषयमाख्याति=विषयसंकल्पाभिमानाध्यवसायेषु कर्तव्येषु द्वारी भवति। तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्मेन्द्रियाणि तु यथास्वं व्यापारेण।

---

पृथिव्यपि दशधा,-तत्परिणामत्वाच्च शरीरमपि दशधेति सरलार्थः। तत्र सूक्ष्माः शब्दादयो दिव्याः, स्थूलाश्चादिव्याः। तथा च एकस्य शरीरस्य धारणात् लौकिकाः स्थूलशब्दादयः पञ्च धार्यन्ते, अलौकिकाः तन्मात्रलक्षणा अपि पञ्च धार्यन्ते, इति दशानां धार्यत्वात् "धार्यं दशधा" इत्युपपद्यत इति भावः ॥

प्रकाश्यदशविधत्वं व्युत्पादयति—एवं बुद्धीति। ज्ञानेन्द्रियाणामित्यर्थः। व्याप्याः=आलोचनीया विषयाः, इत्यर्थः। ते च=शब्दादयः ॥ ३२ ॥

## अथ बाह्यान्तःकरणयोर्वैधर्म्यनिरूपणम्।

अवान्तरविभागमिति। करणत्वव्याप्यधर्मान्तरप्रतिपादनमित्यर्थः ॥

अन्तःकरणमिति ॥ अन्तःकरणं त्रिविधम्=मनोबुद्ध्यहङ्कारभेदात्, बाह्यं करणं दशधा=दशविधम्, पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियभेदात्। तत्र बाह्यं करणं त्रयस्य=अन्तःकरणत्रयस्य, विषयाख्यम्=व्यापारजनकम्। विशेषान्तरमाह—बाह्यं करणं साम्प्रतकालम्=वर्तमानमात्रविषयकम्, आभ्यन्तरं करणम्=मनोबुद्ध्यहङ्काराख्यम्, त्रिकालम्=अतीतानागतवर्तमानविषयकम्, इत्यन्वयः ॥ ३३ ॥ ॐ ॥

अन्तःकरणपदं निर्वक्ति—शरीरेति। बाह्यमिति। बहिर्वस्तुमात्रविषयकमित्यर्थः। एतेन मनस इन्द्रियत्वेऽपि न प्राप्तिः, बहिर्वस्तुमात्रविषयकत्वाभावादिति ध्येयम्। विषयमाख्यातीति। तत्तद्विषयगोचरं व्यापारमुत्पादयतीत्यर्थः। तदेवाह—विषयसङ्कल्पेति। मन आदिभिर्विषयगोचरेषु सङ्कल्पा-

बाह्यान्तरकरणयोर्विशेषान्तरमाह—"साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" इति । साम्प्रतकालं=वर्तमानकालं बाह्यम्=इन्द्रियं, वर्तमानसमीपमनागतप्रतीतमपि वर्तमानम् । अतो वागपि वर्तमानकालविषया भवति ।

---

दिषु कर्तव्येषु बाह्यमिन्द्रियं, द्वारीभवति=उपायीभवतीत्यर्थः । बाह्येन्द्रियतन्त्रं हि अन्तःकरणं बाह्ये प्रवर्तेत इति बाह्यगोचरवृत्त्युद्भवे अन्तःकरणस्य बाह्येन्द्रियं सहायि भवतीति भावः । तत्रेति । दशबाह्यकरणेषु मध्ये, इत्यर्थः । आलोचनेन=विषयस्य सम्मुग्धभावेन ग्रहणेन, आलोचनाख्यव्यापारद्वारा इति यावत्, "सहायी भवन्ति" इति शेषः । व्यापारेण=चेष्टया, अत्रापि "द्वारीभवन्ति" इति शेषः । तथाच—प्रथमं वागिन्द्रियेण पदजातमुपस्थाप्यते, तदनन्तरम् "एतत्पदमत्र प्रयोगार्हम्" इति मनः सङ्कल्पयति, पश्चात् "एतत्पदजातं मया प्रयोक्तुं शक्यम्" इत्यहङ्कारेण अभिमन्यते, तदुत्तरम्—"अनेन पदजातेन अपरं बोधयामि" इत्यध्यवसायेन वचनं प्रवर्तते, एवमन्यत्र ॥ तथाच कर्मेन्द्रियव्यापारेण जनिते पदार्थे बुद्धीन्द्रियप्रवृत्त्याऽन्तःकरणप्रवृत्तिरिति भावः ॥ साम्प्रतेति । सम्प्रति भवः साम्प्रतः=करणसम्प्रयोगावस्थायां वर्तमान इति यावत्, तथाभूतः कालः=विषयसत्ताकालो यस्य तादृशं बाह्यं करणमित्यर्थः । तथाच—बाह्यकरणस्य यो विषयः तस्य यः कालः तस्य तत्करणसम्प्रयोगदशायां वर्तमानत्वम् आवश्यकमिति भावः । तद् व्याचष्टे—वर्तमानकालमिति । वर्तमानः कालो विषयो यस्य तत् वर्तमानकालम्=लौकिको बाह्यकरणाश्रितोऽध्यवसायो वर्तमानविषय इत्यर्थः । योगिनः प्रत्यक्षम् अतीताऽनागतावपि विषयीकरोतीति लौकिक इत्युक्तमिति बोध्यम् ॥

ननु "अयम्[2] आगमम्, एष गमिष्यामि" इत्यतीताऽनागतयोरपि आगमनगमनयोः वाचो व्याप्रियमाणत्वात् कथं "वर्तमानकालं बाह्यं करणम्" इति नियम इत्याशङ्कायामाह—वर्तमानसमीपमनागतमतीतमपि वर्तमानमिति । अत एव कदाचित् "कदाऽऽगतोऽसि" इति पृष्टः सन् अतीते वर्तमानं प्रयुङ्क्ते—"अयम् आगच्छामि[3]" इति, एवं "कदा गमिष्यसि" इति पृष्टः सन् अनागते वर्तमानं प्रयुङ्क्ते—एष[4] गच्छामि" इति । तथा चाह भगवान् दाक्षीनन्दनः—"वर्तमानसामीप्ये वर्तमानवद्वा" इति ॥ ॐ ॥

अन्येतु—"ननु शब्दस्य एतन्मते नित्यत्वानङ्गीकारात् कथं वागात्मककरणसम्प्रयोगसमकालवर्तित्वं संभवति, कण्ठताल्वाद्यभिघातजन्यत्वेन वागात्मककरणसम्प्रयोगोत्तरवर्तित्वावश्यकत्वादित्यत आह—वर्तमानेति । वर्तमानम्=

---

१ अन्यथाऽन्धादेरपि रूपादिदर्शनापत्तेरिति भावः । २ अयम् एष इति च "इदानीम्" इत्यर्थकम् ॥ ३ आगच्छन्तमेव मां विद्धि । ४ गच्छन्तमेव मां विद्धि ।

"त्रिकालमाभ्यन्तरं करणं" तद् यथा—नदीपूरभेदादभूद् वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद् भविष्यति वृष्टिरिति, तदनुकूलाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति ।

वर्तमानत्वेन व्यवहार्यम् । अतः=वर्तमानसमीपयोः अतीतानागतयोरपि वर्तमानत्वव्यवहारात्, वागपि=विषयपूर्ववर्त्तिन्यपि वाक्, वर्तमानविषया=स्वसमानकालीनविषयत्वेन व्यवहार्या," इत्येवं व्याचक्षते ॥ ३३ ॥

त्रिकालमिति । त्रयः=करणसम्प्रयोगदशावर्तमानतत्पूर्ववृत्ततदुत्तरवर्तिनः, कालाः=विषयसत्ताकाला यस्य तदित्यर्थः । तथाच—अन्तःकरणस्य यो विषयः, तस्य यः कालः, तस्य तत्करणसम्प्रयोगदशायां वर्तमानत्वं तत्पूर्ववृत्तत्वं तदुत्तरवर्तित्वं वा स्यादिति भावः ॥

अन्तःकरणव्यापारस्य त्रैकाल्यविषयत्वं स्पष्टयितुमादौ तावदतीतविषयमनुमानमाह—नदीपूरभेदादिति । नदीपूरः=नद्याः पूर्णत्वम्, रोधा[1]दपि नद्याः पूर्णत्वस्य कदाचित् संभवात् व्यभिचारः स्यात्, तद्वारणाय "भेद" पदम् । नदीपूरविशेषादित्यर्थः । वैशेष्यं च—बहुतरफेनफलपल्लवकाष्ठादिमद् रजस्वलजलवत्त्वसहकृतत्वम् । तथाच एतादृङ्नद्याः पूर्णत्वं स्रोतसः शीघ्रत्वं च दृष्ट्वाऽनुमीयते—"नद्या उपरिदेशे वृष्टो देवः" इत्यत्र फलि[2]तम् ॥ वर्तमानविषयमनुमानमाह—अस्ति[3] धूमादिति । नगरनिकुञ्जे गिरिगह्वरे, लताऽऽच्छादिते पर्वतप्रदेशे इत्यर्थः । नगः=पर्वतः । "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः ॥

अनागतविषयमनुमानमाह—असत्युपघातक इति । वर्षमूलकारणे महाभूतसंक्षोभे सति भौमेन ऊष्मणा क्वथ्यमानाः खलु पिपीलिकाः स्वानि अण्डानि भूमिष्ठानि उपरिष्टान्नयन्ति । तथाच—पिपीलिकाण्डसञ्चरणात् वर्षकारणम्[4] अनुमाय पुनर्वर्षकारणाद् भाविकार्यं वर्षणमनुमीयते इत्यर्थोऽत्र ज्ञेयः । नीडो[5]पघातादपि कदाचित् पिपीलिकाण्डसञ्चारो भवतीति तन्नि[6]रासायाह—असत्युपघातक इति । उपघातके=प्रतिबन्धके, पिपीलिकागृहोपमर्दकारणे असतीत्यर्थः । तथाच अवित्रस्तानां भूयसीनां भूयस्सु स्थानेषु साण्डानां पिपीलिकानां सञ्चरणमेव अनागतवर्षणम् अनुमापयति न सञ्चारमात्रमिति न मिथ्यानुमानमित्यत्र फलितम् ॥ वृष्टिरितीति । यतः एवं त्रैका-

१ स्पन्दमानानाम् अपां द्रवत्वप्रतिबन्धहेतु सेत्वादिकं रोध इति । २ प्रयोगस्तु—"उपरिवृष्टिमद्देशसंबन्धिनी नदी, स्रोतःशीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात्, पूर्णवृष्टिमन्नदीवत्" इति पूर्वमुक्त एव । ३ यत्र यत्र धूमस्तत्र तत्र वह्निरितिव्याप्तेरिति भावः । ४ वर्षकारणं=भूतसंक्षोभम् । ५ नीडं=गृहम् । ६ तादृक्संचरणेन मिथ्यानुमानभवननिराकरणाय ।

कालश्च वैशेषिकाभिमत एको नाऽनागतादिव्यवहारभेदं प्रवर्तयितुमर्हतीति, तस्मादयं यैरुपाधिभेदैरनागतादिव्यवहारभेदं

ल्यविषयम् अनुमानम्, अतः तदनुरूपाः=तत्तदतीताद्यनुगुणा एव मन आदीनां संकल्पादयो भवन्तीत्यर्थः ॥

"त्रिकालमाभ्यन्तरं करणम्" इति श्रुत्वा भवेत् कस्यचित् "पञ्चविंशतितत्त्वातिरिक्तं कालतत्त्वमपि कापिलैरास्थीयते" इति भ्रान्तिः, तां पराणुदति—कालश्चेति ॥ "अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि" इत्येवं वैशेषिकैरभिहितश्च कालो न अनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति,—यतः स एक इति । तन्मते कालो नित्योऽखण्डदण्डायमान एक एवेत्यङ्गीकारादिति भावः । नित्यस्यैकस्यानागतादिव्यवहारासंभवादिति तत्त्वम् ॥ ननु कालस्य स्वरूपत ऐक्येऽपि अतीतसूर्यक्रियासंबन्धेन उपाधिना अतीतत्वम्, वर्तमानसूर्यक्रियासंबन्धेन वर्तमानत्वम्, अनागतसूर्यक्रियासंबन्धेन च भविष्यत्वम्, इत्येवम् उपाधिभेदात् अनागतादिभेदव्यवहार उपपत्स्यते । यदाहुः प्रशस्तदेवाचार्याः—"एकत्वेऽपि सर्वकार्याणाम् आरम्भक्रियाभिनिर्वृत्तिस्थितिनिरोधोपाधिभेदात्, मणिवत् पाचकादिवद् वा नानात्वोपचारः" इति । न्यायवार्तिककाराश्चाहुः—"यथा एकस्मिन् पुरुषे अनेकसंबन्धभेदानुविधायिनि अभिन्ने "पिता पुत्रो भ्राता" इति प्रत्यया भवन्ति, तद्वद् एकः कालः कार्यकारणविशेषापेक्षः परापरादिप्रत्ययहेतुः" इति । तत्राह—तस्मादयमिति ॥ इति=यतः, एकः कालः अनागतादिव्यवहारभेदं प्रवर्तयितुं नार्हति, तस्मात् यैः उपाधिभेदैः=कार्यारम्भकार्यस्थितिकार्यनिरोधादिरूपैः, बहुतराल्प-

१ इतिकारो ज्ञानप्रकारपरः प्रत्येकमभिसंबध्यते । तथाच—अपरमिति प्रत्ययः, युगपदिति प्रत्ययः, चिरमिति प्रत्ययः, क्षिप्रमिति प्रत्यय इति काललिङ्गानीत्यर्थः । "अपरस्मिन्नपरम्" इत्यनेन "परस्मिन् परम्" इत्यपि दृष्टव्यम्, इत्युपस्कारकृत् । २ आरम्भः=उपक्रमः, क्रियाया—अभिनिर्वृत्तिः=परिसमाप्तिः, स्थितिः=स्वरूपावस्थानं, निरोधः=नाशः, एषामुपाधीनां भेदात् नानात्वव्यपदेशः । यथा एकोऽपि स्फटिकादिमणिः तत्तन्नीलाद्युपाधिभेदात्—अनेकरूपः, यथाच एकोऽपि पुरुषः तत्तत्क्रियाभेदात् पाचकः पाठक इति, तद्वत्" इति प्रशस्तपादभाष्यार्थः । तत्र उत्पत्तौ—कालेन व्यपदेशाः—मध्याह्ने उत्पन्नोऽपराह्णे उत्पन्न इति । स्थितौ च—मध्याह्नं यावत् स्थितोऽपराह्णं चेति । विनाशे तु—प्रातर्विनष्टो वर्षान्ते विनष्ट इत्यादीति विवेकः । यथा मणेः स्वरूपापरित्यागेनैव उपाधिभेदादुपचर्यते नानात्वं—पीतो रक्त इति, यथा वा स्वरूपापरित्यागेनैव पुरुषस्य नानाक्रियावशात् पाचकादिभेदः, तद्वदिहापि भिन्नक्रियोपाधिवशात् वर्तमानादिभेद इति सरलार्थः । ३ कार्यस्य=परापरादेः प्रत्ययस्य, यः कारणविशेषः=बहुतराल्पतरातीततपनपरिस्पन्दावच्छिन्नकालपिण्डसंयोगः, तदपेक्षः—काल एकोऽपि परापरादिप्रत्ययहेतुः इति न्यायवार्तिकार्थः ॥

प्रतिपद्यते सन्तु त एवोपाधयोऽनागतादिव्यहारहेतवः, कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्याः । तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति ॥ ३३ ॥

साम्प्रतविषयाणां बाह्येन्द्रियाणां विषयं विवेचयति—

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥३४॥**

---

तरदिनकरोदयास्तमयक्रियादिरूपैर्वाउपाधिभिः, अयम्=कालः, अनागतादिव्यवहारं परापरादिव्यवहारं च भेदेन प्रतिपद्यते=प्राप्नोति, ते एव उपाधयः अनागतादिव्यवहारहेतवो भवन्तु, अलम् अन्तर्गडुना=निरर्थकेन, कालेनेत्यर्थः ।

अयं भावः—देशतः सन्निकृष्टयोः युवस्थविरयोः एकस्मिन् शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयबहुत्वान्तरितजन्मनि स्थविरे शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयाल्पत्वान्तरितजन्मानं युवानम् अवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते, ताम् अपेक्ष्य बहुतरसवितुदयास्तमयविशिष्टेन कालप्रदेशेन योगात् स्थविरे परत्वस्य उत्पत्तिः, इत्यादिरूपा हि वैशेषिकादिकल्पना । तत्र मार्तण्डोदयास्तमयक्रियाप्रचयाल्पत्वबहुत्वविशिष्टादेव पिण्डात् परत्वापरत्वे भविष्यतः, कृतमत्र द्रव्यान्तरेण कालेनेति साङ्ख्याः । एवं "यत्प्रागभावेन यः कालः अवच्छिद्यते, स तस्य अनागतकालः, स्थितेन च वस्तुना यः कालः अवच्छिद्यते स वर्तमानकालः, यत्प्रध्वंसेन यः कालः अवच्छिद्यते स तस्य अतीतकालः," इति हि तार्किककल्पना । तत्र आरम्भस्थितिनिरोधक्रियाभिरेव अनागतादिव्यवहारसिद्धेरलं भेदकालकल्पनयेति साङ्ख्याः । तथाच साङ्ख्यमते सूर्यादिक्रियैव कालः, तस्याश्च क्लृप्तपदार्थत्वान्न पदार्थान्तरकल्पनेति भावः ॥ उपसंहरति—तस्मादिति ॥ ३३ ॥

साम्प्रतविषयाणामिति । प्रकृतविषयाणामित्यर्थः ॥ वर्तमानकालविषयाणामिति यावत् ।

बुद्धीन्द्रियाणीति । तेषाम्=बाह्यानां देशानामिन्द्रियाणां मध्ये, पञ्च बुद्धीन्द्रियाणि=पञ्चज्ञानेन्द्रियाणि, विशेषाविशेषविषयाणि=स्थूलसूक्ष्मशब्दादिविषयवन्ति । एवं कर्मेन्द्रियेषु वाक्=वाणी, शब्दविषया=शब्दरूपविषयवती, शेषाणि=पाणिपादपायूपस्थानि, पञ्चविषयाणि=रूपादिपञ्चविषयवन्ति, इत्यन्वयः ॥ ३४ ॥ ॐ ॥

"बुद्धीन्द्रियाणि" इति। "बुद्धीन्द्रियाणि तेषां"=दशानामिन्द्रियाणां मध्ये "पञ्च विशेषाविशेषविषयाणि"='विशेषाः=स्थूलाः शब्दादयः=शान्तघोरमूढरूपाः पृथिव्यादिरूपाः, अविशेषाः=तन्मात्राणि=सूक्ष्माः शब्दादयः, मात्रशब्देन भूतभावमपाकरोति, विशेषाश्चाविशेषाश्च=विशेषाविशेषाः, त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि।

---

## अथ बुद्धीन्द्रियाणां विशेषाविशेषविषयकत्वविचारः।

"तेषाम्" इति निर्धारणे षष्ठीति व्याचष्टे—दशानामिन्द्रियाणां मध्य इति। शान्तो विपञ्च्यादिध्वनिः। घोरो मेघादेः। मूढो व्याघ्रादेरिति बोध्यम्। विशेषशब्दः कार्यवाचीति व्याचष्टे—स्थूलाः शब्दादय इति। विशेषत्वमेव दर्शयन्नाह—शान्तेति। पृथिव्यादिरूपा इति। शब्दादितन्मात्राणां परिणामेन स्थूलाः शब्दादयो जायन्ते, त एव पृथिव्यादिभूतरूपाः, शान्तघोरमूढत्वादिति भावः। धर्मधर्मिणोरभेदाभिप्रायेणोक्तं—पृथिव्यादिरूपा इति॥ अविशेषपदं व्याचष्टे—तन्मात्राणीति। तन्मात्रशब्दं व्याचष्टे—सूक्ष्माः शब्दादय इति। तन्मात्रशब्दे मात्रपदेन व्यावर्तनीयमाह—मात्रग्रहणेनेति। भूतभावम्=महाभूतरूपेण परिणाममित्यर्थः। अत एव वक्ष्यति—"तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः" इति॥ तथोक्तानि=विशेषाविशेषविषयाणीत्यर्थः॥

ननु विशेषाणामेव इन्द्रियग्राह्यत्वं सर्वलोकसिद्धम्, अविशेषपदवाच्यानां तन्मात्राणां कथम् इन्द्रियग्राह्यत्वसंभव इत्यत्राह—तत्रेति। तयोर्विशेषाविशेषयोर्मध्य इत्यर्थः। ऊर्ध्वस्रोतसाम्=ऊर्ध्वमेव न कदाचिदधः, स्रोतः=रेतः स्रोतो येषां ते जनकसनकसनन्दनादयस्तथा भीष्मादयो नैष्ठिका ब्रह्मचारिणः, सन्न्यासिनश्च ऊर्ध्वस्रोतसः तेषामित्यर्थः। उपकुर्वाणकब्रह्मचारिणां तन्न संभवति, तेषां विवाहार्थं प्रवृत्तेः। एवं च ऊर्ध्वरेतस्त्वम्=अष्टविधमैथुनेच्छारहितत्वम्। अष्टविधमैथुनानि च—"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्य-

---

१ कस्याश्चित् स्त्रिया रूपलावण्यस्य हावभावकटाक्षाणां शृङ्गारस्य वा स्मरणम्, कुत्सितपुरुषाणां कुत्सितक्रियाणां स्मरणम्, स्वानुष्ठितपौर्वकालिकमैथुनादिक्रियास्मरणम् कामोद्दीपकस्रक्चन्दनादिपदार्थानां स्मरणम्, पूर्वदृष्टसुन्दराश्लीलचित्राणां स्मरणं चेत्यादीनि मानसिकमैथुनेऽन्तर्भवन्ति। कामोद्दीपकाश्लीलशृङ्गाररसीयगानानां श्रवणम्, शृङ्गाररसप्रधानगद्यपद्यात्मकवर्णनाकर्णनम्, स्त्रीणां रूपलावण्यहावभावकटाक्षादिवर्णनश्रवणम्, कामोद्दीपकवार्तानां श्रवणं चेत्येवमादीनि श्रवणरूपमैथुनेऽन्तर्भवन्ति। अश्लीलवार्तानां कथनम्, शृङ्गाररसवर्णनम्, स्त्रीणां रूपलावण्ययौवनशृङ्गाराणां प्रशं-

भाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥" इत्युक्तानि । तत्र "यो ब्रह्मचर्येण यावज्जीवं गुरुकुले वसति स नैष्ठिकब्रह्मचारीति प्रोच्यते । यश्च ब्रह्मचर्यं समाप्य गृहस्थाश्रमं प्रविशति स उपकुर्वाण इति भाष्यते । न च भीष्मस्योर्ध्वरेतस्त्वोक्तिर्न युक्ता, । यतो महाभारते—"महता राजयोगेन परिवारेण संवृतः । स्तूयमानो महातेजा भीष्यस्याग्नीननुव्रजन् ॥ प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो! ॥" इति वाक्ये तस्मिन् अग्निहोत्रित्वसूचकदक्षिणाग्निगार्हपत्याहवनीयाख्याग्नित्रयसंबन्धस्य "अग्नीन्" इति बहुवचनेन प्रतीतेः । तेषां च अपत्नीकेन संबन्धासंभवाच्च । पत्न्याश्च विवाहसंस्कारेण संपाद्यमानता । स च संस्कारः—"अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥" इति, "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥" इति च मनुना, "अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् । अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥" इति याज्ञवल्क्येन "कान्ताम्=वोढुर्मनोनयनानन्दकारिणीम्" इति तद्व्याख्या-

---

साकरणम्, तासां हावभावकटाक्षादीनां वर्णनम्, विलासिताया वर्णनम्, कामोद्दीपकाश्लीलगानम्, तादृशसाहित्यानां पठनं पाठनं श्रवणं श्रावणं चेत्येवं प्रभृतीनि कीर्तनरूपे मैथुनेऽन्तर्भवन्ति । स्त्रीणां रूपलावण्यशृङ्गाराङ्गरचनानां दर्शनम्, सुन्दरस्त्रीणां प्रतिकृति-(चित्र) दर्शनम्, शृङ्गाररसप्रधाननाटका (सिनेमा) दीनां दर्शनम्, कामोद्दीपकवस्तूनां दर्शनम्, दर्पणादौ स्वीयरूपशृङ्गारादिदर्शनं चेत्यादीनि प्रेक्षणे मैथुनेऽन्तर्भवन्ति । स्त्रीभिः सह हसनं, नर्तनं, गानं, आमोदप्रमोदार्थं बहिः सञ्चरणं, जलविहरणं, अश्लीलचेष्टाकरणं चेत्यादीनि केलिरूपे मैथुनेऽन्तर्भवन्ति । स्त्रीभिः सह एकान्तस्थाने अश्लीलवार्ताकरणम्, तासां रूपलावण्ययौवनशृङ्गाराणां प्रशंसाकरणम्, हास्यं चैवमादीनि गुह्यभाषणे मैथुनेऽन्तर्भवन्ति । कामबुद्ध्या रुयादीनां स्पर्शः, चुम्बनम्, आलिङ्गनम्, कामोद्दीपककोमलपदार्थस्पर्शः, स्त्रीसङ्गश्चेत्येवमादीनि स्पर्शरूपे मैथुनेऽन्तर्भवन्ति । स्वं सुन्दरं दर्शयितुं केशप्रसाधनं वस्त्रालङ्कारधारणं, सुगन्धतैलादिव्यवहरणम् (इत्र, फुलेल, लवेंडर) पुष्पमालाधारणम्, अङ्गरागः, नेत्राञ्जनम्, उद्वर्तनम्, ओष्ठौ रक्तौ दर्शयितुं ताम्बूलभक्षणं, सौन्दर्यार्थमुपनेत्रधारणं चेत्येवमादीनि शृङ्गाररूपे मैथुनेऽन्तर्भवन्ति । तानीमानि ब्रह्मचारी, वानप्रस्थः, संन्यासी, अविवाहिता कन्या, विधवा स्त्री, च सर्वथा परिवर्जयेत् । विवाहितौ स्त्रीपुरुषावपि=ऋतुकालीनसहवाससमयातिरिक्तसमये यथा संभवं ततो निवृत्तौ स्याताम् । ब्रह्मचर्यात् सर्वार्थप्राप्तिस्तद्धानाच्च सर्वस्वविनाश इत्यन्यत्र विस्तरः । ब्रह्मप्राप्त्यर्थं वेदाध्ययनं ब्रह्मचर्यशब्दस्य यौगिकोऽर्थः । प्राचीनकाले छात्रगणा ब्रह्मप्राप्तये गुरुगृहे निवासं कृत्वा सावधानतया वीर्यं रक्षन्तो वेदाध्ययनमकार्षुः । ततः शनैः शनैः शब्दोऽयं वीर्यरक्षायां रूढितामुपागमत् । अतो वीर्यसंरक्षणमेव ब्रह्मचर्यम् । वीर्यरक्षैव जीवनं, वीर्यनाश एव च मृत्युरिति सर्वथा सर्वैरेव तद्रक्षायां कटिबद्धैरेव सर्वदा भाव्यं कल्याणेप्सुभिरिति सर्वेषामेव शास्त्राणां भुजमुत्थाप्य घोषणेत्यलंविस्तरेण ।

तत्रोर्ध्वस्रोतसां योगिनां च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयं च, अस्मदादीनां तु स्थूलशब्दविषयमेव । एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनां तु स्थूलस्पर्शविषयैव ।

---

कृता विज्ञानेश्वरेण च उक्तेः, ऊर्ध्वरेतस्त्वविरुद्ध[1] इति शङ्क्यम् । "वैयाघ्रपद्यगोत्राय साङ्कृत्यप्रवराय च । गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे ॥ अपुत्राय ददाम्येतदुदकं भीष्मवर्मणे । वसूनामवताराय शन्तनोरात्मजाय च ॥ अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे ॥" इति पाद्मे तर्पणार्घ्यदानमन्त्राभ्याम्—"अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा । ऊर्ध्वरेतसमात्मानं चकार—" इति महाभारतीयवचनेन च अस्य नैष्ठिकब्रह्मचारित्वस्य कण्ठत एव उद्घुष्यमाणत्वात् । तस्य अग्निहोत्रादिसंबन्धाद्युक्तिस्तु "ब्रह्मचारिणोऽपि अग्निहोत्रादिकं क्वचिद् भवति" इत्यनुमितश्रुतिमूला ॥ न च "त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम् । स्त्रीसहस्रैः परिवृतम्—" इति महाभारते तस्य सपत्नीकत्वमुच्यते इति परस्परविरुद्धा एवैता उक्तय इति वाच्यम्, पत्नीभिन्नस्त्रीसंबन्धोक्त्या विरोधानवतारात् । अत एव तस्यैव चतुर्थचरणं—"पश्यामीहोर्ध्वरेतसम्" इति पठ्यत इति दिक् ॥ योगिनां चेति । तद्भिन्नानाम् अष्टाङ्गयोगनिष्ठानां चेत्यर्थः । तदुक्तं ब्रह्मवैवर्ते—"स्वर्णे लोष्टे गृहेऽरण्ये सुस्निग्धे चन्दने तथा । समताभावना यस्य स योगी परिकीर्तितः ॥" इति, भगवद्गीतायामपि—"आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन! । सुखं वा यदि वा दुःखं स योगी परमो मतः ॥" इति, कौर्मेऽपि—"सर्वकर्माणि सन्न्यस्य समाधिमचलं श्रितः । य आस्ते निश्चलो योगी स सन्न्यासी न पञ्चमः ॥ इत्याद्युक्त्वा "योगी च त्रिविधो ज्ञेयो भौतिकः सांख्य एव च । तृतीयोऽत्याश्रमी प्रोक्तो योगमुत्तममास्थितः ॥ इति ॥"

एवं च चित्तस्य स्वत एव स्थूलसूक्ष्मयावदर्थसाक्षात्कारसामर्थ्ये सत्यपि विषयान्तरव्यासङ्गवासनादोषवशेन तत्प्रतिबन्धाद् वृत्त्यन्तरोदय इति स्थूलवस्तुनः साक्षात्कारे एव दूरं गते कुतो वा सूक्ष्मवस्तुनः साक्षात्कार इति, चेद्, योगेन तत्प्रतिबन्धस्य निःशेषतो विगमे स्वत एव स्थूलसूक्ष्माणां यावतां वस्तूनां साक्षात्कारो भवतीति तेषां शब्दतन्मात्रादिविषयकं स्थूलशब्दादिविषयकं च श्रोत्रादिकं भवति । अस्मदादीनां तु तद्भिन्नानां स्थूलशब्दादिविषयकमेव तद् भवति, न सूक्ष्मशब्दादिविषयकमिति भावः ॥

अस्मदादीनामिति । योगीतरमनुष्याणामित्यर्थः । "श्रोत्रम्" इत्यनुषज्यते । एवम् उत्तरत्र "त्वक्" इत्यस्यानुषङ्गो ज्ञेयः । तेषाम्=ऊर्ध्वस्रोतसां योगिनां चेत्यर्थः । स्थूलसूक्ष्मेष्विति । "समर्थाः" इति शेषः । ततश्च

---

१ "स च संस्कारः", इति प्रागुक्तस्य "ऊर्ध्वरेतस्त्वविरुद्धः" इत्यनेनान्वयः ।

एवं चक्षुरादयोऽपि तेषामस्मदादीनां च रूपादिषु सूक्ष्मस्थूलविषयेषु द्रष्टव्याः।

एवं कर्मेन्द्रियेषु मध्ये "वाग्भवति शब्दविषया"=स्थूलशब्दविषया—तद्धेतुत्वात् न तु शब्दतन्मात्रस्य हेतुः, तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात्। 'शेषाणि तु'=चत्वारि=पायूपस्थपाणिपादाख्यानि "पञ्चविषयाणि" पाण्याद्याहार्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ॥ ३४ ॥

---

तेषां चक्षुरादयः स्थूलसूक्ष्मेति द्विविधरूपादिग्रहणे समर्थाः, अस्माकं पुनः केवलं स्थूलमात्ररूपादिग्रहणे समर्था इत्यर्थः ॥

ननु वागिन्द्रियं शब्दतन्मात्रं प्रति कारणं स्यादित्यत आह—कर्मेन्द्रियेष्विति। तद्धेतुत्वात्=स्थूलशब्दमात्रजनकत्वात्। मात्रपदार्थान्तर्भावं व्यवच्छेदवाक्येन सूचयति—नत्विति। वागिन्द्रियस्य शब्दतन्मात्रहेतुत्वाभावबीजमाह—तस्येति। शब्दतन्मात्रस्येत्यर्थः। आहङ्कारिकत्वेन[१]=अहङ्कारकारणकत्वेन। वागिन्द्रियेण सहेति। वागिन्द्रियं यत्कारणकं शब्दतन्मात्रस्यापि तत्कारणकत्वादित्यर्थः। तथाच वागिन्द्रियम् अहङ्कारजन्यम्, शब्दतन्मात्रमपि अहङ्कारजन्यम्, इति नैतयोः परस्परं कार्यकारणसंभवः, लोकेऽपि एकस्मादुत्पन्नयोः कार्यकारणभावस्यादृष्टचरत्वादिति भावः। तथाच—"वागिन्द्रियं स्थूलशब्दविषयम्, स्थूलशब्दहेतुत्वात्, शब्दतन्मात्रवत्" इत्यनुमानं फलति। अत्रेदं हृदयम्—वाक् खलु योगिनां किम् अस्माकं सर्वेषामेव स्थूलशब्दमात्रविषया भवति, न तु योगिनां स्थूलसूक्ष्मशब्दविषया, अस्माकं स्थूलशब्दविषया" इति वैषम्यमत्र विद्यते, वागिन्द्रियस्य सूक्ष्मशब्दस्य चेति द्वयोरपि अहङ्कारादेवोत्पन्नत्वात्, एकस्मादुत्पन्नयोश्च परस्परं कार्यकारणभावासंभवात्,। न हि सहोत्पन्नः सहोत्पन्नस्य तुल्यस्य अनुभवं कर्तुं प्रभवति। अत एव "अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्तते सर्गः। एकादशकश्च गणस्तन्मात्रपञ्चकं चैव" इत्युक्तमिति ॥

पञ्चविषयाणीति। शब्दादिपञ्चात्मकानीत्यर्थः। पञ्च विषया येषां तानि, इति विग्रहः। पाण्याद्याहार्याणाम्=पाण्यादिग्राह्याणाम्, पाण्यादिविषयाणामिति यावत्, पञ्चशब्दाद्यात्मकत्वात्=पञ्च ये शब्दादयः तदात्मकत्वादित्यर्थः। पाण्यादिग्राह्याणां घटादीनां शब्दस्पर्शरूपरसगन्धात्मकत्वेन चत्वारि शब्दादिपञ्चविषयाणि भवन्तीति वर्तुलार्थः। हस्तादीनि चत्वारि इन्द्रियाणि यैर्घटादि-

---

१ यद्यपि तामसाहङ्कारकार्यत्वं शब्दतन्मात्रस्य सात्त्विकाहङ्कारकार्यत्वं वागिन्द्रियस्येत्युक्तं "सात्त्विक एकादशक–" इत्यादिना। तथापि आहंकारिकत्वाविशेष इत्यभिप्रायेणोक्तम्—आहंकारिकत्वेनेति।

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चिद्गुणभावं, केषाञ्चित्प्रधानभावं सहेतुकमाह—

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥**

"सान्तःकरणा" इति। "द्वारि"=प्रधानं"शेषाणि"=करणानि बाह्येन्द्रियाणि "द्वाराणि" गौणानि, "तैरुपनीतं" "सर्वं विषयं" समनोहङ्कारा "बुद्धिः" "यस्माद्" "अवगाहते"=अध्यवस्यति

---

वस्तुभिः संवन्धं कुर्वन्ति तानि सर्वाणि वस्तूनि शब्दतन्मात्रादिरूपाण्येव सन्ति, शब्दादितन्मात्रेभ्य एव सर्वेषां घटादीनामुत्पत्तेः, । ततश्च घटं गृह्णन् हस्तः पञ्चविषयो भवति, घटस्य शब्दतन्मात्रादिपञ्चात्मकत्वादिति निष्कर्षः। एवं च वाक् शब्दमात्रविषया, अन्यानि तु पञ्चविषयाणीति कर्मेन्द्रियेषु वैलक्षण्यमिति तत्त्वम् ॥ ३४ ॥

## अथ करणानां प्रधानगुणभावविचारः।

सान्तःकरणेति ॥ सान्तःकरणा=अहङ्कारमनःसहिता बुद्धिः, यस्मात् सर्वं विषयम् अवगाहते=विषयीकरोति, तस्मात् त्रिविधं करणम्=मनो बुद्ध्यहङ्काराख्यम्, द्वारि=प्रधानम्, शेषाणि=पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियेति दशबाह्यकरणानि, द्वाराणि=अप्रधानानि, इत्यन्वयः ॥ ३५ ॥ ❀ ॥

द्वारमस्यास्तीति द्वारि, "अत इनिठनौ" इति मत्वर्थीय इनिः, तद् व्याचष्टे—प्रधानमिति। मुख्यमित्यर्थः। द्वारापेक्षया द्वारवतः प्राधान्यौचित्यादिति भावः। "कानि तर्हि द्वाराणि?" इत्यपेक्षायामाह—शेषाणी[२]त्यादि। तेषां द्वारत्वे हेतुमाह—तैरित्यादि। तैः=बाह्यकरणैः, उपनीतम्=उपस्थापितम्। "सान्तःकरणा" इति पदं व्याचष्टे—समनोहङ्कारेति। एतेन कारिकायाम् अन्तःकरणपदं बुद्धेः पृथगुपादानात् गोबलीवर्दन्यायेन मनोऽहङ्कारमात्रपरमिति व्याख्यातम्। तथा च "अन्तःकरणाभ्यां सह वर्तमाना सान्तःकरणा" इत्येवं तद् विग्रहो बोध्यः। अवगाहनमत्र न विलोडनं किंतु बुद्धिकर्माध्यवसायपर्यवसायीत्याह—अवगाहते=अध्यवस्यतीति। हेतूपन्यासानन्तरं निगमयति—तस्मादिति। द्वारवती च सान्तःकर-

---

१ एवं पञ्चशब्दादिलक्षणायां भुवि पादो विहरति, पायुः पञ्चशब्दादियुतं मलमुत्सृजति, उपस्थः शब्दादिपञ्चयुतवीर्येण प्रजा उत्पादयतीति बोध्यम् ॥ २ बाह्यकरणानि खलु द्वारतुल्यानि भवन्ति, द्वारविशिष्टगृहतुल्याया बुद्धेस्तैरुपकारसाधनात्, तानि हि बुद्धिमुपकुर्वन्ति।

"तस्माद्" बाह्येन्द्रियाणि द्वाराणि, द्वारवती च सान्तःकरणा बुद्धिरिति ॥ ३५ ॥

न केवलं बाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः, अपि तु ये अप्य-हङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥

"एत"इति । यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति, विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाणि आलोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य सर्वाध्यक्षभूतायां बुद्धौ । तदिदमुक्तं—"पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इति ।

---

णाबुद्धिरिति । मनोऽहङ्कारयोरपि द्वारवत्त्वरूपं प्राधान्यं बाह्यकरणापेक्षयाऽभिमतम्, बुद्ध्यपेक्षया तु तयोरपि द्वारत्वरूपं गौणत्वमेवेत्यग्रिमषट्त्रिंशत्तमकारिकायां स्फुटीभविष्यति । ततश्च सर्वापेक्षया प्रधाना बुद्धिः, बाह्यकरणापेक्षया मनोऽहङ्कारौ प्रधानौ, बुद्ध्यपेक्षया च गौणाविति फलितम् ॥ ३५ ॥

बाह्येन्द्रियापेक्षयाऽहङ्कारमनसोः प्राधान्यम्, बुद्ध्यपेक्षया तु तयोरङ्गत्वमेवेत्युपक्षिपति—न केवलमित्यादिना । अहङ्कारमनसी इति । मनसोऽल्पाच्तरत्वेऽपि अजाद्यदन्तत्वाद् अहङ्कारशब्दस्य पूर्वनिपातात् "अहङ्कारमनसी" इति साधु । द्वारिणी=बाह्यकरणापेक्षया प्रधानभूते इत्यर्थः । "ये अपि, ते अपि" इत्युभयत्रापि "ईदूदेत्—" इति प्रगृह्यत्वात् सन्ध्यभावः ॥

एत इति ॥ गुणविशेषाः=सत्त्वादिगुणानां विकाररूपाः, एते=बाह्येन्द्रियमनोऽहङ्काराः, पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनोऽहङ्कारश्चेति द्वादशेति यावत्, परस्परविलक्षणाः=मिथो विरोधशीला अपि, प्रदीपकल्पाः=दीपकसमानाः सन्ति । अतः पुरुषस्य कृत्स्नम्=निखिलम्, अर्थम्=विषयम्, प्रकाश्य=प्रकाशितं कृत्वा, बुद्धौ=महत्तत्त्वे, प्रयच्छन्ति=अर्पयन्ति । इत्यन्वयः ॥ ❀ ॥

एते=पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनः अहङ्कारश्चेति द्वादश, सर्वे प्रदीपकल्पाः=दीपकसमानाः सन्ति, स्वस्वविषयप्रकाशकारित्वात् । तथा परस्परविलक्षणाः=सर्वे परस्परं विलक्षणाः सन्ति, भिन्नभिन्नविषयवत्त्वात् । तथा गुणविशेषाः सन्ति, सत्त्वादिगुणेभ्य उत्पन्नत्वात् । पुरुषस्य यत्किंचित् विषयजातं स्वस्मिन् भानविषयीभूतं सत् प्रतीतं भवति तत् सर्वं विषयजातम् इमानि करणानि [ द्वादशेन्द्रियाणि ] स्वस्वविषयानुसारं प्रकाशितं कृत्वा बुद्धौ स्थापयन्तीति सरलार्थः ॥ ❀ ॥

बाह्येन्द्रियमनोऽहङ्काराश्च "गुणविशेषाः"=गुणानां=सत्त्वरजस्तमसां विकाराः, ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेणैकवाक्यतां नीताः—यथा—वर्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपे—एवम् "एते गुणविशेषा" इति योजना ॥ ३६ ॥

---

प्रयोजनं चेदमस्ति—यत्, यो विषयो बाह्येन्द्रियेषु भासते, स एव विषयः अन्तरिन्द्रिये मनसि विशेषरूपेण पतति, पुनः स एव विषयः अहङ्कारे गच्छति, यस्य तस्य अभिमानो भवति, ततः स एव विषयः तद्द्वारा बुद्धौ भासते, यस्य तस्या अध्यवसायो भवति। अलम् अत ऊर्ध्वं स विषयः क्वापि न गच्छति, अतः एषु सर्वप्रधाना बुद्धिरेवास्ति। साङ्ख्यमते इन्द्रियादिसंघातस्य अध्यक्षं बुद्धितत्त्वमेवास्ति, नैयायिकमतवत् आत्मा अध्यक्षो नास्ति, । नैयायिकानां मते हि सर्वेषां पदार्थानां ज्ञानं साक्षात्संबन्धेन आत्मन्येव उत्पन्नं भवति, इन्द्रियाणि च तस्यैव साधनानि सन्ति, अतः स एव अध्यक्षो [प्रधानः]ऽस्ति, साङ्ख्यमते तु सर्वं ज्ञानं बुद्धावेव तिष्ठति आत्मनि [पुरुषे] तस्य छायामात्रं पतति, साक्षात्संबन्धस्य ज्ञानं च भ्रान्तिरूपमेवास्ति, अतः बुद्धिरेव प्रधानास्ति ॥ ३६ ॥ ॥

"पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" इत्येतद् दृष्टान्तेन स्पष्टीकरोति—यथा हीत्यादिना ॥ ग्रामाध्यक्षः=ग्रामाधिकृतः, ग्रामविशेषकरादायक इति यावत्। तत्र विप्रादिवर्णप्रायः प्राकारपरिखादिरहितो हट्टादिशून्यो बहुजनवासस्थानं ग्रामः। अक्षेषु=व्यवहारेषु, आयव्ययचिन्तासु योगक्षेम[1]प्रापणरूपव्यवहारेषु वा अधिकृतः अध्यक्ष इत्युच्यते। कौटुम्बिकेभ्यः=कुटुम्बम्=कुटुम्बवर्तनम्, पोष्यवर्गपोषणमिति यावत्, प्रयोजनं येषां तेभ्यः कृषिवृत्तिगृहस्थेभ्य इत्यर्थः। अन्ये तु कौटुम्बिकेभ्यः=गृहिभ्यः, इति व्याख्याय "तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः" इत्युक्तत्वात् पूर्वराजभिः आरण्यकाः करगोचरीकृता इति ध्वन्यते, इत्याहुः। करम्=राजग्राह्यभागम्, आदाय=गृहीत्वा, विषयाध्यक्षाय=देशाधिकृताय, ग्रामाध्यक्षगृहीतकरग्राहिभ्य इति यावत्, तत्र ग्रामसमूहात्मको जनपदो विषयः। प्रयच्छन्ति=ददति। सर्वाध्यक्षाय=समस्तराज्याधिकृताय, "करं प्रयच्छति" इति वचनपरिणामेनानुषङ्गः। स च=सर्वाध्यक्षः, भूपतये=राज्ञे, "करं प्रयच्छति" इत्यनुषङ्गः। दार्ष्टान्तिकमाह—तथेति। बाह्येन्द्रियाणि=पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि इति दश बाह्येन्द्रियाणीत्यर्थः, आलोच्य="इदं किंचिद् वस्तु" इति सामान्यज्ञानेन विभाव्य, संकल्प्य=बाह्येन्द्रियोपलब्धक्षणिकसंवेदनस्मृतीः एकत्वेन संग्रथ्येत्यर्थः। अन्यथा

---

१ अविद्यमानस्य संपादनं योगः। विद्यमानस्य पालनं क्षेमः।

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति ? न तु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्येत आह—

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥३७॥**

"सर्वम्" इति । पुरुषार्थस्य प्रयोजकत्वात्तस्य यत्साक्षात्साधनं तत्=प्रधानं, बुद्धिश्चास्य साक्षात्साधनं, तस्मात्सैव प्रधानं,

---

क्षणिकसंवेदनासु एकस्या अनुभवकाले अपरासां विनाशात् कस्यापि वस्तुनो यथावद् ग्रहणं न स्यात् । अभिमत्य=संवेदनस्मृतिसंदर्भम् आत्मीयत्वेन मत्वेति यावत् । सर्वाध्यक्षभूतायाम्—सर्वप्रधानभूतायाम्, "प्रयच्छति' इति विभक्तिविपरिणामेन अनुषङ्गः, एवं पूर्वत्रापि । पुरुषस्यार्थं प्रकाश्य' बुद्धौ प्रयच्छन्तीति । बुद्धावर्थं प्रदाय पुरुषस्य प्रकाशयन्तीत्यर्थः । उद्देश्यस्य संबन्धत्वेन विवक्षया पुरुषस्येति षष्ठीति ज्ञेयम् ॥

पूर्वार्धोक्तस्य "एते गुणविशेषाः" इत्यस्य विवरणमाह—बाह्येन्द्रियेति । "परस्परविलक्षणाः" इत्यस्यार्थमाह—ते तु परस्परेति । गुणानां परस्परविरुद्धधर्मकतया विरोधशीलत्वादिति भावः । एकवाक्यताम्=एकवाक्यताशब्दोऽत्र एककार्यकारितोपलक्षकः, ततश्च अविरोधित्वमित्यर्थः । विरुद्धानामेकवाक्यतायां यत् "प्रदीपकल्पाः" इति दृष्टान्ततया उक्तम्, तद् विशदयति—यथेति । एवम् एते गुणविशेषाः="पुरुषार्थेन एकवाक्यतां नीताः" इत्यर्थः ॥ ३६ ॥

## अथ बुद्धेः प्राधान्ये हेतुनिरूपणम् ।

कस्मादिति । कुतो बुद्धेरेव प्राधान्यं न पुनरहङ्कारमनसोरित्याशङ्कार्थः ॥ बुद्धिमनोऽहङ्कारेषु कथमन्तःकरणत्वाविशेषत्वेऽपि बुद्धेः प्राधान्यं नत्वितरयोरित्याशङ्कायामाह—सर्वं प्रत्युपभोगमिति । यस्मात्=यतः कारणात्, पुरुषस्य सर्वं प्रत्युपभोगम्=सर्वं शब्दादिकं प्रति य उपभोगः पुरुषस्य तम्, बुद्धिः साधयति, सैव च=बुद्धिः, पुनः सूक्ष्मम्=दुर्लक्ष्यम्, प्रधानपुरुषान्तरम्=प्रधानपुरुषयोर्भेदम्, विशिनष्टि=करोति, "अतः सैव प्रधानास्ति" इति वाक्यशेषः । इत्यन्वयः ॥ ३७ ॥ ❀ ॥

पुरुषार्थस्येति । सर्वेषां बाह्येन्द्रियादीनां पुरुषार्थसाधकत्वादित्यर्थः । तस्य=पुरुषार्थस्य, यत्=इन्द्रियम्, प्रधानम्=मुख्यम् । तेषु मध्ये किन्नाम साक्षात्साधनम्? इत्यत्राह—बुद्धिश्चेति । अस्य=पुरुषार्थस्य, सैव=बुद्धिरेव,

---

१ ननु सामन्तवत्स्वतन्त्रा एते कथमैकमत्येन एकार्थकारिण इति चेत् तत्र "शेषः परार्थः" इति न्यायेनाह—गुणविशेषा इति ।

यथा—सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम् । इतरे तु ग्रामाध्यक्षादयस्तं प्रति गुणभूताः । बुद्धिर्हि पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं "पुरुषस्य साधयति" सुखदुःखानुभवो हि भोगः, स च बुद्धौ, बुद्धिश्च पुरुषरूपेवेति, सा च पुरुषमुपभोजयति—यथाऽर्थालोचनसङ्कल्पाभिमानाश्च तत्तद्रूप-

प्रधानम्=मुख्या। अन्ये तु—"प्रयोजकत्वात्" इत्यस्य "प्रकृतिप्रवर्तकत्वात्" इत्यर्थमाहुः । सर्वाध्यक्षः=प्रधानमन्त्री, राजार्थसाधनतया=राज्ञः सर्वेषां कार्याणां सम्पादनकारित्वेन, प्रधानम्=मुख्यः अस्ति, इतरे=अन्ये तु, तं प्रति=सर्वाध्यक्षं प्रति, गुणभूताः=तदुपकारकाः, गौणा इति यावत्। ननु बुद्धेः साक्षात् पुरुषार्थसाधनत्वे किं मानमित्यत आह—बुद्धिर्हीति । पुरुषसन्निधानादिति । चिद्रूपस्य पुरुषस्य बुद्धिरूपान्तःकरणवर्तित्वादिति भावः। तच्छायापत्त्या=चिच्छायापातेन, तद्रूपेव=पुरुषस्वरूपा इव, जपाकुसुमसन्निधानात् स्फटिकादिकं यथा तच्छायापत्त्या जपाकुसुमवत् भवति, तथा बुद्धिरपि चिच्छायापत्त्या पुरुषस्वरूपेव भवतीति भावः। "तद्रूपेव" इति इवशब्दः अवास्तवत्वद्योतकः। बुद्धिर्न वस्तुत आत्माऽभिन्ना, तथापि तथाविधा लोकैर्लक्ष्यत इत्यर्थः ॥

ननु विषयस्य शब्दादेर्भोगः कीदृक्, कथं वा निष्क्रियस्य चिन्मात्रस्य असौ भोगः संभवति, कथं वा बुद्धेस्तत्साधनत्वमित्यत आह—सुखदुःखेति । सुखदुःखान्यतरसाक्षात्कार इत्यर्थः । ननु यदि भोगः सुखाद्यनुभवः, तदा निर्गुणे पुरुषे नासौ संभवत्येव, संभवति तु बुद्धौ, इत्यत्रेष्टापत्तिमाह—स च बुद्धाविति। स च=भोगः। ननु तर्हि कथं बुद्धेस्तत्साधकत्वमित्यत्राह—बुद्धिश्चेति । पुरुषरूपेव=पुरुषस्वरूपतुल्या । इति=एवं प्रकारेण, सा पुरुषमुपभोजयति=बुद्धिः पुरुषभोगं जनयति। तथा च पुरुषसन्निधानात् तच्छायापत्त्या पुरुषाऽभिन्नत्वेन प्रतीयमानाया बुद्धेः अविवेकग्रहात् स्वकृतभोगेन "अहं सुखी" इत्यादिप्रत्यायकत्वात् पुरुषोपभोगजनकत्वमिति भावः॥ ननु तत्तद्भोगस्य तानि तानीन्द्रियाणि साधनानि सन्ति, तत्कथं बुद्धेरेव साक्षात्साधनतोच्यते? तत्राह—यथेति । तत्तद्रूपपरिणामेनेति ॥ आदावर्थालोचनं संक-

१ निष्पन्ने पुरुषार्थे प्रकृतिनिवृत्तेः। तावदेव हि प्रकृतितत्त्वं विचेष्टते न यावत् पुरुषस्य भोगं वाऽपवर्गं वा सम्पादयति, निष्पादितभोगापवर्गा तु कृतकृत्या सती ततो निवर्तत इति हि सांख्यसिद्धान्तः। २ विरुद्धकरणानां कथं बुद्धौ विषयसमर्पणमित्यत आह—अर्थालोचनेति । तद्रूपपरिणामेन=घटपटाद्याकारसमर्पकत्वेन बुद्धावुपसंक्रान्ताः=बुद्धेर्द्वाराणि भवन्तीत्यर्थः। तथाच पुरुषभोगे बुद्धिव्यापारस्य, बुद्धिव्यापारे मनोऽहङ्कारव्यापारस्य, तद् व्यापारे बुद्धीन्द्रियव्यापारस्य, तत्र च कर्मेन्द्रियव्यापारस्योपयोगः। कर्मेन्द्रियव्यापारेण जनिते पदार्थे बुद्धीन्द्रियप्रवृत्त्याऽन्तःकरणप्रवृत्तेरिति तत्त्वम् ॥ इत्यन्ये।

परिणामेन बुद्धावुपसङ्क्रान्ताः—तथेन्द्रियव्यापारा अपि बुद्धेरेव स्वव्यापारेण=अध्यवसायेन सहैकव्यापारी भवन्ति—यथा वा—स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति "सर्वं"=शब्दादिकं "प्रति" य उपभोगः पुरुषस्य तं साधयति।

ननु पुरुषस्य सर्वविषयोपभोगसंपादिका यदि बुद्धिः—तर्हि निर्मोक्षः, इत्यत आह—"सैव च" इति। पश्चात् प्रधानपुरुषयोरन्तरं=विशेषं "विशिनष्टि"=करोति—यथौदनपाकं पचतीति। अनेनापवर्गः पुरुषार्थो दर्शितः। ननु प्रधानपुरुषयोरन्तरस्य कृत-

---

ल्परूपेण परिणमते, संकल्पश्च अभिमानरूपेण, अभिमानश्च बुद्धिरूपेण, परिणम्य बुद्धावुपसंक्रामतीति भावः। अनवध्यवसितानाम् इदन्त्वाऽन्यत्वाभ्याम् अनिश्चीयमानानाम् अर्थानां पुरुषार्थाप्रयोजकत्वेन बुद्धिव्यापाराध्यवसायसमनुक्रान्तैरेव इन्द्रियव्यापारैः पुरुषार्थसिद्धिः, इत्याह—स्वव्यापारेणेत्यादिना। एकव्यापारीभवन्तीति। तथा च आलोचनसंकल्पादीनाम् उत्तरोत्तरपरिणामेन बुद्धिरूपतया अवस्थानात् अध्यवसायलक्षणो यो बुद्धिव्यापार उत्पद्यते, स एव बुद्धिरूपेण परिणतार्थालोचनादिस्वरूपेन्द्रियादिव्यापारः, इति पूर्वं विभिन्नव्यापाराः स्थिता अपि इदानीम् एकव्यापारीभवन्तीति भावः। अत्र दृष्टान्तमाह—यथा स्वसैन्येनेति। स्वसैन्येन=सर्वाध्यक्षसैन्येन बुद्धिव्यापारस्थानीयेन, ग्रामाध्यक्षादिः=इन्द्रियव्यापारस्थानीयः। अन्येन्द्रियव्यापारोऽपि बुद्धिव्यापाररूपेणैव परिणमतीति बुद्धिरेव साक्षाद् भोगसाधनिकेति तत्त्वम्॥

इदानीं पूर्वार्धस्याक्षराणि योजयति—सर्वमिति। परार्धं व्याचष्टे—पश्चादिति। विवेकदशायामित्यर्थः। "विशेषं विशिनष्टि" इति कर्मक्रिययोरैक्यापत्तेराह[1]—करोतीति। धातोः कृतिमात्रार्थत्वादिति भावः। अन्यार्थकस्य धातोः कृतिमात्रपरत्वे दृष्टान्तमाह—यथेति॥ अन्ये तु—"विशेषस्य पुनर्विशेषकरणासंभवात् व्याचष्टे—करोतीति। यथा "ओदनपाकं पचति" इति प्रयोगे पाककर्मकस्य पाकस्य असंभवात् "पचति" इत्यस्य "करोति" इत्यर्थ आश्रीयते, तथैव प्रकृतेऽपीति न दोषः" इति व्याचक्षते[2]॥ कृतकत्वात्=

---

१ विशेषम्=परस्परवैलक्षण्यम् अन्तरपदेनैव धात्वर्थस्य लाभाद्धात्वर्थोऽत्र न विवक्षितः किन्तु प्रत्ययार्थ एवेत्यभिप्रायेणोक्तं—करोति इति। इति व्यक्तोऽर्थः। २ यथा 'पाकं पचति' इत्यत्र पचेः क्रियासामान्यार्थता, तथा "विशेषं विशिनष्टि" इत्यत्र "अन्तरं विशिनष्टि" इति द्वितीयस्य वाक्ये विपूर्वस्य शिषेः क्रियासामान्यार्थता, तदेवाह—यथौदन इति। इति तु तत्त्वम्।

कत्वादनित्यत्वं, तत्कृतस्य मोक्षस्यानित्यत्वं स्याद्, इत्यत आह—"सूक्ष्मम्" इति। "सूक्ष्मं"=दुर्लक्ष्यं तदन्तरमित्यर्थः। प्रधानं सविकारमन्यद्, अहमन्य इति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिर्बोधयति न तु करोति येनानित्यत्वमित्यर्थः। करणं च प्रतिपादनम्॥ ३७॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते—

तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च॥ ३८॥

---

बुद्धिजन्यत्वात्, तत्कृतस्य=बुद्धिजन्यप्रधानपुरुषभेदकृतस्य,। अनित्यत्वं स्यादिति। यत्कृतकं तदनित्यमिति व्याप्तेरिति भावः। सूक्ष्ममिति। अन्तरस्य सूक्ष्मत्वादेव अवास्तवोऽपि भोगो वास्तव इवेति भावः। अन्तरो=भेदः। अन्तरं सिद्धमेवेति तत्करणमत्र प्रतिपादनोपलक्षणमित्यत आह—करणं चेति। प्रधानपुरुषयोः अन्तरकरणं चेत्यर्थः। प्रतिपादनम्=सिद्धस्य प्रधानपुरुषान्तरस्य बुद्ध्या बोधनमित्यर्थः। अत्र कारिकायाः पूर्वार्धेन बुद्धिकृतं विषयोपभोगाख्यं पुरुषार्थं प्रदर्श्य उत्तरार्धेन अपवर्गाख्यं पुरुषार्थं दर्शितवानाचार्य इत्यवधेयम्। अपवर्गार्थिनां प्रधानपुरुषयोः पृथक्त्वज्ञानस्यैव प्रार्थनीयत्वादिति॥ ३७॥

## अथ विशेषाविशेषनिरूपणम्।

ग्राह्यग्राहकयोरविनाभावं प्रकटयन् सङ्गतिमाह—तदेवमिति॥

तन्मात्राणीति। तन्मात्राणि=सूक्ष्मशब्दादीनि पञ्च तन्मात्राणि, अविशेषाः कथ्यन्ते। तेभ्यः पञ्चभ्यः=शब्दादिपञ्चतन्मात्रेभ्यः, पञ्च भूतानि=आकाशादीनि पञ्च महाभूतानि, "जायन्ते" इति शेषः। एते=महाभूतपदवाच्या आका-

---

१ तथा च "सविकारं प्रधानमन्यत्, अहं पुनरन्यः" इत्यनयोरन्तरं वस्तुतो विद्यमानमपि सूक्ष्मत्वेन दुर्लक्ष्यतयाऽविवेकेन अविद्यमानमिव प्रतीतमासीत्, बुद्धिस्तु तद् वास्तविकमन्तरं विवेकग्रहोत्पादनेन प्रतिपादयति, न पुनर्जनयतीति भावः। ननु बुद्धेः प्रधानपुरुषान्तरप्रतिपादकत्वाभिधानं निरर्थकमत आह—अनेनेति। बुद्धेः प्रधानपुरुषान्तरप्रतिपादकत्वाभिधानेनेत्यर्थः। पुरुषार्थः=पुरुषेणार्थनीय इत्यर्थः। नन्वपवर्गो नाम दुःखाभावः, स च पुरुषस्य सिद्ध एव, अप्रकृतित्वेन सुखदुःखमोहासंभवात्, तत्कथमपवर्गस्य पुरुषार्थनीयत्वम्? मैवम्, पुरुषे स्वतः प्राप्तोऽपि दुःखाभावो नैसर्गिकात् प्रधानपुरुषयोरभेदग्रहात् प्रधानधर्माणां दुःखादीनां पुरुषे समारोपिततया 'अहं दुःखी' इत्यादिज्ञानेन नित्योऽपि दुःखाभाव आव्रियते। तदानीं दुःखाभावस्याप्राप्तत्वनिश्चयेन प्रार्थनीयत्वं संभवत्येवेत्याशयात्।

शब्दादितन्मात्राणि सूक्ष्माणि, न चैषां शान्तत्वादिरस्त्युपभोगयोग्यो विशेष इति मात्रशब्दार्थः। अविशेषानुक्त्वा विशेषान् वक्तुमुत्पत्तिमेषामाह—"तेभ्यः"=तन्मात्रेभ्यो यथासङ्ख्यमेकद्वित्रिचतुःपञ्चभ्यो "भूतानि"=आकाशानिलानलसलिलावनिरूपाणि "पञ्च"। "पञ्चभ्यः"=तन्मात्रेभ्योऽस्त्वेषां भूतानामुत्पत्तिः, विशेषत्वे किमायातम्? इत्यत आह—"एते स्मृता विशेषा" इति।

---

शादयः, विशेषाः, स्मृताः=कथिताः, यतः केचित् शान्ताः केचिद् घोराः केचित् मूढाः सन्ति॥ तत्र सूक्ष्मशब्दादीनि तन्मात्राणि न उपभोगयोग्यानि सन्ति, अत एव तेषां शान्तत्वादयो धर्मा नास्मदादिभिरनुभूयन्ते, अत एव चेमानि अविशेषपदवाच्यानि भवन्ति, आकाशादिपञ्चमहाभूतानां च शान्तत्वादयो धर्माः स्थूलत्वाद् अस्माभिरनुभूयन्ते इति स्थूलभूतानि विशेषपदवाच्यानीति तत्त्वम्॥ ३८॥ ❀॥

तन्मात्राणीति। तान्येव[२] तन्मात्राणि। मयूरव्यंसकादित्वात्नित्यसमासः। एवशब्दो विग्रहवाक्ये उपभोगयोग्यसकलविशेषयोगव्यवच्छेदार्थं इति मनसि निधाय "तन्मात्राणि" इत्यत्रत्यमात्रशब्दार्थमाह—न चैषामिति। एषाम्=तन्मात्राणाम्, उपभोगयोग्यः शान्तत्वादिः विशेषो न ह्यस्तीत्यन्वयः। अत इमानि अविशेषसंज्ञाभाञ्जि इति हृदयम्। शब्दादितन्मात्राणां मात्रपदेन धर्मान्तररहितत्वप्रतीतेः शान्तत्वादिधर्मानुपलम्भाद् "इदम् अस्माद् भिन्नम्, इदम् अस्माद् भिन्नम्" इत्यादिप्रत्ययासंभवेन अविशेषत्वमिति तत्त्वम्॥ एतदुक्तं विष्णुपुराणे—"तस्मिंस्तस्मिंस्तु[३] तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः॥" इति॥ एषाम्=विशेषाणाम्, उत्पत्तिमाहेत्यन्वयः। "विशेषान् वक्तुम्" इत्यत्र "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुन्। तथा च—"विशेषोक्तिफलिका मत्कर्तृका वर्तमानकालिकी एषाम् उत्पत्त्युक्तिः" इति बोधः॥

---

१ अनुभवयोग्यैः सुखदुःखमोहरूपैर्धर्मैर्विशेष्यन्त इति विशेषाः। अत्र कर्मणि घञ् प्रत्ययः। तन्मात्राणि तु अविशेषाणि यतस्तानि अनुभवयोग्यैः सुखादिर्विशेष्टुं न शक्यन्ते सूक्ष्मत्वादिति तु निर्गलितोऽर्थः। यथाहुः—"शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तत्क्रमात्। तन्मात्राणां विशेषाः स्युः स्थूलभावमुपागताः॥" इति। तत्क्रमात्=शब्दतन्मात्रादिक्रमात्। २ सा सा मात्रा यस्मिन् तत् तन्मात्रम्, इत्येवमपि विगृह्णन्ति केचित्। शब्दादीन्येव तन्मात्राणि। तानि च योगिभिरेव ग्राह्याणि। ३ तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्ति, इति कृत्वा धर्मधर्म्यभेदात् द्रव्याणामपि तन्मात्रता स्मृता। ते च पदार्थाः पञ्चतन्मात्रारूपाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्याः। एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अत एव अविशेषिणः=अविशेषसंज्ञका इत्येतदर्थः। अत्र यद्वक्तव्यं तत्प्रागेवावोचाम।

एकद्वित्रीति । आकाशतन्मात्रात्केवलाद् आकाशम् उत्पद्यते, तस्मादेव

१ एतच्च नैयायिकानां सम्मतम् । पञ्चीकृतेभ्यो भूतेभ्यः स्थूलभूतान्युत्पद्यन्ते इति त्वत्र वेदान्तसिद्धान्तः । पञ्चीकरणरीतिश्चोक्ता पञ्चदश्यां विद्यारण्यस्वामिभिः—"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥" इति । अस्यार्थः—वियदादिकम् एकैकं द्विधाद्विधा कृत्वा—भागद्वयोपेतं कृत्वा—पुनरपि प्रथमं प्रथमं भागं भागचतुष्टयोपेतं विधाय स्वस्मात् स्वस्मादितरेषां चतुर्णां चतुर्णां यो यो द्वितीयः स्थूलो भागस्तेन तेन सह प्रथमप्रथमभागांशानां चतुर्णां चतुर्णां मध्ये एकैकस्य योजनात् ते=वियदादयः प्रत्येकं पञ्चपञ्चात्मका भवन्तीति । इयमत्र सरला रीतिः—आकाशस्य द्वौ भागौ करणीयौ तत्र एको भागः पृथग् रक्षणीयः । द्वितीयभागस्य पुनः चत्वारो भागाः कर्तव्याः, एषां चतुर्णां मध्यात् कस्यापि आकाशेन मेलनं न कार्यं किंतु एको भागो वायुना द्वितीयस्तेजसा, तृतीयो जलेन, चतुर्थः पृथिव्या मेलनीयः । एवं वायोर्द्वौ भागौ कृतौ तत्रैको भागः पृथग् रक्षितः, द्वितीयस्य च चत्वारो भागाः कृताः, ते च वायुना न मेलनीयाः किंतु एकः आकाशेन, द्वितीयस्तेजसा, तृतीयो जलेन, चतुर्थोभागश्च पृथिव्या मेलयितव्यः । एवं—तेजसो भागद्वयं कृत्वा एकं पृथक् रक्षित्वा द्वितीयभागस्य चतुरो भागान् विधाय तेषां तेजसा मेलनमकृत्वा एकं भागमाकाशेन, द्वितीयं वायुना, तृतीयं जलेन, चतुर्थं भागं च पृथिव्या मेलयेत् । एवं जलस्य भागद्वयं कृतम् तत्रैकः पृथक् रक्षितः, द्वितीयभागस्य चत्वारो भागा विहिताः, तेषां मध्यात् कस्यापि जलेन मेलनं न कार्यं, किंतु एको भाग आकाशेन, द्वितीयो वायुना, तृतीयस्तेजसा, चतुर्थश्च पृथिव्या मेलनीयः । एवं—पृथिव्या द्वौ भागौ विधाय एकं भागं पृथगेव रक्षेत्, द्वितीयभागस्य चतुरो भागान् कुर्यात्, तेषां कस्यापि पृथिव्या मेलनं न कार्यं, किं तु एकं भागं आकाशेन, द्वितीयं वायुना, तृतीयं तेजसा, चतुर्थं च जलेन मेलयेत्, इदमेव पञ्चीकरणम् । प्रथमं अपञ्चीकृतान्येव भूतान्यासन् तत ईश्वरेच्छया स्थूलसृष्टिद्वारा जीवानां भोगार्थं परस्परमेलनरूपं पञ्चीकरणं बभूव ।

पञ्चीकरणचित्रम्—

| | | | | |
|---|---|---|---|---|
| आकाशः | वायुः | अग्निः | जलम् | पृथिवी |
| आकाशः | वायुः | अग्निः | जलम् | पृथिवी |
| वायुः<br>अग्निः<br>जलम्<br>पृथिवी | आकाशः<br>अग्निः<br>जलम्<br>पृथिवी | आकाशः<br>वायुः<br>जलम्<br>पृथिवी | आकाशः<br>वायुः<br>अग्निः<br>पृथिवी | आकाशः<br>वायुः<br>अग्निः<br>जलम् |

अत्र चित्रे प्रत्येकभूते अर्धो भागः स्वीयः, अर्धे च शिष्टानि चत्वारि भूतानीति विज्ञेयम् ।

कुतः ? "शान्ता घोराश्च मूढाश्च" । चकार एको हेतौ, द्वितीयः समुच्चये । यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः=सुखाः=प्रसन्नाः=लघवः, केचिद्रजःप्रधानतया घोराः=दुःखा=अनवस्थिताः, केचित्तमःप्रधानतया मूढाः=विषण्णाः=गुरवः । तेऽमी परस्परव्यावृत्ता अनुभूयमाना 'विशेषा' इति 'स्थूला' इति चोच्यन्ते, तन्मात्राणि त्वस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्ते इति 'अविशेषा' इति, 'सूक्ष्मा' इति चोच्यन्ते ॥ ३८ ॥

---

वायुतन्मात्रसहिताद् वायुः, आकाशवायुतन्मात्राभ्यां तेजस्तन्मात्रसहिताभ्यां वह्निः, आकाशवायुतेजस्तन्मात्रेभ्यः अप्तन्मात्रसहितेभ्यः जलम्, आकाशवायुतेजोऽप्तन्मात्रेभ्यः क्षितितन्मात्रसहितेभ्यः अवनिरुत्पद्यते, इति फलितोऽर्थः । एतेषाम् एकद्वित्र्यादिगुणोपलम्भात् तथानुमानम् । तत्र अनिलः=वायुः अनलः=वह्निः तेजः इति यावत् सलिलम्=जलम्, अवनिः=पृथिवी ॥ मितसारवचसा आचार्येण उपन्यस्ते "च"द्वये नैकेनापि पादपूरणार्थकेन भवितव्यम् इत्यभिप्रेत्याह—चकार एक इति ॥ तथा च यत एते शान्ता[2] घोरा मूढाश्च तत एषां विशेषत्वमित्यर्थः । शान्तघोरमूढशब्दैश्चात्र गुणत्रयधर्माउपलक्षिता इत्याह—सत्त्वप्रधानतयेत्यादि ॥ निर्गलितार्थमाह—तेऽमीत्यादिना ॥ परस्परव्यावृत्ताः=भिन्नभिन्नत्वेन प्रतीयमानाः । आकाशादिमहाभूतानि मिथोभिन्नभिन्नत्वात् विशेषसंज्ञाभाञ्जि, अस्माभिरनुभूयमानत्वाच्च स्थूलशब्दवाच्यानीति सरलार्थः । तन्मात्राणामेतद् वैलक्षण्यं दर्शयति—तन्मात्राणीति । परस्परव्यावृत्तानि=इतरेतरं भिन्नानि । मिथोभिन्नभिन्नत्वाप्रतीतेः अविशेषसंज्ञाभाञ्जि अस्माभिरननुभवाच्च सूक्ष्मपदवाच्यानीति सरलार्थः । अत्र "अस्मदादिभिः" इति वदन् "योगिभिस्तु तन्मात्राण्यपि परस्परव्यावृत्तानि अनुभूयन्ते" इति ध्वनयति[3] ॥ ३८ ॥

---

१ अत्र शब्दतन्मात्राच्छब्दगुणं वियज्जायते । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणो वायुर्जायते । शब्दतन्मात्रस्पर्शतन्मात्रसहितात् रूपतन्मात्रात् शब्दस्पर्शरूपगुणो वह्निर्जायते । शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्रसहितात् रसतन्मात्रात् शब्दस्पर्शरूपरसगुणं वारि जायते । शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रसहितात् गन्धतन्मात्रात् शब्दस्पर्शरूपरसगन्धगुणा वसुन्धरा जायते, इति निष्कर्षो बोद्धव्यः । २ शब्दाः सुखदुःखमूढाः विपञ्चीसिंहव्याघ्रमेवादिशब्दाः । एवं स्पर्शाः वाय्वग्निविषादिषु । रूपाणि कामिनीविद्युत्तिक्तादिषु । रसाश्च इक्षुराजसर्षपनिम्बपत्रेषु । गन्धाः कर्पूरचम्पककुसुमलशुनादिषु । इति विवेक्तव्यम् । शान्तं=सुखात्मकम् घोरं=दुःखात्मकम्, मूढं=मोहात्मकमित्यपि द्रष्टव्यम् । ३ ऊर्ध्वस्रोतसां भोगहेतवोऽप्यस्मदादीनां नानुभवपथमारोहन्तीति सर्वार्थः ।

विशेषाणामवान्तरविशेषमाह—

**सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥**

"त्रिधा विशेषाः स्युः"। तान् विशेषप्रकारानाह—"सूक्ष्मा" इत्यादि। सूक्ष्मदेहाः परिकल्पिताः, "मातापितृजाः"=षाट्कौ-

---

सूक्ष्मा इति ॥ प्रभूतैः सह=महाभूतैः सह, सूक्ष्माः, मातापितृजाः, इत्येवं विशेषाः त्रिधा=त्रिप्रकाराः, सूक्ष्मशरीरम् एको विशेषः, मातापितृजः स्थूलदेहो द्वितीयः, महाभूतानि तृतीय इत्येवं विशेषास्त्रिविधा इति यावत्। तेषाम्=विशेषाणां मध्ये ये सूक्ष्माः, ते नियताः=नित्याः, आमोक्षावस्थायिन इति यावत्, मातापितृजाः=स्थूलदेहाः, निवर्तन्ते=मरणकाले पतन्ति नश्यन्तीति यावत्। अत्र साङ्ख्यचन्द्रिकाकारः—"उपलक्षणमेतत् प्रभूतानाम्, तेऽपि प्रलयकाले निवर्तन्ते इति बोध्यम्। विशिष्यकथनं तु गौणजीवत्वाभिप्रायकम् ॥" इत्याह ॥ इत्यन्वयार्थः ॥ ॐ ॥

प्रकृतित उत्पन्नेषु चतुर्विंशतितत्त्वेषु अनेकानेकतत्त्वानां मेलनेन त्रीणि विशेषवस्तूनि भवन्ति, यैः पुरुषस्य उपभोगः सिद्धो भवति। यथा—एकं सूक्ष्मशरीरम्, यत् अष्टादशतत्त्वैः संगृहीतं भवति, द्वितीयं मातापितृत उत्पन्नं स्थूलशरीरम्, तृतीयो विशेषश्च महाभूतानीति। एष्वेव त्रिषु विभागेषु विभक्तान् सर्वान् प्राकृतपदार्थान् पुरुषः उपभुङ्क्ते। एषु सूक्ष्मशरीरस्य स्थितिः तत्त्वज्ञानोत्पत्तिं यावत् भवति, मातापितृजा नष्टा भवन्ति, तथा तस्य तत्त्वानि स्वस्वसमानतत्त्वेषु मरणानन्तरं मिलितानि भवन्ति। एवमेव महाभूतान्यपि प्रलयकाले स्वस्वाऽव्यक्तकारणे मिलन्त्येवेति सरलार्थः ॥ ३९ ॥ ॐ ॥

त्रिधा=त्रिप्रकाराः। तन्मात्राणां सूक्ष्मपदवाच्यत्वेऽपि तेषाम् अविशेषत्वप्रतिपादनात् विशेषप्रकारेषु सूक्ष्मपदेन तेषां ग्रहणासंभवेन व्याचष्टे—सूक्ष्माः-सूक्ष्मदेहा इति। परिकल्पिताः=अनुमानगम्याः, न तु स्थूलशरीरवत् प्रत्यक्षोपलब्धा इत्यर्थः। सूक्ष्मदेहमन्तरेण सुखदुःखभोगानुपपत्त्या सूक्ष्मा देहा अनुमिताः पूर्वाचार्यैरिति यावत्। न हि केवलपुरुषस्य भोगः संभवति, सुखदुःखसाक्षात्कारलक्षणस्य भोगस्य चिन्मात्रे पुरुषे बाधात्। न चानेन स्थूलदेहेनैव शुभाशुभं भुज्यते, भोक्ष्यते च जन्मान्तरोपात्तेन देहान्तरेणेति कृतं सूक्ष्मदेहकल्पनयेति शङ्क्यम्, सूक्ष्मदेहानभ्युपगमे श्रौतस्वर्गनरकादिपारलौकिकसुखदुःखभोगानुपपत्तेः स्थूलदेहस्य नश्वरतायाः प्रत्यक्षसिद्धतया परलोकगामित्वासंभवात्। तस्मात् कृतहान्यकृताभ्यागमप्रसङ्गेन[1] विहितप्रतिषिद्ध-

---

१ विनैवकर्मानुष्ठानं फलोत्पत्तिः अकृताभ्यागमः कृतानां कर्मणां फलदानमन्तरैव विनाशश्च कृतविप्रणाशः, इत्युच्यते।

शिकाः—तत्र मातृतो लोमलोहितमांसानि, पितृतः स्नाय्वस्थिमज्जान इति षट्को गणः, 'प्रकृष्टानि'=महान्ति भूतानि=प्रभूतानि तैः

---

कर्मजन्यस्य ऐहिकपारलौकिकसुखदुःखभोगस्य अवश्याभ्युपेयत्वात् देहान्तरेण च तदसंभवात् उभयलोकगामी कश्चित् सूक्ष्मदेहो युक्तमेवानुमीयते इति तत्त्वम् ॥ ननु सूक्ष्माणां तन्मात्राणाम् अविशेषत्वमुक्तम्, अत्र पुनः सूक्ष्मदेहानां विशेषमध्ये कथं परिगणनम् इति चेत्। अत्राहुः—इन्द्रियैः शान्तघोरमूढैरन्वितत्वात् सूक्ष्मदेहानां विशेषत्वमिति, । एतच्च चत्वारिंशत्तमकारिकायां स्फुटीभविष्यति ॥ ॐ ॥

षाट्कौशिकाः=षड्भिः कोशैर्निर्मिताः षाट्कौशिकाः, षट्पदार्थघटिता इत्यर्थः । के ते षट्कोशाः ? कुतो वा ते शरीरमुपसंक्रामन्ति ? इत्यत आह—तत्र मातृत इति । अत्र लोमपदं त्वचो बोधकम्, "एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः, । अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृतः" ॥ इति गर्भोपनिषच्छ्रुतौ "मज्जास्थिस्नायवः शुक्राद्रक्तात् त्वङ्मांसशोणितम् । इति षाट्कौशिको नाम देहो भवति देहिनाम् ॥" इत्यादौ च मातृतः त्वगुत्पत्तेरभिधानात् । त्वक्पदप्रयोगे त्वगिन्द्रियभ्रमो मा भूदिति धिया च ग्रन्थकृता लोमपदमुपन्यस्तमिति ध्येयम् । तत्र स्नायुः=मेदः । शुभ्रत्वात् स्नाय्वस्थिमज्जकोशानां पितृशुक्रसाम्यात् तज्जत्वम्, परिशेषादन्येषां मातृजत्वम् । एषां कोशत्वं च रम्भास्तम्भत्वग्भिरिव बाह्याभ्यन्तरतया स्थित्या आवरकत्वात् इति बोध्यम् ॥ ॐ ॥

अन्ये तु—"षड्भिः=रक्तमांसमेदोऽस्थिमज्जशुक्रावरकैः, कोशैः=रम्भास्तम्भत्वग्भिरिव बाह्यान्तरतया स्थित्या आवरकत्वात् तत्तुल्यैः, निर्वृत्ताः षाट्कौशिकाः । तदुक्तं याज्ञवल्क्येन—"तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च" इति । रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन शरीरस्य षट्प्रकारत्वम् । तथाहि—

भुक्तान्नादिरसो जाठराग्निना परिपच्यमानः रक्तत्वमापद्यते । रक्तं च स्वकोशस्थाग्निना पच्यमानं मांसताम्, मांसं च स्वकोशस्थाग्निना पच्यमानं मेदस्त्वम्, मेदोऽपि स्वकोशस्थाग्निना पच्यमानम् अस्थिताम्, अस्थि च स्वकोशस्थाग्निना पच्यमानं मज्जात्वम्, मज्जाऽपि स्वकोशस्थवह्निना पच्यमाना शुक्रत्वमिति । यदुक्तम्—

"रसाद् वै शोणितं जातं शोणितान्मांससंभवः । मांसात्तु मेदसो जन्म मेदसोऽस्थिसमुद्भवः ॥ अस्थ्नो मज्जा समभवत् मज्जातः शुक्रसंभवः । शुक्राद् गर्भः समभवत्-॥" इति ।

इत्येवम् अन्नरसपरिपाचकलोमावरककोशं परित्यज्य चरमधातुशुक्रावरककोशं परिगृह्णन्ति ॥ ॐ ॥

प्रभूतशब्दं व्याचष्टे—प्रकृष्टानीति । प्रकृष्टशब्दार्थमाह—महान्तीति ।

"सह"। सूक्ष्मशरीरमेको विशेषः, मातापितृजो द्वितीयः, महाभूतानि तृतीयः। महाभूतवर्गे च घटादीनां निवेश इति। सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह—"सूक्ष्माः"। "तेषां"=विशेषाणां मध्ये ये—ते "नियताः"—नित्याः, मातापितृजाः" तु "निवर्तन्ते" रसान्ता वा, भस्मान्ता वा विडन्ता वेति ॥ ३९ ॥

सूक्ष्मशरीरं विभजते—

**पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥**

---

तैः सहेति। महाभूतैः सह त्रिधा विशेषा इत्यन्वयः। कारिकास्थं प्रभूतपदं व्याख्याय विशेषाणां त्रिविधत्वं गमयति—सूक्ष्मशरीरमित्यादि। तथा च सूक्ष्मशरीरस्थूलशरीरमहाभूतभेदेन त्रिविधा विशेषाः" इति दर्शितम् ॥ ननु महाभूतेभ्यो घटादीनाम् अनन्तवस्तूनाम् उत्पत्तेः तेषामपि विभागान्तरं स्यादित्यत आह—महाभूतवर्गे चेति। भूतानां महत्त्वम् अस्मादृशानां विशेषावधारणयोग्यत्वम्, तच्च पृथिव्यादीनामिव घटादीनामपि तुल्यमिति न विभागाधिक्यशङ्केत्याशयः। बहुवचनान्तप्रभूतपदेन महाभूतवर्गोपादानात् घटादीनां तत्रैवान्तर्भाव इति तत्त्वम् ॥ विशेषम्=भेदम्। तेषाम्=सूक्ष्मरूपमातापितृजरूपाणाम्। "ये" इति "सूक्ष्माः" इत्यनेनान्वितम्। नित्याः आदिसर्गात् प्रभृति प्रलयपर्यन्तस्थायिनः। निवर्तन्ते=नश्यन्ति। नाशमेव दर्शयति—रसान्ता वेति। रसा=पृथिवी, सैव अन्ते येषां ते=पृथिवीभावापन्ना इत्यर्थः। भस्मान्ताः=दग्धाः। विड्=विष्ठाश्वादिभिर्भक्षिता इत्यर्थः। तिस्रो ह्यवसाने शरीरस्य गतयः, यथा—बालानां मानवानां भूमौ रोपणम्, अन्येषां दहनम्, अत्रापि पतितादीनां श्मशानादौ प्रक्षेपः, तथा पश्वादीनां च प्रक्षेप एवेति। तत्र क्षितौ निर्वास्य तस्य गलितक्षितिभावः, दग्धस्य भस्मीभावः, प्रक्षिप्तस्य क्रव्याद्भिर्भुक्तस्य च विष्ठात्वापत्तिरिति भावः ॥ ३९ ॥

विभजत इति। अत्र मिलितानाम् अवयवप्रदर्शनं विभागः; तथाच सूक्ष्मशरीरावयवान् प्रदर्शयतीत्यर्थः ॥ पूर्वोत्पन्नमिति ॥ लिङ्गम्=सूक्ष्मशरीरम्, पूर्वोत्पन्नम्=पूर्वस्मिन् आदिसर्गे प्रधानेन प्रतिपुरुषं पृथक् पृथक् उत्पादितम्, असक्तम्=अव्याहतम् शिलायामपि प्रवेशं कर्तुं शक्नोतीति यावत्, नियतम्=महाप्रलयपर्यन्तं स्थायि, महदादिसूक्ष्मपर्यन्तम्=महत्तत्त्वाहङ्कारमनः-

---

१ तत्र भूमौ रोपिता रसान्ताः=रसा—भूमिरेव अन्तश्चरमपरिणामो येषां तथोक्ताः। दग्धाः—भस्मान्ताः। प्रक्षिप्तास्तु विडन्ताः=शृगालादिभिर्भक्षिताः सन्तस्तत्पुरीषभावेन परिणता इति व्यक्तोऽर्थः।

"पूर्वोत्पन्नम्" इति । "पूर्वोत्पन्नं"=प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम्, "असक्तम्"=अव्याहतं शिलामप्यनुप्रविशति, "नियतम्"–आ चादिसर्गादा च महाप्रलयादवतिष्ठते, "महदादिसूक्ष्मपर्यन्तं"–महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम्–एषां समुदायः=सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः ।

---

पञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चतन्मात्रेत्यष्टादशतत्त्वानां समूहरूपम्, निरुपभोगम्=स्थूलदेहं विना भोगाय असमर्थम्, पाट्कौशिकस्थूलशरीरं विना एकाकि भोगस्य स्थानं न भवितुमर्हतीति यावत्, भावैः=धर्माधर्माद्यष्टभावैः, अधिवासितम्=कृतसंस्काराधानं सत्, धर्माधर्माद्यष्टभावानां वासनया युक्तं सत् इति यावत्, संसरति=पूर्वं पूर्वं स्थूलशरीरं त्यक्त्वा नवं नवं स्थूलशरीरं धारयति ॥ ४० ॥ ॐ ॥

## अथ सूक्ष्मशरीरनिरूपणम् ।

पूर्वोत्पन्नपदं व्याचष्टे—प्रधानेनेति । प्रधीयते—अर्प्यंते प्रलयकाले कार्यजातमत्रेति प्रधानम्=प्रकृतिः, तयेत्यर्थः । आदिसर्गे=सर्वप्राथमिकसृष्टिसमये । असक्तम्=सङ्गरहितम्; वस्त्वन्तरसङ्गेन हि गतिर्विहन्यते, तद्राहित्यात् "सर्वतोगामि" इत्याशयेन व्याचष्टे—शिलामिति । क्वचित् पुस्तके "अशक्तम्" इति पाठः । तत्र नास्ति शक्तम्=शक्तिमत् यस्मादिति सर्वकर्मसमर्थमित्यर्थः । ततोऽपिशिलानुप्रवेशक्षमत्वम् आयाति । नियतम्[1]=नित्यम्, इत्याशयेनाह—आ चेति । आदिसर्गमारभ्य प्रलयपर्यन्तमित्यर्थः । तन्मात्रपर्यन्तमिति । कारिकास्थं सूक्ष्मपदं पञ्चतन्मात्रपरमित्यनेन दर्शयति । एषाम्[2]=अष्टादशावयवानाम् । तथा च कापिलसूत्रम्—"सप्तदशैकं लिङ्गम्" इति । सप्तदश च एकं च सप्तदशैकम् अष्टादश, तैः लिङ्गम्=सूक्ष्मदेहः, उत्पद्यते । बुद्ध्यहङ्कारमनांसि, पञ्चसूक्ष्मभूतानि, दश इन्द्रियाणि, इति । इति कापिलसूत्रार्थः ॥ अत्र 'एषां समुदायः' इत्युक्त्या सूक्ष्मशरीरस्यावयवित्वं निराकरोति ॥ ननु "तन्मात्राण्यविशेषाः–" इत्यष्टात्रिंशकारिकायाम् "एते स्मृता विशेषाः" इत्यनेन महाभूतानां विशेषत्वेन परिभाषितत्वात्; "सूक्ष्मा मातापितृजाः–" इति तदुत्तरकारिकायां च "त्रिधा विशेषाः स्युः" इत्यनेन सूक्ष्मशरीरस्यापि विशेषप्रकारान्तरत्वेन अभिधानात् सूक्ष्मशरीरस्यापि स्थूलमहाभूतघटितत्वम् उचितम् । तस्य यदि महदादिपञ्चतन्मात्रपर्यन्तसमुदायत्वम् उच्यते, तर्हि महाभूतलेशरहितस्यापि तस्य कथं विशेषप्रकारेषु अन्तर्भावः शक्यते कर्तुम्, इत्यतः तस्य विशेषपदार्थत्वं प्रतिपादयति—शान्तघोरमूढैरिति ॥

---

१ प्रलयपर्यन्तस्थायित्वमाह—नियतमिति । २ सूक्ष्मदेहस्य करचरणादिराहित्यमाह—एषां समुदाय इति ।

नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यत आह–"संसरति" इति । उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति, हायं हायं=हित्वा हित्वा चोपादत्ते ।

---

तथाच "एते स्मृता विशेषाः" इत्यनेन "महाभूतानामेव विशेषत्वम्" इति सावधारणं न निर्दिश्यते, किंतु "शान्तघोरमूढत्वात्" इति हेतुना "पर्वतो वह्निमान् धूमात्" इत्यादाविव "येषाम् अन्येषां शान्तघोरमूढत्वं तेषामपि विशेषत्वम्" इति प्रतिपाद्यते । एवं च—इन्द्रियाणां शान्तघोरमूढत्वस्य अस्मदादिभिः अनुभूयमानत्वाद् विशेषत्वम् अभ्युपेयम् । तद्घटितसूक्ष्मशरीरस्यापि सुतरां विशेषत्वम् । अत्र इन्द्रियपदमपि करणमात्रोपलक्षणम्, बुद्ध्यहङ्कारयोरपि शान्तघोरमूढत्वस्यानुभूयमानत्वात् । अत एव "तन्मात्राण्यविशेषाः–" इत्यनेन तन्मात्राणामेव शान्तत्वादेरनुभवविषयत्वाभावाद् अविशेषत्वं नान्येषां विकाराणाम्" इति दर्शितम्, मात्रपदेन तेषामेव शान्तत्वादिधर्मराहित्यस्य प्रतीतेः । यद्यपि सूक्ष्मशरीरस्य विशेषपदार्थघटितत्वाद् विशेषान्तर्भूतत्वमिव पञ्चतन्मात्रघटितत्वाद् अविशेषत्वमपि संभवति, तथापि "अधिकेन व्यपदेशा भवन्ति" इति न्यायाद् भूयसाम् अवयवानां विशेषत्वेन विशेषान्तर्भूतत्वमेवोचितमिति भावः ॥

"सूक्ष्मशरीरस्य सूक्ष्मत्वात् तन्मात्रवद् अविशेषत्वं कुतो न ?" इति शङ्का, घोरत्वादिविशेषयुक्तेन्द्रियात्मकत्वाद् विशेषत्वम् इति समाधानम् इति निष्कर्षः ॥ ❀ ॥

परार्धमवतारयितुं शङ्कते—नन्विति । एतदेव=सूक्ष्मशरीरमेव, भोगायतनम्=ऐहिकामुष्मिकसुखदुःखभोगाधिकरणम्, आयतनम् अधिकरणम् आश्रयः स्थानम् इत्यनर्थान्तरम् । कृतमिति[1] । अलमित्यर्थः । तथा च प्रधानपरिणामभेदेन जीवस्य दृश्यमानस्थूलशरीरकल्पनम् अनुपयोगि सूक्ष्मशरीरोत्पादनेनैव भोगनिर्वाहादिति भावः ॥

संसरतीति । अत्र पूर्वार्धोक्तं "महदादिसूक्ष्मपर्यन्तम्" इति कर्तृपदम् । "संसरति" इत्यस्य "संसरणं करोति" इत्यर्थः । संसरणं च स्वाऽदृष्टोपनिबद्धशरीरपरिग्रहः, । पूर्वपूर्वस्थूलशरीरपरित्यागेन अदृष्टनिबन्धनाऽपराऽपरस्थूलशरीरविशेषधारणम् इति यावत् । एवं च—"सूक्ष्मशरीरं संसरति=पूर्वपूर्वस्थूलदेहपरित्यागेन स्थूलदेहान्तरं परिगृह्णातीत्यर्थः, एतदेवाह—उपात्तमुपात्तमिति । गृहीतं गृहीतमित्यर्थः । षाट्कौशिकम्=पूर्वोक्तषट्कोशानां समूहरूपम्, स्थूलमित्यर्थः । हायं हायम्=हित्वा हित्वा, णमुलन्तमेतत्[2], उपादत्ते=परिगृह्णाति ॥

---

१ नियतत्वेनावश्यकत्वात् सूक्ष्मशरीरमेवास्तु, कृतं षाट्कौशिकेन परिदृश्यमानेन शरीरेणेत्यत आह—संसरतीति । २ हायं हायमिति क्त्वार्थे "आभीक्ष्ण्ये णमुल् च" इत्यनुशासनात् णमुलन्तं पदमित्यर्थः ।

कस्मात् ? "निरुपभोगं" यतः षाट्कौशिकं शरीरं निरुपभोगं, तस्मात्संसरति ।

ननु धर्माधर्मनिमित्तः संसारः, न च सूक्ष्मशरीरस्यास्ति तद्योगः तत्कथं संसरति ? इत्यत आह–'भावैरधिवासितं'=धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि=भावाः, तदन्विता बुद्धिः'

---

सूक्ष्मशरीरेण स्थूलशरीरस्य ग्राह्यत्वे हेतुगर्भविशेषणानि क्रमेण उत्थापयति—कस्मादिति । निरुपभोगम्=धर्माधर्मभोगासमर्थम्, तस्मात्=स्थूलशरीरं विना भोगासामर्थ्यात्, संसरति=तत्तद्धर्माधर्मनिबन्धनं स्थूलशरीरं परिगृह्णाति ॥

"भावैरधिवासितम्" इति विशेषणम् उत्थापयितुं शङ्कते—नन्विति । तद्योगः=धर्माधर्मसंबन्धः, इत्यर्थः । अयमाशयः—शरीरधारणं धर्माधर्मनिमित्तकम्, धर्माधर्मौ पुनर्यदीयौ तदीयमेव शरीरसंबन्धम् उत्पादयतः, न हि अन्यदीयधर्माधर्माभ्याम् अन्यदीयं शरीरम् उत्पद्यते, "तौ च आत्मन एव" इति वैशेषिकतार्किकमीमांसकैरभ्युपगतत्वात्, सूक्ष्मशरीरस्य तत्संबन्धानभ्युपगमाच्च, कथम् आत्मनिष्ठौ धर्माधर्मौ सूक्ष्मशरीरस्य स्थूलशरीरसंबन्धम् उत्पादयेतामिति ॥ तत्=तस्मात्, संसरति=शरीरान्तरं गृह्णाति, "सूक्ष्मशरीरम्" इति शेषः । सूक्ष्मशरीरस्य धर्माधर्मरूपशरीरग्रहणहेत्वभावादिति भावः ॥ संसारश्च मिथ्याधीप्रभवा वासना" इति प्रामाण्यवादे गदाधरः । स्वादृष्टोपनिबद्धशरीरपरिग्रहः संसारः" इति तु कातन्त्रपरिशिष्टव्याख्यायां गोपीनाथः ॥ "भावैरधिवासितम्" इत्यत्र भावपदार्थं विवृणोति—धर्माधर्मेति । तदन्विताबुद्धिरिति । तथाच साङ्ख्याचार्यैर्न वैशेषिकादिवत् धर्माधर्मयोः पुरुषधर्मत्वमङ्गीक्रियते, किंतु बुद्धिधर्मत्वमेवेति भावः । सूक्ष्मशरीरस्य बाह्यकर्मानुष्ठानमेव नास्ति, धर्माधर्मादयो बौद्धा भावास्तु तदधिवसन्त्येव बुद्धिद्वारेण, तत एव चास्य संसरणम् इति सरलार्थः । "यद् यत् प्राकृतं तत् तत्सर्वं त्रिगु-

---

१ न भुज्यते उपभोगः=सुखदुःखसाक्षात्कारादिर्येन सूक्ष्मशरीरेण तत् निरुपभोगं=सूक्ष्मं शरीरं संसरत्येव केवलं न तु भोगः कश्चित् स्थूलशरीरं विनेति भावः । २ ननु "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये तु संयान्ति यथा कर्म यथा श्रुतम् ॥" इत्यादिवचनात् धर्मादिनिमित्तः आत्मनः संसारः सूक्ष्मशरीरस्य तदभावात्कथं संसरणमिति चेत् तत्राह—भावैरिति । भावैः=उक्तैर्धर्माद्यैरधिवासिता बुद्धिस्तदन्वितं लिङ्गं=सूक्ष्मशरीरं देहिनस्तादृशलिङ्गशरीरावच्छिन्ना इत्यर्थः । ३ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ मानसं मनसैवायमुपभुंक्ते शुभाशुभम् । वाचा वाचाकृतं कर्म कायेनैव तु कायिकम् ॥ शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ इत्याद्युक्तेरिति भावः ।

तदन्वितं च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं, यथा—सुरभिचम्पकसंपर्काद्वस्त्रं तदामोदवासितं भवति। तस्माद्भावैरेवाधिवासितत्वात्संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठति? इत्यत आह—"लिङ्गम्" लयं गच्छतीति लिङ्गं, हेतुमत्त्वेन चास्य लिङ्गत्वमिति भावः॥ ४०॥

स्यादेतद्—बुद्धिरेका साहङ्कारेन्द्रिया कस्मान्न संसरति? कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह—

---

णमयत्वात् धर्माधर्मादिसत्त्वकमेव, गुणातीतत्वात् पुरुष एको वस्तुतो धर्माधर्माद्यसंबद्धः, तस्मात् सूक्ष्मत्वेऽपि लिङ्गशरीरस्य धर्मादिसंबन्धोऽस्त्येवेति सिद्धान्तः॥

ननु भावानां सूक्ष्मशरीरैकदेशवृत्तित्वे कथं सूक्ष्मशरीरस्य भावाधिवासितत्वमित्यतः तदवगमयति—यथेति। यथा वस्त्रैकदेशवर्तिनाऽपि चम्पकसंबन्धेन समग्रमेव वस्त्रं सुवासितं भवति तथेत्यर्थः। तस्मादिति। यस्माद् धर्माधर्मयोर्न पुरुषनिष्ठत्वम्, तस्मादित्यर्थः। तथा च धर्माधर्मयोः सूक्ष्मशरीरनिष्ठतया तददृष्टनिबन्धनः स्थूलशरीरसंबन्धः सूक्ष्मशरीरस्यैव समुचित इति भावः॥

"आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते" इत्यनेन वाक्येन सूक्ष्मशरीरस्य यद् महाप्रलयपर्यन्तस्थायित्वमुक्तम्, तदुपपादनाय शङ्कते—कस्मादिति। यथा प्रधानं महाप्रलयेऽपि तिष्ठति तथा सूक्ष्मशरीरमपि कस्मात् महाप्रलयेऽपि न तिष्ठतीत्यर्थः। लयगामित्वे हेतुमाह—हेतुमत्त्वेनेति। जन्यत्वेनेत्यर्थः। तथाच "यद् यज् जन्यभावात्मकम्, तत् तद् विनाशि" इति व्याप्तेः सूक्ष्मशरीरस्य परिणामविशेषत्वेन जन्यभावत्वावश्यकत्वाद् अवश्यं विनाशित्वमिति भावः। "यद् यद् हेतुमत्=कारणवत् कार्यमिति यावत्, तस्य स्वकारणे लयोऽवश्यंभावी" इति व्याप्तिग्रहात् प्रधानकार्यस्य सर्वस्यापि साक्षात् परम्परया वा प्रधाने लयः, ततश्च सूक्ष्मशरीरस्यापि लयो महाप्रलये भवत्येवेति निष्कर्षः॥ ४०॥

## अथ सूक्ष्मशरीरे प्रमाणोपन्यासः।

कृतम्=अलम्। अप्रामाणिकेनेति। प्रत्यक्षानुपलब्धेनेति भावः। अनुमानात् श्रुतिस्मृतिभ्यां च तत्सिद्धेर्हि प्रतिपादयिष्यमाणत्वात्॥ ॐ॥

---

१ परम्परासंबन्धे दृष्टान्तमाह—यथेति। २ आशङ्कापूर्वकं लिङ्गपदव्युत्पत्तिमाह—कस्मादिति। 'हेतुमत्सावयवम्' इत्यत्र जन्यत्वमुक्तमित्यतो लीयत इत्यर्थः। अहेतुमत्त्वादिना प्रधानस्य लयाभाव उक्तः।

**चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया।**
**तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्॥ ४१॥**

लिङ्गनाद्=ज्ञापनाद्बुद्ध्यादयो'="लिङ्गं" तदनाश्रितं "न तिष्ठति"। जन्मप्रायणान्तराले बुद्ध्यादयः—प्रत्युत्पन्नशरीरा-

---

प्राप्ताप्राप्तविवेकधर्माधिकरणत्वाद् बुद्धिरेव संसरतु किमन्तर्गडुना गौरवपराहतेन सूक्ष्मदेहेनेत्यत आह—चित्रमिति॥ यथा आश्रयम्=पटभित्त्यादिकम्, ऋते=विना, शिल्पिनिर्मितं चित्रम्=आलेख्यम्, न तिष्ठति, किं तु तदाश्रित्यैव तिष्ठति, यथा च स्थाण्वादिभ्योविना छाया=तत्तद्भावानुग आतपाभावः, न तिष्ठति, आदिपदात् सशाखवृक्षलतागुल्मादिः। तत्र स्थाणुः=शाखापत्रादिरहितस्तरुः। तद्वत्=तथा, अविशेषैः=सूक्ष्मैः शरीरैः, विना, निराश्रयम्=निराधारम्, लिङ्गम्=बुद्ध्यादिकम्, न तिष्ठति, किं तु सूक्ष्मशरीराश्रितमेव तिष्ठति, अतस्तेषां धर्मिभूतं सूक्ष्मशरीरमावश्यकम्॥ ❀॥

अन्ये तु लिङ्गशरीरस्य स्थूलशरीरापेक्षापरतया कारिकामिमां व्याचक्षते। तथाहि—लिङ्गम्=सूक्ष्मशरीरम्, विशेषैः=स्थूलदेहैः, विना निराश्रयं सत् न तिष्ठति, किं तु स्थूलशरीरमाश्रित्यैव तिष्ठति, अतो न लिङ्गशरीरेण स्थूलशरीरस्य अन्यथा सिद्धिरिति भावः। शेषं प्राग्वत्॥ इति॥ ४१॥ ❀॥

अत्र लिङ्गशब्दस्य व्युत्पत्तिलभ्यो बुद्ध्यादिरर्थ इत्याह—लिङ्गनादिति। "लिगि गतौ" इत्यस्य णिजन्तं रूपम्, गत्यर्थानां च ज्ञानार्थत्वाङ्गीकाराद्[1] व्याचष्टे—ज्ञापनादिति। प्रधानानुमापकत्वादित्यर्थः। तत्=बुद्ध्यादिकम्, अनाश्रितम्=शरीरविशेषानाश्रितम्॥ लिङ्गदेहस्याप्रामाणिकत्वं निरसितुं व्याप्तिपक्षधर्मताज्ञानपूर्वकम् अनुमानं सूक्ष्मशरीरावस्थानसाधकम् उपन्यस्यति—जन्मेत्यादिना। प्रायणं च जन्म च जन्मप्रायणे, तयोः अन्तराले, मध्ये इति विग्रहः। अल्पाच्त्वात् जन्मशब्दस्य पूर्वनिपातः। प्रायणम्=मरणं मृत्युः। तथाच—मरणानन्तरं पुनः स्थूलशरीरपरिग्रहपर्यन्तं बुद्ध्यादीनाम् आश्रयभूतं वर्तमानं किंचित् शरीरं वाच्यम्, यत्र यत्र वर्तमानपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वम्, तत्र तत्र वर्तमानशरीराश्रितत्वमस्ति, यथा स्थूलशरीरवृत्तिबुद्ध्यादयः, एवं च दृश्यमानशरीरबाधे यच्छरीरं तदेव सूक्ष्मशरीरमिति भावः। "प्रत्युत्पन्न-" इत्यस्य "वर्तमान" इत्यर्थः॥ ❀॥

अन्ये तु—"तत् अनाश्रितं न तिष्ठति जन्म प्रयाणान्तराले" इति संबन्धं मत्वा—"जन्मेति। आदिसर्गे बुद्ध्यादीनां प्रधानाद् उत्पत्तिर्जन्म। प्रायणम्=पुरुषस्य अपवर्गानन्तरं तेषां लयः। तदन्तराले=तन्मध्ये, बुद्ध्यादि, क्षणमपि अनाश्रितम्=शरीरविशेषम् अनाश्रित्य, न तिष्ठति=न वर्तते, इत्यर्थः।

---

१ "सर्वे गत्यर्था ज्ञानार्थाः" "सर्वे गत्यर्थाः प्राप्त्यर्थाः" इति हि तत्र तत्र शाब्दिकाः।

श्रिताः—प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वाद्-दृश्यमान-बुद्ध्यादिवत्। "विना विशेषैः" इति। सूक्ष्मैः शरीरैरित्यर्थः। आगमश्चात्र भवति—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्"

तथाच—शरीरमात्रं भौतिकम्, तत्र स्थूलभूतानां स्थूलशरीरारम्भकत्वम्, सूक्ष्मभूतानां सूक्ष्मशरीरारम्भकत्वम्। एवं च—यदि सूक्ष्मभूतानां तन्मात्राणां संबन्धो नाङ्गीक्रियते, तदा बुद्ध्यादीनां शरीरविशेषानाश्रयेण स्थित्यापत्तिरिति भावः। ननु बुद्ध्यादेः शरीरविशेषानवलम्बनेन स्थित्यभावे किं मानमित्यत-स्तत्रानुमानं प्रमाणमाह—बुद्ध्यादय इति। प्रत्युत्पन्नेति। उत्पन्नैकैकशरीराश्रिता इत्यर्थः। अत्र हेतुः—बुद्ध्यादित्वादिति। ननु पञ्चतन्मात्रोत्पत्तेः प्राक् महदहङ्कारैकादशेन्द्रियमात्रोत्पत्तिसमये बुद्ध्यादेः शरीरविशेषानाश्रितत्वाद् व्यभिचार इत्यतो विशेषितम्—"प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति" इति। उत्पन्नैकैकपञ्चतन्मात्रसमानकालीनत्वे सतीत्यर्थः। तथाच यत्र पञ्चतन्मात्रोत्पत्तिसमानकालीनबुद्ध्यादित्वं तत्रैव शरीरविशेषाश्रितत्वनियमात् पञ्चतन्मात्रोत्पत्तिप्रागवस्थायां तदसमानकालीनत्वान्न व्यभिचार इति भावः। दृष्टान्त-माह—दृश्यमानेति॥

ननु पञ्चतन्मात्राण्यपहाय बुद्ध्यादित्रयोदशकस्यैव सूक्ष्मशरीरत्वमुच्यतामिति चेत्। न, भूतसंबन्धमन्तरेण शरीरारम्भासंभवात्। अत एव "अविशेषैः= सूक्ष्मैः शरीरैः" इति व्याख्यानेन तन्मात्राणामेव शरीरत्वमुक्तम्। यथा— "सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे। वियति धनुःसंस्थाना दृश्यन्ते तदिन्द्रधनुः॥" इत्युक्तविविधवर्णरविकरजलधरादिसमुदायात्मकशक्रायुधशरीरं सुसूक्ष्मसलिलकणमयजलधरेणैवारभ्यते, तमन्तरेण विविधवर्णानां रविकराणां शक्रायुधशरीरारम्भकत्वाभावेन अनाश्रितत्वम्, तद्वत् सूक्ष्मभूतानाम् अवयवत्वानङ्गीकारे सूक्ष्मशरीरास्तित्वमेव व्याहन्यते॥ इत्येवं व्याचक्षते॥ ॐ॥

ननु मा भूत् सूक्ष्मशरीरमित्यत आह—आगमश्चात्रेति[1]। अत्र=सूक्ष्मशरीर-सद्भावे। अङ्गुष्ठमात्रमिति। "ततः सत्यवतः कायात् पाशबद्धं वशंगतम्"। इति श्लोकस्य पूर्वार्धम्। पुरुषम्=सत्यवतः सूक्ष्मशरीरम्। सूक्ष्मशरीरस्य अङ्गुष्ठ-मात्रपरिमाणत्वे मानाभावात् "अङ्गुष्ठमात्र"पदं सूक्ष्मपरमित्याह—अङ्गुष्ठ-मात्रत्वेनेति। अङ्गुष्ठमात्रत्वं च पुरुषस्यात्र सूक्ष्मत्वोपलक्षकत्वमित्युक्तम्, "हृद्यपेक्षया तु मनुष्याधिकारत्वात्" (वे० १।३।२५।) इति बादरायणीय-सूत्रेण तु मनुष्यहृदयसंबद्धत्वात्[2] पुरुषस्य अङ्गुष्ठमात्रत्वमुक्तम्। आत्मनो

१ सूक्ष्मशरीरे आगमोऽपि मानमित्याह—आगमश्चेति। २ मनुष्याणां हृदयं प्रायेणाङ्गुष्ठमात्रं भवति, तदेवावस्थानमपेक्ष्य व्यापकः सन्नपि पुरुषः अङ्गुष्ठमात्र उच्यत इत्यर्थः। यदाहुः कठोपनिषद्भाष्ये श्रीशङ्कराचार्याः—अङ्गुष्ठपरिमाणं हृदयपुण्डरीकं तच्छिद्र-वर्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रः, अङ्गुष्ठमात्रवंशपर्वमध्यवर्त्यम्बरवत्" इति। ब्रह्मसूत्र-भाष्येऽपि—"मनुष्याणां च नियतपरिमाणः कायः। औचित्येन नियतपरिमाण-

इति । अङ्गुष्ठमात्रत्वं सूक्ष्मतामुपलक्षयति । आत्मनो निष्कर्षासंभवेन सूक्ष्ममेव शरीरं पुरुषः । तदपि हि पुरि=स्थूलशरीरे शेते ॥ ४१ ॥

एवं सूक्ष्मशरीरास्तित्वमुपपाद्य—यथा संसरति, येन च हेतुना, तदुभयमाह—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।**
**प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

---

दिक्कालाद्यनवच्छिन्नस्य न प्राक् प्रवेशो देहे, न वा पश्चात् ततो निष्कर्षणं संभावयितुं शक्यत इति सूक्ष्मशरीरस्य उत्क्रान्तिगत्यागतिप्रभृतिकर्माणीत्याह—आत्मन इति । पुरुषपदस्यात्मवाचित्वाङ्गीकारे निष्कर्षकर्मत्वानुपपत्तिरिति पुरुषशब्देन सूक्ष्मशरीरस्यैव ग्रहणमिति भावः । "तदन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" (वे० ३।१।१) इत्यादिबादरायणीयसूत्रेणापि भूतसूक्ष्मैः सहितस्यैव इन्द्रियादेरुत्क्रमणमुक्तम्, तदप्यत्रानुसन्धेयम् । सूक्ष्ममेव शरीरमिति । तथा च पुरुषपदमेव शरीरपरम् अङ्गुष्ठमात्रत्वविशेषणात् तस्य सूक्ष्मत्वलाभः । ननु सूक्ष्मशरीरस्य पुरुषत्वं कथम्? तस्य आत्मनि निरूढत्वादित्यत आह—तदपीति । तथाच "पुरि=शरीरे, शेते" इति पुरुषशब्दो निरुक्तः । स च आत्मनि योगरूढः, इह तु सूक्ष्मशरीरे यौगिक एव, तस्यापि स्थूलशरीरशायित्वादिति भावः ॥ ४१ ॥

वृत्तस्य वर्तिष्यमानेन सङ्गतिमाह—एवमिति ।

यथा=येन प्रकारेण, संसरति=एकस्मात् स्थूलदेहात् स्थूलदेहान्तरं प्राप्नोति । तदुभयम्=संसरणप्रकारं संसरणहेतुं चेत्यर्थः ॥ ॐ ॥

पुरुषार्थहेतुकमिति ॥ पुरुषार्थहेतुकम्=पुरुषार्थः=भोगापवर्गलक्षणः, हेतुः=प्रयोजको यस्य तादृशम्, इदं लिङ्गम्=सूक्ष्मशरीरम्, निमित्तनैमित्तिकप्रसङ्गेन=निमित्तम्—धर्मादि, नैमित्तिकम्—धर्मादिकारणकं स्थूलदेहादि, तदुभयप्रसङ्गेन—तदुभयसंबन्धेन, प्रकृतेर्विभुत्वयोगात्, नटवद् व्यवतिष्ठते=नटो यथा बहूनि विविधानि रूपाणि गृहीत्वा व्यवहरति, तथेदमपि देवादिशरीरं परिगृह्य व्यवहरति । तथाच पुराणम्—"वैश्वरूप्यात् प्रधानस्य परिणामोऽयमीदृशः" इति । इत्यन्वयः । प्रकृत्यापूरापगमाभ्यां महदल्पादिकं सर्वमुपपद्यत इति भावः ॥ ४२ ॥ ॐ ॥

---

मेव चैषामङ्गुष्ठमात्रं हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः ।" इति ।

१ शरीरान्निष्क्रमणम्=उत्क्रान्तिः, । लोकान्तरे गमनं=गतिः, ततश्चाऽऽगमनम्=आगतिः ।

पुरुषार्थेन हेतुना प्रयुक्तं, निमित्तं=धर्मादि, नैमित्तिकं=तेषु तेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः। स हि धर्मादिनिमित्त-प्रभवः। निमित्तं च नैमित्तिकं च तत्र यः प्रसङ्गः=प्रसक्तिस्तेन। "नटवद् व्यवतिष्ठते" "लिङ्गं"=सूक्ष्मशरीरं, यथा हि—नटस्तां तां भूमिकां विधाय परशुरामो वाऽजातशत्रुर्वा वत्सराजो वा भवति—एवं तत्तस्थूलशरीरग्रहणाद् देवो वा, मनुष्यो वा, पशुर्वा, वनस्पतिर्वा, भवति सूक्ष्मं शरीरमित्यर्थः। कुतस्त्यः पुनरस्येदृशो महिमा? इत्यत आह—"प्रकृतेर्विभुत्वयोगात्"। तथा च पुराणं—"वैश्वरूप्यात्प्रधानस्य परिणामोऽयमद्भुतः" इति ॥ ४२ ॥

"निमित्तनैमित्तिकप्रसङ्गेन" इत्युक्तं, तत्र निमित्तं नैमित्तिकं च विभजते—

---

"पुरुषार्थहेतुकम्" इति पदं व्याचष्टे—पुरुषार्थेनेति। भोगापवर्गलक्षणेनेत्यर्थः। प्रयुक्तम्=प्रवर्तितम्। तथाच पुरुषार्थो हेतुः प्रयोजको यस्येति विग्रहोऽनेन सूचितः। सूक्ष्मशरीरस्य संसरणे पुरुषार्थ एव उद्देश्यम्, धर्मादि च प्रवर्तकम्=कारणम्, स्थूलशरीरग्रहणं च धर्मादिकृतम् अव्यवहितं फलम्, धर्मादौ स्थूलशरीरग्रहणकारणप्रसङ्गेन स्थूलशरीरग्रहणम्, गृहीत्वा चेदृशं शरीरं पुनर्धर्मादौ प्रवृत्तिरिति संसरणानुपरम आविवेकात्, अन्योन्याश्रयदोषस्तु अनादित्वेन संसृतेर्बीजाङ्कुरवद् वारणीय इत्यभिप्रायः[1]॥ निमित्तशब्दं व्याचष्टे—धर्माधर्मादीति। आदिना ईश्वरनियोगो गृह्यते। तत्त्वज्ञानेन क्षीणकर्मणामपि केषांचिद् ईश्वरनियोगेन देहान्तरपरिग्रहस्य पुराणेतिहासादिभ्योऽवगतेः। तथा हि—अपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः संबभूवेति। एवमन्येऽपि॥

नैमित्तिकम्=धर्माधर्मादिनिमित्तप्रभवम्। तच्च शरीरपरिग्रहरूपम्, इत्याह—तेषु तेष्विति। सत्त्वबहुलेषु रजोबहुलेषु तमोबहुलेष्वित्यर्थः। निकायेषु=प्राणिसंहतिस्थूलशरीरेषु मध्ये। यथायथम्=यथार्हम्,। येन धर्मेण अधर्मेण वा यो यादृशं षाट्कौशिकं शरीरमर्हति, तस्य तादृशशरीरपरिग्रह इत्यर्थः॥

षाट्कौशिकशरीरपरिग्रहस्य नैमित्तिकत्वं साधयति—स हीति। निमित्तनैमित्तिकशब्दौ व्याख्याय सम्प्रति प्रसङ्गपदार्थविवरणाय समस्तपदविग्रहमाह—निमित्तं चेति। तत्र=तद्विषये,। प्रसक्तिः=अनुरक्तिरित्यर्थः। यद्यपि अधर्म-

---

१ यदाहुरुदयनाचार्याः—"मूलक्षतिकरीमाहुरनवस्थां हि दूषणम्। वस्त्वानन्त्यादशक्तेश्च नानवस्था हि दूषणम्॥" इति॥

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः ।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥**

"वैकृताः"=वैकृतिकाः=नैमित्तिकाः "प्राकृतिकाः"=स्वाभा-

---

निमित्तकतिर्यगादिशरीरे अनुरागो न संभवति, तथापि अधर्मरूपनिमित्तानुरागात् नैमित्तिकेऽपि पाक्षिकानुरागोऽवश्यंभावीति बोध्यम् ॥

**नटवदिति** । नटः=नाटकाभिनेता, तत्सदृश इत्यर्थः । तत्सादृश्यमुपपादयति—**यथा हीति** । तां तां भूमिकाम्=तत्तद्वेशरचनाम् । अजातशत्रुः=स्वयम् अविद्वेषणशीलत्वात् न जातः शत्रुर्यस्य सः, युधिष्ठिर इत्यर्थः । वत्सराजः= उदयनः । परशुरामो वीरचरितादौ, युधिष्ठिरो वेणीसंहारादौ, वत्सराजश्च रत्नावल्यादावित्यनुसन्धेयम् ॥ भवति=तत्तच्छरीरमहंत्वेनाभिमन्यते ।

**कुतस्त्य इति** । कुतो भवः कुतस्त्यः,—कस्माद् भवतीत्यर्थः । अस्य= लिङ्गशरीरस्य, महिमा=प्रभावः । सूक्ष्मशरीरस्य कुतो वैश्वरूप्यम्? इत्यत आह—**प्रकृतेरिति** । विभुत्वयोगात्=सर्वगतत्वधर्मसंबन्धात् । तथाच प्रकृतेः सर्वगततया सर्वभूतेषु संबन्धो न विचित्र इति भावः । प्रकृतेर्महिम्नो लिङ्गशरीरस्य मनुष्यदेवतिर्यगादिविलक्षणविलक्षणशरीराणां नास्ति दुर्लभतेति तत्त्वम् ॥ **वैश्वरूप्यादिति** । समस्तविकारस्वरूपत्वादित्यर्थः । अद्भुतः=विचित्रत्वेन अनुभूयमान इत्यर्थः । वस्तुतो न विचित्र इति भावः । तत्र अद्भुतः= प्रकृत्यापूरापगमाभ्यां महदल्पपरिमाणवान् वैश्वरूप्यम्=नानारूपत्वम् ॥ ४३ ॥

## अथ निमित्तनैमित्तिकविभागः ।

**सांसिद्धिकाश्चेति** ॥ करणाश्रयिणः=करणम्—बुद्धिम्, आश्रयन्त इति करणाश्रयिणः=बुद्धिनिष्ठाः, धर्माद्या अष्टौ भावाः, सांसिद्धिकाः,=प्राकृतिकाः स्वाभाविकाः सहजा इति यावत्, चकारात् असांसिद्धिकाश्च, दृष्टाः,—"सांख्याचार्याणां तन्त्रेषु" इति शेषः । तत्र के सांसिद्धिकाः? के वा असांसिद्धिकाः? इत्यत्राह—**प्राकृतिका वैकृताश्चेति** । ये प्राकृतिकाः=स्वाभाविकाः, त एव सांसिद्धिकाः, ये पुनर्वैकृताः=नैमित्तिकाः, ते असांसिद्धिकाः । **तथाच** कपिलमहर्षेः धर्मज्ञानवैराग्यैश्वर्यरूपाः चत्वारो भावाः स्वाभाविकत्वात् सांसिद्धिकाः । प्राचेतसादीनां धर्मादयः चत्वारो भावाः उपासनादिनिमित्तोत्पन्नतया नैमित्तिकत्वेन असांसिद्धिकाः । **एवं** सर्वेषामेव अधर्माज्ञानावैराग्यानैश्वर्यरूपाः चत्वारो भावाः ब्रह्महत्यादिनिमित्तोत्पन्नत्वेन नैमित्तिकतया असांसिद्धिका एव । **तथा** कार्याश्रयिणः=शरीरनिष्ठाः, कललाद्या अष्टौ भावाश्च सांसिद्धिकाः असांसिद्धिकाश्च दृष्टा इत्यन्वयः । **अत्र कारिकायां** निमित्तस्य धर्मादेः नैमित्तिकस्य शरीरावस्थाभेदस्य च सांसिद्धिकत्वाऽसांसिद्धिकत्वेन विभागो दर्शितः । भावानां विभागो निमित्तविभागः, शरीराणां विभागश्च नैमित्तिकविभाग इति सारम् ॥ ४३ ॥ ॐ ॥

विकाः="सांसिद्धिका भावाः" यथा-सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसंपन्नः प्रादुर्बभूवेति स्मरन्ति। "वैकृताश्च भावाः"=असांसिद्धिकाः=उपायानुष्ठानोत्पन्नाः-यथा प्राचेतसप्रभृतीनां महर्षीणाम्। एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि। एते कुत्र दृष्टाः? इत्यत आह-"करणाश्रयिण" इति। करणं=बुद्धिसत्त्वं, कार्यं=शरीरं, तदाश्रयिणः। तस्यावस्थाः=कल-

---

"वैकृताः" इति पदं व्याचष्टे—नैमित्तिका इति। क्रियाविशेषनिमित्ता इत्यर्थः। क्रियाविशेषमन्तरेण उत्पन्नस्य प्राकृतत्वे क्रियाविशेषजन्यस्य वैकृतत्वावश्यकत्वादिति भावः। एतच्च वैकृतशब्दनिर्वचनमात्रम्, नतु वैकृतानामपि सांसिद्धिकत्वार्थम्। अत एव व्याख्यास्यत्यनुपदं वैकृताश्च भावा असांसिद्धिका इति॥

प्राकृतिकानामेव सांसिद्धिकत्वमाह—प्राकृतिकाः—स्वाभाविकाः, सांसिद्धिका भावा इति। ये प्राकृतिकाः=स्वाभाविकाः, ते सांसिद्धिका भावा इति योजना। तदुदाहरणमाह—सर्गादाविति। सृष्ट्यादावित्यर्थः। स्मरन्तीति। तथाच कपिले धर्मादयो भावाः स्वाभाविकत्वात् सांसिद्धा इत्यर्थः॥

वैकृतस्य असांसिद्धिकत्वमाह—वैकृताश्चेति। तेषाम् असांसिद्धिकत्वे बीजं नैमित्तिकत्वं दर्शयति—उपायेति। उपायस्य=देवताराधनादेः साधनस्य, अनुष्ठानेन उत्पन्ना इत्यर्थः। तथा च ये भावाः कस्याश्चिद् देवताया आराधनाद्युपायेन उत्पन्ना भवन्ति ते वैकृता इत्युच्यन्ते ते एव च असांसिद्धिका अनुष्ठानलक्षणनिमित्तजन्यत्वात् इति फलितम्। तदुदाहरणमाह—यथेति। प्राचेतसः=रामायणप्रवक्ता वाल्मीकिमुनिः। प्रचेतसोऽपत्यम् प्राचेतसः। अण्॥

अधर्मादीनां चतुर्णां बुद्धिधर्माणां कुत्रापि स्वाभाविकत्वाभावेन सांसिद्धिकत्वासंभवात् सर्वदैव नैमित्तिकत्वेन असांसिद्धिकत्वमेवेत्याह—एवमिति। असांसिद्धिका इत्यर्थः॥

अन्ये तु एवम् अधर्मादयः सांसिद्धिका असांसिद्धिकाश्चेति व्याचक्षते, तत्र सांसिद्धिकानाम् अधर्मादिचतुर्णामुदाहरणं मृग्यम्॥

एतदुक्तं भवति—धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि निमित्तरूपाः करणाश्रिता भावाः, तत्कृता संसृतिः। एतेच भावा द्विविधाः स्वभावसिद्धाः पुरुषप्रयत्नसाध्याश्च। स्वभावसिद्धाः प्राकृतिका उच्यन्ते, प्रयत्नसाध्याश्च वैकृतिका उच्यन्ते। प्राकृतिकानां धर्मादीनाम् उत्तमभावानामुदाहरणं—भगवान् कपिलः। वैकृतिकानां च तेषामेवोदाहरणं भगवान् वाल्मीकिः। अधमानामधर्मादिभावानां चोभयविधानां स्वाभाविकास्वाभाविकानामुदाहरणानि स्वयमूह्यानीति॥

"कार्याश्रयिणश्च" इत्यग्रांशं व्याचष्टे—कार्यमिति। शरीरम्=स्थूलशरीरम्, लौकिककृतिसाध्यत्वात्। के ते भावाः? इत्यत्राह—कललाद्या इति।

लबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो विनिर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति ॥ ४३ ॥

---

गर्भस्थस्येति । एतेन गर्भस्थस्य कललादयः चत्वारो भावाः स्वाभाविकत्वात् सांसिद्धिकाः, बाल्यादिभावास्तु पानभोजनकृतशरीरोपचयापचयनिमित्तकत्वाद् असांसिद्धिका इति दर्शितम् ।

तत्र कललम्=चर्माकारगर्भवेष्टनम्, तच्च पञ्चरात्रेण भवति, "पञ्चरात्रेण कललम्" इत्युक्तेः । बुद्बुदः=सूक्ष्मः स्फोटः, स च सप्तरात्रेण भवति, "बुद्बुदः सप्तरात्रेण" इत्युक्तेः । मांसपेशी=रक्तमांसात्मकपिण्डी, सा च द्विसप्ताहात् परतो जायते, "द्विसप्ताहात् भवेत् पेशी रक्तमांसचिता दृढा" इत्युक्तेः । अनन्तरम् हस्ताण्डादीनाम्, अङ्गानाम्, प्रत्यङ्गानाम्=अङ्गुल्यादीनाम्, व्यूहः= समूहो जायते ॥ एताश्च अवस्थाः क्रमेण भवन्तीति चत्वारो गर्भस्थस्य देह-धर्माः ॥ ननु अङ्गप्रत्यङ्गानामपि क्रमेणैव जननौचित्याद् आधिक्यमेव संभवेत् कुतः "चत्वारः" इत्युच्यते ? इति चेत् । न, अङ्गप्रत्यङ्गानां युगपदेव जायमानताया आयुर्वेदसिद्धत्वात् । तथाच—"गर्भस्य हि संभवतः पूर्वं शिरः संभवति" इत्याह शौनकः, "हृदयम्" इति कृतवीर्यः, "नाभिः" इति पाराशर्यः" इत्यादिना नानामतभेदम् अभिधाय आह स शारीरस्थाने भगवान् सुश्रुतः—

"तत्तु न सम्यक्, "सर्वाङ्गप्रत्यङ्गानि युगपत् संभवन्ति" इत्याह धन्वन्तरि-र्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते, वंशाङ्कुरवत् चूतफलवच्च" इति ॥ कललम्= शुक्रशोणितयोर्मिश्रणम् । बुद्बुदः=शुक्रस्याधोभावेन शोणितस्योर्ध्वभावेनाव-स्थानम् । मांसपेशी=त्वगाद्यर्थं पिण्डाद्याकारिता । कंडरा=सुपुम्णाधारमेरु-दण्डः । अङ्गं=शिरःकरचरणादि । प्रत्यङ्गम्=अङ्गुल्यादि । एते सर्वे व्यूहाः= संस्थानरूपा गर्भस्थस्यावस्थाः, ततो निर्गतस्य बाल्यकैशोरपौगण्डयौवनवा-र्धकादि । सप्तमे जीवेन संयुक्तः, नवमे पूर्वजातीः स्मरति शुभाशुभं च । इति तत्र तत्र पौराणिकाः ।

अन्ये तु—"कललम्=वीर्यरजसोर्मिश्रीभावः, बुद्बुदः=तयोर्वर्तुलीभावः, मांसम्=घनीभावः, पेशी=मांसस्य कोशीभावरूपो भागः, करण्डः=ततोऽ-प्यधिककठिनतरो भागः, सर्वथा पूर्णत्वं च अङ्गानाम् अङ्गप्रत्यङ्गव्यूहविभाग-शब्देन उच्यते" इति व्याचक्षते ॥ ❀ ॥

बाल्यम्=स्पष्टशब्दोच्चारणसामर्थ्यात् प्रागवस्था । कौमारम्=श्मश्रूद्गमात् पूर्वावस्था । यौवनम्=इन्द्रियप्राबल्यावस्था । वार्द्धकम्=ग्लानेन्द्रियत्वम् ।

---

१ एवं च—"आ षोडशाद् भवेद् बालस्तरुणस्तत उच्यते । वृद्धस्तु सप्ततेरूर्ध्वं वर्षीयान् नवतेः परः ॥" इति चतुर्धा विभागो वयसो बोध्यः । अत एव सुश्रुता-चार्यैरुक्तम्—"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे । समत्वागतवीर्यौ तौ जानीयान्निपुणो भिषक् ॥" इति ।

अवगतानि निमित्तनैमित्तिकानि, कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥

"धर्मेण गमनमूर्ध्वं"=द्युप्रभृतिषु लोकेषु, "गमनमधस्ताद्भव-

---

यद्यपि प्रतिवर्षमेव शरीरावस्थाभेद उपलभ्यते, तथापि बाल्याद्यवस्थाया एव आगमिकत्वात् "चत्वारो धर्माः" इत्युक्तम्। यदाहुः—"बालत्वं च कुमारत्वं यौवनं वृद्धतामपि। ततश्च मरणं तत्तद्धर्ममाप्नोति मानवः" इति ॥ ४३ ॥

## अथ धर्माद्यष्टभावानां फलनिरूपणम्।

अवगतानि=बुद्धानि, शास्त्रतो ज्ञातानीति यावत् ॥ ॐ ॥

धर्मेणेति ॥ धर्मेण=केवलशुद्धेन परहिंसावर्जितेन जपादिना, शुक्लकृष्णेन च परहिंसापूर्वकेण यागादिना, ऊर्ध्वम्=ब्राह्मप्राजापत्यैन्द्रगान्धर्वयाज्ञपैत्रादिलोकेषु, गमनं भवति, अधर्मेण=शास्त्रनिषिद्धाचरणेन परपीडादिना, अधस्तात्=रौरवमहारौरववह्निवैतरणीकुम्भीपाकतामिस्राऽन्धतामिस्रादिनरकेषु, गमनं भवति, ज्ञानेन=आत्मसाक्षात्कारेण, अपवर्गः=मोक्षः, विपर्ययात्=अज्ञानात्, बन्धः=प्राकृतिकवैकृतिकदाक्षिणभेदेन त्रिविधः, इष्यते=मतः, "सांख्याचार्यैः" इति शेषः ॥ "शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्। उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥" इति विश्वरूपाचार्याः ॥ ४४ ॥

"ऊर्ध्वम्" इति पदं व्याचष्टे—द्युप्रभृतिष्विति। स्वर्गादिषु इत्यर्थः भूर्भुवःस्वर्महर्जनस्तपःसत्येषु। "अधस्तात्" इति पदं विवृणोति—सुतला-

---

१ अतल-वितल-महातल-सुतल-तलातल-रसातल-पातालेष्वित्यर्थः। आदौ सुतलग्रहणं तु काञ्चित्कतादृशपुराणपाठाभिप्रायेणेति ज्ञेयम्। मृत्युलोकादुपरि ब्रह्मलोकपर्यन्तं यावन्तो लोकास्ते सर्वे पुण्यकृतां लोका उच्यन्ते, ये खलु पुण्यकारिणः सन्ति सात्त्विकाः ते स्वनिधनानन्तरं तान् स्वर्गादीनुच्चलोकान् गच्छन्ति, ये च रजोगुणशालिनः सन्ति मानवास्ते नान्यत्र गत्वा इहैव मध्य (मनुष्य) लोके जन्म धारयन्ति, ये तु खलु तामसाः पापनिरताः सन्ति नरास्ते पुनः स्वमरणानन्तरं कीट-पतङ्ग-पशु-पक्षि-वृक्षादिनीचयोनिषु जन्म लभन्ते, रौरव-कुम्भीपाकादिनरकान् प्राप्य तत्रत्यानि यमयातनाया घोराणि बहूनि कष्टानि भुञ्जते च, इत्ययमत्र सर्वशास्त्रसम्मतस्सरलो निष्कर्षः। भगवती श्रुतिरपि तथा प्रशास्ति—"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्—ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्—श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' (छा० ५।१०।७) इत्यादि ॥

त्यधर्मेण" सुतलादिषु, "ज्ञानेन चापवर्गः" तावदेव प्रकृतिरारभ्यते न यावद्विवेकख्यातिं करोति, अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेकख्यातिमन्तं पुरुषं प्रति निवर्तते । यदाहुः— "विवेकख्यातिपर्यन्तं ज्ञेयं प्रकृतिचेष्टितम्" इति । "विपर्ययाद्"= अतत्त्वज्ञानाद्, "इष्यते बन्धः" । स च त्रिविधः—प्राकृतिको, वैकृतिको, दाक्षिणकश्चेति । तत्र प्रकृतावात्मज्ञानाद् ये प्रकृतिमुपासते— तेषां प्राकृतिको बन्धो—यः पुराणे प्रकृतिलयान् प्रत्युच्यते—"पूर्ण

---

दिष्विति । नरकादिष्वित्यर्थः । आदिना पशुपक्षिसर्पस्थावरादियोनौ च "पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन" इत्यादि श्रुतेरिति भावः । ज्ञानेन=प्रकृतिपुरुषयोर्विभिन्नत्वज्ञानेन, अपवर्गः=जीवन्मुक्तिः, देहपाते तु विदेहकैवल्यम्, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये" इति श्रुतेः । ननु जीवतस्तस्य बुद्ध्या उपनीतविषयाणां साक्षित्वावश्यकत्वात् बन्धाद् अविशिष्टतया कथं ज्ञानेनापवर्गः संभवति ? तत्राह—तावदेवेति । आरभते= पुरुषभोगाय प्रवर्तते, विवेकख्यातिम्=प्रकृतिपुरुषयोः पृथक्त्वप्रतीतिम्, कृतकृत्यतया=अवश्यकर्तव्यस्य निष्पादिततया, पुरुषापवर्गो हि मुख्यप्रयोजनतया प्रकृतेः अवश्यकर्तव्यः, स चेन्निष्पादितः तदा तं प्रति प्रवृत्तिरनर्थिकेति भावः । विवेकख्यातिं प्रति शनैः शनैः प्रकृतिः स्वयं प्रवर्तते, तदेव हि तस्या अन्तिमम् उद्देश्यम्, तच्च साधयित्वा साध्यान्तराभावाद् यस्य पुरुषस्य अपवर्गो जातः ततो निवर्तते इति तत्त्वम् । अयमेवार्थोऽन्यैरप्युक्त इति दर्शयति—यदाहुरिति । तत्तत्पुरुषविवेकख्यातिपर्यन्तं तत्तत्पुरुषविषये प्रकृतिव्यापारस्य अवस्थानमित्यर्थः ॥ "विपर्ययात्" इति पदं व्याचष्टे—अतत्त्वज्ञानादिति । देहाध्यासरूपादित्यर्थः । स च=बन्धः । तत्र=त्रिषु बन्धेषु मध्ये । आत्मज्ञानात्="प्रकृतिरेव आत्मा" इति ज्ञानात् । प्रकृतिलयान्=प्रकृतौ लयः=अवधानं येषां ते प्रकृतिलयाः, तान् प्रकृतिलयान्, यद्वा—प्रकृतावात्मत्वेन अभिमतायां लयो विलयो येषां तानित्यर्थः । तत्र शरीरात्मवादिनः चार्वाकाद्याः प्राकृतिकविपर्ययबद्धा इति ज्ञेयम् । ये पुनः प्रकृतिमपि=जगन्मूलभूतां निरस्य, तद्विका-

---

१ "त्रिविधो मोक्षः" इति भाष्योक्तेः अपवर्गोऽपि त्रिविधः । तदुक्तम्— "आदौ तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् । कृच्छ्रक्षयात्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥" इति । रागक्षयः=विषयेष्वनासक्तिः तत्र वशीकारसंज्ञाख्यं वैराग्यं हेतुः । कृच्छ्रक्षयो नाम=सर्वत्र वासनोच्छित्तिः, यत्रासंप्रज्ञातसमाधेर्हेतुता । सर्वकर्मक्षयलक्षणो ज्ञानेनोक्तः सः । तदुक्तम्—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति च तदुक्तम्— ज्ञानेन चापवर्ग इति । विदेहकैवल्यमित्यर्थः । इत्यन्ये ।

शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः" इति। वैकारिको बन्धस्तेषां—ये विकारानेव=भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते, तान्प्रतीदमुच्यते—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः।
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः॥"
"ते खल्वमी विदेहा येषां वैकृतिको बन्धः" इति॥

इष्टापूर्तेन दाक्षिणकः—पुरुषतत्त्वानभिज्ञो हीष्टापूर्तकारी कामोपहतमना बध्यत इति॥ ४४॥

---

रान्=स्थूलभूतादीन् एवोपासते ते वैकृतिकाः, एतेऽपि चार्वाकभेदा एवेति बोध्यम्। "ये विकारानेव पुरुषबुद्ध्या उपासते तेषां वैकारिको बन्धः" इत्यन्वयः। "विकारान्" इत्यस्य विवरणम्—"भूतेन्द्रियाहङ्कारबुद्धीः" इति॥

दशेति॥ इन्द्रियचिन्तकाः=आत्मबुद्ध्या इन्द्रियोपासकाः, देहपातानन्तरं दशमन्वन्तराणि यावत्, इह=इन्द्रियेषु, लीनाः सन्तः, तिष्ठन्ति। तत्र एकसप्तति (७१) वारं चतुर्युगेषु व्यतीतेषु सत्सु एकं मन्वन्तरं भवति, "एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः। कृतत्रेतादिमनोरन्तरमुच्यते॥" इत्युक्तेः। मनवः=स्वायंभुवादयः, तेषाम् अन्तरम्=अवकाशः, स्थितिरिति यावत्, मन्वन्तरम्। भौतिकाः=आत्मबुद्ध्या भूतोपासकाः, पूर्णं शतं मन्वन्तरं यावत्, स्वध्येयभूतेषु लीनाः तिष्ठन्ति, आभिमानिकाः=अहङ्कारोपासकाः, सहस्रं (१०००) मन्वन्तरं यावत्, अहङ्कारतत्त्वे लीनास्तिष्ठन्ति,॥ बौद्धाः=आत्मबुद्ध्या बुद्ध्युपासकाः, दशसहस्राणि (१००००) मन्वन्तराणि यावत्, विगतज्वराः[1]=विगतसन्तापाः सन्तः, स्वध्येये महत्तत्त्वे लीनास्तिष्ठन्ति। अतः परं "पूर्णं शतं सहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः" इति प्रागुक्तम् उच्चारणीयम्। अव्यक्तचिन्तकाः=प्रकृतिभावनापराः, प्रधानस्य आत्मबुद्ध्या उपासका इति यावत्, पूर्णम्=न मात्रयापि न्यूनमित्यर्थः, शतसहस्रम्=शतसहस्र (१०००००) संख्याकम् एकलक्षमिति यावत् मन्वन्तरं[2] यावत्, स्वध्येये प्रधाने लीनाः तिष्ठन्ति। "कालाध्वनोः—" इति सर्वत्र द्वितीया॥ येषां वैकृतिकः=तदाख्यः, बन्धोऽस्ति, तेऽमी विदेहाः=विविधदेहविशिष्टाः, जन्ममरणप्रवाहपतितत्वात्॥

दक्षिणासंबद्धाः=दाक्षिणकाः, तल्लक्षणं विशदयति—इष्टापूर्त्तेनेति। इष्टम्=यागादि, पूर्तम्=खातादि, यदुक्तम्—"अग्निहोत्रं तपः सत्यं वेदानां

---

१ विगतज्वरा इति पञ्चानामेव विशेषणम्। २ मन्वन्तराणामिति शेषः।

चानुपालनम् । आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥ वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥" इति । इष्टं च पूर्तं च अनयोः समाहारः इष्टापूर्तं तेन । समाहारद्वन्द्वे पूर्वपदस्य दीर्घः । दाक्षिणिकः=दक्षिणमार्गेण धूमादिना चन्द्रलोकादिप्राप्तत्वरूपो बन्ध इत्यर्थः । ननु "तद्विपर्ययाद्बन्धः" इत्यनेन "आत्मतत्त्वज्ञानाभाववतामेव बन्धः" इत्युक्तम् । इष्टापूर्तकारिणां पुरुषतत्त्वज्ञानाभाववत्त्वं कथं निर्णीतम्, न ह्येते प्राकृतिकवैकृतिकवत् अनात्मनि आत्मबुद्धिं कुर्वन्तीत्यत आह—पुरुषतत्त्वानभिज्ञ इति । तथा च स्वर्गादिफलकामनया तत्साधनकर्मानुष्ठानादेव अमीषां पुरुषतत्त्वानभिज्ञत्वं निर्णीयते, पुरुषस्य स्वर्गाद्यसंभवात्, तदेवाह—कामोपहतमना इति । एतेन फलकामनामन्तरेण इष्टापूर्तकारिणां न दाक्षिणको बन्धः, किंतु क्रमशः पापक्षयाद् अपवर्ग एवेति दर्शितम् । कामेन=कामनया, उपहतम्=आविष्टम्, नष्टम्, मनो यस्य तथाभूतइष्टापूर्तकारी पुरुषतत्त्वानभिज्ञः सन् बध्यते=दाक्षिणकबन्धेन बद्धो भवतीति योजना । तथाच—दक्षिणायाम्=कर्मसमाप्तौ द्रव्यदानरूपायां कर्माङ्गभूतायाम्, प्रसृतः दाक्षिणकः [ वुण् तद्धितः ] । यद्वा—दक्षिणमार्गेण चन्द्रलोकाभिगामी दाक्षिणकः, "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति" ( छा० ५।१०।३ ) इति श्रुत्या इष्टादिकारिणां धूमादिदक्षिणमार्गगामित्वप्रतिपादनादिति द्विधा दाक्षिणकशब्दाभिधेय ऊह्यः ॥ ४४ ॥

१ जीवोऽयम् अविद्यायाः शक्तित्रयेण सततमावृतो वरीवर्ति, मल—विक्षेपाऽऽवरणाभिधानेनेति तत्र तत्र व्याख्यातारः । तत्र निष्कामकर्मणा मलिनाभिधो दोषो निवर्तते, किमुक्तम् ? यदायं सर्वथैव कामनां विहाय कर्तव्यत्वधियैव सर्वाणि कर्माण्यनुतिष्ठति तदाऽस्यान्तःकरणीया मलिनसंस्कारजनिता दोषा अपयन्ति, स्वच्छं निर्मलं चास्यान्तःकरणं जायते, उपासनया च चित्तचाञ्चल्यरूपो विक्षेपनामा दोषो दूरीभवति, ज्ञानेन च स्वरूपविस्मृतिरूपस्याज्ञानापरपर्यायस्यावरणदोषस्य निवृत्तिर्भवतीति चित्तीयत्रिविधदोषाणां निवृत्तये त्रीण्येवेमानि पृथक् पृथगौषधानि । तत्र सकामिनो नरा धूममार्गेण स्वर्गादिलोकान् प्राप्य क्षीणे पुण्ये पुनर्जन्म गृह्णन्ति । निष्कामकर्मिण उपासकाश्च अर्चिरादिमार्गेण स्वोपास्यलोकं गत्वा स्वस्वाधिकारानुसारं सालोक्य-सामीप्य-सारूप्य-सायुज्यान्यतमां मुक्तिमधिगच्छन्ति । तत्र निष्कामकर्माणि उपासना च मलविक्षेपौ दूरीकृत्य ज्ञानद्वारा मुक्तिं जनयन्ति ज्ञानं तु साक्षात्, इति [1]शाङ्करसिद्धान्तः, । यद्यपि मोक्षस्य साक्षात्साधनं ज्ञानमेव, तथापि ज्ञानप्राप्त्यधिकारप्रदातृत्वात् कर्मोपासने अपि अवश्यं तत्साधने इति निर्विवादमित्यौपनिषदः पन्था इति दिक् ॥ "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥" इत्याद्याः स्मृतयोऽप्यत्रानुसंधेया इत्यास्तां विस्तरः ॥

1 यथा स्वार्थं सिद्धौ नापेक्ष्यन्ते आश्रमकर्माणि, एवमुत्पत्तावपि नापेक्ष्येरन्निति शङ्का स्यात् । न च 'विविदिषन्ति यज्ञेन—' इत्यादिविरोधः, न ह्येष विधिरपि तु वर्तमाना-

**वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात्।**
**ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः॥ ४५॥**

वैराग्यादिति ॥ वैराग्यात्=दृष्टानुश्रविकविषयेषु अलंबुद्धिविशेषरूपात् केवलाद् वैराग्यात्, प्रकृतिलयः=प्रकृतौ तत्कार्येषु महदादिषु च लयः, येषाम् आत्मज्ञानं न जातम्, तेषां तथा प्रागेव च ऐहलौकिक पारलौकिकसुखे वितृष्णा (अनिच्छा) जाता, तथा ते प्रकृतौ तत्कार्येषु महत्तत्त्वादिष्वेव वा आत्मबुद्ध्या तेषाम् उपासनां कुर्वन्ति, तेषां तत्तदुपासनानुसारेण प्रकृत्यादिषु लयो भवति, भूयश्च संसारे आगमनं भवतीति सरलार्थः । राजसात्=रजःकार्यात्, रागात्=कर्मफलाभिलाषात्, संसारः=स्थूलशरीरपरिग्रहः, कर्मफलोपभोगस्य शरीरसाध्यत्वादिति भावः । चंद्रिकाकारस्तु—"रागात्=कामक्रोधादेः, संसारो भवति। तत्र यागादिगोचरात् स्वर्गादिः, स्त्र्यादिगोचरादिह लोकभोग एवेति विवेकः" इत्याह । ऐश्वर्यात्=अणिमादिलक्षणात्, अविघातः=इच्छाया

---

पदिशः। स च स्तुत्याप्युपपद्यते। अपि च चतस्रः प्रतिपत्तयो ब्रह्मणि। प्रथमा तावदुपनिषद्वाक्यश्रवणमात्राद्भवति, यां किलाचक्षते श्रवणमिति । द्वितीया मीमांसासहिता तस्मादेवोपनिषद्वाक्याद्यामाचक्षते मननमिति। तृतीया चिन्तासन्ततिमयी यामाचक्षते निदिध्यासनमिति। चतुर्थी साक्षात्कारवती वृत्तिरूपा, नान्तरीयकं हि तस्याः कैवल्यमिति । तत्राद्ये तावत्प्रतिपत्ती विदितपदतदर्थस्य विदितवाक्यगतिगोचरन्यायस्य च पुंस उपपद्येते एवेति न तत्र कर्मापेक्षा। ते एव च तृतीयां प्रतिपत्तिं प्रसुवाते इति न तत्रापि कर्मापेक्षा। सा चादरनैरन्तर्यदीर्घकालसेविता साक्षात्कारवतीमाधत्त एवेति प्रतिपत्तिं चतुर्थीमिति न तत्राप्यस्ति कर्मापेक्षा, तत्रान्तरीयकं च कैवल्यमिति न तस्यापि कर्मापेक्षा। तदेवं प्रमाणतः प्रमेयतश्चोत्पत्तौ च कार्ये च न ज्ञानस्य कर्मापेक्षेति बीजं शङ्कायाम्। एवं प्राप्त उच्यते— उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा, 'विविदिषन्ति यज्ञेन'–इति श्रुतेः। न चेदं वर्तमानापदेशत्वात्स्तुतिमात्रम्, अपूर्वत्वादर्थस्य। यथा यस्य पर्णमयी जुहूर्भवतीति पर्णमयताविधिरपूर्वत्वान्नत्वयं वर्तमानापदेशः, अनुवादानुपपत्तेः। तस्मादुत्पत्तौ विद्यायाः शमादिवत् कर्माण्यपेक्षन्ते । तत्राप्येवंविदिति विद्यास्वरूपसंयोगादन्तरङ्गाणि विद्योत्पादे शमादीनि, बहिरङ्गाणि तु कर्माणि विविदिषासंयोगात् । तथाहि—आश्रमविहितनित्यकर्मानुष्ठानाद्धर्मसमुत्पादस्ततः पाप्मा विलीयते। स हि तत्त्वतोऽनित्याशुचिदुःखानात्मनि संसारे सति नित्यशुचिसुखादिलक्षणेन विभ्रमेण मलिनयति चित्तसत्त्वम्, अधर्मनिबन्धनत्वाद्विभ्रमाणाम् अतः पाप्मनः प्रक्षये प्रत्यक्षोपपत्तिप्रवृत्तिद्वारापावरणे सति प्रत्यक्षोपपत्तिभ्यां संसारस्य तात्त्विकीमनित्याशुचिदुःखरूपतामप्रत्यूहं विनिश्चिनोति। ततोऽस्मिन्ननभिरतिसंज्ञं वैराग्यमुपजायते। ततस्तज्जिहासाऽस्योपावर्तते। ततो हानोपायं पर्येषते। पर्येषमाणश्चात्मतत्त्वज्ञानमस्योपाय इति शास्त्रादाचार्यवचनाच्चोपश्रुत्य तज्जिज्ञासत इति विविदिषोपहारमुखेनोत्पत्तावस्ति कर्मणामुपयोगः" इत्यादिग्रन्थेन शाङ्करमतममोद्घाटयामासुर्भामत्यां मिश्राः इति तत एवाधिकं द्रष्टव्यम्॥

"वैराग्यात्प्रकृतिलयः"—पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात्प्रकृतिलयः,=प्रकृतिग्रहणेन प्रकृतिकार्यमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते—तेष्वात्मबुद्धयोपास्यमानेषु लयः। "संसारो भवति राजसाद्रागाद्"। राजसादित्यनेन रजसो दुःखत्वात्संसारस्य दुःखता सूचिता। "ऐश्वर्यादविघातः"—इच्छायाः। ईश्वरो हि यदिच्छति तत्करोति। "विपर्ययाद्"=अनैश्वर्यात् "तद्विपर्यासः"=सर्वत्रेच्छाविघात इत्यर्थः॥ ४५॥

---

अप्रतिबन्धः, यस्य वस्तुन इच्छां करोति तदेव तस्य मिलतीति यावत्, विपर्ययात्=अनैश्वर्यात्, तद्विपर्यासः=तस्य—अविघातस्य, विपर्यासः—विघातो भवति, सर्वत्र इच्छाया विघात इत्यर्थः। यस्य वस्तुन इच्छां करोति तत् तस्य न मिलतीति यावत्॥ अत्र शास्त्रनिषिद्धविषयकरागात्प्रवृत्तिद्वारा नरकः, एवं यागादिरागात् स्वर्गादिः। रूयादिगोचराच्छास्त्रविहितकर्मकरणेनेहलोकभोगपुरःसरपरलोकप्राप्तिरिति बोध्यम्॥ ४५॥ ॐ॥

तत्त्वज्ञानवतो वैराग्यस्य न प्रकृतिलयहेतुत्वम् अतो वैराग्यं विशिनष्टि—**पुरुषेति।** **वैराग्यमात्रादिति।** वैराग्यम्=ऐहिकामुष्मिकसुखादिषु तृष्णाभावः, तन्मात्रात्। मात्रपदेन पुरुषतत्त्वजिज्ञासां व्यावर्तयति। तथाच पुरुषतत्त्वानभिज्ञस्यापि तत्त्वज्ञानेच्छया श्रवणमननादिकम् अभ्यस्यतो वैराग्यं न प्रकृतिलयहेतुरिति भावः॥

पूर्वोक्तपौराणिकवचनैकवाक्यतया प्रकृतिपदस्य न प्रकृतिमात्रपरत्वं किंतु प्रकृत्यादिपरत्वमित्याह—**प्रकृतितत्कार्येति॥** **तेष्वात्मबुद्ध्येति।** आत्मबुद्ध्या प्रकृत्युपासकस्य प्रकृतिलयः, महदाद्युपासकस्य च महदादिलय इत्यर्थः॥

संसारनिमित्तत्वं धर्मादेरुक्तं तन्न साक्षात्, किन्तु रागद्वारेत्यभिप्रायेणाह—**राजसाद् रागादिति।**

रागस्य रजोमयत्वं सिद्धमेवेति "राजसाद्" इति विशेषणम् "उष्णो वह्निः" इति वह्नेरुष्णत्वविशेषणवद् अनावश्यकमित्याशङ्क्य समाधत्ते—**संसारस्य दुःखता सूचितेति॥** दुःखहेतुतासूचनं च हेयतालाभायेत्यर्थः। "कस्य अविघातः" इत्याकाङ्क्षायां संबन्धिवाचकं पदं पूरयति—**इच्छाया इति।** इच्छाया अविघातत्वं स्वविषयसिद्ध्युपहितत्वम् तदुपपादयति—**ईश्वरो हीति॥** ४५॥

## फलसहिता अष्टौ भावाः।

(का० ४४—४५)

| निमित्तम् | नैमित्तिकम् | |
|---|---|---|
| १ धर्मात् | ऊर्ध्वगमनम्, | "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। |

---

१ प्रकृतिभावापत्तिरित्यर्थः।

२ अधर्मात् अधोगतिः, जघन्यगुणवृत्तिस्था
३ ज्ञानात् मोक्षः, अधो गच्छन्ति तामसाः ॥”
४ अज्ञानात् बन्धनम्, इति गीतासु
५ वैराग्यात् प्रकृतिलयः, गुणानेतानतीत्यत्रीन्
६ अवैराग्यात् संसारः, देही देहसमुद्भवान् ।
७ ऐश्वर्यात् इच्छानभिघातः जन्ममृत्युजरादुःखै-
८ अनैश्वर्यात् सर्वत्रेच्छाया विघातः । विंमुक्तोऽमृतमश्नुते ॥
इति च ।

## बन्धचित्रम् ।

(का० ४४—४५)

| बन्धः | अधिकारी | फलम् | कालः | व्यवस्था |
|---|---|---|---|---|
| प्राकृतः | प्रकृतेरुपासकः | प्रकृतिलयः | एकलक्षम् | प्रकृतेः आत्मबुद्ध्या उपासनाकारी |
| वैकृतः (१) | इन्द्रियेषु आत्मबुद्ध्या चिन्तकः | विगतज्वरता | दशमन्वन्तरम् | |
| वैकृतः (२) | आत्मबुद्ध्या बुद्धेरुपासकः | बुद्धौ लयः | दशसहस्रम् | |
| वैकृतः (३) | आत्मबुद्ध्या अहङ्कारोपासकः | अहङ्कारे लयः | एकसहस्रम् | |
| वैकृतः (४) | पृथिव्यादिभूतेषु आत्मबुद्ध्या उपासकः | भूतेषु लयः | शतम् | |
| दाक्षिणकः (१) | इष्टापूर्तकारी (यज्ञानुष्ठानकारी) | स्वर्गः | विधौ कथितः कालः | |
| दाक्षिणकः (२) | ईश्वरार्पणबुद्ध्या इष्टापूर्तकारी | क्रममुक्तिः | | क्रमश्चायमस्ति—प्राक् निष्कामकर्मानुष्ठानम्, ततः तेन अन्तःकरणशुद्धिः, ततः तत्त्वज्ञानम्, ततो मोक्ष इति । |

बुद्धिधर्मान्=धर्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हेयोपादेयान्दर्शयितुं प्रथमतस्तावत्समासमाह—

---

धर्मादीनिति । अष्टौ धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानवैराग्यानैश्वर्याणि । "अध्यवसायो धर्मो ज्ञानं विराग ऐश्वर्यम्—" इत्यादिकारिकोक्तान्, इत्यर्थः। भावान्=पदार्थान्, समासव्यासाभ्याम्=संक्षेपविस्ताराभ्याम्, अस्य "दर्शयितुम्" इत्यनेनान्वयः। हेयेति। अधर्मादयो मुमुक्षूणां हेयाः, धर्मादयस्तूपादेया इत्यर्थः। प्रथमतः="एष प्रत्ययसर्गः—"इति कारिका—प्रथमार्द्धेन ॥

---

१ अत्रायं निष्कर्षः—वस्तुतो निर्लेपः पुरुषः, बुद्धिरेव बन्धगर्ते तं निपातयति, संसारापवर्गावपि तस्य बुद्ध्यैव भवतः, तस्याश्च बुद्धेरष्टौ रूपाणि—चत्वारि सात्त्विकानि चत्वारि तामसानि च। तत्र अज्ञानम्, अनैश्वर्यम्, अवैराग्यम्, अधर्मश्चेति चत्वारि तस्यास्तामसानि रूपाणि, इमान्येव योगशास्त्रे 'पञ्च क्लेशाः' इत्येवं व्यवहृतानि सन्ति, तत्र हि अज्ञानम् 'अविद्या'शब्देन, अनैश्वर्यम् 'अस्मिता'शब्देन, अवैराग्यम् रागेति द्वेषेति च द्वाभ्यां शब्दाभ्याम्, अधर्मं च 'अभिनिवेश'शब्देन व्यवहृत्य पञ्च क्लेशान् परिगणयामास तत्रभवान् भगवान् पतञ्जलिः। ईश्वरेऽमी न भवन्ति जीवे च भवन्तीतीदमेवेश्वरतो जीववैशिष्ट्यम्, पञ्चक्लेशतो विनिर्मुक्तौ सत्यां नेश्वराज्जीवो भिद्यते,—सोऽपीश्वर एव भवति। सति तामसबुद्धिधर्माणां प्राबल्ये सर्वालम्बनं सर्वानुस्यूतोऽव्ययः पुरुषोऽयम् आवृतो जायते, नैव तत्कलानां प्रकाशेन भूयते, इयमेव सर्वतोऽधमा (निकृष्टा) जीवस्य दुर्दशा (दुर्गतिः)। अयमेव च जीवस्य महान् विपादः। अमीषां पञ्चानां क्लेशानां निवृत्तौ सत्यामेव पुरुषस्य कलाः प्रकाशिता भवितुमर्हन्ति नान्यथा, एषां निवृत्तिश्चैतद्विपरीतभावोदयादेव सेद्धुमर्हति, एतत्प्रतिद्वन्द्विनो भावाश्च बुद्धेश्चत्वारि सात्त्विकानि रूपाण्येव। तानि च—ज्ञानं वैराग्यम्, ऐश्वर्यं, धर्मश्चेति नामानि। एषां सति प्राबल्येऽविद्यादयः समूलं निराकृता भवन्ति, बुद्धिश्च पुरुषेऽव्यये युज्यते, अर्थात् अव्ययकलानामावरणं दूरीभवति, बुद्धौ तासां प्रकाशः प्रादुर्भवति। अव्ययपुरुषकलाश्च आनन्दविज्ञानमनःप्राणवागभिधानाः प्रथिताः सन्ति। आसु मनो विज्ञानम् आनन्दश्चेति तिस्रः कला निवृत्तिरूपाः सन्ति, मनः प्राणो वाक् चेति तिस्रश्च प्रवृत्तेः स्वरूपाः। अत्र मन उभयत्रमिलितमास्ते। इदं च मनो नेन्द्रियसहचारि मनो वर्तते, किं तु उच्चकोटिकमेवेदं मनो वरीवर्ति, यत् अव्ययपुरुषस्य मध्यस्थं मुख्यरूपम्। एतदुक्तं भवति—ज्ञानेन, वैराग्येण, ऐश्वर्येण, धर्मेण चेति चतुर्भिर्बुद्धेः सात्त्विकैः रूपैः अव्ययपुरुषस्य विज्ञानाऽऽनन्दनाम्ना प्रसिद्धे कले विकसिते भवतः पुरुषश्च स्वस्वरूपेऽवतिष्ठते इयमेव जीवस्य कृतकृत्यतेत्यास्तां विस्तरः। २ समासः=संक्षेपः, व्यासश्च तद्विपरीतो विस्तर इत्याह—संक्षेपेति।

**एष प्रत्ययसर्गो विपर्ययाऽऽशक्तितुष्टिसिद्ध्याख्यः ।**
**गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥**

प्रतीयतेऽऽनेनेति प्रत्ययो=बुद्धिः-तस्य सर्गः । तत्र विपर्ययः= अज्ञानम्=अविद्या च-बुद्धिधर्मः, अशक्तिरपि करणवैकल्यहेतुका

---

## अथ समासतो बुद्धिधर्मनिरूपणम् ।

**एष इति** ॥ विपर्ययश्च अशक्तिश्च तुष्टिश्च सिद्धिश्च आख्याः=नामानि यस्य तादृशः, एषः—गणः, प्रत्ययसर्गः=बुद्धिसृष्टिः । तस्य=बुद्धिसर्गस्य, गुणवैषम्य विमर्दात्=गुणानां वैषम्यम्=न्यूनाधिकबलता, तथा विमर्दः=गुणस्य गुणयोर्वा अभिभवः, तस्मात्, पञ्चाशत् ( ५० ) भेदा भवन्ति, इत्यन्वयः ॥ ४६ ॥ ॐ ॥

विपर्ययादीनां तत्त्वान्तरत्वनिराकरणाय प्रत्ययेति विशेषणमित्याह—**प्रतीयत इति** । निश्चीयत इत्यर्थः । **बुद्धिरिति** । बुद्धेरेव अध्यवसायाख्यव्यापारेण निश्चयसाधनत्वादिति भावः । तस्य=प्रत्ययस्य बुद्ध्यर्थकस्य । **सर्ग इति** । "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सृष्ट इत्यर्थः । धर्मादीनां बुद्धेरेव परिणामविशेषरूपत्वादिति भावः ॥ तथा च विपर्ययादीनां बुद्धिकार्यत्वेन बुद्धावन्तर्भावान्न तत्त्वान्तरत्वमिति भावः । विपर्ययः=ज्ञानवैरीत्यम्, इत्याशयेन व्याचष्टे—**अज्ञानमिति** । अज्ञानस्यैव विवरणम्—**अविद्येति** । अविद्या च अतस्मिन् तत्त्वेन ज्ञानम् । "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इति योगदर्शने पतञ्जलिः । अविद्याशब्देन अविद्याऽस्मितारागद्वेषाभिनिवेशरूपाः पञ्चापि गृह्यन्ते, "अविद्या पञ्च पर्वैषा प्रादुर्भूता महात्मनः" इति विष्णुपुराणे पञ्चप्रकाराऽविद्याया महत्तत्त्वधर्मतोक्तेः । सा=अविद्या, बुद्धिधर्मः=बुद्धेः तमःप्रभावपरिणामरूपः ॥

अशक्तेर्बुद्धिधर्मत्वं दर्शयति—**अशक्तिरपीति** । अशक्तिः=असामर्थ्यम्, पदार्थनिश्चयजनने क्रियाजनने च अक्षमत्वमिति यावत् । ननु "अयं घट एव" इत्येवं बुद्धेरध्यवसायस्य चित्संबन्धाद् निश्चयोऽवश्यंभावी, एवं "कर्तव्यमेतन्मया" इत्यध्यवसायानन्तरं प्रवृत्त्याख्यकृतौ सत्यां क्रिया च अवश्यंभाविनी, ततश्च कथं निश्चयजनने क्रियाजनने च अक्षमत्वं संभवतीत्यत आह—**करणवैकल्यहेतुकेति** । करणानाम्=त्रयोदशानाम् एकादशेन्द्रियाणां बुद्ध्यहङ्कारयोश्च, वैकल्यम्=अपटुत्वम्, स्वविषयग्राहित्वाभाव इति यावत्, हेतुः=प्रयोजकं यस्याः सेत्यर्थः । तथा च ज्ञानेन्द्रियाणां वैकल्ये विषयग्रहणस्यैव असंभवात्, मनोऽहङ्कारबुद्धिनां संकल्पाभिमानाध्यवसायानां कुतः संभवः । मनोवैकल्ये च सम्मुग्धभावेन इन्द्रियगृहीतस्यापि वस्तुनः मनोजन्यसम्यक्कल्पनस्य असंभवाद् अहङ्कारबुद्ध्योः अभिमानाध्यवसाययोर्न संभवः । अहङ्कारवैकल्ये च इन्द्रियालोचितस्यमनःसंकल्पितस्यापि 'यत्

बुद्धिधर्म एव, तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव । तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानां च धर्मादीनां ज्ञानवर्जम-

---

खलु आलोचितं मतं च तत्राहमधिकृतः" इत्यभिमानाभावात् बुद्धेरध्यवसायासंभवः । बुद्धिवैकल्ये च सुतरामेव तदसंभवः, इति न्याय्यं करणवैकल्यनिबन्धनं बुद्धेर्निश्चयाक्षमत्वम् ।

तथा स्ववैकल्ये "एतत् कर्तव्यमेव" इत्यध्यवसायासंभवात् तदनन्तरभावि प्रवृत्त्याख्यकृतिविरहेण अहङ्कारमनःकर्मेन्द्रियाणाम् अविकलत्वेऽपि न क्रियोत्पत्तिसंभवः । अहङ्कारवैकल्ये तु "शक्तः खल्वहमत्र" इत्यभिमानासंभवेन मनः सन्निहितकर्मेन्द्रियेभ्योऽपि न क्रियोत्पत्तिसंभवः । मनोवैकल्ये च "एतदेवं कर्तव्यम्" इति संकल्पासंभवाद् इन्द्रियाणां स्वविषयेषु अप्रवृत्तेः कुतः क्रियोत्पत्तिसंभवः । अत एव प्रागुक्तम्—"चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः" इति । कर्मेन्द्रियवैकल्ये तु जातायामपि बुद्धेरध्यवसायानन्तरं प्रवृत्त्याख्यकृतौ, कृते च अहङ्कारेण अभिमाने, कृतसंकल्पे च मनसि इन्द्रियाधिष्ठातरि सति, कर्मेन्द्रियाणां वैमुख्यात् नितरां न क्रियोत्पत्तिसंभवः, इति न्याय्यमेव करणवैकल्यनिबन्धनं बुद्धेः क्रियाजननाक्षमत्वमिति भावः ॥ यद्यपि अनया रीत्या करणवैकल्यनिबन्धना भूरिभेदाः संभवन्ति, तथापि मुमुक्षुहेयोपादेयानामेव प्रदर्शनीयत्वेन उत्तरकारिकायाम् अष्टाविंशतिभेदा एव वक्ष्यन्ते इति ध्येयम् ।

वक्ष्यमाणे इति । "उत्तरकारिकायाम्" इति शेषः । ननु "धर्मादयोऽष्टौ भावाः समासव्यासाभ्याम् अनया कारिकया दर्शिताः" इत्युक्तम्, तत् कथमुपपद्यते?, विपर्ययादिषु बुद्धिधर्मेषु धर्मादीनाम् अनुल्लेखादित्यत आह—विपर्ययेति । यथायोगम्=यथासंभवम्, धर्मादीनाम्=धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणाम्, ज्ञानवर्जम्=ज्ञानं वर्जयित्वा, [णमुलन्तमेतत्] । अन्तर्भाव इति । तथा च अज्ञानस्य विपर्ययेऽन्तर्भावः, अधर्मस्य अवैराग्यस्य अनैश्वर्यस्य च अशक्तावन्तर्भावः, धर्मवैराग्यैश्वर्याणां च तुष्टावन्तर्भावः ।

---

१ तत्र विपर्यये अधर्माज्ञानयोः प्रवेशः विपर्ययस्य नरकहेतुत्वात् । अशक्तौ अनैश्वर्यावैराग्ययोस्तस्या दुःखहेतुत्वात् । तथा चानुभवः—अहमतिदुःखी यतोऽशक्तोऽहमिति । तुष्टौ धर्मवैराग्यैश्वर्याणाम् । यतो धर्मी तुष्यति सर्वदा तथा विरक्तोऽपि ईश्वरस्तुष्यत्येवेति व्यक्तोऽर्थः । अन्ये तु विपर्ययस्याज्ञाने । करणवैकल्यं=बधिरतादिदोषः । स हेतुर्यस्या अशक्तेस्तस्या अधर्मे, तुष्टेर्धर्मे, सिद्धेर्ज्ञानेऽन्तर्भावः । अज्ञानादयस्तु बुद्धेरेवातो विपर्ययादयोऽपि न तत्त्वान्तरमित्याहुः ॥

न्तर्भावः, सिद्धौ च ज्ञानस्येति । व्यासमाह—"तस्य च भेदास्तु पञ्चाशद्" इति । कस्मात् ? "गुणवैषम्यविमर्दाद्"=गुणानां वैषम्यम्=एकैकस्याधिकबलता द्वयोर्द्वयोर्वा, एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा, ते च न्यूनाधिक्ये मन्दमध्याधिक्यमात्रतया यथा-कार्यमुन्नीयेते, तदिदं गुणानां वैषम्यं, तेनोपमर्दः=एकैकस्य न्यूनबलस्य द्वयोर्द्वयोर्वाऽभिभवः, तस्मात्' "तस्य भेदाः पञ्चाशद्" इति ॥ ४६ ॥

---

सिद्धौ च ज्ञानस्येति । "अन्तर्भावः" इत्यनुषज्यते । ज्ञानस्यैव केवलस्य सिद्धिरूपत्वादिति भावः । तस्य=प्रत्ययसर्गस्य । ननु कथमेककारणादनेककार्यो-णीत्याशङ्कते कस्मादिति । व्यासम्=विस्तारम् । गुणानाम्=सत्त्वरजस्तमसाम् । "एकैकस्य" इति वीप्सा एकैककार्यजननाभिप्रायेण । तथाच—किञ्चित् कार्यम् एकस्य अधिकबलताजन्यम्, इतरयोर्द्वयोर्द्वयोर्न्यूनबलत्वावश्यकत्वेऽपि तत् कार्यं न तज्जन्यम्, । किंचित्कार्यं पुनः द्वयोरधिकबलतानिमित्तकम्, तत्र एकस्य न्यूनबलत्वावश्यकत्वेऽपि न तत् कार्यं तन्निबन्धनम् । तथा किंचित् कार्यम् एकस्य न्यूनबलताप्रयुक्तम्, तत्र द्वयोः अधिकबलत्वावश्यकत्वेऽपि तत्कार्यं प्रति न तयोः अधिकबलता निमित्तम् । किंचिच्च कार्यं द्वयोर्न्यूनबलत्व-मेव सम्पादयति, तत्र एकस्य अधिकबलत्वावश्यकत्वेऽपि तत्कार्यं प्रति तन्न हेतुरिति भावः । द्वयोर्द्वयोः="अधिकबलता" इत्यनुषङ्गः । अग्रे च "न्यून-बलता" इत्यस्यानुषङ्गो बोध्यः ॥

ननु गुणानां न्यूनाधिकबलते कथं प्रत्येतव्ये ? इत्यत्राह—मन्दमध्येति । मन्दा=अल्पा, मध्या=अनल्पाधिका, अधिका वा मात्रा=परिमाणम् एषाम्, तद्भावो मन्दमध्याधिकमात्रता तयेत्यर्थः । यथाकार्यमिति । तथाच तत्त-त्कार्ये तत्तद्गुणानाम् अल्पांशता—अनल्पाधिकांशता—अधिकांशता दर्शनेन तदु-त्पाददशायां गुणानां न्यूनाधिकबलते अनुमेये इति भावः ॥ तेन=वैषम्येण । द्वयोर्द्वयोर्वेति । अत्र विभक्तिविपरिणामेन "न्यूनबलयोः" इत्यनुषङ्गः ॥ पदार्थं व्याख्याय वाक्यार्थमाह—तदिदमिति । उपसंहरति—तस्मा-दिति ॥ ४६ ॥

---

१ मन्दादेः कार्येऽन्वयः । यथा यदि आलस्यादिवशादीषद्ग्राहकता तदा तमस आधिक्यम् । यदि विक्षेपप्राधान्यान्मन्दग्राहकता तदा रजसः प्राधान्यम् । यदि प्रकृष्ट-ग्राहकता तदा सत्त्वस्य प्राधान्यम् । एवं सत्त्वरजसोः सत्त्वतमसोः रजस्तमसोर्वाऽऽधिक्यं बोद्धव्यम् ।

तानेव पञ्चाशद्भेदान् गणयति—

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाष्टधा सिद्धिः ॥ ४७ ॥**

अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमोमोहमहा-

---

संक्षिप्तसर्गचित्रम्।

(का० ४६)

| कारणम्; | कार्यम् |
|---|---|
| बुद्धिः, | १ विपर्ययः, (२) अशक्तिः, (३) तुष्टिः, |

अन्तर्भावचित्रम्।

(का० ४६)

| यस्मिन् अन्तर्भावः, | यस्यान्तर्भावः |
|---|---|
| (१) विपर्ययः | (१) अज्ञानम् |
| (२) अशक्तिः | (२) अनैश्वर्यावैराग्याधर्माः |
| (३) तुष्टिः | (३) धर्मवैराग्यैश्वर्याणि |
| (४) सिद्धिः | (४) ज्ञानम् |

## अथ बुद्धेः सर्गस्य पञ्चाशद्भेदाः।

तान्="तस्य च भेदास्तु पञ्चाशत्" इत्युक्तान् ॥

**पञ्चेति** ॥ विपर्ययस्य भेदाः पञ्च भवन्ति, च=पुनः, अशक्तेः अष्टाविंशतिभेदा भवन्ति, । ननु रोगादिकृतानाम् अशक्तीनां रोगसमसंख्यतया कथम् अष्टाविंशतिधाऽशक्तिस्तत्राह—करणवैकल्यादिति । बुद्ध्यादित्रयोदशकरणानामपाटवादित्यर्थः । करणानाम्=बुद्धितत्त्वैकादशेन्द्रियाणां, यद् वैकल्यम्=वधः, तस्माद् या अशक्तिः सा अष्टाविंशतिधेत्यर्थ इति चन्द्रिकाकारः । तुष्टिः नवधा=नवप्रकारा, सिद्धिः अष्टधा=अष्टप्रकारा, मिलित्वा बुद्धिसर्गस्य पञ्चाशद् भेदा जायन्ते ।

तत्र तमः, मोहः, महामोहः, तामिस्रः, अन्धतामिस्रः, इति पञ्च विपर्ययस्य भेदाः संति, अवान्तरभेदास्तु वक्ष्यन्ते । अशक्तितुष्ट्योर्भेदा अग्रे वक्ष्यन्ते ॥ ४७ ॥ ❀ ॥

**योगशास्त्रे** "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः" इति सूत्रेण विपर्ययस्य अविद्यादिपञ्चावयवत्वमुक्तं भगवता पतञ्जलिना, अत एव "क्लेशा इति पञ्चविपर्यया इति च" इति योगभाष्यकृता व्याख्यातम्, तान् पञ्च आह—अविद्येति । अविद्यादीनां स्वरूपं योगशास्त्रे स्पष्टम्—यथा—

"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" । अस्यायमर्थः—अनित्ये=नित्यत्वाभाववति, नित्यख्यातिः—नित्यत्वज्ञानम्, अशुचौ=अपवित्रे, शुचिख्यातिः=पवित्रताज्ञानम्, दुःखे=सुखत्वाभाववति, सुखख्यातिः=सुखत्वज्ञानम्, अनात्मनि=आत्मभिन्ने, आत्मख्यातिः=आत्मत्वज्ञानम्, अविद्या, अस्तीतिशेषः । तत्र अनित्ये नित्यबुद्धिर्यथा—ध्रुवा पृथिवी, ध्रुवमन्तरीक्षं ससूर्यचन्द्रतारागणम्, ध्रुवः स्वर्गः, अमृता देवा इत्यादि । द्वितीया—अशुचौ शरीरे शुचिबुद्धिः । शरीरस्य अशुचिता दर्शिता योगभाष्यकारैः—"स्थानाद् बीजादुपष्टम्भान्निष्यन्दान्निधनादपि । कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥" इति । तत्र स्थानम्=मलमूत्रादिदुर्गन्धितवस्तुपूर्णं मातुरुदरं शरीरस्य उत्पत्तिस्थानम्, उपष्टम्भः=अशितपीतादिरसभाव आश्रयः, भुक्तपीतानाम् अन्नजलादीनां परिणामरूपमपवित्रं रुधिरकफादिकं शरीरस्य आश्रय इति यावत्, अत्यन्तमपवित्रं मातापित्रो रजोवीर्यं बीजम्=शरीरस्य उपादानकारणम्, निष्यन्दः=मलमूत्रस्वेदकफाद्यपवित्रवस्तूनां शरीरात् नित्यं स्रवणम्, निधनम्=मरणम्, मृतशरीरस्पर्शे स्नानाशुद्धेः, कामिनीनाम् अङ्गरागादिभिः सुगन्धितेव मृज्जलादिभिः आधेयशौचम्, इति योगभाष्यार्थः । तृतीया—दुःखमये विषयभोगादौ सुखबुद्धिः परिणामे तस्य दुःखरूपत्वात्, तथा अनात्मनि=बुद्ध्यादौ—आत्मत्वबुद्धिश्चतुर्थी । एवं च विद्याविरोधि विपरीतज्ञानम् अविद्या इत्युक्तम्, यथार्थज्ञानं विद्या । ख्यातिः बुद्धिः ज्ञानमितिपर्यायाः ॥

"दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता ।" अयमर्थः—दृक्शक्तिः=पुरुषः, दर्शनशक्तिः=बुद्धिः, तयोः एकात्मता इव=एकपदार्थता इव, अस्मिता=अहङ्कार इत्यर्थः । अस्मितायामेव सत्यां पुरुषः "अहमस्मि सुखी दुःखी कर्ता भोक्ता" इत्यभिमन्यते । तत्र बुद्धिपुरुषयोः एकात्मता न पारमार्थिकी, किं तु आविद्यकी इति द्योतयितुं सूत्रे "इव" शब्दः । जडचैतन्ययोरेकात्मताया असंभवात् ॥

"सुखानु[१]शयी रागः" । अस्यार्थः—सुखमनुशेते विषयीकरोतीति सुखज्ञस्य सुखानुस्मृतिपूर्वकं सुखतत्साधनेषु तृष्णारूपो गर्द्धो रागसंज्ञकः क्लेश इति । यदा यस्य यादृशसुखानुभवो भवति, तदा तच्चेतसि तादृशसुखसंस्कारः, तत्साधनसंस्कारश्चोदेति, ततः संस्कारात् तस्य सुखतत्साधनयोः स्मृतिर्भवति, पुनः स्मृत्या तादृशसुखस्य तत् साधनस्य च योऽभिलाषो जायते स एव राग इति सरलार्थः ॥

"दुःखानुशयी द्वेषः" अस्यार्थः—दुःखाभिज्ञस्य दुःखतत्साधनयोर्यः क्रोधः स द्वेष इति । यदा यस्य यादृशदुःखस्य अनुभवो भवति, तदा तस्य चेतसि तादृशदुःखस्य संस्कारः, तत्संबन्धिकारणस्य च संस्कार उदेति, ततः,

१ सुखात्=सुखभोगात् अनु=अनन्तरम्—शयी=अन्तःकरणे वर्तमानो योऽभिलाषविशेषः स राग इत्यक्षरार्थः ।

मोहतामिस्रान्धतामिस्रसंज्ञकाः=पञ्च विपर्ययविशेषाः—विपर्ययप्रभवाणामस्मितादीनां विपर्ययस्वभावत्वाद्, यद्वा, यदविद्यया=विपर्ययेणावधार्यते वस्तु—अस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्ते । अत एव "पञ्चपर्वा अविद्या" इत्याह भगवान् वार्षगण्यः ॥ ४७ ॥

---

तस्मात् संस्कारात् तद्दुःखस्य तत्कारणस्य च स्मृतिर्जायते, तथा स्मृत्या च तादृशदुःखविषयिका तत्कारणविषयिका च या जिघांसा भवति स द्वेष इति सरलार्थः । हननकरणेच्छा जिघांसा । जिघांसा क्रोधः मन्युः इति पर्यायाः । दुःखज्ञातुर्जीवस्य तस्य ज्ञातदुःखस्य ज्ञातदुःखीयसाधनस्य च स्मृतिपूर्वकं तादृशदुःखविषयकः तादृशदुःखीयसाधनविषयकश्च यः क्रोधो भवति स द्वेष इति तात्पर्यम् ॥

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" । अस्यार्थः—प्राक्तनाऽनेकमरणदुःखानां संस्कारात् जायमानो मूर्खाणामिव विदुषामपि प्रसिद्धो यो मरणत्रासः सोऽभिनिवेशः, इति । अनन्तवारम् अनुभूतानि यानि प्राक्तनानि मरणदुःखानि, तेषां मरणदुःखानाम् अनुभवजन्यो यः संस्कारः स स्वरसः, तेन वाही=सदा जायमानो यो मरणत्रासः="मम अभावः कदापि माभूत्" इत्यात्मकं मरणाद् भयं सोऽभिनिवेश इति सरलार्थः ॥ ❀ ॥

यथासंख्यमिति । अविद्यायाः "तमः" इति, अस्मितायाः "मोह" इति, रागस्य "महामोह" इति, द्वेषस्य "तामिस्र" इति, अभिनिवेशस्य च "अन्धतामिस्र" इति संज्ञेत्यर्थः । तत्र योगाचार्यैः अविद्यादिसंज्ञा कृता, साङ्ख्याचार्यैश्च अविद्यादीनां तम आदिसंज्ञा कृता इति विवेकः । अत एव आचार्योऽपि उत्तरकारिकायां तम आदिसंज्ञाभिरेव अविद्यादीन् निर्देक्ष्यति । अत एव च विष्णुपुराणे—"तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥" इति पद्येन तम आदीनामेव निर्देशोऽकारि ॥

विपर्ययविशेषा इति । यद्यपि अविद्यायाः शुक्त्यादौ रजतत्वादिज्ञानप्रभृतयो बहवो विशेषाः संभवन्ति, तथापि मुमुक्षूणां हेयोपादेयानामेव विपर्ययाणां प्रदर्शनीयत्वेन पञ्चधा विभाग उपपन्न इति बोध्यम् ॥

ननु "अविद्या अतद्वति तत्प्रकारकं ज्ञानम्, अस्मिता—"अहमस्मि" इत्यभिमानिता, रागो विषयाभिलाषः, द्वेषो दुःखावहे वस्तुनि परिहार्यताज्ञानम्, अभिनिवेशः—"त्रासः" इत्येवम् अस्मितादीनाम् अविद्यातो विपर्ययात् विभिन्नता प्रतीतेः कथं तेषां विपर्ययविशेषत्वं संभवतीत्यत आह—विपर्ययप्रभवाणामिति । अज्ञानमूलकानामित्यर्थः । विपर्ययस्वभावत्वादिति । विपर्ययस्वरू-

---

१ तत्र अस्मितादीनां अवस्तुस्वभावत्वम् अवस्तुनोऽवधारणं चाविद्यया, विद्यया तु वस्तुनोऽवधारणमिति तु विदितमेव सर्वेषामिति नात्र वचनापेक्षा ।

संप्रति पञ्चानां विपर्ययभेदानामवान्तरभेदानाह—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥

"भेदः" "तमसः"=अविद्यायाः "अष्टविधः" अष्टस्वव्यक्त-महदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिः=अविद्या=तमः, अष्टविधविषयत्वात्तस्याष्टविधत्वम् । "मोहस्य च" इति । अत्रापि 'अष्टविधो भेद, इति चकारेणानुषज्यते । देवा ह्यष्टविधमैश्वर्यमासा-

---

पत्वादित्यर्थः । तथाच विपर्ययजन्यत्वेन एषां विपर्ययत्वं लाक्षणिकमिति भावः ॥ एतत्कल्पे विपर्ययस्य मुख्यलाक्षणिकभेदेन विभाग आयाति, स चायुक्तः, अस्मितादीनामपि मुख्यविपरीतस्वभावत्वस्य व्याख्यास्यमाणत्वादित्यतः कल्पान्तरमाह—यद्वेति ॥ अविद्यया=अविद्याख्यविपर्ययविभागेन, विपर्ययेण=वैपरीत्येन, विपर्ययभेदरूपया अविद्यया वा, यत् यद्रूपेण वस्तु अवधार्यते=निश्चीयते, अस्मितादयोऽपि तत्स्वभावाः=विपरीतावधारणस्वभावाः सन्तः तत्=वस्तु, तथैव अभिनिविशन्ते=विषयीकुर्वन्तीत्यर्थः । अन्ये तु—व्याचक्षते—"ननु अस्मितादीनां विपर्ययत्वं न संभवति, अनात्मस्वात्मबुद्धेरेव अविद्यात्वेन एतादृशस्य अविद्यात्वस्य अस्मितादावभावादित्याशङ्कानिरासायाह—विपर्ययप्रभवाणामिति । तथाच अस्मितादीनां विपर्ययरूपत्वाभावेऽपि विपर्ययजन्यत्वात् कार्यकारणयोश्चाऽभेदात् विपर्ययत्वोपचाराद् विपर्ययत्वव्यवहार इति भावः । ननु नैतत्संभवति, उपादानोपादेययोरेव अभेदाङ्गीकारेण विपर्ययस्य च अस्मितादिषु निमित्तकारणत्वेन उपादानत्वविरहेण अस्मितादिभिः सह अविद्याया अभेदासंभवादित्यत आह—यद्वेति । तथाच अविद्योपादानकत्वविरहेऽपि तद्विषयविषयकत्वेन अविनाभावाद् अस्मितादिषु विपर्ययत्वोपचार इति भावः ॥" पञ्चपर्वा=पञ्चप्रकारा, वार्षगण्यः=कश्चित् सांख्याचार्यः ॥ ४७ ॥

भेद इति ॥ तमसः=अविद्यायाः, मोहस्य=अस्मितायाश्च, अष्टविधो भेदः, महामोहः=रागः, दशविधः, तामिस्रः=द्वेषः, अष्टादशधा, अन्धतामिस्रः=अभिनिवेशः, तथा=अष्टादशधा, भवति, इत्यन्वयः । तदेवं विपर्ययभेदाः द्वाषष्टिरिति बोध्यम् ॥ ४८ ॥ ॐ ॥

अविद्याया अष्टविधविषयत्वेन अष्टविधस्य वक्ष्यमाणस्य सौगम्याय विषयाष्टकं प्रदर्शयति—अष्टस्विति । अव्यक्तम्=प्रधानम्, अनात्मसु=आत्मभिन्नेषु, अविद्यातमः=अविद्याऽपरपर्यायं तमः । तस्य=तमसः, । अष्टविधत्वमिति ।

---

१ एकापि सती पञ्चशाखाविशिष्टेवेत्यर्थः ।

द्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्त इति सोऽयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वाद् "अष्टविधः"। "दशविधो महामोह" इति। शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु रागः=आसक्तिः="महामोहः" स च दशविधविषयत्वाद् "दशविधः"। "तामिस्रः"=द्वेषः—"अष्टादशधा"=शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः, ऐश्वर्यं

---

प्रधानादयोऽष्टौ सन्तीति तद्विषयकस्य तमसोऽष्टविधत्वभवनस्य सुतरामायातत्वादिति भावः। चकारेण="मोहस्य च" इति कारिकास्थ "च" शब्देन। तथाच "मोहस्य च अष्टविधो भेदः" इत्यर्थः सम्पद्यते॥

अस्मितापरपर्यायस्य मोहस्य अष्टविधत्वमुपपादयितुमाह—देवा इति। अष्टविधम्=अणिमाद्यष्टनामकम्, आसाद्य=प्राप्य, अमृताभिमानिनः="वयम् अमृताः स्मः" इत्यभिमानवन्तः, आत्मीयम्=स्वकीयम्, अणिमादिकम्, शाश्वतिकम्=सदातनम्, नित्यम् अविनाशीति यावत्, अभिमन्यन्ते="अस्माकम् ऐश्वर्यं शाश्वतिकं न पुनर्मर्त्यानां योगिनामपि" इत्येवम् अभिमानं कुर्वन्ति, सोऽयम्=प्रागुक्तस्वरूपः, अस्मितामोहः=अस्मिताऽपरपर्यायो मोह इत्यर्थः। ऐश्वर्यस्य देवानामेव स्वतःसिद्धत्वाद् "देवाः" इत्युक्तम्। अष्टविधविषयत्वादिति। अणिमाद्यष्टप्रकारकैश्वर्यविषयकत्वादित्यर्थः। अष्टविधैश्वर्यस्य शाश्वतिकत्वज्ञानम् अष्टविधविषयकमेव भवतीति भावः। एवं च अमृतत्वाभाववत्यपि स्वस्मिन् अमृतत्वाभिमानः, तथा अशाश्वतिकेऽपि ऐश्वर्ये शाश्वतिकत्वाभिमानश्च अतद्वति तत्प्रकारकज्ञानत्वाद् उपपन्नम् अस्मितायाः विपर्ययविशेषत्वम् इति ध्येयम्॥

महामोहस्य लक्षणपुरःसरं दशविधतामुपपादयति—शब्दादिष्विति। दिव्यादिव्यतया=दिव्याः=अलौकिकाः योगिमात्रगम्याः तन्मात्रलक्षणाः सूक्ष्माः शब्दादयः, अदिव्याः=लौकिकाः अस्मदादिगम्याः स्थूलाः शब्दादयः। रञ्जनीयेषु=इष्टसाधनताज्ञानजन्येच्छाविषयेषु, इत्यर्थः, इष्टसाधनताज्ञानमन्तरेण विषयेच्छाया अनुत्पत्तेः। आसक्तिः=बलवती लिप्सा। महामोह इति। "रागो महामोहः" इत्यन्वयात् रागाऽपरनामा महामोह इत्यर्थः। स च=महामोहः, दशविधविषयत्वात्=दिव्यादिव्यभेदेन शब्दादिदशकविषयकत्वात्। एवं च शब्दादिषु तत्त्वतोऽनिष्टसाधनेष्वपि इष्टसाधनत्वेन ज्ञानं विपर्यय एव, अतः तन्मूलकः तद्विषयकरागरूपो महामोहो विपर्ययविशेष एवेति सिद्धमिति ध्येयम्॥

तामिस्रस्य अष्टादशविधत्वं दर्शयति—तामिस्रो द्वेष इति। द्वेषाऽपरनामा तामिस्र इत्यर्थः। रञ्जनीयाः=रागार्हाः, आसक्तिविषयाः, इच्छाविषया इति यावत्, स्वरूपतः=साक्षात् सुखसाधनत्वेन साक्षाद् दुःखविघातकत्वेन वा।

त्वणिमादिकं न स्वरूपतो रञ्जनीयं, किन्तु रञ्जनीयशब्दाद्युपायाः साधनतमाः ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति शब्दादिभिर्दशभिः सहाणिमादिकमष्टादशधेति तद्विषयो द्वेषः=तामिस्रोऽष्टादशविषयत्वाद् अष्टादशधा, इति। "तथा भवत्यन्धतामिस्रः"। "अभिनिवेशः"=अन्धतामिस्रः। "तथा" इत्यनेन "अष्टादशधा"

---

न स्वरूपत इति। साक्षात् सुखसाधनत्वेन साक्षाद् दुःखविघातकत्वेन वा, अणिमादय इच्छाविषया न भवन्तीत्यर्थः। तर्हि किमर्थं देवैरणिमादिकमिष्यते? तत्राह—किन्त्विति। रञ्जनीयशब्दाद्युपायाः=रञ्जनीयाः—इष्टसाधनत्वेन रागविषयाः, ये शब्दादयः, तेषाम् उपाया इत्यर्थः। तथाच इष्टसाधनशब्दाद्युपायत्वेन तेषां परम्परया इच्छाविषयत्वमिति भावः। एतेन "रागस्य शब्दादिदशविषयत्वाद् दशविधत्वकीर्तनमेव समुचितम्, न तु अणिमादिकम् आदाय अष्टादशविधत्वम्, अणिमादीनां स्वरूपतो रागविषयत्वाभावात्" इत्यपि दर्शितम्॥ उपस्थिताः=इन्द्रियविषयतां गताः। परस्परेणेति। "स्पर्शेन शब्दः, शब्देन च स्पर्शः" इत्येवम् अन्यतमेन, उपहन्यमानाः=निवर्त्यमानाः अनिष्टसाधनत्वेन ज्ञानविषयीक्रियमाणाः। "स्वरूपेणैव कोपनीयाः" इति परेणान्वयः। न केवलम् अन्यतमेन उपहन्यमानाः शब्दादय एव कोपनीयाः, किं तु तदुपाया अणिमादयः अपि कोपनीया भवन्तीत्याह—तदुपायाश्चेति। शब्दादीनामुपाया इत्यर्थः। स्वरूपेणैव=साक्षादेव, विषयत्वेन कोपनीयाः=द्वेषविषयाः।

अयं भावः—स्पर्शसुखम् अनुभवता मधुरोऽप्युपस्थितः शब्दो निवार्यते, तदानीं तस्य प्रतिकूलवेदनीयत्वात्, एवं बलवदिष्टसाधनतया अतिरागविषये प्रोषितसूनोः कल्याणवृत्तान्ते श्रूयमाणे सुशीतलचन्दनादिस्पर्शोऽपि निदाघे निवार्यते, मनः समाधानविघातकत्वात्, एवम् अन्यत्रापि तत्तदनुभववेलायां तदन्यः प्रतिकूलतया निवार्यते। तथाच यदि शब्दादीनाम् अन्यतमेन अन्यतमः प्रतिकूलताबोधविषयः कार्यते, तदा तस्य तदानीं साक्षाद् अनिष्टसाधनत्वेन द्वेषविषयत्वं भवत्येव। न केवलं तस्यैव द्वेषविषयत्वम्, किं तु तदभ्युपायस्यापि साक्षाद् अनिष्टोपस्थापकत्वेन द्वेषविषयत्वमेवेति॥ ❀॥

भवन्तीतीति। इति=अनेन कोपनीयसंख्याप्रदर्शनेन इत्यर्थः। अष्टादशधेतीति। इति=अस्माद्धेतोरित्यर्थः। द्वेषस्तामिस्रः=द्वेषाऽपरनामा तामिस्रः। अत्र शब्दादीनां परस्परेण उपघातवेलायाम् अन्यतमस्य बलवदिष्टसाधनत्वज्ञानं विना तदितरत्र द्वेषो न संभवति। तच्च तस्य बलवदिष्टसाधनताज्ञानं भ्रान्तिरेव, शब्दादीनां विषयाणाम् एकतमस्यापि तात्त्विकेष्टसाधनत्वाभावात्,

इत्यनुषज्यते। देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दादीन् विषयान् भुञ्जानाः—'शब्दादयो भोग्यास्तदुपायाश्चाणिमादयोऽस्माकमसुरादिभिर्मा स्मोपघानिषत' इति बिभ्यति, तदिदं भयम्=अभिनिवेशः—अन्धतामिस्रोऽष्टादशविषयत्वाद्

---

एवं च तन्मूलकः, तदितरविषयं प्रति तदभ्युपायं प्रति च द्वेषो विपर्ययघटितत्वाद् विपर्यय एवेति ध्येयम् ॥ ❀ ॥

अन्ये तु "ननु रागो हीच्छाविशेषः, स च स्वभावतः सुखे दुःखाभावे चाभिजायते, तत्साधनेषु शब्दादिषु तु तत्साधनताज्ञानद्वारा। तत्साधनताज्ञानं च शब्दादीनामिव ऐश्वर्यादीनामप्यस्ति, अतः कुतः दशविधविषयत्वमेव, ऐश्वर्याद्यष्टविषयत्वेनापि द्वेषस्येव अष्टादशविषयत्वापत्तिः, इत्याशङ्क्य—ऐश्वर्यादीनां न स्वतः रागविषयत्वं किं तु शब्दादिद्वारेणैव भवति, इति साक्षात् स्वाभीष्टसाधनानि शब्दादय एव, अतः तदुपायत्वेन तेषामेव रागविषयत्वम्, ऐश्वर्यादीनां तु सुखादिसाधनशब्दादिसाधनत्वेनेति परम्परया तत्साधनत्वम्, इति साक्षात्साधनमपेक्ष्य परम्परितसाधनानां ग्रहणाऽयोग्यतया नाष्टादशविधत्वम्, इति समाधत्ते—शब्दादयो दशेत्यादि॥ स्वरूपतः=साक्षात् सुखसाधनत्वेन, रञ्जनीयाः=इष्टाः, न तु ऐश्वर्यादीनीव परम्परितसाधनानीत्यर्थः॥ कुतश्चित् कारणात् राग एवाभिहतो द्वेषो भवति, स च अनिष्टे दुःखे सुखाभावे च स्वत एव भवति, तस्य च शब्दादिदशविधहेतुकत्वात् अणिमाद्यष्टविधैश्वर्यादिभिः प्रतिहन्यमानत्वाच्च अष्टादशविधविषयत्वम् इत्याह—ते चेत्यादि॥ इत्येवं व्याचक्षते॥ ❀ ॥

अष्टादशविषयत्वादिति। अष्टादश विषया यस्य तस्य भावस्तस्मात्। विषयत्वं च फलतत्साधनतासाधारणम्। तेन ऐश्वर्यादीनाम् उपादानताख्यविषयतावत्त्वात् अष्टादशविषयत्वसंभवो द्वेषस्येत्यवधेयम्॥

अभिनिवेशरूपान्धतामिस्रस्य स्वरूपमाह—त्रास इति। अपसरणादिहेतुः अनिष्टसाधनताज्ञानाधीनबुद्धिवृत्तिभेदः त्रासः—भयम् अन्धतामिस्रम् इति चाख्यायते। अन्धतामिस्रस्यैव अभिनिवेशापरपर्यायत्वाद् अभिनिवेशपदेनैव व्याचष्टे—अभिनिवेशस्त्रास इति। अनिष्टाविर्भावज्ञानमित्यर्थः, इत्यन्ये। मा स्मोपघानिषत-इति। न विहतिं प्रापन् इत्यर्थः। "हो हन्तेः-" इति कुत्वम्। इति=एवम्प्रकारेण, बिभ्यति=भयं कुर्वन्ति, असुरादिकृतविषयाद्युपघातरूपम् अनिष्टाविर्भावं निश्चिन्वन्तीति यावत्। असुरादिभिर्विषयापहारे कृते विषयोपघातः, बुद्धिवृत्तिकलुषीकरणाद् अणिमाद्युपघातश्च संभवतीति भावः। अष्टादशविषयत्वादिति। शब्दादिदशकम् अणिमाद्यष्टकं च आदाय अष्टादशविषयत्वं द्रष्टव्यम्। असुरादिकृतविषयाद्यष्टादशोपघातरूपस्य अनिष्टाविर्भाव

"अष्टादशधा" इति । सोऽयं पञ्चविकल्पो विपर्ययोऽवान्तरभेदाद्वाषष्टिरिति ॥ ४८ ॥

तदेवं पञ्चविपर्ययभेदानुक्त्वाऽष्टाविंशतिभेदामशक्तिमाह—

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥

---

निश्चयस्य विषयाद्यष्टादशविषयकत्वावश्यकत्वादिति भावः । विषयादीनां तात्त्विकेष्टत्वाभावात् तदुपघातस्य अनिष्टत्वज्ञानं भ्रान्तिरेवेति अन्धतामिस्रस्य विपर्ययविशेषत्वम् अक्षुण्णम् इति बोध्यम् ॥ द्वाषष्टिरिति । तमसोऽष्टौ, मोहस्याऽष्टौ, महामोहस्य दश, तामिस्रस्याऽष्टादश, अन्धतामिस्रस्यचाऽष्टादशभेदा इति तम आद्यात्मकविपर्ययस्य द्वाषष्टिर्भेदाः ॥ ४८ ॥

तमः–अविद्या ।

( १ ) तमोऽविद्या प्रधानाऽव्यक्तमहत्तत्त्वाहङ्कारेषु शब्दादिपञ्चतन्मात्रेषु च आत्मत्वबुद्धिरूपा अष्टविधा भवति, प्रधानादीनां विषयाणामष्टत्वेन तद्विषयिण्या अविद्याया अष्टविधभवनस्यार्थादायातत्वात् ॥

अस्मिता–मोहः ।

( २ ) देवतानाम् अष्टविधैश्वर्यप्राप्त्या "इदम् अणिमादिकम् अस्माकं शाश्वतिकम् ऐश्वर्यमस्ति" इत्यभिमानो भवति, तद्रूपा अस्मिता अष्टविधा भवति ॥

रागः–महामोहः ।

( ३ ) दिव्याऽदिव्यशब्दादिदशविधरञ्जनीयविषयेषु आसक्तिरूपो दशविधो महामोहो भवति ॥

द्वेषः–तामिस्रः ।

( ४ ) दिव्याऽदिव्यभेदेन दशविधाः शब्दादिविषयाः परस्परेण उपहन्यमानाः सन्तो द्वेषस्य विषया भवन्ति, अणिमाद्यष्टसिद्धयश्च स्वरूपेणैव कोपनीया भवन्ति, अतः शब्दादिदशानाम् अणिमाद्यष्टानां मिलित्वा अष्टादशानां क्रोधस्य विषयत्वात् क्रोधो [ द्वेषो ]ऽष्टादशविधो भवति ॥

अभिनिवेशः–अन्धतामिस्रः ।

( ५ ) अणिमाद्यष्टैश्वर्याणां दिव्याऽदिव्यभेदेन शब्दादिदशानां मिलित्वा अष्टादशानां विषयाणां प्राप्तौ सत्यां देवानाम् "असुरा एतान् न अपहरन्तु" इति भयं जायते, एवं भयविषयाणाम् अष्टादशविधत्वात् भय ( अन्धतामिस्रः ) मपि अष्टादशविधं भवति ॥ इति तत्त्वम् ॥ ४८ ॥

## अथाऽशक्तेरष्टाविंशतिर्भेदाः ।

एकादशेति ॥ बुद्धिवधैः=सप्तदशभिः बुद्धिदोषैः सह, एकादशेन्द्रिया-

"एकादश" इति । [ इन्द्रियवधस्य ग्रहो बुद्धिवधहेतुत्वेन, न त्वशक्तिभेदपूर्णत्वेन ] । "एकादशेन्द्रियवधाः"—

"बाधिर्यं कुण्ठिताऽन्धत्वं जडताऽजिघ्रता तथा ।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमन्दताः" ॥

यथासङ्ख्यं श्रोत्रादीनामिन्द्रियाणां वधाः । एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति । तथा चैकादशहेतुकत्वाद् "एकादशधा" बुद्धेरशक्तिरुच्यते, हेतुहेतुमतोरभेदविवक्षया

---

णाम्=श्रोत्रत्वगक्षिरसनघ्राणवाक्पाणिपादपायूपस्थमनसाम्, वधाः=वैगुण्यानि, अशक्तिः उद्दिष्टा=कथिता । कति बुद्धेः स्वरूपतो वधाः? तत्राह—तुष्टिसिद्धीनां विपर्ययात्=विपरीतरूपेण, नवानाम् अतुष्टीनाम् अष्टानाम् असिद्धीनां रूपेणेति यावत्, बुद्धेः सप्तदश ( १७ ) वधा भवन्ति । घ्नन्तीति वधाः, एकादशेन्द्रियाणां वधाः=तन्नाशकाः, इन्द्रियदोषा इति यावत् ॥ ४९ ॥ ❀ ॥

इन्द्रियदोषानाह—बाधिर्यमिति । अत्र पूर्वार्द्धे ज्ञानेन्द्रियाणाम् अपाटवम् उक्तम्, उत्तरार्द्धे कर्मेन्द्रियाणाम् इति, मनसश्च उभयेन्द्रियानुकूल्याद् अन्तेऽभिनिवेश इति भेदः । तत्र बाधिर्यम्=शब्दग्रहणापाटवम्, तच्च श्रोत्रदोषः, कुण्ठिता=स्पर्शग्रहणापाटवम्, तच्च त्वगिन्द्रियदोषः, अन्धत्वम्=रूपग्रहणापाटवम्, तच्च नेत्रदोषः, जडता=रसनाजाड्यं रसग्रहणापाटवम्, तच्च रसना दोषः येन आस्वादविघातादि, अजिघ्रता=घ्राणशक्तिराहित्यम्, तच्च घ्राण दोषः, । ज्ञानेन्द्रियपञ्चकवधान् उक्त्वा कर्मेन्द्रियपञ्चकवधान् आह—मूकता=वचनापाटवम्, तच्च वाग्दोषः, कौण्यम्=पाणीन्द्रियवैकल्यम् आदानापाटवम्, तच्च हस्तदोषः, पङ्गुत्वम्=चलनापाटवम्, तच्च पाददोषः, क्लैब्यम्=क्लीबत्वम् मैथुनासामर्थ्यम्, तच्च उपस्थेन्द्रियदोषः, उदावर्तः=मलमूत्रवायुनिःसरणरोधकरोगविशेषः, स च पायुदोषः । उभयात्मकस्य मानसेन्द्रियस्य दोषमाह—मन्दता=मूढत्वम् विचित्तत्वमिति यावत् सुखादिविषयग्रहणासामर्थ्यम्, तच्च मनोदोषः ॥

तद्धेतुका=एकादशेन्द्रियवधनिमित्ता, अशक्तिः=असामर्थ्यम्, स्वव्यापारे=अध्यवसाये । एकादशेति । पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्चेति एकादशेन्द्रियाणां वधाः=स्वस्वकर्माक्षमत्वरूपा धर्मभेदाः, तद्धेतुकत्वात् बुद्धेः स्वविषयाग्रहणमिष्यते, अतो बुद्धेरशक्तिरेकादशविधैवेत्याह—तथा चेति ॥ ननु इन्द्रियादिवधानां बुद्धेरशक्तिं प्रति हेतुत्वात् कथं तेषां बुद्धेरशक्तित्वेनाऽभिधानमित्यत आह—हेतुहेतुमतोरिति । वधस्य=हेतोः, हेतुमत्याः=वध-

---

१ बाधिर्यादिदोषदुष्टेन्द्रियैर्द्वारभूतैरनुपस्थिते तत्तद्विषये द्वारिणी बुद्धिरशक्ता पुरुषायार्थं न समर्पयतीत्यर्थः ।

च सामानाधिकरण्यम् ।

तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह—"सह बुद्धिवधैः" इति । कति बुद्धेः स्वरूपतो वधा इत्यत आह—"सप्तदश वधा बुद्धेः" इति । कुतः ? "विपर्ययात्तुष्टिसिद्धीनाम्" तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणात्—तत्प्रतियोगिकत्वान्नवधा भवन्ति, एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणादष्टौ भवन्तीति ॥ ४९ ॥

---

निमित्तवत्याः—अशक्तेः, अभेदविवक्षया=भेदाविवक्षया, "वधा=अशक्तिः" इति सामानाधिरण्यम्=उद्देश्यविधेयभावेन अभिन्नत्वप्रतिपादनम् उपपन्नमित्यर्थः ॥ इन्द्रियाणामशक्तिः कथं बुद्धेरुच्यते इत्यत आह—हेतुहेतुमतोरिति । इन्द्रियाणि हेतुः, बुद्धिर्हेतुमती । हेतुदोषो हेतुमत्युपचर्यत इत्यर्थः । सामानाधिकरण्यं च "एकादशेन्द्रियवधा" इत्यत्र । इत्यन्ये । स्वरूपतः=स्वीयधर्मविशेषात् । सह बुद्धिवधैरितीति । ये बुद्धेः सप्तदशभेदा उत्तरार्द्धे वक्ष्यन्ते, तैः सप्तदशभिः सह मिलिता एकादशभेदाः अष्टाविंशतिर्भेदाः स्युः, तथाच "शक्तिरष्टाविंशतिभेदा" इति यदुक्तम्, तत् समर्थितमिति द्रष्टव्यम् ॥

तद्विपर्ययादिति । नवविधतुष्टिव्यतिरेकादित्यर्थः । तथाच तुष्टिर्बुद्धिधर्मो बुद्धेर्वैकल्याभावे एव संभवति, वैकल्ये तु तद्व्यतिरेक इति भावः । एवं च नवविधतुष्टिप्रतिबन्धकतया तत्तन्निरूपितप्रतिबन्धकत्वेन बुद्धिदोषस्यापि नवविधत्वमित्याह—तन्निरूपणादिति । एवम् उत्तरत्रापि व्याख्येयम् ॥

अन्ये तु व्याचक्षते—तुष्टीनां भेदेऽपि कथं तद्व्यतिरेकरूपविपर्ययस्य भेद इत्यत आह—तन्निरूपणादिति । निरूपिकायाः तुष्टेर्भेदे तत्प्रतियोगिका अतुष्टयोऽपि नवेत्यर्थः । "नास्ति प्रधानम्" इति प्रतीतिः असुवर्णानाम्नी अतुष्टिः प्रथमा । एवं "नास्ति महत्तत्त्वम्" इति प्रतीतिः अनिलीनाम्नी[1] द्वितीया । "नास्त्यहङ्कारः" इति प्रतीतिः मनोज्ञानाम्नी तृतीया । "नैव सन्ति तन्मात्राणि, भूताकाशादीनि च" इति प्रतीतिः अदृष्टिनाम्नी चतुर्थी । धनार्जने प्रवृत्तिः अपरानाम्नी पञ्चमी । रक्षणे प्रवृत्तिः सुपरानाम्नी षष्ठी । तत् क्षये दोषम् अपश्यतः प्रतिपत्तिः असुनेत्रानाम्नी सप्तमी । भोगासक्तिः वसुनाडिकानाम्नी अष्टमी । हिंसादिदोषम् अपश्यतो भोगे प्रवृत्तिः अनुत्तमाम्भसिकानाम्नी नवमी, इति तुष्टेर्विपर्ययात् नव अतुष्टयो भवन्तीति भावः । एवं सिद्धिविपर्ययाद् असिद्धयोऽष्टौ भवन्ति—अध्ययनेन विना यत् किंचित् तत्त्वाविर्भावः—"अप्रतारम्" इति प्रथमा । अन्यार्थशब्दश्रवणात् जायमानं ज्ञानम् अशब्दः—

---

१ 'अज्ञानमलिना' इति नामान्तरं क्वचित् ।

तुष्टिर्नवधेत्युक्तं, ताः परिगणयति—

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभागाख्याः।
बाह्या विषयोपरमात्पञ्च च नव तुष्टयोऽभिमताः॥ ५०॥

'प्रकृतिव्यतिरिक्त आत्मास्ति' इति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्य—"आध्यात्मिक्यश्चतस्रः" तुष्टयो भवन्ति। प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्माद् "आध्यात्मिक्यः"।

---

यथाशास्त्राध्ययनानुत्पन्नत्वाद् "असुतारम्" इति द्वितीया। आगमाविरोध्यूहनं विना जायमानं ज्ञानम् "अतारतारम्" इति तृतीया। असुहृद्वाद्युपदेशात् जायमानं विपरीतं ज्ञानम् "अरम्यकम्" इति चतुर्थी। दानादिना विना अपरितुष्टाद् गुरोरुत्पन्नं वासनाऽद्यनुच्छेदकम् "असदामुदितम्" इति पञ्चमी। आध्यात्मिकशारीरकमानसादिदुःखाभिभूतस्यापि संसारेऽनुद्वेगाद् अजिज्ञासा "अप्रमोदम्" इति षष्ठी। दस्युशत्रुसरीसृपादि आधिभौतिकदुःखाभिभूतस्यापि संसारेऽनुद्वेगादजिज्ञासा अमुदितनाम्नी सप्तमी। यक्षः रक्षपिशाचग्रहादि आधिदैविकदुःखाभिभूतस्यापि संसारानलतप्तस्यापि कामिन्यासक्तस्य संसारेऽनुद्वेगादजिज्ञासा अमोदमाननाम्नी अष्टमी, इत्यष्टावसिद्धयः उक्तनवतुष्टिविपर्ययाः सप्तदश, बुद्धिवधा एकादशेन्द्रियवधाः, इत्येवं मिलित्वा अष्टाविंशतिभेदाऽशक्तिरिति भावः॥ ४९॥

## अथ तुष्टेर्नवभेदानां निरूपणम्।

आध्यात्मिक्य इति॥ प्रकृत्युपादानकालभागाख्याः=प्रकृत्यादिराख्या यासां तास्तथोक्ताः प्रकृत्यादिनामवत्यः, चतस्रः आध्यात्मिक्यः=आत्मानम् अधिकृत्य जायमाना आभ्यन्तरा इति यावत्, तुष्टयः सन्ति, बाह्याश्च तुष्टयः विषयोपरमात्=शब्दादिविषयतो वैराग्यात्, पञ्च सन्ति, इत्थम् आध्यात्मिक्यः चतस्रः बाह्याश्च पञ्च मिलित्वा नवतुष्टयः अभिमताः=इष्टाः, इत्यन्वयः॥ ५०॥ ❀॥

"प्रकृतिव्यतिरिक्तः=प्रकृतिभिन्नः, कश्चिद् आत्मास्ति" इति प्रतिपद्य=सद्गुरूपदेशात् सामान्यतो निश्चित्य, यः=पुमान्, असदुपदेशतुष्टः=असता=मिथ्याभूतेन, उपदेशेन=प्रतारकवाक्येन, तुष्टः=तस्यानायाससाध्यत्वेन कृतकृत्यताभिमानी सन्, "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्युक्तेन श्रवणमननादिना, ततः=प्रकृतितः, अस्य=आत्मनः, विवेकसाक्षात्काराय=आत्मत्वेन लोकैर्व्यवह्रियमाणेषु मध्ये "कतम आत्मा कतमा वा प्रकृतिः" इति पृथक्त्वप्रत्यक्षाय, न प्रयतते=प्रयत्नं न करोति, तस्य=असदुपदेशतुष्टस्य, चतस्र आध्यात्मिक्यः तुष्टयो भवन्तीत्यन्वयः। 'न यतते' इत्यत्र हेतुः—असदुपदेशेति।

कास्ताः ? इत्यत आह—"प्रकृत्युपादानकालभागाख्याः"=प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्र प्रकृत्याख्या तुष्टिर्यथा—कस्यचिदुपदेशे—'विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः, तं च प्रकृतिरेव करोतीति कृतं तद्ध्यानाभ्यासेन, तस्मादेवमेवाऽऽस्स्व वत्स' इति—येयमुपदेष्टव्यस्य शिष्यस्य तुष्टिः प्रकृतौ—सा तुष्टिः प्रकृत्याख्या='अम्भ' (१)इत्युच्यते।

---

तुष्टीनाम् आध्यात्मिकत्वम् उपपादयति—प्रकृतिव्यतिरिक्तमिति। यत इमाः तुष्टयः प्रकृतितो भिन्नम् आत्मानम् आदाय भवन्ति, अत इमा आध्यात्मिक्य इत्युच्यन्त इत्यर्थः। ताः=तुष्टयः। आख्या=नाम, तत्र प्रथमामाह—तत्रेति, प्रकृत्यादिषु तुष्टिषु मध्ये। असदुपदेशं दर्शयति—"कस्यचिद्-" इत्यादिना "वत्स," इत्यन्तेन। तस्य असत्त्वं तु श्रुतिविरोधाद् बोद्धव्यम्। विवेकसाक्षात्कारः=प्रकृतिपुरुषयोः पृथक्त्वेन ज्ञानम्, पुम्प्रकृत्योर्भेदस्य स्वानुभवे आनयनमिति यावत्, प्रकृतिपरिणामभेदः=प्रकृतेः=बुद्धेः, वृत्तिविशेष इत्यर्थः, प्रत्यक्षस्य बुद्धिवृत्तिविशेषत्वादिति भावः। तं च=परिणामं च,। प्रकृतिरेवेति। प्रकृतिपरिणामस्य प्रकृतिमात्रसाध्यत्वात् प्रकृतेश्च परिणाम स्वभावत्वादिति भावः। कृतम्=अलम्, ते=तव, ध्यानाभ्यासेन=निदिध्यासनेन, एवमेव=श्रवणमननादिप्रयत्नं विनैव, आस्स्व=तिष्ठ। प्रकृतौ तुष्टिः="विनाऽऽयासेन प्रकृतिरेव विवेकसाक्षात्कारं साधयिष्यति" इत्येवं प्रकृतिविषये प्रीतिः। तस्याः संज्ञान्तरमाह—अम्भ इति। उच्यते—इति। "सांख्याचार्यैः" इति शेषः॥ अन्ये तु—"तत्र=तासु चतसृषु मध्ये, तं च=विवेक साक्षात्कारं तु, प्रकृतिरेव=स्वयं न त्वन्यसापेक्षा, करोति=करिष्यति, भविष्यत्सामीप्ये लट्। तथाच साक्षात्कारस्य बुद्धिधर्मतया बुद्धेश्च प्रकृतिपरिणाम विशेषत्वात् बुद्ध्यैव साक्षात्कारस्य जनने प्रकृतेस्तत्साधनत्वम् अर्थायातम्,। "प्रकृतिरेव" इत्येवकारव्यवच्छेद्यं ध्यानाभ्यासादेर्हेतुत्वं निरस्यति। "कृतम्" इति "अलम्" इत्यर्थे अव्ययम्। ध्यानाभ्याससाध्यं नास्तीत्यर्थः। यथा मृदादेर्घटपरिणामे दण्डादिरूपकारणव्यापारापेक्षा, एवं बुद्धेस्तथा साक्षात् काररूपेण परिणामे ध्यानाभ्यासादेर्हेतुत्वम्, अन्यथा तस्य सदातनत्वापत्तिः, इत्येव अस्य उपदेशस्य असत्त्वमिति द्रष्टव्यम्। अस्याश्च तुष्टेः अम्भस (जलस्य) इव प्रसन्नत्वात् उपदेशरूपशब्दहेतुकत्वाच्च अम्भस्त्वम्, "अभि शब्दे" इति धातोः असुन्नन्तस्य शब्दहेतुकरूपार्थानुगमात्॥" इत्येवं व्याचक्षते॥ (१)॥

---

१ अम्भ इत्यादिपरिभाषा सांख्याचार्याणाम्।

'या तु प्राकृत्यपि' विवेकख्यातिर्न सा प्रकृतिमात्राद्भवति, मा भूत्—सर्वस्य सर्वदा तन्मात्रस्य सर्वान् प्रत्यविशेषात्, प्रव्रज्यायास्तु सा भवति, तस्मात्प्रव्रज्यामुपाददीथाः, कृतं ते ध्यानाभ्यासेनायुष्मन्' इत्युपदेशे या तुष्टिः—सोपादानाख्या='सलिलम्' इत्युच्यते ।

---

एतदुपदेशस्य असत्त्वं व्यञ्जयन् उपदेशान्तरं च प्रदर्शयन् उपादानाख्यां द्वितीयां तुष्टिं विवृणोति—या त्विति ॥ प्राकृती=प्रकृत्यधीनापीत्यर्थः, प्रकृतिमात्रात्=केवलायाः प्रकृतितः, न भवतीत्यर्थः । तथाच—मूलप्रकृतेः परिणतिर्न साधनान्तरसापेक्षा । प्रकृतिविकृतीनां तु बुद्ध्यादीनां परिणामो न स्वमात्राधीनः किं तु साधनान्तरसापेक्ष एव, "घटोऽयम्" इति बुद्धेरध्यवसायस्य इन्द्रियादिसापेक्षत्वदर्शनात् । तस्माद् विवेकसाक्षात्कारोऽपि साधनान्तरसापेक्ष एवेति भावः । विवेकसाक्षात्कारस्य बुद्धिमात्रसाध्यत्वे दोषमाह—मा भूदिति । सर्वस्यैव पुरुषस्य सर्वदा न भवेदित्यर्थः । तन्मात्रस्य=प्रकृतिमात्रस्य । सर्वान् प्रतीति । सर्वेष्वेव पुरुषेषु अविशेषेण विद्यमानत्वादित्यर्थः । तथाच विवेकसाक्षात्कारस्य प्रकृतिमात्रसाध्यत्वे सर्वस्य सर्वदा तत्प्रसङ्गः, सर्वस्मिन्नेव पुरुषे प्रकृतिसद्भावस्य अविशेषादिति भावः । एतेन "विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः, तं च प्रकृतिरेव करोति" इत्युपदेशस्याऽसत्त्वं प्रदर्शितम् ॥

तर्हि कतमत् साधनान्तरम् अपेक्षितव्यम् इत्यत्राह—प्रव्रज्यायास्त्विति । चतुर्थाश्रमप्रवेशादित्यर्थः । उपादीयते=फलसाधनाय गृह्यते इदम् इति उपादानम्=फलसाधनम्, तच्च प्रकृते प्रव्रज्यैव, तस्या एव "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुत्या साधनत्वस्य निर्देशात्, इति बोध्यम् । उपाददीथाः=स्वीकुर्याः । इतीति । इत्युपदेशे सति या तुष्टिः=आश्रमान्तरप्रवेशे या प्रीतिरित्यर्थः । उपादानाख्येति । उपादानम्=ग्रहणम्, तच्चात्र योग्यत्वात् चतुर्थाश्रमस्यैव अभिप्रेतमिति भावः । तस्याः तुष्टेर्नामान्तरमाह—सलिलमुच्यते इति ॥ अयं च वेदनहेतुः संन्यासो द्विविधः—जन्मापादककाम्यकर्मादित्यागमात्रात्मकः, प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेत्यन्यत्र विस्तरः ॥

अन्ये तु "प्रकृत्या निर्वृत्ता [ अण् ] प्राकृती । तथाच प्रकृतिजन्यत्वेऽपि तस्याः सहकार्य्यन्तरापेक्षाऽस्त्येव, तेन साक्षात्कारस्य न सदातनत्वापत्तिरूपदोषप्रसङ्गः । तत्सहकारिणी च प्रव्रज्यैव, सा हि सर्वानुष्ठानशून्यरूपा साक्षा-

---

१ एवकाराभ्यां विना वैराग्यं संन्यासः, सति च तस्मिन् विलम्बश्च वार्यते । तदुक्तं विश्वेश्वरीसंगृहीतस्मृतौ—"यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु । तदा संन्यासमिच्छन्ति पतितः स्याद् विपर्यये ॥" इति । बुद्ध्वाऽप्यत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः । बध्नाति वासनां भूयो नरो नासौ न गर्दभः ॥ इति वासिष्ठेऽपि ।

त्कारप्रतिबन्धककर्मानुष्ठानापसारणेन साक्षात्कारं जनयति, सति तु कर्मानुष्ठाने तत्रैव व्यग्रतया बुद्धिर्न साक्षात्कारायाऽलमिति प्रतिबन्धकनिरसनद्वारा प्रव्रज्यायाः साक्षात्कारहेतुत्वमित्याशयः । **वस्तुतः** प्रव्रज्याया अपि केवलाया न साक्षात्कारहेतुत्वम्, "न लिङ्गं धर्मकारणम्" इति मनुना लिङ्गमात्रस्य फलहेतुताया निरासात्, किं तु तत्र अनुष्ठेयध्यानाभ्यासादिनैव साक्षात्कारो भविष्यतीति कारणकारणतया प्रव्रज्याया अन्यथासिद्धत्वादेः तस्यापि असदुपदेशत्वमिति बोध्यम् । **सलिलमिति** । अङ्कुरं प्रति सलिलस्येव प्रव्रज्यायाः साक्षात्कारं प्रति सहकारित्वात् सलिलसदृशत्वम्, साक्षात्काराय च फलार्थिभिः उपादीयमानत्वाद् उपादानत्वमिति बोध्यम्" ॥ इति व्याचक्षते ॥

अपरे तु ब्रह्मसंस्थोऽमृतत्वमेति इति श्रुत्युदिता यस्य ब्रह्मणि संस्था=समाप्तिरनन्यव्यापारत्वरूपं तन्निष्ठत्वं तस्य श्रवणादिषु मुख्योऽधिकारः । "गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा । न विचारपरं चेतो यस्यासौ मृत उच्यते ॥ आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तया ।" इत्यादिस्मृतिषु सर्वदा विचारविधानात् । सा च ब्रह्मणि संस्था विना संन्यासमाश्रमान्तरस्थस्य न संभवति, स्वस्वाश्रमानुष्ठानविहितकर्मानुष्ठानवैयग्र्यादिति । एतस्मिन्नुपदेशे दोषप्रदर्शनपुरःसरं कालाख्यां तृतीयां तुष्टिं व्याचष्टे—**या त्विति** । न सद्यो निर्वाणदा=न सद्यो मुक्तिदा, उपादानमात्रेण विवेकख्यातिमुत्पादयन्ती जीवन्मुक्तिजनिका नेति यावत् । सैव=प्रव्रज्यैव । कालपरिपाकम्=फलजननोन्मुखीभूतकालम् । सिद्धिम्=विवेकख्यातिम् । विधास्यति=जनयिष्यति । यदुक्तम्—"कृषेर्वृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः । तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन ॥" इति ।

उत्तप्ततया=व्याकुलतया । **एतेन** प्रव्रज्यामात्रस्य यद् विवेकख्यातिजनकत्वं पूर्वमभिहितम्, तस्य सदोषत्वं दर्शितम् । तथात्वे प्रव्रज्याग्रहणानन्तरक्षण एव विवेकख्यातिप्रसङ्गः । कालस्य सहकारित्वे तु न तथेति भावः । या तुष्टिः= कालापेक्षायां प्रीतिः । तस्यास्तुष्टेः संज्ञान्तरमाह—**मेघ उच्यत इति** ॥

---

१ गीतासु श्रीभगवताप्युक्तम्—"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । न च संन्यसनादेव सिद्धिं समधिगच्छति ॥" वैराग्ययुक्त एव पुरुषः सन्न्यासाधिकारी भवति, वैराग्यं चान्तःकरणशुद्धौ सत्यामेव समुपजायते, अन्तःकरणशुद्धिश्च निष्कामकर्मानुष्ठानेनैव सेद्धुमर्हतीति सर्वतः प्रथमं निष्कामकर्मानुष्ठानद्वारा चित्तशुद्धिरेव संपाद्येति तत्रभवतां शास्त्रकृतां समयः । येत्वन्तरेणैव चित्तशुद्धिं "दण्डग्रहणमात्रेण नरो नारायणो भवेत्" इत्यादि प्ररोचकानि वचनान्याकर्ण्य संन्यासं गृह्णन्ति, नैव कदापि संन्यास-ज्ञाननिष्ठारूपं फलं तैरधिगन्तुं शक्यते, प्रत्युत प्रत्यवायभागिन एव ते भवन्ति, अशुद्धचित्तैः कृतः कर्मत्यागो नरक एव तान् पातयतीति शाङ्करसिद्धान्तादित्यन्यत्र विस्तरः ।
२ तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इत्यादिश्रुतेरिति भावः ।

'या तु प्रव्रज्याऽपि सद्यो न निर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति, अलमुत्तप्ततया तव इत्युपदेशे या तुष्टिः सा कालाख्या='ओघ' इत्युच्यते ।

'या तु न प्रकृतेर्न कालान्नाप्युपादानाद्विवेकख्यातिः, अपि तु

---

अन्ये तु—व्याचक्षते प्रव्रज्यामात्रस्य विवेकख्यातिहेतुत्वे प्रव्रज्याग्रहणमात्रेण विवेकख्यात्यापत्तिरूपम् उपदेशे असत्त्वप्रयोजकं दूषणमुक्तम्, तत्तु सहकार्यन्तरापेक्षाकल्पनात् परिहरन् उपदेशान्तरं दर्शयति—न सद्यो निर्वाणदेति । सद्यः=ग्रहणमात्रात्, न तु कालरूपसहकार्यन्तरापेक्षणेन, न निर्वाणदा=विवेकख्यातिजननद्वारा न मुक्तिदेत्यर्थः । तथाच "कृपेर्वृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः । तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन" ॥ इति शास्त्रेण कार्यमात्रं प्रति कालस्य सहकारिताया अन्वयव्यतिरेकाभ्यां च प्रसिद्धत्वात् कालस्यैव तद्धेतुत्वमस्तु, कृतं ध्यानाभ्यासादिनेति समुदितार्थः । कालस्य साधनता साधकशास्त्रेण कृष्यादेः फलहेतुत्वं तत्र कालस्य सहकारितामात्रं प्रतिपादितम्, न तु तन्मात्रहेतुत्वम्, एवं च कालस्य साधारणकारणत्वम्, असाधारणकारणत्वं तु कृष्यादेरेव, एवं च प्रकृतेऽपि विवेकख्यातिं प्रति ध्यानाभ्यासादेरेव आरादुपकारकत्वात् असाधारणहेतुत्वम्, कालस्य साधारणहेतुत्वम् इति अस्य असदुपदेशत्वमिति बोध्यम् ॥ मेघ इति । अस्याश्च तुष्टेः मेघस्येव फलसिद्धिहेतुभूतवृष्टिसाधनत्वेन मेघतुल्यत्वम् ॥

पूर्वोपदेशस्य असम्यक्त्वप्रतिपादनमुखेन उपदेशान्तरं प्रदर्शयन् भाग्याख्यां तुष्टिं विवृणोति—या त्विति ॥ न कालात्=न केवलात्कालात्, नापि उपादानसहकारिभूतात्कालादित्यर्थः । नाप्युपादानात्=न केवलादुपादानात् नापि कालविशेषसहकृतादुपादानादित्यर्थः । कस्मात्तर्हि विवेकख्यातिरित्यत आह—अपि त्विति । भाग्यादेवेति । जन्मान्तरकृतकर्मविशेषजनिताऽदृष्टादेवेत्यर्थः । यद्यपि "दैवं पुरुषकारश्च कालश्च पुरुषोत्तम! । त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम् ॥" इत्यनेन भाग्यस्येव कालपुरुषकारयोरपि फलसिद्धिहेतुत्वमुक्तम्, तथापि विद्यमानयोरपि कालपुरुषकारयोर्दैवं विना फलसिद्धेरदर्शनात्, सति तु दैवे कालपुरुषकारौ विनापि फलसिद्धेर्दर्शनाच्च

---

१ 'भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्' इत्यादिस्मृतेरिति भावः

२ गीतासु श्रीभगवता तु—"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥" इत्युक्तम् ।

भाग्यादेव, अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः, तस्माद्भाग्यमेव हेतुर्नान्यद्' इत्युपदेशे या तुष्टिः सा भागाख्या='वृष्टिः' उच्यते ।

---

भाग्यस्यैव प्राधान्यमिति कालपरिपाकप्रव्रज्योपादानयोरुपदेशो न साधीयानिति भावः ॥

केवलादेव भाग्याद् विवेकख्यात्युत्पत्तिं दर्शयति—अत एवेति । विवेकख्यातेर्भाग्यस्य हेतुत्वादेवेत्यर्थः । मदालसेति । सा हि गन्धर्वराजविश्वावसुपुत्री कुवलयाश्वेन राजपुत्रेण विवाहिताऽऽसीत्, कदाचिद् ऋषिगणपरित्राणाय प्रोषिते भर्तरि केनचिद् वैरिणा पतिव्यसनमृषासन्देशेन विप्रलब्धा, शोकविह्वलीकृता चेयं पतिप्राणा तच्छोकावेगात् प्राणान् परितत्याज, ततः तपःप्रभावप्रसादितपशुपतिपादात् प्राप्तवरस्य कुवलयाश्वहितैषिणः अश्वतरनाम्नो नागराजस्य फणाभ्यन्तरात् तत्प्रमाणवयोऽवस्थारूपसंस्थाना योगाभिज्ञा च सैव मदालसा बहिर्भूय नागराजकन्यात्वं प्राप, लेभे च तेनैव भर्त्रा कुवलयाश्वेन सङ्गता यौवनसुखसम्भोगम्, प्रसूतवती च सुपुत्रान् बहून्, ते च तनयाः क्रमशः शैशवात् प्रभृति योगाभियुक्तमातुरुपदेशवशात् विवेकख्यातिमन्तो जीवन्मुक्ताश्च बभूवुः" ॥ इति हि पौराणिकी[2] गाथा ॥

तत्र=मदालसापुत्राणां विवेकख्यातौ, भाग्यम्=जन्मान्तरकृतध्यानाभ्यासजनिताऽदृष्टम्, नान्यत्=न उपादानकालादिकम् । अस्याः संज्ञान्तरमाह—वृष्टिरिति ॥ अत्र जन्मान्तरकृतध्यानाभ्यासजनिताऽदृष्टस्य हेतुत्वाभिधानेन जन्मान्तरकृतस्य ध्यानाभ्यासस्यैव हेतुत्वमङ्गीकृतम्, तथाच ऐहिकस्यापि तस्य प्रतिबन्धकविशेषाभावे विवेकख्यातिजनकत्वावश्यम्भावात् तदुपेक्षणाद् असत्त्वम् उपदेशस्य, प्रतिबन्धकविशेषात्तु मदालसा पुत्राणामिव ज[3]न्मान्तरकृतध्यानाभ्यासो जन्मान्तरे फलमाधत्ते, इति बोध्यम् ॥

---

१ अत्रेदं बोध्यम्—सर्वेषां जीवानां तावत् प्रारब्धं कर्मापि त्रिविधम्—स्वेच्छया फलदं परेच्छया फलदम् अनिच्छया फलदं चेति । तत्र स्वेच्छाप्रारब्धं तु स्वप्रयत्नमन्तरेण स्वस्मै फलदानायाशक्तं सदवश्यं प्रयत्नमपेक्षत एवेति सर्वानुभवसिद्धम् । किं बहुना? परेच्छानिच्छात्मकयोरपि तयोः स्वफलदानार्थं क्रमेण परप्रयत्नापेक्षा सत्यसंकल्परूपपरमेश्वरप्रयत्नापेक्षा चेति पाके काष्ठवह्निस्थालीजलतण्डुलादिसंपादनरूपप्रयत्नस्यापि लौकिकस्य सार्थक्यं किं पुनः परमपुमर्थसाधकस्य शास्त्रीयस्य तस्येति । २ "शुद्धोऽसि बुद्धोऽसि निरञ्जनोऽसि संसारमायावरिवर्जितोऽसि । मुक्तस्वभावः सदानन्दरूपो मदालसा वाचमुवाच पुत्रम् ॥" इत्यादिरूपेण तदुपदेशप्रकारो मदालसोपाख्यान एव कणेहत्य विलोकनीयः । ३ तदुक्तं श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः संक्षेपशारीरके तृतीयाध्याये—"जन्मान्तरेषु यदि साधनजातमासीत् संन्यासपूर्वकमिदं श्रवणादिरूपम् । विद्यामवाप्स्यति ततः सकलोऽपि यत्र तत्राऽऽश्रमादिषु वसन्न निवारयामः ॥" इति ।

बाह्या दर्शयति "बाह्याः" तुष्टयो "विषयोपरमात् पञ्च" याः खल्वनात्मनः प्रकृतिमहदङ्कारादीनात्मेत्यभिमन्यमानस्य वैराग्ये

---

अन्ये तु—व्याचक्षते कालात्=कालमात्रात्, उपादानात्=प्रव्रज्यारूपसाधनमात्रादित्यर्थः। असाधारणकारणतानिरासार्थं नञ्प्रयोगः। अन्यथा कार्यमात्रं प्रति कालस्य, विवेकख्यातिं प्रति प्रव्रज्यायाश्च साधारणकारणतायाः सर्वसम्मताया अनुपपत्तिः। कार्यमात्रं प्रति भाग्यस्य कारणतायाः "पौरुषं दैवसम्पत्त्या काले फलति पार्थिवः।" इति शास्त्रेण प्रतिपादनात् तन्मूलकं भाग्यस्य कारणत्वमाह—भाग्यादेवेति। इतरकारणनिरासार्थस्य एवकारः। भाग्यस्य कारणताग्राहकशास्त्रेणैव पौरुषकालयोः सहकारितानिर्देशात् तन्मात्रहेतुत्वकथनाद् अस्यापि असदुपदेशत्वमिति बोध्यम्। भाग्यमात्राद् विवेकख्यातौ पुराणसंवादमाह—मदालसापत्यानीति। "मदालसा हि स्वापत्यानि उपदिदेश, तदुपदेशमधिगत्यैव च तदपत्यानि कालं सन्न्यासं च विनैव विवेकख्यातिं लब्ध्वा मुमुचुः" इति हि पुराणप्रसिद्धम्। तथाच यदि कालस्य प्रव्रज्याया एव वा विवेकख्यातौ हेतुत्वं स्यात्, तर्हि तेषां तदुभयाभावेन सद्यो मुक्तिविधायकं पुराणवाक्यं विप्रलम्भकवाक्यमिव अप्रमाणं स्यात्, अतस्तत्र भाग्यस्यैव हेतुत्वं वाच्यम्, तत्साम्यादन्यत्रापि तथा कल्पनीयमिति भावः। सिद्धान्ते ध्यानाभ्यासादेरेव अन्वयव्यतिरेकाभ्यां तद्धेतुत्वे सिद्धे तत्रापि प्राग्भवीयध्यानाभ्यासादिकस्य कल्पनात् न काप्यनुपपत्तिरिति तस्यापि असदुपदेशत्वमिति द्रष्टव्यम्। वृष्टिरिति। बीजसहकारेण वृष्टेरिव अस्याः फलहेतुत्वाद् वृष्टिसाम्यम्॥

एवम् आध्यात्मिकीः तुष्टीः सविभागं प्रदर्श्य बाह्यतुष्टितद्विभागौ दर्शयितुं कारिकापरार्द्धमवतारयति—बाह्या दर्शयतीति॥ अनात्मनः=आत्मभिन्नान्, प्रकृतिमहदहङ्कारादीन् आदिना—भूतेन्द्रियपरिग्रहः। वैराग्ये सति="वैरा-

---

१ ब्रह्मात्मैकत्वविज्ञानं वेदान्तश्रवणादिना। जायते परहंसस्य यतेर्मुख्याधिकारिणः॥ नाश्रमान्तरनिष्ठस्य क्रमात्तस्यापि जायते। इत्यादि स्मृतेश्चेति भावः। क्रमात्=आश्रमक्रमात् जन्मक्रमाद्वा चित्तपरिपाकक्रमाद्वा तस्यापि=आश्रमान्तरवतोऽपि ज्ञानं जायत इत्यर्थः।

२ 'प्रकृत्युपादान' इति, प्रकृतिकार्यत्वं विवेकख्यातेरिति श्रवणादिवैमुख्यं="प्रकृतितुष्टिः"। तस्याश्च संसारमज्जनहेतुत्वात् "अम्भ" इति नामान्तरम्। प्रकृतिमात्रं तु सर्वत्र सर्वस्य सममिति सर्वविमुक्तिपरिहाराय प्रव्रज्योपादानपूर्वकेऽभ्यासादिवर्जने या तुष्टिः सा उपादानाख्या। तस्याश्च सलिलापराख्यत्वं संसरणनिमित्तत्वात्, सलिलं हि सृधातोरिरन्प्रत्यये 'सरिरम्' इति जाते रलयोरभेदाद्भवति। कालापेक्षित्वेन सुखासिकारूपा तुष्टिर्दैवाधीनवृष्टिना मेघेन तुल्येति मेघापराख्या। भाग्यापेक्षया सन्तोषेणैव अवस्थानात्मिका या भाग्यतुष्टिः सा वृष्टिवदनियतत्वाद् वृष्ट्यपराख्या' इत्येवमत्राध्यात्मिकतुष्टीनां संक्षिप्तं विवरणं हृद्यारूढं करणीयं परीक्षार्थिभिः।

सति तुष्टयस्ता बाह्याः"–आत्मज्ञानाभावे सत्यनात्मानमधिकृत्य प्रवृत्तेरिति। ताश्च वैराग्ये सति सम्भवन्ति तुष्टय इति वैराग्यहेतुपञ्चत्वाद् वैराग्याण्यपि पञ्च, तत्पञ्चत्वात् तुष्टयः "पञ्च" इति। उपरम्यतेऽनेनेति उपरमो=वैराग्यम्, विषयादुपरमो=विषयोपरमो–विषयाः=भोग्याः शब्दादयः पञ्च, उपरमा अपि पञ्च, तथा हि अर्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मानः पञ्चोपरमा भवन्ति, तथा हि–सेवादयो धनार्जनोपायाः, ते च सेवकादीन् दुःखा कुर्वन्ति,

'दृप्यद्दुरीश्वरद्वाःस्थहस्त(दण्डि)चण्डार्धचन्द्रजाम्।
वेदनां भावयन्प्राज्ञः कः सेवास्वनुषज्जते'।

---

ग्यात्प्रकृतिलयः—" (४५) इति कारिकया यादृशाद् वैराग्यात् "प्रकृतिलयः" इति प्रतिपादितम्, तथाभूते वैराग्ये सतीत्यर्थः। तासां बाह्यत्वे हेतुं दर्शयति—आत्मज्ञानाभाव इति। आत्मनः=पुरुषस्य, ज्ञानाभावे=स्वरूपलक्षणाभ्यां सम्यगवबोधाभावे, अनात्मानम्=आत्मभिन्नं प्रकृत्यादिकम्, अधिकृत्य=अवलम्ब्य, प्रवृत्तेः। तथाच बाह्यवस्तुप्रकृत्यादिविषयत्वात् तासां बाह्यत्वमिति भावः। तुष्टय इतीति। इतिशब्दो हेतौ, "तुष्टयः पञ्च" इत्यनेनान्वेति। तथाच यतस्तुष्टयो वैराग्यमूलिकाः, वैराग्याणि च पञ्चहेतुकत्वात् पञ्च, अतस्तुष्टयः पञ्चेत्यर्थः।

"विषयोपरमात्" इति व्याख्यातुम् "उपरम" शब्दार्थं तावदाह—उपरम्यतेऽनेनेति। उपरम्यते=विषयोपभोगाद् विरम्यते। "अनेन" इति पदेन विषयोपभोगनिवृत्तिसाधनं लभ्यते। तच्च विषयेषु रागाभावरूपं वैराग्यमित्याह—वैराग्यमिति। विषयोपरमशब्दस्य विग्रहं प्रदर्शयति—विषयादिति। विषयशब्दं व्याचष्टे—भोग्याः शब्दादय इति। शब्दरूपरसगन्धस्पर्शाः=पञ्च भोग्यविषयाः, तेषाम् असारत्वदर्शनात् तद्विषयाणि वैराग्याण्यपि पञ्चेत्यर्थः।

किं च अन्यथापि वैराग्याणां पञ्चत्वम्, तद्धि धनादेरर्जनरक्षणक्षयभोगहिंसादोषदर्शनमूलकम्, इत्याह—तथेति। तथाच भोग्याः शब्दादयः पञ्च सन्तीति तद्विषया उपरमा अपि पञ्च, तथा विषयसंख्यासमानं विषयकारणमपि अर्जनादिभेदेन पञ्चविधमेव ततोऽपि उपरमाः पञ्चेति फलति। अर्जनादिदोषानेव दर्शयितुमाह—तथाहीति। सेवादय इति। भिक्षा, कृषिकर्म, विद्या, व्यवहारः, वणिक् कर्म च आदिशब्दग्राह्याः॥

तत्र सेवाया दुःखहेतुत्वं दर्शयति—दृप्यदिति॥ दृप्यन्=दर्पातिशययुक्तो यो दुरीश्वरः=निन्दितप्रभुः, तदीयद्वाःस्थस्य=तद्दौवारिकस्य, हस्तेन चण्डः=

एवमन्येऽप्यर्जनोपाया दुःखा इति विषयोपरमे या तुष्टिः सैषा 'पारम्' इत्युच्यते।

तथा 'अर्जितं धनं राजैकागारिकाग्निजलौघादिभ्यो विनङ्क्ष्यतीति तद्रक्षणे महद् दुःखम्' इति भावयतो विषयोपरमे या तुष्टिः सा द्वितीया 'सुपारम्' उच्यते।

तथा 'महतायासेनार्जितं धनं भुज्यमानं क्षीयते' इति तत्प्रक्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया 'पारापारम्' उच्यते।

---

तीक्ष्णः असह्य इति यावत्, यः अर्द्धचन्द्रः=गलपीडनम्, तज्जनितां वेदनां भावयन्=चिन्तयन्, कः प्राज्ञः बुद्धिमान्, सेवासु अनुषजते=अनुषक्तो भवति? उद्युक्तो भवतीति यावत्, न कोऽपीत्यर्थः। गलपीडनावसरे हस्तस्य अर्धचन्द्राकारत्वावश्यकत्वात् लक्षणया गलपीडनेऽपि अर्द्धचन्द्रशब्दप्रयोग इति बोध्यम्॥ दण्डीति पाठे दर्पेण दुरीश्वरस्य सेवानुरूपं दुःखमजानतो ये द्वाःस्थाः द्वारस्थिताश्च ते दण्डिनश्च तेषाम् अर्धचन्द्रैर्हस्तस्याङ्गुष्ठतर्जनीप्रमाणसंस्थानविशेषैश्च जातां वेदनां दुःखैकनिदानमिति॥

एवम्=सेवावत्, अन्येऽपि=भिक्षादयोऽपि, दुःखाः=दुःखजनकाः, विषयोपरमे=विषयाद् वैराग्ये,। पारमिति। वैराग्यद्वारा संसारपारहेतुत्वात् तस्याः पारत्वम्, धनार्जनदुःखपारप्रापयितृत्वात् तस्याः पारत्वमित्यन्ये। अर्जनदुःखमनुभवारूढं संपाद्य द्वितीयं रक्षणदोषमाह—तथेत्यादिना। अर्जितम्=सेवादिना सञ्चितम्, ऐकागारिकः=चौरः, "ऐकागारिकट् चोरे" इति पाणिनीयात्। जलौघः=जलप्रवाहः, विनङ्क्ष्यति=विनाशं गमिष्यति, तद्रक्षणे=धनरक्षणे, इति=एवम्, भावयतः=चिन्तयतः पुरुषस्य। सुपारमिति। वैराग्यद्वारा सुखेन संसारपारहेतुत्वादस्याः सुपारत्वम्। अर्जनदोषदर्शनेऽपि कदाचिद् भोगाभिलाषेण प्रवृत्तिः स्यात्, रक्षणभयार्त्तस्य तु प्रवृत्तेरतितरामसंभव इति तदीयायास्तुष्टेः सुपारतेत्यन्ये। तृतीयं क्षयदोषमाह—आयासेन=परिश्रमेण, भुज्यमानम्=भोगविषयीक्रियमाणम्, क्षीयते=नश्यति। पारापारमिति। वैराग्यद्वारा संसारपारहेतुत्वात् पारत्वम्, नास्ति पारम्=पारसाधनं यस्मात् तद्

---

१ अर्थानामर्जने क्लेशस्तथैव परिपालने। नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः॥ इत्याद्युक्तेरिति भावः। गीतासु श्रीभगवान्—"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्। आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥ इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥"

एवं 'शब्दादिभोगाभ्यासात् प्रवर्धन्ते कामाः, ते च विषयाऽप्राप्तौ कामिनं दुःखा कुर्वन्ति' इति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी 'अनुत्तमाम्भ' उच्यते ।

एवं 'नानुपहत्य भूतानि विषयोपभोगः संभवति' इति हिंसादोषदर्शनाद्विपयोपरमे या तुष्टिः सा पञ्चमी 'उत्तमाम्भ' उच्यते ।

एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्चभिः 'नव तुष्टयोऽभिमताः' ॥ ५० ॥

---

अपारम्=उत्कृष्टपारसाधनम्, ततः पारं च तत् अपारं चेति कर्मधारयः । "क्षयं भावयतः कदाचित् प्रवृत्तिः कदाचिदप्रवृत्तिः" इति तदीया तुष्टिः पारापाराख्येत्यन्ये ॥

भोगदोपं चतुर्थमाह—एवमिति । प्रवर्द्धन्ते कामा इति । "भोगाभ्यासमनुविवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणाम्" इत्युक्तेरिति भावः । तथाच मनुः—"न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥" इति ।

अनुत्तमाम्भ इति । नास्ति उत्तमं यस्मात् तद् अनुत्तमम्=अत्युत्कृष्टम्, अङ्कुरं प्रति अम्भस एव विवेकख्यातिं प्रतिसाधनत्वात् तस्या अम्भस्त्वम् । भोगे रोगभयं भावयतस्तुष्टिः स्वार्थपरेति तस्या उत्तमेतराम्भस्त्वम् इत्यन्ये । हिंसादोषमाह—एवमिति । अनुपहत्य=अविनाश्य, शब्दसाधनवंश्यादिनिर्माणाय वंशादिच्छेदनावश्यंभावादिति बोध्यम् । उत्तमाम्भ इति । उत्तमम्=उत्कृष्टम्, अम्भः । अम्भसोऽङ्कुरं प्रति हेतुत्ववत् विवेकख्यातिहेतुत्वात् तस्या उत्तमाम्भस्त्वम् । हिंसादोषतः तस्यास्तुष्टेस्तु कारुण्यमूलकत्वात् उत्तमाम्भस्त्वम् इत्यन्ये ॥ उपसंहरति—एवमिति ॥ ५० ॥

### चतस्र आध्यात्मिक्यस्तुष्टयः ।

"प्रकृतित आत्मा भिन्नं वस्तु विद्यते" इति निश्चयं कृत्वा ततः तस्य श्रवणमनननिदिध्यासनद्वारा विवेकसाक्षात्काराय असता उपदेशेन सन्तुष्टो भूत्वा यः पुरुषो यत्नं न करोति, तस्य इमाः चतस्र आध्यात्मिक्यः तुष्टयो भवन्ति । यत इमाः तुष्टयः प्रकृतितो भिन्नम् आत्मानम् आदाय भवन्ति, अत एव इमा आध्यात्मिक्य इत्युच्यन्ते ।

### (१) प्रकृत्याख्या तुष्टिः ।

[ प्रथम उपदेशः ] केनचित् कस्मैचित् उपदेशः प्रदत्तः—"विवेकसाक्षात्कारः [ प्रकृतिपुरुषयोर्भेदस्य स्वानुभवे आनयनम् ] प्रकृतेरेव परिणामविशेषोऽस्ति, अतः तं प्रकृतिः स्वयमेव करिष्यति, तस्मात् त्वया ध्यानस्य अभ्यासो

न कर्तव्यः, हे वत्स! त्वम् एवमेव तिष्ठ" इति । सेऽयं तस्य शिष्यस्य या प्राकृती [ प्रकृतौ निर्भरता ] तुष्टिर्भवति सा प्रकृतिरिति अम्भ इति चोच्यते ॥

## २ उपादानाख्या तुष्टिः ।

[ द्वितीय उपदेशः ] यद्यपि सा विवेकख्यातिः प्रकृतितो भवति, तथापि केवलायाः प्रकृतित एव न, यतः यदि प्रकृतित एव विवेकख्यातिर्भवेत्, तदा तस्याः सर्वान् प्रति समानत्वात् सर्वेषां सर्वस्मिन् काले विवेकख्यातिः स्यात्, । अतः हे वत्स! त्वं सन्न्यासं धारय । सन्न्यासेन तव सा विवेकख्यातिः प्राप्ता भविष्यति ।" इत्युपदेशेन या शिष्यस्य तुष्टिर्भवति सा उपादानमिति सलिलमिति चोच्यते ॥

## ३ कालाख्या तुष्टिः ।

[ तृतीय उपदेशः ] यद्यपि सन्न्यासेन मुक्तिर्भवति, किं तु तत्कालमात्रे न, अर्थात् स एव सन्न्यासः तव कालेन सिद्धिं दास्यति, अतः त्वं त्वराकारी मा भूः । इत्युपदेशेन या काले तुष्टिर्भवति सा काल इति मेघ इति चोच्यते ॥

## ४ भाग्याख्या तुष्टिः ।

[ चतुर्थ उपदेशः ] विवेकख्यातिं न कालः कर्तुं शक्नोति नापि उपादानम्, किं तु सा भाग्येनैव भवति, अत एव मदालसायाः पुत्रा अतिबालका अपि मातुः उपदेशमात्रेणैव विवेकख्यातिं प्राप्ताः मुक्ताश्च । तत्र भाग्यमेव कारण—मासीत्, नान्यत् किंचित् । इत्युपदेशेन या भाग्ये तुष्टिर्भवति सा भाग्यमिति वृष्टिरिति चोच्यते ॥

## पञ्च बाह्यास्तुष्टयः ।

याः तुष्टयः प्रकृतिमहत्तत्त्वाहङ्कारादीनि अनात्मवस्तूनि आत्मत्वेन ज्ञात्वा वैराग्येण भवन्ति, ताः सर्वाः बाह्यास्तुष्टयः, यतः आत्मज्ञानस्य अभवनावस्थायामेव ताः अनात्मबाह्यवस्तुनः अवलम्बनेन भवन्ति । आसां तुष्टीनां कारणं वैराग्यमस्ति, तच्च वैराग्यं पञ्चभिः कारणैर्भवति, अतः तत् पञ्चविधं जायते, तत एव च ततो [ वैराग्यात् ] जायमानाः तुष्टयोऽपि पञ्चैव मन्यन्ते । अर्थात् भोग्या विषयाः शब्दादयः पञ्च सन्ति तेषाम् उपरमा ( वैराग्याणि ) अपि पञ्च सन्ति । तथा विषयसंख्यावत् अस्य ( वैराग्यस्य ) कारणानि अपि अर्जनरक्षणक्षयभोगहिंसेति पञ्च सन्ति, अतोऽपि वैराग्याणि पञ्च सन्ति ॥

## १ पाराख्या तुष्टिः ।

[ अर्जनम् ] धनार्जनस्य सेवाप्रभृतयः उपायाः सन्ति, ये सेवकादीनां सन्ति दुःखकारकाः । यतः सेवायां क्रोधिस्वामिनः कदाचित् कदाचित् चपेटाप्रहारोऽपि सहनीयो भवति । सुतराम् एषां दुःखानाम् अनुभवकर्तारो बुद्धिमन्तः तत्र ( सेवायाम् ) प्रवृत्ता न भवन्ति । एवमेव अन्येष्वपि धनोपार्जनोपायेषु दोषाः सन्ति । इत्थं या विषयात् उपरमे तुष्टिर्भवति सा "पारम्" इत्युच्यते ॥

गौणमुख्यभेदै( दा ): सिद्धीराह—

---

## २ सुपाराख्या तुष्टिः ।

[ रक्षणम् ] धनं येन केनोपायेन कथंचित् एकत्र जातमपि ( संगृहीतमपि ) तस्य राजचोरवह्निजलप्रवाहादिना नाशस्य संभावना अस्ति, अतः तस्य रक्षायां महादुःखम् अस्ति, ईदृग्भावनावतः या विषयात् उपरमे तुष्टिर्भवति सा द्वितीया "सुपारम्" इत्युच्यते ॥

## ३ पारापाराख्या तुष्टिः ।

[ क्षयः ] एवमेव महता परिश्रमेण संगृहीतं धनं भोगेन क्षीणं भवति, इत्थं तदीयक्षयभावनावतः या विषयात् उपरमे तुष्टिर्भवति सा तृतीया "पारापारम्" इत्युच्यते ॥

## ४ अनुत्तमाम्भ आख्या तुष्टिः ।

[ भोगः ] एवं–शब्दादिविषयाणां भोगाभ्यासेन कामाः ( मनोरथाः ) वर्द्धन्ते, ते च विषयस्य अप्राप्तौ सत्यां कामिनं पुरुषं दुःखितं कुर्वन्ति, एवं भोगदोषज्ञातुः या विषयात् उपरमे तुष्टिर्भवति सा चतुर्थी "अनुत्तमाम्भः" इत्युच्यते ॥

## ५ उत्तमाम्भ आख्या तुष्टिः ।

[ हिंसा ] एवं–द्वितीयानां प्राणिनां हानिकरणं विना विषयाणाम्, उपभोगो न भवितुमर्हति, इत्थं हिंसादोषं दृष्ट्वा विषयाद् या उपरमे तुष्टिर्भवति सा पञ्चमी उत्तमाम्भ इत्युच्यते ॥

## उपसंहारः ।

इत्थं चतस्र आध्यात्मिक्यः, पञ्च च बाह्या मिलित्वा नव तुष्टयो भवन्ति । इति सरलार्थः ॥ ५० ॥

# अथ गौणमुख्यसिद्ध्यष्टकनिरूपणम् ।

गौणमुख्येति । सिद्धिः=पुरुषार्थस्य निष्पत्तिः, पुरुषार्थश्च=पुरुषप्रयोजनम्, प्रयोजनं च=इच्छाविषयः । तत्र अन्येच्छानधीनेच्छाविषयत्वं मुख्यत्वम्, अन्येच्छाधीनेच्छाविषयत्वं गौणत्वम् । एवं च दुःखविघातो मुख्यप्रयोजनम्, अनधीनेच्छाविषयत्वात्, "सुखं मे भूयात्, दुःखं मे मा भूत्" इत्येतयोरेवेच्छयोः स्वारसिकत्वात्, अतो दुःखविघातनिष्पत्तिर्मुख्या सिद्धिः । अध्ययनादिकं तु दुःखविघातेच्छाधीनेच्छाविषयत्वाद् गौणप्रयोजनम्, इच्छाविषयत्वगुणयोगात्, अतोऽध्ययनादिनिष्पत्तिर्गौणी सिद्धिरेव । एवं सति उत्तरकारिकायां याः सिद्धयोऽभिधास्यन्ते, तासु मध्ये काश्चिन्मुख्याः सिद्धयः काश्चिद् गौण्य इत्यर्थः ॥ ॐ ॥

**ऊहः-शब्दोऽध्ययनं-दुःखविघातास्त्रयः-सुहृत्प्राप्तिः।**
**दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः॥ ५१॥**

विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इतीमा मुख्यास्तिस्रः सिद्धयः, तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः, ता अपि हेतुहेतुमत्तया व्यवस्थिताः। तत्राऽऽद्याऽध्ययनलक्षणा सिद्धिर्हेतुरेव, मुख्यास्तु सिद्धयो हेतुमत्य एव, मध्यमास्तु हेतुहेतुमत्यः। विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणम्=अध्य-

---

ऊह इति॥ दुःखविघाताः=दुःखनाशाः, त्रयः, अध्ययनम्, शब्दः, ऊहः, सुहृत्प्राप्तिः, दानम्, इत्यष्टौ सिद्धयः, पूर्वः=पूर्वोक्तः विपर्ययाऽशक्तितुष्टिरूपः, त्रिविधः सिद्धेः अङ्कुशः=कारणविघटनादिद्वारा निवारकः। तत्र दुःखविघातसिद्धिः फलत्वान्मुख्या, अन्यास्तु पञ्च तत्साधनत्वाद् गौण्य इति विवेकः। इत्यन्वयः॥ ५१॥ ॐ॥

ऊहादेः साधनरूपतया साध्यरूपमुख्यसिद्धिमपहाय प्रथमं तद्व्याख्यानमनुचितमिति पाठक्रममनादृत्य कारिकां व्युत्क्रमेण व्याचष्टे—विहन्यमानस्येत्यादिना। विनाश्यमानस्येत्यर्थः। ध्वंसरूपस्य विघातस्य अविशेषात् तत्प्रतियोगिविशेषमादाय तस्य त्रिविधत्वमिति दर्शयन्नाह—दुःखस्य त्रित्वादिति। आध्यात्मिकाधिदैविकाधिभौतिकभेदेन दुःखस्य त्रिविधत्वादित्यर्थः। तथाच प्रतियोगिनस्त्रित्वात् विघातस्यापि त्रित्वमिति भावः। गौणमुख्यसिद्धिषु मुख्याः सिद्धीर्दर्शयति—इमा इति। दुःखविघातरूपा इत्यर्थः। तदुपायतया=तद्धेतुतया, दुःखविघातेच्छाधीनेच्छाविषयतयेति यावत्। इतराः=अध्ययनादयः। ताः=अष्टौ सिद्धयः। हेतुहेतुमत्तयेति। कारणमात्रत्वेन कार्यमात्रत्वेन कार्यकारणोभयरूपत्वेन च व्यवस्थिता इत्यर्थः। तथाच काचित् सिद्धिः कारणरूपा काचित् कार्यरूपा काचिच्च कार्यकारणोभयरूपा इति फलति। तदेव दर्शयति—तत्रेति। अष्टसु सिद्धिषु मध्य इत्यर्थः। हेतुरेवेति। अक्षरग्रहणम् अर्थग्रहात्मकसिद्धेः कारणमेव, न कस्याश्चित् सिद्धेः कार्यमित्यर्थः। मुख्याः= दुःखविघातलक्षणाः तिस्रः सिद्धयः, हेतुमत्य एव=सिद्ध्यन्तरस्य कार्यभूता एव, न पुनः कस्यचित् सिद्ध्यन्तरस्य कारणभूता इत्यर्थः। मध्यमाः=शब्दोहसुहृत्प्राप्तिदानलक्षणाः, हेतुहेतुमत्यः=उत्तरोत्तरसिद्धेः हेतुभूताः पूर्वपूर्वसिद्धेः कार्यभूताश्चेत्यर्थः॥ ॐ॥

अध्ययनं व्याचष्टे—विधिवदिति। अध्ययनविध्यनतिक्रमेणेत्यर्थः। अक्षरेति। क्षयरहितानां शाश्वतानां वर्णानां स्वरूपम्=पारायणमिति यावत्, तस्य ग्रहणमित्यर्थः। यद्यपि "स्वाध्यायोऽध्येतव्यः" इति श्रुतौ गुरुमुखात् स्वरविशेषवद् अक्षरग्रहणपूर्वकाऽर्थग्रहणस्यैव अध्ययनपदार्थत्वं सिद्धान्तितं

यनं, प्रथमा सिद्धिः 'तारम्' उच्यते ।

तत्कार्यं शब्दः='शब्द' इति पदं—शब्दजनितमर्थज्ञानमुपलक्षयति—कार्ये कारणोपचारात्, सा द्वितीया सिद्धिः 'सुतारम्' उच्यते । पाठार्थाभ्यां तदिदं द्विधा श्रवणम् ।

"ऊहः"=तर्कः आगमाविरोधिन्यायेनागमार्थपरीक्षणम् । परी-

मीमांसाभाष्यकारादिभिः, तथापि अत्र अध्ययनशब्दयोः पृथक्त्वेन अभिधानाद् अध्ययनपदम् अक्षरग्रहणपरं, शब्दपदं, च अर्थज्ञानपरम् इत्याशयः । पूर्वाचार्यसंज्ञान्तरमाह—तारमिति । तारयति संसारार्णवादिति तस्याः तारत्वम्, संसारतरणस्य प्रथमहेतुत्वात् ताराऽऽख्यताऽध्ययनसिद्धेरिति भावः । तत्कार्यमिति । अध्ययनकार्यमित्यर्थः । स्वरविशेषवद् अक्षरग्रहणं विना अर्थज्ञानासम्भवादिति भावः । शब्दपदस्य यथाश्रुतार्थत्वे अध्ययनकार्यत्वानुपपत्तिः, शब्दस्य अध्ययनकार्यत्वाभावादिति शब्दपदं शब्दजन्यार्थज्ञानलक्षकमित्याह—शब्द इति पदमिति । शब्दजनितमिति । तथाच शब्दपदं शाब्दबोधलाक्षणिकमित्यर्थः । सम्बन्धमाह—कार्ये इति । तथाच अर्थज्ञानस्य शब्दजन्यत्वेन शब्दत्वेन उपचारात् शक्यसंबन्धः कार्यत्वरूप इति भावः । कार्ये=अर्थज्ञाने, कारणोपचारात्=शब्दत्वरूपकारणत्वारोपात्, इत्यक्षरार्थः । संज्ञान्तरमाह—सुतारमिति । "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन" इत्यादिश्रुत्या वेदार्थज्ञानस्य विवेकख्यातिहेतुत्वप्रतिपादनात् तस्य च संसारहेतुभूताऽज्ञाननिवर्त्तनद्वारा संसारार्णवतारकत्वात् सुतारत्वम् । अर्थज्ञानस्य सुखेन संसारतारकत्वात् सुताराख्यता शब्दसिद्धेरिति भावः ॥ "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादिश्रुत्या आत्मश्रवणस्यैव विवेकख्यातौ हेतुत्वप्रतिपादनेन वेदाध्ययनतदर्थज्ञानस्य कया प्रणाल्या विवेकख्यातिहेतुत्वं स्यात्? इत्याशङ्क्य श्रवणपदस्यैव अध्ययनतदर्थज्ञानलक्षकत्वमिति ध्वनयन्नाह—तदिदं द्विधा श्रवणमिति । तदिदम्=अध्ययनशब्दरूपं सिद्धिद्वयम्, द्विधा=द्विप्रकारेण, श्रवणमित्यर्थः । तथाच "आत्मा वा अरे द्रष्टव्यः" इत्युक्ताऽऽत्मज्ञानसाधनत्वेन यत् "श्रोतव्यो मन्तव्यः" इत्यादि वाक्येन प्रथमं श्रवणं विहितम्, तत् गुरुमुखाद् अक्षरग्रहणपूर्वकार्थज्ञानरूपमेव, तदेव श्रवणम् इह "अध्ययनं शब्दश्च" इति द्विप्रकारेण अभिहितम्, क्रियाभेदादिति भावः । ततश्च आत्मप्रतिपादकशब्दश्रवणं तदर्थज्ञानं चेति द्विविधमिह श्रुतिवाक्ये श्रवणशब्दार्थ इति तत्त्वम् ॥ ७ ॥

ऊहं व्याचष्टे—तर्क इति । "ऊह वितर्के" इति धात्वनुसारादिति भावः । तर्कपदार्थंव्याचष्टे—आगमेति । आगमस्य=शास्त्रान्तरस्य, अविरोधी यो

१ तारसुतारयोरुभयोर्गुरुसकाशादध्ययनरूपत्वाच्छ्रवणेऽन्तर्भावः । अध्ययनं=वाक्याध्ययनं, श्रवणं=वाक्यार्थाध्ययनम् ।

क्षणं चः=संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं, तदिदं 'मननम्' आचक्षते आगमिनः, सा तृतीया सिद्धिः 'तारतारम्' उच्यते।

स्वोत्प्रेक्षितं मननममननमेवासुहृत्सम्मतमिति द्वितीयं मननमाह—"सुहृत्प्राप्तिः"। न्यायेन स्वयं परीक्षितमप्यर्थं न श्रद्धते—न यावद् गुरुशिष्यसब्रह्मचारिभिः सह संवाद्यते, अतः सुहृदां गुरु-

---

न्यायः=युक्तिः, तेन शास्त्रार्थपरीक्षणमित्यर्थः। परीक्षणपदार्थं विवृणोति—संशयेति। संशयनिराकरणेन पूर्वपक्षः, तन्निराकरणेन च उत्तरपक्षव्यवस्थापनमित्यर्थः। तच्च "एको देवः सर्वभूतेषु गूढः" इति श्रुतौ "किम् एक एव आत्मा सर्वभूतगतः, उत एकजातीयो नाना?" इति संशये—"नानात्माङ्गीकारे गौरवात् लाघवेन एकत्वमेव आत्मनः" इति पूर्वपक्षे च सति, "जन्ममरणकरणानाम्—" इत्याद्युक्तहेतुना नानात्वमेव पुरुषाणां न तु तात्त्विकमेकत्वम्, एकत्वश्रुतिस्तु चित्पदार्थत्वाभेदेनापि उपपद्यते, अत एव "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यत्र श्रुतौ पुरुषाणां भिन्नत्वं प्रतिपादितम्, इत्येवं सिद्धान्तरूपम्। तत्र उत्तरपक्षः=स्वसिद्धान्तः। ऊहस्य मननरूपत्वमाह—तदिदं मननमिति। युक्त्या दृढीकरणमित्यर्थः। आचक्षते=वदन्ति, आगमिनः=शास्त्रज्ञाः। प्राचीनसंज्ञामाह—तारतारमिति। तारयतीति तारम्, तारप्रकारः=तारतारम्, प्रकारे द्वित्वम्। मननस्य अध्ययनात् तारादपि, अधिकतारकत्वात् तारतरत्वम्। ऊहस्य अर्थज्ञानमूलकत्वाद् अर्थज्ञानकार्यत्वमिति बोध्यम्॥ ॐ॥

"शिष्यैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः" इत्युक्तेः सब्रह्मचारिभिः सह तर्कितार्थाऽऽलोचनमपि मननप्रकारान्तरम्, तदेव "सुहृत्प्राप्ति"शब्देन अभिहितमिति प्रतिपादयति—स्वोत्प्रेक्षितमिति। स्वकृतमित्यर्थः। असुहृत्सम्मतमिति। यतः सुहृदाम् असम्मतम्, अतः अमननमेव=तात्त्विकमननत्वेन अनिश्चितमित्यर्थः। इति=हेतोः, द्वितीयं मननम्=मननप्रकारान्तरम्। न्यायेन=अनुमानेन, परीक्षितम्=सिद्धान्तितम्, श्रद्धते=निश्चिन्वन्ति,। गुरु[2]शिष्येति। अर्थविशेषस्य गुरुणा, अर्थविशेषस्य स्वशिष्येण, अर्थविशेषस्य स

---

१ उत्तरपक्षः=स्वसिद्धान्तः। २ अत्र "ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च संवादः" (न्या० ४।२।४७) "तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयुभिरभ्युपेयात्" (न्या० ४।२।४८) इति न्यायसूत्रे द्रष्टव्ये। येन केनापि प्रकारेण पुनः पुनस्तत्त्वसरणमेव तत्त्वज्ञानाभ्यासो नाम। यदुक्तम्—"तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्। एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः॥"

शिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः="सुहृत्प्राप्तिः" सा सिद्धिश्चतुर्थी 'रम्यक' उच्यते ।

"दानं च"=शुद्धिर्विवेकज्ञानस्य–"दैप् शोधन" इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यथाह–भगवान् पतञ्जलिः–"विवेकख्यातिरविप्लवा हानोपायः" । अविप्लवः=शुद्धिः, सा च सवासनसंशयवि-

---

ब्रह्मचारिणा संवादो यावन्न भवतीत्यर्थः । तत्र–समानवेदव्रताचारिणः सब्रह्मचारिणः । यथाहाऽमरः—"एक ब्रह्मव्रताचारा मिथः सब्रह्मचारिणः" इति । ब्रह्म=वेदः, तदध्ययनार्थं व्रतमपि उपचाराद् ब्रह्म, एकस्मिन् ब्रह्मणि व्रताचरणं येषां ते मिथः=परस्परम्, सब्रह्मचारिणो भवन्तीति तदर्थः । सतीर्थ्याः, सहाध्यायिनः इति फलितार्थः । सहेति । मिलित्वेत्यर्थः, विचार्य्येति यावत् । संवाद्यते=गुर्वादिभिः स्वाभिमतसिद्धान्तसमानतया वाद्यते । संवादकानाम्="अस्मत्सिद्धान्तसमानमेतत्" इति वादकानाम् । प्राप्तिः=अधिगमः । प्राचीनसंज्ञामाह—रम्यकमिति । रमन्तेऽत्र, अधिकरणे यत्, ततः स्वार्थे कन् । सुहृद्भिः सह शास्त्रार्थसंवादस्य अतिरमणीयत्वात् सुहृत्प्राप्तेः रम्यता । चतुर्थ्याः सिद्धेः तृतीयसिद्धिमूलकत्वात् तत्कार्यत्वमिति बोध्यम् ॥ ४ ॥

दानं व्याचष्टे—शुद्धिरिति । विवेकज्ञानस्य शुद्धिर्दानमित्यन्वयः । विवेकज्ञानस्य=प्रकृतिपुरुषयोर्विभिन्नत्वेन ज्ञानस्य । ननु दानशब्दस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादने शक्तत्वात् कथं ततः शुद्ध्यर्थलाभ इत्यत आह—दैप् शोधन इति । "डुदाञ् दाने" इत्यतो निष्पन्नस्य दानशब्दस्य वितीर्णार्थकत्वेऽपि "दैप् शोधने" इत्यतो निष्पन्नस्य शुद्ध्यर्थकत्वे बाधकाभाव इति भावः । विवेकज्ञानशुद्धिस्तु सुहृत्प्राप्तिजन्या, तामन्तरेण तदसम्भवात् । विशुद्धविवेकख्यातिजन्यन्तु दुःखविघातत्रयम्, अन्तरा सिद्ध्यन्तरविरहात् ॥ ननु दुःखविघातत्रयं प्रति विवेकख्यातेरेव हेतुत्वमस्तु कृतं तया शुद्ध्येति शङ्काशमनाय शुद्धेरावश्यकत्वं प्रमापयति—यथेति । दुःखत्रयस्य हानोपायः विवेकख्यातिः अविप्लवा=नास्ति विप्लवो=मलं यस्याः सा शुद्धिरित्यर्थः । विवेकख्यातेरविप्लवत्वं व्याचष्टे—अविप्लवः शुद्धिरिति । अविप्लवः=अविप्लवत्वम्=शुद्धिर्नैर्मल्यम् । विवेकख्यातेरविप्लवत्वं तस्या नैर्मल्यमित्यर्थः । अत एव तत्सूत्रभाष्ये—"विवेकप्रत्ययप्रवाहो निर्मलो भवति, सा विवेकख्यातिरविप्लवः" इत्युक्तं व्यासदेवैः ।

मलं च संशयविपर्यासज्ञानतद्वासनाभिर्विवेकसाक्षात्कारस्य अन्तरान्तरा विच्छेदाद् अप्रवाहेण अवस्थानम् । संशयादिपरिहानौ तु अविच्छेदेन अवस्थानाद् विवेकसाक्षात्कारस्य नैर्मल्यं स्यादित्याह—सा चेति । सा=शुद्धिः । सवासनेति । वासना=संस्कारः । प्रकृतिपुरुषयोरन्यताज्ञाने सकृज्जातेऽपि

---

१ प्रवाहो नाम विजातीयप्रत्ययान्तरास्पृष्टत्वे सति सजातीयप्रत्ययसन्ततिः ।

पर्यासानां परिहारेण विवेकसाक्षात्करस्य स्वच्छप्रवाहेऽवस्थापनं, सा च न विनादरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकद्भवतीति

अनिर्व्यूढतया "पुरुषः प्रकृतेरभिन्नो न वा" इति संशयदशायां, "प्रकृतिपुरुषावभिन्नावेव, "अहं सुखी" इत्यादिव्यवहारात्" इति विपर्यासदशायां वा विवेकसाक्षात्कारस्य तावद्विच्छेदो भवत्येव। गुरुणा तर्कद्वारा संशयविपर्यासयोरपनयने कृतेऽपि, यावत् तत्संस्कारो नापगच्छति, तावदपि संस्कारवशात् कचित् कचिदेकत्वस्मृत्या विवेकसाक्षात्कारस्य विच्छेदो जायते, इति सवासनेति विशेषणम्। तथाच "वासनया सह संशयविपर्यासानां परिहारेण" इत्युक्त्या संशयविपर्यासानां तद्वासनानां च परिहारो दर्शितः। ततश्च विवेकसाक्षात्कारस्य क्षणमपि विच्छेदासम्भवात् सुतरां स्वच्छप्रवाहेऽवस्थानं सुघटम्॥

ननु "सवासनसंशयादिपरिहानौ विवेकसाक्षात्कारस्य निर्मलप्रवाहावस्था शुद्धिः" इति शुद्धिस्वरूपम् अवगतम्, सा पुनः कथं भवति, संस्कारपर्यन्तापनयनस्य गुरोरशक्यत्वादित्यत आह—सा चेति। शुद्धिरित्यर्थः। आदरः= श्रद्धातिशयः, गुरुवाक्ये दृढविश्वास इति यावत्, नैरन्तर्यम्=अविच्छेदः, ताभ्यां दीर्घकालसेवितः=दीर्घकालानुष्ठितः, यः अभ्यासः=प्रकृतिपुरुषयोरन्यतान्चिन्तनस्य पौनःपुन्यम्, निदिध्यासनमिति यावत्, तस्य परिपाकात्= परिपूर्णभावात्, विना शुद्धिर्न भवतीत्यर्थः। तथाविधाऽभ्यासपरिपाकादेव शुद्धिर्भवतीति भावः॥ अदीर्घकालसेवने, दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने च, नैरन्तर्येऽपि श्रद्धातिशयाभावे च, सङ्गदोषात् विजातीयप्रत्ययप्राबल्येन अदृढभूमिरभ्यासः फलाय न प्रभवेत्, प्रत्युत विपरीतभावनातः स्वरूपात् प्रच्यवेत, अतो विशेषणत्रयविशिष्टोऽभ्यासः सम्पादनीयः, एतादृशाच्च भावनामयात् अभ्यासात् नूनं परमा शुद्धिर्जायत इति तत्त्वम्[1]। एतेन—"स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" इति पातञ्जलसूत्रार्थो वर्णित इति ज्ञेयम्॥ तथाच यथा स्वप्ने भुजगकृतपादवेष्टनम् उपलभ्य भीत्या प्रबुद्धः पुमान् पादौ पश्यन् "स्वाप्नमिदं भुजगकृतपादवेष्टनं मिथ्या" इति निश्चिन्वानोऽपि अचिरप्रबोधदशायां तत्संस्कारवशात् क्षणे क्षणे सर्पमिवानुभवति, गात्रकम्पनादिना भीतिमपि अनुभावयति, मिथ्यात्वज्ञानस्य पौनःपुन्येन दृढीभावे तु सर्पसंस्कारापगमात् स्वस्थः स्यात्, तथा तादृशाभ्यासपरिपाकात् शुद्धिरपि अवश्यम्भाविनीति निष्कर्षः॥

१ श्रीगौडपादाचार्याः—"उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः। सुप्रसन्नं लये चैव यथाकामो लयस्तथा॥ दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्। अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति॥ लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः। सकषायं विजानीयाच्छमप्राप्तं न चालयेत्॥ नास्वादयेत्सुखं तत्र निःसंगः प्रज्ञया भवेत्। निश्चलं निश्चलं चित्तमेकीकुर्यात्प्रयत्नतः॥ यदा न लीयते चित्तं न च विक्षिप्यते पुनः। अलिंगनमनाभासं निष्पन्नं ब्रह्म तत्तदा॥"

दानेन सोऽपि संगृहीतः, सेयं पञ्चमी सिद्धिः, 'सदामुदितम्' उच्यते।

तिस्रश्च मुख्याः सिद्धयः–प्रमोदमुदितमोदमानाः ॥ इति "अष्टौ सिद्धयः" ॥

अन्ये व्याचक्षते–"विनोपदेशादिना प्राग्भवीयाभ्यासवशात्त-

---

दानपदेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुत्युक्तं निदिध्यासनमपि दर्शितमित्याह—इति दानेनेति। इति शब्दो हेतौ, तथाच यतः तथाविधाभ्यासपरिपाकात् शुद्धिर्भवति, अत इत्यर्थः। दानेन"=विवेकज्ञानस्य शुद्ध्या सोऽपि=निदिध्यासनापरपर्यायः तादृशाभ्यासपरिपाकोऽपि, संगृहीतः, [1]कार्येण कारणग्रहणस्य अन्यत्र दृष्टत्वादित्यर्थः। तथाच यथा अध्ययनादिशब्दैः श्रवणमनने अभिहिते, तथा दानशब्देनापि निदिध्यासनम् अभिहितम्, अनादिवासनया अविवेकं प्रति आकृष्यमाणाया बुद्धेः तत आकृष्य पुनः पुनर्विवेकख्यातिं प्रति स्थापनस्य निदिध्यासनपदार्थत्वादिति भावः ॥

प्राचीनसंज्ञामाह—सदामुदितमिति। मुदितमिति भावे क्तः। सदामुदितम्=मोदो यत्र तादृशम्। सदामोदहेतुत्वात् सदामुदिताख्येति [2]भावः ॥ ॥

व्याख्याता अपि दुःखविघातरूपमुख्यसिद्धीः संज्ञाविशेषकथनाय पुनराह—[3]तिस्रश्चेति। आधिभौतिकाध्यात्मिकाधिदैविकाख्यदुःखत्रयविघातरूपा इत्यर्थः। प्रमोदेति। आध्यात्मिकदुःखविघातः प्रमोदसंज्ञः, आधिदैविकदुःखविघातः मुदितसंज्ञः, आधिभौतिकदुःखविघातश्च मोदमानसंज्ञ इत्यर्थः। तत्र प्रकर्षेण मोदो यत्र स प्रमोदः, आध्यात्मिकदुःखविघातस्य सर्वोत्कर्षेण इष्टत्वात् तथात्वम्, आधिभौतिकदुःखविघातस्य मुदितत्वं तु मोदाधारत्वादवसेयम्, आधिदैविकदुःखविघातस्य मोदमानत्वं मोदस्य मानम्=भानं यत्रेति व्युत्पत्त्यावधेयम् ॥ ॥

प्राचीनव्याख्यामाह—अन्ये [4]त्विति। प्राग्भवीयोऽभ्यासः=पूर्वजन्मसु

---

१ कार्यम्=विवेकख्यातिरूपम्, कारणं=अभ्यासपरिपाकः, इति प्रकृते बोध्यम्। तथाच विवेकख्यातिरूपेण कार्येण कारणीभूतोऽभ्यासपरिपाकः संगृहीत इत्यर्थः। २ संस्कारसहितानां संशयविपर्यासादीनां परिहारेण विवेकसाक्षात्कारस्य शुद्धे निरन्तरे प्रवाहेऽवस्थानं=परमा शुद्धिः, सा च सदैव मोदहेतुरिति 'सदामुदिता' इत्युच्यते। इति सारम्। ३ साधनसिद्धीरुक्त्वा साध्यसिद्धीर्मुख्या आह—तिस्रश्चेति। अध्ययनादित्रयं विना तत्त्वज्ञानानुत्पत्तेराध्यात्मिकादित्रयस्य नाशाभावादपुमर्थता शास्त्रस्येति कृत्वा मुख्या इति। ४ पाठक्रमवैपरीत्यमसहमानो व्याख्यान्तरमाह—अन्ये त्विति।

त्त्वस्य स्वयमूहनं यत् सा सिद्धिः="ऊहः" । यस्य साङ्ख्यशास्त्रपाठमन्यदीयमाकर्ण्य ज्ञानमुत्पद्यते सा सिद्धिः="शब्दः"-शब्दपाठान्तरभावाद् । यस्य शिष्याचार्यसंबन्धेन संवादेन साङ्ख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते साऽध्ययनहेतुका सिद्धिः="अध्ययनम्" । "सुहृत्प्राप्तिः" इति । यस्याधिगततत्त्वं सुहृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणसिद्धिस्तस्य "सुहृत्प्राप्तिः" । "दानं च" सिद्धिहेतुः–धनादिदानेनाराधितो ज्ञानी ज्ञानं प्रयच्छति । अस्य च युक्तायुक्तत्वे सूरीभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन सिद्धान्तमात्रव्याख्यानप्रवृत्तानाम्" इति ।

---

ज्ञानाभ्यासः ऊहनम्=उद्भवः अन्यदीयम्=अन्यपुरुषसंबन्धिम्, साङ्ख्शास्त्रपाठम् आकर्ण्य=श्रुत्वा, यस्य पुरुषस्य ज्ञानम् उत्पद्यत इति योजना । अधिगतम्=ज्ञातं तत्त्वं येन तादृशम् । प्रयच्छति=ददाति ॥"

एतद् व्याख्यानस्य बहुदोषदुष्टतया अयुक्ततया । शिष्यसुगमत्वात् तद्दोषोद्भावनाद् विरमति—अस्य[1] चेति ॥ प्राचीनव्याख्यानस्येत्यर्थः । सूरिभिः= पण्डितैः, अवगन्तव्ये=ज्ञातव्ये, ज्ञातुं शक्ये एवेति यावत् । इति=अतः, सिद्धान्तमात्रव्याख्यानप्रवृत्तानाम्, नः=अस्माकम्, परदोषोद्भावनेन=परदोषचिन्तनेन, कृतम्=अलम् इति योजना ॥ तत्र प्राग्भवीयाभ्यासस‌द्भावेऽपि उपदेशं विना संस्कारोद्बोधासंभवात् उपदेशमन्तरेण कस्यापि तत्त्वज्ञानं नोदेति, अत एव भगवदवताराणामपि गुरूपदेशाः श्रूयन्ते, अत एव च भाग्यवतां मदालसापुत्राणामपि मातुरुपदेशादेव विवेकख्यातिरभिहिता ।

यदि अन्यदीयसांख्यशास्त्रपाठाकर्णनमात्रेण तत्त्वज्ञानं भवेत्, तदा स्वयं पाठेनापि तत्त्वज्ञानावश्यम्भावात् तस्यापि सिद्ध्यन्तरत्वापत्त्या अष्टसंख्याव्याघात आपद्येत, । न च ऊहपदेन तस्य संग्रह इति भ्रमितव्यम्, ऊहपदार्थवर्णने शास्त्रानुल्लेखात् । किं च—परकीयपाठाकर्णनजन्यतत्त्वज्ञानस्य शब्दपाठानन्तरभवत्त्वात् यदि शब्दपदवाच्यत्वम्, तदा अध्ययनकालीनगुरुवाक्यश्रवणजन्यतत्त्वज्ञानस्यापि शब्दपाठानन्तरभवत्त्वेन शब्दपदबोध्यत्वाविशेषाद् अध्ययनापादनमनर्थकम् ।

"सुहृदं प्राप्य ज्ञानमुत्पद्यते" इत्यत्र प्रष्टव्यम्—"किं तथाविधसुहृत्समागममात्रेण ज्ञानमुत्पद्यते" इत्यभिप्रेतम् ? उत तस्मादुपदेशलाभेन ?" इति । न

---

१ प्रसिद्धिविरोधेन दूषयति—अस्येति । अध्ययनपदं गुर्वधीनवेदाध्ययने प्रसिद्धम्, 'अधीत्य स्नायात्" इति स्मृते नं तु ज्ञाने । ऊहस्तर्कपर्यायो मननं तु अश्रुतस्य स्वयमूहे न शक्तिरस्तीत्यादि, इति दिक् । इति व्याख्यान्तरम् ॥

**सिद्धितुष्टिविपर्ययेणाशक्तिर्बुद्धिवधः सप्तदशधैष्टव्यः।**

**अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति प्रसिद्धमेव, तन्निवारणहेतवस्तु**

---

तावदाद्यः, सर्वथैवासम्भवात्। द्वितीये तथाविधसुहृदोऽपि उपदेशकतया गुरुत्वात् उपदेश्यस्य च शिष्यत्वाद् अध्ययनत्वाविशेषेण पौनरुक्त्यापत्तिः।

एवं धनादिदानाराधितज्ञानिनोऽपि उपदेशकत्वेन उपदेश्यस्यापि शिष्यत्वेन पौनरुक्त्यं द्रष्टव्यम्। तथा चोक्तम्—"संस्कृतैः प्राकृतैर्वापि यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत्स गुरुः स्मृतः॥" इति। इत्येवं तद्व्याख्यानस्य अयुक्ततावीजभूता दोषा उद्भावनीयाः॥ ❀॥

अन्ये तु "लौकिकहेतुं परित्यज्य जन्मान्तरीणहेतुकल्पनम् अन्याय्यम्" इति तन्मते आद्यसिद्धेरयुक्तत्वम्। शब्दश्रवणस्य ज्ञानहेतुत्वेऽपि सङ्केतविशेषज्ञानं विना अर्थविशेषानवधारणात् अन्यदीयपाठश्रवणमात्रात् कथं ज्ञानसम्भवः? इति अर्थज्ञानपूर्वकाध्ययनस्यैव हेतुत्वमुचितम् इति शब्दरूपसिद्धेः शब्दपाठरूपत्वम् अयुक्तम्। एवं ज्ञानिनो धनादिना तोषस्यापि अनुचितत्वम् इति परमतेऽयुक्तत्वं बोध्यम् इति वदन्ति॥ ❀॥

"सप्तदश वधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम्" इत्यनेन यत् तुष्टिसिद्धिप्रतिबन्धकतया बुद्धिवधानां सप्तदशत्वम् उक्तम्, तदिदानीं तुष्टिनवकं सिद्ध्यष्टकं च व्याख्याय उपसंहरति—इतीति। निरुक्तयोः सिद्धितुष्ट्योः सप्तदशत्वेनेत्यर्थः। एष्टव्य इति। सिद्धीनाम् अष्टविधत्वात् तुष्टीनां नवविधत्वात् तासां विपर्ययाणामपि मिलित्वा सप्तदशविधत्वं बुद्धेरशक्तिरूपवधस्येत्यवसेयम्। असिद्ध्योऽतुष्टयश्च प्राग्दर्शिता न विस्मर्तव्याः। अशक्तिर्बुद्धिवध इत्यस्य अशक्तिरूपो बुद्धिवध इत्यर्थः॥

ऊनपञ्चाशत्तमकारिकावतारणायां "बुद्धिधर्माः केचिन्मुमुक्षूणां हेयाः केचिच्चोपादेयाः" इत्युक्तम्, तत्र "के ते हेया उपादेया वा?" इति दर्शयन् कारिकावशिष्टभागं व्याचष्टे—अत्रेति। सिद्धिपर्यन्ते इत्यर्थः। प्रत्ययसर्गे=एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः" इत्यनेनोक्ते बुद्धिसर्गे। उपादेया—"मुमुक्षूणाम्" इति शेषः। प्रसिद्धमेवेति। दुःखविघातरूपाणां मुख्यसिद्धीनां स्वारसिकेच्छाविषयत्वात्, तदुपायानां च गौणसिद्धीनां मुख्यसिद्धीच्छाधीनेच्छाविषयत्वादिति भावः।

हेयांस्तु बुद्धिधर्मान् आचार्य एव दर्शयतीत्याह—तन्निवारणेति। सिद्धिनिवारणेत्यर्थः। विपर्ययेति। "पूर्वस्त्रिविधः सिद्धेरङ्कुशः" इत्यन्वयात् पूर्व-

---

१ अन्यैः कृतस्त्वर्थो न सङ्गतोऽपि प्रेक्षावतां परीक्षणायैव मिश्रैरदर्शीति बाढं प्रतीमः।

२ विपर्ययादयो हि सिद्धेर्विरोधिन इत्यनुभवसिद्धमित्युक्तम्—प्रसिद्धमेवेति।

३ 'पूर्व'शब्दस्य सर्वनामत्वं द्योतयन्नाह—पूर्व इतीति।

विपर्ययाशक्तितुष्टयो हेया इत्याह—"सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति । "पूर्व" इति विपर्ययाशक्तितुष्टीः परामृशति । ताः=सिद्धि-करिणीनामङ्कुशो—निवारकत्वात् । अतः सिद्धिपरिपन्थित्वादङ्कुश इवेति विपर्ययाशक्तितुष्टयो हेया इत्यर्थः ॥ ५१ ॥

---

पदेन सर्वनाम्ना उपस्थितसिद्धिपूर्ववर्तिनमेव त्रिविधं विपर्ययाशक्तिरूपम् उपस्थापयतीत्यर्थः । तथाच—"एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः" इत्यादिना समासेन बुद्धिधर्माणां चतुर्विधत्वम् उक्त्वा, "तस्य तु भेदाः पञ्चाशत्" इत्यनेन तस्य चतुर्विधबुद्धिधर्मस्य पञ्चाशद्भेदत्वम् अभिधाय, क्रमेण एकैकस्य प्रकारभेदनिर्देशेन समुदायेन पञ्चाशत्प्रकारत्वं गणनया संस्थाप्य, सर्वतः प्राक् समासेन अभिहितानां चतुर्णां विपर्ययादिप्रत्ययसर्गाणां मध्ये पूर्ववर्तित्रयम् अन्तवर्तिनो विरोधि इति दर्शयतीति भावः ॥

ताः=विपर्ययाशक्तितुष्टयः, सिद्धिरूपा याः करिण्यः=हस्तिन्यः, तासाम् इत्यर्थः । अङ्कुशधर्ममाह—निवारकत्वादिति । तथाच अङ्कुशशब्दो हस्तिनां स्वच्छन्दव्यवहारनिवारकाऽस्त्रविशेषे रूढः, अत्र तु निवारकत्वगुणयोगाद् विपर्ययादयोऽपि अङ्कुशत्वेन रूपिताः । "गुणसिन्धुः" इत्यादौ सिन्धुपदसामर्थ्यात् गुणे जलत्वमिव अङ्कुशपदसामर्थ्यात् सिद्धीनां करिणीत्वं व्यज्यते इति भावः । सिद्धिपरिपन्थित्वात्=सिद्धिविरोधित्वात्, सिद्धिविघातकत्वादिति यावत्, अङ्कुश इव=अङ्कुशसदृशः, । अतस्ता मुमुक्षूणां हेया इत्याह—इतीति । अतो हेतोरित्यर्थः ॥ ५१ ॥ ॐ ॥

### गौणसिद्धयः ।

( १ ) अध्ययनम्, [ तारम् ] ( २ ) शब्दः, [ सुतारम् ] शब्देन अर्थज्ञानम्, ( ३ ) ऊहः, ( तर्कः ) [ तारतरम् ] ( ४ ) सुहृत्प्राप्तिः ( मित्रमिलनम् ) [ रम्यकम् ] ( ५ ) दानम्, ( विवेकज्ञानशुद्धिः ) [ सदामुदितम् ] इति पञ्च गौण्यः सिद्धयः ॥

### मुख्यसिद्धयः ।

( १ ) आध्यात्मिकदुःखनाशः, [ प्रमोदः ] ( २ ) आधिभौतिकदुःखनाशः [ मुदितम् ] ( ३ ) आधिदैविकदुःखनाशः [ मोदमानः ] इति तिस्रो मुख्याः सिद्धयः । मिलित्वा अष्टौ सिद्धयो भवन्ति ॥

## प्रकारान्तरेण सिद्धयः ।

### ( १ ) ऊहः ।

यत्र पूर्वजन्मनोऽभ्यासेन स्वयमेव तत्त्वज्ञानं भवति सा सिद्धिः ऊह इत्युच्यते ।

स्यादेतत्—पुरुषार्थप्रयुक्ता सृष्टिः, स च पुरुषार्थः प्रत्ययसर्गाद्वा तन्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद्द्विधा प्रवर्तते सर्गः ॥ ५२ ॥

"लिङ्गम्" इति तन्मात्रसर्गमुपलक्षयति, "भावैः" इति च

---

(२) शब्दः ।

यत्र अन्यस्य सांख्यशास्त्रीयाध्ययनं श्रुत्वा तत्त्वज्ञानं भवति सा सिद्धिः शब्द इत्युच्यते ।

(३) अध्ययनम् ।

यत्र गुरुशिष्ययोः सबन्धेन संवादपूर्वकं ग्रन्थतः अर्थतश्च सांख्यशास्त्राध्ययनेन तत्त्वज्ञानं भवति सा सिद्धिः अध्ययनम् इत्युच्यते ।

(४) सुहृत्प्राप्तिः ।

यत्र तत्त्वज्ञातुर्मित्रस्य प्राप्त्या ज्ञानमुत्पद्यते सा सिद्धिः सुहृत्प्राप्तिरित्युच्यते ।

(५) दानम् ।

यत्र धनस्य दानेन सन्तुष्टो भूत्वा गुरुर्ज्ञानं ददाति सा सिद्धिः धनदानकारणकत्वात् दानमिति भाष्यते ॥ इति सारम् ॥ ५१ ॥

## अथ लिङ्गभावसर्गयोः फलनिरूपणम् ।

लाघवादेकस्मादेकस्मात् कार्यं सिध्यतीति कृतं द्वितीयेनेति शङ्कते—स्यादेतदिति । प्रत्ययसर्गात्=महदादिसर्गात्, विपर्ययाशक्तितुष्टिसिद्ध्याख्यात्, तन्मात्रसर्गात्=आकाशादिसर्गात्, तन्मात्रकृतसूक्ष्मशरीरस्थूलशब्दादिस्थूलमहाभूततत्कृतस्थूलशरीरादिरूपात् । इतीति । इतिशब्दो हेतौ, तथा च यस्मात् एकतरेणैव सर्गेण पुरुषार्थसिद्धिः, तस्मादित्यर्थः । कृतम्=अलम्, उभयसर्गेण=प्रत्ययतन्मात्ररूपसर्गद्वयेन ॥ ॐ ॥

बुद्धितत्त्वात् द्विविधा सृष्टिर्भवति, भावसृष्टिः लिङ्गसृष्टिश्च । तत्र भावसृष्टेः संक्षेपः धर्माद्यष्टभेदेषु, विस्तारश्च पञ्चाशद्भेदेषु कथितोऽस्ति, द्वितीया लिङ्गसृष्टिश्च अहङ्कारद्वारा एकादशेन्द्रियाणां पञ्चतन्मात्राणां च रूपेऽस्ति, यस्याः विस्तारः स्थूलदेहप्रभृतयः सर्वे एव स्थावरजङ्गमाः सन्ति । अनयोर्द्वयोः सृष्ट्योः संबन्धे प्रश्नोऽयं जायते—यत्, बुद्ध्या सृष्टिद्वयं किमर्थमकारि, एकयैव सृष्ट्या तस्याः चारितार्थ्यसंभवात्? इति, प्रश्नस्य उत्तरार्थमेव इयं कारिकास्ति—न विनेति ॥ भावैः=प्रत्ययसर्गैर्विना, लिङ्गम्=तन्मात्रसर्गो न भवति, उत्तरोत्तरदेहलाभस्य पूर्वपूर्वसंस्कारादृष्टकारितत्वादिति भावः । लिङ्गेन=तन्मात्रसर्गेण च

प्रत्ययसर्गम् । एतदुक्तं भवति–तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं, स्वरूपं च, "न" प्रत्ययसर्गाद् "विना" भवति,-एवं प्रत्ययसर्गस्य स्वरूपं, पुरुषार्थसाधनत्वं च, "न" तन्मात्रसर्गादृते,–इत्युभयथा सर्गप्रवृत्तिः । भोगः=पुरुषार्थो न भोग्यान्=शब्दादीन्, भोगायतनं च=शरीरद्वयमन्तरेण सम्भवतीत्युपपन्नस्तन्मात्रसर्गः,–एवं स एव भोगो भोगसाधनानि=इन्द्रियाण्यन्तःकरणानि चान्तरेण

---

विना, भावनिर्वृत्तिः=प्रत्ययसर्गनिष्पत्तिर्न भवति, धर्मादेः स्थूलसूक्ष्मदेहसाध्यत्वात् । तस्मात् लिङ्गाख्यः=लिङ्गनामा, तन्मात्रसर्ग इति यावत्, भावाख्यः=भावनामा, प्रत्ययसर्ग इति यावत्, इति द्विविधः सर्गः=सृष्टिः, बुद्धितत्त्वात् प्रवर्तते इत्यन्वयः ॥ ५२ ॥ ॐ ॥

यद्यपि लिङ्गपदं सूक्ष्मशरीरपरं प्रागुक्तम्, तथापि तस्य तन्मात्रपञ्चकघटितत्वाद् अत्र तन्मात्रसर्गमात्रोपलक्षणमित्याह—लिङ्गमितीति । तथा भावपदस्यापि "भावैरधिवासितं लिङ्गम्" इत्यत्र धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपबुद्धिधर्मपरतया व्याख्यातत्वाद् अत्र बुद्धिधर्मत्वेन विपर्ययादिपञ्चाशद्भेदानामपि संग्रहार्थत्वमित्याह—भावैरिति चेति । परस्परं विना स्वरूपं पुरुषार्थसाधनत्वं च न संभवतीति मनसि निधाय कारिकाभिप्रायमाह—एतदुक्तं भवतीति । "भावैर्विना लिङ्गं न भवति" इत्यस्य "तन्मात्रसर्गो भूतोऽपि भावैर्विना पुरुषार्थसाधनं न स्यात्" इत्यभिप्रायेणाह—पुरुषार्थसाधनत्वं[1] स्वरूपं चेति । स्वरूपम्=तन्मात्रसर्गोत्पत्तिः । "लिङ्गेन विना न भावनिर्वृत्तिः" इत्यस्यापि "तन्मात्रसर्गं विना प्रत्ययसर्गो न निष्पद्यते, निष्पन्नोऽपि पुरुषार्थसाधनं न स्यात्" इत्यभिप्रायकत्वमाह—एवं प्रत्ययसर्गस्येति । स्वरूपम्=प्रत्ययसर्गोत्पत्तिः । "ऋते" इत्यनन्तरं "भवति" इति क्रियाया अनुषङ्गः । इति=अतः, उभयथा=उभयप्रकारेण ॥ ॐ ॥

तन्मात्रसर्गम् उपपादयति—भोग इत्यादिना । भोगः=सुखसाधनश्रवणादिः । भोग्यान्=तद्विषयान् । भोगायतनम्=भोगाधिष्ठानम् । शरीरद्वयमिति । सूक्ष्मशरीरं स्थूलशरीरं चेत्यर्थः । "शब्दादीन्" "शरीरद्वयम्" इति द्वितीयान्तयोः "ऋते" इत्यनेनान्वयः । ननु "भोग्यान् शब्दादिविषयान् विना भोगो न संभवति" इत्युपपद्यताम्, शरीरद्वयस्य तु भोगायतनत्वं कथम् उपपन्नम्? इत्यत आह—एवमिति । स एव=यो भोग्यं विना न संभवति स एवेत्यर्थः । भोगसाधनानि इन्द्रियाणि विना, भोगसाधनानि अन्तःकरणानि च

---

१ उपपत्तिमाह—तन्मात्रसर्गस्येति । विना न भवति—कुतो घटादिवज्जडत्वादित्यर्थः । प्रत्ययसर्गस्यापेक्षामाह—एवमिति । एवं तन्मात्रसर्गस्यापि उपयोगमाह—भोग इति । उपपन्नः=युक्तिमान्, भोग्यादीनां तन्मात्रकार्यत्वादिति भावः ।

**न संभवति, न च तानि धर्मादिभिर्भावैर्विना संभवन्ति, न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गेण विनेत्युपपन्न उभयविधः "सर्गः"।**

---

विना भोगो न संभवतीत्यन्वयः । इन्द्रियाणीति । एतेन इन्द्रियान्तःकरणादिसंघातरूपसूक्ष्मशरीरस्य भोगायतनत्वम् उपपादितम् । एतेनैव सूक्ष्मशरीरायतनत्वेन स्थूलशरीरस्यापि परम्परया भोगायतनत्वं साधितम् ॥ ❀ ॥

अयमाशयः—श्रवणादेः इन्द्रियसाध्यत्वेन तज्जन्यसुखानुभवस्य च बुद्धिसाध्यत्वेन तत् संघातरूपसूक्ष्मशरीरं विना शब्दादिविषयभोगो न संभवति। सूक्ष्मशरीरमपि स्थूलशरीरं विना न शक्नोति भोगं सम्पादयितुम् । तथाहि—सन्नपि सूक्ष्मशरीरघटकेन्द्रियवर्गः स्थूलशरीराभावात् कर्णशष्कुल्यादिरूपेन्द्रियाऽऽयतनाऽग्राह्या विषयैः शब्दादिभिः सन्निकर्षम् अलभमानः शब्दादीन् न आलोचयितुं प्रभवतीति संकल्पाऽहङ्काराऽध्यवसायानाम् असंभवात् न सुखानुभवसंभवः । अत एव वृद्धादीनां सत्यपि सूक्ष्मशरीरे, सत्यपि च स्थूलशरीरविशेषे, तत्र इन्द्रियाऽऽयतनाभावात् न शब्दादिश्रवणं जायते, इति शरीरद्वयमेव भोगाधिष्ठानतया पुरुषार्थसाधनमिति ॥ ❀ ॥

ननु सिद्धं तन्मात्रसर्गस्य शरीरद्वयरूपस्य भोगसाधनत्वेन पुरुषार्थसाधनत्वम्, परन्तु प्रत्ययसर्गैर्विना तेषामुत्पत्तेः पुरुषार्थसाधनत्वस्य च असंभवः कथम् उन्नेयः ? इत्यत आह—**न च तानीति** । तानि=भोगसाधनानि इन्द्रियान्तःकरणानि । **धर्मादीति** । धर्मादीनां प्रत्ययसर्गान्तर्गतत्वादिति भावः । **संभवन्तीति** । इन्द्रियान्तःकरणानां सुखदुःखभोगायतनत्वेन धर्माधर्मनिमित्तकत्वावश्यकत्वादिति भावः । एतेन शरीरस्वरूपस्य तस्य सुखादिसाधनतायाश्च धर्मादिमूलकतया तन्मात्रसर्गस्य भावनिमित्तकत्वं साधितम् । साधितं च तन्मात्रसर्गस्य उपयोगित्वम् । तन्मात्रसर्गं विना प्रत्ययसर्गानिष्पत्तिस्तु न साधनीया, धर्मादिरूपस्य श्रवणमननादिरूपस्य वा प्रत्ययसर्गस्य शरीरद्वितयसाध्यतायाः सर्वलोकसिद्धत्वात् । नापि प्रत्ययसर्गस्य भोगरूपपुरुषार्थसाधनत्वं साधनीयम्, स्वर्गादिभोगस्य धर्मादिसाध्यताया नानाशास्त्रसिद्धत्वात् । भोगरूपपुरुषार्थसाधनतायाः सुव्यक्ततया प्रत्ययसर्गस्य उपयोगित्वमपि सुगममेवेति न तत्र किमप्युक्तम् ॥ ❀ ॥

सम्प्रति कैवल्यरूपपुरुषार्थहेतुभूता विवेकख्यातिः उभयविधसर्गसाध्यैव, इत्याह—**न चेति** । **उभयसर्गेणेति** । शरीरद्वितयरूपं तन्मात्रसर्गं, श्रवणमननादिरूपं प्रत्ययसर्गं च विना, अपवर्गहेतुः विवेकख्यातिर्न संभवतीत्यर्थः । तथा च धर्मादिकं शरीरम् उत्पाद्य भोगाख्यं पुरुषार्थं निष्पादयति, शरीरं च धर्मादिकम् अव्यभिचारेण उत्पाद्य भोगाख्यं पुरुषार्थं निष्पादयति । परमपुरुषार्थरूपापवर्गहेतुर्विवेकख्यातिस्तु ताभ्यां सर्गाभ्याम् एकतरेण अन्यतरम्

---

१ परमपुरुषार्थे मोक्षेऽपि उभयसर्गापेक्षेत्याशयः ।

अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषभाव इति। कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्गयोरुत्पत्तिर्नानुपपन्नेति सर्वमवदातम् ॥ ५२ ॥

---

उत्पाद्य न जन्यते, किं तु द्वाभ्यामेव मिलिताभ्यामिति विशेषः। न हि श्रवणादिरूपः प्रत्ययसर्गः शरीरम् उत्पादयति, नापि शरीरम् अव्यभिचारेण श्रवणमननादिकम्, अस्मदादौ व्यभिचारादिति भावः ॥ ❀ ॥

इत्युपपन्न उभयविधः सर्ग इति। अयमत्र निष्कर्षः,—पुरुषार्थभोगरूपाय भोगाय वस्तुत्रयमपेक्षितम्—भोग्यं, भोगाधिकरणं, भोगसाधनं च। राजकर्तृके हि भोगे भोग्यम्=वनितादि, भोगाधिकरणम्=शय्यादि, भोगसाधनानि च=पानानुलेपनादीनि अपेक्ष्यन्ते। पुरुषार्थविषये चैतत् त्रयं किं रूपम्? इत्याकाङ्क्षायाम्—भोग्यम्=शब्दादिकम्, भोगाधिकरणम्=शरीरं स्थूलसूक्ष्मरूपेण द्विविधम्, भोगसाधनानि च=करणानि बाह्याभ्यन्तरभेदेन द्विविधानि,। तत्र भोगभोगाधिकरणयोः संपादनाय तन्मात्रसर्गः, भोगसाधनसंपादनाय च प्रत्ययसर्गोऽपेक्षित इति सर्गद्वयमपेक्षितमेव, अन्यतराभावे पुरुषार्थासिद्धेरिति ॥ ❀ ॥

ननु धर्मादयो भावाः शरीरापेक्षाः, शरीरं च धर्माद्यपेक्षम्[1] इति परस्पराश्रयेण[2] उभयमपि न संभवेत्? इत्याशङ्क्याह—अनादित्वाच्चेति। सर्गद्वितयप्रवाहस्य आदिरहितत्वादित्यर्थः। तथाच "धर्मादिपूर्वकं शरीरम्, शरीरपूर्वकं च धर्मादि" इत्यत्र पूर्वस्य अनवधिकत्वात् न अन्योन्याश्रयदोष इति भावः। अत्र दृष्टान्तमाह—बीजाङ्कुरेति। अत्र अङ्कुरपदम् अङ्कुरपरिणाम वृक्षलतादिपरम्। तथाच—यथा "परिणताङ्कुरजन्यं बीजम्, बीजजन्यश्च अङ्कुरपरिणामः" इत्यत्र बीजाङ्कुराणाम् अनादित्वात् न अन्योन्याश्रयदोषः, तद्वदित्यर्थः ॥

'एवं च यथा बीजस्य प्राथम्यम् अङ्कुरस्य वा' इत्यनिर्णयेऽपि नेतरेतराश्रयदोषोऽभ्युपगम्यते तथेहापीति नानुपपत्तिरिति भावः ॥ ❀ ॥

ननु प्रलयदशायां सर्वविकाराणां प्रकृतिभावापन्नत्वात् तदनन्तरप्राथमिकतन्मात्रसर्गस्य कथं धर्मादिसाध्यत्वम्? इत्यत आह—कल्पादावपीति[3]। प्रलयानन्तरप्राथमिकसर्गे इत्यर्थः। प्राचीनकल्पेति। तथाच—"सर्गः प्रलय-

---

१ शरीरस्य धर्मादिजन्यत्वं धर्मादेश्च शरीरजन्यत्वम् इत्यस्य सार्वजनीनत्वादिति भावः। २ प्रत्ययसर्गे सति तन्मात्रसर्गस्तस्मिन् सति प्रत्ययसर्ग इत्येवं वान्योन्याश्रयः। न चानादित्वे मानाभावः, "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा" इत्यादेर्मानत्वात्। ३ ननु भवतु तथा, इदानीं सर्गादौ भवत्येवान्योन्याश्रयवेत्यत आह—कल्पादाविति। संस्कारः=तत्तत्कार्याणां सूक्ष्मावस्था इत्यन्ये।

विभक्तः प्रत्ययसर्गः, भूतादिसर्गं च विभजते—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुषकश्चैकविधः समासतो भौतिकः सर्गः ॥५३॥

ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रो, गान्धर्वो, याक्षो, राक्षसः,

---

पूर्वकः, प्रलयं विना सर्गासंभवात्, प्रलयश्च सर्गपूर्वकः, सर्गं विना प्रलयासंभवात्" इति सर्गप्रलयावनादिभावेन प्रवहतः। ततश्च प्रलयदशायां पूर्वसर्गोत्पन्नभावलिङ्गयोः संस्काररूपेण अवस्थानात् तद्वशेन भावलिङ्गयोरुत्पत्तौ नानुपपत्तिरिति भावः। अवदातम्=निर्मलम्, निर्दोषमिति यावत् ॥ ५२ ॥

वृत्तमनूद्य वर्तिष्यमाणं प्रतिजानीते—विभक्त इति। विभक्तः=विभागेन प्रतिपादितः, तत्तद्व्याप्यधर्मेण प्रदर्शित इति यावत्। भूतादिसर्गम्=तन्मात्रसर्गम्, विभजते=विशेषधर्मेण प्रतिपादयति ॥ ॐ ॥

## अथ भूतादिसर्गस्य भेदनिरूपणम्।

अष्टविकल्प इति॥ दैवः=देवयोनौ भवः, सर्गः=सृष्टिः, अष्टविकल्पः=अष्टप्रकारः, भवति, तैर्यग्योनः=तिर्यग्योनौ भवः, सर्गः पञ्चधा=पञ्चप्रकारो भवति, मानुषकः=मनुष्ययोनौ भवः, सर्गः, एकविधः=एकप्रकारो भवति, इत्येवं समासतः=संक्षेपतः, चतुर्दशविधः भौतिकः सर्गोऽस्तीत्यन्वयः ॥ ५३ ॥ ॐ ॥

दैवसर्गस्य अष्टौ भेदान् दर्शयति—ब्राह्मेति। ब्राह्मः=ब्रह्मलोकवासी, प्राजा-

---

१ अत्र याज्ञवल्क्यः—

"परद्रव्याण्यभिध्यायंस्तथाऽनिष्टानि चिन्तयन्।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु॥
पुरुषोऽनृतवादी च पिशुनः परुषस्तथा।
अनिबद्धप्रलापी च मृगपक्षिषु जायते॥
अदत्तादाननिरतः परदारोपसेवकः।
हिंसकश्चाविधानेन स्थावरेष्वभिजायते॥
आत्मज्ञः शौचवान् दान्तस्तपस्वी विजितेन्द्रियः।
धर्मकृद्वेदविद्यावित्सात्त्विको देवयोनिताम्॥
असत्कार्यरतोऽधीर आरम्भी विषयी च यः।
स राजसो मनुष्येषु मृतो जन्माधिगच्छति॥
निद्रालुः क्रूरकृल्लुब्धो नास्तिको याचकस्तथा।
प्रमादवान् भिन्नवृत्तो भवेत्तिर्यक्षु तामसः॥
रजसा तमसा चैवं समाविष्टो भ्रमन्निह।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते॥" इति।

पैशाचः-इत्यष्टविधो="दैवः" सर्गः । "तैर्यग्योनश्च पञ्चधा भवति"-पशुमृगपक्षिसरीसृपस्थावरा इति । मानुषकश्चैकविध"

---

पत्यः=प्रजापतिलोकवासी, ऐन्द्रः=स्वर्लोकवासी, पैत्रः=पितृलोकवासी, चन्द्र-लोकवासीति यावत्, "सोमाधाराश्च पितरः" इत्युक्तेः । गान्धर्वः=गन्धर्व-लोकवासी, याक्षः=यक्षलोकवासी, राक्षसः=रक्षोलोकवासी, पैशाचः=पिशाच-लोकवासी इत्यर्थः । ब्रह्मादीनां पिशाचपर्यन्तानां देवयोनिविशेषत्वाद् दैवत्वम् । सामान्यधर्मस्तु मनुष्याद्यपेक्षया शक्त्यतिशयशालित्वम् ॥ ※ ॥

तैर्यग्योनस्य पञ्चप्रकारान् दर्शयति—पश्विति । तत्र पशवः=ग्राम्याश्चतु-ष्पदाः-गवाश्वादयः, मृगाः=आरण्यकाश्चतुष्पदाः-हरिणादयः, पक्षिणः=पतत्र-वन्तो गृध्रादयः, सरीसृपाः=अल्पचरणाः चरणरहिता वा-सर्पशतपदीवृश्चि-कादयः, स्थावराः=प्रायः प्रत्यक्षचेष्टारहिताः-वृक्षादयः, इति विवेकः । अत्र च सरीसृपेषु कीटादीनां, निर्जीवानां घटादीनां च स्थावरेषु अन्तर्भाव इति ज्ञेयम् ॥ ※ ॥

अन्ये तु—"ननु मृगाणामपि पश्वन्तर्भावात् पञ्चविधत्वानुपपत्तिरिति चेत् । न, पशुपदेन अनुक्तप्राणिमात्रपरिग्रहात् पञ्चविधत्वोपपत्तेः । अत एव शब्द-रत्नावल्यादिषु कोषेषु प्राणिमात्रेऽपि पशुपदं सङ्केतितम् । एवं च वनमानुष-

---

परधनानि कथमपहरेयमिति आभिमुख्येन ध्यायन्, तथा अनिष्टानि=ब्रह्महत्यादीनि हिंसात्मकानि करिष्यामीति चिन्तयन्, वितथे=असत्यभूते वस्तुनि अभिनिवेशः=पुनः पुनः संकल्पः तद्वांश्च, चण्डालाद्यन्त्ययोनिषु जायते ॥ यस्त्वनृतवदनशीलः पुरुषः, पिशुनः=कर्णेजपः, परुषः=परोद्वेगकरभाषी अनिबद्धप्रलापी=प्रकृतासङ्गतार्थवादी च बुद्धि-पूर्वाबुद्धिपूर्वावृत्त्यादितारतम्याद्धीनोत्कृष्टेषु मृगपक्षिषु जायते ॥ अदत्तादाननिरतः=परध-नापहारप्रसक्तः, परदारप्रसक्तश्च, अविहितमार्गेण प्राणिनां घातकश्च, दोषगुरुलघुभाव-तारतम्यात् तरुलताप्रतानादिस्थावरेषु जायते ॥ सत्त्वादिगुणपरिपाकमाह—आत्मज्ञः= विद्याधनाभिजनाद्यभिमानरहितः, बाह्याभ्यन्तरशौचयुक्तः, उपशमान्वितः, कृच्छ्रादित-पोयुक्तः, तथा इन्द्रियार्थेष्वप्रसक्तः, नित्यनैमित्तिकधर्मानुष्ठाननिरतः, वेदार्थवेदी च यः स सात्त्विकः । स च सत्त्वोद्रेकतारतम्यवशात् उत्कृष्टोत्कृष्टतरसुरयोनितां प्राप्नोति ॥ असत्कार्येषु=तूर्यवादित्रनृत्यादिष्वभिरतो यः, व्यग्रचित्तः, सदा कार्याकुलः, विषयेष्वति-प्रसक्तश्च, स रजोगुणयुक्तः । तद्गुणतारतम्यात् हीनोत्कृष्टमनुष्यजातिषु मरणान्तर-मुत्पत्तिं प्राप्नोति ॥ यः पुनर्निद्राशीलः, प्राणिपीडाकरो, लोभयुक्तश्च, तथा नास्तिको= धर्मादेर्निन्दकः, याचनशीलः, प्रमादवान्=कार्याकार्यविवेकशून्यः विरुद्धाचारश्च—असौ तमोगुणयुक्तः । तत्तारतम्याद्धीनहीनतरपश्वादियोनिषु जायते ॥ पूर्वोक्तमुपसंहरति—य एवम् अविद्याविद्धोऽयमात्मा रजस्तमोभ्यां सम्यगाविष्ट इह=संसारे पर्यटन् नानाविध-दुःखप्रदैर्भावैरभिभूतः पुनः पुनः संसारं=देहग्रहणं प्राप्नोति ॥" इत्येतद्व्याख्यायां विज्ञानेश्वरः ।

इति ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया, संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात् । "समासतः"=सङ्क्षेपतः "भौतिकः सर्गः। घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति ॥ ५३ ॥

---

जलमानुषादीनामपि तैर्यग्योनत्वम् । अन्यथा तदसंग्रहापत्तेः । ततश्च मृगपदं लोमवल्लाङ्गूलवत्प्राणिपरम् । पक्षिपदं पतङ्गादीनामपि परिग्रहार्थम् । सरीसृपपदं च भुजङ्गवत् कीटमीनादीनामपि परिग्रहार्थम्, पदपक्षव्यतिरेकेण मुहुः सर्पणशीलत्वात् । स्थावराः=तरुलतागुल्मादयो घटादयश्च, स्वतोगतिशीलत्वाभावात्" ॥ इति व्याचक्षते ॥ ॐ ॥

ननु मनुष्याणां ब्राह्मणादिभेदेन चतुर्विधत्वात् "मानुषकश्चैकविधः" इत्यनुपपन्नम्? इत्यत आह—अवान्तरेति । यथा पशूनाम् अवान्तरभेदो न विवक्षितस्तथेति भावः । संस्थानस्य=आकृतिभेदस्य अवयवसंस्थानकृतस्य, चतुर्षु= ब्राह्मणक्षत्रियवैश्यशूद्रेषु । अविशेषादिति । समानसंस्थानत्वं चतुर्णामविशिष्टमिति भावः । इति=एवं प्रकारेण ॥

ननु घटादिसर्गः परिशिष्टः, घटादीनां शरीरत्वाभावात्, "शीर्यते—रोगेण विनाश्यते, इति शरीरपदव्युत्पत्तेरित्यत आह—घटादयस्त्विवति । अशरीरत्वेऽपीति । तथाच स्थावरपदस्य शरीरपरत्वाभावात् घटादीनां तदन्तर्भाव इति भावः ॥ ॐ ॥

अन्ये तु—"अशरीरत्वे=सजीवशरीरवैशिष्ट्याभावे, निर्जीवशरीरं तु सर्वस्यापि मूर्तपदार्थस्यास्त्येव, प्रायः शरीरशब्देन जीवच्छरीरस्यैव बोधो लोके प्रसिध्यतीत्यभिप्रायः । शीर्यमाणतारूपो व्युत्पत्तिलभ्यस्त्वर्थो मूर्तपदार्थमात्रम् अन्तर्भावयति" इत्येवं व्याचक्षते ॥ ॐ ॥

अत्र अष्टविधपञ्चविधत्वादिकं महाभूतविकाराणामेव विभागो, न तु महाभूतानामिति क्षित्यादिभूतानाम् एतेष्वनन्तर्भावेऽपि न विभागत्वहानिरिति बोध्यम् ॥ ५३ ॥ ॐ ॥

### अष्टविधो देवसर्गः ।

( १ ) ब्रह्मा, ( २ ) प्रजापतिः, ( ३ ) इन्द्रः, ( ४ ) पितरः, ( ५ ) गन्धर्वाः, ( ६ ) यक्षः, ( ७ ) राक्षसः, ( ८ ) पिशाचः, इत्यष्टविधो देवसर्गः ।

### पञ्चविधः तिर्यग्योनिसर्गः ।

( १ ) पशुः, ( २ ) मृगः, ( ३ ) पक्षी, ( ४ ) सरीसृपः, ( ५ ) स्थावरः, इति पञ्चविधः तिर्यग्योनिसर्गः ।

### एकविधो मनुष्यसर्गः ।

( १ ) मनुष्यः, इत्येकविधो मनुष्यसर्गः । इत्थं सर्वेषां योगेन चतुर्दशविधः संक्षेपतो भूतसर्गोऽस्ति ॥ ५३ ॥ ॐ ॥

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्ध्वाधोमध्यभावेन त्रैविध्यमाह—

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥

"ऊर्ध्वं सत्त्वविशालः"=द्युप्रभृतिसत्यान्तो लोकः सत्त्वबहुलः । "तमोविशालश्च मूलतः सर्गः"=पश्वादिस्थावरान्तः, सोऽयं मोह-

---

ननु तन्मात्रसर्गस्याविशेषे कथं सुखादितारतम्यमित्याशङ्क्य सत्त्वादिवैषम्यप्रयोज्यचैतन्योत्कर्षनिकर्षतारतम्यादित्यभिप्रायेणाह—चैतन्येति । सत्त्वादिवैषम्ये तु धर्मादिकं निमित्तमिति बोध्यम् ॥

ऊर्ध्वमिति ॥ ऊर्ध्वम्=उच्चैः सर्गः, देवसर्ग इति यावत्, सत्त्वविशालः=सत्त्वप्रचुरः, तत्रत्येषु रजस्तमसोः सत्त्वेऽपि सत्त्वाधिक्यश्रवणात् । मूलतः=नीचैः सर्गः, तैर्यग्योन इति यावत्, तमोविशालः=तमोबहुलः, तत्र सत्त्वरजसोः सत्त्वेऽपि तमसः आधिक्योपलब्धेः, मध्ये सर्गः=मनुष्यसर्ग इति यावत्, रजोविशालः=रजोबहुलः, तत्र सत्त्वतमसोः सत्त्वेऽपि धर्माधर्मप्रवृत्तिपरत्वदर्शनेन रजसः आधिक्यकल्पनात् । एवं ब्रह्मादिस्तम्बपर्यन्तः सर्वो लोको गुणत्रयव्याप्त इत्यर्थः ॥ ५४ ॥ ❀ ॥

ऊर्ध्वम् इति व्याचष्टे—द्युप्रभृति सत्यान्तो लोक इति । स्वर्गादिब्रह्मलोकपर्यन्त इत्यर्थः । सत्यान्तलोकपदेन सत्यान्तलोकविशेषवासिनो जीवा लक्ष्यन्ते । लोकविशेषस्य जडतया चैतन्योत्कर्षनिकर्षासंभवात् । सत्त्वविशाल इति व्याचष्टे—सत्त्वबहुल इति । तथाच रजस्तमसोः सत्त्वेऽपि सत्त्वांशस्यैव प्राचुर्यम्, तत्तल्लोकवासिनां ज्ञानसुखातिशयवत्त्वादिति भावः ॥ ❀ ॥

अन्ये तु—"द्यौः=अन्तरिक्षम्, पृथिव्याः सन्निहितं भुवर्नामकम् । प्रभृतिशब्देन स्वर्महर्जनस्तपः समाख्यानां लोकानां ग्रहणम् । सत्यं च=पृथिव्या भूर्लोकसमाख्याया विप्रकृष्टतमम्, । षट्सु च भुवरादिषु सत्यान्तेषु लोकेषु क्रमात् सत्त्वस्य आधिक्यम्=तारतम्येन उत्कर्षः" ॥ इति व्याचक्षते ॥ ❀ ॥

मूलत[2] इत्यत्र मूलपदं निम्नपरम्, वृक्षवन्मूलमध्योर्ध्वभावेन वर्णनात्, तथाच "मूलतः=नीचैः सर्गस्तमोविशालः" इत्यर्थमभिप्रेत्य मूलतः सर्ग इति व्याचष्टे—पश्वादिः स्थावरान्त इति । तमोबाहुल्ये हेतुमाह—मोहमयत्वादिति । मोहप्रचुरत्वादित्यर्थः । तथाच तत्रापि सत्त्वरजसी तिष्ठत इति भावः ॥ "मध्ये सर्गः-यो नोच्चैर्नापि नीचैस्तथाविधः सर्गो रजो विशालः"

---

१ तथा चोक्तं गीतासु श्रीभगवता—"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः" ॥ ( १८-४० ) ॥ २ मूलतः=भूलोकादधः, तद्दर्शयति—पश्वादीति । पश्वादेरधःपतनशीलत्वादिति व्यक्तोऽर्थः ।

मयत्वात्तमोबहुलः । भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशः "मध्ये रजोविशालः"—धर्माधर्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च । तामिमां लोकसंस्थितिं संक्षिपति—"ब्रह्मादिस्तम्बपर्यन्तः" । स्तम्बग्रहणेनोपलक्षणतया वृक्षादयोऽपि संगृहीताः ॥ ५४ ॥

---

इत्यर्थमभिप्रेत्याह—भूर्लोकस्त्विति । मध्ये इति । सर्ग इति शेषः । तथाच—भूर्लोकरूपो मध्ये यः सर्गः स रजोबहुल इत्यर्थः । अत्रापि भूर्लोकपदेन तद्गता मनुष्या लक्षणीयाः, लोकविशेषस्य जडत्वेन तत्र चैतन्योत्कर्षनिकर्षविरहात् । तस्य परिस्थितिमाह—सप्तद्वीपेति । सप्तद्वीपाः सप्तसमुद्राश्च सन्निवेशाः समीपस्था यस्य सः । रजोबाहुल्यम् उपपादयति—धर्माधर्मेति । रजसः प्रवृत्तिफलकत्वात् क्रियानुष्ठानस्य च प्रवृत्तिकार्यत्वादिति भावः । धर्मस्य सात्त्विकत्वेन सत्त्वसंबन्धोऽपि अल्पीयान् दर्शितः । तमःसंबन्धमपि दर्शयति—दुःखबहुलत्वाच्चेति । दुःखस्य तमः कार्यत्वादिति भावः । बहुलपदप्रयोगात् सत्त्वकार्यं लौकिकसुखमपि दर्शितम् ॥ दैहिकं सर्गमुक्त्वा लोकसंस्थितिमाह—तामिमामिति ॥ ॐ ॥

अन्ये तु—"भूर्लोके तमसः क्रमादुत्कर्षो भवति—पश्वादिषु पशुमृगपक्षिसरीसृपस्थावरसहितेषु । भूर्लोके एव मनुष्येषु क्रमाद् रजस उत्कर्षः—ब्रह्मक्षत्रविट्शूद्रेषु रजसो हि कार्यं धर्माधर्मादिकं दुःखबाहुल्यं चोपलभ्यते । मध्यमणिन्यायेन "भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशः" इत्यंशस्य "अस्ति" इति शेषेण सार्थस्योभयसंबन्धः—"मूलतः" इत्यत्र "मध्ये" इत्यत्र च भूर्लोको योऽस्ति तत्रैव "मूलतः"=अधोऽधः पश्वादिसर्गो, "मध्ये" च मानवसर्गः । अधस्तनत्वं च न दिगपेक्षम्, किं तु तमोऽपेक्षम् । एवं मध्यमत्वमपि रजोऽपेक्षम्, रजसः सत्त्वतमसोर्मध्ये स्थितत्वात् ॥" इति व्याचक्षते ॥ ॐ ॥

लोकसंस्थितिम्=ऊर्ध्वमध्यमूलान्ताम् । ब्रह्मा=सर्वोच्चैः सत्यलोकवासी हिरण्यगर्भाख्यो जीवविशेषः निरतिशयज्ञानसुखादिमान् । स्तम्बपदेन वृक्षलतादीनामपि संग्रह इत्याह—स्तम्बेति[2] ।

---

१ संसारे प्रायेणैव निरवच्छिन्नदुःखानि, कदापि यदि किंचिदपि सुखं स्यात्, तदपि दुःखमिश्रितमेव, तथाच सांख्यसूत्रे—कुत्रापि कोऽपि सुखीति ६–७ । तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ६–८ । इति । पातञ्जलसूत्रं च—परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः । २–१५ । इति । मुक्तिवादे गदाधरभट्टाचार्यैश्च—अस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि, कियती वा सुखखद्योतिका इत्यादि ॥ गीतास्वपि—"ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः ॥" विष्णुपुराणेऽपि—"यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥" इत्यास्तां विस्तारः ॥ २ स्तम्बः=सूक्ष्मवीरुधादिः । "स्तम्बो गुच्छस्तृणादिनः" इत्यमरः ।

तदेवं सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखरूपतामाह—

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥ ५५ ॥**

---

(१) ऊर्ध्वसर्गः ।

प्रथम ऊर्ध्वसर्गोऽस्ति, यस्य गणनायाम् "भुवः स्वर्महर्जनस्तपःसत्यम्" इति षड् लोकाः समागता भवन्ति । अत्र च सत्त्वगुणस्य प्रधानता तिष्ठति, रजस्तमसी च गुणभावेन तिष्ठतः ।

(२) मध्यसर्गः ।

अस्मिन् सर्गे रजोगुणस्य प्रधानता तिष्ठति, सत्त्वतमसी च गुणभावेन तिष्ठतः । अत एवायं दुःखबहुलोऽस्ति । अस्य गणनायां सम्पूर्णो भूलोकोऽस्ति, यत्र सप्तद्वीपाः सप्त समुद्राश्च समागता भवन्ति ॥

(३) मूलसर्गः ।

तृतीयमूलसर्गो [ जीवस्य नीचगतेः सर्गः ]ऽस्ति । अस्मिन् तमोगुणस्य प्रधानता तिष्ठति, सत्त्वरजसी गुणभावेन तिष्ठतः । अत एवायं मोहमयो भवति । अस्य गणना पशुतः वृक्षपर्यन्तम् अस्ति । तदित्थं भौतिकः सर्गः चैतन्योत्कर्षनिकर्षतारतम्याभ्याम् ऊर्ध्वादिभावेन त्रिविधः संजायते ॥ ५४ ॥

## अथ सर्गस्य दुःखहेतुत्वप्रदर्शनम् ।

सर्गस्य दुःखात्मकत्वेनापुमर्थत्वेऽपि अपवर्गस्य पुमर्थत्वात्तदुपायत्वेन वैराग्यमाह—**तदेवमिति** । सर्गम्=ऊर्ध्वाधोमध्यरूपं भौतिकसर्गम् । तस्य=सर्गस्य । **वैराग्येति** । भौतिकसर्गस्य शरीरस्य दुःखरूपताज्ञानं विना तद्विषयकवैराग्यानुदयात्, वैराग्यमन्तरेण च अपवर्गासंभवादिति भावः ॥ ॐ ॥

**तत्रेति** ॥ यतः तत्र=शरीरादौ, चेतनः=चैतन्यवान्, पुरुषः, जरामरणकृतम्=जराकृतं मरणं कृतं च, लिङ्गस्य=सूक्ष्मशरीरस्य, आनिवृत्तेः=निवृत्तिपर्यन्तम्,

---

१ अत्रेदमपि महर्षियाज्ञवल्क्योक्तमनुसन्धातव्यम्—

"अवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा । आधयो व्याधयः क्लेशा जरारूपविपर्ययः ॥ भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः ।"

एतद्व्याख्यायां मिताक्षराभिधायां श्रीविज्ञानेश्वरस्वामिनः—इन्द्रियनिरोधोपायतया संसारस्वरूपनिरूपणमाह—अवेक्ष्या इति । वैराग्यसिद्ध्यर्थं मूत्रपुरीषादिपूर्णनानाविध-

"तत्र"=शरीरादौ । यद्यपि विविधा विचित्रानन्दभोगभागिनः प्राणभृद्भेदाः, तथाऽपि सर्वेषां "जरामरणकृतं दुःखम्" अविशिष्टम् । सर्वस्य खलु कृमेरपि मरणत्रासो='मा न भूवम्' 'भूयासम्'

---

स्वभावेन, दुःखं प्राप्नोति, तस्मात् संसारे स्वभावेन दुःखम्, स्वत एव सर्गो दुःखरूपो, विवेकिनामिति शेषः, यदाह-भगवान् पतञ्जलिः—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥" (यो० २।१५) इति । अत्र परिणामपदेन जरादिदुःखं बोध्यम्, तापपदेन "मा न भूवं हि भूयासम्" इति मरणत्रासदुःखं बोध्यम्, संस्कारपदेन पुनर्जननादिदुःखं बोध्यम् ॥ इत्यन्वयः ॥ ५५ ॥ ॐ ॥

कारिकास्थं "तत्र"इति पदं व्याचष्टे—शरीरादाविति । देहेन्द्रियादावित्यर्थः । विविधाः=नानाप्रकाराः, देवादयः । विचित्रेति । अत्याश्चर्यसुखानुभवशालिन इत्यर्थः । प्राणभृद्भेदाः=जीवविशेषाः, सन्तीति शेषः । जरा=वार्धक्यम् । अविशिष्टम्=समानम्, सर्वजीवसाधारणमिति यावत् । अयमर्थः—यद्यपि भिन्नभिन्नशरीरेषु भिन्नभिन्नप्रकारः सुखभोगोऽप्यस्ति, तथापि जरामरणयोर्दुःखं सर्वत्र समानमेवेति ॥ ॐ ॥

जरामरणकृतदुःखस्य सर्वजीवसाधारण्यम् उपपादयति—सर्वस्येति । खलु=यस्मात्, कृमेरपि=कृमिपर्यन्तस्यापि, मरणत्रासः=मरणात् त्रासः-भयम्, स च किमात्मकः? तत्राह—मा नेति । अभाववान् न स्याम्, भाववानेव

---

गर्भवासा अवेक्षणीयाः=पर्यालोचनीयाः । 'च'शब्दात् जननोपरमावपि । तथा निषिद्धाचरणादिक्रियाजन्या महारौरवादिनिरयपतनरूपा गतयः । तथा आधयः=मनःपीडाः, व्याधयश्च=ज्वरातिसाराद्याः शारीराः, क्लेशाः=अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च, जरा=वलीपलिताद्यभिभवः, रूपविपर्ययः=खञ्जकुब्जत्वादिना प्राक्तनस्य रूपस्यान्यथाभावः । तथा श्वसूकरखरोरगाद्यनेकजातिषु भवः=उत्पत्तिः तथा—इष्टस्याप्राप्तिः अनिष्टस्याप्तिरित्यादि बहुतरक्लेशावहं संसारस्वरूपं पर्यालोच्य तत्परिहारार्थम् आत्मज्ञानोपायभूतेन्द्रियजये प्रयतेत ।

१ ननु मूले सर्गस्य दुःखहेतुत्वाप्रतिपादनात् "तस्यापवर्गसाधनोपयोगिनीं दुःखरूपतामाह" इति आर्यावतरणमनुपपन्नमिति चेत् । न, मूले 'तत्र' इति पदेन लोकत्रयाख्यसर्गस्य निमित्तत्वबोधनात् । सर्गस्य दुःखनिमित्तत्वे स्वमतहानिरत आह—तस्मादिति । यतो दुःखरहितोऽपि दुःखमाप्नोति तस्माद् दुःखं स्वभावेन=स्वत एव सर्गो दुःखरूपः । विवेकिनामिति । तेनाविवेकिनां सुखरूपत्वेन भानेऽपि न क्षतिः । २ ननु देवादीनां सुखमेव श्रूयते कुतो दुःखात्मकस्तत्राह—यद्यपीति । तत्रानुभवं प्रमाणयति—मा न भूवमिति । मा न भूवम्=न भवामीति न, अपि तु भूयासं सदा जीवामीत्यर्थः ।

इत्येवमात्मकोऽस्ति । दुःखं च भयहेतुरिति मरणं "दुःखम्" ।

स्यादेतत्—दुःखादयः प्राकृता बुद्धिगुणाः, तत्कथमेते चेतनसम्बन्धिनो भवन्ति ? इत्यत आह—"पुरुष"इति । पुरि=लिङ्गे शेत इति "पुरुषः" । लिङ्गं च तत्संबन्धीति चेतनोऽपि तत्संबन्धी भवतीत्यर्थः । कुतः पुनर्लिङ्गसंबन्धिदुःखं पुरुषस्य चेतनस्य ?

---

स्याम्" इत्येवमात्मक इत्यर्थः । "मम नाशो न स्यात्, सर्वदैव च जीवन् स्याम्" इत्यात्मक इति यावत् । दुःखं च भयहेतुरिति । तथाच यथा धूमाद् हेतोः हेतुमान् वह्निरनुमीयते, तथैव हेतुमतो मृत्युभयात् सदानुभूयमानात् सततवर्तिनो हेतोर्दुःखस्यानुमानमित्यर्थः ॥ ❀ ॥

अन्ये तु—"अत्र हेतुशब्दः कार्यपरः, "को हेतुः कारणं किं वा" अल्पस्य हेतोर्बहु हातुमिच्छन्" इत्यादौ कार्ये हेतुशब्दप्रयोगदर्शनात् । तथाच "भयहेतुः" इत्यस्य "भयकार्यम्" इत्यर्थः । इति व्याचक्षते ॥ ❀ ॥

त्रासे दुःखस्यावश्यकत्वमाह—दुःखं चेति ।

इति=अतः, दुःखयतीति दुःखम्, मरणं भयद्वारा दुःखप्रयोजकमित्यर्थः ॥ धर्मधर्मिणोरभेदाद्वा दुःखं मरणमिति ।

प्राकृताः=प्रकृतिपरिणामविशेषाः, अत एव बुद्धिगुणाः=बुद्धिधर्माः, एते=दुःखादयः । लिङ्गे[2]=लिङ्गशरीरे, शेते=वर्तते, तत्संबन्धि=दुःखसंबन्धि । चेतनोऽपीति । तथा च यौगिकपुरुषपदं चेतनस्य हेतुगर्भविशेषणम् । तथाच—यतश्चेतनः—पुरुषः=सूक्ष्मशरीरवर्ती, अतो जरा[3]मरणकृतं दुःखं प्राप्नोतीत्यर्थः । तत्संबन्धी=दुःखसंबन्धी ॥ ❀ ॥

---

१ कथमिति आक्षेपार्थः । अन्यधर्मा अन्यसंबन्धिनो न भवन्तीत्यर्थः । २ यथा हि केवलो रक्तः स्फटिक इत्यादि दृष्टान्तेन समाधत्ते—पुरीति ॥ ३ प्राणोत्क्रमणकाले यत् सर्वमर्मस्थानानां छेदनं तन्मरणमिति कथ्यते, यत्र चावस्थाविशेषे बुद्धिमान्द्यं, सर्वाङ्गशैथिल्यम्, स्वजनादिकृता पराभूतिरेवमाद्या दोषाः प्रभवन्ति, साऽवस्था च जरेति कीर्त्यते । तत्र मरणे सर्वनाडीनामाकर्षणम्, मर्मस्थानानां छेदनम्, प्राणानामाकुञ्चनम्, ऊर्ध्वश्वाससद्भावः, अतिव्यथया मलमूत्रादीनां बहिर्निःसरणम्, इत्यादीनि बहूनि दुःखानि समुत्पद्यन्ते, युगपदेव सहस्रवृश्चिकदंशनसमा तदानीं वेदनाऽनुभूयते इति हि पुराणम्, जरावस्थायां तु अङ्गानां शैथिल्यं, श्रोत्रादीन्द्रियाणां मान्द्यम्, शरीरे कम्पनादिकम्, कासश्वाससमुद्भवः, उत्थानकाले नीचैः पतनम्, स्वजनैः परिभवः, शरीरद्वारैर्मलमूत्रलालादीनां प्रस्रावः, एवमादीनि बहूनि दुःखानि प्रादुर्भवन्तीति सर्वविदितोऽयं हृदयोत्कम्पनाकारी दुःखमार्ग इति तत्प्रहाणे चेष्टितव्यं सर्वथा सर्वदा विज्ञैरिति निष्कर्षः । एवं जन्मदुःखमप्यत्र द्रष्टव्यम् ॥ "जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्" इति श्रीभगवदुक्तेः । जन्मकष्टमपि हि न साधारणं कष्टं भवति, प्रथमं

इत्यत आह—"लिङ्गस्याविनिवृत्तेः" । पुरुषाद् भेदाग्रहाल्लिङ्गधर्मा-नात्मन्यध्यस्यति पुरुषः । अथवा दुःखप्राप्ताववधिराङा कथ्यते—'लिङ्गं यावन्न निवर्तते तावद्' इति ॥ ५५ ॥

---

ननु नीलघटवर्तिनः पटस्य घटगतेन नीलिमगुणेन संबन्धाव्यवहारात् कुतो बुद्धिगुणेन सुखादिना तद्गतस्य चैतन्यस्य संबन्धित्वमङ्गीकार्यम्? इत्याह—कुत[1] इति । भेदाग्रहादिति । भिन्नत्वेन ज्ञानाभावादित्यर्थः । लिङ्गधर्मान्=सुखादीन्, अध्यवस्यति=निश्चिनोति । तथाच—यथा तप्तायःपिण्डे वह्न्ययसोरविवेकग्रहाद् अदाहकस्यापि अयसो वह्निकृतदाहाध्यवसायात् दाहकत्वव्यवहारः, तथा बुद्धिचैतन्ययोरपि एकत्वेन अवभासमानतया दुःखासंबन्धिनोऽपि आत्मनो बुद्धिगतदुःखाध्यवसायात् दुःखित्वेन पुरुषव्यवहारः सूपपन्न इति भावः ॥ ❀ ॥

अनिवृत्तिपदस्य निरुक्तार्थपरतायां कष्टमनुभूय पाठान्तरमवलम्ब्य व्याख्यायते—अथवेति । आङेति । तथाच "आविनिवृत्तेः" इति पाठः, "लिङ्गस्य विनिपर्यन्तम्" इति तदर्थं इत्याह—लिङ्गं यावदिति ॥ तत्र यदा "लिङ्गस्य अविनिवृत्तेः" इति च्छेदः, तदा "लिङ्गशरीरस्य अनिवृत्तेः=नाशाभावाद्धेतोः पुरुषो दुःखं प्राप्नोति" इत्यर्थः । तत्र "अनिवृत्तेः" इति हेतौ पञ्चमी । पक्षान्तरे "लिङ्गस्य आविनिवृत्तेः" इति च्छेदे तु "सूक्ष्मशरीरनाशावधि दुःखम्" इत्यर्थः । "विनिवृत्तेः" इति पञ्चमी तु "पञ्चम्यपाङ्परिभिः" इति सूत्रेण मर्यादार्थकस्य आङो योगे, इति विवेकः ॥ ❀ ॥

लिङ्गशरीरस्यैव वस्तुतः सर्वं दुःखम्, तथापि पुरुषेण तस्याऽभेदग्रहात् पुरुषोऽपि दुःखवान् भवति, यदा तु वास्तवेन भेदग्रहेण भ्रमात्मकस्य अभेदग्रहस्य नाशः, तदा दुःखनिवृत्तिरिति तत्त्वम् ॥ ५५ ॥ ❀ ॥

---

तु असहायो जीवोऽयं मातृगर्भे दीर्घकालं यावत् विविधानि कष्टान्यनुभवति ततो जन्मसमये योनिद्वारतो बहिर्निगमनेऽपि असह्यां यन्त्रणामयमनुभवति । तथा च नवमासपर्यन्तं जननीजठरेऽत्यन्तसंकुचितभावेन स्थितिः, मातृमलस्थितैः कृमिभिर्दंशनम्, मातृजठराग्निना दाहः, जरायुचर्मणा वेष्टितत्वम्, एवमादीनि बहूनि दुःखानि तत्र भवन्ति । व्याधिदुःखं तु सार्वजननीमेवेति नैव तत्र वचनीयं किंचित् ॥

१ ननु बुद्धिगतस्वप्रतिबिम्बेन स्वगतबुद्धिधर्मप्रतिबिम्बग्रहणेऽपि न सन्तप्येत, दृष्टं हि लोकेऽपि स्वकीयस्फटिकादावन्यदीयधर्मारोपज्ञाने सन्तापाभाव इत्याशयेन पुनः शंकते—कुतः पुनरिति । अन्यधर्मप्रतिबिम्बत्वेन ज्ञानाभावात् सन्तापः संभवतीत्याशयेन समाधत्ते—पुरुषादिति । तथाच लिङ्गस्य पुरुषाद् भेदाग्रहादित्यर्थः । यद्वा-सान्निध्यस्य मुक्तपुरुषसाधारणत्वात्कथं बन्धहेतुत्वमित्यभिप्रायेण पुनः शंकते—कुतः पुनरिति । अविवेकप्रयोज्यसान्निध्यस्य बन्धप्रयोजकत्वान्नोक्तदोष इत्यभिप्रायेण समाधत्ते—पुरुषादिति ।

उक्तस्य सर्गस्य कारणविप्रतिपत्तीर्निराकरोति—

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥

आरभ्यत इति "आरम्भः"=सर्गः महदादिभूम्यन्तः प्रकृत्यैव कृतो नेश्वरेण, न ब्रह्मोपादानो, नाप्यकारणः । अकारणत्वे ह्यत्यन्ताभावोऽत्यन्तभावो वा स्यात् । न ब्रह्मोपादानः, चितिशक्तेरपरिणामात् । नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याधिष्ठातृत्वासंभवात् । न हि निर्व्यापारस्तक्षा वाश्याद्यधितिष्ठति ।

---

कारणविप्रतिपत्तीः=कारणविषयकविरुद्धप्रतीतीः ॥

## अथ सृष्टिकारणे विप्रतिपत्तिनिरासः ।

इत्येष इति ॥ इति एषः महदादिविशेष[1]भूतपर्यन्तः=महत्तत्त्वप्रभृतिस्थूलभूतपर्यन्तः, आरम्भः=सर्गः, प्रकृतिकृतः=प्रकृत्यैव कृतोऽस्ति नान्येन केनचित् । स च आरम्भः, प्रतिपुरुषविमोक्षार्थम्=एकैकपुरुषविमोचनकृते, स्वार्थ इव परार्थः=पुरुषार्थः, पुरुषभोगापवर्गप्रयोजनः, इत्यन्वयः ॥ तथाच कापिलसूत्रम्—"प्रधानसृष्टिपरार्थंस्वतोऽप्यभोक्तृत्वाद् उष्ट्रकुङ्कुमवहनवत्" ३–५८ इति ॥ ५६ ॥ ❀ ॥

आरम्भ इति कर्मणि प्रत्यय इत्याह—आरभ्यत इति ॥ कारिकायां "प्रकृतिकृतः" इति सावधारणो निर्देश इति व्याचष्टे—प्रकृत्यैवेति । प्रकृत्युपादानक एवेत्यर्थः[2] । एवकारव्यवच्छेद्यमाह—नेश्वरेणेत्यादि । चार्वाकादिसम्मतम् असन्मूलकत्वं जगतस्तावत् निराकरोति—अकारणत्वे हीति । "सर्गस्य" इत्यादौ शेषः । अत्यन्तभावः=नित्यत्वम् । जगतः सावयवत्वरूपवत्त्वाभ्याम् उत्पत्तिविनाशावश्यम्भावान्नित्यत्वमयुक्तमिति भावः । अत्यन्ताभाव इति । असत्त्वमित्यर्थः । अकारणस्य उत्पत्त्यसम्भवात् शशविषाणादिवद् अलीकं स्यादिति भावः । प्रत्यक्षादिप्रमाणसिद्धस्य अलीकत्वमयुक्तमिति भावः ॥ ❀ ॥

वेदान्तिसम्मतं ब्रह्ममूलकत्वं जगतो निराकरोति—न ब्रह्मोपादान इति । सर्ग इति शेषः । कुतः? तत्राह—चितिशक्तेरिति । एतेन उपादानस्य नीरूपावयवत्वं दर्शितम् । अपरिणामादिति । नीरूपावयवस्य उपादानस्य

---

१ मूले विशेषभूतानि पृथिव्यादिस्थूलभूतानि ३८ कारिकोक्तानि । २ 'सर्वं वाक्यं सावधारणम्' इति न्यायादिति भावः ।

ननु प्रकृतिकृतश्चेत्–तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात् सदैव सर्गः स्यादिति न कश्चिन्मुच्येतेत्यत आह–"प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः" इति । यथौदनकाम ओदनाय पाके प्रवृत्त ओदनसिद्धौ निवर्तते, एवं प्रत्येकं पुरुषान् मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति पुनर्न प्रव-

---

परिणामासंभवात्, परिणाममन्तरेण च रूपवत्सावयववस्तुन उत्पत्तेरसंभवादिति भावः ॥ ॐ ॥

पातञ्जलसम्मतम् ईश्वराधिष्ठातृत्ववादं निराकरोति—नेश्वरेति । "प्रकृतेरचेतनतया स्वतः प्रवृत्त्यसंभवात् चेतनेश्वराधिष्ठानादेव तत्प्रवृत्तिः" इति हि तेषां सिद्धान्तः, तं दूषयति—निर्व्यापारस्येति। व्यापाररहितस्येत्यर्थः, यदा स किंचित् करोत्येव न, तदा स अधिष्ठाता कथं भवितुमर्हति ? न कथंचिदित्यर्थः। तन्मतेऽपीश्वरस्य निर्व्यापारत्वादिति भावः। अधिष्ठातृत्वेति । अधिष्ठानम्= आश्रयणम्, तदपि व्यापारविशेष एव। तस्मान्निर्व्यापारस्य तत्कर्तृत्वं न संभवतीति भावः। "निर्व्यापारस्य वस्तुविशेषाश्रयणम् असंभवि" इति दृष्टान्तेन साधयति—न हीति । तक्षा=काष्ठतक्षकः, वास्यादि=वाशीलक्षण आयुधविशेषः, सर्वं तस्य शस्त्रजातं करपत्रप्रमुखम् । अत्र आदिशब्देन अभिप्रेतम् । अधितिष्ठति=आश्रयति ॥ निर्व्यापारेऽधिष्ठातृत्वस्यादृष्टचरत्वादिति भावः।

स्वपक्षदोषान् वेदान्तिप्रभृतिभिरुपन्यस्तान् वारयितुं "प्रतिपुरुषविमोक्षार्थम्" इत्याद्यंशमवतारयति—नन्विति । ओदनसिद्धौ निवर्तत इति। फलप्राप्तौ क्रियापरित्यागौचित्यात्, अन्यथा क्रियाया निष्फलत्वापत्तेरिति भावः। ननु प्रकृतेः प्रवृत्तेः किं फलम्, यत्प्राप्तावुपरतिः स्यात्? इत्यत आह—एवमिति। प्रत्येकमिति। एकमेकं प्रति लक्ष्यीकृत्य पुरुषान् मोचयितुं प्रवृत्तेत्यर्थः। तं प्रति नेति। तथाच प्रकृतिप्रवृत्तेः एकैकपुरुषविमोचनफलकत्वात् पुरुषविशेषविमोचनसिद्धौ तं प्रति निवृत्त्यौचित्यमिति भावः॥ ॐ ॥

ननु सर्वः स्वार्थं समीहते । न हि अन्यदीयौदनसिद्धौ—अन्यदीयपाकनिवृत्तिर्लोके दृश्यते, संभवति वा। तदत्र प्रकृतेः का प्रयोजनसिद्धिर्यतः

---

१ "निष्कलं निष्क्रियं शान्तम्" इत्यादिश्रुतेर्निरवयवस्य परिणामायोगात् । "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ब्रह्मणो विज्ञानात्मत्वे विज्ञानानन्दात्मकं विश्वमपि स्यादिति तु हृदयम्। २ ननु प्रकृतेर्नित्यत्वेन प्रवृत्तिशीलत्वेन च सर्वदा सर्गप्रसङ्गः स्यात् । प्रतिपुरुषमदृष्टानामनेकत्वेन तत्सापेक्षत्वेऽपि सदैव सर्गप्रसङ्गदोषानिवृत्तिरित्यभिप्रायेण शङ्का—नन्विति। प्रकृतेर्मोक्षार्थप्रवृत्त्या सर्गस्य सर्वसाधारणत्वेऽपि यं पुरुषं मोचितवती तं प्रति सर्गाजनकत्वेन मोक्षसंभवादित्यभिप्रायेण समाधानम्—प्रतीति। इति व्यक्तोऽर्थः।

र्तते, तदिदमाह—"स्वार्थं इव" । स्वार्थे यथा, तथा परार्थे आरम्भ इत्यर्थः ॥ ५६ ॥

स्यादेतत्—स्वार्थं, परार्थं वा चेतनः प्रवर्तते, न च प्रकृतिरचेतनैवं भवितुमर्हति, तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः, न च क्षेत्रज्ञाश्चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति, तेषां प्रकृतिस्वरूपानभिज्ञत्वात्, तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता, स चेश्वर इत्यत आह—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**

---

प्रवृत्त्युपरमः स्यात्? इत्यत आह—तदिदमाहेति । तथा परार्थ इति । तथाच परकीयप्रयोजनमेव प्रकृतेः स्वार्थवद् भवति, अतस्तत्सिद्धावेव प्रवृत्तिनिवृत्तिः । यथा खलु कश्चित् कारुणिकः परकीयबन्धनमोचनार्थं यतमानः परकीयबन्धनमोक्षे सिद्धे न पुनर्यतते, परमोक्षस्यैव स्वार्थत्वात्, तद्वदिति भावः । "स्वार्थं सर्वः समीहते" इति न्यायेन परार्थप्रवृत्तिरपि स्वदुःखादिनिवृत्तिद्वारा स्वार्थमेव, तथाच प्रकृतेर्जडतया प्रवृत्तिर्न संभवतीत्याक्षेपः, लाघवेन प्रयोजनवत्त्वमात्रस्य प्रवृत्तिमूलत्वेन स्वार्थे प्रवृत्तिवत् परार्थेऽपि प्रवृत्तिः संभवतीति तत्परिहार इति रहस्यम्" ॥ ५६ ॥

चेतनः प्रवर्तत इति । तथाच परार्थं यतमानस्य तदर्थसिद्धौ धर्मो वा अर्थो वा यशो वा दुःखनिवृत्तिर्वा कश्चित् स्वार्थः सम्पद्यत एव । स्वार्थसाधनादन्यत्र प्रवृत्त्यदर्शनात् । अतश्चेतनस्यैव संभवति परार्थं आरम्भः, नत्वचेतनायाः प्रकृतेः । तत्र तस्याः स्वार्थलेशस्यापि असंभवादिति भावः । एवम्[1]=परार्थप्रवर्तमाना, तस्मात्=चैतन्यमन्तरेण परार्थारम्भस्य असंभवात् ॥ ननु तत्तच्छरीरनिष्ठाः चित्स्वरूपाः पुरुषाः क्षेत्रज्ञा[2] उच्यन्ते, तेषामेव प्रकृत्यधिष्ठातृत्वमस्तु, नेश्वरस्य, इत्येतन्निराकरोति—न च क्षेत्रज्ञा इति । कुतः[3]? तत्राह—तेषां प्रतिस्वरूपे[4]ति । प्रकृतिस्वरूपाभिज्ञत्वे प्रकृतिपुरुषयोर्विवेकख्यातिरेव जायते, तदनभिज्ञत्वादेव प्रकृतिकृतमेव आत्मनि अध्यवस्यन्ति पुरुषाः, तत्कथं क्षेत्रज्ञाः प्रकृतिमधिष्ठातुं समर्थाः स्युरिति भावः । सर्वार्थदर्शी=सर्वज्ञः ॥

## अथ जडस्य स्वतन्त्रप्रवृत्त्युपपादनम् ।

वत्सविवृद्धीति ॥ यथा अज्ञस्य=अचेतनस्य, क्षीरस्य=दुग्धस्य, वत्सवि-

---

१ एवं भवितुम्=परार्थं प्रवर्तितुम् । २ "इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥" (गी० १३—१) ३ तेषामनधिष्ठातृत्वे हेतुं पृच्छति—कुत इति । ४ प्राक् सर्गाज् ज्ञानजनकशरीरेन्द्रियादिसामग्र्यभावाद् एतस्मिन् काले एतावन्त्येव परिणमन्ते नैतावन्तीति परिज्ञानाभावाच्चेत्यर्थः, इत्यन्ये ।

दृष्टमचेतनमपि प्रयोजनं प्रति प्रवर्तमानम्। यथा—वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्त्तते—एवं प्रकृतिरचेतनाऽपि पुरुषविमोक्षणाय प्रवर्तिष्यते। न च क्षीरप्रवृत्तेरपीश्वराधिष्ठातृनिबन्धनत्वेन साध्यत्वान्न साध्यव्यभिचार इति साम्प्रतं, प्रेक्षावतः प्रवृत्तेः

---

वृद्धिनिमित्तम्=गोशिशुपोषणकृते, प्रवृत्तिः=स्वयमेव प्रस्रावो भवति, तथा अज्ञस्य प्रधानस्य=प्रकृतेः, पुरुषविमोक्षनिमित्तं प्रवृत्तिरित्यन्वयः॥ तथाच कापिलसूत्रे—अचेतनत्वेऽपि क्षीरवत् चेष्टितं प्रधानस्य॥ ३–५९॥ कर्मवद् दृष्टेर्वा कालादेः॥ ३–६०॥ इति॥ ५७॥ ॐ॥

"यद् यद् अचेतनं चेतनानधिष्ठितम्, तन्न परार्थप्रवृत्तिमत्, यथा घटादि" इति व्याप्तिबलेन परार्थप्रवृत्तिमत्त्वात्प्रधानस्य चेतनाधिष्ठितत्वम् अनुमितम्। तदनुमानस्य प्रमाणाभासीकरणाय व्याप्तौ व्यभिचारं दर्शयति—दृष्टमिति। अचेतनम्=चेतनानधिष्ठितम् अचेतनम्, प्रयोजने=परप्रयोजनसिद्धौ। क्षीरमचेतनमिति। तथाच क्षीरस्य चेतनाधिष्ठितत्वाभावेऽपि परार्थप्रवृत्तिमत्त्वदर्शनात् व्याप्तौ व्यभिचारः, तत्कथं "परार्थप्रवृत्तिमत्त्वात् अचेतनं चेतनाधिष्ठितम्" इत्यनुमानं प्रमाणं स्यात्? । तस्मात् अचेतनमपि प्रधानं परार्थं प्रवर्तितुमर्हति क्षीरवदिति भावः॥ तथाच "विमतं प्रधानं चेतनानधिष्ठितं प्रवर्तते, रथाद्यन्यत्वे सति परार्थत्वात् क्षीरवत्" इति तत्त्वम्॥

ननु "क्षीरमपीश्वराधिष्ठितमेव प्रवर्तते न त्वनधिष्ठितम्" इत्येव मन्तव्यम्, अतो न साध्येन सह साधनव्यभिचारः, इत्येतन्निराकरोति—न चेति। साध्यत्वात्=उपपाद्यत्वात्। तथाच क्षीरप्रवृत्तिरपि ईश्वराधिष्ठाननिबन्धनत्वेनोपपादनीयेति भावः। तस्मात् साधनस्य=प्रवृत्तिमत्त्वस्य, न साध्याभाववद्वृत्तित्वरूपो व्यभिचारः किं तु चेतनाधिष्ठितत्वरूपसाध्याभाववदवृत्तित्वमेव, इत्याह—न साध्येनेति। प्रवृत्तिमत्त्वस्य न साध्याभाववद्वृत्तित्वं, क्षीरेऽपि चेतनाधिष्ठितत्वरूपसाध्यसत्त्वादित्यर्थः। साम्प्रतम्=युक्तम्, अस्य "न च" इति पूर्वेण अन्वयः।

अयुक्तत्वे हेतुमाह—प्रेक्षावतः प्रवृत्तेरिति। चेतनावतः प्रवृत्तेरित्यर्थः। स्वार्थेति। स्वार्थः=स्वकीयसुखप्राप्तिदुःखनिवृत्तिरूपः, कारुण्यम्=परदुःखप्रहाणेच्छा। यद्यपि "सुखं भूयात् दुःखं मा भूत्" इति स्वारसिकेच्छाया एव प्रवर्तकत्वं न तु परदुःखप्रहाणेच्छायाः, तथापि परदुःखदर्शनजनितस्वकीयदुःखनिवृत्तीच्छाया एव तत्र प्रवृत्तिजनकत्वम् अभ्युपेयम्, तर्हि कथं कारुण्यस्य पृथगुपादानम्, स्वार्थत्वेनैव तत्संग्रहात्? उच्यते—प्रयोजनं द्विविधम्,—मुख्यं गौणं च। तत्र अन्येच्छानधीनेच्छाविषयो मुख्यप्रयोजनम्, अन्येच्छाधीनेच्छाविषयश्च गौणप्रयोजनम्। एवं च परकीयदुःखप्रहाणं तज्जन्यस्वदुःखनिवृत्तीच्छाधीनत्वात् गौणप्रयोजनम्, अतस्तदुपादानं गौणप्रयोजनप्राप्त्यर्थम्।

स्वार्थकारुण्याभ्यां व्याप्तत्वात् । ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्तयतः । न ह्यवाप्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति । नापि कारुण्यादस्य सर्गे प्रवृत्तिः, प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छाकारुण्यम् । सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयदूषणं—कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरित ईश्वरः सुखिन

---

अत एव पुत्रकलत्रादिसुखेच्छयापि प्रवृत्तिर्दृश्यते लोके । पुत्रादिसुखस्यापि तज्जन्यस्वसुखेच्छाधीनेच्छाविषयत्वात् । इति ॥ ❀ ॥

स्वार्थकारुण्याभ्यां व्याप्तत्वादिति । स्वार्थकारुण्याभाववदवृत्तित्वादित्यर्थः । एवं च यदि "प्रेक्षावतः प्रवृत्तिः स्वार्थकारुण्याभाववति न वर्तत एव" इति स्थितम्, तदेश्वरस्य स्वार्थकारुण्यासंभवात् प्रवृत्तिरपि न संभवति, व्यापकाभावेन व्याप्याभावस्य सिद्धत्वात्, इत्याह—ते चेति । स्वार्थकारुण्ये चेत्यर्थः । जगत्सर्गाद् व्यावर्तमाने=जगत्सर्गादन्यत्र वर्तमाने सति, प्रेक्षावत्प्रवृत्तिपूर्वकत्वम्=चेतनप्रवृत्तिजन्यत्वमपि, जगत्सर्गाद् व्यावर्तयतः=जगत्सर्गादन्यत्र वर्तयतः, इत्यर्थः । नन्वीश्वरस्य स्वार्थकारुण्याभावे किं मानं येन व्यापकाभावेन व्याप्याभावः साध्यते ? इत्याशंकायां स्वार्थाभावं तावत्साधयति—न हीति । अवाप्तानि=स्वतः प्राप्तानि, सकलानि=सर्वाणि, ईप्सितानि=अभिलषितानि येन तादृशस्येत्यर्थः । श्रुतौ अवाप्तकामत्वश्रुतेरिति[1] भावः । भगवतः= ईश्वरस्य । किमपीति । अभिलषितस्यैव स्वार्थपदार्थत्वात् अभिलषिताभावे स्वार्थाभावः स्वतः सिद्ध इति भावः ॥ ❀ ॥

स्वार्थाभावं प्रमाप्य सम्प्रति कारुण्याभावं प्रमापयति—नापीति[2] । तत्र हेतुमाह—प्राक् सर्गादिति । सृष्टेः प्रागित्यर्थः । इन्द्रियेति । दुःखस्य इन्द्रियशरीरविषयजन्यत्वादिति भावः । कस्येति । तथाच—सृष्टेः प्राक् दुःखसामग्रीविरहात् प्रतियोगिभूतं दुःखमेव जीवानां नास्ति यत्प्रहाणेच्छाकारुण्यमीश्वरस्य स्यादिति भावः । सर्गोत्तरकालीनदुःखमादाय कारुण्यं स्यात्तत्राह—सर्गोत्तरेति । दुरुत्तरम्=उत्तरानर्हम्, अपरिहार्यमिति यावत् । इतरेतराश्रयत्वं विवृणोति—कारुण्येनेति । सृष्ट्या=सृष्टिजन्यदुःखदर्शनेन ॥ ❀ ॥

नन्वेतत्सर्गीयजीवानां दुःखदृष्ट्या सृष्ट्यभ्युपगमे मा भूदन्योन्याश्रयदोषपरिहारः, सर्गान्तरीयजीवानां दुःखदृष्ट्या सृष्ट्यङ्गीकारे तु अन्योन्याश्रयदोषस्य

---

१ "आप्तकामस्य का स्पृहा" इति श्रुतेः, "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" इति स्मृतेश्चेति भावः । २ निरुपधिपरदुःखप्रहाणेच्छा करुणा तस्या भावः कारुण्यम्, तदधीनप्रवृत्तिर्न भवति ।

एव जन्तून् सृजेन्न विचित्रान् । 'कर्मवैचित्र्याद्वैचित्र्यम्' इति चेत्—कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन, तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्युपपत्तेः—तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न

---

बीजाङ्कुरन्यायेन परिहारः सुकरः स्यादित्यत आह—अपि चेति ॥ सुखिन एवेति । तथाच सर्गान्तरीयजीवगणदुःखप्रहाणेच्छया सृज्यमानानां सर्वेषां जन्तूनां सुखित्वमेव स्यादिति भावः । "सुखिन एव" इत्येवकारव्यवच्छेद्यमाह—नेति । विचित्रान्=सुखिनो दुःखिनश्च ॥ ननु "सृज्यमानप्राणिकर्माणि आश्रित्यैव ईश्वरो जगत् सृजति" इति प्राणिनां कर्मवैचित्र्यादेव वैचित्र्यम्" इत्येवं शङ्कते—कर्मवैचित्र्यादिति । सिद्धान्ती तत्र प्राह—कृतमिति । अलमित्यर्थः । अस्य प्रेक्षावतः=ईश्वरस्य । कर्माधिष्ठानेनेति । तथाच परदुःखप्रहाणेच्छुरीश्वरः प्राणिकर्माणि नाधितिष्ठेदिति भावः । नन्वीश्वरस्य कर्मानधिष्ठानात् परदुःखप्रहाणेच्छा कथं फलवती स्यात्? इत्यत आह—तदनधिष्ठानमात्रादिति । ईश्वरानधिष्ठानमात्रादित्यर्थः । मात्रपदेन परदुःखपरिहारार्थं प्रेक्षावतः प्रयत्नान्तरं नापेक्षणीयमिति लभ्यते । ननु प्राणिकर्मणि प्रेक्षावदनधिष्ठानमात्रात् कथं प्राणिनां दुःखानुत्पत्तिः संभवति? कर्मणां तत्तत्फलजनकत्वावश्यकतया चेतनाधिष्ठानाभावे स्वत एव शरीरेन्द्रियविषयोत्पादनद्वारा दुःखोत्पादनावश्यम्भावादित्यत आह—अचेतनस्यापीति । तथाच भवन्मते चेतनानधिष्ठितस्य अचेतनस्य फलजननप्रवृत्तिमत्त्वाभावात् कर्मणोऽपि अचेतनत्वेन चेतनानधिष्ठितत्वे प्रवृत्त्यनुपपत्तिरिति भावः । प्रवृत्त्यभावात् प्रवृत्तिजन्यशरीराद्युत्पत्तिरपि न संभवतीत्याह—तत्कार्येति । प्रवृत्तिजन्येत्यर्थः । शरीरेन्द्रियभोग्यविषयाणामभावे दुःखसामग्रीविरहात् दुःखानुत्पत्तिरपि सुघटेत्याह—दुःखानुत्पत्तेरिति । सुकरत्वात्=ईश्वरस्य अनायाससाध्यत्वात् । तथाच सर्जनव्यापारमन्तरेणापि कर्माधिष्ठानवैमुख्यादेव दुःखानुत्पत्त्या परदुःखप्रहाणेच्छायाः फलवत्त्वं स्याद्, अलं सर्जनायासेनेति भावः ॥ ७९ ॥

ननु यथेश्वरस्य स्वार्थकारुण्याभावात् प्रवृत्त्यभावप्रसङ्गो दर्शितः, तथा प्रकृतेरपि तदभावात् प्रवृत्त्यभावदोषप्रसङ्गोऽवतरत्वित्यत आह—प्रकृतेस्त्वि[2]ति ।

---

१ कर्मसापेक्षत्वे तेनैव निर्वाहे कारुण्यस्य वैयर्थ्यापत्तिः, अचेतनस्य कर्मणस्तदनधिष्ठानादेव प्रवृत्त्यनुपपत्तेस्तत्कार्यशरीराद्यभावेन दुःखानुत्पत्तेः कुतः कारुण्यं चेति समाधातुः सिद्धान्तिनोऽभिप्रायः । २ प्रकृतिप्रवृत्तौ च प्रेक्षावत्प्रवृत्तित्वाभावेन स्वार्थकारुण्यानपेक्षत्वान्न कोऽपि दोष इत्याशयः । तथाच सुषुप्ताद् बुद्धेः छिक्काजृम्भणादेः वृक्षादेश्च पुरुषप्रयत्नं विनोत्थानदर्शनाद् घटादेः पुरुषप्रयत्नापेक्षत्वाच्च प्रधाने विचारं विना प्रयत्नसापेक्षत्वनिरपेक्षत्वसंशयेऽपि उक्तरीत्या ईश्वरादिप्रयत्नासंभवदर्शनेन संशयनिवृत्तौ प्रधानातिरिक्तस्थले=क्वचित् प्रयत्नसापेक्षत्वेऽपि दोषासंभवादिति हृदयम् ।

**स्वार्थानुग्रहो, न वा कारुण्यं, प्रयोजकमिति नोक्तदोषप्रसङ्गः। पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते। तस्मात्सुष्ठूक्तं—"वत्सविवृद्धिनिमित्तम्" इति॥ ५७॥**

---

स्वार्थानुग्रहः=स्वार्थसंबन्धः। प्रयोजनमनुद्दिश्येत्यादिन्यायाविरोधायाह—प्रयोजकमिति। परत्वात् कारुण्यशब्दसमानलिङ्गत्वम्। तथाच चेतनप्रवृत्तेरेव स्वार्थकारुण्यव्याप्यतया तदभावात् चेतनप्रवृत्तिरनुपपन्ना अस्तु, अचेतनप्रवृत्तेस्तु न स्वार्थकारुण्यव्याप्यत्वं येन स्वार्थकारुण्यान्यतरस्य तत्प्रयोजकत्वम् अवश्यमङ्गीकरणीयम्, तत्कथं प्रकृतेः प्रवृत्त्यभावदोषप्रसङ्गावतार इति भावः॥ ❀॥

तर्हि प्रकृतेः प्रवृत्तौ किं प्रयोजनम्? तत्राह—पारार्थ्यमात्रन्त्विति। तु=किं तु, पारार्थ्यमात्रम्=परोपकारकत्वमात्रम्, प्रयोजकमित्यर्थः। उपसंहरति—तस्मादिति॥ ❀॥

अन्ये तु व्याचक्षते "दृष्टसाम्येन अदृष्टसिद्धिः" इति नियमः, न च अचेतनस्य स्वार्था परार्था वा प्रवृत्तिर्दृष्टेति प्रकृतेरदृष्टा प्रवृत्तिः कथं कल्प्यते? इत्याशङ्क्य समाधत्ते—"वत्स–" इत्यादिना। उपभुक्ततृणादेरप्रसूताया गोर्न क्षीरमुत्पद्यते, तस्या एव प्रसूताया वत्सविवृद्धये तृणादेरुपभुक्ताद् रसभावम् आपन्नात् पृथग् भवत् क्षीरं क्षीराशये संचीयते, इयमेव क्षीरस्य वत्सविवृद्धये प्रवृत्तिः। तत्र च न गोः प्रयत्नः कश्चिदस्ति, तस्या वत्सस्य वा, यत्नस्य क्षीरोत्पत्तावकिंचित्करत्वात्। ततश्च "वत्सचूषणादिनैव क्षीरप्रवृत्तिः" इत्यादिश्रीशङ्करोक्तिर्ब्रह्मसूत्रभाष्योक्ता असङ्गतैव॥ ❀॥

श्रीशङ्करोक्तक्षीरप्रवृत्तेरपि चेतनाधिष्ठितत्वं दूषयति—प्रेक्षावत इत्यादिना॥ समीक्ष्यकारित्वं प्रेक्षावत्त्वम्। अत्रायं प्रयोगः—"प्रेक्षावत्प्रवृत्तिः–स्वार्थसाधनप्रयोज्या, परदुःखपरिहारेच्छारूपकारुण्यप्रयोज्या वा भवितुमर्हति, प्रेक्षावत्प्रवृत्तित्वात्, सम्प्रतिपन्नवत्" इति। तत्र च ईश्वरस्य जगत्सर्गः न स्वार्थसाधनप्रयोज्यः, आप्तकामत्वेन स्वार्थप्रार्थनाशून्यत्वात्, नापि कारुण्यप्रयोज्यः, सर्गादौ दुःखस्यैवाभावात् कुतस्तत्प्रहाणेच्छा? इत्येतत् मनसि निधायाऽऽह—प्रेक्षावतः प्रवृत्तेरिति। तथा च व्यापकाभावाद् व्याप्याभावस्य सिद्धत्वान्न तथा संभव इति भावः। स्वार्थकारुण्याभ्यामिति। नव्यास्तु कारुण्यमपि स्वार्थमूलकमेव, परक्लेशान् दृष्ट्वा स्वयं दुःखितो हि पुरुषः स्वदुःखविमोचनायैव

---

१ प्राणिनः सर्वे स्वस्वरूपचिन्तने सर्वथा सर्वदा सातिशयं कटिबद्धा यथा स्युरित्येवमर्थमीश्वरनिराकरणं साङ्ख्ये, न वस्तुत ईश्वराभावप्रतिपादनार्थम्, अन्यथा नास्तिकत्वापत्तेः, श्रीमद्भागवते तृतीयस्कन्धे स्वमातरं देवहूतीं प्रति तथोपदेशाभावाच्चेति प्रकृतिपुरुषविवेचनाय प्रवृत्तं सांख्यं ते एव मननाय तदितरनिराकरणद्वारा प्रपञ्चयति दार्ढ्यार्थमित्याद्युक्तं भूमिकायामिति तत्रैव कणेइत्यालोचनीयम्।

स्वार्थ इवेति दृष्टान्तितं तद्विभजते—

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥**

औत्सुक्यम्=इच्छा, सा खल्विष्यमाणप्राप्तौ निवर्तते। इष्य-

---

परदुःखप्रहाणाय यतते। यस्तु परदुःखेन न दुःखितः, तस्य तत्प्रहाणे अप्रवृत्ते-रित्याहुः। एवमपि गौणदुःखप्राहृयर्थं कारुण्यस्य पृथगुक्तिरिति प्रागुक्तं न विस्म-र्तव्यमिति तु वयम्। साध्येनेति। पक्षेणेत्यर्थः। तत्रापि साध्यस्य सन्दिग्ध-त्वेन व्यभिचारो निश्चेतुमशक्य इति भावः। तथा सति हि पक्षे सर्वदैव साध्यस्य सन्दिग्धत्वेन अनुमानमात्रोच्छेदप्रसङ्ग इति भावः ॥ ॐ ॥

प्रवृत्त्यनुपपत्तेरिति। "परमते" इति शेषः। अयं भावः—"कर्मप्रेरित ईश्वरः कार्यं करोति" इत्युच्यते चेत्, तत्कर्म कुतः प्रवर्तते? इति वक्तव्यम्। स्वतः प्रवृत्तिश्च कर्मणामचेतनत्वादनुपपन्नेति भावः। ननु स्वार्थानुग्रहकारुण्या-न्यतरासंभवात् प्रकृतेरपि कथं सर्गे प्रवृत्तिः, इत्यत्राह—प्रकृतेस्त्वचेतनाया इति। अचेतनायाः प्रेक्षावत्त्वाभावात् तत्प्रवृत्तौ स्वार्थानुग्रहः=स्वार्थसाधन-संबन्धो न प्रयोजक इति विपरिणामेनान्वयः। नापि कारुण्यं तत्र प्रयोजकम्, अचेतनत्वेन तत्र तस्या संभवात्, इति हेतुरध्याहार्यः ॥ ५७ ॥ ॐ ॥

दृष्टान्तितमिति। "इत्येष प्रकृतिकृतः" इति षट्पञ्चाशत्तमकारिकायाम्" (५६) इति शेषः। विभजते=विशेषेण प्रतिपादयति ॥

औत्सुक्येति ॥ यथा लोकः=जनः, औत्सुक्यविनिवृत्त्यर्थम्=इच्छानिवृत्ति-कृते, क्रियासु=कर्मसु, प्रवर्तते=प्रवृत्तिं कुरुते, तद्वत्=तथा, पुरुषस्य विमोक्षार्थम् अव्यक्तम्=प्रधानम्, प्रवर्तते ॥ इत्यन्वयः ॥ ५८ ॥ ॐ ॥

औत्सुक्यशब्दार्थमाह—इच्छेति। प्रवृत्तिमात्ररूपा इत्यर्थः। साङ्ख्य-नये गुणत्रयपर्याप्तवृत्तिः, न तु न्यायमत इव इच्छायाः चेतनधर्मत्वम् इति तस्या अचेतने वृत्तिः अत्र उपक्षिप्ता। सा[2] खलु=सा च इच्छा, इष्यमाणप्राप्तौ=

---

१ अचेतनानां हि क्षीरजलवाय्वादीनां सर्वत्र स्वार्थकारुण्याभ्यां विनैवैषां चेतनानामर्थं साधयितुं प्रवृत्तिर्दृष्टा, तद्दर्शनाच्चादृष्टाया अचेतनप्रकृतिप्रवृत्तेः स्वार्थकारुण्यान्यतरा-भावेऽपि तत्र प्रवृत्तिकल्पना युक्तेति तत्त्वम्। २ औत्सुक्यनिवृत्तेः सुखदुःखाभावान्य-तरत्वाभावात् कथं स्वार्थता इत्यत आह—सा खल्विति। तथाच इच्छानिवृत्तेः फलनियतत्वात् स्वार्थता संभवतीति व्यक्तोऽर्थः। ननु प्रधानमपि पुरुषार्थो मया कर्तव्य इतीच्छायां पुरुषविमोक्षाय प्रवर्तते तत्सिद्धिं विना तादृशेच्छाया अनिवृत्तेरनि-वृत्तायाश्चानिष्टत्वात्, तथाच स्वार्थमुखेनैव परार्थारम्भ इति पर्यवसितं तच्च न संभवति, अचेतनाया इच्छासंभवात्, स्वार्थासंभवाच्चेति चेत्, न, 'कूलंपिपतिषति' इतिवदुप-चारेण तदुपपत्तेरिति ध्येयम्।

माणश्च स्वार्थः-इष्टलक्षणत्वात्फलस्य। दार्ष्टान्तिके योजयति-"पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्" इति ॥ ५८ ॥

ननु भवतु प्रकृतेः पुरुषार्थः प्रवर्तको, निवृत्तिस्तु कुतस्त्या प्रकृतेः? इत्यत आह—

**रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥ ५९॥**

---

इच्छाविषयीभूतवस्तुनः प्राप्तौ सत्याम्, निवर्तते=निवृत्ता भवति। अयमर्थः—यदा कस्यचित् पुरुषस्य इष्टवस्तुनः प्राप्तिकरणेच्छा भवति तदा तस्य वस्तुनः प्राप्तये गमनागमनादिरूपक्रियासु स प्रवृत्तो भवति, यदा च तद् वस्तु प्राप्तं भवति तदा स ततो निवृत्तो भवतीति ॥ ॐ ॥

इष्यमाणप्राप्ताविव्युक्तम्, तत्र क इष्यमाणः? इति जिज्ञासायामाह—स्वार्थ इति। कुतः? तत्राह—इष्टलक्षणत्वादिति। इच्छाविषयस्वरूपत्वादित्यर्थः। अनेन "औत्सुक्यनिवृत्तिः-इष्टप्राप्तिः" इति पर्यायाविति दर्शयति। दार्ष्टान्तिके=लोकप्रवृत्तिदृष्टान्तेन प्रतिपिपादयिषिते प्रकृतिपुरुषव्यवहारे, इत्यर्थः। प्रकृतिप्रवृत्ताविति यावत्। **पुरुषस्य विमोक्षार्थमिति**। अनेन परार्थैव प्रधानस्य प्रवृत्तिरिति दर्शितम्, फलस्य परगतत्वात्, तस्यैव च स्वार्थतुल्यत्वादिति भावः ॥ ५८ ॥ ॐ ॥

पुरुषार्थः=पुरुषप्रयोजनम्, प्रकृतेः प्रवर्तकः=प्रधानस्य प्रवृत्तिमुत्पादयतीत्यर्थः। निवृत्तिः=पुरुषं प्रति प्रकृतेः पराङ्मुखत्वम्, कुतस्त्या=किम्प्रयुक्ता, कुतोभवा कुतस्त्या [अव्ययात्त्यप्] कस्माद्भवतीति यावत् ॥ अनिवृत्तौ चानिर्मोक्षप्रसङ्ग इत्यर्थः ॥ ॐ ॥

## अथ प्रकृतेर्निवृत्तिनिमित्तकथनम्।

**रङ्गस्येति** ॥ यथा नर्तकी=वेश्या, रङ्गस्य=नाट्यशालास्थपुरुषान् प्रति, नृत्यं दर्शयित्वा नृत्यात् निवर्तते, तथा प्रकृतिः पुरुषस्य=पुरुषं प्रति, आत्मानम्=स्वस्वरूपम्, प्रकाश्य=दर्शयित्वा, विनिवर्तते=निवृत्ता भवति, ततश्च न हि प्रकृतिः कस्यचित् निवर्तकस्य अपेक्षां कुरुते किं तु स्वाभाविकी तस्याः निवृत्तिरिति भावः। "रङ्गस्य" इति "पुरुषस्य" इति च संबन्धमात्रविवक्षायां षष्ठी। 'रङ्गस्य दर्शयित्वा' इत्यत्रापि 'आत्मानम्' इति संबध्यते। तथाच यथा नर्तकी सुप्रीता हावभावविलासवती विविधालङ्कारशोभिता नृत्यगीतादिभिरात्मानं सभ्यादेर्दर्शयित्वा 'दृष्टाहमनेन' इति कृतप्रयोजना धनप्राहया निवर्तते एवं प्रकृतिरपि बुद्ध्यादिसुखदुःखान्तर्भावेन आत्मानं पुरुषस्य प्रकाश्य "त्वमन्योऽहमन्या" इति विवेकतो निवर्तते=असंयुक्ता भवतीति सरलार्थः ॥ ५९ ॥ ॐ ॥

---

१ न च व्यापकयोः कथं संयोगनिवृत्तिरिति वाच्यम्, अविवेकनिमित्तकसंयोगविशेषस्य निवृत्तिप्रतियोगित्वेन विवक्षितत्वादिति।

"रङ्गस्य" इति स्थानेन—स्थानिनः पारिषदानुपलक्षयति। "आत्मानं" शब्दाद्यात्मना, पुरुषाद्भेदेन, च "प्रकाश्य" इत्यर्थः ॥ ५९ ॥

स्यादेतत्—प्रवर्ततां प्रकृतिः पुरुषार्थं, पुरुषादुपकृतात् प्रकृतिर्लप्स्यते कञ्चिदुपकारम्—आज्ञासंपादनाराधितादिवाज्ञापयितुर्भुजिष्या, तथा च न परार्थोऽस्या आरम्भ इत्यत आह—

---

ननु रङ्गो नाट्यस्थानम्, तत्संबधे कथं नृत्यक्रियादर्शनं संभवति? स्थानस्य भूभागविशेषस्य अचेतनत्वादित्यत आह—रङ्गस्येतीति। "रङ्गस्य" इत्यत्र रङ्गपदमित्यर्थः। "उपलक्षयति" इत्यनेनान्वितम्। स्थानेन=आधारभूतस्थानप्रतिपादनमुखेन, स्थानिनः=तदाधेयान्, पारिषदान्=नाट्यदर्शनसभोपविष्टपुरुषान्, उपलक्षयति=लक्षणया बोधयति। अयमर्थः—रङ्गशब्देन परिषद् उच्यते, तेन चात्र लक्षणया पारिषदा उच्यन्ते, मुख्यार्थस्य स्थानस्य दर्शनक्रियान्वयासंभवादिति॥ रङ्गं नाम नृत्यस्थानम्, अचेतनस्य तस्य नृत्यदर्शनं न संभवतीति तत्स्थाः पारिषदा लक्ष्यन्ते। परिषत्=सभा तत्र स्थितान् पुरुषान् इति सरलार्थः॥

अव्यक्तरूपायाः प्रकृतेः कथं व्यक्तिरूपः प्रकाशः? इत्यभिसन्धायाऽऽह—शब्दाद्यात्मनेति। स्वगुणैर्व्यक्तिमापन्नैः शब्दादिभिः, पुरुषभिन्नत्वेन स्वरूपेण चेत्यर्थः। शब्दाद्यात्मना=अविवेकदशोपयोगिभोगाय भोग्यशब्दादिरूपतया परिणामेन, पुरुषाद्भेदेन च=अपवर्गाय आत्मानं पुरुषाद् भिन्नतया चेति सरलार्थः। प्रकाश्येति। बोधयित्वेत्यर्थः। एतेन पुरुषस्य भोगापवर्गकृते प्रकृतेः प्रवृत्तत्वात् तदुभयफलसिद्धौ सुतरां तन्निवृत्तिरिति निवृत्तेः प्रयोजनसमाप्तिजन्यत्वं प्रतिपाद्य "निवृत्तिस्तु कुतस्त्या" इति जिज्ञासा निवर्तिता॥ ५९॥

ननु भुजिष्यादौ पुरुषोपकारित्वदर्शनात्कुतः स्वार्था प्रकृतेः प्रवृत्तिरित्याशंक्य समाधत्ते—स्यादेतदित्यादि सिद्धमित्यन्तेन।

लप्स्यत इति। लप्स्यत एव, प्राप्स्यत्येवेति यावत्। प्रत्युपकारसंभावनां विना केनापि कस्यचिदुपकाराविधानादिति भावः। तत्र दृष्टान्तयति—आज्ञेति। आज्ञासम्पादनेन=आदिष्टानुष्ठानेन, आराधितात्=प्रीणितादित्यर्थः। भुजिष्या=परिचारिका, दासीति यावत्। तथाच यथा आज्ञाकारिणः प्रभोः

---

१ ननु 'आत्मानं प्रकाश्य' इत्यनुपपन्नं, प्रधानस्य नित्यानुमेयत्वादिति चेत् तत्राह—शब्दाद्यात्मनेति। शब्दादयो हि विषयाः प्रधानपरिणामास्तद्दर्शनमेव प्रधानदर्शनम्, एवं महत्तत्त्वाहङ्कारयोरपि प्रत्यक्षता। परमाणोरसदाद्यप्रत्यक्षत्वेऽपि यथा तत्कार्यत्रसरेण्वादेः प्रत्यक्षता तद्वत् प्रधानस्याप्रत्यक्षत्वेऽपि तत्कार्यशब्दादेः प्रत्यक्षतेति न प्रधानस्य स्वत इति निष्कर्षः।

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तत्कार्यमपार्थकं चरति ॥ ६० ॥

यथा गुणवानप्युपकार्यपि भृत्यो निर्गुणेऽत एवानुपकारिणि स्वामिनि निष्फलाराधनः, एवमियं प्रकृतिस्तपस्विनी "गुणवती"

---

आज्ञप्तानुष्ठानेन प्रसन्नीकृतात् परिचारिका कंचित् प्रत्युपकारं पारितोषिकादिरूपं लभते तथा प्रकृतिरपि पुरुषात् निश्चितं कंचित् प्रत्युपकारं प्राप्स्यति, प्रत्युपकारधियैव प्रभोरादिष्टानुष्ठाने लोके दास्याः प्रवृत्तेर्दर्शनात्, न हि प्रत्युपकारलेशस्यापि विरहे कश्चित् केनचिदुपक्रियते इति सरलार्थः । ननु लभतां प्रत्युपकारं प्रकृतिः, तावता किम्? तत्राह—तथा चेति । तथा सति नायं प्रकृतेः पुरुषार्थे आरम्भः, किं तु लप्स्यमानस्वार्थनिबन्धन एव, प्रत्युपकारस्य स्वप्रयोजनत्वादित्यर्थः ॥ यद्वा—यदि तदाशब्दमध्याहृत्य प्रकृतिर्यदि उपकृतात्पुरुषात् कंचिदुपकारं लप्स्यते, तदा प्रवर्तताम्, भुजिष्यतापन्नस्त्रीवेत्यन्वयः । प्रकृतिर्यदि पुरुषार्था स्यात् तदा तदुपकृतापि स्यादिति तर्कमुक्त्वा तस्य व्यतिरेके तात्पर्यमाह—तथा चेत्यादिनेति व्याख्येयम् ॥ ॐ ॥

नानाविधैरिति ॥ गुणवती=सत्त्वादिगुणशालिनी प्रकृतिः, अत एव उपकारिणी=उपकारकर्त्री, पुंसः=पुरुषस्य द्रष्टुः, अगुणस्य=सच्चित्स्वभावकतया गुणातीतस्य, सतः अत एव अनुपकारिणः=उपकारासमर्थस्य, तस्य=पुरुषस्य, नानाविधैः=महदहङ्कारेन्द्रियमनःप्रभृतिभिः, उपायैः, अर्थम्=प्रयोजनम्, अपार्थकम्=स्वीयप्रयोजनशून्यमेव, चरति=आचरति, स्वभाव एवायं गुणवतां यदनुपकारिण्यपि उपकारकरणम्, अतः "परार्थं प्रत्युपकारसंबन्धेनैव प्रवृत्तिः" इति न नियमः, व्यभिचारादिति भावः ॥ अन्ये तु—"नानाविधैरुपायैः=विविधभोग्यसम्पादनैः अपवर्गसम्पादनेन च, उपकारिणी" इति योजनामाहुः । यथा कश्चिद् भृत्यः स्वयम् उपकार्यपि भूत्वा निर्गुणस्य अनुपकारिणः स्वामिनः निष्फलम् आराधनं करोति, तथैव इयं तपस्विनी गुणवती उपकारिणी प्रकृतिरपि पुरुषस्य अनुपकारिणः निर्गुणस्य च सतोऽपि तस्य अर्थं विना प्रयोजनमेव नानाप्रकारैः उपायैः साधयतीति सरलार्थः ॥ ॐ ॥

## अथ प्रकृतेः साक्षात्कारानन्तरं पुनरप्रवृत्तिः ।

अनुपकारिणोऽपि उपकारो लोके दृष्ट एवेत्याह—यथेति । निष्फलाराधनः=निष्फलम्=निष्प्रयोजनम् आराधनं यस्य स तथा । तथा प्रकृतेऽपीत्याह—एवमिति । तपस्विनी=दीना, "मुनिदीनौ तपस्विनौ" इत्यभिधानात्, दीनत्वं च फललाभाभावात् । गुणवती=सत्त्वादिगुणयुक्ता । उपकारिणी–नानाविधैरुपायैः ।

---

१ गुणवतामयमेव स्वभावो यदनुपकारिण्युपकारकरणम् अतः परार्थप्रवृत्तिर्न तदुपकृतव्याप्त्या व्यभिचारादित्यभिप्रायेण समाधत्ते—यथेत्यादिना ।

"उपकारिणी" अप्यनुपकारिणि निर्गुणेऽपि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

स्यादेतत्—नर्तकी नृत्यं परिषद्भ्यो दर्शयित्वा निवृत्तापि पुनस्तद्द्रष्टृकौतूहलात्प्रवर्तते यथा, तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यत आह—

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

सुकुमारता=अतिपेशलता—परपुरुषदर्शनासहिष्णुतेति यावत् । असूर्यम्पश्या हि कुलवधूरतिमन्दाक्षमन्थरा प्रमादाद्विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण, तदासौ तथा प्रयततेऽप्रमत्ता यथैनां न पुनः पुरुषान्तराणि पश्यन्तीति, एवं प्रकृतिरपि कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यते इत्यर्थः ॥ ६१ ॥

---

अनुपकारिणि=उपकारासमर्थे, निर्गुणे=गुणसम्पर्कविधुरे, व्यर्थपरिश्रमा=निष्फलप्रयासा स्वार्थशून्यत्वेन निष्फलारम्भेति यावत् । तस्मात् परार्थ एवास्या आरम्भो न स्वार्थ इत्याह—इतीति । अत इत्यर्थः ॥ ६० ॥

ननु नर्तकी रङ्गे शतधा प्रवर्तमाना दृश्यते एवं प्रकृतेर्विभुत्वयोगात्प्रवर्तमानत्वे निर्मोक्षापत्तिरिति शङ्कते—स्यादेतदिति । नर्तकी=वेश्या, परिषद्भ्यः=पारिषदेभ्य इत्यर्थः, तद्द्रष्टृकौतूहलात्=परिषत्स्थितदर्शककौतुकवशात्, द्रष्टॄणां बलवद्दर्शनाभिलाषादिति यावत् ॥ ❀ ॥

प्रकृतेरिति । प्रकृतेः=प्रधानात्, सुकुमारतरम्=अधिकसुकुमारम् अत्यन्तकोमलम्, सलज्जम् इति यावत्, अन्यत् किंचिद्=वस्तु, न अस्ति, इति मे=मम ईश्वरकृष्णस्य, मतिर्भवति, या=प्रकृतिः, दृष्टाऽस्मि=पुरुषेणाहं विवेकेन साक्षात्कृता, इति बुद्ध्या इति कृत्वा वा, पुनः पुरुषस्य दर्शनं न उपैति=प्राप्नोति, विषयभूता न भवतीति यावत् ॥ ६१ ॥ ❀ ॥

अतिपेशलता=अतिकोमलता । कोमलतातिशयस्तु वस्त्वन्तरचक्षुःसंयोगेनापि व्यथाजनकत्वम्, एतदेवाह—परपुरुषेति । परार्धं व्याख्यातुं दृष्टान्तमाह—असूर्यम्पश्येति[2] । सूर्यमपि या न पश्यतीति असूर्यम्पश्या पुरुषान्त-

---

१ अनुपकारित्वे हेतुमाह—निर्गुण इति । तत्र च "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिरेव मानम् । २ सुकुमारतरपदस्य सुकुमारसापेक्षत्वेन दृष्टान्तत्वेन दर्शयति—असूर्यमिति । एतेन मूले दृष्टान्ताकथनेन न्यूनतेति परास्तम् ।

स्यादेतत् पुरुषश्चेदगुणोऽपरिणामी कथमस्य मोक्षः? मुचेर्बन्धनविश्लेषार्थत्वात्, सवासनक्लेशकर्माशयानां च बन्धनसंज्ञितानां पुरुषेऽपरिणामिन्यसंभवात्। अत एवास्य न संसारः=प्रेत्यभावापरनामास्ति—निष्क्रियत्वात्। तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वच इतीमामाशङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति—

राणि न पश्यतीत्यर्थः। अतिमन्दाक्षम्[1]=अतित्रपा, तेन मन्थरा=मन्दगामिनी परदर्शनेऽप्रवृत्तेत्यर्थः। लज्जातिशयेन चापल्यरहितेति यावत्, प्रमादात्=अनवधानात्, विगलितः कटिपर्यन्तं पतितः सिचयाञ्चलो[2]=यस्याः च्युतपटप्रान्ता, सिचयः=स्त्रीणां कञ्चुलिकाख्यस्तनावरणवस्त्रविशेषः। असौ=कुलवधूः। दार्ष्टान्तिके योजयति—एवमिति[3]। अधिका=अतिशयेन सुकुमारी, विवेकेन=ज्ञानेन, दृष्टा=साक्षात्कृतपुरुषप्रतियोगिकभेदा, न द्रक्ष्यते=विवेकिनः पुरुषस्य दर्शनगोचरं न गमिष्यतीत्यर्थः। विवेकेन=पुरुषाद् भिन्नत्वेन, दृष्टेत्यर्थ इत्यन्ये। तथाच अविवेकदशायां पुम्प्रकृत्योरभेदाध्यवसायात् प्रकृतिः पुरुषं न परत्वेन व्यवहरति नापि पुरुषः प्रकृतिमिति न तदानीं परपुरुषदर्शनमितिकृत्वा प्रकृतेः पराङ्मुखत्वं युज्यते, श्रवणमनननिदिध्यासनानन्तरं तु यथा पुरुषः प्रकृतिं परत्वेन जानाति तथैव प्रकृतेः पुरुषं प्रति परत्वव्यवहारौचित्यात् परपुरुषदर्शनव्रीडावशादिव अत्यन्तपराङ्मुखत्वमिति भावः। विवेकख्यातिरेव तत्प्रवृत्तिप्रतिबन्धिकेति तत्त्वम्॥ ६१॥ ॐ॥

बन्धो हि कर्तृत्वभोक्तृत्वप्रमुखः परिणामः स कथमपरिणामिनः स्यादिति शङ्कते—स्यादेतदिति। अगुणः=सत्त्वादिगुणसम्पर्कविहीनः, अत एव अपरिणामी। पुरुषस्य बन्धनविश्लेषासम्भवप्रदर्शनाय तस्य बन्धनासम्भवं प्रतिपादयति—सवासनेति। वासना=संस्कारः, तया सह वर्तमानाः क्लेशादयो बन्धनपदार्था इत्यर्थः। तत्र क्लेशाः—"अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति भगवत्पतञ्जल्युक्ताः, कर्म=धर्माधर्मस्वरूपम्, आशयः=चित्तम्। अत एव=अपरिणामित्वादेव, अस्य=पुरुषस्य, प्रेत्यभावापरनामा=प्रेत्य=मृत्वा, भावः=जन्म, मरणानन्तरं पुनर्जन्मेति यावत्, स एव अपरं नाम यस्य स तथोक्तः। निष्क्रियत्वादिति। अपरिणामिनः क्रियाया असंभवादिति भावः। रिक्तम्=प्रमत्तलपितवच्छून्यम्, अर्थरहितमित्यर्थः, तुच्छमिति यावत्, "संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इति सततव्यभिचरितौष्ण्यस्य वह्नेरुष्णत्वोक्तिरिव सततमुक्तस्य पुरुषस्य मोक्षोक्तिरसङ्गतेति तत्त्वम्। अभ्युपगच्छन्=पुरुषस्य स्वत एव बन्धनाभावं स्वीकुर्वन्॥ ॐ॥

१ "मन्दाक्षं ह्रीस्त्रपा व्रीडा" इत्यमरः। २ सिचयाञ्चलः=कटिमारभ्य शिरःपर्यन्तावरकं वस्त्रम्। ३ सर्वकुलवधूनामेतत्प्रसूतत्वात् तदपेक्षया एतस्या अधिकतरत्वमित्याह—एवमिति।

तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥

अद्धा "न" कश्चित्पुरुषो "बध्यते" "न" कश्चित् "संसरति" "न" कश्चित् "मुच्यते" इति–"प्रकृतिः" एव तु "नानाश्रया" सती–"बध्यते" च, "संसरति" च "मुच्यते" च। बन्धमोक्षसंसाराः पुरुष उपचर्यन्ते। तथा–जयपराजयौ भृत्यगतावपि

---

तस्मादिति ॥ यतः पुरुषः अगुणः अपरिणामी, तस्मात् कश्चित् पुरुषः अद्धा=वस्तुतः, न बध्यते=बद्धो भवति, न संसरति=प्रेत्यभावापरनामानं संसारं लभते, नापि मुच्यते=मुक्तो भवति "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति श्रुतेरिति भावः। कस्तर्हि बन्धादिमान्? इत्यत आह—संसरतीति। प्रकृतिरेव नानाश्रया=नानापुरुषाश्रया, सती बध्यते=बद्धा भवति, संसरति=संसारं लभते, मुच्यते च=मुक्ता भवति च। इत्यन्वयः। अत्रायं निष्कर्षः—पुरुषस्तावच्चैतन्यमात्रवपुः कूटस्थो नित्यमुक्तः, सांसारिकसुखदुःखानुभवरूपो भोगः परिणामिन्या बुद्धेर्धर्मः, पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तद्दर्शनमात्रं भोगः। तेन तस्य विवेकाग्रहादाध्यासिकं भोक्तृत्वम्। विवेकख्यात्या भोक्तृत्वाध्यासमात्रनिर्वृत्तिर्मोक्षः। वस्तुतः पुरुषो न बद्धो नापि मोक्ष्यत इति ॥ ६२ ॥ ꣳ ॥

अद्धेति। तत्त्वतो वस्तुत इत्यर्थः। "तत्त्वे त्वद्धाञ्जसा द्वयम्" इत्यमरः। पाठक्रममनादृत्य बन्धसंसारमोक्षाणां क्रमिकत्वाद् अर्थक्रमादरेण व्याचष्टे—बध्यत इति। "अविद्याधीनप्रकृतिसंयोगो हि अतात्त्विकः पुरुषस्य बन्धः, तन्मूलक एव प्रेत्यभावनामा संसारः, वैराग्येण तत्त्वसाक्षात्कारात् ततो मोक्षः" इत्येवम् एषां क्रमिकत्वमिति द्रष्टव्यम्। तर्हि बन्धनसंसारमोक्षाः किमाश्रयाः? तत्राह—प्रकृतिरेवेति। नानाश्रया=नानापुरुषाश्रया, तथाच कंचित् पुरुषमाश्रित्य बध्यते, कंचिदाश्रित्य संसरति कंचिदाश्रित्य मुच्यते चेति भावः। ननु यदि बन्धनादयः प्रकृतेरेव, तर्हि "पुरुषविमोक्षार्थम्" इति कथमुपपद्यते? इत्यत आह—बन्धमोक्षेति। बन्धसंसारमोक्षा इत्यर्थः। अल्पाच्तरत्वात् मोक्षशब्दस्य प्रागुक्तिरिति बोध्यम्। उपचर्यन्ते=आरोप्यन्ते, भेदप्रतीतितिरोधानेन प्रकृतिगता बन्धादयः पुरुषगतत्वेन प्रतीयन्ते इति यावत्। तथा च बन्धादिकं बुद्धिनिष्ठमेव पुरुषे तत्सम्पर्कात् तद्गतमारोप्यत एव केवलं, न तु तदप्यस्तीति भावः।

---

१ अद्धा=साक्षात्, न संसरति=न धर्मादिना परलोकं गच्छति। नानाश्रया=धर्माधर्माद्यष्टकसम्पन्ना। प्रकृतिः=बुद्धितत्त्वम्, प्रकृतेः साक्षात् संसरणाभावादिति वा व्याख्येयम्।

**स्वामिन्युपचर्येते-तदाश्रयेण भृत्यानां तद्भागित्वात्, तत्फलस्य च शोकलाभादेः स्वामिसंबन्धात्। भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषसंबन्ध उपपादित इति सर्वं पुष्कलम्॥६२॥**

---

अत्र दृष्टान्तमाह—**यथेति** । जयः=शत्रुपराङ्मुखीकरणम्, पराजयः=शत्रुतः पराभवः, उपचर्येते=आरोप्येते। तदाश्रयेण=तत्संबन्धेन, स्वामिप्रतिनिधित्वेनेति यावत्, एतेन स्वामिभृत्ययोः सादृश्यं प्रादर्शि, येन भेदप्रतीतेस्तिरोधानं स्यात् । तत्फलस्य=जयपराजयफलस्य, शोकलाभादेः=राज्यादीष्टवियोगजन्यं दुःखं शोकः, इष्टप्राप्तिर्लाभः, तत्र शोकः पराजयफलम्, लाभश्च जयफलम् इति विवेकः। स्वामिसंबन्धात्=स्वामिनिष्ठत्वात् । अयं च जयपराजयोः स्वामिनिष्ठत्वेन उपचारहेतुः॥ ❀ ॥

ननु प्रकृतिसंबद्धयोर्भोगापवर्गयोः पुरुषसंबन्धित्वेन उपचारे को हेतुः? इत्यत आह—**भोगापवर्गयोश्चेति। विवेकाग्रहादिति** । विवेकेन=पृथक्त्वेन, ग्रहाभावादित्यर्थः। तथा च प्रकृतिपुरुषयोः एकत्वज्ञानं न सौसादृश्यात्,

---

१ अत्रायं निष्कर्षः—दृग्दर्शनशक्त्योः किल संयोगस्तापनिदानं, तस्य हेतुरविवेकदर्शनसंस्कारोऽविद्या, सा च विवेकख्यात्या विद्यया विरोधित्वाद् विनिवर्त्यते, तन्निवृत्तौ च तद्धेतुकः संयोगो निवर्तते, तन्निवृत्तौ च तत्कार्यस्तापो निवर्तते । तदुक्तं पञ्चशिखाचार्येण—"तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः" इति। अत्र च न साक्षात्पुरुषस्यापरिणामिनो बन्धमोक्षौ, किं तु बुद्धिसत्त्वस्यैव, चितिच्छायापत्त्या लब्धचैतन्यस्य। तथाहि—इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नमस्य भोगः, भोक्तृस्वरूपावधारणमपवर्गः, तेन हि बुद्धिसत्त्वमेवापवृज्यते, तथापि जयः पराजयो वा योद्धृषु वर्तमानः प्राधान्यात्स्वामिन्यपदिश्यते, एवं बन्धमोक्षौ बुद्धिसत्त्वे वर्तमानौ कथं चित्पुरुषेऽपदिश्येते, स ह्यविभागापत्त्या तत्फलस्य भोक्तेति। (भामती) तत्र दृक्शक्तिः=पुरुषः, दर्शयति स्वविकारान् पुंस इति दर्शनशक्तिः=प्रधानम्, तस्य च बुद्धिरूपेण परिणतस्य चिच्छायापत्तिः=संयोगः, अविविक्तयोः प्रधानपुरुषयोर्दर्शनम्=अविवेकदर्शनम्। बन्धमोक्षस्वरूपालोचनेन तयोः साक्षाद् बुद्धिधर्मत्वमाह—तथाहीति । अविभागो=बुद्धिसत्त्वस्य पुरुषादविवेकः, तेन बुद्धेर्जडाया अपि आपन्नं गुणस्वरूपावधारणम् । अनुकूलप्रतिकूलशब्दादिज्ञानस्य विविक्तपुरुषज्ञानस्य च बुद्धिपरिणामत्वाद् बुद्धेरेव बन्धमोक्षावित्यर्थः। स्वामिनि पुरुषे बन्धाद्युपचारं सदृष्टान्तमाह—तथापीति । अविभागस्य=अविवेकस्य आप्तिः=प्राप्तिस्तयेत्यर्थः। (कल्पतरुः) २ ननु प्रकृतेरेव संसारित्वे कथमहं कर्तेत्यादिव्यवहार इत्यत आह—**पुरुषेति** । उपचारे संबन्धमाह—**तदाश्रयेणेति**। जयपराजयाश्रयेण । तद्भागित्वात्=धनदानादिना स्वामिसंबन्धित्वात् । उपचारे हेतुमाह—**शोकेति**। अन्यथा स्वामिनि शोकादिकं न स्याज्जयादिरूपहेत्वभावात्। पुरुषे धनदानादिसंबन्धाभावात् संबन्धान्तरं दर्शयति—**विवेकाग्रहादिति**। इ० वा०

नन्ववगतं प्रकृतिगता बन्धसंसारापवर्गाः पुरुष उपचर्यन्त इति, किंसाधनाः पुनरेते प्रकृतेः ? इत्यत आह—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥

तत्त्वज्ञानवर्जं "बध्नाति" धर्मादिभिः "सप्तभिः" "रूपैः"=

---

किं तु विविक्ततया ग्रहाभावस्य अनादित्वादेव, अतः प्रकृतिसंबद्धभोगापवर्गयोः पुरुषसंबन्धित्वेन प्रतीतिरुपपन्नेति भावः । पुष्कलम्=उपपन्नम् ॥ ६२ ॥ ॐ ॥

वर्तिष्यमाणार्थं वृत्तं कीर्तयति—अवगतमिति ।

अवगतम्=बुद्धम्, उपचर्यन्ते=आरोप्यन्ते, किंसाधनाः=कानि साधनानि= कारणानि येषां बन्धनादीनां ते तथा, किंनिमित्तका इत्यर्थः । एते=बन्धादयः त्रयः ॥ एते बन्धादयस्त्रयः प्रकृतेः सकाशात् किंसाधनाः पुरुषे प्रवर्तन्त इत्यर्थः ॥ ॐ ॥

रूपैरिति । प्रकृतिः=प्रधानम्, सप्तभिः=धर्माधर्मैश्वर्यानैश्वर्यवैराग्या-वैराग्याज्ञानरूपैः सप्तभिः, रूपैः=भावैः, आत्मना=स्वेन, आत्मानम्=स्वम्, बध्नाति, सैव च=प्रकृतिः, पुरुषार्थं प्रति=पुरुषभोगापवर्गमुद्दिश्य, एकरूपेण= एकेन भावेन, ज्ञानाख्येन, विमोचयति=पुरुषभोगापवर्गमुद्दिश्य आत्मानं न प्रवर्तयति इत्यन्वयः ॥ ॐ ॥

साङ्ख्यचन्द्रिकाकारस्तु—पुरुषार्थम्=भोगं प्रति आत्मना=बुद्धिरूपेण, आत्मानम्=पुरुषम्, रूपैः सप्तभिः=धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्य-कैः, बध्नाति, पुरुषार्थम्=स्वरूपावस्थानलक्षणं मोक्षं प्रति, एकेन रूपेण=ज्ञानेन, मोचयति=संसारात् निवर्तयति । एतेन वैराग्योपरत्याद्यभावेऽपि ज्ञानं मोक्षस्य कारणं भवत्येवेति ज्ञापितम् । उक्तं च तथा वेदान्तेषु—"पूर्णबोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा । मोक्षो विनिश्चितः किं तु दृष्टदुःखं न नश्यति ॥" इति । द्वौ=वैराग्योपरमौ, दृष्टदुःखम्=यथोचितव्यवहारक्लेशः, । तथा च विषयजिहासारूपवैराग्यस्य विषयदोषदर्शनजन्यस्य पुनर्भोगेषु अदीनता मात्रं फलं न तु मोक्षोऽपि, एवं धीनिरोधरूपोपरमस्यापि यमादिसाध्यस्य द्वैतादर्श-नमेव फलं न मोक्षः, श्रुतिषु ज्ञानैकलभ्यत्वकथनात्, इत्यास्तां विस्तरः ॥" इत्येवं व्याख्याति ॥ ६३ ॥ ॐ ॥

## अथ प्रकृतेरष्टरूपाणां बन्धमोक्षजनकत्वविभागः ।

धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि अष्टभावाः पूर्वमुक्ताः, तत्र ज्ञानं वर्जयित्वा अन्यानि सप्त प्रकृतिरूपाणि बन्धहेतवः, ज्ञानाख्यं तु तद्रूपं बन्धविमोचकम्, इत्याशयेनाह—तत्त्वज्ञानवर्जमिति । तथाच "सप्तभिः"

---

१ सर्वान् कुतो न बध्नातीत्यत आह—ज्ञानवर्जमिति ।

भावैरिति "पुरुषार्थं प्रति"=भोगापवर्गं प्रति "आत्मनात्मानम्" "एकरूपेण"=तत्त्वज्ञानेन=विवेकख्यात्या "विमोचयति"=पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥ ६३ ॥

अवगतमीदृशं तत्त्वं, ततः किम्? इत्यत आह—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

---

इति सामान्येनाभिधानेऽपि "ज्ञानेन चापवर्गः" इति प्रागुक्तत्वात् ज्ञानवर्जितानामेव सप्तानां ग्रहणमिति भावः। बध्नातीति । "आत्मानमात्मना" इति कारिकास्थेन अन्वयः । धर्मादिभिरिति । धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यरूपेषु अष्टसु भावेषु मध्ये तत्त्वज्ञानवर्जनात् धर्मादयः सप्तैव भावा अवशिष्यन्त इति भावः। "रूपैः" इति व्याचष्टे—भावैरिति । इति शब्दः पूर्वार्धस्य व्याख्यासमाप्तिं द्योतयति। भोगापवर्गं प्रति=पुरुषभोगापवर्गमुद्दिश्य, भोगश्च अपवर्गश्च तयोः समाहारो भोगापवर्गमिति समाहारद्वन्द्वः । पूर्वार्धोक्तम् "आत्मानमात्मना" इत्यनुषञ्जयति—आत्मनात्मानमिति । तथा च "आत्मनात्मानम्" इत्यंशस्य "बध्नाति—विमोचयति" इति क्रियाद्वये पर्यायेण संबन्धः। एकरूपेण=एकेन भावेन, तेन केन? इत्याकाङ्क्षायां तद् व्यञ्जयति—तत्त्वज्ञानेनेति। धर्मादिरूपबन्धहेतुभावसप्तकभिन्नेन निजस्वरूपेणेत्यर्थः। अष्टसु भावेषु मध्ये तत्त्वज्ञानेतरसप्तानां बन्धकत्वाभिधानात् तत्त्वज्ञानस्यैकस्यैव पारिशेष्यादिति भावः। तस्यैव स्वरूपमाह—विवेकेति। विवेकख्यात्यपरपर्यायेण तत्त्वज्ञानेनेति संबन्धः। विमोचयतीति । पुरुषभोगापवर्गमुद्दिश्य आत्मानं न प्रवर्तयतीत्यर्थः, एतदेवाह—पुनर्भोगेति। न करोतीति। भोगापवर्गयोः करणसमाप्तेरिति भावः ॥ ६३ ॥ ❀ ॥

## अथ तत्त्वज्ञानस्य स्वरूपप्रदर्शनम् ।

एवमिति ॥ एवम्=इत्थम्, तत्त्वाभ्यासात्=तत्त्वविषयज्ञानाभ्यासात्,

---

१ आत्मना=आत्मीयेन बुद्ध्या। पुरुषस्य प्रकृतिकृतो बन्धो न साक्षात्, किन्तु बुद्धिद्वारक एवेत्युक्तं पुरस्तात्। ननु 'आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना' इत्यादिप्रयोगाः कथं संगच्छन्ते, एकस्यैव वस्तुनो युगपदेकक्रियानिरूपितकर्तृत्वकर्मत्वादेरसंभवात्, परया कर्तृसंज्ञया कर्मकरणादिसंज्ञाया बाधात् । नैष दोषः, अहंकाराद्युपाधिभेदेन आत्मनोऽपि भेदमाश्रित्य "आत्मानमात्मना हन्ति" इत्यादि प्रयोगस्याकरे समर्थितत्वात्। तथा चोक्तं हरिणा—"एकस्य बुद्ध्यवस्थाभिर्भेदेन परिकल्पने । कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते ॥" इति । बुद्ध्यवस्थाभिः=बुद्धिकल्पिताभिरवस्थाभिरित्यर्थः । २ एकरूपेण=अनेकाकाररहितेन । शास्त्रस्य तदेकसाधकत्वात् । मुख्यरूपेणेत्यर्थः । "एके मुख्यान्यकेवलाः" इत्यभिधानादिति केचित्। ३ ननु विमोचनं नाम वास्तवं निगडादिसंयोगध्वंसस्तस्यात्राभावात्कथं मुञ्चतिप्रयोग इत्यत आह—पुनरिति ।

अविपर्ययाद् विशुद्धम्=संशयभ्रमराहित्यात् प्रमात्मकम्, केवलम्=मिथ्याज्ञानेन अमिश्रितम्, अपरिशेषम्=नास्ति परिशेषो ज्ञातव्यो विषयो यस्मिन् तादृशम्, कस्यापि विषयस्य अपरिज्ञानाभावात् सम्पूर्णमित्यर्थः, एवम्भूतं "नास्मि=अहं क्रियाशून्योऽस्मि, नाहम्=अकर्ताऽस्मि, न मे=स्वामितारहितोऽस्मि," इति= इत्यात्मकम्, ज्ञानम् उत्पद्यते, इत्यन्वयः ॥ ❀ ॥

चन्द्रिकाकारस्तु—"भवतु ज्ञानादेव कैवल्यम्, तदेव तु कस्मात् किमाकारं च? तदाह—एवमिति। उक्तप्रकारेण पुरुषगोचराभ्यासात्=पुनः पुनश्चिन्तनरूपात् निदिध्यासनादेव, केवलम्=पुरुषमात्रगोचरम्, ज्ञानम्=साक्षात्कारः, उत्पद्यत इत्यर्थः। एतेन निदिध्यासनसहकृतेन मनसैव आत्मगोचरनिर्विकल्पकसाक्षात्कारो भवति, न श्रुतानुमानाभ्याम्, तयोस्तत्रासामर्थ्यात्, इति बोधितम्। यथाह समानतन्त्रे भगवान् पतञ्जलिः—"ऋतम्भरा तत्र प्रज्ञा श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्" इति । आकारमाह—नास्मीत्यादिना। "अस्मि" इत्यस्य "न कर्तास्मि" इत्यर्थः । तेन "बुद्धिभिन्नोऽहम्" इति प्राप्तम्। न मे="दुःखम्" इति शेषः । तेन "दुःखाद्यारोपाभावो लब्धः। "नाहम्" इत्यनेन अहङ्कारभेदग्रहः। नास्ति परिशेषो यस्मादिति अपरिशेषम्=चरमम्," तस्य सप्तधा प्रान्तभूमौ प्रज्ञा" इत्यादिना योगसूत्रेणोक्तम् । अविपर्ययात्=विपर्ययभिन्नत्वात् व्यधिकरणप्रकाराभावात्, विशुद्धम्=प्रमात्मकम्, मिथ्याज्ञानवासनोन्मूलनक्षमम्। एवंविध एकात्मसाक्षात्कारः तत्त्वज्ञानपदेन उच्यत इति भावः॥" इत्येवं व्याख्याति॥ "तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्। एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः॥" इति वासिष्ठे॥ ६४॥ ❀ ॥

---

१ 'यज् ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्यमवशिष्यते' इति तत्त्वम् । येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् (छा० ६।१।३) कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति (मु० १।१।३) इत्यादिश्रुतेः । २ वासिष्ठे—"ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता । विचारणा द्वितीया स्यात् तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥" (१) शुभेच्छा (२) विचारणा (३) तनुमानसा (४) सत्त्वापत्तिः (५) असंसक्तिः (६) पदार्थाभावनी (७) तुरीया चेति सप्त ज्ञानभूमिकाः । तत्र (१) नित्यानित्यवस्तुविवेकः, ऐहलौकिकपारलौकिकविषयसुखतो वैराग्यम्, शमदमादिषट्कसंपत्तिः, एतत्साधनत्रयपूर्वकं यत्फलपर्यन्तं मोक्षेच्छाकरणं यां मुमुक्षुतेत्याचक्षते, सा शुभेच्छा (२) ततः श्रोत्रियं ब्रह्मविदं गुरुमुपेत्य वेदान्तवचनानां श्रवणं, श्रुतस्य चार्थस्य मननं=विचारणा (३) ततो निदिध्यासनरूपाभ्यासेन मनस एकाग्रतया तत्र मनसि सूक्ष्मवस्तुग्रहणकरणयोग्यता या सा तनुमानसा, इमास्तिस्रोऽपि भूमिका ज्ञानप्राप्तेः साधनरूपाः सन्ति, आसु च तिसृष्वपि भूमिकासु सर्वमिदं जगत् भेदविशिष्टं प्रतीतं भवतीति जाग्रदवस्थानाम्नाऽपीमाः कीर्त्यन्ते । यदाह भगवान्

तत्त्वेन विषयेण विषयि=ज्ञानमुपलक्षयति । उक्तप्रकारतत्त्ववि-

---

ननु तत्त्वम्=वास्तवम्, तच्च प्रकृते प्रकृतिपुरुषयोः पृथक्त्वम्, तस्य सिद्धत्वात् कथम् अभ्यासः संभवति? पौनःपुन्यलक्षणो ह्यभ्यासः साध्यस्यैव संभवेत्, इत्यत आह—ज्ञानमुपलक्षयतीति । तथाच—"तत्त्वं विषयः, तज्ज्ञानं च विषयि" इति विषयवाचिना तत्त्वपदेन लक्षणया विषयिभूतं ज्ञानं

---

वसिष्ठ एव—"भूमिकात्रितयं त्वेतद् राम! जाग्रदिति स्थितम् । यथावद् भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥ हे राम! जाग्रदवस्थायां यथा जगदिदं यथावद् भेदबुद्ध्या दृश्यते, तथैवासु तिसृषु भूमिकास्वपि सर्वमिदं जगत् यथावद् भेदबुद्ध्यैव दृष्टं भवतीति शुभेच्छा, विचारणा, तनुमानसा चेति भूमिकात्रयं जाग्रदवस्थानाम्ना कथ्यते ॥ (४) ततोऽस्याधिकारिणः पुरुषस्य 'तत्त्वमसि' इत्यादिवेदान्तवाक्यैः निर्विकल्पकब्रह्मात्मैक्यविषयकः साक्षात्कारो भवति, इयमेव सत्त्वापत्तिः । अस्यां च चतुर्थ्यां भूमिकायां सर्वमिदं जगत् स्वप्नवत् मिथ्यारूपेण भातीति स्वप्नावस्थानाम्नापीयं निजागद्यते । यथोक्तं तत्रैव—"अद्वैते स्थैर्यमायाते द्वैते प्रशममागते । पश्यति स्वप्नवल्लोकं चतुर्थी भूमिका मता ॥" चतुर्थी भूमिकामापन्नः पुमान् 'ब्रह्मवित्' इति नाम्ना कथ्यते शास्त्रकृद्भिः । पंचमी, षष्ठी, सप्तमी,—भूमिकास्तु तिस्रोऽपि जीवन्मुक्तस्यैवावान्तरभेदरूपा इति बोद्धव्यम् । तत्र (५) सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसियेयं निर्विकल्पकसमाध्यवस्था सैव असंसक्तिः । इयं च पंचमी भूमिका 'सुषुप्ति' रिति नाम्नापि कथ्यते । एतद्भूमिको योगी स्वयमेव समाधितो व्युत्थानं लभत इति 'ब्रह्मविद्वर' इति नाम्नाऽसावभिधीयते । (६) ततोऽसंसक्तिभूमिकापरिपाकेन चिरकालं यन्निर्विकल्पकसमाध्यवस्थास्थैर्यं सा पदार्था भावनी । इयं च षष्ठी भूमिका 'गाढसुषुप्ति' रिति नाम्नापि व्यवह्रियते । इमां प्राप्तो योगी शिष्यादिप्रयत्नेन समाधितो व्युत्थानं लभते न स्वयम् इत्यसौ 'ब्रह्मविद्वरीयान्' इत्यभिलप्यते । यथोक्तं तत्रैव—"पंचमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् । षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ॥" (७) यत्समाध्यवस्थातो नायं स्वयं व्युत्थानं लभते नापि शिष्यादिप्रयत्नतो व्युत्थानं प्राप्नोति किं तु सर्वथा भेददर्शनाभावेन तद्रूप एव समुपजायते, स्वप्रयत्नं विनैव परमेश्वरप्रेरितात् प्राणवायुवशात् प्रारब्धकर्मवशाद्वा यस्यां विदुषः पुरुषस्य देहव्यवहारमन्ये लोका एव साधयन्ति यस्यां च विद्वान् पुरुषः सर्वदा परिपूर्णपरमानन्दघन एव तिष्ठति, साऽवस्था तुरीयानाम्नी सप्तमी भूमिका । एनां प्राप्तो योगी 'ब्रह्मविद्वरिष्ठ' इति नाम्ना वंभण्यते । अत्रेदं सप्तभूमिकासंग्राहकं पद्यं वासिष्ठोक्तमेव—"चतुर्थी भूमिका ज्ञानं तिस्रः स्युः साधनं पुरा । जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः ॥" इत्यौपनिषदाः । इत्यास्तां विस्तरः ॥

१ ननु तत्त्वाभ्यासो नाम विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहो निदिध्यासनपर्यायः स कथम् उक्ततत्त्वस्य घटत इति चेत् । तत्त्वविषयज्ञानस्यैवाभ्यासो न विषयस्येत्याह—तत्त्वेनेति । अभ्यासो नाम चित्तभूमौ कस्याञ्चित् समानप्रत्ययावृत्तिः चित्तस्य" इति श्रीशङ्कराचार्याः ।

षयज्ञानाभ्यासादादरनैरन्तर्यदीर्घकालसेवितात्सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानमुत्पद्यते=यद्विषयश्चाभ्यासस्तद्विषयकमेव साक्षात्कारमुपजनयति, तत्त्वविषयश्चाभ्यास इति तत्त्वसाक्षात्कारं जनयति। अत उक्तं—"विशुद्धम्" इति। कुतो विशुद्धम्? इत्यत आह—"अविपर्ययाद्" इति। संशयविपर्ययौ हि ज्ञानस्याविशुद्धी, तद्रहितं "विशुद्धम्"; तदिदमुक्तम्—"अविपर्ययाद्" इति।

---

बोध्यत इति भावः। एवं च ज्ञानस्य साध्यतया पौनःपुनिकत्वं संभवतीति लभ्यते॥ अन्ये तु—"तत्त्वम्=वस्तुयाथात्म्यम्, तच्च ज्ञानस्य विषयः, तेनात्र विषयि ज्ञानमुपलक्ष्यते, तथाच "तत्त्वाभ्यासात्" इत्यस्य "तत्त्वविषयज्ञानाभ्यासात्" इत्यर्थः। इत्येवं व्याचक्षते॥ ❀॥

ननु द्वित्रिः करणस्यापि अभ्यासपदार्थत्वात् तथाविधाभ्यासः, तज्जन्यविवेकसाक्षात्कारश्च अतिसुलभः स्यादित्यतोऽभ्यासं विशिनष्टि—आदरेति। आदरो=गुरुवाक्ये विश्वासः, नैरन्तर्यम्=अविच्छेदः, ताभ्यां दीर्घकालं व्याप्य सेवितात्=अनुष्ठितात्, इत्यर्थः। तथाच "सेवादरः, नैरन्तर्यम्, कालदैर्घ्यं चेति" त्रितयमपेक्षितम्, अन्यतमाभावे फलाभावः। तथाहि—ज्ञानाभ्यासोऽनादरेण चिरं निरन्तरं सेवितोऽपि न फलाय, एवम् आदरेणापि क्षणं निरनुबन्धं सेवितो न फलायेति बोध्यम्। दीर्घकालेति करणात् यावता कालेन प्रकृतिपुरुषयोरन्यथाख्यातिर्निर्व्यूढा स्यात्, तावत्कालव्यापकत्वं सेवनस्य दर्शितम्। सत्त्वपुरुषेति। सत्त्वपुरुषयोः=बुद्धितत्त्वपुरुषयोः, या अन्यता=परस्परं भिन्नता, तत्साक्षात्कारि=तद्विषयकप्रत्यक्षजनकं ज्ञानमित्यर्थः। एतेन अभ्यासदशायां सत्त्वपुरुषान्यताज्ञानस्य न साक्षात्कारजनकता, किं तु गुरूपदिष्टायाः सत्त्वपुरुषान्यतायाः निदिध्यासनापरपर्यायानुचिन्तनरूपत्वमेव, तथाविधानुचिन्तननैरन्तर्येण तु सत्त्वपुरुषान्यताविषयकप्रत्यक्षमुत्पद्यत इति बोध्यते॥ ❀॥

ननु "तत्त्वाभ्यासात् विशुद्धज्ञानमुत्पद्यते" इत्येवोच्यताम्, किम् अभ्यासस्य तत्त्वसाक्षात्कारित्वविशेषणेन? इत्याशङ्कामपाकुर्वन्नाह—यद्विषयश्चाभ्यास इति। यद्विषयकश्च ज्ञानाभ्यास इत्यर्थः। प्रकृते तेन किम्? इत्यत्राह—तत्त्वविषयश्चाभ्यास इति। तत्त्वविषयकश्च ज्ञानाभ्यास इत्यर्थः। इति=अतः, जनयति=उत्पादयति, "ज्ञानाभ्यासः" इति कर्तृपदमत्रान्वेति॥ विशुद्धमितीति। तथाच ज्ञानस्य विशुद्धत्वम्=यथार्थत्वम्, तेन तात्त्विकं ज्ञानं लभ्यत इति भावः॥ ❀॥

ननु "अविपर्ययात्" इत्यनेन "विपरीतनिश्चयाभावात्" इत्येवोच्यते, तत्कथं संशयाभावोऽपि व्याख्यायते? इत्यत आह—नियतमनियततयेति। नियतम्=नियमेन तत्त्ववत्, अव्यभिचारेण तत्त्वावच्छिन्नमिति यावत्, अनियत-

नियतमनियततया गृह्णन्संशयोऽपि विपर्ययः, तेन "अविपर्ययाद्" इति संशयविपर्ययाभावो दर्शितः । तत्त्वविषयत्वाच्च संशयविपर्ययाभावः ।

स्यादेतद्–उत्पद्यतामीदृशाभ्यासात्तत्त्वज्ञानम् । तथाप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यम् । तथा च तन्नि-

---

तया=वैकल्पिकतत्त्वतदितरत्वेन, गृह्णन्=विषयीकुर्वन् । संशयोऽपि विपर्यय इति । एतेन संशयेऽपि आंशिकं विपर्ययत्वं दर्शितम् । तथाहि—अव्यभिचारेण स्थाणुत्ववत्यपि वस्तुनि "स्थाणुर्वा पुरुषो वा" इति संशये वैकल्पिकस्थाणुत्व-पुरुषत्वारोपात् "यदि स्थाणुत्वमस्मिन् स्यात्, तदायं न पुरुषः, यदि त्वस्मिन् पुरुषत्वम्, तदा नायं स्थाणुः" इति ज्ञानावश्यम्भावे पुरुषत्वाभाववति पुरुषत्व-ज्ञानावश्यकत्वात् तदंशे अतद्वति तत्प्रकारकत्वं सुव्यक्तमिति भावः ॥ ❀ ॥

विपर्यय इति । तथा चात्र विपर्ययपदं प्रसेतरज्ञानलाक्षणिकम्, संशयस्य आंशिकविपर्ययत्वेन मुख्यविपर्ययत्वाभावात्, अत एव तस्य पृथग् विभाग इति भावः । ननु "अविपर्ययात्" इत्यनेन संशयविपर्ययाभावग्रहणे किं बीजम्, येन लक्षणाङ्गीक्रियते? इत्यत आह—तत्त्वविषयत्वाच्चेति । संशयः=एकधर्मिकः भावाभावविषयकः ज्ञानम्, विपर्ययः=तदभाववति तत्प्रकारकज्ञानम्, तयोरभाव इत्यर्थः । तथा च संशयस्य अनपगमे ज्ञानस्य यथार्थत्वं न स्यादिति विपर्ययाभाववत् संशयाभावोऽपि आवश्यक एवेति भावः ॥ ❀ ॥

अन्ये तु—"अविपर्ययात्" इत्युक्तत्वात् संशयस्यानिषेध इति संशयग्रस्तं ज्ञानं कथं शुद्धम्? इत्यत आह—नियतमनियततयेति[1] । नियतत्वं वस्तुनो लक्षणम्, न च नियते संशय उपपद्यते, किं तु नियतस्य अनियतत्वेन ग्रहः संशयः, स च तथाभूतस्य अतथाभूतत्वग्रहरूपस्य विपर्ययस्यैव विशेष इत्यभिप्रायः । कुतोऽत्र संशयविपर्ययौ न? इत्यत आह—तत्त्वविषयत्वाच्चेति । यस्य वस्तुनः स्वरूपं यादृशं, तस्य तेन रूपेण याथार्थ्येन ज्ञाने कुतः संशयस्य विपर्ययस्य वा संभव इति भावः ॥" इत्येवं व्याचक्षते ॥ ❀ ॥

जातेऽपि तत्त्वज्ञाने नापवर्गनिष्पत्तिः, संस्कारवशात् प्रकृतिपुरुषयोरेकत्व-प्रतीतेरपि अवश्यम्भावात्, इत्याशङ्क्य केवलपदस्य तदाशङ्कानिवर्तकत्वं प्रतिपादयति—स्यादेतदिति । मिथ्याज्ञानम्=प्रकृतिपुरुषयोरेकत्वस्मरणम् । तन्निमित्तस्य=मिथ्याज्ञानजन्यस्य । विपर्ययेण मिथ्याज्ञानेन, असंभिन्नम्=अमिश्रितम्[2] ।

---

१ ननु 'विपर्ययात्' इत्युक्ते कथं संशयनिरासस्तत्राह—नियतमिति । संशयस्यानियतग्राहकत्वरूपविपर्ययसाधारणधर्मत्वादिति व्यक्तोऽर्थः । २ ननु विपर्ययेणासंभिन्नत्वं विपर्ययभिन्नत्वं तच्च विशुद्धमित्यनेनैव लब्धमिति चेत्, न । विपर्ययपदस्योभयत्रान्वयेन स्वसमानकालीनस्वसमानाधिकरणविपर्ययवासनाऽसंयुक्तत्वभावः ।

भित्तस्य संसारस्यानुच्छेदप्रसङ्ग इत्यत उक्तम्—"केवलं"=विपर्ययेणासंभिन्नम्। यद्यप्यनादिर्विपर्ययवासना, तथापि तत्त्वज्ञानवासनया तत्त्वविषयसाक्षात्कारमादधत्याऽऽदिमत्यापि शक्या समुच्छेत्तुम्। तत्त्वपक्षपातो हि धियां स्वभावः। यथाहुः बाह्या अपि—

ननु मिथ्याज्ञानजन्यवासनासद्भावात् तज्ज्ञानस्यावश्यम्भावितया कथं तत्त्वज्ञानस्य तदसंभिन्नत्वं संभवति? इत्याशङ्क्य तद्वासनाऽप्युच्छिद्यत इत्याह—यद्यपीति। अनादिरिति। संसारस्य अनादित्वात् विपर्ययवासनाया अपि अनादित्वमिति भावः। अनादित्वोक्त्या वासनाया दुरुच्छेदत्वं दर्शयति। विपर्ययवासना=मिथ्याज्ञानजन्यः संस्कारः, प्रकृतिपुरुषयोर्वस्तुतो विविक्तयोरपि अविविक्तत्वग्रहः। तत्त्वज्ञानवासनया=तत्त्वज्ञानाभ्यासजन्यप्रकृतिपुरुषान्यतासंस्कारेण। तत्त्वेति। तत्त्वसाक्षात्कारम् उत्पादयन्त्या इत्यर्थः। तत्त्वसंस्कारवशात् प्रतिक्षणं तत्त्वसाक्षात्कारस्यैव उदयसंभवादिति भावः। आदिमत्याऽपीति। सम्प्रत्युपजाततत्त्वज्ञानजन्यया अपीत्यर्थः श्रवणमनननिदिध्यासनजन्ययेति यावत्। शक्या समुच्छेत्तुमिति। "अनादिविपर्ययवासना" इति संबन्धः। न हि "नादिमताऽनादेर्नाशः" इति कश्चिन्नियमोऽस्ति, नैयायिकनये प्रागभावस्यानादेः सादिना ध्वंसेन नाशस्य दृष्टत्वादिति भावः। ननु अनादित्वेन अतिजरठाया विपर्ययवासनायाः, कथम् अचिरोत्पन्नत्वेन कोमलया तत्त्वज्ञानवासनया शक्यसमुच्छेदत्वं संभवति? इत्यत आह—तत्त्वपक्षपातो हीति। हि=यस्मात्, तत्त्वपक्षपातः=वस्तुयाथात्म्यानुराग एव, धियाम्=बुद्धीनाम्, स्वभाव इत्यर्थः। बुद्धिः सकृदपि वस्तुयाथात्म्यं विषयीकृत्य न कदाचिदपि ततो विमुखीभवतीति भावः। कथंचिद् भ्रमे पतितापि धीः–तत्त्वं प्रकाशितमात्रं प्रति स्वभावतो धावतीति तत्त्वम्। यथा रङ्गखण्डं सुदीर्घकालं यावद् रजतत्वेन

१ दृढभावनया त्यक्तपूर्वापरविचारणम्।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ १ ॥
मानसी वासनाः पूर्वं त्यक्त्वा विषयवासनाः।
मैत्र्यादिवासना राम! गृहाणामलवासनाः ॥ २ ॥
द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वेऽपि विनश्यतः ॥ ३ ॥
प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ ४ ॥
असंगव्यवहारित्वाद् भवभावनवर्जनात्।
शरीरनाशदर्शित्वाद् वासना न प्रवर्तते ॥ ५ ॥
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम्।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥ ६ ॥

जानतः पुरुषस्य एकदा वह्निसंयोगादिना रङ्गत्वेन निश्चये जाते पुनर्न रजतत्वेन तत्र ज्ञानमुत्पद्यते, सुदीर्घकालीनत्वेन परिणतोऽपि रजतसंस्कारः अचिरोद्भूतेन रङ्गसंस्कारेण समुच्छिद्यत एव, तथा तत्त्वज्ञानवासनया अचिरोद्भूतयाऽपि शक्यो मिथ्याज्ञानवासनाया विनाशो विधातुमिति निष्कर्षः ॥ ॐ ॥

एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥ ७ ॥

यदा न भाव्यते किञ्चिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ ८ ॥

अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमात्मपदप्रदा ॥ ९ ॥

उपविश्योपविश्यैव चित्तज्ञेन मुहुर्मुहुः ।
न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ १० ॥

अंकुशेन विना मत्तो यथा दुष्टमतङ्गजः ।
अध्यात्मविद्याधिगमः साधु संगम एव च ॥ ११ ॥

वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ १२ ॥

सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ।
चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ॥ १३ ॥

तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितानि हि ॥ १४ ॥

तस्माद्राघव ! यत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत् समाश्रयेत् ॥ १५ ॥

तत्र येन केनाऽप्युपायेन तत्त्वज्ञानं मनोनाशं वासनाक्षयं चेति त्रयमवश्यं संपादयिष्यामीत्याकारक उत्साहविशेषः पौरुषो यत्नः, अमीषां त्रयाणां पार्थक्येन ( पृथक् २ ) साधननिश्चयो विवेकः, यथा तत्त्वज्ञानस्य श्रवणादीनि साधनानि, मनोनाशस्य योगः साधनं, वासनाक्षयस्य च प्रतिकूलवासनानामुत्पत्तिः साधनमिति । अत्रायं निष्कर्षः—कृतोपास्तिरकृतोपास्तिश्चेति द्विविधोऽत्राधिकारी । तत्र कृतोपास्तेः मनोनाशो वासनाक्षयश्चेति द्वयमेव तत्त्वज्ञानात् प्रागेव दृढं भवतीति तत्त्वज्ञानोत्तरं स्वत एव जीवन्मुक्तिस्तस्याधिगता भवति, अकृतोपास्तिना तु जडचेतनवस्तुविवेकमात्रेणैव विनैव योगाभ्यासं तात्कालिकं मनोनाशं वासनाक्षयं च संपाद्य शमदमादिसंपत्त्या श्रवणमनननिदिध्यासनानि संपादनीयानि, दृढाभ्यासेन दृढतामुपगतैः श्रवणादिभिरेव सर्वबन्धविनाशकं तत्त्वज्ञानमस्योदेति ।

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ १६ ॥

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः" ॥ इति ।

---

उक्तार्थे बौद्धकारिकां प्रमाणयति—यथाहुरिति । बाह्याः=वेदबाह्यमतावलम्बिनो नैरात्म्यवादिनो बौद्धविशेषाः । "अपि"शब्देन "किमुतान्ये वेदैकसापेक्षाः" इति ध्वनयति । निरुपद्रवेति । निरुपद्रवः=संशयाद्युपद्रवरहितः, निर्दोष इति यावत्, अत एव भूतार्थस्वभावः=स्वभावतः सत्यो योऽर्थः, आत्माभावरूप इति यावत्, तस्य विपर्ययैः=मिथ्याज्ञानैः, आत्मास्तित्वज्ञानैरिति यावत्, कर्तृभिः, यत्नवत्त्वेऽपि चिरतरकालाभ्यस्तत्वेन दृढतरसंस्कारमहिम्ना आत्माभावरूपं तत्त्वार्थं बाधितुं कृतयत्नत्वेऽपि न बाधः=बाध्यत्वं स्यात् । कुतः? इत्यत आह—बुद्धेरिति । बुद्धेः=धियः, तत्पक्षपाततः=भूतार्थपक्षपातित्वात्, इति बौद्धकारिकार्थः । एतन्मतम् अनादेयत्वेऽपि "मिथ्याज्ञानेन

---

असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ॥ १७ ॥
सर्वमेव हि सदा संसारे रघुनन्दन ।
सम्यक् प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते ॥ १८ ॥
उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम् ।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ १९ ॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ २० ॥
अशुभेषु समाविष्टं शुभेष्वेवावतारय ।
स्वमनः पुरुषार्थेन बलेन बलिनां वर ॥ २१ ॥
प्रागभ्यासवशाद्याति यदा ते वासनोदयम् ।
तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ २२ ॥
संदिग्धायामपि भृशं शुभामेव समाहर ।
शुभायां वासनावृद्धौ तात दोषो न कश्चन ॥ २३ ॥
अव्युत्पन्नमना यावद् भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्त्वं निर्णीतं तावदाचर ॥ २४ ॥
ततः पक्वकषायेण नूनं विज्ञातवस्तुना ।
शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निरोधिना ॥ २५ ॥

इति वासिष्ठे ॥

---

१ एतदुक्तं भवति—बुद्धिर्हि स्वभावतः सत्यवस्तुपक्षपातिनीति नैव जातु मिथ्यावस्तुपक्षमवलम्बते एवं च मानवचित्ते विविधसांसारिकविषयाणां विद्यमानत्वेऽपि नैव तदुन्मुखी सा भवति, तेषां मिथ्यात्वात् किन्तु यथार्थतत्त्वग्राहिणी सती तत्त्वपक्षपातं विधाय मिथ्यासंस्काराणां पराभवमेव सा विधत्ते इति ।

ज्ञानस्वरूपमुक्तम्—"नास्मि न मे नाहमिति" इति। "नास्मि" इति अनेनात्मनि क्रियामात्रं निषेधति। यथाहुः—"कृभ्वस्तयः क्रियासामान्यवचना" इति। तथा चाध्यवसायाभिमानसंकल्पालोचनानि चान्तराणि, बाह्याश्च सर्वे व्यापाराः, आत्मनि प्रतिषिद्धानि बोद्धव्यानि।

यतश्चात्मनि व्यापारावेशो नास्त्यतो "नाहम्"। अहमिति कर्तृपरम्। 'अहं जानामि' 'अहं जुहोमि' 'अहं ददे' 'अहं भुञ्जे'

---

तात्त्विकार्थो न बाध्यते, बुद्धेस्तत्पक्षपातित्वात्" इत्येतदर्थस्य उपादेयतया बौद्धकारिका प्रमाणत्वेन उपन्यस्तेति द्रष्टव्यम्॥ ❀॥

अन्ये तु निरुपद्रवः=संशयाद्युपद्रवरहितः, यो भूतार्थः=परमार्थः, तस्य तदुपलक्षितस्य तज्ज्ञानस्य विपर्ययैः=भ्रमैः, यत्नवत्त्वे=अतिशयेन यत्ने कृतेऽपि बाधो नैव भवति, बुद्धिर्हि तत्त्वपक्षपातिनी विपर्ययान् अनादृत्य तत्त्वमेवावलम्बते"॥ इत्येवं व्याचक्षते। सेयं व्याख्या तत्कारिकाप्रकरणानवेक्षणमूलत्वाद्धेयैवेति विदाङ्कुर्वन्तु सुधियः॥ ❀॥

एवं च अनादिकालतः प्रवृत्तानां विषयभोगजन्यदृढसंस्काराणां प्रबलतया नैवाधुनिकेन तत्त्वाभ्यासेन बाधोऽसंभवस्तत्त्वविषयकपक्षपातितया आधुनिकेनापि ज्ञानाभ्यासेन तद्बाधसंभवादिति सरलार्थः॥ ❀॥

क्रियामात्रं निषेधतीति। एतेन आत्मनि "अस्मि" इति सत्तावत्त्वज्ञानेऽपि अविपर्ययत्वान्न क्षतिः, क्रियावत्त्वज्ञानस्यैव विपर्ययत्वात्, इति सूचितम्। अस्तेः क्रिया सामान्यवाचित्वे शाब्दिकसम्मतिमाह—यथाहुरिति। तथाच "नास्मि" इत्यस्य "न सक्रियोऽहम्" इत्यर्थः। अध्यवसायाभिमानसंकल्पालोचनानि=क्रमाद् बुद्ध्यहङ्कारमनसां कार्याणि। आन्तराणि=अन्तःकरणसाध्यानि, बाह्यः=बहिरिन्द्रियसाध्यः, व्यापारः=श्रवणमननादिः। प्रतिषिद्धानीति। आलोचनान्तानां बहुत्वात् तदनुरोधेन बहुवचनं क्लीवत्वं च, न तु "व्यापार" इत्यनुरोधात् पुंस्त्वैकत्वम्, "विरुद्धधर्मसमवाये भूयसां स्यात् सधर्मकत्वम्" इति न्यायादिति बोध्यम्॥

"नास्मि" इत्यनेन निष्क्रियत्वमात्मन उक्त्वा तत्फलभूतं कर्तृत्वाभावं तस्याह—यतश्चेति[2]। व्यापारावेशः=क्रियासामान्यसंबन्धः। कर्तृपरमिति। तत्तत्क्रियानिरूपितकर्तृणाम् अनुगमरूपेण तत्तत्कर्तृत्वशक्तिमत्प्रतिपादक-

---

१ 'कृभ्' क्रियावाची, 'भ्वस्ती' सत्तारूपभाववाचकौ, 'भावो भावनोत्पादना क्रिया' इत्युक्त्या भावक्रिययोरभेदात्तेषां क्रियासामान्यवाचित्वमिति तदाशयः। व्युत्पादितं चैतत्सिद्धान्तकौमुदीटिप्पण्यां विस्तरशोऽस्माभिरिति तत्रैव कणेहत्यालोचनीयम्। २ पाठक्रमादर्थक्रमो बलीयान्, इति न्यायमाश्रित्य क्रियोपरमे कर्तृत्वादिकारकोपरम इत्याह—यतश्चेति।

इति सर्वत्र कर्तुः परामर्शात्, निष्क्रियत्वे च सर्वकर्तृत्वाभावः। ततः सुष्ठूक्तम्—"नाहम्" इति । अत एव "न मे" । कर्ता हि स्वामितां लभते, तदभावात्तु कुतः स्वाभाविकी स्वामिता? इत्यर्थः। अथवा "नास्मि" इति=पुरुषोऽस्मि=न प्रसवधर्मा । अप्रसवधर्म-

मित्यर्थः । कर्तुः परामर्शात्=अहंपदेन कर्तुरुपस्थापनादित्यर्थः । तथा च तत्तत्क्रियासु बुद्धेरेव कर्तृत्वात् आत्मनः कर्तृत्वारोपो ज्ञानदशायां न स्यादिति भावः। आत्मनः कर्तृत्वाभावमुपपादयति—निष्क्रियत्वे चेति । क्रिया-सामान्यसंबन्धाभाववत्त्वे सतीत्यर्थः। न हि क्रियारहितः कर्ता भवति, क्रिया-श्रयस्यैव कर्तृपदवाच्यत्वादिति भावः॥ अत एव=कर्तृत्वाभावादेव । न मे इति। किंचिदपि हिरण्यादिकं मम नास्तीत्यर्थः । स्वामितां लभते=तद्वान् भवति, तदभावात्=कर्तृत्वाभावात्, स्वाभाविकी=स्वत उत्पन्ना । कर्तृत्वाभावे च स्वामित्वाभावः सुतरां सिध्यति, न हि अलसम् अनुद्योगपरम् अत्यन्तोदा-सीनं कश्चित् स्वामिनं मन्यते, स्वोद्योगार्जितं च धनं समर्पयति, इति पुरुषो "न मे किंचित्" इति तात्त्विकं स्वस्य स्वामित्वाभावं गृह्णाति विवेकख्यात्य-नन्तरमिति भावः। "द्वे पदे बन्धमोक्षाय न ममेति ममेति च। ममेति बध्यते जन्तुर्न ममेति प्रमुच्यते॥" इति सिद्धान्तः॥

अयमत्र निष्कर्षः—"मत्संबन्धि धनम्" इत्यत्र धनस्य मत्संबन्धित्वम्=मन्निष्ठस्वामित्वनिरूपितस्वत्ववत्त्वम्, स्वामित्वं च न स्वभावसिद्धम्, किंतु अर्जनसाध्यम्, अर्जनं च क्रियाविशेषः, तदेव अर्जयितुः स्वामित्वमाधत्ते। एवं च आत्मनः क्रिया सामान्याभावेन अर्जनकर्तृत्वासंभवात् स्वामित्वा-संभवेन धनस्य मन्निष्ठस्वामित्वनिरूपितस्वत्ववत्त्वज्ञानं विवेकदशायां न संभव-त्येव। अविवेकदशायामेव बुद्धेः क्रियाया आत्मन्यारोपात् "ममेदं धनम्" इति ज्ञानं सुतरां संभवतीति॥

ननु "अस्मि" इत्युत्तमपुरुषैकवचनेन "अहम्" इति कर्तृपदस्यापि आक्षेपात् "अहं नास्मि" इत्यनेनैव आत्मनः क्रियाकर्तृत्वप्रतिषेधात् "नाहम्" इत्यस्य पौनरुक्त्यापत्तिरित्यतो "नास्मि न मे नाहम्" इत्यंशस्यार्थान्तरमाह—अथवेति। पुरुषोऽस्मीति। "ना अस्मि" इति पदच्छेदेन ना=पुरुषः, इत्यर्थात्। तथाच एतद्व्याख्यायां "ना" इति प्रथमैकवचनान्तस्य नृशब्दस्य रूपमिति भावः। प्रसवधर्मिणी स्त्रीजातिः प्रकृतिः, न पुरुष इत्याह—न

१ ननु पाकानुकूलक्रियाभावकालेऽपि पाचक इत्यादिव्यवहारान्यथानुपपत्त्या पाचक-त्वादिशक्तिसंभव इत्यपरितोषादाह—अथवेतीत्यन्ये । असीति पदच्छेदेन व्याख्याय प्रथमैकवचननाशब्दपरत्वेन व्याचष्टे—अथ वेतीतीतरे। व्याख्यानान्तरं हि पूर्वापरितो-षादधिकार्थलाभाद्वा भवति। तत्र पूर्वापरितोषाभावादधिकार्थलाभायाह—अथवेतीत्यपरे।

त्वाच्चाकर्तृत्वमाह—"नाहम्" इति । अकर्तृत्वाच्च न स्वामितेत्याह—"न मे" इति । नन्वेतावत्सु ज्ञातेष्वपि कश्चित्कदाचिदज्ञातो विषयोऽस्ति, तदज्ञानं च जन्तून्बन्धयिष्यतीत्यत आह—"अपरिशेषम्" इति । नास्ति किञ्चिदस्मिन् परिशिष्टं ज्ञातव्यं—यदज्ञानं बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिध्यति ? इत्यत आह—

**तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः सुस्थः ॥ ६५ ॥**

---

प्रसवधर्मेति । प्रसवः=परिणामः, तद्धर्मेत्यर्थः । अकर्तृत्वमिति । गुणपरिणामं विना क्रियाप्रवृत्तेरसंभवादिति भावः । नाहमिति । "अहं जानामि" इत्यादिव्यवहारोऽपि नेत्यर्थः ।

अज्ञानहेतुको बन्धः—न च सांख्यैः प्रतिज्ञातान्येव वस्तूनि सर्वाणि, न ततः परिशिष्टानि कानिचिदिति कश्चिदज्ञातोऽपि विषयोऽवशिष्टः स्याद्, इत्याशङ्क्य समाधत्ते—नन्वित्यादिना । एतावत्सु="नास्मि न मे नाहम्" इत्येवंरूपेषु । बन्धयिष्यतीति । आत्मनः सर्वज्ञतायाः श्रौततया तस्या असंपत्तौ स्वरूपाविर्भावाभावात् बद्धत्वावश्यकत्वादिति भावः । अस्मिन् ज्ञाने । यद्ज्ञानमिति । यद्विषयकमज्ञानमित्यर्थः ॥ यावत्कर्माणि दीयन्ते[2] यावत्संसारवासना । यावदिन्द्रियचापल्यं तावत् तत्त्वकथा कुतः ॥ यावद्देहाभिमानश्च ममता यावदेव हि । यावत्प्रयत्नवेगोऽस्ति यावत्संकल्पकल्पना ॥ यावन्नो मनसः स्थैर्यं न यावच्छास्त्रचिन्तनम् । यावन्नगुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ इत्यत्र बोध्यम् ॥ ६४ ॥ ॐ ॥

तेन निवृत्तप्रसवामिति ॥ तेन=विशुद्धतत्त्वज्ञानेन, तत्त्वसाक्षात्कारेणेति यावत्, निवृत्तप्रसवाम्=निवृत्ताः प्रसवाः=प्रसोतव्या भोगभेदतत्त्वसाक्षात्कारादयो यस्यास्तादृशीम्, भोगस्य विवेकसाक्षात्कारस्य च प्रसवात् निवृत्तामिति यावत्, अर्थवशात्–विवेकज्ञानरूपार्थसामर्थ्यात्, सप्तरूपविनिवृत्ताम्=धर्मादिसप्तभावेभ्यो निवृत्तां सतीम्, प्रकृतिम्=प्रधानम्, पुरुषः प्रेक्षकवत्=दर्शकवत् उदासीनवदिति यावत्, अवस्थितः=वर्तमानः सन्, तथा स्वच्छः=निष्क्रियश्च सन्, पश्यति, किं तु तस्यामवस्थायामपि सात्त्विक्या बुद्धेः पुरुषस्य संभेदस्तिष्ठति, अथवा तस्याः छाया पुरुषे पतिता भवति, अन्यथा ईदृश्याः प्रकृतेर्दर्शनमपि न घटेत, इत्यन्वयः ॥ ६५ ॥ ॐ ॥

---

१ बन्धकेषु बुद्धिदेहादिष्वविवेकाभावात् संभावनया शङ्कते—नन्विति । प्रसवधर्मत्वेन प्रतियोगिनां ज्ञातत्वादज्ञातस्तादृशविषयो नास्तीत्यभिप्रायेण परिहरति—नास्तीति । वा । २ दीयन्ते=फलोन्मुखानि भवन्ति ज्ञानाग्निना न दग्धानीत्यर्थः ।

भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ, तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यत इति निवृत्तप्रसवा प्रकृतिः । विवेकज्ञानरूपो योऽर्थस्तस्य वशः=सामर्थ्यं तस्मात् । अतत्त्वज्ञानपूर्वकाणि खलु धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि । वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्वकमेव । तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति, कारणविनिवृत्त्या च सप्त रूपाणि निवर्त्तते इति सप्तरूपविनिवृत्ता प्रकृतिः । "अवस्थित" इति निष्क्रियः । "सुस्थ" इति । रजस्तमोवृत्तिकलुषया बुद्ध्याऽसंभिन्नः ।

---

**अथ तत्त्वज्ञानानन्तरमुदासीनतया प्रकृतेर्दर्शनम् ।**

"निवृत्तप्रसवाम्" इत्यस्य निवृत्तः प्रसवः=प्रजारूपकार्योत्पादनं यस्या इति विग्रहे प्रसवघटकीभूतकार्यं व्याचष्टे—भोगेति । प्रसोतव्यौ=परिणामेन जनयितव्यौ, तौ च=भोगविवेक[1]साक्षात्कारौ च, प्रसूतौ=जनितौ, अस्याः=प्रकृतेः, प्रसोतव्यम्=जनयितव्यम् जनिष्यते, इति=अतः । यच्छब्दार्थमाह—प्रकृति-[2]रिति । "अर्थवशात्" इति व्याचष्टे—विवेकज्ञानेति । अपवर्गस्तु सिद्ध एवेति तत्प्रतिबन्धकाज्ञाननिवर्तको विवेकसाक्षात्कारः सोतव्य इति मनस्यनुसन्धाय "सप्तरूपविनिवृत्ताम्" इत्यस्याभिप्रायमाह—अतत्त्वज्ञा[3]नेति । तत्त्वाज्ञानमूलकानीत्यर्थः । ननु तत्त्वज्ञानदशायामपि वैराग्यसद्भावात् कथं वैराग्यस्य अतत्त्वज्ञानपूर्वकत्वमुच्यते ? इत्यत आह—वैराग्य[4]मपीति । केवलतौष्टिकानाम्="आध्यात्मिक्यः-" इत्यादिकारिकायां या नव तुष्टय उक्ताः, तासां तुष्टीनाम् एकतराम् आश्रित्य ये श्रवणमननादिसिद्धिषु विरक्ताः, ते केवलतौष्टिकास्तेषाम्, आत्मानात्मविवेकाभावेऽपि प्रकृत्यादिसाक्षात्कारेण कृतकृत्यं मन्यमानानामित्यर्थः, विषयोपरमात् अनात्मनः प्रकृतिमहदहङ्कारादीन् आत्मेत्यभिमानस्य यास्तुष्टयस्ताभिर्ये वर्तन्ते तेषामिति यावत् । उच्छिनत्ति=समूलमुन्मूलयति, कारणनिवृत्त्या=अतत्त्वज्ञानरूपकारणनिवृत्त्या, सप्त रूपाणि=ज्ञानभिन्ना धर्मादयः सप्त भावाः, सप्त रूपाणि=भावाः, विनिवृत्तानि यस्याः सेति विग्रहः । अवस्थितः=स्वरूपेण स्थितः, "ष्ठा गतिनिवृत्तौ" इत्युक्तेः । ततश्च निष्क्रियः, इति व्याचष्टे—निष्क्रिय इति । असंभिन्न इति । अमिश्रित इत्यर्थः । अविवेकदशायां तु सत्त्वपुरुषयोर्विमिश्रितत्वमासीत्, येन बुद्धेः

---

१ विवेकसाक्षात्कारपदेन भेदसाक्षात्कारो बोध्यः । २ न चैवमन्येषां ज्ञानाभावेऽपि मुक्तिप्रसङ्ग इति वाच्यम् । ज्ञानिनं प्रत्येव कार्याजनकत्वात् । अत एव निवृत्तप्रसवां पश्यतीत्युक्तम्, न तु सा जीर्णकामिनीव निवृत्तप्रसवा भवतीत्यर्थः । ३ तत्त्वज्ञानस्यैवाज्ञानविरोधित्वात् सप्तरूपाणामज्ञानपूर्वकत्वमाह—अतत्त्वज्ञानेति । ४ वैराग्यस्य विषयदोषदर्शनहेतुतत्त्वज्ञानपूर्वकत्वात्कथमज्ञानपूर्वकत्वमित्यत आह—वैराग्यमपीति ।

सात्त्विक्या तु बुद्ध्या तदाप्यस्य मनाक् संभेदोऽस्त्येव । अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

स्यादेतत्—"निवृत्तप्रसवाम्" इति न मृष्यामहे, संयोगकृतो हि स इत्युक्तं, योग्यता च=संयोगः, भोक्तृत्वयोग्यता च=पुरुषस्य चैतन्यं, भोग्यत्वयोग्यता च=प्रकृतेर्जडत्वं विषयत्वं च, न चैतयोरस्ति निवृत्तिः, न च करणीयाभावान्निवृत्तिः, तज्जातीयस्यान्यस्य

क्रियया पुरुषस्यापि सक्रियत्वमारोपितमिति भावः । "रजस्तमोवृत्तिकलुषया" इत्येवं बुद्धेः कलुषितत्वं विशेषणमुक्तम्, तद् व्यावर्त्यमाह—सात्त्विक्या त्विति । तदापि=विवेकदशायामपि, अस्य=पुरुषस्य, मनाक्=अल्पः, न तु सर्वाभिः सात्त्विकबुद्धिभिस्तदानीमपि संभेदोऽस्तीति भावः, संभेदः=चितिच्छायापत्तिः, । ननु बुद्धेर्मनाक् संभेदेऽपि किं मानम्? इत्यत्राह—अन्यथेति । तथानभ्युपगमे इत्यर्थः । एवम्भूतेति । निवृत्तप्रसवादिरूपेत्यर्थः । दर्शनेति । वृत्तिज्ञानेत्यर्थः । तस्यापि बुद्धिधर्मत्वेन पुरुषे आरोपानुपपत्तिरित्यर्थः । अन्ये तु—मनाक्=ईषत्, अन्तिमक्षणे, ततः प्रकृतिदर्शने संवृत्ते तु सात्त्विक्या बुद्धेरपि न स्थितिरिति व्याचक्षते ॥ ६५ ॥

ननु योग्यताया यावद्द्रव्यभावित्वात्कथं निवृत्तप्रसवेति शंकते—स्यादेतदिति । मृष्यामहे=सहामहे, सः=प्रसवः । उक्तमिति । "पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इत्येकविंशकारिकायाम्" इति शेषः । संयोगकृतः=प्रकृतिपुरुषसंबन्धप्रयुक्तः । कीदृशोऽत्यन्तभिन्नस्वभावयोस्तयोः संयोगः? इत्यत आह—योग्यतेति । संयोगो योग्यतास्वरूप इत्यर्थः । ननु "पङ्ग्वन्धवदुभयोः संयोगः" इत्यत्र यथा पङ्ग्वन्धयोः संयोगो मार्गोपदेष्टृत्वोपदेश्यत्वयोग्यता दर्शनशीलत्वगतिशीलत्वरूपा, तथा प्रकृते सा कीदृशी? इत्यत्राह—भोक्तृत्वेति । संयोगः पुरुषस्य संबन्धे भोक्तृत्वयोग्यता, सा च चेतनत्वरूपा, चैतन्यमन्तरेण भोक्तृत्वासंभवादिति भावः । भोग्यत्वेति । स एव संयोगः प्रकृतेः संबन्धे भोग्यत्वयोग्यता, सा च जडत्वविषयत्वस्वरूपा, ताभ्यां विना भोग्यत्वासंभवादिति भावः । न चैतयोरिति । एतयोः=भोक्तृत्वभोग्यत्वयोग्यतयोः चैतन्यजडत्वादिरूपयोः, निवृत्तिर्नास्तीत्यर्थः । पुरुषस्य चैतन्यस्वरूपतायाः प्रकृतेश्च जडत्वादिस्वभावताया अनश्वरत्वादिति भावः । अयमाशयः—पुरुषप्रधानयोश्चैतन्यजडत्वादिरूपभोक्तृत्वभोग्यत्वयोग्यतयोः अनिवृत्तौ तदभिन्नसंयोगसद्भावस्यापि अङ्गीकार्यतया तत्कृतः सर्गोऽवश्यंभावीति निवृत्तप्रसवत्वमनुपपन्न[3]मिति । करणीयाभावादिति । प्रसवनीयाभावादित्यर्थः ।

१ 'तस्मात् तत्संयोगात्—' इत्यत्रेति वा । २ असहने हेतुः संयोगकृतः इति । ३ चेतनोऽचेतनानि भुङ्क्ते, तथा च प्रकृतेरचेतनत्वे पुरुषस्य चेतनत्वं भोगप्रयोजकं विवेकख्यातेः परस्तादपि समानमेवेति भोगानिवृत्तिरिति पूर्वपक्षयितुर्निगूढोऽभिप्रायः ।

करणीयत्वात्—पुनःपुनः शब्दाद्युपभोगवदित्यत आह—

**दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥**

करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिर्यया विवेकख्यातिर्न कृता, (जनिता) कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति । अविवेकख्यातिनिबन्धनो हि तदुपभोगो, निबन्धनाभावे न तद्भवितुमर्हत्यङ्कुर इव बीजाभावे ।

---

निवृत्तिः=प्रसवनिवृत्तिः । तज्जातीयस्य=प्रसूतजातीयस्य, करणीयत्वात्=उत्पादनीयत्वात् जननीयत्वादिति यावत् । एतेन "नास्याः प्रसोतव्यमवशिष्यते यत्प्रसोष्यते" इति यदुक्तं तन्निराकृतम् ॥ ® ॥

## अथ तत्त्वज्ञाने सति संयोगस्य सर्गाजनकता ।

दृष्टा मयेति । एकः=पुरुषः, "प्रकृतिर्मया दृष्टा" इति निश्चित्य प्रकृतेरुपेक्षकः=न पुनः सकौतुकं द्रष्टुमिच्छतीत्यर्थः । अन्या=प्रकृतिश्च, "पुरुषेणाहं दृष्टा" इति निश्चित्य, उपरमति=विरमति, न पुनर्दर्शनाय प्रवर्तत इत्यर्थः । अत उभयोरुदासीनत्वात् तयोः=प्रकृतिपुरुषयोः, संयोगे सत्यपि सर्गस्य=सृष्टेः, प्रयोजनं नास्ति, इत्यन्वयः । चन्द्रिकाकारस्तु—"तयोः संयोगेऽपि सर्गस्य जनने प्रयोजनम्=प्रयुज्यतेऽनेनेति व्युत्पत्त्या सहकारिकारणं, नास्तीति तयोर्मध्ये अन्या=प्रकृतिः, उपरमति=न प्रसूते, इत्यन्वयः । तत्कथं नास्ति? तदाह—दृष्टा मयेति । तयोः प्रकृतिपुरुषयोर्मध्ये एकः=द्रष्टा पुरुषः, "स्वभिन्नेयं स्वभिन्नं स्वसंपर्काद् बध्नातीत्येवं गुणा प्रकृतिर्मया दृष्टा" इत्युपेक्षको भवति=उपरमति, तत् तद्भोगाद्यावेशरहितो भवति, यथा नर्तकीं दृष्ट्वा सभ्यः । तथाच प्रसवे पुरुषस्य प्रकृतिभेदाग्रहः सहकारी, दर्शने सति तु स नास्तीति भावः ॥" इत्येवं व्याख्याति ॥ ६६ ॥ ® ॥

निवृत्तप्रसवेत्यस्य प्रपञ्चः—कृतविवेकख्यातिस्त्विवति । करोत्विति । पुरुषस्य संबन्धे जनयतु, इत्यर्थः । "नाम" इत्यव्ययम् उपगमे । शब्दाद्युपभोगम्=पुरुषस्य शब्दादिजन्यसुखित्वाद्यारोपम् । न जनयति, कुत इति चेत्, तत्राह—अविवेकेति । बुद्ध्यात्मनोरेकत्वग्रहनिमित्तक इत्यर्थः । तदुपभोगः=शब्दाद्युपभोगः, निबन्धनाभावे=निमित्ताभावे, अविवेकख्यातेरभावे इति यावत्, तत्=पुरुषस्य शब्दाद्युपभोक्तृत्वम्, तदानीं बुद्धेः पुरुषात् पृथक्त्वस्य जाततया बुद्धिगतानां सुखदुःखमोहानां पुरुषेष्वारोपासंभवादित्यर्थः । यथा कुण्डलाद्यभिमानी कुण्डलादीनि पुनः पुनः प्रेक्षते, धारयति च, स एव निवृत्ताभिमानो विरक्तः सर्वं तद् विजहाति, प्रव्रज्यां चोपादत्ते,—तथैव पूर्वं विवेक-

प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींस्तदविवेकान् 'ममैत' इत्यभिमन्यमान आत्मा भुञ्जीत, एवं विवेकख्यातिमपि प्राकृतीमविवेकादेवात्मा 'मदर्थेयम्' इति मन्यते। उत्पन्नविवेकख्यातिस्तु तदसंसर्गान्न शब्दादीन् भोक्तुमर्हति, नापि विवेकख्यातिं प्राकृतीं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हतीति। पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ

---

ख्यातेः प्रकृतिकृतान् शब्दादिभोगान् पुरुषः आत्मीयत्वेन मन्यते न तु विवेकख्यातेरनन्तरमित्यभिप्रायः।

विवेकख्यातिरपि प्रकृतिकार्यं नात्मकार्यम्, ततश्च प्रकृतिकार्येणैव अन्तिमेन अनवशिष्टकार्येण पुरुषस्यापवर्गः, इत्येतदभिसन्धायाह—प्राकृतानित्यादि। प्राकृतान्=प्रकृतिसंबन्धिनः, सुखदुःखमोहात्मनः=सुखदुःखमोहस्वरूपान्, तदविवेकात्=प्रकृतेः आत्मभिन्नत्वेन अग्रहात्। एते=सुखदुःखमोहात्मकाः शब्दादयः। प्राकृतीम्=प्रकृतिसंबन्धिनीम्, । मदर्थेयमिति। मदुपकारिकेयमित्यर्थः। तथाच अविवेकदशायां यथा प्राकृतान् शब्दादीन् मदीयत्वेनात्मा मन्यते, तथा बुद्धिसंबन्धित्वेन प्राकृतीमपि विवेकख्यातिं कामयमान आत्मा मदुपकारकत्वेन मन्यते, इति भावः।

विवेकख्यात्यनन्तरं तु संसारोद्भवमारभ्य विवेकख्यात्यवधिकं सकलं प्रकृतिकार्यं नात्मीयत्वेनोदासीनः पुरुषो निश्चिनोतीति सिद्धान्तयति—उत्पन्नेति। तदसंसर्गात्=प्रकृत्यसंबन्धात्, विविक्तः=भिन्नः। तथाच विवेकदशायाम् आत्मा प्रकृतेः पृथक् भूत्वा प्राकृतान् शब्दादीन् न भोक्तुमर्हति, नापि विवेकख्यातिं स्वोपकारकत्वेन मन्यत इत्यभिप्रायः॥

पुरुषार्थौ पुरुषप्रयोजनभूतौ, प्रकृत्यारम्भप्रयोजकौ=प्रकृतेरुत्पादनक्रियाप्रयोजकौ। अपुरुषार्थाविति। पुरुषेण उदासीनेन आत्मीयतया अनभिमन्यमानावित्यर्थः। तथाच अविवेकदशायामेव पुरुषेण अर्थ्यमानतया पुरुषार्थौभोगविवेकौ प्रकृतिं प्रसवक्रियायां प्रवर्तयतः, प्रकृतेः प्रसवपरम्परया उत्पन्ने तु विवेके तावेव भोगविवेकौ न पुरुषार्थौ भवतः, पुरुषेण तदानीम् अर्थ्यमानत्वा-

---

१ दृष्टान्तमाह—अङ्कुर इवेति। तथाच सूत्रम्—नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावादिति। (सां० ६।४४) उपभोगे निमित्तानां सोपाधिसंयोगविशेषतत्कारणाविवेकादीनामित्यर्थः। २ अविवेकस्य सर्गे सहकारित्वमन्वयव्यतिरेकाभ्यां व्युत्पादयति—प्राकृतानित्यादिना। ३ विवेकख्यातेरात्मार्थत्वेऽविवेकहेतुत्वमाह—एवमिति। एवं=शब्दादिभोगो यथा तथाख्यातिरपि मदर्थेत्यर्थः। ४ नापि विवेकख्याति कर्तृत्वमित्याह—नापीति। नापि तामाकाङ्क्षतीत्याह—न स्वार्थमिति।

सन्तौ न प्रकृतिं प्रयोजयतः। तदिदमुक्तम्—"प्रयोजनं नास्ति सर्गस्य" इति। अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनं, तद् अपुरुषार्थत्वे नास्तीत्यर्थः॥ ६६॥

स्यादेतद्—उत्पन्नतत्त्वसाक्षात्कारान्मुक्तश्चेदनन्तरमेव मुक्तस्य तस्य शरीरपातः स्यादिति कथमदेहः प्रकृतिं पश्येद्? अथ तत्त्वज्ञानेऽपि न मुच्यते—कर्मणामप्रक्षीणत्वात्, तेषां कुतः प्रक्षयो? भोगादिति चेद्—हन्त भोः! तत्त्वज्ञानं न मोक्षसाधनमिति 'व्यक्ताव्यक्तज्ञविज्ञानजन्मना तत्त्वज्ञानेनापवर्ग' इति रिक्तं वचः, भोगेन चापरिसङ्ख्येयः कर्माशयप्रचयोऽनियतविपाकसमयः

भावात्। एवं च यदि पुरुषार्थावेव भोगविवेकौ प्रकृतिक्रियाप्रयोजकौ, तदा तौ भोगविवेकौ अपुरुषार्थौ सन्तौ कथं प्रकृतिं प्रयोजयेतामिति भावः। तथाच सूत्रम्—'विमुक्तबोधान्न सृष्टिः प्रधानस्य' लोकवत् ( सां० ६।४३ ) इति।

कारिकास्थं प्रयोजनपदं करणव्युत्पत्त्या प्रयोजकपरमित्याह—अत्रेति। "अत्र" इत्यस्य "सर्गे" इत्यत्रान्वयः। तदपुरुषार्थत्वे=पुरुषार्थभोगविवेकयोः पुरुषार्थत्वाभावे, तत्=प्रयोजनं नास्तीत्यर्थः। आत्मीयत्वेन अनभिमन्यमानं न किंचित् कस्यापि प्रयोजनं भवति, न हि अनात्मसंबन्धयोग्यम् आकाशताडनादिकार्यम् उद्दिश्य कश्चित् प्रवर्तते, इत्यभिप्रायः॥ ६६॥

## अथ जीवन्मुक्तस्य संस्कारशेषादवस्थानम्।

मुक्तश्चेदिति। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति यजुर्वेदीयश्रुत्या आत्मतत्त्वज्ञानानन्तरमेव मुक्तत्वाभिधानादिति भावः। शरीरपात इति। "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिः, अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति छान्दोग्यश्रुतेः सशरीरस्य सुखदुःखानिवृत्तेर्मुक्तत्वव्याघातः स्यादिति भावः। ननु तत्त्वज्ञानिनां देहपात आवश्यक एवेत्यत आह—कथमिति। तथाच "तर्हि प्रकृतिं पश्यति पुरुषः प्रेक्षकवत्" इति प्रागुक्तमसङ्गतं स्यादिति भावः। ननु "कर्मणः प्रतिबन्धकत्वात् ज्ञानिनोऽपि कर्मक्षयान्मुक्तिः" इति शङ्कते—अथेति। अत्र कर्मक्षयानन्तरमुक्ति-

१ सूत्रं तु विमुक्तबोधात्=विमुक्तोऽयमिति बोधादिव मुक्तं प्रति न प्रधानस्य सृष्टिः=प्रवृत्तिः, लोकवत्=यथा हि लोके हि कश्चित् कस्यचिद् बन्धमोक्षार्थं यतते जाते च मोक्षे उदास्ते तथा प्रधानमित्येवं व्याख्येयम्॥ २ सर्गस्य प्रयोजनं नास्तीत्यत्र हेतुमाह—अपुरुषार्थत्व इति। ममेदमित्यभिमानाभावादित्यर्थः। तथाच सहकारिकारणाभावे योग्यताया अकिंचित्करत्वात्सर्गो न संभवतीत्यभिप्रायः।

क्षेतव्यः, ततश्चापवर्गप्राप्तिरित्यपि मनोरथमात्रमित्यत आह—

सम्यग् ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ॥ ६७ ॥

---

वादिनं पृच्छति—तेषामिति । उत्तरयति वादी—भोगादिति । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्युक्तेरिति भावः । प्रतिवादी दूषयति—हन्त भोरिति । "हन्त" इत्यव्ययं प्रतिवादवाक्यारम्भप्रत्यायकम् । इति=अतः, व्यक्तम्=विकारजातम्, अव्यक्तम्=प्रधानम्, ज्ञः=पुरुषः, तेषां विज्ञा॰नेन=विवेकेन ज्ञानेन, जन्म=उत्पत्तिर्यस्य तादृशेन, रिक्तम्=अर्थशून्यं तुच्छम्, कर्माशयः=धर्माधर्मौ । क्षेतव्यः=नाशयितव्यः । मनोरथमात्रमिति । अनियत विपाकसमयानाम् असङ्ख्यकर्मणां प्रक्षयानन्तरकालस्य दुर्लभत्वादिति भावः ॥

प्रकृतिदर्शनक्षणपर्यन्तं देहसद्भाव आवश्यकः, अन्यथा निष्क्रियेण निर्विकारेण पुरुषेण देहरहितेन कथं प्रकृतेर्दर्शनम्, तच्च अन्तिमक्षणे देहावस्थानं न संभवति, तत्त्वसाक्षात्कारसमकालमेव पुरुषस्य मुक्तत्वादित्याशङ्क्य सदेहस्य जीवन्मुक्तिं "तस्य तावदेव" इत्यादिश्रुतिप्रसिद्धां दृष्टान्तादिबलेनोपपादयति—सम्यग् ज्ञानेति । सम्यग् ज्ञानाधिगमात्=विशुद्धज्ञानप्राप्तेः, धर्मादीनाम् अकारणप्राप्तौ=संसारकारणत्वाप्राप्तौ, संस्कारवशात्=देहारम्भकादृष्टवशात्, चक्रभ्रमिवत् धृतशरीरः तिष्ठति, इत्यन्वयः । अयमत्र निष्कर्षः—तत्त्वसाक्षात्कारमहिम्ना "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन !" इत्याद्युक्तदिशा धर्मादिसंसारनिमित्तानां प्रजननशक्तौ नाशितायां तेषां संसारकारणत्वाप्राप्तौ केवलमारब्धकर्मणां वर्तमानशरीरारम्भकाणां भोगमात्रेण क्षयस्य संभवाद् दण्डवेगवशाद् दण्डनाशेऽपि किंचित्कालावस्थायिचक्रभ्रमणन्यायेन कियत्समयं सशरीर एव पुरुषः तिष्ठति, इति तत्कृतं प्रकृतिदर्शनेऽनुपपत्तिदर्शनेन, दर्शनसाधनस्य शरीरस्य सद्भावात्, इति ॥ ६७ ॥

तथाच—सम्यग्ज्ञानम्=मिथ्याज्ञानोच्छेदक्षमं ज्ञानम्, तदधिगमात्=तदुत्पत्तेः, धर्मादीनाम्=देहारम्भकान्यधर्मादीनां संचितक्रियमाणानां दग्धबीजभावानाम्, अकारणम्=स्वाश्रये स्वफलोत्पादनासामर्थ्यम्, तस्य प्राप्तौ, संस्कारः=देहारम्भकादृष्टम्, तद्वशात्, धृतशरीरः तिष्ठति, यथा कुलालव्यापा-

---

१ सम्यग् ज्ञानम्=मिथ्याज्ञानोच्छेदि ज्ञानं तदधिगमात्=तदुत्पत्तेः । धर्मादीनाम्=देहारम्भकानां संचितक्रियमाणानामित्यर्थः । २ यथा तुषरूपसहकारिकारणसंबद्धा एव शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा, तथा अविद्यादिक्लेशरूपसहकारिकारणसंबद्धावेव धर्माधर्मौ स्वफलदानसमर्थौ भवतः, नापनीतक्लेशौ प्रसंख्यानाग्निदग्धबीजभावौ वेति तत्त्वम् ।

तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्माशयप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। क्लेशसलिलावसिक्तायां हि बुद्धिभूमौ कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्मबीजानामङ्कुरप्रसवः? तदिदमुक्तम्—"धर्मादीनामकारणप्राप्तौ"=अकारणत्वप्राप्तावित्यर्थः। उत्पन्ने तत्त्वज्ञानेऽपि च "संस्कारवशात्तिष्ठति" यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमत्तिष्ठति, कालपरिपाकवशात्तूपरते संस्कारे

---

रविगमेऽपि वेगवशात् चक्रभ्रमिस्तिष्ठति, प्रारब्धस्य भोगैकनाश्यत्वात्, इति सरलार्थः॥ ६७॥ ॥

अनियतेति। अनियतो विपाकानां=जात्यायुर्भोगानां कालो यस्य कर्माशयस्य सः।

दग्धेति। दग्धो बीजभावः=फलजननशक्तिर्येषां तत्तया इत्यर्थः। कल्पते=प्रभवति, समर्थो भवतीति यावत्। रूपकेण बीजसाधर्म्यमाह—क्लेशेति। क्लेशाः=अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः" इति सूत्रोक्ताः, त एव सलिलानि=जलानि, तैः अवसिक्तायाम्=फलजननसहकारिणीकृतायाम्, इत्यर्थः। बुद्धिभूमौ=बुद्धिरूपायां भूमौ, कर्मबीजानि=कर्माणि धर्माधर्मरूपाणि बीजानि, अङ्कुरम्=भोगादिरूपम् अङ्कुरम्, प्रसुवते=जनयन्ति। तत्त्वज्ञानेति। तत्त्वज्ञानमेव निदाघः=जडत्वनिवारकत्वसाधर्म्यात् ग्रीष्मकालः, तेन निपीतानि=निःशेषेण पीतानि, सकलानि=सर्वाणि, क्लेशरूपाणि सलिलानि यस्यां तथाभूतायाम्, ऊषरायाम्=फलजननासमर्थायाम्। संस्कारवशादिति। वर्तमानशरीरारम्भककर्मभोगारम्भकाले तत्कर्मजन्यः संस्कारोऽत्राभिप्रेतः। तिष्ठति=धृतशरीरो वर्तते। उत्पन्नतत्त्वज्ञान इति शेषः। "चक्रभ्रमिवत्" इति व्याचष्टे—यथेति। उपरते=निवृत्तेऽपि, चक्रम्="चाक" इति भाषाप्रसिद्धं

---

१ तान्येवोपरायां न जनयन्ति अंकुरानित्याह—तत्त्वज्ञानेति। २ तदिदमिति। तत् तस्मादित्यर्थः। ३ जलसेचनरूपसहकारिकारणाभावे क्षेत्रे उप्तं बीजं यथा स्वफलं न ददाति, तथा सहकारिभूताविद्यादीनामभावेन अनन्तसंचितधर्माधर्मावपि स्वफलं दातुं नार्हतः, ज्ञानेन संचितधर्माधर्मयोरपि नाशे तत्प्रयुक्तागामिजन्मादिनाशः सुतराम्। ४ तिष्ठतीत्यत्र विशेष्यमध्याहरति—उत्पन्नतत्त्वज्ञान इति। तत्र दृष्टान्तमाह—यथेति। शरीरस्थितौ संस्कारं दर्शयति—प्रारब्धेति। शरीरारम्भकावित्यर्थः। संस्कारनाशे प्रमाणमाह—तथाच श्रूयत इति।

निष्क्रियं भवति। शरीरस्थितौ च प्रारब्धकर्मपरिपाकौ धर्माधर्म-संस्कारौ भोगेन क्षेतव्यौ। तथा चानुश्रूयते—"भोगेन त्वितरे

कुम्भकारोपकरणम्, भ्रमत्=भ्रमिमत्। संस्कारे=वेगाख्यसंस्कारे,। निष्क्रियमिति। भ्रमिव्यापारशून्यमित्यर्थः, "चक्रम्" इत्यनुपज्यते। ननु "संस्कारवशाद् धृतशरीरस्तिष्ठति" इत्युक्तम्, तत्र शरीरधारणे कः संस्कारः? इत्यत आह—शरीरस्थिताविति। प्रारब्धेति। प्रारब्धः=उत्पादयितुमारब्धः अथ चापरिसमाप्तः, परिपाकः=एतच्छरीरफलभोगो याभ्यां तावित्यर्थः। संस्काराविति। धर्माधर्मयोरपि संस्काररूपत्वेनाङ्गीकारात्। तथाच तत्त्वज्ञानेन सर्व एव धर्माधर्मा विनाश्यन्ते, तस्मात् तत्फलभोगाय न जन्मान्तरमुपादातव्यम्। तथा चोक्तम्—"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन।" इति। परं तु यैर्धर्माधर्मैः शारीरसुखदुःखभोगः शरीरारम्भेण उत्पादयितुम् आरब्धः न पुनः परिसमाप्तः, तेषां न तत्त्वज्ञानेन प्रध्वंसः स्यात्। तद्ध्वंसाङ्गीकारेऽपि चक्रभ्रमिवत् क्षिप्तेषुवच्च तावत्कालं शरीरस्थितेरवश्याभ्युपेयत्वात्—तत्कथं निरर्थिका तद्विनाशकल्पना। एवं च इतरेषां धर्माधर्माणां कार्त्स्न्येन प्रक्षयात् तत्त्वज्ञानिनां नास्ति जन्मान्तरीयशरीरपरिग्रहसंभावना। एतच्छरीरारम्भकाणां धर्माधर्माणां तु विनाशाभावात् यावदायुरेतच्छरीरधारणं दुर्निवारमिति भावः। एतद्विषयमेव "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति वचनम्। तथाच "ज्ञानाग्निः सर्वकर्माणि" इत्यत्र सर्वकर्मशब्दः प्रारब्धकर्मेतरसंचितक्रियमाणकर्मपरः, "नाभुक्तं क्षीयते कर्म" इति कथनं च प्रारब्धकर्मविषयम्, इति नैतयोः परस्परं विरोध इति फलति ॥ ६७ ॥

अत्र वैदान्तिकसम्मतिमप्युपदर्शयति—तथा चेति। भोगेनेति[1]। ब्रह्मसूत्रमिदम्, न श्रुतिः, ततश्च "अनुश्रूयते" इत्यस्य श्रुतिमनु स्मर्यते" इत्यर्थः।

१ 'भोगेन'–इत्यादि ब्रह्मसूत्रम्, (४।१।१९) तस्य तावदेव–(छा० ६।१४।२) इत्यादिश्रुतिरिति विभागः। अत्रायं निष्कर्षः—अवान्तरभेदेन द्वेधा खलु अग्निहोत्रादिकम् आश्रमकर्मास्थीयते फलाभिसन्धिनाऽनुष्ठीयमानं, विना फलाभिसन्धिमनुष्ठीयमानं च। तत्र फलाभिसन्धिनाऽनुष्ठीयमानं स्वर्गादिफलायावकल्पते, तदन्तरेणानुष्ठीयमानं च चित्तशुद्धिद्वारा ज्ञानरूपाय कार्याय। तदिदमुभयविधमग्निहोत्रादिकमाश्रमकर्म वाजसनेयकानां फलभेदेन समाम्नातं दृश्यते—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ० ४।४।२२) इति ज्ञानफलम्, "अथ ये यज्ञेन दानेन तपसा लोकान् जयंति" (बृ० ६।२।१६) इति च स्वर्गादिफलम्। ततश्च शास्त्रविहितं तावदग्निहोत्रादिकमाश्रमकर्म फलाभिसन्धिवर्जितं यथाशास्त्रमनुष्ठीयमानं चित्तशुद्धिद्वारा ज्ञानमारभत इति निर्णयः। तदारभ्यमाणं च ज्ञानं यावदनारब्धकार्यं कर्म तावदशेषविशेषतो नाशयितुं शक्नुवदपि नात्मारम्भकं तत्कर्म नाशयितुं शक्नोति। विरोधाभावात्, तस्य तदानीमभावाच्च। न हि यन्न विरुध्यते न

यदि तु "कैश्चिन्मन्त्राणामेव वेदत्वं व्याख्यातम्, कैश्चित्कल्पसूत्राणामपि" इति आप स्तम्बपरिभाषायां "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इत्यस्य व्याख्यावसरे

---

वा तदानीं बोभूयते तत् तेन नाशयितुं शक्यते। सर्वोत्कृष्टफलं च ज्ञानं सर्वसम्मतम्। मोक्षैकफलत्वात् । मोक्षो हि सर्वस्मादुत्कृष्यते। यथोक्तं कापिलदर्शने—"उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः" (सां० १।५) इति। न च यस्येदृक्षं सर्वोत्कृष्टफलं ज्ञानं कार्यं तस्य कदाचित् कस्यचिदननुष्ठानं घटते । को नु नामानुन्मत्तस्तादृक्कार्यं कर्मानुष्ठातुं नोत्सहिष्यत इति दीर्घदृष्ट्या चिन्तयितव्यम्। सर्वो हि मोक्षं कामयमानो ज्ञानाय प्रतिपलं प्रयतते। ज्ञानं च शास्त्रविहिताग्निहोत्रादिकार्यम्। यत्रेदं श्रुतं भवति—"तमेतं वेदानुवचनेन"—इति प्रागुदाहृतम्। न च यस्य यत्कार्यं तस्याननुष्ठाने तत् कथंचिदवाप्तुं शक्यते। "कारणभावात् कार्यभावः" (वै० ४।१।३) इति नियमात् । तदनुष्ठाने च नास्ति शास्त्रस्य मात्रयाऽपि विहिताननुष्ठानलक्षणाप्रामाण्यचोद्यावसरः। तस्मादनारब्धकार्ये पूर्वे सुकृतदुष्कृते तत्रभवतो ब्रह्मज्ञानिनो ब्रह्मज्ञानमाहात्म्यादशेषविशेषतो नश्यत इति युक्तं निर्णीयते । ज्ञानकार्यस्याग्निहोत्रादेराश्रमकर्मणः सुकृते तस्मिन्नप्रवेशात् । उत्सर्गो हि सर्वदा सर्वत्रापवादविषयं परित्यज्य प्रवर्तेत इति शास्त्रस्थितिः। एतदुक्तं भवति—द्विविधं खलु पुण्यपापात्मकं कर्म मन्यते पूर्वमुत्तरं च। ज्ञानोत्पत्तेः प्राग्भवं पूर्वं तदुत्तरभवमुत्तरम्। तत्र पूर्वं पुनर्द्विविधम्—आरब्धकार्यम् अनारब्धकार्यं च। येनेदं ब्रह्मज्ञानायतनं शरीरमारभ्यते तद् आरब्धकार्यम्। येन च किमपि कार्यं नारभ्यते केवलं निधिवत् संचितमवतिष्ठते तद् अनारब्धकार्यम्। तत्र ब्रह्मज्ञानेन अनारब्धकार्यं सञ्चितमेव पुण्यपापात्मकं कर्म नाश्यते, नाऽऽरब्धकार्यं प्रारब्धं कर्म। उपजीव्यत्वात्। न हि यदुपजीव्य ब्रह्मज्ञानमजनि तत् कर्हिचिन्नाशयितुं पारयति। वह्नेरिव तस्य स्वोपजीव्यनाशकत्वाभ्युपगमे चावस्थानहेतोरभावात् तूर्णमिदं शरीरं निपतेत्। प्रारब्धं कर्म हि शरीरावस्थानहेतुरास्थीयते। तच्चेदुत्पन्नेन ब्रह्मज्ञानेन नश्येत्, तदा किमाश्रयं शरीरमिदमवतिष्ठेत। न हि निरधिष्ठानं किंचिदवस्थानाय कल्पते। संस्कारश्च क्रियादिकारणमभ्युपगम्यते न वस्तुस्थितिकारणमित्यदृष्टान्तस्तावत् कुलालचक्रभ्रमणवदिति युक्तमुत्पश्यामः । कथंचिद् वस्तुस्थितिहेतुताकल्पनायामपि तस्य न शरीरस्थितिहेतुसंस्कारसद्भावे प्रमाणं किंचिदीक्षामहे येन संचितकर्मवत् प्रारब्धकर्मनाशेऽपि तदवस्थानं कल्प्येत। न च निष्प्रमाणकं किंचित् कल्पयितुं शक्यते। "चक्रभ्रमणवद् धृतशरीरः" (सां० ४।८२) इत्यादौ च निवृत्तायां प्रकृतौ तत्रभवतो जीवन्मुक्तस्य स्थितौ दृष्टान्तः प्रदर्श्यते न प्रारब्धकर्मविनाश इत्यविरोधः। ये पुनराहुः पूर्वत्वाविशेषात् प्रारब्धकर्मणोऽपि तेन विनाश इति । तन्न युक्तं पश्यामः। सत्यपि पूर्वत्वे नाशानर्हत्वान्नाशानुपपत्तेः। "तस्य तावदेव चिरम्—" इति च श्रुतिः सत्यपि ब्रह्मज्ञाने ब्रह्मोपसम्पत्तिलक्षणे मोक्षे प्रारब्धकर्म विलम्बं श्रावयन्ती नूनमिदं संचितस्य कर्मणोऽवधिरेतत्पर्यन्तमेव संचितं कर्मावस्थातुमर्हति नोर्ध्वमिति विस्पष्टमवगमयति । प्रव्यक्तो हि श्रुतेरक्षरार्थः—"तस्य= सद्ब्रह्मसाक्षात्कारवतो जीवन्मुक्तस्य तावदेव=तावत्कालपर्यन्तमेव चिरं=विलम्बः सद्ब्रह्मोपसम्पत्तौ वर्तते यावत्=यावत्कालपर्यन्तं न विमोक्ष्ये=प्रारब्धकर्मणा न विमुच्यते, अथ=

हरदत्तेनोक्तरीत्या, "छन्दोवत्सूत्राणि भवन्ति" इत्युक्तेश्च सूत्राणामपि आरोपितं वेदत्वमस्त्येव, इति विभाव्यते तदा तु "अनुश्रूयते" इति यथाश्रुतमपि

---

भोगेन प्रारब्धकर्मविमोक्षानन्तरं संपत्स्ये=सद् ब्रह्मोपसम्पद्यते" इति । न चानेन प्रारब्धं कर्म भोगेन क्षीयते संचितं च ब्रह्मज्ञानेनेति न विस्पष्टमवगम्यते । न हि प्रव्यक्तेऽर्थेऽपि कदाचिन्मुह्यन्ति शास्त्रतत्त्वविदो विवेकिनः । "कर्माणि" (मु० २।२।८) "सर्वकर्माणि" (गी० ४।२०) इत्यादिकं श्रुतिस्मृतिवचनं तु प्रारब्धकर्मातिरिक्तसंचितकर्ममात्राभिप्रायं द्रष्टव्यम् । अनेकजन्मार्जितत्वेन बहुत्वोपपत्तेः । तस्माद् ब्रह्मज्ञानोत्पत्तेः प्रागनुष्ठिते पूर्वे अनारब्धकार्ये संचिते सुकृतदुष्कृते तत्रभवतो ब्रह्मज्ञानिनो ब्रह्मज्ञानसामर्थ्यादशेषविशेषतो नश्यत इति निर्णयः । तथाच ब्रह्मज्ञाने जाते तत्रभवतो ब्रह्मज्ञानिनो ज्ञानमाहात्म्यात् संचिते पुण्यपापे द्रागित्येव नश्यतः, क्रियमाणे च मात्रयाऽपि न तं भगवन्तं संश्लिष्यत इति सर्वं पुष्कलम् । यत्रेदमुक्तं वेदान्तदर्शने—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (वे० ४।१।१३) इति । तदेवम् उत्तरे पुण्यपापे खलु तत्रभवन्तं ब्रह्मज्ञानिनं ब्रह्मज्ञानसामर्थ्यान्न संश्लिष्यतः, पूर्वे चानारब्धकार्ये पुण्यपापे व्रीह्यादिवत् दग्धबीजत्वेन भोगाङ्कुरजननासमर्थतया तत एवाशेषविशेषतो नश्यतः । ताभ्यामितरे प्रारब्धकार्ये पुण्यपापे च भोगेन विना क्षपयितुमशक्यत्वात् तेनैव क्षपयित्वाऽन्ते ब्रह्मोपसम्पद्यते सरिदिव सरित्पतिं तत्रभवान् ब्रह्मवित् । "तस्य तावदेव चिरम्" (छा० ६।१४।२) "ब्रह्मैव सन् ब्रह्माप्येति" (छा० ४।४।६) इत्यादि श्रुतिभ्य इति ॥ इति वेदान्तैकदेशिनः ॥ ❀ ॥

सांख्या योगाश्च पुनरेवं वदन्ति—"सति मूले तद्विपाको जात्यायुर्भोगाः" (यो० २।१३) इति हि योगसूत्रम् । अस्य चायमर्थः—अविद्यादिमूले सत्येव तद्विपाकः=तस्य=कर्माशयस्य संचितस्य क्रियमाणस्य वा विपाकः=फलं भवति । स च विपाकस्त्रिविधः—जातिः=जन्म देवत्वादिर्वा, आयुः=चिरकालं देहप्राणयोर्योगः, भोगः=विषयेन्द्रियसंयोगजन्यः सुखदुःखानुभव इति । अयं भावः—कर्माशयोपभोगार्थं जात्यायुषी भोगश्च सुखदुःखयोरनुभवः । स च रागद्वेषानुविद्धः । रागद्वेषवतोरेव तद्दर्शनात्, न च विदुषो रागद्वेषौ स्तः । तद्धेतुभूताया अविद्यायास्तत्त्वज्ञानेन नाशात् । तस्मात्—क्लेशानामपि फलोपजनने कर्माशयसहकारित्वात् क्लेशादिसलिलावसिक्तायामेवात्मभूमौ विपाकाङ्कुरो, न क्षीणक्लेशोषरात्मभूमौ । न हि कारणमात्रात् फलं, किं तु सामग्रीतः । ननु क्लेशानां कर्मसहकारित्वे प्रमाणं नास्ति, "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इत्यादिवाक्येभ्यः, "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इत्यादि सूत्रेभ्यः, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुतिभ्यश्च ज्ञानस्य क्लेशक्षयहेतुत्ववत् कर्मक्षयहेतुत्वावगमात् । अतः क्लेशाभावकाले कर्माभावस्यावश्यकत्वात् तत एव विपाकाभावः स्यादिति कथमुक्ता व्यवस्थेति चेत् । अत्रोच्यते—"विविधयोनिहेतुषु कर्मसु यत्र रागादेरन्तकाले उद्बोधो भवति मरणानन्तरं तामेव योनिं जीवः प्राप्नोति, नेतराम्" इत्यन्वयव्यतिरेकाभ्यां कर्मवत् रागादिदोषोऽपि विपाकहेतुः । "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥" इत्यादिस्मृतेः । तदेव

समीचीनमेवेति बोध्यम्। इतरे=आरब्धकार्ये पुण्यपापे, न ज्ञानमात्रेण किं तु भोगेन क्षपयित्वा=नाशयित्वा, कैवल्यभाजनं सम्पद्यते "ज्ञानी" इति शेषः

---

सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" इति श्रुतेश्च । नरकादिष्वपि रागाद्यनुसारेणैव विपाको भवति, निषिद्धस्त्र्यादिसमासक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणात्। अतः क्लेशोऽपि विपाकारम्भे स्वातन्त्र्येण हेतुः। ज्ञानोत्तरं चारुविपाकः समाप्यत एव, न त्वारभ्यते इति न तत्र क्लेशापेक्षा। तस्माज् ज्ञानस्य क्लेशाख्यसहकार्युच्छेद एवाग्रहो, न कर्मनाशे। प्रारब्धकर्मणोऽपि नाशप्रसङ्गात्। न च प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यतेति वाच्यम्। "ज्ञानाग्निः सर्वकर्माणि" इत्यत्र सर्वपदसंकोचप्रसङ्गात्। अतो ज्ञानेन विपाकारम्भहेतुतया क्लेशाख्यहेतूच्छेदद्वारा कर्माशयस्य दाह एव क्रियते। स च क्रियमाणस्यानुत्पादः प्राचीनस्य बीजशक्तिनाशश्च । अत एव—"ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः" इति गीतादौ ज्ञानेन कर्मणो दाहः श्रूयते, न नाशः। किं तु वासनाया इव चित्तनाशादेव नाशः। धर्मिनाशस्य धर्मनाशहेतुतायाः क्लृप्तत्वात्। अत एव तत्त्वविदः संचितक्रियमाणयोर्धर्माधर्मयोः "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति प्रतिपादितमन्येन ग्रहणं संगच्छते । नाशे ग्रहणासंभवात् । तस्मान्निरुक्तश्रुतिसूत्राणामप्येतदर्थानुसारेणार्थो व्याख्येयः। इत्थं च—सत्कार्यवादपक्षे स्वरूपतस्तेषां नाशाभावेन सत्त्वेऽपि बीजभावस्य ज्ञानेन नष्टत्वाददग्धबीजभावानां शालितण्डुलानामिव दृष्टभोगानुकूलत्वमात्रमिति ज्ञानिनां कर्माशयो नास्त्येवादृष्टजन्मभोग्यः, किं तु दृष्टभोगनाश्य एवेति दिक्॥ ॐ॥

ननु यदि सत्कर्मपरिपाकेन प्राप्तचरमदेहस्य ज्ञाने सत्यपि दृष्टविपाकस्तर्हि अन्येभ्योऽतिविशेषो न स्यात्। "विधिनिषेधशास्त्रेऽधिकृतो विहितानि निषिद्धानि वा यावन्ति कर्माणि संचिनोति तावद्भिरेक एक आरभ्यते" इत्येकभविकपक्षे ज्ञानिनामपि नियतादृष्टजन्मभोगस्यैवाऽङ्गीकारात्। युक्तश्चायं पक्षः। तथाहि—नैकं कर्म एकस्य जन्मनः कारणम्। "अनादिकालसंचितानां क्रियमाणानां च मध्ये किं कर्म प्रथमं फलं दास्यति किं पश्चात्" इति फलक्रमे नियमाभावाल्लोकानां पुण्यानुष्ठाने फलानिश्चयप्रसक्त्या प्रवृत्तिलोपापत्तेः। न च यदा कदाचित् फलसंभवेनैव प्रवृत्तिर्भविष्यति। फलसाधनताज्ञानमात्रस्य प्रवृत्तिकारणत्वादिति वाच्यम्। भाव्यनन्तकालमध्ये भाविपापादिना अनुष्ठीयमानकर्मणो विनाशसंभवाज् झटिति भोगकामनयैव कर्मानुष्ठानात्। नाप्येकं कर्म अनेकजन्मनां कारणम्। अनेकेषु जन्मसु कृतं क्रियमाणं च कर्मैकैकं प्रत्येकमेव अनेकस्यासंख्यजन्मनः कारणमिति तद्विरुद्धफलदस्य कर्मणः फलकालाभावप्रसक्त्या तत्र प्रवृत्तिलोपापत्तेः । नाप्यनेकानि कर्माणि मिलित्वा अनेकजन्मनां कारणानि। बहूनां जन्मनां युगपदसंभवेन क्रमिकोत्पत्तेरवश्यवाच्यतया प्रथमं किं पश्चात् किमिति क्रमे नियमाभावात् पुण्यानुष्ठाने फलानिश्चयप्रसक्त्या प्रवृत्तिलोपप्रसङ्गदोषतादवस्थ्यात्, शीघ्रफलकामनयैव कर्मानुष्ठानस्योक्तत्वात्। तस्मात् "एकं कर्म एकं जन्म करोति, "एकम् अनेकानि जन्मानि करोति", "अनेकानि अनेकजन्मानि कुर्वन्ति", इति पक्षत्रयस्याऽसंभवात् "जन्मारभ्य मरणपर्यन्तं विहितप्रतिषिद्धैर्यो धर्माधर्मसमूहो गुणप्रधानभावापन्न उत्पादितः स मरणकाल आरब्ध-

इति ब्रह्मसूत्रार्थः। "अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः, इतरे तु=आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते" इति तद्-व्याख्यायां श्रीशङ्कराचार्याः।

---

कर्मभोगसमाप्त्या लब्धावसरः सन् स्वफलदानार्थं मरणं प्रसाध्य प्रवृद्धवेगमेकमेव जन्म फलयोग्यं करोति, नानेकम्"। इत्येकभविकपक्ष एव युक्तः। न चैवं विधिनिषेधानधिकृतदेवतिर्यगादिशरीरलाभे प्रायेणोत्तरमपुनर्भवप्रसङ्गः। अनधिकारेणापूर्वस्यानर्जनात्। प्राचीनसर्वकर्मणां च तस्मिन्नेव शरीरे समापनादिति चेत्। न। नरकस्वर्गादिजन्म-कर्मणामेव ब्राह्मणस्थावरादियोनिलाभपर्यन्तश्रवणाच्छ्रवणानुक्तकालविशेषस्यैकभविकत्वनियमात्, शान्तिपर्वण्यापद्धर्मे—"एवं खलु कपोतश्च कपोती च पतिव्रता। लुब्धकेन हता स्वर्गं गता तेनैव कर्मणा॥" इत्यादिना तिर्यञ्चामपि पुण्यश्रवणात्। परस्त्रीगमनादि-पापश्रवणाच्च। अन्यत्रेन्द्रादेरपि ब्रह्महत्यादिश्रवणाच्च, शरीरान्तरोपभोग्यदृष्टोत्पत्त्यङ्गी-काराद् वा दोषाभावात्। अखिलप्राणिकृतादग्धाप्रतिबद्धाखिलकर्मणामेवैकभविकत्वाङ्गी-कारात्। अतः प्रायश्चित्ततत्त्वज्ञानादिना दग्धस्य शीघ्रभोगदायिनाऽवरुद्धस्य चैकभवि-कत्वाभावेऽपि न हानिः। न वा ज्ञानिनामन्यसाम्यम् तेषामेवापुनर्भवाङ्गीकारादिति संक्षेपः॥ ॐ॥

कर्मभिः शरीरान्तरोत्पत्तिश्च सत्त्वाद्यनुसारिणी। "येन येन हि भावेन यद्यत् कर्म करोत्ययम्। तेन तेन शरीरेण तत्तत्फलमुपाश्नुते॥" इति मन्वादिस्मृतेः। सत्त्वान्व-यश्चाप्तुं प्रयत्नाधीनः शास्त्रीयेष्टसाधनताज्ञानादिना सत्त्वसंपत्तमोनिवृत्त्योः संभवात्। सत्त्वाद्याविर्भावेन च शक्यते कालान्तरोपभोग्यं तच्छेषभूतं शरीरान्तरमपि प्रत्याक्रष्टुम्। पुरुषकारप्रधानस्य देशकालविशेषसमवधानस्यापि संभवात्। नन्वयुक्तकालान्तरोपभोग्यस्य कालान्तरेऽभिव्यक्तिरिति चेत्। न, चिराचिररूपकालस्याभिव्यञ्जकसामग्र्या प्रवेशात्, "चित्रया यजेत पशुकामः" इत्यादौ पशुकामस्य कृतायामपि साङ्गायां पशूनां सद्योऽनु-पलम्भाद् बाधिता श्रुतिरिति बाधेन प्रत्युपस्थिते पशुकामस्य चित्राभ्युपाय इत्येतन्मात्रे तात्पर्यं, न तु चिराचिररूपकालेऽपि। तेन यस्य चित्रा संपन्ना तस्याऽसति प्रतिबन्धके पशुभिरवश्यं भवितव्यम्। प्रतिबन्धके सति तु कालान्तर इति शास्त्रकृद्भिर्व्यवस्थापि-तत्वात्। किं तु भोक्त्रतिशयाधायी वयोविशेषरूपः भोक्तृभोग्योभयाऽतिशायी शीतोष्ण-वर्षारूपऋतुविशेषरूपो जायते इति विशेषः। यथाह हारीतः—"यस्मिन् यस्मिन् वयसि यः करोति शुभानि तस्मिन् तस्मिन् वयसि शारीरवाचिकमानसान्याप्नोति" इति। तस्मादेकभविकपक्षे भगवद्भजनादिना यद्यपि शक्यते शरीरपातोत्तरं झटिति नारदादिव-च्छरीरं प्रत्याक्रष्टुं, तथापि तस्य कर्माशयहेतुकत्वेन कैवल्यापेक्षया बन्धत्वमेवेत्यनुपादेय-कल्पत्वमेव मुमुक्षोरिति सूत्रद्वय (क्लेशमूलः—सति मूले—) तात्पर्यार्थः। यदि तु परमे-श्वरेच्छयैव सर्वं, तदा तु सुतरामैकभविकः कर्माशयः। परं तु दृष्टजन्मवेदनीय एव। "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इत्यादिस्मृतेः। अणिमाण्डव्यादीनां शैशवे कृत-कर्मणामिहैव दुःखफलश्रवणाच्च। ज्योतिष्टोमादिकं च विधिसिद्ध्यर्थमात्रमनुष्ठेयम्। ईश-सृष्टजीवानां मरणानन्तरमीश एव लयाङ्गीकारेण भवान्तराभावात्। तस्मादस्मिन् पक्षे

क्षपयित्वाऽथ संपद्यते" इति, "तस्य तावदेव चिरं यावन्न विमो-

तावदेवेति । छान्दोग्यश्रुतिरियम् । तस्य=जीवन्मुक्तस्य, तावदेव=तावत्कालपर्यन्तमेव, चिरम्=द्वैतध्वस्त्युपलक्षिता द्वैतात्मरूपकैवल्याय विलम्ब इत्यर्थः । यावन्न विमोक्ष्ये=यावत्कालपर्यन्तं प्रारब्धफलं निःशेषमुपभुज्य दृश्यं न त्यजति । अथ=प्रारब्धफलनिरवशेषोपभोगाव्यवहितलोकदृष्टिकल्पितोत्तरक्षण एवेति यावत् । संपत्स्ये=संपत्स्यति निरुक्तकैवल्यं प्राप्तमेव द्वैताप्रतीत्या प्राप्नोतीवेत्यर्थः । तदुक्तं तैत्तिरीयवार्तिके—

"सत्यादिलक्ष्याज्ज्ञानोत्था सत्याद्यर्थनिषेधधीः । वर्त्मनैवाऽऽप्तमाप्नोति केवलाज्ञानहानतः ॥ एवं ज्ञातं विजानाति विमुक्तश्च विमुच्यते । निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम् ।" इति । इति तद् व्याख्यायां वेदान्तिनः । प्रकृते तु—

एक एव भवः कार्यतयाऽस्मिन्नस्तीति नार्थः । किं तु—एकस्मिन्नेव शरीरे फलस्य भवः=सद्भावोऽस्तीत्यैकभविकशब्दार्थः । अस्मिंश्च पक्षे कर्मतत्त्वज्ञानादिसाधनानामीशप्रसादकोपौ प्रत्येव कारणता, न फलं प्रति । "फलमत उपपत्तेः" इति सूत्रयता व्यासेन तथा ज्ञापनात् । अतो न कस्याप्यप्रामाण्यमिति संक्षेपः[1] ॥ इति योगचन्द्रिकायां नारायणतीर्थस्वामिनः ॥ ७ ॥

१ अत्रायं वेदान्तसिद्धान्तः—यथान्धकारादौ विकाररहिते रज्ज्वादौ सर्पाद्यारोपणं कृत्वा भयकम्पादिकं वहेत्, एवमात्मापि स्वस्मिन् जीवत्वमारोप्य सद्वितीयं परिच्छिन्नं ज्ञात्वा दुःखसागरे मग्नो भवति, यदा शास्त्राचार्यप्रसादेन वाक्यार्थज्ञानमुत्पन्नं भवति, तदा विवेकचक्षुषा स्वात्मानमखंडानन्दज्ञानैकरूपं संपश्यन् यथा च जलस्थसूर्यांशो जलस्य निमित्तस्यापाये सूर्यमेव गत्वा तेनैव रूपेण पुनर्नागच्छति, यथा च बाह्यघटाद्युपाधिपरिच्छिन्नो घटाकाशो मुख्याकाशांशः सन् घटादेर्निमित्तस्यापाये मुख्याकाशं प्राप्य पुनर्न निवर्तते, ततो नाहं जीवः परमात्माहमिति ज्ञात्वा भयदुःखादिरहितः सन् सुखी भवेत् ।

1 अत्रायं परः सारः—इह जन्मनि पूर्वजन्मनि वा कृतानि समस्तानि कर्माणि संस्काररूपेण मनुष्यान्तःकरणे एकत्रितानि सन्ति तिष्ठन्ति, तानीमानि संचितकर्माणीत्युच्यन्ते । तेषां मध्यात् यानि वर्तमानजन्मनि फलदानाय प्रस्तुतानि भवन्ति तानि कर्माणि प्रारब्धकर्माणीत्याख्यायन्ते । यानि च वर्तमानसमयेऽनुष्ठीयन्ते तानीमानि क्रियमाणकर्माणीत्यभिधीयन्ते । प्रादुर्भूते तत्त्वज्ञानरूपेऽग्नौ तत्कालमेव समस्तानां पूर्वसंचितसंस्काराणामभावो जायते । मनोबुद्धिःशरीरैः आत्मनोऽसङ्गत्वज्ञानात्, तैः (मनोबुद्धिशरीरैः) सह प्रारब्धभोगानां संबन्धे सत्यपि ज्ञानिना सह नैव तेषां संबन्धस्तिष्ठतीति तान्यपि तदर्थं नष्टान्येव भवन्ति । क्रियमाणकर्मसु च कर्तृत्वाभिमान—ममताऽऽसक्ति—वासनानामभावेन नैव तेषां संस्काराः संपद्यन्ते इति तानि कर्माणि वस्तुतः कर्माण्येव न भवन्ति । अतः सर्वेषामेव कर्मणां ज्ञानाग्निना विनाश इत्येवात्र सारमिति विभावयन्तु सुधियः ॥

क्ष्येऽथ संपत्स्ये" इति च। प्रक्षीयमाणाविद्याविशेषश्च=संस्कारस्तद्वशात्=तत्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६७ ॥

स्यादेतद्—यदि संस्कारविशेषाद्धृतशरीरः, तथापि कदास्य मोक्षो भविष्यति? इत्यत आह—

**प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

---

तस्य=तत्त्वज्ञानवतः पुरुषस्य, तावदेव चिरम्=तावानेव विमुक्तौ विलम्बः स्यात्, यावत् न विमोक्ष्ये=कर्मारब्धदेहेन यावदसौ न विमोक्ष्यते, अथ=देहविमोक्षानन्तरम्, सम्पत्स्ये=सम्पत्स्यते विदेहकैवल्यं प्राप्नोति, इत्यर्थः। "विमोक्ष्ये" इति सम्पत्स्ये" इति च च्छान्दसत्वात् पुरुषव्यत्ययः। इति च्छान्दोग्यश्रुत्यर्थः। तस्य=आचार्यवतः पण्डितस्य मेधाविनोऽविद्याबन्धनविनिर्मुक्तस्य, तावदेव=तावानेव कालः, चिरम्=विलम्बः, "सत्संपत्तेः" इति शेषः। किं यावत्? यावत्कालपर्यन्तं न विमोक्ष्ये=पुरुषव्यत्ययेन न विमोक्ष्यते—प्रारब्धकर्मणो भोगाद् विनाशेन यावद् देहपातो न भवतीति यावत्, अथ=तदा देहपातसमकालमेव, संपत्स्ये=संपत्स्यते—विदेहमुक्तो भवतीत्यर्थः।" इति तद्व्याख्यायां नित्यानन्दाश्रमाः ॥

प्रक्षीयमाणेति। प्रक्षीयमाणः=तत्त्वज्ञानेन विनाश्यमानः, अविद्याविशेषः=आत्मीयत्वभ्रमो यत्र संस्कारे स इत्यर्थः। संस्कारः=प्रारब्धपरिपाकधर्माधर्मलक्षणः। तथाच प्रारब्धपरिपाकधर्माधर्मलक्षणसंस्कारविषये पुरुषस्य आत्मीयत्वभ्रमापगमात् शारीरसुखदुःखविषयेऽपि नात्मीयत्वग्रह इति भावः ॥ ६७ ॥

## अथ परममुक्तेः प्रतिपादनम्।

"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति छान्दोग्यश्रुतिः प्रतिजानीते। स श्रुत्या प्रतिज्ञातो मोक्षः कदा भवति? इत्याकाङ्क्षायां कारिकामाह—प्राप्त इति॥ शरीरभेदे=आरब्धभोगेन कर्मणोत्पादितस्य शरीरस्य भेदे=नाशे, प्राप्ते=जाते, चरितार्थत्वात्=बुद्धितत्त्वादिद्वारा कृतभोगापवर्गलक्षणप्रयोजनकत्वात् प्रधानविनिवृत्तौ, पुरुषः ऐकान्तिकम् आत्यन्तिकम् इत्युभयम् कैवल्यम् आप्नोति इत्यन्वयः। ज्ञानाग्निना अनारब्धानां सर्वेषां कर्मणां दग्धत्वाद् उपभोगेन च आरब्धकर्मणां क्षयाद् अपवर्गसिद्धौ भविष्यद्भोगस्य असंभवाद् भोगापवर्गमात्रफलायाः तत्फलद्वये प्रसूतेऽनवशिष्टप्रयोजनान्तरायाः प्रकृतेर्विनिवृत्तौ परमपुरुषार्थं पुरुषः प्राप्नोति इति निष्कर्षः॥ ननु सार्वदिकभोगासंभवेन तच्छिद्रेषु कर्मकरणसंभवे तेषां क्रियमाणानामेवाऽऽरब्धविपाकत्वेनोपभोगेन क्षयावश्यकत्वे पुनः पुनस्तच्छिद्रेषु कर्मकरणावश्यकत्वान्न मोक्षः संभ-

अनारब्धविपाकानां तावत्कर्माशयानां तत्त्वज्ञानाग्निना वीजभावो दग्धः, प्रारब्धविपाकानां तूपभोगेन क्षये सति "प्राप्ते" शरीरस्य "भेदे"=विनाशे "चरितार्थत्वात्"=कृतप्रयोजनत्वात्प्रधानस्य तं पुरुषं प्रति निवृत्तौ "ऐकान्तिकम्"=अवश्यम्भावि, "आत्यन्तिकम्"-अविनाशीति-"उभयं कैवल्यं"=दुःखत्रयविगमं प्राप्नोति पुरुषः ॥ ६८ ॥

---

वतीति चेत्। न, क्रियमाणानामश्लेषात्। तत्र च "यथा पुष्करपलाशम् आपो न श्लिष्यन्ते एवम् एवंविदि पापं कर्म न श्लिष्यते (छा०) तद्यथेपीकातूलमग्नौ प्रोतं प्रदूयतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छा०) तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (ब्र० सू० ४-१-१३) इत्यादि प्रमाणम् ॥ ❀ ॥ ६८ ॥

अनारब्धेति। अनारब्धो विपाकः=फलभोगो येषाम्, संचितक्रियमाणानामित्यर्थः, । कर्माशयानाम्=धर्माधर्माणाम्, तत्त्वज्ञानरूपेण अग्निना, वीजभावः=फलोत्पादनसामर्थ्यम्। दग्ध इति। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन!" इति स्मृतेरिति भावः । एतेन अन्येषां धर्माधर्माणामिव एतच्छरीरारम्भकाणामपि धर्माधर्माणां जन्मान्तरीयशरीरारम्भसामर्थ्यस्य दग्धत्वं दर्शितम्। तेन ज्ञानिनः सप्तजन्मकालीनदारिद्र्यफलकाधर्मस्यापि न जन्मान्तरे शरीरारम्भकत्वम्, तत्तच्छरीराणाम् आरप्स्यमानत्वेन आरब्धत्वाभावात्। प्रारब्धेति। प्रारब्धः=उत्पादयितुमारब्धः अथ च अपरिसमाप्तः, विपाकः=एतच्छरीरफलभोगो यैस्तेषाम्, येषां भोगो वर्तमानोऽस्ति, येषां फलस्वरूपमिदं वर्तमानं शरीरमस्तीति यावत् तेषामित्यर्थः । "कर्माशयानाम्" इत्यनुषङ्गः । उपभोगेन=आरब्धफलभोगस्य शरीरस्य भोगसमाप्त्या, क्षये=आरब्धफलानां कर्माशयानां क्षीयमाणत्वे। अविनाशीति। न स्वर्गादिवत् नश्वरमित्यर्थः । उभयम्=ऐकान्तिकत्वात्यन्तिकत्वेति उभयधर्मावच्छिन्नम्। कैवल्यपदं व्याचष्टे—

---

१ यथा कमलपत्रं जलं न स्पृशति, तथा तत्वज्ञानिनं पापं न स्पृशति। तद्यथेति। पापं अग्नौ प्रक्षिप्तम् ईषिकातूलं (सरकण्डेके ऊपरकी रुई) यथा भस्मसाद् भवति तथा तत्त्वज्ञानिनः सर्वाणि कर्माणि ज्ञानाग्नौ भस्मसाद् भवन्ति। उत्तरेति । तस्य आत्मनो ज्ञाने सति आगामिनां कर्मणां स्पर्शो न भवति पूर्वेषां संचितानां च कर्मणां विनाशो भवति, अघ इति पापनाम, इत्यर्थः । एवं लिङ्गशरीरावच्छिन्नः परमात्मनोंऽशः मायिकलिङ्गशरीरापाये परमात्मानं प्राप्य न निवर्तते किन्तु तत्त्वज्ञानान्मोक्षो भवतीति । यथोक्तं श्रीमद्भागवते—घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा। एवं देहे मृते जीवो ब्रह्मसंपद्यते पुनः ॥ इति ।

दुःखेति । उत्पन्नात्मसाक्षात्कारवान् पुरुषः प्रक्षीणाशेषकल्मषो भोगेन प्रारब्ध-क्षये सति अवश्यम् आत्यन्तिकदुःखविनाशं प्राप्नोतीति समुदायार्थः ॥ ६८ ॥

अत्रेयं परमार्थदिक्—

"न निरोधो नोत्पत्तिर्न च बद्धो नैव साधकः कश्चित् ।
न मुमुक्षुर्न च मुक्तः स्वयमिति परमार्थता भवेदेषा ॥ १ ॥
न प्रतिबिम्बो नावच्छेदो नाभास एव वा जीवः ।
व्याप्तत्वादेकत्वात् सच्चित्सुखरूपभावतश्चापि ॥ २ ॥
बिंबादुपगम्यावच्छेदमवच्छेदतस्तथाऽऽभासम् ।
विनिवृत्य ततोऽप्यन्त्ये न त्वं नाहं न चेदमित्येव ॥ ३ ॥
नारम्भो नो वा परिणामो न विवर्त एव जगदेतत् ।
निरवयवत्वादविकृतभावादप्युत विकल्पराहित्यात् ॥ ४ ॥
आरंभात् परिणामं परिणामादपि विवर्तमुपगम्य ।
विनिवृत्य ततोऽप्यन्त्ये न त्वं नाहं न चेदमित्येव ॥ ५ ॥
यत्त्वन्यथाऽन्यथा प्रतिपाद्यत आहत्य तत्तदाचार्यैः ।
तत्केवलं करुणया तत्तच्छिष्याधिकारमनुसृत्य ॥ ६ ॥
भूतं न जायते कश्चिदभूतमपि नैव जायते किंचित् ।
द्वैतिन एवं लोके विवदन्तः ख्यापयन्त्यजातिं ते ॥ ७ ॥
इच्छन्ति वादिनो भुवि जातिं केवलमजातभावस्य ।
अमृतो ह्यजातभावः कथमेष्यति मर्त्यतामसन्देहम् ॥ ८ ॥
आदावन्तेऽपि च यन्नास्ति तथैवापि वर्तमाने तत् ।
वितथैः सदृशाः सन्तो वितथा इव लक्षिताः स्वयं भावाः ॥ ९ ॥
स्वप्ने विप्रतिपद्यत एतेषां सप्रयोजनत्वमपि ।
तस्मान्मिथ्यैव खलु स्मृतास्त आद्यन्तवत्त्वतः साक्षात् ॥ १० ॥
सर्वे धर्माः स्वप्ने कायस्यान्तर्निदर्शनान्मिथ्या ।
इह संवृते प्रदेशे भूतानां दर्शनं कुतः सहसा ॥ ११ ॥
स्वप्नमयो जीवोऽयं स्वयं यथा जायतेऽप्यथो म्रियते ।
जीवास्तथा भवन्ति न भवन्त्यमी केवलं स्वतः सर्वे ॥ १२ ॥
अपि युज्यतेऽत्र मायाद्वारा न तु तत्त्वतः सतो जन्म ।
जातं हि तस्य जायत इह तत्त्वत एव जायते यस्य ॥ १३ ॥
असतो मायाद्वारा न युज्यते तत्त्वतः कश्चिज्जन्म ।
तत्त्वेन मायया वा वन्ध्यापुत्रो न जायते क्वापि ॥ १४ ॥
नोत्पद्यतेऽत्र कश्चिज्जीवो न च विद्यतेऽस्य संभूतिः ।
लोके यत्र न किंचिज्जायत एतदुत्तमं सत्यम् ॥ १५ ॥
क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः साक्षात् ।
सर्वे धर्मास्तद्वन्नैवं बुद्धेन भाषितं ज्ञानम् ॥ १६ ॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्वकत्वमाह—

**पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।**
**स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥**

"गुह्यं"=गुहानिवासि, स्थूलधियां दुर्बोधमिति यावत् । "परमर्षिणा"=कपिलेन । तामेव श्रद्धामागमिकत्वेन द्रढयति—"स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानां" "यत्र"=ज्ञाने=यदर्थं—यथा—"चर्मणि द्वीपिनं हन्ति" इति । "भूतानां"=प्राणिनां "स्थित्युत्पत्तिप्रलयाः" आगमैः "चिन्त्यन्ते" ॥ ६९ ॥

---

## अथ प्रकृतशास्त्रस्य परमर्षिपूर्वकत्वनिरूपणम् ।

ईश्वरकृष्णो न महर्षिः किं तु प्राकृतो विद्वानिति तदुक्तौ न्यायपरिपुष्टायामपि तर्काप्रतिष्ठानादबहुमानः स्याद् ऋषिवाक्ये श्रद्धावताम्, इत्यस्य शास्त्रस्य परमर्षिपूर्वकत्वमाह—पुरुषार्थज्ञानमिति ॥ इदं गुह्यम्=स्थूलबुद्धीनां दुर्ज्ञेयम्, पुरुषार्थज्ञानम्=पुरुषस्य अर्थः=प्रयोजनं मोक्षाख्यं यस्मात् तादृशं ज्ञानम्, साङ्ख्यशास्त्रमिति यावत्, परमर्षिणा=श्रीकपिलेन, समाख्यातम्=कथितम्, यत्र=ज्ञाने, "यत्र" इति निमित्तसप्तमी, यज्ज्ञाननिमित्तमित्यर्थः, भूतानाम्=प्राणिनाम्, स्थित्युत्पत्तिप्रलयाः=अवस्थानाविर्भावतिरोभावाः, चिन्त्यन्ते=विचार्यन्ते, इत्यन्वयः ॥ ६८ ॥ ❀ ॥

**गुहानिवासीति** । बुद्धिरूपगुहानिवासीत्यर्थः । "धर्मस्य तत्त्वं निहितं गुहायाम्" इतिवत्, इति भावः । ताम्="पुरुषार्थज्ञानमिदं गुह्यम्" इत्यनेन दर्शिताम्, श्रद्धाम्=एतच्छास्त्रे दृढप्रत्ययम्, आगमिकत्वेन=तज्ज्ञानस्य नानाशास्त्रादृतत्वेन । **यदर्थमिति** । यज्ज्ञाननिमित्तमित्यर्थः । ननु कुतोऽस्यार्थस्य लब्धिः ? इत्यत आह—यथेति । तथाच कारिकायां "यत्र" इति निमित्तसप्तमीति भावः । आगमैः=श्रुतिस्मृतीतिहासपुराणैः ॥ ६९ ॥

---

एवमिदं जीवजगद्याथात्म्यं केवलं स्वधीवृद्ध्यै ।
उक्तं यथामति न तु ख्यात्याद्यर्थं मयूरतनुजनुषा ॥ १७ ॥

इति शास्त्ररहस्यार्याशतके आत्मारामशर्मणः । विस्तरस्तु तत्रैवानुसन्धेयः, दिङ्मात्रं त्विह प्रदर्शितं वास्तविकशास्त्ररहस्यज्ञानायेति दिक् ॥

१ परमर्षिपूर्वकत्वकथनेन विप्रलिप्सादिदोषनिरसनद्वारा श्रद्धोत्पत्तिः संभवतीति सूचितम् । श्रद्धा अज्ञानाङ्गत्वे "श्रद्धावित्तोभूत्वाऽऽत्मन्येवात्मानं पश्येत्" श्रद्धावान् लभते ज्ञानम्" इत्यादिश्रुतिस्मृतयः प्रमाणम् । कपिलस्य परमर्षित्वे तु "ऋषिं प्रसूतं कपिलम् यस्तमग्रे ज्ञानैर्बिभर्ति" इत्यादिवाक्यम् । २ अत एव "ज्ञानं च लोके यदिहास्ति किंचित् सांख्यगतं तच्च महन्महात्मन्" इत्युक्तं महाभारते शान्तिपर्वणि व्यासदेवैः ।

स्यादेतद्—यत्परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि, यत्पुनरीश्वरकृष्णेन कथितं तत्र कुतः श्रद्धा ? इत्यत आह—

**एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।**
**आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम् ॥ ७० ॥**

"एतत्पवित्रं"=पावनं=दुःखत्रयहेतोः पाप्मनः पुनातीति, "अग्र्यं"=सर्वेभ्यः पवित्रेभ्यो मुख्यम्, "मुनिः"=कपिलः "आसुरयेऽनुकम्पया प्रददौ, आसुरिरपि पञ्चशिखाय, तेन च बहुधा कृतं तन्त्रम्" ॥ ७० ॥

**शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।**
**संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥**

---

एतत्पवित्रमिति ॥ पवित्रम्=पावनम्, सर्वपापनाशकत्वात्, अग्र्यम्=सर्वेभ्यः पवित्रेभ्यो मुख्यम्, एतत्=साङ्ख्यशास्त्रम्, मुनिः=श्रीकपिलः, आसुरये=तदाख्याय स्वशिष्याय, अनुकम्पया=दयया, प्रददौ="अष्टौ कथयामि, अष्टौ प्रकृतयः, षोडश विकाराः" इत्यादि "एतत्सम्यग् ज्ञात्वा कृतकृत्यः स्यात्, न पुनस्त्रिविधदुःखेनाभिभूयते" इत्यन्तग्रन्थेन कथितवान् इत्यर्थः । आसुरिरपि पञ्चशिखाय=तदाख्यस्वशिष्याय, प्रददौ=व्याख्यातवान्, तेन=पञ्चशिखेन, तन्त्रम्=साङ्ख्यशास्त्रम्, बहुधा कृतम्=विस्तृतं कृतम् शिष्योपदेशद्वारा प्रकाशितमित्यर्थः ॥ ७० ॥ ❀ ॥

एतदिति । साङ्ख्यशास्त्रम्, न पुनः कारिकासदृशानुपूर्वीकमेव । पावनम्=पवित्रतासम्पादकम्, कुतः ? इत्यत आह— दुःखत्रयेति । पाप्मनः=पापात्, इति=अतो हेतोः पावनमित्यर्थः । प्रददौ="कथयामि, अष्टौ प्रकृतयः" इत्यादि ग्रन्थेन कथितवान् । पञ्चशिखायेति । "प्रददौ" इत्यनुषङ्गः । तेन च=पञ्चशिखेन । बहुधा कृतमिति । एतेन कपिलादिकृतस्य तन्त्रस्य स्वल्पाक्षरत्वमासीदिति दर्शितम् । सम्प्रति प्रचलितानां साङ्ख्यसूत्राणां तु न कपिलप्रणीतत्वम्, "अविवेकनिमित्तो वा पञ्चशिखः" ( सां० सू० ६।६८ ) इत्यादौ कपिलादर्वाचीनानां प्राकृताचार्याणामपि नाम्न उपलम्भात्, किं तु तानि तु सूत्राणि विज्ञानभिक्षुकृतानीति बहूनां प्रवादः ॥ ७० ॥

ईश्वरकृष्णेन किं ततः साक्षात् प्राप्तम् ? तत्राह——शिष्यपरम्परयेति ॥ इत्थं शिष्यपरम्परया आगतम्=उपस्थितम्, एतत्=सांख्यशास्त्रम्, आर्यमतिना=श्रेष्ठबुद्धिना, ईश्वरकृष्णेन, सम्यक्=अध्ययनभावनाभ्याम्, उत्तमप्रकारेणेति यावत्, सिद्धान्तं विज्ञाय=ज्ञात्वा, आर्याभिः=तदाख्यछन्दोविशेषविशिष्टपद्यैः, संक्षिप्तम्=संक्षेपेण कथितम्, इत्यन्वयः ॥ ७१ ॥ ❀ ॥

आराद् याता तत्त्वेभ्य इत्यार्या, आर्या मतिर्यस्य सोऽयमार्यमतिरिति ॥ ७१ ॥

एतच्च शास्त्रं–सकलशास्त्रार्थसूचकत्वान्न तु प्रकरणमित्याह—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

तथा च राजवार्तिकम्—

"प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥

---

आरात्=समीपम् । सूक्ष्मतत्त्वसमीपं गता आर्या, सूक्ष्मतत्त्वदर्शिनी इति यावत् तादृशी मतिर्यस्य तेनेत्यर्थः, आरात्=दूरे याता=दूरं प्राप्ता या मतिरतत्त्वेभ्यः सा अस्यास्तीत्यार्यमतिरिति वार्थः ॥ ७१ ॥

## अथ प्रकृतग्रन्थस्य प्रकरणत्वनिरासः ।

एतच्च शास्त्रार्थसूचनाच्छास्त्रं न तु प्रकरणमित्याह—**सप्तत्यामिति** ॥ येऽर्थाः किल सप्तत्याम्=कारिकासप्तत्याम्, कथिताः, किं भूताः? आख्यायिकाविरहिताः=कथातद्घटितदृष्टान्तादिरहिताः, तथा परवादविवर्जिताश्च—मतान्तररहिताश्च, ते एव अर्थाः कृत्स्नस्य=संपूर्णस्य, षष्टितन्त्रस्य=पुरुषप्रकृत्यादिषष्टि-(६०) पदार्थव्युत्पादकशास्त्रस्य, सन्ति, इत्यन्वयः ॥ ७२ ॥

षष्टिपदार्थान् वक्तुं षष्टितन्त्रस्य परवादविवर्जिता एते एवार्था इत्यर्थे तदीयं राजवार्तिकं प्रमाणयति—**तथा चेति** । **प्रधानास्तित्वमिति** । प्रधानपदं पुरुषस्याप्युपलक्षणम् । प्रधानपुरुषयोर्द्वयोरेव अस्तित्वम्=नित्यवृत्तित्वम् अस्य शास्त्रस्य विषयः । अत एव वक्ष्यति—"अस्तित्वं योगो वियोगश्चेत्युभयमधिकृत्य" इति । एकत्वम्=प्रधानस्य न नानात्वम्, अर्थवत्त्वम्=प्रीत्यादिरूपत्वम् परिणामेन प्रधानस्य नानाफलजनकत्वम्, "अथ"शब्देन अन्यतायाः प्रधानधर्मतानिरासः, अन्यता=प्रधानपुरुषयोरन्यत्वम् पुरुषस्य प्रधानतत्कार्यभिन्नत्वम्, पारार्थ्यम्=प्रधानस्य पुरुषोपकारकत्वम्, अनैक्यम्=पुरुषस्य अनेकत्वम्, बहुत्वमिति यावत्, वियोगः=प्रधानपुरुषयोरपवर्गदशायां विवेकः, योगः= अपवर्गात् प्राक् तयोः संभिन्नत्वम् ॥

**शेषवृत्तिरिति** ॥ शेषवृत्तिः=स्थूलसूक्ष्मशरीरद्वयस्थितिः स्थूलानां महा-

---

१ सूचकत्वं च संक्षिप्ताभिनववाक्यैर्निखिलार्थप्रतिपादकत्वम्, न तु मुख्यशास्त्रैकदेशप्रतिपादकत्वमित्यर्थः ।

करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥" इति ।

सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थकथनान्नेदं प्रकरणम्, अपि तु शास्त्रमेवेदमिति सिद्धम् । एकत्वमर्थवत्त्वं, पारार्थ्यं च-प्रधानमधिकृत्योक्तम्, अन्यत्वमकर्तृत्वं-बहुत्वं चेति-पुरुषमधिकृत्य, अस्तित्वं-वियोगो-योगश्चेत्युभयमधिकृत्य, स्थितिः-स्थूलसूक्ष्ममधिकृत्य ॥ ७२ ॥

---

भूतानां सूक्ष्माणां सत्त्वादीनां प्रधानस्य अङ्गभावेन वर्त्तनम्, तथा च तेषां प्रधानेन सह अङ्गाङ्गिभावः संवन्ध इति भावः । अकर्तृत्वम्=पुरुषस्य कर्तृत्वाभावः, इत्थं मौलिकार्थाः=पञ्चविंशतिसंख्यकमूलतत्त्वविषयाः, प्रधानीभूता अर्थाः, विपर्ययादीनां हेतुभूता अर्था इति यावत् । इति षष्टिरित्यस्य पदार्थानामित्यत्रान्वयः ॥ षष्टिपदार्थानामत्रापि कथनान्न प्रकरणत्वमस्येत्याह—सेयमिति । षष्टिपदार्थी=षष्टेः पदार्थानां समाहारः । कथिता इहेति । तथा हि—"संघातपरार्थत्वात्–" इत्यादिना पुरुषास्तित्वम् । "भेदानां परिमाणात्–" कारणमस्त्यव्यक्तम्—"इत्यार्याद्वयेन प्रधानास्तित्वम् । "हेतुमदनित्यम्–" इत्यादिना प्रधानस्यैकत्वम् ।" प्रीत्यप्रीतिविषादात्मकाः–" इत्यनेनार्थवत्त्वम् । "त्रिगुणमविवेकिविषयः–" इत्यनेन प्रधानपुरुषयोरन्यत्वम् । "नानाविधैरुपायैः–" इत्यादिना प्रधानस्य पारार्थ्यम् । "जननमरणकरणानाम्–" इत्यादिना पुरुषस्य बहुत्वम् । "प्राप्ते शरीरभेदे चरितार्थत्वात्–" इत्यादिना उभयोर्वियोगः । "पुरुषस्य दर्शनार्थम्"—इत्यादिनोभयोर्योगः । "सम्यग् ज्ञानाधिगमात्–" इत्यादिना शरीरद्वयस्य शेषवृत्तिः । "तस्माच्च विपर्यासात्–" इत्यादिना पुरुषस्याकर्तृत्वम् । विपर्ययतुष्टयसामर्थ्यसिद्धीनां पञ्चाशद् भेदास्तु "पञ्च विपर्ययभेदा भवन्ति"—इत्यार्यापञ्चभिरुक्ता इति । सकलशास्त्रार्थकथनादिति । तथा च तच्छास्त्रप्रतिपादितानाम् अर्थानां कार्त्स्न्येन प्रतिपादको ग्रन्थः तच्छास्त्रम् । प्रकरणं तु तच्छास्त्रार्थानां कतिपयानां प्रतिपादको ग्रन्थविशेष इति भेद इति भावः । वार्तिकं विभागेन योजयति—एकत्वमित्यादिना । नैक्यमित्यस्यार्थमाह—बहुत्वं चेतीति । शेषवृत्तिरित्यस्यार्थमाह—स्थितिरितीति ॥ न चाख्यायिकादिरहितत्वेन न्यूनतया प्रकरणत्वमेवास्य युक्तमिति भ्रमितव्यम् । मन्दमत्युपयोग्याख्यायिकानां दिग्विजयाद्याकांक्ष्युपयोगिपरवादनिराकरणस्य च मोक्षार्थिनां प्रेक्षावतामत्यन्तानुपयोगात् । तथाच कपिलोक्तषडध्याय्यां । चतुर्थेऽध्याये आख्यायिका पञ्चमे परवादस्तच्चोभयमत्र न निरूपितम् इतरत् सर्वमत्र निरूपितमित्यस्य शास्त्रत्वमेव न प्रकरणत्वमिति सर्वमनवद्यम् इति शम् ॥ ७२ ॥

मनांसि कुमुदानीव बोधयन्ती सतां मुदा ।
श्रीवाचस्पतिमिश्राणां कृतिस्तात्तत्त्वकौमुदी ॥ १ ॥

॥ इति षड्दर्शनटीकाकृच्छ्रीमद्वाचस्पतिमिश्रविरचिता साङ्ख्यतत्त्वकौमुदी समाप्ता ॥

---

मनांसीति ॥ कुमुदानीव मनांसि बोधयन्ती=विकाशयन्ती, श्रीवाचस्पतिमिश्राणां कृतिः कौमुदीव=चन्द्रिकेव, तत्त्वकौमुदी सताम्=सज्जनानाम्, मुदे=हर्षाय, स्तात्=भवतु, इत्यन्वयः ॥ इति शम् ॥ शिवो जयति ॥

### प्रार्थना ।

बालरामकृता व्याख्या न पूर्णा दैवयोगतः ।
मार्गं तस्याः समालम्ब्य कृतेयं सारबोधिनी ॥ १ ॥
सर्वेषामेव शास्त्राणां विज्ञाः ! सारं समुद्धृतम् ।
वर्तते तु यतो ह्यस्यां ततस्तु सारबोधिनी ॥ २ ॥
अबोधानां सबोधानां व्याख्येयं हितसाधनी ।
यतोऽत्र विषयाः सर्वे ग्राह्या उक्ता विशेषतः ॥ ३ ॥
सरलत्वादबोधानां गाम्भीर्याच्च महाधियाम् ।
यथानाम तु टीकेयं मनस्तुष्टिं विधास्यति ॥ ४ ॥
सन्ति यद्यपि बह्व्योऽपि व्याख्याः प्राज्ञविनिर्मिताः ।
सरलत्वात्सुबोधेयं कृतिश्छात्रैर्ग्रहीष्यते ॥ ५ ॥
काठिन्यं तु मया त्यक्तं सारल्यं चावलम्बितम् ।
संभाव्यते यतोऽनेन शास्त्रबोधो विना श्रमम् ॥ ६ ॥
यदत्र स्खलितं किंचित् प्रमादेन भ्रमेण वा ।
मान्या मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥ ७ ॥
गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ ८ ॥
सुधियः प्रार्थये भूयः क्षन्तव्यास्त्रुटयो यदि ।
सन्तोऽप्यसन्तो दोषाः स्युः प्रपञ्चोऽद्वैतिनामिव ॥ ९ ॥
उपकारः कियत्यंशे पाठकानां भवेद्यदि ।
सुधन्यं स्वं श्रमं मंस्ये भूयांसं चापि सार्थकम् ॥ १० ॥
यत्प्रसादादियं व्याख्या नित्यं स्थास्यति निश्चला ।
प्रह्वीभावेन वन्द्योऽयं शिवदत्तो गुरुः सदा ॥ ११ ॥

इति लवपुरीयप्राच्यविद्यालयप्रधानाध्यापकमहामहोपाध्यायपदालङ्कृतदाधिमथपण्डित श्री ६ शिवदत्तशर्मतोऽधीतविद्येन वर्तमानसमये बीकानेरराज्यान्तर्गतनोहरग्रामवासि श्रेष्ठि ( सेठ ) श्रीशिवलालात्मजश्रीरामलालकृष्ण-

लालगुप्तस्थापितसंस्कृतपाठशालाप्रथमाध्यापकेन जयन्तीपुर ( जींद )राज्यान्तर्गतगोतोलीग्रामवासिपण्डित श्री १०८ अमीलालशर्मसूनुना सती श्रीरजिन्दा-देवीसुगर्भजेन शाब्दिकचूडामणिविद्यावारिधिपण्डितश्रीशिवनारायणशास्त्रिणा निर्मिता सारबोधिनीसमाख्या सांख्यतत्त्वकौमुदीव्याख्या समाप्तिमगादिति शिवम् ॥

॥ शिवार्पणमस्तु ॥

रसमुन्यङ्कभूमाने ( १९७६ ) वैक्रमे शुभवत्सरे ।
मास्याश्विने सिते पक्षे पौर्णमास्यां रवेर्दिने ॥ १ ॥
देवद्विजप्रसादेन व्याख्येयं पूर्णतां गता ।
एनया प्रीयतां भूमा पार्वतीवल्लभः शिवः ॥ २ ॥

## ग्रन्थालङ्कारश्लोकाः ।

जींदाख्या राजधान्यस्ति रणवीरेण पालिता ।
राष्ट्रेऽत्रास्ति बुधैर्युक्ता "गोतोली"त्याख्यया पुरी ॥ १ ॥
तत्र चासीन्महातेजा "रामचन्द्रः" सतां मतः ।
बभूवुः सूनवस्तस्य वह्निसंख्याः सुबुद्धयः ॥ २ ॥
"दिलेरामः" सुतो ज्येष्ठो ह्यमीलालश्च मध्यमः ।
कनीयान् "ब्रह्मदत्त"श्च शीलशान्तिगुणान्वितः ॥ ३ ॥
प्रथमान्त्यौ[1] गतौ स्वर्गं मध्यमश्चात्र[2] तिष्ठति[3] ।
बभूवुः सूनवस्तस्य[4] बाणसंख्याः सुबुद्धयः ॥ ४ ॥
"मातृदत्त"स्ततो "नेकी" पित्रोरानन्दवर्धकौ ।
"शिवनन्द"स्ततो जज्ञे सर्वशास्त्रविशारदः ॥ ५ ॥
ततो जज्ञे महातेजा "जुगलालः" सतां मतः ।
भक्त्या प्रपूजितौ येन पितरौ सुखदायिनौ ॥ ६ ॥
ततो जज्ञे महाकान्तिः "काशीरामः" सुबुद्धिमान् ।
जन्म लब्ध्वा च यः क्षिप्रं गतो निर्जरपत्तनम् ॥ ७ ॥
शिवनन्दं तथा स्यौनीं शिवनारायणं परे ।
आख्यया हि प्रजल्पन्ति मध्यमं ग्रामवासिनः ॥ ८ ॥
मातृदत्तो गतः स्वर्गं दुःखयन् सर्वमानवान् ।
पुत्रः स्वरूपलालोऽत्र वर्तते तस्य धीमतः ॥ ९ ॥
ग्रन्थकारस्य पुत्रोऽस्ति प्रह्लाद इति विश्रुतः[5] ।
चिरं जीव्यात्स वै नूनं शोकाश्रूणां प्रमार्जकः ॥ १० ॥

१ पं. दिलेरामब्रह्मदत्तशर्माणौ । २ पं. श्री ६ अमीलालशर्मा । ३ भूतले । ४ पं. श्री ६ अमीलालशर्मणः । ५ व्याख्यासमाप्तिसमये "प्रह्लाददत्तशर्मा" इत्येक एव पुत्र आसीदिति तत्समयाभिप्रायेणेदम् । संप्रति हि—( संवत् १९९५ )

लेखनी स्रंसते हस्तात् मुखं वै परिशुष्यति ।
गते वर्षे गतः स्वर्गं नेकीरामः सुबुद्धिमान् ॥ ११ ॥
मध्यमेन मया व्याख्या निर्मितेयं सुखप्रदा ।
कुधियां च सदा निन्द्या सतां भवतु भूतये ॥ १२ ॥

तत्रान्तराण्यपि विलोक्य ममैष यत्नः, सद्भिर्विधेय इह दोषविधौ समाधिः ।
मर्त्यैरसर्वविदुरैर्विहिते क्व नाम, ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि ॥ १३ ॥

साम्प्रतं विद्यते वासो नोहरे मे मनोहरे ।
यत्रास्ति कोटिशः श्रीमान् रामलालाभिधो धनी ॥ १४ ॥
कनीयांस्तु गतः स्वर्गं कृष्णलालाभिधो वणिक् ।
अयमासीन्महातेजाः संस्कृते प्रेमधारकः ॥ १५ ॥
सत्कर्ता छात्रवर्गस्य वैश्यजातौ महामतिः ।
सत्कृतोऽहं पुरानेन पाठशाले वचोऽमृतैः ॥ १६ ॥



प्रह्लादो[1] मे सुतो ज्येष्ठः श्रीरामश्च तथाऽनुजः ।
तृतीयो रतलालश्च सुतास्त्रिवं भजन्ति हि ॥ १ ॥
तुरीया कन्यका फुल्ली धूधना' तु दिवं गता ।
भ्रातृवियोगसंतप्तो मुक्त्यर्थं प्रार्थये शिवम् ॥ २ ॥
अहह !

मातृदत्तस्तथानेकी जुगलालश्च भक्तिमान् ।
पश्यतो मे गताः स्वर्गं संसारो दुःखभाजनम् ॥ ३ ॥
दुःखवादं समालम्ब्य दर्शनानां समुद्भवः ।
तस्यैव भेषजं सत्यं दर्शितं मुनिपुङ्गवैः ॥ ४ ॥
अनुभूतं मया सम्यग् भेषजं सत्यभेषजम् ।
अनुभवेत् परोऽप्येवं[2] परानेवं प्रबोधये ॥ ५ ॥
संसारानलसंतप्तः सांख्ययोगौ समभ्यसेत् ।
गर्भस्थप्राणिनाप्येवं प्रतिज्ञा क्रियते यतः ॥ ६ ॥
मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
यदि योन्याः प्रमुच्येय सांख्यं योगं तदाऽऽश्रये ॥ ७ ॥

1 धर्मपत्नी तु—"गृहकर्मणि संदक्षा शीलशान्तिगुणान्विता ।
धर्मपत्नी सतीमूर्ती राजते परमेश्वरी ॥"

2 सांख्यविचारेण चित्तशान्तिरवश्यं भवतीति ।

# अथ परिशिष्टम् । टिप्पणी ।

पृष्ठम् १०२ पंक्तिः ८ मितिभाव इति । संशयसाधनबुद्धिवृत्तेः संदिग्धविषयकत्वात्, विपर्ययसाधनबुद्धिवृत्तेर्बाधितविषयकत्वात्, स्मृतिसाधनबुद्धिवृत्तेरधिगतविषयकत्वाच्च न प्रमाणत्वप्रसङ्ग इति ।

पृष्ठम् ११३ पंक्तिः २—तदाश्रितः=अर्थसन्निकृष्टेन्द्रियसंबन्धनिबन्धनः । बुद्धिव्यापारः=अन्तःकरणस्य विषयाकारा वृत्तिः । ज्ञानं=वृत्तिरूपज्ञानम् । तमोऽभिभवे=तैजसेन्द्रियसंबन्धेन बुद्धेरावरणात्मकस्य तमोगुणस्य न्यक्कारे । सत्त्वसमुद्रेकः=प्रकाशात्मकस्य सत्त्वगुणस्य स्फोरणम् ।

पृष्ठम् ११६ पंक्तिः २—इदम्=सत्त्वसमुद्रेकरूपबुद्धिव्यापारलक्षणम् अध्यवसायापरपर्यायं वृत्तिज्ञानम् । प्रमाणं=दृष्टाख्यं प्रमाणम् ।

पृष्ठम् ११७ पं० २ अनेन=अध्यवसायात्मकवृत्तिज्ञानेन । अनुग्रहः=संबन्धः तदिति विधेयलिङ्गम् । तेन स चाध्यवसायस्य चित्संबन्धः फलीभूतप्रमात्मको बोध इत्यर्थः । बुद्धिव्यापारेण चितः सांनिध्यं तत्र व्यापारः । तेन अध्यवसायस्य प्रमां प्रति व्यापारवत्कारणत्वरूपकरणत्वोपपत्तिः । ननु अर्थसन्निकृष्टेन्द्रियसंबन्धनिबन्धनो बुद्धितत्त्वस्य ज्ञानापरपर्यायोऽध्यवसाय एव प्रमेत्युच्यतां अलं चेतनाशक्तेः संबन्धेनेति शङ्कां दूरीकरोति—बुद्धितत्त्वं हीति ।

पृ० ११९ पं० १२ इत्यर्थः इति । सोऽयं=पुरुषः तत्प्रतिबिम्बितः सन् तच्छायापत्त्या=बुद्धिस्वरूपतारोपेण हेतुना बुद्धितत्त्ववर्तिना=बुद्धितत्त्वगतेन ज्ञानसुखादिना ज्ञानसुखादिमानिव भवतीत्यन्वयः । इति=एवं प्रकारेण अनुगृह्यते=अध्यवसायेन संबध्यते ।

पृ० १२१ पं० ११ अत्रेतीति । अध्यवसायग्रहणेन=अध्यवसायपदोपादानेन, संशयम्=संशयात्मकबुद्धिवृत्तिम् । पं० १९ दित्यर्थ इति । अनवस्थितग्रहणेन='स्थाणुर्वा पुरुषो वा' इत्यादि द्विकोटिकतया ग्रहणेन हेतुना संशयस्य=तदात्मक बुद्धिवृत्तेः अनिश्चितरूपत्वात्=एककोटिकत्वाभावात् इत्यन्वयः । निश्चयः='स्थाणुरेव' इत्येवमाद्येककोटिकवृत्तिरूपः । अनर्थान्तरम्=अर्थान्तरं न भवति, एक एव पदार्थः ।

पृ० १२२ पं० ७ विषयग्रहणेन=विषयपदोपादानेन ।

पृ० १३२ पं० २ वस्तुस्वभावप्रतिबद्धम्=वस्तुविशेषेण सह स्वाभाविकेन संबन्धेन संबद्धम् । स्वभावग्रहणात् अस्वाभाविकसंबन्धेन संबद्धस्य न व्याप्यत्वम् । तेन अयोगोलकीयवह्नौ वह्न्यन्तरीयधूमसंयोगेऽपि तद्धूमस्य तदयोगोलकीयवह्निव्याप्यत्वं न स्यात्, वह्निधूमयोर्जन्यजनकभावसंबन्धस्यैव स्वाभाविकत्वात् । संबन्धश्च स्वाभाविकः कार्यकारणत्वादिः । अत एव वैशेषिकतन्त्रे—"अस्येदं कार्यं, कारणं, संयोगि, विरोधि, समवायि चेति लैङ्गिकम्" इत्युक्तम् । अत्र चकारादन्येऽपि स्वाभाविकसंबन्धा गृह्यन्ते ।

पृ० १८५ पं० २६ गोशब्द इति । शब्दस्य तदर्थे प्रयुक्तत्वं तद्वाचकत्वे लिङ्गम-सति बाधे इति भावः । प्रयुज्यते—वनचरादिभिर्वृद्धैरिति शेषः ।

पृ० १८८ प० १६ "न सर्वात्मना सादृश्यज्ञानमुपमानसामग्री, नापि किंचिन्मात्र-सादृश्यज्ञानम्, अपि तु बहुतरसामान्यज्ञानम्" इति कल्पतरुकाराः ।—अत्रेदं ॥

पृ० १९४ पं० १६ भवतीति । इतोऽग्रे—"सत्पदं च ध्वस्तघटादि व्यावृत्त्य-र्थम् । ध्वस्तघटादिनिष्ठैकत्रासत्त्वस्य अन्यत्र सत्ताव्याप्यत्वाभावात् । एवं च सतो देवदत्तस्य गृहासत्त्वज्ञानादन्यत्रसत्त्वमनुमीयत एवेति सिध्यति ।

पृ० १९६ पं० २३ आशङ्कां निराकरोति—नेति । प्रमाणविनिश्चितस्य=प्रत्य-क्षप्रमाणेनावधारितस्य, सांशयिकेन="चैत्रो बहिर्वा स्यात् गृहे वा स्यात्" इत्य-निश्चितपक्षप्राप्ततया संशयविषयेण, प्रतिक्षेपायोगात्=निराकरणानुपपत्तेः । तथाच सांशयिकापेक्षया निश्चितस्य बलवत्तया निश्चितेन गृहासत्त्वेन सांशयिकस्य गृहा-सत्त्वस्यैव निराकरणं न पुनर्वैपरीत्यमिति भावः ।

पृ० १९७ पं० ८ ननु यदि बलवता निश्चितेन दुर्बलस्य सांशयिकस्य बाध आवश्यकस्तदा निश्चितेन गृहाभावेन पाक्षिकतया दुर्बलं गृहसत्त्वमिव बहिःसत्त्वमपि बाध्यताम्, उभयोरेव पाक्षिकतया सांशयिकत्वाविशेषात् । यदि तस्याबाध्यत्वमङ्गी-क्रियते तदा सत्त्वमात्रस्य सांशयिकतया दौर्बल्यप्रयोजकत्वमपि नाङ्गीक्रियताम्, बहिः सत्तायाः सांशयिकत्वेऽपि दौर्बल्याभावे व्यभिचारादित्याशङ्कामपि निरा-करोति—नापीति । इति युक्तमित्यग्रिमेणान्वयः ।

पृ० १९८ पं० ३५ इति केचित्, ३ निराकरणे हेतुमाह—गृहावच्छिन्नेनेति । गृहसत्त्वम्=गृहावच्छिन्नसत्त्वम्, विरुद्धत्वात्=एकविषययोः सत्त्वासत्त्वयोर्विरुद्ध-त्वात्, सत्त्वमात्रम्=बहिःसत्त्वम् । हेतुमाह—तस्येति । गृहासत्त्वस्येत्यर्थः । तत्र=बहिःसत्त्वे, औदासीन्यात्=अविरोधित्वात् । अर्थापत्तेरनुमानान्तर्भूतत्वमुप-संहरति—तस्मादिति । निरापत्तिकत्वादित्यर्थः । युक्तम्=निर्दोषतया न्यायसिद्धम् ।

पृ० १९९ पं० १४ ननु विरुद्धयोः प्रमाणयोरविरोधोपपादनं कथमनुमानप्रमेयं स्यादित्यतः प्रमाणयोर्विरोध एव नास्तीत्याह—अवच्छिन्नेति । गृहावच्छिन्नगृहान-वच्छिन्नयोरसत्त्वसत्त्वयोरित्यर्थः उक्तन्यायमन्यत्राप्युपदिशति—उदाहरणान्त-राणीति ।

पृ० २०१ पं० २०–टि० २ कैवल्यं=केवलत्वं घटरहितत्वम् तल्लक्षणात्=तत्स्वरूपात् इति मूलार्थं इति भावः । ननु भूतलस्य कैवल्यस्वभावत्वे घटसद्भाव-दशायामपि तदवश्यं भावादिन्द्रियसंनिकर्षेण कैवल्यप्रतीत्यापत्तिरित्यत उक्तम्—परिणामविशेषादिति । घटापगमकाल एव भूतलं केवलात्मकतया परिणमति न तु तत्सत्त्वदशायामपीति भावः ।

पृ० २१२ पं० १८—अर्थाः=शब्दादिविषयाः, इन्द्रियाणामर्थाधीनप्रवृत्ति-मत्त्वात् । आत्मा=समष्टिबुद्धिरूपः । अव्यक्तम्=सर्वजगतो बीजं मायाख्यम् अव्या-

कृतम्। पुरुषः=पूर्णत्वात्पुरुषः=व्यापकः सकलजडवर्गप्रकाशक आत्मा। काष्ठा=उक्तपरत्वानां विश्रान्तभूमिः। गतिः=गन्तव्यफलरूपा।

पृ० २३४ पं० ९ असन् घट इति। मृत्पिण्डदशायां 'घटोऽसन्' इति व्यवहारः।

पृ० २३५ पं० ३४ 'आश्रयाश्रयिभावप्रतीतेः' इतोऽग्रे—अत्रायं सरलो निष्कर्षः—असत्त्वेन धर्मेणैव 'असन् घटः' इति प्रतीतिव्यवहारः स्यात्, असत्त्वं च घटेन संबद्धमेव 'असन् घटः' इति व्यवहारप्रयोजकं भवितुमर्हति नासंबद्धम्, अन्यथा उत्पत्तेः प्राक् असंबद्धेनापि इदन्त्वेन 'अयं घटः' इति प्रतीतिव्यवहारः स्यात्। एवं च घटाभावात् तेन सह संबन्धमलभमानेन असत्त्वेन कथम् 'असन् घटः' इति व्यवह्रियते। ननु असत्त्वं घटात्मकमेव, न संबद्धम्, धर्मधर्मिणोरभेदाङ्गीकारादित्यत उक्तम्—अतदात्मना चेति। तथा च असत्त्वं घटात्मकमपि न संभवति, घटाभावात्। तथा च असत्त्वं घटसंबद्धं घटात्मकं वा, उभयथापि घटाभावात् तेन सह संबद्धं तदात्मकं च भवितुमक्षमं कथम् 'असन् घटः' इति व्यवहारप्रयोजकं स्यादिति भावः।

पृ० २४१ पं० १८ कारणेनासंबद्धस्य कार्यस्य उत्पत्तिः सुघटेत्याशङ्कते—स्यादेतदिति। यत् कारणं यत्र शक्तम्=यत्कार्यजननानुकूलशक्तिमत् तत् कारणं स्वेन असंबद्धमपि तदेव कार्यं जनयति, कार्यदर्शनात्=शक्तेः फलबलोन्नेयत्वात्। तथा च शक्तेः फलबलोन्नेयतया यस्मात्कारणात् यत्कार्योत्पत्तिर्न प्रतीयते तस्य तज्जननशक्तिर्नास्तीति प्रत्येतव्यत्वेन नाव्यवस्थेति आशङ्कार्थः।

पृ० २४१ पं० ९ सर्वत्र=सर्वकार्यजननानुकूला, शक्ये=शक्यकार्यजननानुकूला। तत्राद्ये अव्यवस्थानपगम इत्याह—सर्वत्र चेति। द्वितीये सत्कार्यपक्ष एवापततीत्याह—शक्ये चेदिति। तथा च शक्यं=शक्तिविषयः। कारणनिष्ठायाः शक्तेर्यत्र विषयतासंबन्धेन सद्भावस्तदिति फलितम्। एवं च विषयतासंबन्धेन शक्तेरधिकरणीभूतस्य कार्यस्य जन्यत्वाङ्गीकारे कार्यस्य प्राक्सत्त्वमेवायातीति भावः। पं० २५—उक्तदूषणपरिहाराय प्रतिपक्ष आह—शक्तिभेद एवेति। शक्तिभेदः=शक्तिगतो विशेषः। विशिष्टकार्यजननानुकूलत्वमिति यावत्। एवकारस्तादृशपदोत्तरं योजनीयः। तेन स शक्तिभेदस्तादृश एवेत्यन्वयः। यतः=यादृशात् शक्तिविशेषात्। किंचिदेवेति। 'शक्यमेव' इत्यनुक्त्वा 'किंचिदेव' इत्यभिधानेन सत्कार्योत्पत्तिः परिहृता। किंचिच्च न यत्किंचित्, किं तु नियतः कश्चित्कार्यविशेषः। शक्तिगतविशेषकल्पनायास्तदेव फलम्। कार्यविशेषजननानुकूलनियतशक्त्या नियतकार्यविशेषस्यैव संभवात्। 'न सर्वम्' इत्यनेन अव्यवस्थापि परिहृता। पं० ३०—एतावता प्रयासेनापि दूषणद्वयं न परिहृतमित्याह—हन्त भो इति।

पृ० २४२ पं० ४ असंबद्धत्वे इति। तथा च शक्तिविशेषस्य कार्यसंबद्धत्वं कार्यगतजन्यतानिरूपितजनकतावत्त्वम्, तच्च असति कार्ये न संभवति; असति पुत्रे पुरुषस्य पुत्रनिष्ठजन्यतानिरूपितजनकतावत्त्वमिवेति भावः।

पृ० २४९ पं० २९ दित्यर्थः—१ असतः=अविद्यमानस्य भावः=जन्म न विद्यते, कारणात्मना विद्यमानस्यैव जन्मेति भावः । नापि सतः=विद्यमानस्य अभावः= प्रध्वंसो जायते, किं तु कारणभावापत्तिरेव प्रध्वंस इत्युच्यत इति भावः । पं० ११ कूर्मः=कूर्मदेहः, स्वावयवेभ्यः=अङ्गप्रत्यङ्गेभ्यः । कदाचित् संकोचनशीलेभ्यः क्वचिच्च विकाशशीलेभ्यः । न भिन्नः—अवयवसमुदायातिरिक्तस्य कस्यचिद्देहत्वेनानुपलब्धेरवयवसमष्टेरेव देहत्वादिति भावः । एवं घटादेरपि कारणाव्यतिरिक्तत्वेन तात्त्विकोऽभेद इति दृष्टान्तार्थः ।

पृ० २५० पं० १५ इत्यन्वयः—इह वने तिलका इति यथा=इतीव उपपन्न इत्यन्वयः । तिलकाः=पुन्नागवृक्षाः । पं० २९ तेषाम्=वस्तूनाम्, समस्तानां= मिलितानां व्यस्तानाम्=एकैकेषाम् । अर्थक्रियेति । अर्थक्रिययोः=एकैकप्रयोजनसाधनत्वयोः समस्तमात्रनिष्ठत्वेन व्यस्तमात्रनिष्ठत्वेन च दर्शनात्=बहुलमुपलम्भादित्यर्थः । तथा च समस्तव्यस्तानामर्थक्रियाव्यवस्थायामपि व्यस्तत्वं न समस्तादतिरिक्तं, समस्तं च न व्यस्तादिति भावः । यथा वर्त्मदर्शनलक्षणायामर्थक्रियायामेकैकविष्टयो न परस्परसाहित्यमपेक्षन्ते इति वर्त्मदर्शनरूपार्थक्रिया प्रत्येकनिष्ठैव, शिबिकावहनरूपायामर्थक्रियायां तु मिलिता एव प्रभवन्ति इति सेयमर्थक्रिया समस्तनिष्ठैव भवति, तत्र च एकैका व्यक्तिः समस्तव्यक्तिभ्यो नातिरिक्ता, समस्तव्यक्तयश्च नैकैकस्या व्यक्तेस्तथेति दृष्टान्तार्थः । "अर्थक्रियायां च प्रत्येकमसमर्था अपि अनारभ्यैवार्थान्तरं किंचिन्मिलिताः कुर्वन्तो दृश्यन्ते यथा ग्रावाण उखाधारणमेकम्, एवमनारभ्यैवाऽर्थान्तरं तन्तवो मिलिताः प्रावरणमेकं करिष्यन्ति" इति भामत्यां मिश्रैरेवोक्तः प्रकारोऽप्यत्रानुसन्धेयः । ग्रावाणः=पाषाणाः, उखा=स्थाल्याख्यः पाकपात्रविशेषः ।

पृ० २५१ ननु 'आविर्भूतपटभावा' इत्यनेन पटभावस्य य आविर्भाव उच्यते स किं कारणव्यापारजन्यस्तदजन्यो वा? आद्ये असतः पटाविर्भावस्य उत्पत्तिः प्राप्ता, द्वितीये अलं कारणव्यापाराङ्गीकारेणेत्यभिप्रायेण तार्किकः शङ्कते—स्यादेतदिति । नैयायिको वदति—भोः सांख्य! उत्पत्तेः प्राक् सदेव कार्यं कारणव्यापारेणाभिव्यज्यते दोहनेन दुग्धमिव' इति तावद् भवताङ्गीक्रियते, तत्रेदं वयं पृच्छामः— येयमभिव्यक्तिर्भवद्भिरङ्गीक्रियते सा किं कारणव्यापारात्प्राक् सती वा असती वा, सतीति चेत् सर्वदोपलम्भप्रसङ्गः कार्यस्य, कारकव्यापारवैयर्थ्यं च, न हि विद्यमाने कार्ये सति कारणव्यापारप्रयोजनं किंचिद् विलोक्यते, असतीति चेत् तर्हि यथाऽसत्येवाव्यक्तिः कारणाद् जायते तथा पटादिकार्यमपि असदेव कारणव्यापारादुत्पद्येतेति असदुत्पादनप्राप्तौ भवदभिमतस्य सत्कार्यवादस्यैव भङ्गः गले पतितो भवति । अथ कार्याविर्भावोऽपि कारणे सन्नेव, कारणव्यापारेण तु सत एवाविर्भावस्याविर्भावो भवतीति स्वीकरोषि चेत् तर्हि असतो द्वितीयस्य आविर्भावस्य उत्पादनापत्तिः, तस्यापि सत्त्वाङ्गीकारे तृतीयस्येत्यनवस्थापत्तिः स्यात्, तस्मात् आविर्भूतपटभावा-

स्तन्तवः कारणव्यापारेण क्रियन्त इति भवतां वचनं सारशून्यत्वात्सर्वथा तुच्छमेव। इति समस्तशङ्काग्रन्थार्थः।

पृ० २५२ प० १०—सिद्धान्ती प्रतिबन्द्या समाधातुं पृच्छति—अथेति। सांख्या वदन्ति—भो नैयायिक! भवदभिमतसिद्धान्ते येयमसदुत्पत्तिरङ्गीक्रियते, तत्र वयमप्येतत् पृच्छामः—भवदभिमता सा असदुत्पत्तिः कारणव्यापारात्प्रागपि विद्यमानाऽस्ति, उताहो ततः प्रागविद्यमाना? विद्यमानेति चेत् तर्हि अस्मन्मत इव भवन्मतेऽपि कारणवैफल्यं तौल्यमेव, कारणव्यापारस्य तथाभ्युपगमेऽकिंचित्करत्वात्, अविद्यमानेति चेत् तर्हि तस्या अप्युत्पत्त्यन्तरमिति अनवस्थापत्तिः समानैव, यतः स्वाधिकरणक्षणध्वंसानाधारक्षणसंबन्ध उत्पत्तिर्भवदभिमता, स च संबन्धः प्रागसन्निति तस्याप्युत्पत्तिरङ्गीकार्या, तस्या अपि निरुक्तक्षणसंबन्धरूपतया उत्पत्तिरङ्गीकरणीया स्यात्, असत एवोत्पत्तेर्भवदभिमतत्वात्। अथ असौ उत्पत्तिः पटपदार्थान्तर्भूता एवेति उत्पत्तिमतस्तन्तुसन्तानविशेषस्य पटपदार्थतया न पृथगस्योत्पत्तिरभ्युपगम्यते येनानवस्था स्यादिति चेत् स्वीकरोषि? तर्हि पट इत्युच्चारणादेव उत्पत्तिमतस्तन्तुसंतानविशेषस्य उपस्थितौ 'पट उत्पद्यते' इत्यत्र पौनरुक्त्यं स्यात्, 'पटो विनश्यति' इत्यत्र विरोधश्च स्यात्, क्षणसंबन्धवत्त्व—तदभाववत्त्वयोर्युगपदेकत्रावस्थानस्यासंभवात्। यस्मादुत्पत्तेरुत्पत्त्यङ्गीकारे अनवस्था, पटादिस्वरूपत्वे च उत्पद्यत इत्यस्य पौनरुक्त्यं विनश्यतीत्यनेन विरोधश्च स्यात्, तस्मात् "पटस्य तन्तुषु यः समवायः सेयं पटोत्पत्तिः, अथवा पटरूपे कार्ये यः सत्ताजातेः समवायः सा पटोत्पत्तिः" इत्यर्थकं "स्वकारणे कार्यस्य समवायो जन्म, स्वस्मिन्नसति कार्ये सत्तासमवायो वा जन्म" इत्युत्पत्तेर्लक्षणान्तरं भवता वक्तव्यम्, परं एतस्मिन् प्रकारद्वये स्वीकृतेऽपि उत्पत्तेरुत्पत्तिर्नोपपन्ना भवति, समवायसंबन्धस्य नित्यत्वेन समवायरूपाया उत्पत्तेरपि नित्यत्वात्, अपि च हे नैयायिक! असतः पटस्य न कारणे समवायो भवितुमर्हति नापि असति पटे सत्तासमवाय एव वा भवितुमर्हति, सदसतोः संबन्धस्य गीर्वाणगुरुणापि वक्तुमशक्यत्वात्। तस्मात् यथा भवन्मते समवायस्वरूपत्वेन प्राक् सिद्धाया एवोत्पत्तेरभिव्यक्तये कारणव्यापार आश्रीयते तथाऽस्मन्मतेऽपि प्राक् सिद्धस्यैव कार्यस्याभिव्यक्तये कारणव्यापार इति नैव कारणव्यापाराऽऽनर्थक्यशङ्काकलङ्कगन्धोऽपि मन्मत इति तूष्णीमास्यतामिति समाधातृसांख्याशयः। सत्यावश्यके व्याख्यान्तरमपीदं तत्र तत्राभ्यूहितव्यमिति शम्॥

---

# अथ शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | छात्रबोधिनी | सारबोधिनी |
| १ | २० | " | " |
| १२ | २० | वाद्या- | वाय्वा- |
| १५ | ५ | तदाभौ- | तदाधिभौ० |
| १९ | १५ | चागत- | चानागत- |
| २१ | ८ | भावं | लाभं |
| " | २९ | दूरादि | दूरौदि |
| २७ | २३ | सत्वेना | सत्त्वेना |
| ३१ | १९ | तत्कार्थ | तत्कार्य |
| " | ४३ | परम= | परम्= |
| ३२ | १४ | अवणा- | श्रवणा- |
| " | २० | समूह्रो | समूहो |
| ३६ | ३६ | स विकल्पक | सविकल्पक |
| ४२ | २७ | कुशलत्व | कुशत्व |
| " | ३३ | २ हे कुश ३ हेक्षुरः ! | २ हेक्षुर ! ३ हे कुशतरुण ! |
| ५० | २८ | पापसत्वम् | पापसत्त्वम् |
| ५१ | ३२ | संतप्यमानात् | संज्ञप्यमानात् |
| ५३ | २२ | व्रीह्यासंश्लेष- | व्रीह्यादिसंश्लेष |
| ५५ | २ | तथा । अनिष्ट- | तथा अनिष्ट- |
| ६४ | ७ | नानुष्ठीयेत | नानुष्ठीयेत |
| ७४ | २२ | देहादानां | देहानाम् |
| ८० | २० | अप्रवृत्तौ | अप्रवृत्तौ= |
| ८१ | १३ | सत्वादि- | सत्त्वादि- |
| ९२ | ९ | धर्मवत्वेन | धर्मवत्त्वेन |
| " | ३२ | ध्येयम् | ध्येयम् |
| ९६ | ८ | अत्र | अत्र= |
| ९८ | २४ | माह | मुक्तम् |
| ९९ | १८ | प्रहात | प्रहात् |
| " | २१ | संक्रान्ति- | संक्रान्ति- |
| " | २७ | योजना | योजना । |
| १०१ | २२ | खत्त्वं | खत्वं |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०१ | ३४ | स्यार्थो | स्यार्थौ |
| १०४ | १६ | ज्ञानम् । | ज्ञानम् |
| १०५ | २ | माभून | मा भून् |
| ,, | ३२ | उपमानामपि | उपमानादीनामपि |
| १०६ | २८ | प्रत्यक्षास० | प्रत्यक्षस० |
| १०८ | ३ | मावि- | मवि- |
| ,, | ७ | लक्षा | लक्ष्य- |
| ,, | २६ | सांख्या- | सांख्य |
| १०९ | ३२ | गौ | गौः |
| १११ | ६ | लक्ष्यवृति | लक्ष्यवृत्ति |
| ११४ | ५ | व्यावृते- | व्यापृते- |
| ,, | २५ | बुद्धेस्त्वयो | बुद्धेस्तमो |
| ११५ | ३१ | हथा– | यथा– |
| ,, | ३२ | इति | इति । |
| ११७ | ११ | विषयाकारधारिणा | विषयाकारपरिणामधारिणा |
| ,, | २५ | करणगुणा | कारणगुणा |
| ११८ | ४ | बुद्धितत्त्वस्येति । | बुद्धितत्त्वस्येति |
| ,, | १२ | 'असङ्गो ह्ययं पुरुषः' | 'असङ्गो ह्ययं पुरुषः' (बृ० ४।३।१५) |
| १२१ | १६ | निकृष्टल | निष्कृष्टलक्षणम् |
| ,, | १९ | सत्त्वारूपा | सत्त्वरूपा |
| ,, | ३१ | नाप्यभावं, | नाप्यभावं |
| १२४ | १७ | रविविच्यते | रपि विविच्यते |
| ,, | २८ | ऽसत्वे | ऽसत्त्वे |
| १२५ | ६ | लौकायतिकः | लौकायतिकः |
| १२८ | १९ | गले पतित | गले पतित |
| १२९ | ७ | मनुमानमव | मनुमानाप्रामाण्यमव |
| १३० | १८ | रोपितत्त्वेन | रोपितत्वेन |
| १३३ | ६ | सत्वात् | सत्त्वात् |
| १३४ | २८ | वह्निमत्त्वे | वह्निसत्त्वे |
| १४० | ९ | एकं | एकं[2] |
| ,, | ३२ | व्याप्तिसत्त्वम् | व्याप्तिमत्त्वम् |
| १४४ | २९ | व्याप्तः | व्याप्तेः |
| १४६ | ६ | असाधारणं यस्य | असाधारणं रूपं यस्य |
| १५१ | १८ | सम्मतत्वात् | सम्मतवत् |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५३ | १९ | कर्तव्यज्ञानं | कर्तव्यताज्ञानं |
| ,, | २९ | यः संबन्धः | स्वार्थे यः संबन्धः |
| १५६ | १८ | चेत् । अत्राहुः— | चेत् । |
| १५७ | ५ | वामु अपौरु० | वा अपौरु० |
| १६६ | ४ | मन्वतर | मन्वन्तर |
| १७३ | १३ | दत्तै | दन्तै |
| १७४ | १४ | श्रतु | श्वतु |
| १७६ | १८ | सुप्तवत | सुप्तवत् |
| १८७ | ५ | यत्तु गवयस्य | यत्तु गवयस्य |
| ,, | २५ | एवं प्रत्यक्षे | २ एवं प्रत्यक्षे |
| १९० | १० | अथापत्तिः | अर्थापत्तिः |
| ,, | २२ | भाष्यकारः | भाष्यकाराः |
| १९२ | ८ | ( चि० ) | ( चि० ) ॥ ❀ ॥ |
| ,, | १३ | सारम् । | सारम् ॥ ❀ ॥ |
| ,, | ११ | उपपादकंज्ञानं | उपपादकंज्ञानं |
| ,, | १८ | मीमांसकानां | मीमांसकाना |
| १९३ | ३३ | व्याप्यव्यापक | व्याप्यव्यापकभाव |
| १९४ | २५ | यतः=येन | येन |
| १९५ | १४ | सत्त्वापनयनरूपेण | गृहासत्त्वापनयनरूपेण |
| ,, | २६ | सत्त्वस्य | सत्त्वस्य च |
| २०४ | २ | द्रोणाढकमप्रस्था | द्रोणाढकप्रस्था |
| २३१ | ७ | मिश्राः । | मिश्राः ॥ ❀ ॥ |
| २४२ | ३२ | नियामकया | नियामकतया |
| २४३ | १५ | विस्तरः | विस्तरः । |
| ,, | २५ | केचित् | केचित् । |
| २४४ | ८ | शेषानुमान | परिशेषानुमान |
| २४५ | ११ | न भेदो | भेदो |
| २४६ | १९ | इति | इति यत् |
| २५० | १९ | व्यवहारोऽपि | एकत्वव्यवहारोऽपि |
| २५३ | ३० | रुत्पत्त्वन्तरा | रुत्पत्त्यन्तरा |
| २८९ | ३० | मितित्ययं | मित्ययं |
| २९६ | २ | विशेषानां | विशेषाणां |
| ३०१ | २ | दृष्टा | दृष्टाः । |
| ,, | ३ | मेवेति | मेवेति । |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ३०१ | ३ | परमाव्यक्तं | परमाव्यक्तं, |
| ३०६ | ११ | प्रधानारूपाद् | प्रधानरूपाद् |
| ३०७ | २६ | कैवल्यार्थ | कैवल्यार्थं |
| ,, | २९ | उक्ताना | उक्तास्तथाप्यायाना |
| ,, | ३० | नास्तथाप्यायात्म | नात्म |
| ३१० | ६ | ब्रह्मणत्व | ब्राह्मणत्व |
| ३११ | २९ | प्रयुक्ते | प्रयुङ्क्ते |
| ,, | ३४ | वस्तुवस्तु | वस्तुतस्तु |
| ३२२ | ३१ | प्रवृत्तं | प्रवृत्तः |
| ,, | ,, | प्रासाध्य | प्रसाध्य |
| ३२४ | ३२ | सवेदिन्या | संवेदिन्या |
| ३२६ | ८ | सिद्धे स्तः | सिद्धे |
| ,, | ३२ | चेतन | चेतनं |
| ,, | ,, | चेतन्य | चैतन्य |
| ३२८ | ३१ | अय पिण्डे | अयः पिण्डे |
| ३५३ | १४ | विशेषा | विशिष्टा |
| ,, | ३० | मुग्धवस्तुजम् | मुग्ध ( शुद्ध ) वस्तुजम् |

